## अथाष्टमे विशेषेणातिदेशाध्याये प्रथमः स्पष्टलिङ्गेनातिदेशपादः

### अथ प्रथमं विशेषचिन्ताधिकरणम् (प्रतिज्ञाधिकरणम्)

इति कर्तव्यताऽविधेरिति पूर्वपादीयाद्यनये सौर्यादिष्वश्रुतेतिकर्तव्यताकेष्वानुमानिकचोदकवाक्ये-नान्यतो वैदिको विध्यन्तः प्राप्यत इति सामान्येनोक्तस्यात्राध्याये कस्य विध्यन्तः? क्व प्रवर्तते? इति विशेषश्चिन्त्यत इति पूर्वानन्तर्यमस्याध्यायस्य ध्येयम् ।

### अथ विशेषलक्षणम् ॥ १ ॥

विशेषलक्षणमारभ्यं न वेति **सन्देहे,** नियामकविशेषाभावेन सौर्यादावेकैकस्मिन् दर्शपूर्ण-मासज्योतिष्टोमादिसर्वकर्मधर्माणामेव विकल्पादेशसम्भवान्नात्र विशेषलक्षणमिति **प्राप्ते,** शास्त्रार्थस्य व्यवस्थाया आवश्यकत्वात्तदन्यथानुपपत्त्या नियतादेकस्मादेव कर्मणो धर्माणामतिदेशो, नाव्यवस्थया सर्वधर्मातिदेशः । अतः कस्य धर्मः? क्व प्रवर्तते? इति विशेषलक्षणमारभ्यमिति **सिद्धान्तः** । तदाह **सूत्रे,** अथ सामान्यातिदेशचिन्तनान्तरं **विशेषा**तिदेशपरो **लक्षण**शब्दितोऽध्याय आरभ्य इति ।

इति प्रथमं विशेषचिन्ताधिकरणम् (प्रतिज्ञाधिकरणम्)

### अथ द्वितीयं विशेषकर्मणो धर्मातिदेशाधिकरणम्

### यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥

पूर्वत्रैकस्मादेव कर्मणो धर्माणामतिदेशः सौर्यादौ । न तु विकल्पेनानेककर्मभ्य इति स्थिते अत्र कस्य कर्मणो विध्यन्तः सौर्यादौ? इति जिज्ञासायां प्रकृतिविकृतिभावे चिह्नमिह सूत्रे कथ्यत इति नात्र संशयादिना कृत्यमित्याहुः । **यस्या**ऽग्नेयादे**र्लिङ्गं** चिह्नमुपस्थापकं यस्यां विकृतौ तस्यां तद्धर्मातिदेशः स्यात् । **अर्थसंयोगात्** अर्थेन विकृत्या दृश्यमानलिङ्गस्य सम्बन्धात् । **अभिधानवत्** नामधेयवत् । यथाग्निहोत्रनामधेयं नित्याग्निहोत्रसम्बन्धादन्यत्र दृश्यमानं तद्धर्मातिदेशकं तद्वदिति **सूत्रार्थः** । अयं भावः, सौर्यवाक्ये "द्रव्यदेवतासम्बन्धाक्षिप्तेन यागेन ब्रह्मवर्चसं भावयेत्" इति निर्वपेदित्यत्राख्याते-नोक्ते, कथमित्याकांक्षायां समीपे विध्यन्तस्यानाम्नानात्सौर्यवाक्यं स्वसदृशं वाक्यमुपस्थापयति । सदृशञ्च वाक्यं निर्वपतेस्तद्धितेन देवतादिनिर्देशस्यैकदेवताकत्वस्यौषधद्रव्यकत्वस्य च साम्यादाग्नेय-वाक्यमेव । तच्च वाक्यमंशत्रययुक्तां भावनां स्वार्थभूतां बोधयति । तत्र च फलकरणांशयोः सौर्येऽनपेक्ष-त्वेनानन्वयेऽपि कथम्भावाकांक्षांशस्त्वपेक्षितत्वादन्वेति । ततश्च तद्विधायकं शास्त्रं सौर्यवाक्यविधिशेषत्वं



प्रतिपद्यते । तथा च 'यथा प्रयाजाद्यन्वाधानादिभिरदृष्टदृष्टोपकारसंपादनेनाऽग्नेयेन स्वर्गो भावितस्तथा सौर्येण ब्रह्मवर्चसं भावयेत्' इति सौरवाक्यार्थः पर्यवस्यतीति । एवमनेकदेवताकेष्वप्यश्रुतविध्यन्ते-ष्वग्नीषोमीयैन्द्राग्नविध्यन्तः, आज्यद्रव्यकेषूपांशुयाजस्य, पयोदध्यामिक्षादैक्षपशुषु सान्नाय्यस्य, पश्वन्त-रेषु दैक्षस्य, एकादशिनेषु सवनीयस्य, अव्यक्तेषु सोमस्य, अहर्गणेषु सत्रेष्वहीनेषु च द्वादशाहस्येत्यादि ध्येयम् । एतत्प्रपञ्चनार्थ उत्तरो ग्रन्थसन्दर्भः ।

इति द्वितीयं विशेषकर्मणो धर्मातिदेशाधिकरणम्

### अथ तृतीयं सोमे ऐष्टिकधर्मानतिदेशाधिकरणम् (सूत्राणि ३-१०)

### प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात् ॥ ३ ॥

**(लिङ्गदर्शनाच्च ॥ ४ ॥ कृत्स्नविधानाद्वाऽपूर्वत्वम् ॥ ५ ॥ स्रुगभिधारणाभावस्य च नित्यानुवादात् ॥ ६ ॥ विधिरिति चेत् ॥ ७ ॥ न वाक्यशेषत्वात् ॥ ८ ॥ शङ्कते चानुपोषणात् ॥ ९ ॥ दर्शनमैष्टिकानां स्यात् ॥ १० ॥**

पूर्वाऽक्षेपेणात्र शङ्कनात्सङ्गतिः । सोमयागे दार्शपौर्णमासिकधर्माणामतिदेशोऽस्ति, न वेति **सन्देहः** । दीक्षणीयादिष्ववभृथपर्यन्तास्विष्टिषु पशुषु च दर्शपूर्णमासविध्यन्तोऽतिदेशतः प्राप्यमाण-स्तन्मध्यपतितसोमयागेऽपि तदन्वयः स्यादेवेत्यस्ति तत्रापि तदतिदेशः । एवञ्च विसदृशयोरपि दर्शपूर्णमासयागसोमयागयोः प्रकृतिविकृतिभावदर्शनात्सदृशादेव कर्मणो धर्मातिदेश इति प्रागुक्त-मयुक्तमिति **प्राप्तम्** । तदाह **सूत्रे,** दीक्षणीयादिष्विष्टैरैष्टिकविध्यन्तस्य **प्रवृत्तेः सोमे**पि **प्रवृत्तिः स्या**दिति । **सिद्धान्तस्तु,** सन्निपत्योपकारकाभिषवाद्यङ्गकलापपौष्कल्येन निराकांक्षे सोमे दार्शिक-विध्यन्तस्यानाकांक्षितत्वान्न तत्र तस्य प्रवृत्तिः । यत्तु सोमे "तस्यैकशतं प्रयाजानुयाजाः" इति लिङ्गदर्शनं, तत्तु वाजपेयसम्बन्धिपशुसम्बन्ध्यपि यूपो वाजपेयस्येति 'सप्तदशारत्निर्वाजपेयस्य यूपः' इत्यत्र यथा तथा सोमाङ्गदीक्षणीयादीष्टिगतं प्रयाजादिकं तस्येत्यनूद्यत इत्युपपन्नं सन्नैष्टिक-विध्यन्तातिदेशकल्पकं भवतीति ।

इति तृतीयं सोमे ऐष्टिकधर्मानतिदेशाधिकरणम् (सूत्राणि ३-१०)

अथ तुरीयमैन्द्राग्नादावैष्टिकधर्मातिदेशाधिकरणम्

**इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् ॥ ११ ॥**

विकृतिषु सदृशादेव कर्मणो धर्मप्राप्तिरिति स्थिते, तमेवार्थं प्रपञ्चयति **सूत्रकारः, सौर्यादीष्टिषु दर्शपूर्णमासयो**र्विध्यन्तस्य निर्वपत्यादिचोदनालिङ्गसाम्यात्**प्रवृत्तिः स्यादि**ति । सौर्यादिचोदनाया व्यक्तदेवतादित्वेन **'अव्यक्तासु तु सोमस्य'** इति वक्ष्यमाणसौमिकविध्यन्तप्राप्तिशङ्कानुदयेनैष्टिकस्यैव प्राप्त्या पूर्वपक्षप्रापकस्याभावान्नातीवाऽत्र पूर्वपक्षादि । किन्तु स्पष्टकथनमात्रम् । एवमग्रेऽपीत्याहुः ।

इति तुरीयमैन्द्राग्नादावैष्टिकधर्मातिदेशाधिकरणम्

अथ पञ्चममग्नीषोमीयपशौ दार्शपौर्णमासिकधर्मातिदेशाधिकरणम्

**पशौ च लिङ्गदर्शनात् ॥ १२ ॥**

सौर्यादिषु दार्शिकविध्यन्तातिदेशेऽपि न पशौ । सादृश्याभावादिति पूर्ववैषम्येण शङ्कायां, अग्नीषोमीयपशौ तद्धितेन देवतानिर्देशरूपं, तथा 'ईषामालभेत' इति 'शकटद्वयस्यूतदण्डमालभेत' इति दर्शपूर्णमासयोः श्रवणेनालभतिरूपश्च सादृश्यं विद्यत इत्यस्ति पशावप्यैष्टिकधर्मातिदेशः । तदाह, **पशौ च** दार्शिको विध्यन्तोऽतिदिश्यते । **लिङ्गदर्शनात्** 'एकादश प्रयाजान्यजति' इति प्रयाजरूपलिङ्ग-दर्शनोपोद्बलिताचोदनासाम्यरूप लिङ्गदर्शनादिति ।

इति पञ्चममग्नीषोमीयपशौ दार्शपौर्णमासिकधर्मातिदेशाधिकरणम्

अथ षष्ठं सवनीयादिपशावग्नीषोमीयधर्मातिदेशाधिकरणम्

**दैक्षस्य चेतरेषु ॥ १३ ॥**

यथा हि पूर्वत्राग्नीषोमीयपशौ तद्धितनिर्देशादिसारूप्यादैष्टिकविध्यन्तातिदेश एवं ''आग्नेयं सवनीयं पशुम्'' इति तद्धितेन देवतानिर्देशसादृश्यात्सवनीयादिपशुष्वप्यैष्टिक एव विध्यन्त इति **प्राप्ते**, प्राणि-द्रव्यकत्वरूपविशेषसादृश्याद्विशसनादिपशुद्रव्यसंस्कारलाभाच्चाग्नीषोमीयपशोर्विध्यन्तः सवनीयादि-पशुष्विति **सिद्धान्तः** । तदाह **सूत्रे, दैक्षस्य** दीक्षाकाले क्रयसन्निधावुत्पन्नस्याग्नीषोमीयपशोर्विध्यन्तः **इतरेषु** सवनीयादिष्वतिदिश्यत इति । फलन्तु दैक्षधर्मानुष्ठानं सवनीयादिषु ।

इति षष्ठं सवनीयादिपशावग्नीषोमीयधर्मातिदेशाधिकरणम्



अथ सप्तममैकादशिने पशौ सवनीयधर्मातिदेशाधिकरणम्

**ऐकादशिनेषु सौत्यस्य द्वैरशन्यदर्शनात् ॥ १४ ॥**

अत्रापि पूर्वन्यायेन शङ्कनात्सङ्गतिः । ऐकादशिना: पशव एवमाम्नायन्ते, ''आग्नेयः कृष्णग्रीवः । सारस्वती मेषी । बभ्रुः सौम्यः । पौष्णः श्यामः । शितिपृष्ठो बार्हस्पत्यः । शिल्पो वैश्वदेवः । ऐन्द्रोऽरुणः । मारुतः । कल्माषः । ऐन्द्राग्नः संहितः । अधोरामः सावित्रः । वारुणः कृष्णः । एकशितिपात्पेत्वः'' इति । तेषु पशुषु किं दैक्षपशोर्विध्यन्तः, उत सवनीयपशोरिति **सन्देहे**, 'इतरेषु दैक्षस्य' इत्युक्तत्वात्सवनीयपशाविवैकादशिनेष्वपि दैक्षस्यैव विध्यन्त इति **प्राप्ते**, शब्दगतचोदनालिङ्गविशेषा-भावेऽपि सुत्याकालीनत्वरूपार्थगतलिङ्गविशेषस्य सवनीयपशुसाधारणस्य सत्वात्सवनीयपशुविध्यन्त एवैकादशिनेषु । किञ्च तृतीयस्य षष्ठपादे ''रशना च लिङ्गदर्शनात्'' इत्यत्रोक्तदिशा वाचनिकी रशनैका, चोदकप्राप्ताऽपरा चेति सवनीये पशौ रशनाद्वयं दृष्टम् । तच्च रशनाद्वयमैकादशिनेष्वपि ''द्वे द्वे रशने यूपमृच्छतः'' इति श्रुतमिति तल्लिङ्गाच्च सवनीयविध्यन्त एव तत्रेति **सिद्धान्तः** । तदाह **सूत्रे, ऐकादशिनेष्वित्यादि । सौत्यस्य** सुत्याकालीनस्य सवनीयस्य विध्यन्तो भवति । **द्वैरशन्यस्य** द्विरशनावत्वस्य दर्शनादिति ।

इति सप्तममैकादशिने पशौ सवनीयधर्मातिदेशाधिकरणम्

अथाष्टमं पशुगणेष्वैकादशिनधर्मातिदेशाधिकरणम्

**तत्प्रवृत्तिर्गणेषु स्यात्प्रतिपशु यूपदर्शनात् ॥ १५ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । सौत्रामण्यां पशुगणः श्रूयते । तथा काम्यपशुकाण्डे पशुगणः श्रूयते । 'वसन्ते ललामांस्त्रीन् वृषभानालभेत' 'मैत्रं श्वेतं कृष्णम्' इत्यादिना । तत्र किं दैक्षपशोर्विध्यन्तः, उतैकादशिनानामिति **सन्देहे**, ऐकादशिनेषु सुत्याकालत्वसाम्यात्सवनीयविध्यन्तप्राप्तावपि सौत्रमण्यादिपशुगणेषु रशनाद्वयादिविशेषलिङ्गाभावात्सर्वप्रकृतिभूतस्य दैक्षपशोर्विध्यन्त इति **प्राप्ते**, पशुगणान्तः पातित्वरूपधर्मसामान्यादैकादशिनपशुगणान्तःपातिपशुविध्यन्त एव । न दैक्षस्येति **सिद्धान्तः** । तदाह **सूत्रे, पशुगणेषु तत्प्रवृत्तिः** ऐकादशिनपशुविध्यन्तप्रवृत्तिः **स्यात् । प्रतिपशु यूपदर्शना**त्सौत्रामण्यां प्रतिपशु यूपप्रसक्तिदर्शनाल्लिङ्गादित्यर्थः । सौत्रामण्यां हि पशुत्रयम् । तत्रेदमाम्नायते, ''यत्त्रिषु यूपेष्वालभेत, बहिर्धाऽस्मा इन्द्रियं वीर्यं दध्यात्भ्रातृव्यमस्मै जनयेत् । यद्येकस्मिन् यूप आलभेत, एक एवास्मिन्निन्द्रियं वीर्यं दधाति । नास्मै भ्रातृव्यं जनयति । एकयूप

आलभते'' इति । तत्र यूपत्रयप्रतिषेधबलात्प्रतिपशु यूपप्रसक्तिर्दृश्यते । तच्च प्रतिपशु यूपप्रसक्तिदर्शनमैकादशिनविध्यन्तग्राहित्व एव युज्यते । तत्र प्रतिपशु यूपभेदात् । नाग्नीषोमीयपशुविध्यन्तग्रह इति ।

इत्यष्टमं पशुगणेष्वैकादशिनधर्मातिदेशाधिकरणम्

## अथ नवममव्यक्तयजतौ सौमिकधर्मातिदेशाधिकरणम्

**अव्यक्तासु तु सोमस्य ॥ १६ ॥**

एवमियता ग्रन्थेनेष्टिविकृतिपरम्परा चिन्तिता । इतः परं सोमविकृतिपरम्परा चिन्त्यते । 'विश्वजिता यजेत' 'अभिजिता यजेत' इत्याद्येकाहेषु 'द्वादशाहेन यजेत' इत्युक्तद्वादशाहे च किं दार्शपौर्णमासिको विध्यन्तः, उत सौमिक इति **सन्देहे**, विशेषाभावादनियम इति **प्राप्ते सिद्धान्तः**, उत्पत्तिवाक्ये तद्धितादिना येन केनचिद्देवतानभिव्यक्तिरूपाव्यक्तत्वस्य विश्वजिदादौ सोमे च साम्यादेवंरूपविशेषेण सौमिक एव विध्यन्तो विश्वजिदादिष्विति । तदाह **सूत्रे, अव्यक्तासु** चोदनासु **सोमस्य** विध्यन्त इति ।

इति नवममव्यक्तयजतौ सौमिकधर्मातिदेशाधिकरणम्

## अथ दशममहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम्

**गणेषु द्वादशाहस्य ॥ १७ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । द्विरात्रादिष्वहर्गणेषु किं सौमिको विध्यन्तः, उत द्वादशाहिक इति **सन्देहे**, प्रागुक्ताव्यक्तत्वसाम्यात्पूर्वत्रेव सौमिक इति **प्राप्ते**, अव्यक्तत्वस्य गणत्वस्य चाधिकस्य साम्यस्य सत्वाद् द्वादशाहविध्यन्तो द्विरात्राद्यहर्गणेष्विति **सिद्धान्तः** । न चाहर्गणत्वं रात्रिगणत्वमिति भेदान्नोभयोरेकगणत्वमिति वाच्यम् । तत्राहःशब्दस्यात्र रात्रिशब्दस्य चान्यतरोपलक्षणयाऽहोरात्रगणपरत्वादित्याहुः । व्यक्तः सूत्रार्थः ।

इति दशममहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम्

## अथैकादशं संवत्सरसत्रेषु गावामयनिकधर्मातिदेशाधिकरणम्

**गव्यस्य च तदादिषु ॥ १८ ॥**



पूर्वन्यायेन शङ्कनात्सङ्गतिः । 'आदित्यानामयनं, तपस्विनामयनम्' इत्यादिष्वहर्गणत्वसाम्यात्पूर्वत्रेव द्वादशाहस्य विध्यन्त इति **प्राप्ते**, संवत्सरसत्रत्वरूपविशेषसादृश्यात् संवत्सरनियमलाभार्थं गवामयनविध्यन्त इति **सिद्धान्तः** । तदाह **सूत्रे, गवामयनं गव्यं**, तस्य **धर्मास्तदादिष्वा**दित्यानामयनादिष्वतिदिश्यन्त इति ।

इत्येकादशं संवत्सरसत्रेषु गावामयनिकधर्मातिदेशाधिकरणम्

## अथ द्वादशं निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम्

**निकायिनां पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ॥ १९ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''सहस्रम्'' साद्यस्काः'' इत्येकनाम्नोऽपक्रम्य पश्चात्क्रमेण विहिता यागा **निकायिनः** । निकायः सङ्घः । तन्मध्यवर्तित्वान्निकायिन इत्युच्यन्ते । तेषु प्रथमो यागः सधर्मकः । उत्तरे धर्महीनाः । तत्र किं प्रथमयागधर्मा उत्तरेषु प्रवर्तन्ते, अथ सौमिकधर्मा इति **सन्देहे**, आदित्याना- मयनादिष्विवोत्तरेषु निकायिषु चोदनासामान्याभावादव्यक्तत्व- साम्यात्सौमिकधर्मा इति **प्राप्ते**, एकनामत्वैकसङ्घात- वर्तित्वाभ्यां विशेषलिङ्गाभ्यां पूर्वविध्यन्त एवोत्तरेषु । न सौमिक इति **सिद्धान्तः** । तदाह **सूत्रे, निकायिनां** मध्ये **पूर्व**धर्माणा**मुत्तरेषु प्रवृत्तिः स्या**दिति । फलं । व्यक्तम् ।

इति द्वादशं निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम्

## अथ त्रयोदशं फलादीनामनतिदेशाधिकरणम् (सूत्राणि २०-२२)

**कर्मणस्त्वप्रवृत्तत्वात्फलनियमकर्तृसमुदायानन्वयस्तद्बन्धनत्वात् ॥ २० ॥**

**(प्रवृत्तौ चापि तादर्थ्यात् ॥ २१ ॥ अश्रुतित्वाच्च ॥ २२ ॥)**

अङ्गानामिव फलादीनामपि प्रकृतिसम्बन्धादतिदेशः स्यादिति शङ्कनात्सङ्गतिः । **फलं** स्वर्गादिः । 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिनोक्तो यावज्जीविको होमाभ्यासरूपो **नियमः** । **कर्ता** स्वर्गादिकामः । आख्यातोपात्तस्य कर्तृतावस्थापन्नस्य क्रियानिर्वर्तकत्वेन गुणभूततया तदतिदेशे विवादाभावात् । **समुदायो** नामाऽऽग्नेयादीनां षण्णां साहित्यम् । त एते चत्वारो धर्माः प्रकृतिगता विकृतिषु सौर्यादिष्वतिदिश्यन्ते, उत नेति **सन्देहे**, प्रकृतिसम्बन्धित्वात्प्रयाजाद्यङ्गवदतिदिश्यन्त इति **प्राप्ते सिद्धान्तः**, यद्यपि सौर्यादिविकृतियागभावना किं? केन? कथं? इत्यंशत्रयापेक्षिणी तथापि

ब्रह्मवर्चसादिश्रुतफलयागाभ्यां फलकरणाकांक्षापूरणात्कथम्भावाकांक्षामात्रं पूरणीयम् । यदेव प्रकृता-वित्थम्भावेन गृह्णाति, तदेवेह प्रयाजादिकमन्वेतुं योग्यमित्यतिदिश्यते । न त्वन्यत् । न हि फलादिकं तथा । फलनियमयोः पुमर्थत्वस्य क्रमाच्चतुर्थाद्यपादे द्वितीयस्य चतुर्थपादे च व्यवस्थापितत्वात् । स्वर्गकामोऽपि न कमर्थिः । कर्मैव तदर्थमिति षष्ठाद्येऽभिधानात् । आग्नेयादीनां फलवत्त्वेन प्रधानतया तेषां सौर्यादिविकृत्युपकारकतयाऽतिदेशाभावेन तद्धर्मस्य साहित्यस्याप्यनतिदेश इति, न चतुर्णा-मप्यतिदेश इति । तदाह **सूत्रे**, **कर्मण** आग्नेयादेर्विकृतिष्व**प्रवृत्तत्वात्** **फलनियमकर्तृसमुदायानाम-न्वयोऽप्रवृत्तिः** । कुतः? तेषां **तद्बन्धनत्वा**त्तत्सम्बन्धित्वादिति ।

इति त्रयोदशं फलादीनामनतिदेशाधिकरणम् (सूत्राणि २०-२२)

## अथ चतुर्दशं गुणकामानां गोदोहनादीनामनतिदेशाधिकरणम् (सूत्राणि २३-२५)

**गुणकामेष्वाश्रितत्वात्प्रवृत्तिस्स्यात् ॥ २३ ॥**

**(निवृत्तिर्वा कर्मभेदात् ॥ २४ ॥ अपि वाऽतद्विकारत्वात्क्रत्वर्थत्वात्प्रवृत्तिः स्यात् ॥ २५ ॥)**

पूर्ववैषम्येणात्र शङ्कनात्सङ्गतिः । दर्शपूर्णसासयोः ''चमसेनापः प्रणयेत् । गोदोहेन पशुकामस्य'' इति श्रुतम् । तद्गोदोहनादि विकृतौ सौर्यादावतिदिश्यते, उत नेति **सन्देहे**, पूर्वत्र विकृतिष्वाग्नेयादेर-प्रवृत्त्या तत्सम्बद्धफलाद्यप्रवृत्तावपीह प्रणयनस्येष्टचङ्गतया विकृतावतिदेशेन **प्राप्तौ**, तत्साधनभूतो गोदोहनाख्यपात्रविशेषोऽनङ्गमपि साधनत्वात्प्रवर्तते । तत्प्रवृत्तौ च तत्साध्यं फलमपि प्रवर्तत इत्यस्ति गोदोहनतत्फलयोरप्यतिदेश इति **प्राप्तम्** । तदाह **सूत्रे**, **गुणकामेषु** गुणफलानां **प्रवृत्तिर्विकृतिषु स्यात्** । कुतः? तेषां प्रणयनसाधनतया प्रवर्तमानगोदोहनाद्या**श्रितत्वा**त्तत्साध्यत्वादिति । **सिद्धान्तस्तु**, वैकृतभावनया कथम्भावाकांक्षया गृहीतमेव प्राकृतमङ्गजातं विकृतावन्वेति, नान्यदिति प्रागुक्तम् । वैकृतभावना च प्राकृतभावनया यत्कथम्भावाकांक्षया गृहीतमङ्गजातं तदेव स्वाङ्गतया गृह्णाति । तच्चाप्प्रणयनम् । तत्साधनतयाऽवगतं चमसपात्रम् । न तु पुमर्थतया प्राप्तं गोदोहनमपि । तत्तु कामनाप्रयुक्तमिति न गोदोहनतत्फलयोरतिदेशः । तदाह **सूत्रे**, **निवृत्तिर्वा कर्मभेदा**दिति । गुणकामानां विकृतिषु **निवृत्तिरेव स्यात्** । चमसगोदोहनयोः क्रतुनिर्वृत्तिफलनिर्वृत्तिरूपकार्य**भेदा**दित्यर्थः । **फलन्तु**, गुणकामाप्रवृत्तिर्विकृताविति व्यक्तम् ।

इति चतुर्दशं गुणकामानां गोदोहनादीनामनतिदेशाधिकरणम् (सूत्राणि २३-२५)



## अथ पञ्चदशं सौर्ये चरावभिमर्शनद्वयस्य विकल्पाधिकरणम्

**एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ २६ ॥**

अत्रापि पूर्ववैषम्येण शङ्कनात्सङ्गतिः । सौर्ययाग आग्नेयविकार इत्युत्तरनये वक्ष्यते । आग्नेयश्च पौर्णमास्याममावास्यायाश्चोत्पन्नो द्विविधस्तत्सञ्ज्ञः । तत्र ''चतुर्होत्रा पौर्णमासीमभिमृशेत् । पञ्चहोत्राऽमावास्याम्'' इति चतुर्होतृपञ्चहोतृसञ्ज्ञकाभ्यां 'पृथिवी होता' इत्यादि 'अग्निर्होता' इत्यादि मन्त्राभ्यां क्रमात्पौर्णमास्यमावास्याशब्दितत्रिकद्वयसम्बन्धिहविस्त्रयसमुदायाभिमर्शनद्वाराऽऽग्नेयद्वय-सम्बन्धिहविर्द्वयस्य स्पर्शनाख्यमभिमर्शनं श्रुतम् । तच्च मन्त्रद्वयं सौर्ये चोदकप्राप्तम् । तत्किं पौर्णमास्य-मावास्याकालयोः सौर्यस्यानुष्ठाने यथाप्रकृति व्यवस्थया प्रयोक्तव्यं, उताव्यवस्थयेति **सन्देहे**, पूर्वत्र प्रकृतौ दृष्टानां गोदोहनादीनां विकृतावप्रवृत्तावपीह प्रकृतौ व्यवस्थया दृष्टमन्त्रद्वयस्य विकृतावपि चोदकेन व्यवस्थयैव प्रापणात्तथैव प्रयोक्तव्यमिति **प्राप्ते सिद्धान्तः**, प्रकृतौ हविस्समुदायद्वारैवाऽऽग्नेय-हविर्द्वयस्याभिमर्शनं प्राप्तमिति तत्र व्यवस्थाऽऽग्नेयहविर्द्वयस्यार्थिकी । प्रकृतौ यच्छाब्दं तदेव विकृता-वतिदिश्यते । न त्वार्थिकम् । अतो मन्त्रयोरेकार्थयोर्द्वयोरिह प्राप्तौ विकल्प एवेति । तदाह **सूत्रे**, **एकस्मिन् कर्मणि विकल्पो** मन्त्रयोः । कुतः? 'सौर्यं चरुं निर्वपेत्' इति **चोदनाया एकत्वात्तद-विभागः** । हि यस्मादविभागः कर्मणस्ततो विकल्प इति ।

इति पञ्चदशं सौर्ये चरावभिमर्शनद्वयस्य विकल्पाधिकरणम्

## अथ षोडशं सौर्ये चरावाग्नेयधर्मातिदेशाधिकरणम् (सूत्राणि २७-३१)

**लिङ्गसाधारण्याद्विकल्पः स्यात् ॥ २७ ॥**

**(ऐकार्थ्याद्वा नियम्येत पूर्ववत्वाद्विकारो हि ॥ २८ ॥ अश्रुतित्वान्नेति चेत् ॥ २९ ॥ स्याल्लिङ्गाभावात् ॥ ३० ॥ तथा चान्यार्थदर्शनम् ॥ ३१ ॥)**

पूर्वाक्षेपेण शङ्कनात्सङ्गतिः । **इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात्** इति सूत्रे दर्शपूर्णमास-प्रकृतिकत्वमिष्टीनामुक्तम् । तत्र कस्य विध्यन्तः क प्रवर्तते ? इति **सन्देहे**, विशेषनियामका-भावादनियमेन षण्णामपि विध्यन्तो विकल्पेन स्यात् । एवञ्च पूर्वत्राऽऽग्नेयविकारत्वमुपेत्य चतुर्होत्रादि-मन्त्रयोः सौर्ये विकल्पोक्तिरयुक्तेति **प्राप्तम्** । तदाह **सूत्रे**, ''प्रयाजे प्रयाजे कृष्णलं जुहोति'' इति प्रयाजदर्शनरूपलिङ्गस्य आग्नेयादिषट्कसाधारण्यादाग्नेयादिविध्यन्तानां सौर्यादिषु विकल्पेन स्यादिति ।

सिद्धान्तस्तु, तद्धितेन देवतानिर्देशेनैकदैवत्यत्वादिरूपविशेषसादृश्यात्सौर्यादावाग्नेयस्य विध्यन्तः । अनेकदैवत्ये त्वग्नीषोमीयादिविध्यन्त इत्यादि । न च द्विवचनान्तप्रातिपदिकादपि तद्धितोत्पत्तिसम्भवात्कथमैकदैवत्यत्वनिर्णय इति वाच्यम् । द्विवचनान्तादिना तद्धितोत्पत्तिकल्पनस्य मानान्तराधीनत्वेनासति च तस्मिन्नेकवचनान्तादेव तत्सिद्धेः । तथा सौर्यविधिशेषार्थवादे ''अमुमेवादित्यं स्वेन भागधेयेनोपधावति'' इति, आग्नेयवाक्यशेषे च ''सोऽग्नयेऽध्रियत'' इत्येकवचनेनैकदैवत्यत्वसिद्धेश्चेति । तदाह सूत्रे, ऐकार्थ्याद्वा नियम्येतेत्यादि । फलं त्वाग्नेयविध्यन्तानुष्ठानं सौर्यादाविति ।

इति षोडशं सौर्ये चरावाग्नेयधर्मातिदेशाधिकरणम् (सूत्राणि २७-३१)

### अथ सप्तदशं हविर्देवतयोः सन्निपाते हविःसामान्यस्य बलीयस्त्वाधिकरणम् (सूत्राणि ३२-३४)

**विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥ ३२ ॥**

**(तेन च कर्मसंयोगात् ॥ ३३ ॥ गुणत्वेन देवताश्रुतिः ॥ ३४ ॥)**

द्रव्यदेवतासाम्यरूपलिङ्गविशेषेण विशेषातिदेशे चिन्तिते प्रसङ्गाद्द्रव्यसाम्यदेवतासाम्ययोर्मध्ये किं बलीय इति चिन्तनात्प्रासङ्गिकी **सङ्गतिः** । किं ''ऐन्द्रमेकादशकपालं निर्वपेत्'' इत्यत्र देवतासामान्येन सान्नाय्यधर्मः कार्यः, उत हविःसामान्येन पुरोडाशधर्मः । एवं ''आग्नेयं पयः'' इत्यत्र किं द्रव्यसामान्येन सान्नाय्यधर्मः कार्यः, उत देवतासामान्येन आग्नेयधर्मः कार्य इति **सन्देहे**, विशेषाभावादनियम इति वा, ''ऐन्द्रम्'' ''आग्नेयम्'' इति इन्द्राग्न्यादिदेवतायाः प्रातिपदिकार्थत्वात्तद्द्रव्यस्य तद्धित प्रत्ययवाच्यत्वात्प्रातिपदिकप्रत्ययार्थयोः प्रातिपदिकार्थस्य मुख्यत्वात् ''तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति'' इति कर्मफलदातृत्वेन श्रुतप्रधानत्वाच्च देवतायास्तत्साम्यस्य बलवत्वाद्देवतासाम्यनिमित्त एव विध्यन्त इति वा **प्राप्ते सिद्धान्तः**, देवतोद्देशेन द्रव्यत्यागो हि यागः । तत्र प्रधानभूतत्यागविषयतया हविः कर्मणः प्रत्यासन्नम् । देवता तूद्देशविषयतया त्यागकर्मणो बहिरङ्गतया न प्रत्यासन्ना । तथा च प्रत्यासन्नेन हविषोपस्थापितं विध्यन्तमासाद्य निराकांक्षं कर्म न बहिरङ्गभूतदेवतोपस्थापितमपेक्षते । किञ्चैन्द्रे पुरोडाशविध्यन्ते सत्यवघातादिभूयोधर्मलाभः । यत्तु देवताया मुख्यत्वं तत्तु शब्दोपाधिकम् । न हविष इव स्वाभाविकम् । प्राधान्यं तु नवमाद्यपादे **देवता वा प्रयोजयेत्** इति नये निरसिष्यते । तस्माद्द्रव्यसामान्यमेव बलवदिति । तदाह **सूत्रे**, देवताहविषोः किं बलीय इति



**विप्रतिपत्तौ हविषा विध्यन्तो नियम्येत । कर्मणस्तदुपाख्यत्वात्** तत्प्रत्यासत्तिकत्वादिति । **फलन्तु**, ऐन्द्रपुरोडाशे आग्नेयपयसि च क्रमादौषधसान्नाय्यधर्मानुष्ठानम् ।

इति सप्तदशं हविर्देवतयोः सन्निपाते हविःसामान्यस्य बलीयस्त्वाधिकरणम् (सूत्राणि ३२-३४)

### अथाष्टादशं शतकृष्णलाख्यहिरण्ये औषधधर्मातिदेशाधिकरणम् (३५-३९)

**हिरण्यमाज्यधर्म तेजस्त्वात् ॥ ३५ ॥**

**(धर्मानुग्रहाच्च ॥ ३६ ॥ औषधं वा विशदत्वात् ॥ ३७ ॥ चरुशब्दाच्च ॥ ३८ ॥ तस्मिंश्च श्रपणश्रुतेः ॥ ३९ ॥)**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । ''प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्कामः'' इति श्रुतकृष्णलचरौ किमुपांशुयाजद्रव्यस्याज्यस्य धर्मस्य, किं वौषधधर्मस्यातिदेश इति **सन्देहे**, पूर्वत्र भूयोधर्मलाभायौषधधर्मातिदेशवदिहाप्यवेक्षणोत्पवनादिभूयोधर्मानुग्रहाय स्वर्णमाषरूपकृष्णलस्य घृतस्य चोज्वलतया तेजस्त्वसाम्यादुपांशुयाजधर्मातिदेश इति **प्राप्तम्** । तदाह **सूत्रे**, **हिरण्यकृष्णलमाज्यधर्मस्यात्** । ''हिरण्यमश्मनां तेजः (सारमिति यावत्) । आज्यं गवाम्'' इति **तेजस्त्वकीर्तनसाम्यादिति** । **सिद्धान्तस्तु**, विशदत्वसाम्यात्, चरुमित्यौषधशब्दप्रयोगाच्चौषधधर्मातिदेश एवेति । तदाह **सूत्रे**, **औषधं वा विशदत्वात्** इति ।

इत्यष्टादशं शतकृष्णलाख्यहिरण्ये औषधधर्मातिदेशाधिकरणम् (सूत्राणि ३५-३९)

### अथैकोनविंशं मधूदकयोरुपांशुयाजीयाज्यधर्मातिदेशाधिकरणम् (सूत्राणि ४०-४३)

**मधूदके द्रवत्वसामान्यात्पयोविकारः स्यात् ॥ ४० ॥**

**(आज्यं वा वर्णसामान्यात् ॥ ४१ ॥ धर्मानुग्रहाच्च ॥ ४२ ॥ पूर्वस्य चाविशिष्टत्वात् ॥ ४३ ॥)**

अत्रापि पूर्वन्यायेन शङ्कनात्सङ्गतिः । चित्रायागे ''दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यम्'' इत्यत्र श्रुतमधूदकयोः किं सान्नाय्यगतपयसो धर्मातिदेशः, उतोपांशुयाजाज्यद्रव्यस्येति **सन्देहे**, पूर्वत्र कृष्णले हिरण्ये भूयोधर्मबाधेऽपि चरुशब्दसामान्यादौषधधर्मता तथा

मधूदकयोर्दोहनाद्यनेकधर्मबाधेऽपि स्वाभाविकद्रवत्वसाम्यात्पयोधर्मातिदेश इति प्राप्तम् । तदाह सूत्रे, मधूदके इत्यादि । स्पष्टोऽर्थः । सिद्धान्तस्तु, स्वाभाविकद्रवत्वाभावेऽप्यग्निसंयोगादाज्येऽपि द्रवत्व-सम्भवाद्वर्ण- साम्याधिक्यात्पयोधर्माणां दोहनादीनामसम्भवादुत्पवनादिसम्भवादाज्यस्यैव विध्यन्त इति । तदाह सूत्रे, आज्यं वा विकुर्वातामित्यादि । फलन्तु, पूर्वपक्षे मधूदकयोरपि दधिवत्साधाय्य-विकारत्वाद्रूपेणुग्रहन्यायेन विभागे दार्शिकविध्यन्तः । सिद्धान्ते तु, मधूदकयोराज्यविकारत्वा-द्रूपेणुग्रहन्यायेनैव मुख्यमपि दध्यनारत्य पौर्णमासिकधर्मेतिति ।

इत्येकोनविंशं मधूदकयोराज्यानुपाजीयाज्यधर्मातिदेशाधिकरणम् (सूत्राणि ४०-४३)

इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्यश्रीराघवेन्द्रतीर्थयति-सार्वभौमकृते अष्टमे विशेषेणातिदेशाध्याये प्रथमः स्पष्टलिङ्गेनातिदेशपादः

अस्मिन् पादे अधिकरणानि १९ सूत्राणि ४३

आदितः अधिकरणानि ५१३ सूत्राणि १४३५

## अथाष्टमे विशेषेणातिदेशाध्याये द्वितीयोऽस्पष्टलिङ्गेनातिदेशपादः

### अथ प्रथममैष्टिकसौत्रामण्योरैष्टिकधर्मातिदेशाधिकरणम् (सूत्राणि १-९)

ॐ । पूर्वपादे चोदनावाक्यगतनिर्वपत्यादिशब्दसाम्यनिमित्तोऽतिदेशः प्राधान्येन चिन्तितः । अत्र तु चोदनावाक्यगतशब्दार्थीभूतहविःसाम्यनिमित्तकोऽतिदेशः प्राधान्येन चिन्त्यत इति पादभेदः पूर्वानन्तर्यञ्चास्य ज्ञेयम् ।

वाजिने सोमपूर्वत्वं सौत्रामण्याश्च ग्रहेषु तच्छब्दात् ॥ १ ॥

(अनुवषट्काराच्च ॥ २ ॥ समुपहूय भक्षणाच्च ॥ ३ ॥ क्रयणश्रपणपुरोरुगुपया-मग्रहणाऽऽसादनवासोऽपनयनञ्च तद्वत् ॥ ४ ॥ हविषा वा नियम्येत तद्विकारत्वात् ॥ ५ ॥ प्रशंसा सोमशब्दः ॥ ६ ॥ वचनानीतराणि ॥ ७ ॥ व्यपदेशश्च तद्वत् ॥ ८ ॥ पशुपुरोडाशस्य च लिङ्गदर्शनम् ॥ ९ ॥)

चातुर्मास्येषु "वाजिभ्यो वाजिनम्" इति श्रुते वाजिनयागे, तथा सौत्रामण्यां "आश्विनं गृह्णाति" इति, "सारस्वतमैन्द्रं चरुम्" इति श्रुतेषु ग्रहेषु च किं सौमिको विध्यन्तः, उतैष्टिक इति



सन्देहे, "सोमो वै वाजिनम्" "सुरा सोमः" इति वाजिने सुराग्रहेषु चाश्विनेषु सोमशब्दः सूयमानो ज्योतिष्टोमे अग्निहोत्रशब्द इव सोमधर्मातिदेशक इति प्राप्तम् । तदाह सूत्रे, वाजिने सौत्रामण्या-माश्विनादिसुराग्रहेषु च सोमपूर्वत्वम् सोमप्रकृतिकत्वम् । कुतः? तच्छब्दात् "सोमो वै वाजिनम्" "सुरा सोमः" इति तयोः सोमशब्दवत्त्वादिति । सिद्धान्तस्तु, [illegible] प्रयुक्तोऽनन्यप्रयोजनतया धर्मलक्षणार्थः । अत्र स्तुत्यर्थत्वात् प्रशंसार्थं एवायं शब्दो नातिदेशार्थः । तस्माद्धविःसामान्यादैष्टिको विध्यन्तो वाजिने सुराग्रहेषु च । हविःसामान्यञ्च वाजिनस्य पयः-परिणतिजन्यत्वात्सुरायाश्च व्रीहिजन्यत्वेनैव [illegible] पयोधर्माः व्रीहिधर्माश्चेति ज्ञेयम् ।

इति प्रथममैष्टिकसौत्रामण्योरैष्टिकधर्मातिदेशाधिकरणम् (सूत्राणि १-९)

### अथ द्वितीयं पशौ साम्नाय्यधर्मातिदेशाधिकरणम् (सूत्राणि १०-१४)

पशुः पुरोडाशविकारः स्याद्देवतासामान्यात् ॥ १० ॥

(प्रोक्षणाच्च ॥ ११ ॥ पर्यग्निकरणाच्च ॥ १२ ॥ साम्नाय्यं वा तत्प्रभवत्वात् ॥ १३ ॥ तस्य च पात्रदर्शनात् ॥ १४ ॥)

पूर्वविषयत्वेन सङ्गत्यासङ्गतिः । पूर्वपादे पशौ च लिङ्गदर्शनात् इत्यग्नीषोमीयपशौ दर्शपूर्ण-मासविध्यन्तप्राप्तिरित्युक्तम् । तत्र किमग्नीषोमीयपुरोडाशस्य विध्यन्तः स्यात्, उत साम्नाय्यस्येति सन्देहे, वाजिनस्य साम्नाय्यविकारत्वेऽपि स्फुटतया [illegible] तद्विकारता । किन्तु [illegible] हविःसामान्याद्दैवत्यरूपदेवतासामान्यात्पुरोडाशविध्यन्त इति प्राप्तम् । तदाह सूत्रे, पशुरित्यादि । स्पष्टोऽर्थः । सिद्धान्तस्तु, साम्नाय्यस्य पशुप्रभवत्वमिव पशोरपि पशुप्रभवत्वमस्तीति पशुसाम्नाय्ययोः पशुप्रभवत्वरूपपशुसम्बन्धित्वेन हविःसामान्यात्साम्नाय्यविध्यन्तः पशाविति ।

इति द्वितीयं पशौ साम्नाय्यधर्मातिदेशाधिकरणम् (सूत्राणि १०-१४)

### अथ तृतीयं पशौ पयोधर्मातिदेशाधिकरणम् (सूत्राणि १५-१८)

दध्नः स्यान्मूर्तिसामान्यात् ॥ १५ ॥

(पयो वा कालसामान्यात् ॥ १६ ॥ पशवानन्तर्यात् ॥ १७ ॥ द्रवत्वञ्चाविशिष्टम् ॥ १८ ॥)

पूर्वत्र पशौ सान्नाय्यविध्यन्त इति सामान्येनोक्तस्यात्र विशेषचिन्तनात्सङ्गतिः । पशौ किं दध्नो विध्यन्तः, उत पयस इति **सन्देहे,** घनत्वसाम्याद्दध्न इति **प्राप्तम्।** तदाह **सूत्रे,** दध्न इत्यादि। व्यक्तोऽर्थः। **सिद्धान्तस्तु,** पयो हि साक्षात्पशुप्रभवं यथा तथा पशुरपि साक्षात्पशुप्रभवः । पयो हि द्रवत्वाद्गतिमत्। पशुरपि गतिमान्। अतः साक्षात्पशुप्रभवत्वगतिमत्वसामान्यात्पयसो विध्यन्तः पशौ। न दध्न इति।

इति तृतीयं पशौ पयोधर्मातिदेशाधिकरणम् (सूत्राणि १५-१८)

## अथ चतुर्थमामिक्षायां पयोधर्मातिदेशाधिकरणम् (सूत्राणि १९-२३)

**आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥ १९ ॥**

**(एकं वा चोदनैकत्वात् ॥ २० ॥ दधि सङ्घातसामान्यात् ॥ २१ ॥ पयो वा तत्प्रधानत्वाल्लोकवद्दध्नस्तदर्थत्वात् ॥ २२ ॥ धर्मानुग्रहाच्च ॥ २३ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''तप्ते पयसि दध्यानयति । सा वैश्वदेव्यामिक्षा'' इति श्रुत आमिक्षायागः सादृश्यात्सान्नाय्यविकार इत्यविवादम्। तत्र किं दधिपयसोरुभयोर्धर्मः, उत दध्नः, अथ पयस इति **सन्देहे, पूर्वपक्षस्तु** पशोः पयोविकारत्वेऽपि नेह तथा । दधि क्षीरञ्च संसृष्टं द्वयमामिक्षेत्युच्यते । दधिपयसोराम्लत्वमाधुर्यरूपरसावप्यामिक्षायामुपलभ्येत इति विशेषाग्रहात्तदुभयविध्यन्त **इत्येकः** । तदाह **सूत्रे, आमिक्षा** दधिपय**उभयभाव्यत्वादुभयविकारः स्यादिति** । पयसः सप्तमीनिर्देशेन गुणत्वाद्दध्नो द्वितीयानिर्देशेन प्राधान्यावगमेन तस्यैव सेति परामर्शेन वैश्वदेवीति देवतासम्बन्धोक्त्या दध्न एव हविष्ट्वाद्घनत्वसामान्याच्च दध्नो विध्यन्त **इत्यन्यः** । **सिद्धान्तस्तु, एकनिष्पत्तेः सर्वं समं स्यादित्यत्र** चतुर्थाद्यपादेऽभिहितरीत्या पयस्येवाऽमिक्षामुत्पादयितुं सहकारित्वेन दध्न आनयनेन पयस एव प्राधान्येन सेति परामर्शपूर्वं देवतासम्बन्धोक्त्या तस्यैव हविष्ट्वेन पयोधर्म एवाऽमिक्षायामिति।

इति चतुर्थमामिक्षायां पयोधर्मातिदेशाधिकरणम् (सूत्राणि १९-२३)

## अथ पञ्चमं द्वादशाहे सत्राहीनयोर्व्यवस्थया धर्मातिदेशाधिकरणम् (सूत्राणि २४-२८)

**सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ २४ ॥**

**(अपि वा यजतिश्रुतेरहीनभूतप्रवृत्तिः स्यात् प्रकृत्या तुल्यशब्दत्वात् ॥ २५ ॥**



**द्विरात्रादीनामेकादशरात्रादहीनत्वं यजतिचोदनात् ॥ २६ ॥ त्रयोदशरात्रादिषु सत्रभूतस्तेष्वासनोपायिचोदनात् ॥ २७ ॥ लिङ्गाच्च ॥ २८ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । पूर्वपादे गणेषु द्वादशाहस्येत्युक्तम्। तत्र गणा द्विविधाः सत्राण्यहीनाश्च । ''त्रयोदशरात्रमृद्धिकामा उपेयुः'' ''चतुर्दशरात्रं प्रतिष्ठाकामा आसीरन्'' इत्यासानोपेयचोदनावन्ति त्रयोदशरात्रादीनि सत्राणि । ''द्विरात्रेण यजते'' ''त्रिरात्रेण यजते'' इति यजतिचोदनावन्तो द्विरात्रप्रभृतय एवैकादशरात्रान्ता अहर्गणा अहीनाः। तथैव दशमषष्ठषोडशेऽभिधानात्। तत्र द्वादशाहस्तु ''द्वादशाहेन प्रजाकामं याजयेत्'' इति यजतिचोदनावत्वात् ''द्वादशाहमृद्धिकामा आसीरन्'' इत्यासनोपाधिकत्वाच्चाहीनात्मा सत्रात्मा च । तत्र किमुभयविधस्यापि द्वादशाहस्य विध्यन्तः सत्रेष्वहीनेषु चोभयत्राविशेषेण प्रवर्तते, किं वा व्यवस्थयेति **सन्देहे,** पूर्वत्राऽमिक्षायां विशेषग्रहादुभयधर्माप्राप्तावपीह विशेषाग्रहात्सत्रेष्वहीनेषु च द्वादशाहस्य द्विविधस्यापि विध्यन्तोऽव्यवस्थया सर्वत्र विकृतिषु स्यादिति **प्राप्तम्** । तदाह **सूत्रे, सत्रमहीनश्चे**ति द्विविधो **द्वादशाहः** । **तस्योभय**स्यापि विकृतिष्व**व्यवस्थया** विध्यन्त**प्रवृत्तिः स्यात्** । कुतः? **ऐककर्म्यात्** द्वादशाहकर्मणएकत्वादिति । **सिद्धान्तस्तु,** सत्रत्वसाम्यात्सत्रेषु सत्रात्मकस्य द्वादशाहस्य विध्यन्तोऽहीनत्वसाम्याच्चाहीनेष्वहीनात्मकस्येति व्यवस्थयैव द्वादशाहस्य धर्मा विकृतिषु स्युर्नाव्यवस्थयेति।

इति पञ्चमं द्वादशाहे सत्राहीनयोर्व्यवस्थया धर्मातिदेशाधिकरणम् (सूत्राणि २४-२८)

## अथ षष्ठं पञ्चदशरात्रादिषु सत्रधर्मातिदेशाधिकरणम् (सूत्राणि २९-३२)

**अन्यतरतोऽतिरात्रत्वात्पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥ २९ ॥**

**(अहीनवचनाच्च ॥ ३० ॥ सत्रे वोऽपायिचोदनात् ॥ ३१ ॥ सत्रलिङ्गञ्च दर्शयति ॥ ३२ ॥)**

अत्रापि पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''त्रिवृदग्निष्टुदग्निष्टोमस्त्रिरात्रो दशरात्र उदयनीयोऽतिरात्रः'' इति वाक्ये पञ्चदशरात्रो यागः श्रुतः। ''मासमग्निहोत्रं जुहोति'' इत्यारभ्य ''दशरात्रो महाव्रतमुदयनीयोऽतिरात्रः'' इत्यन्तेन वाक्येन कुण्डपायिनामयनं श्रुतम् । तत्रोभयत्र किमहीनात्मकस्य द्वादशाहस्य विध्यन्तः, उत सत्रात्मकस्येति **सन्देहः** । **पूर्वपक्षस्तु,** त्रयोदशरात्रादिषु सत्रात्मकस्य

द्वादशाहस्य विध्यन्तप्रवृत्तावपि न पञ्चदशरात्रकुण्डपायिनामयनयोस्तत्प्रवृत्तिर्युक्ता । ''यदन्यतरतोऽतिरात्रः सोऽहीनः'' इति वचने ''यस्य यागस्यादावन्ते वाऽन्यतरत्रातिरात्रः श्रुतः सोऽहीनः'' इत्युक्तान्यतरत्रातिरात्रशब्दश्रवणरूपलिङ्गस्यानयोर्यागयोरन्ते अतिरात्र इत्युक्त्या दृष्टत्वेनानयोरहीनत्वात् । अतोऽहीनात्मकस्य द्वादशाहस्य विध्यन्तप्राप्तिः पञ्चदशरात्रकुण्डपायिनामयनयोरिति । तदाह **सूत्रकारः, पञ्चदशरात्रस्य कुण्डपायिनामयनस्य चान्यतरतोऽतिरात्रत्वादहीनत्वम्** । कुतः? **तद्भूतेषु** अन्यतरतोऽतिरात्रेषु द्विरात्रादिष्वहीनत्वस्य **दर्शनादिति** । **सिद्धान्तस्तु,** सत्रे वै यज्ञे ''ये यं काममिच्छन्ति ते पञ्चदशरात्रमुपेयुः'' ''भूतिकामाः कुण्डपायिनामयनमासीरन्'' इत्यासनोपायिचोदनावत्वरूपसत्रलिङ्गश्रवणात्सत्रात्मकद्वादशाहस्य विध्यन्त एवानयोः । अस्य लिङ्गस्य विधिवाक्यगतत्वेन प्रबलतयाऽहीनलिङ्गं प्रशंसापरत्वेन नेयम् । इतराणि केवलसत्राण्येव । एतौ तु यागौ स्वरूपेण सत्ररूपावप्यहीनलिङ्गेनाहीनावित्यपि व्यवहारयोग्याविति प्रशंसा ज्ञेया । तदाह **सूत्रे, सत्रे वोपायिचोदनात्** इति । **फलन्तु,** सत्रात्मकद्वादशाहविध्यन्तानुष्ठानम् ।

**इति षष्ठं पञ्चदशरात्रादिषु सत्रधर्मातिदेशाधिकरणम् (सूत्राणि २९-३२)**

**इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-**
**श्रीराघवेन्द्रयतिसार्वभौमकृते अष्टमाध्यायस्य द्वितीयः पादः**

अस्मिन् पादे अधिकरणानि ६ सूत्राणि ३२
आदितः अधिकरणानि ५१९ सूत्राणि १४६७

## अथ अष्टमाध्यायस्य तृतीयः पादः

### अथ प्रथमं शुचिदेवते आग्नेयस्य आग्नावैष्णवे चाग्नीषोमीयस्य धर्मातिदेशाधिकरणम् (सूत्रे १-२)

ॐ । पूर्वपादे हविरादिपदार्थसामान्यादतिदेश उक्तः । अत्र पदार्थाश्रितक्रमादिसाम्यात्स उच्यत इति पूर्वानन्तर्यमस्य पादस्य ततो भेदश्च ज्ञेयः ।

**हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥**

**(देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥ २ ॥)**



''आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्'' ''सरस्वत्याज्यभागा स्यात्'' ''बार्हस्पत्यश्चरुः'' इति हविर्गणः श्रुतः । तत्राऽद्यस्याऽऽग्नेयविध्यन्तः तृतीयस्य बार्हस्पत्यचरोरग्नीषोमीयविध्यन्तः, उत विपरीतमिति **सन्देहे,** प्रकृतौ दर्शपूर्णाख्ये कर्मण्याग्नेयः प्रथमोऽग्नीषोमीयस्तृतीयो दृष्टः । अतोऽत्र प्रथमस्याऽग्नावैष्णवस्य प्राथम्यरूपस्थानप्रमाणशब्दितदेशसामान्यादाग्नेयविध्यन्तः, अन्त्यस्य बार्हस्पत्यचरोरग्नीषोमीयस्य तृतीयस्य विध्यन्त इति **प्राप्तम्** । तथा च **सूत्रम्,** आग्नावैष्णवादिहविर्गुणे **परं** पश्चात्तनं बार्हस्पत्यं **उत्तरस्याग्नीषोमीयस्य** विध्यन्तमाप्नोति **देशसामान्यादिति** । **सिद्धान्तस्तु** विधिवाक्ये कर्मोत्पत्तिदशायामेव शीघ्रं द्विदैवत्यत्वरूपदेवतासामान्यमवगम्यमानमितरप्रतीतिसापेक्षप्रथमतृतीयभावरूपस्थानसामान्याद्विलम्बितप्रतीतिकान्न बाधमर्हतीत्याग्नावैष्णवस्याग्नीषोमीयविध्यन्तो बार्हस्पत्यस्याऽऽग्नेयविध्यन्त इति ।

**इति प्रथमं शुचिदेवते आग्नेयस्य आग्नावैष्णवे चाग्नीषोमीयस्य धर्मातिदेशाधिकरणम् (सूत्रे १-२)**

### अथ द्वितीयं जनकसप्तदशरात्रे त्रिवृत्स्वहःसु द्वादशाहधर्मातिदेशाधिकरणम् (सूत्राणि ३-५)

**गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताऽऽग्नेयवत् ॥ ३ ॥**

**(नानाहानि वा सङ्घातत्वात्प्रवृत्तिलिङ्गेन चोदनात् ॥ ४ ॥ तथा चान्यार्थदर्शनम् ॥ ५ ॥)**

पूर्वन्यायेन शङ्कनात्**सङ्गतिः** । जनकसप्तदशरात्राख्ये यागे श्रूयते ''चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानि'' इति । अहर्गणप्रकृतिभूते द्वादशाहे च क्रमात् त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशत्स्तोमयुक्तानि बृहद्रथन्तरादिपृष्ठस्तोत्रवन्ति षडहानि पठितानि । तत्र किं द्वादशाहिकत्रिवृतोऽह्नो जनकसप्तदशरात्रीयेषु चतुर्ष्वहस्सु प्रवृत्तिरुत त्रिवृदादीनां चतुर्णामह्नां क्रमेण चतुर्ष्वपि प्रवृत्तिरिति **सन्देहे,** पूर्वत्र शब्दात्प्रथमप्रतीतदेवतासामान्यबलीयस्त्वस्येव शब्दात्प्रथमप्रतीतत्रिवृत्त्वसामान्यस्य बलीयस्त्वाद्द्वादशाहिकेषु पृष्ठ्यषडहेषु त्रिवृतः प्राथमिकस्याह्नो विध्यन्तश्चतुर्ष्वप्यहस्स्वावर्तनीय इति **प्राप्तम्** । तदाह **सूत्रे,** चत्वारि त्रिवृन्तीति **गणचोदनायां यस्य** द्वादशाहिकस्य त्रिवृतोऽह्नो **लिङ्गं** त्रिवृत्त्वं दृश्यते **तस्याह्न आवृत्तिः प्रतीयेत** । **आग्नेयवत्** यथा ''अग्नये पावकाय'' ''अग्नये शुचयेऽष्टाकपालं निर्वपेत्'' इत्यत्र देवतैक्याच्चोदनासामान्यादाग्नेयविध्यन्ताभ्यासस्तथेहापि शब्देन त्रिवृत्वसामान्येन पृष्ठ्यषडहप्रथमाहरावृत्तिश्चतुर्ष्वहस्सु प्रतीयेतेति । **सिद्धान्तस्तु,** त्रिवृदह्नो विध्यन्तस्य चतुर्ष्वहस्सु प्रवृत्तौ

चतुर्णामह्नामग्निष्टोमत्वप्राप्त्या अग्निष्टोममुखानीति प्रथमाह्न एवाग्निष्टोमत्वोक्तिरयुक्ता स्यात् । प्रकृतौ द्वादशाहे त्रिवृदह्नः प्रथमस्याग्निष्टोमत्वात् । तस्माच्चत्वारीतिश्रुतसङ्ख्यातसामान्यवशेन त्रिवृदादीनां चतुर्णामह्नां विध्यन्ताः क्रमाच्चतुर्ष्वहस्सु प्रवर्तन्त इति ।

इति द्वितीयं जनकसप्तदशरात्रे त्रिवृत्स्वहस्सु द्वादशाहधर्मातिदेशाधिकरणम् (सूत्राणि २-५)

## अथ तृतीयं षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् (सूत्रे ६-७)

**कालाभ्यासे च बादरिः कर्मभेदात् ॥ ६ ॥**

**(तदावृत्तिन्तु जैमिनिरह्नामप्रत्यक्षसङ्ख्यत्वात् ॥ ७ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । षट्त्रिंशद्रात्रे सत्रे श्रूयते ''षडहा भवन्ति'' ''चत्वारो भवन्ति'' इति । तत्राहः सञ्ज्ञकानां सोमयागानां सङ्ख्याविशेषः षडहपदान्तर्गतेन षट्शब्देनोच्यते । सा च षट्सङ्ख्या पुनश्चतुःसङ्ख्यया विशिष्यमाणा चतुर्विंशतिसङ्ख्याकानामह्नां सङ्ख्ये पर्यवस्यति । तत्र **सन्देहः**, किं चतुर्विंशतावहस्सु द्वादशाहिको विध्यन्तः, उत षडहस्य चतुरावृत्तिरिति । **पूर्वपक्षस्तु**, ''चत्वारः षडहा भवन्ति'' इत्युक्त्याऽह्नां चतुर्विंशतित्वप्रतीत्याऽहर्गणत्वावगमात्, अहर्गणानां द्वादशाहप्रकृतिकत्वस्य **गणेषु** द्वादशाहस्येत्यत्रोक्तत्वात्पूर्ववदिहापि गणत्वसामान्याद्द्वादशाहिकविध्यन्तः । यदि तस्य सकृत्प्रवृत्त्या चतुर्विंशतत्यह्नां न पूर्तिस्तर्हि यावता पूर्तिस्तावदभ्यस्यतामिति । तदाह **सूत्रे**, कालशब्दोऽत्र कालपरिमितकर्मवचनः । अहःशब्दवत् । ततश्च ''षडहाश्चत्वारः'' इति **कर्माभ्यासे** विधीयमानेऽपि **बादरिश्चतुर्विंशतिरहानि** विधीयन्त इति मन्यते । तथा सत्येव **कर्मभेदात्सङ्ख्योपपत्तेरिति** । **सिद्धान्तस्तु**, चतुर्विंशतिसङ्ख्याकोऽहर्गणोऽत्र यदि प्रत्यक्षस्तदा स्यादेवम् । न चैवम् । किन्तु चतुर्भिः षडहैः श्रुतैरनुमीयते । चतुःसङ्ख्याविशिष्टः षडहविधिस्तु प्रत्यक्षः । तस्मात्प्रथमप्रतीतषडहशब्दानुसारेण षडहचतुष्कविधौ षडहाख्यकर्मविशेषस्य विध्यन्तश्चतुर्विंशत्यहस्सु पूर्त्यर्थं चतुर्भिरभ्यस्यत इति ।

इति तृतीयं षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् (सूत्रे ६-७)

## अथ चतुर्थं संस्थागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् (सूत्रे ८-९)

**संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ॥ ८ ॥**

**(अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादभिधानस्य तन्निमित्तत्वात् ॥ ९ ॥)**



पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । ''शतोक्थ्यं भवति'' ''शतातिरात्रं भवति'' इत्येवं श्रुते ज्योतिष्टोमसंस्थागणे किं ज्योतिष्टोमस्य विध्यन्तः शतकृत्वोऽभ्यसनीयः, उत द्वादशाहस्येति **सन्देहे**, पूर्वत्र यथा षडहश्रुत्या न द्वादशाहिकविध्यन्तस्य प्रवृत्तिरेवमत्राप्युक्थ्यश्रुत्यादिना न तस्य प्रवृत्तिः । उक्थ्यादेर्ज्योतिष्टोमसंस्थारूपत्वादिति **प्राप्तम्** । तथा च **सूत्रम्** । ''शतोक्थ्यं भवति'' इत्यादिसंस्था-**गणेषु** श्रूयमाणेषु **तदभ्यासो** ज्योतिष्टोमस्याभ्यासः **प्रतीयेत** । कुतः ? **कृतलक्षणस्योक्थ्यादिशब्द**कृतनामधेयस्य ज्योतिष्टोमस्यात्र **ग्रहाणादनुवादादिति** । **सिद्धान्तस्तु**, उक्थ्यादिशब्दा हि न ज्योतिष्टोमस्य नामधेयम् । येन तदनुवादेन शतत्वाभ्यासो विधीयेत । किन्तु स्तोत्रनामानि । तथा च यस्य कर्मण उक्थ्यादिस्तोत्रेण समाप्तिस्तस्मिन् कर्मणि तेन स्तोत्रेण कृतसमाप्तिं निमित्तीकृत्य वर्तन्ते । तथा च सन्निध्यभावेन प्रसिद्धकर्मप्रत्यभिज्ञानाभावाच्छतसङ्ख्याविशिष्टो गणो विधीयत इति गणत्वसामान्याद्द्वादशाहस्य विध्यन्तो भवति । तत्राद्यन्तौ प्रायणीयोदयनीयौ विना मध्यवर्तिनो दशरात्रस्य विध्यन्तो द्विरात्रादिविकृतिष्वहर्गणेष्वतिदेष्टव्य इति दशमस्य पञ्चमे पादे **चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यादित्यत्र** वक्ष्यमाणदिशा दशरात्रो दशकृत्वोऽभ्यस्यमानः प्रत्यहमुक्थ्यस्तोत्रेण समाप्यमानः शतोक्थ्यनामतामापद्यते । एवं शतातिरात्रमित्यत्रापि योज्यम् ।

इति चतुर्थं संस्थागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् (सूत्रे ८-९)

## अथ पञ्चमं शतोक्थ्यादौ ज्योतिष्टोमात्स्तोत्रोपचयाधिकरणम् (सूत्रे १०-११)

**गणादुपचयस्तत्प्रकृतित्वात् ॥ १० ॥**

**(एकाहाद्वा तेषां समत्वात्स्यात् ॥ ११ ॥)**

अत्रापि पूर्ववत्सङ्गतिः । ''शतोक्थ्यं भवति'' ''शतातिरात्रं भवति'' इत्यत्र द्वादशाहगतदशरात्रविध्यन्तो दशकृत्वः प्रवर्तत इत्युक्तं पूर्वत्र । तस्य च दशरात्रस्याद्यन्तौ द्वावग्निष्टोमौ । तयोश्च दशकृत्वोऽभ्यासे विंशतिः सम्पद्यन्ते । अतः शतोक्थ्ये द्वौ द्वावग्निष्टोमावुक्थ्यसङ्ख्यया वर्धयितव्यौ । अन्यथा तयोरुक्थ्यत्वाभावे विंशत्युक्थ्यन्यूनत्वेनाशीत्युक्थ्यतापत्त्या शतोक्थ्यता न स्यात् । तत्राऽगम्यमानान्युक्थ्यस्तोत्राणि किं द्वादशाहिकोक्थ्यस्तोत्रविकाराः, किं वा ज्योतिष्टोमोक्थ्यस्य विकारा इति **सन्देहे पूर्वपक्षस्तु**, शतोक्थ्यादिरूपगणस्य द्वादशाहिकविकारत्वात्पूर्वत्र यथा द्वादशाहिकानां धर्माणां प्रवृत्तिरित्युक्तं तथेहापि तदीयाहस्सु यान्युक्थ्यस्तोत्राणि तद्विकारत्वमेवात्राऽगन्तूनां स्तोत्राणामिति **प्राप्तम्** । **तदाह, गणात्** द्वादशाहादु**पचयः** शतोक्थ्येऽग्निष्टोमस्तोत्रस्योक्थ्यस्तोत्रे**णोपचयः** कर्तव्यः ।

शतोक्थ्यस्य द्वादशाहप्रकृतिकत्वादिति । **सिद्धान्तस्तु,** उक्थ्यादिस्तोत्राणि ज्योतिष्टोमे उत्पन्नानि द्वादशाहेऽतिदेशतः प्राप्तानि । यत्र चोत्पन्नानि तत एवातिदेशो युक्तः । नातिदिष्टस्थलात् । 'न हि भिक्षुको भिक्षुकाद्याचितुमर्हति, सत्यन्यस्मिन्नभिक्षुके दातरि'' इति न्यायात् । अतो ज्यौतिष्टोमिकानामेवोक्थ्यानां विध्यन्तस्यात्र प्रवृत्तिरिति । तदाह **सूत्रे, एकाहाद्वा तेषां समत्वात्स्यादिति । फलन्तु,** द्वादशाहेऽतिदिष्टानामुक्थ्यादिस्तोत्राणां धर्मविशेषविधानाद्धर्मविशेषानुष्ठानं **पूर्वपक्षे । सिद्धान्ते** तु नेति ।

इति पञ्चमं शतोक्थ्यादौ ज्योतिष्टोमात्स्तोत्रोपचयाधिकरणम् (सूत्रे १०-११)

### अथ षष्ठं गायत्रमेतदहर्भवति इत्यादावुत्पत्तिगायत्रीणामागमाधिकरणम् (सूत्राणि १२-३६)

**गायत्रीषु प्राकृतीनामपच्छेदः प्राकृत्यधिकारात्सङ्ख्यात्वादग्निष्टोमवद-व्यतिरेकात्तदाख्यत्वम् ॥ १२ ॥**

**(तन्नित्यवच्च पृथक्सतीषु तद्वचनम् ॥ १३ ॥ न विंशतौ दशेति चेत् ॥ १४ ॥ ऐकसङ्ख्यमेव स्यात् ॥ १५ ॥ गुणाद्वा द्रव्यशब्दः स्यादसर्वविषयत्वात् ॥ १६ ॥ गोत्ववच्च समन्वयः ॥ १७ ॥ सङ्ख्यायाश्च शब्दवत्वात् ॥ १८ ॥ इतरस्याश्रुतित्वाच्च ॥ १९ ॥ द्रव्यान्तरे निवेशादुक्थ्यलोपैर्विशिष्टं स्यात् ॥ २० ॥ अशास्त्रलक्षणत्वाच्च ॥ २१ ॥ उत्पत्तिनामधेयत्वाद्भक्त्या पृथक्सतीषु स्यात् ॥ २२ ॥ वचनमिति चेत् ॥ २३ ॥ यावदुक्तम् ॥ २४ ॥ अपूर्वे च विकल्पः स्याद्यदि सङ्ख्याविधानम् ॥ २५ ॥ ऋग्गुणन्नेति चेत् ॥ २६ ॥ तथा पूर्ववति स्यात् ॥ २७ ॥ गुणावेशश्च सर्वत्र ॥ २८ ॥ निष्पन्नग्रहणान्नेति चेत् ॥ २९ ॥ तथेहापि स्यात् ॥ ३० ॥ यदि वाऽविशये नियमः प्रकृत्युपबन्धाच्छरेष्वपि प्रसिद्धः स्यात् ॥ ३१ ॥ दृष्टः प्रयोग इति चेत् ॥ ३२ ॥ तथा शरेष्वपि ॥ ३३ ॥ भक्त्येति चेत् ॥ ३४ ॥ तथेतरस्मिन् ॥ ३५ ॥ अर्थस्य चासमाप्तत्वान्न तासामेकदेशे स्यात् ॥ ३६ ॥)**

पूर्वत्रोपचयश्चिन्तितः । अत्रापचयश्चिन्त्यत इति सङ्गतिः । ''वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत'' इति श्रुतैकाहबृहस्पतिसवे ज्योतिष्टोमादेकाहात्प्रकृतिभूताद्गायत्रत्रिष्टुबादिनानाच्छन्दस्सु प्राप्तेषु छन्दोन्तराणि निरस्य ''गायत्रमेतदहर्भवति'' इति गायत्री नियमिता । तत्र किं त्रिष्टुबादिष्वेव



चोदकप्राप्तेष्वक्षरादिलोपेन चतुर्विंशत्यक्षराणि परिशेष्य गायत्री सम्पाद्या, किं वा दाशतय्यामुत्पन्नाऽऽनेतव्येति **सन्देहे,** गायत्रीशब्दस्य चतुर्विंशत्यक्षरविशिष्टास्वेवर्क्षु प्रयोगान्नागृहीतविशेषणान्यायेन चतुर्विंशतिसङ्ख्यैव गायत्रीपदवाच्येति चोदकाबाधाय चोदकप्राप्तत्रिष्टुभ्येवाक्षरलोपेन गायत्री सम्पाद्या । तथा च सति तिस्रोऽनुष्टुभश्चतस्रो गयत्र्य इत्युपपद्यत इति **प्राप्तम्** । तदाह **सूत्रकारः, गायत्रीषु** ''गायत्रमेतदहर्भवति'' इत्यादिगायत्रीचोदनासु **प्राकृतीनां** त्रिष्टुब्जगत्यादीनामपच्छेदोऽधिकाक्षरलोपः स्यात् । **प्राकृतीनामेव** त्रिष्टुबादीनां **चोदकेन प्राप्तत्वात्** । ननु श्रुतगायत्र्या त्रिष्टुबादिबाधोऽस्त्वित्यत उक्तम् ॥ **सङ्ख्यात्वादिति** ॥ गायत्रीशब्दस्य सङ्ख्यामात्रवाचित्वेन गायत्रमेतदिति वाक्येन सङ्ख्याविशिष्टर्चोऽनुपदेशात् । **अग्निष्टोमवत्** ''शताग्निष्टोमं भवति'' इत्यत्र यथा द्वादशाहिकानां चोदकप्राप्तानामह्वामुक्थ्यावलोपस्तथाऽत्रापि चोदकप्राप्तानामक्षरावलोपः । सङ्ख्यामात्रवाचितैव कथमित्यतोऽ-**व्यतिरेकादिति** ॥ सङ्ख्यासत्व एवर्क्षु गायत्र्यादिशब्दस्य प्रयोगात्तव्द्यतिरेके चाप्रयोगात्**तदाख्यत्व**मिति । **सिद्धान्तस्तु,** सङ्ख्यामात्रवाचित्वे गायत्र्यादिशब्दस्य घटादौ चतुर्विंशतिसङ्ख्यायुक्ते वाक्यान्तरे च प्रयोगापातादष्टाक्षरपादत्रयादियुक्तविशेषस्यैव वाचको गायत्र्यादिशब्द इति दाशतय्यामुत्पन्नगायत्र्यां नेतव्या । न चैवं चोदकबाधः। उपदेशेनातिदेशस्य बाधादिति । ''तिस्रोऽनुष्टुभः'' इति तु गौणं नेयम् ।

इति षष्ठं ''गायत्रमेतदहर्भवति'' इत्यादावुत्पत्तिगायत्रीणामागमाधिकरणम् (सूत्राणि १२-३६)

इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते अष्टमाध्यायस्य तृतीयः पादः

अस्मिन् पादे अधिकरणानि ६ सूत्राणि ३६

आदितः अधिकरणानि ५२५ सूत्राणि १५०३

## अथाष्टमाध्यायस्य चतुर्थः पादः

### अथ प्रथमं दर्वीहोमशब्दस्य होमनामधेयताधिकरणम् (सूत्राणि १-९)

ॐ । एवमतीतग्रन्थेनातिदेशे प्रपञ्चिते सत्यत्र पादे दर्वीहोमेष्वविहितेतिकर्तव्यताकत्वेप्यतिदेशो नास्तीत्यपवादविवक्षया दर्वीहोमशब्दः किं गुणविधिर्नामधेयं वेति चिन्त्यत इति फलतः पूर्वापवादत्वात्पादभेदः पूर्वानन्तर्यञ्चास्य ध्येयम् ।

**दर्वीहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥**

(स लौकिकानां स्यात्कर्तुस्तदाख्यत्वात् ॥ २ ॥ सर्वेषां वा दर्शनाद्वास्तुहोमे ॥ ३ ॥ जुहोतिचोदनायां वा संयोगात् ॥ ४ ॥ द्रव्योपदेशाद्वा गुणाभिधानं स्यात् ॥ ५ ॥ न लौकिकानामाचारग्रहणत्वाच्छब्दवताञ्चान्यार्थविधानात् ॥ ६ ॥ दर्शनाच्चान्यपात्रस्य ॥ ७ ॥ तथाऽग्निहविषोः ॥ ८ ॥ उक्तश्चार्थसम्बन्धः ॥ ९ ॥)

''यदेकया जुहुयाद्दर्वीहोमं कुर्यात्'' इत्यर्थवादगतो दर्वीहोमशब्दः किं गुणविधिर्नामधेयं वा, नामधेयत्वेपि लौकिकस्थालीपाकादिकर्मनामधेयमुत वैदिककर्मनामधेयमपि, तत्रापि किं यागनामोत होमनामेति **सन्देहः** । **पूर्वपक्षस्तु,** ''दर्व्या होमः'' इति तृतीयासमासे ''दध्ना जुहोति'' इत्यादाविव होमानुवादेन गुणविधित्वसम्भवाद्दर्वीद्रव्यरूपो गुणो विधीयत **इत्येकः** । तदाह **सूत्रे, गुणविधानं स्याद्द्रव्योपदेशादिति** । दर्वीपदस्य होमपदसम्बन्धाद्धोमपदस्य च कर्मवचनत्वात् ''दर्व्याख्यो होमो दर्वीहोमः'' इति समासस्य होमप्रधानत्वाद्दर्वीहोमशब्दः कर्मनामधेयमिति **द्वितीयः** । तदाह **सूत्रे, दर्वीहोमो** दर्वीहोमपदं **यज्ञाभिधानं** होमवाचकम् । दर्वी होम इति **होमसम्बन्धादिति** । ''अम्बष्ठानां दार्विहोमिको ब्राह्मणः'' इति श्रुतौ स्थालीपाकादिस्मार्तहोमकर्तरि दार्विहोमिकपदप्रयोगाल्लौकिक-नामधेयमिति **तृतीयः । तदाह, लौकिकानां स्यादिति** । ''यदेकया जुहुयाद्दर्वीहोमं कुर्यात्'' ''पुरोनु-वाक्यामनूच्य याज्यया जुहोति'' इति वैदिके वास्तुहोमेऽपि दर्वीहोमपदप्रयोगाद्वैदिकहोमानामपि होमत्वाविशेषाच्च वैदिकानामपि कर्मणां तन्नामधेयमिति **चतुर्थः** । तदाह **सूत्रे, सर्वेषां वा दर्शना-द्वास्तुहोमे** इति । ''सोमेन यजेत'' इत्यादौ यागत्वेनोत्पन्नानां सोमयागादीनां ''यद्ग्रहान् जुहोति'' इति होमत्वेनानुवादान्न यागहोमयोर्भेद इति होमपदसंयोगेऽपि यागनामैतदिति **पञ्चमः** । **सिद्धान्तस्तु, न** यागस्य होमत्वम् । यागो ह्यपूर्वार्थः । होमस्तु द्रव्यस्य प्रतिपत्तिरूपसंस्कार एवेति तृतीयस्य चतुर्थपादे सर्वप्रदानं हविषस्तदर्थत्वादित्यत्रोक्तेः । अतो जुहोत्युत्पत्तिनामैवेदं नामधयमिति । तदाह **सूत्रे, जुहोतिचोदनायां वा संयोगादिति** ।

इति प्रथमं दर्वीहोमशब्दस्य होमनामधेयताधिकरणम् (सूत्राणि १-९)

## अथ द्वितीयं दर्वीहोमशब्दस्यापूर्वताधिकरणम् (सूत्राणि १०-२८)

तस्मिन् सोमः प्रवर्तेताव्यक्तत्वात् ॥ १० ॥

(न वा स्वाहाकारेण संयोगाद्वषट्कारस्य च निर्देशात्तन्त्रे तेन विप्रतिषेधात् ॥ ११ ॥ शब्दान्तरत्वाच्च ॥ १२ ॥ लिङ्गदर्शनाच्च ॥ १३ ॥ उत्तरार्थस्तु स्वाहाकारो



यथा साप्तदश्यं तत्राविप्रतिषिद्धा पुनः प्रवृत्तिर्लिङ्गदर्शनात्पशुवत् ॥ १४ ॥ अनुत्तरार्थो वाऽर्थवत्वादानर्थक्याद्धि प्राकृतस्योपरोधः स्यात् ॥ १५ ॥ न प्रकृताव-पीति चेत् ॥ १६ ॥ उक्तं समवाये पारदौर्बल्यम् ॥ १७ ॥ तच्चोदना वेष्टेः प्रवृत्तित्वाद्विधिः स्यात् ॥ १८ ॥ शब्दसामर्थ्याच्च ॥ १९ ॥ लिङ्गदर्शनाच्च ॥ २० ॥ तत्राभावस्य हेतुत्वाद्गुणार्थे स्याददर्शनम् ॥ २१ ॥ विधिरिति चेत् ॥ २२ ॥ न वाक्यशेषत्वाद्गुणार्थे च समाधानं नानात्वेनोपपद्यते ॥ २३ ॥ येषां वाऽपरयो-र्होमस्तेषां स्यादविरोधात् ॥ २४ ॥ तत्रौषधानि चोद्यन्ते तानि स्थानेन गम्येरन् ॥ २५ ॥ लिङ्गाद्वा शेषहोमयोः ॥ २६ ॥ प्रतिपत्ती तु ते भवतस्तस्मादतद्विकारत्वम् ॥ २७ ॥ सन्निपाते विरोधिनामप्रवृत्तिः प्रतीयेत विध्युत्पत्तिव्यवस्थानादर्थस्या-परिणेयत्वाद्वचनादतिदेशः स्यात् ॥ २८ ॥)

यदर्थं पूर्वत्र दर्वीहोमपदे गुणविधिनामधेयचिन्ता कृता सोऽयमतिदेशापवादोऽधुनाऽऽरभ्यत इति **सङ्गतिः** । ''भिन्ने जुहोति'' ''स्कन्ने जुहोति'' इत्यादिवाक्यविहितदर्वीहोमशब्दिता होमाः किं पूर्ववन्तः, किं वा अपूर्ववन्त इति **सन्देहे,** अश्रुतेतिकर्तव्यताकत्वाद्यस्य कस्यचिद्विध्यन्तेऽवश्यापेक्षिते सत्युत्पत्तावश्रुतदेवताकत्वेनाव्यक्तचोदनाकतया **अव्यक्तासु तु सोमस्येत्युक्तदिशा** सौमिकविध्यन्त **इत्येकः पूर्वपक्षः** । तदाह **सूत्रे, तस्मिन् सोमः प्रवर्तेताव्यक्तत्वादिति** । **व्यक्तोऽर्थः** । सोमस्य यागत्वेन दर्वीहोमानाञ्च होमत्वेन विसदृशत्वान्न तयोः प्रकृतिविकृतिभावः सम्भवति । किन्त्वग्निहोत्र-नारिष्टादीनां धर्मवतां विध्यन्तस्य प्रवृत्तिरिति **द्वितीयः** । तदाह **सूत्रे, शब्दान्तरत्वाच्चेति** । यजति-शब्दाज्जुहोतीतिहोमवाचिश्ब्दस्य भेदवत्वादित्यर्थः । **सिद्धान्तस्तु,** नारिष्टहोमादिप्रकृतिकत्वे तदङ्ग-भूतानामिध्माबर्हिरादीनां दर्वीहोमशब्दितत्र्यम्बकहोमेषु प्राप्तिः स्यात् । न च सास्ति । ''नेध्माबर्हिः सन्नह्यते'' इति तदभावदर्शनात् । तस्मादपूर्वत्वमेवैतेषामिति न कस्यापि विध्यन्तस्यातिदेश इति यावच्छ्रुतद्रव्यदेवताभ्यामेव तेषां होमानामनुष्ठानमिति ।

इति द्वितीयं दर्विहोमश्ब्दस्यापूर्वताधिकरणम् (सूत्राणि १०-२८)

इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते अष्टमाध्यायस्य चतुर्थः पादः

अस्मिन् पादे अधिकरणानि २ सूत्राणि २८

आदितः पादे अधिकरणानि ५२९ सूत्राणि १५३१

## अथ नवमाध्याये प्रथमःपादः

ॐ । पूर्वत्रातिदेशश्चिन्तितः । अत्राध्याये ऊहश्चिन्त्यते । ऊहो नाम प्राकृतद्रव्यदेवतादिपदार्थकार्यार्थानां मन्त्रादीनां प्राकृतपदार्थस्थानापन्नवैकृतपदार्थकार्यार्थितया प्राप्तानां तदनुगुणतयाऽन्यथाभूतः प्रयोगः । तदुक्तम्,

**प्राकृतस्थानपतितपदार्थान्तरकार्यतः ।**
**ऊहः प्रयोगो विकृत ऊह्यमानतयोदितः ॥ इति ॥**

स चातिदिष्टमन्त्रसामसंस्कारविषयत्वादतिदेशानन्तरमारभ्यते । तत्र तावदूहस्यातिदेशाधीनत्व सिद्धये मन्त्रसामसंस्काराणां प्रकृतौ देवतादिस्वरूपप्रयुक्तत्वं न भवति । किन्त्वपूर्वप्रयुक्तत्वमेवेति स्मारयितुमिदं सूत्रम्

### अथ प्रथममग्निहोत्रादिषूक्तानां धर्माणामपूर्वप्रयुक्तत्वाधिकरणम् (सूत्रम् १)

**यज्ञकर्म प्रधानं, तद्धि चोदनाभूतं, तस्य द्रव्येषु**
**संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥ इति ।**

अस्यार्थः - यज्ञकर्मापूर्वं प्रधानं प्रयोजकम् । मन्त्रादीनामिति शेषः । **तद्धि** अपूर्वं हि **चोदनाभूतं** चोदनाप्रमेयम् । यजेतेति चोदनया ''यागेनापूर्वं कुर्यात्'' इति विधीयत इति यावत् । तस्यापूर्वस्य सम्बन्धिषु व्रीह्यादिद्रव्येषु संस्कारोऽवघातादिस्तत्प्रयुक्तोऽपूर्वसाधनत्वकृतः । कुतः? तदर्थत्वादपूर्वार्थत्वादवघातादेरिति । द्रव्यदेवतादिस्वरूपप्रयुक्तत्वे व्रीह्यादिद्रव्यस्वरूपस्य नीवारादावभावेन तत्रावघातादिसंस्कारादेरप्रवृत्तेरूहो न स्यात् । अपूर्वसाधनत्वप्रयुक्तत्वे तु, अपूर्वीयत्वस्य नीवारादावपि सत्वेनावघातादिसंस्काराणां मन्त्रादीनाञ्च विकृतावपि प्राप्तिसत्वेन तदनुगुणतया तत्रोहः सिध्यतीत्यपूर्वप्रयुक्तत्वमिह चिन्त्यते ।

तथा हि, ''व्रीहीनवहन्ति'' इत्यवघातादयः संस्काराः, बृहदादिसामानि ''अग्नये जुष्टम्'' इत्यादि मन्त्राश्च किं व्रीह्यग्न्यादिस्वरूपप्रयुक्ताः, उतापूर्वप्रयुक्ता इति सन्देहे, श्रुतस्वरूपाविवक्षायां हेत्वभावाद्व्रीह्यादिस्वरूपप्रयुक्ता एवेति प्राप्ते सिद्धान्तः, व्रीह्यादिस्वरूपप्रयुक्तत्वे ''व्रीहिनवहन्ति'' इत्यादिवाक्यवैयर्थ्यापत्तेः, प्रकरणबलात् ''अपूर्वीयानवहन्ति'' इत्यपूर्वसाधनत्वप्रयुक्ता एवैत इति सप्तमाद्यसिद्धमिह स्मारितमित्याहुः ।



**यद्वा** सप्तमाद्ये हि अङ्गानां यज्यर्थत्वं वाऽपूर्वप्रयुक्तत्वं वेति **सन्देहे**, यजिप्रयुक्तत्वे विकृतियागानामपि यजित्वेन सर्वत्रोपदेशात एवाङ्गानि स्युरिति नातिदेशावकाश इत्याशङ्क्य यज्यर्थत्वेऽपि धर्माणां ''भिन्ने जुहोति'' इत्यत्र क्रत्वर्थस्यापि होमस्य भेदनप्रयुक्तत्ववत्प्राकरणिकतत्तदपूर्वनिमित्तत्व सम्भवेन तन्मात्रेण व्यवस्थोपपत्तेर्न नियमेनापूर्वार्थता वाच्येत्युक्तम् । अत्र तु व्रीह्यादिस्वरूपार्थत्वे नीवारादावूहासिद्धेरपूर्वार्था अवघातादय इति व्युत्पाद्यत इति **यज्ञकर्मेत्यादिसूत्रकृदभिप्रायः ।**

**अथ वा** सप्तमाद्ये प्रयाजाद्यारादुपकारकाणां यज्यर्थत्वमाशङ्क्यापूर्वार्थत्वोक्तावपीह प्रोक्षणावघातादीनां सन्निपातिनां व्रीहीनित्यादिश्रुत्या व्रीह्यादिस्वरूपार्थत्वमेवेति **प्राप्ते**, तथात्वे ''व्रीहीनवहन्ति'' इत्यादिवाक्यवैयर्थ्यात्तद्द्वारकापूर्वार्थतैवेत्य**भिप्रायः ।**

एवं वा प्रोक्षणावघातादिधर्माणां सप्तमाद्योक्तन्यायेनापूर्वार्थत्वेऽपि किं तेषां यागो निमित्तं उतापूर्वमेव न यजतिरिति **सन्देहे**, यजेतेत्यस्य ''यागेनापूर्वं भावयेत्'' इत्यर्थतया अपूर्वस्य भाव्यत्वात् भाव्यत्वेनावगम्यमानस्य च युगपत् भाव्यत्वेन निमित्तत्वेन च प्रतिपादनायोगाद्यजिरेव निमित्तम् । नापूर्वम् । तथा चावघातादेरप्यपूर्वनिमित्तकत्वायोगेन व्रीह्यादिस्वरूपनिमित्तकत्वान्न नीवारादिष्ववघातादिरिति **प्राप्ते सिद्धान्तः**, यजेर्निमित्तताबोधकयदिशब्दादेरभावादपूर्वस्य तु निमित्तत्वबोधकाभावसाम्येऽपि साध्यस्य साधनानुष्ठाननिमित्तत्वप्रसिद्धेरनिष्पन्नस्याप्यपूर्वस्य साध्यतया बुद्धावुपस्थितत्वरूपेण सिद्धत्वेन निमित्तत्वसम्भवादवघातादयोऽपूर्वार्था अपूर्वनिमित्तकाश्चेत्य**भिप्रायः ।** फलन्तूक्तदिशा निमित्तत्वस्य साध्यत्वावगत्यधीनत्वात्तस्य च विकृत्यपूर्वेणापि तुल्यत्वाद्वैकृतापूर्वेणापि निमित्तभूतेन स्वसाधनीभूतनीवाराद्यङ्गत्वेनावघाताद्यनुष्ठापनसम्भवात् ''नीवारानवहन्ति'' इत्याद्यूहसिद्धिरिति ज्ञेयम् । एवं चतुर्धाऽभिप्रायभेदेऽपि यज्ञकर्मेत्याद्येकमेवाधिकरणमित्याहुः ।

इति प्रथममग्निहोत्रादिषूक्तानां धर्माणामपूर्वप्रयुक्तत्वाधिकरणम् (सूत्रम् १)

### अथ द्वितीयं प्रोक्षणस्यापूर्वप्रयुक्तत्वाधिकरणम् (सूत्रे २-३)

**संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तता स्यात् ॥ २ ॥**

**(तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसम्बन्धस्तस्माद्यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥)**

पूर्वाक्षेपेणात्र शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोः श्रूयते ''प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति'' ''प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टि'' इति । तत्र प्रोक्षणं किं वाक्याद्धन्तिपिष्ट्यर्थमुत

प्रकरणादपूर्वार्थमिति **सन्देहः । पूर्वपक्षस्तु,** अवहन्तिपिनष्टीतिशब्दाभ्यां हन्तिपिष्टिस्वरूपं श्रुत्या प्रतीयते । नापूर्वीयक्रियात्वम् । हन्तिपिष्टिसाधनता च तृतीयाश्रुत्योलूखलादेः प्रतीयत इति हन्तिपिष्टिसाधनोलूखलाद्यनुवादेन प्रोक्षिताभ्यामिति पदान्तरेण तत्सामानाधिकरण्येन विधीयमानं प्रोक्षणं हन्तिपिष्टिसाधनत्वप्रयुक्तं सद्वाक्याद्धन्तिपिष्टयर्थमेव भवति । प्रकरणबलान्नापूर्वार्थम् । तस्य वाक्यादुर्बलत्वात् । तथा च पूर्वाधिकरणोक्तमपूर्वार्थत्वमयुक्तमिति । तथा **च सूत्रम्, संस्कारे** हन्तिपिष्टयाख्यसंस्कारे **युज्यमानानां** प्रोक्षणादीनां **तादर्थ्यात्** संस्कारार्थत्वात् **तत्प्रयुक्तता** संस्कारप्रयुक्तता **स्यादिति । सिद्धान्तस्तु,** अवघातादिस्वरूपमात्रस्य प्रोक्षणमन्तरेणापि सम्भवेन हन्तिपिष्टिस्वरूपमात्रार्थत्वे ''प्रोक्षिताभ्यामवहन्ति'' इति वाक्यानर्थक्यादपूर्वीयहन्तिपिष्टयोश्चोलूखलादिसंस्कारकप्रोक्षणेन विनाऽनुत्पत्तेस्तत्पक्षे वाक्यसार्थक्यात् ।

**आनर्थक्यप्रतिहतानां विपीरीतं बलाबलम् ।**

इति न्यायाद्वाक्यप्रमाणकमपि हन्त्यादिस्वरूपार्थत्वं बाधित्वा प्रकरणाल्लक्षितं यद्दार्शपौर्णमासिकोपत्त्यपूर्वसाधनव्यापारत्वं तत्प्रयुक्तं सद्धन्तिपिष्टिद्वारा अपूर्वार्थमेव प्रोक्षणमिति प्रागुक्तं युक्तमिति । **फलन्तु,** यत्रावघातस्तत्रैव प्रोक्षणमिति नैऋतचरौ ''कृष्णानां व्रीहीणां नखनिर्भिन्नानाम्'' इत्यत्रावघाताभावान्नखेषु न प्रोक्षणं **पूर्वपक्षे । सिद्धान्ते तु,** विदलनस्य तण्डुलनिष्पत्तिप्रणाड्याऽपूर्वजननव्यापारत्वान्नखानाञ्च तत्साधनत्वादस्ति प्रोक्षणमिति ''प्रोक्षितनखैर्विदलनं कुर्यात्'' इत्यूहसिद्धिः ।

इति द्वितीयं प्रोक्षणस्यापूर्वप्रयुक्तत्वाधिकरणम् (सूत्रे २-३)

### अथ द्वितीयमुच्चावचध्वनेः परमापूर्वाप्रयुक्तताधिकरणम् (सूत्रम् ३) (वर्णकान्तरम्)

**तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसम्बन्धस्तस्माद्यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥**

**वर्णकान्तरन्तु,** ज्योतिष्टोमे श्रूयते ''यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयात् । मन्द्रं प्रायणीयायाम् । उपांशूपसत्सु । उच्चैरग्नीषोमीये'' इति । तत्र ''आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः'' इति यजमानसंस्कारार्थं विहितायां दीक्षणीयेष्टौ श्रुतो यथाकाम्यस्वरः किं दीक्षणीयापूर्वप्रयुक्तः, उत परमापूर्वप्रयुक्त इति **सन्देहे,** दीक्षणीयापूर्वस्य निष्फलत्वात्परमापूर्वस्य स्वर्गाख्यफलवत्त्वात्फलवच्छेषतैव युक्तेति **प्राप्ते सिद्धान्तः,** अत्र फलवत्परमापूर्वस्याश्रवणाद्दीक्षणीयाशब्दः स्वजन्यापूर्वं लक्षयित्वा तद्द्वारा परमापूर्वं लक्षयित्वा परमापूर्वसाधनापूर्वकारणदीक्षणीयायामित्यर्थपरः स्यात् । तथा च लक्षितलक्षणादोषः । ततो वरा स्वापूर्वमात्रलक्षणेति तत्प्रयुक्त एव स्वरः । न च तस्य नैष्फल्यदोषः । परमापूर्वोपयोगितया परम्परया फलवत्वात् । न च साक्षात्फलवत्त्वमेव प्रयोजकमिति वाच्यम् । फलवत्वमात्रस्य प्रयोजकत्वसम्भवे साक्षात्वविशेषणस्य गौरवदुष्टत्वादिति । अत्र दीक्षणीयापूर्वं यजमानसंस्कार एवेति **बहवः** । दीक्षणीयोत्पत्त्यपूर्वं दीक्षणीयापूर्वमिति **केचित् । फलन्तु,** अत्रोक्तस्वरविशेषस्य परमापूर्वप्रयुक्तत्वे ''त्रैधातवीया दीक्षणीया भवति'' इत्यश्वमेधे विहितायां तत्कार्यापन्नायां त्रैधातवीयायां प्राप्तिः प्रोक्षणादेर्नीवारादाविव **पूर्वपक्षे** । आग्नावैष्णवापूर्वप्रयुक्तत्वे त्वाग्नावैष्णवापूर्वस्य तत्राभावान्न प्राप्तिः स्वरस्येति **सिद्धान्ते** नास्त्यूह इति भाष्य एव व्यक्तम् ।



इति द्वितीयमुच्चावचध्वनेः परमापूर्वाप्रयुक्तताधिकरणम्

### अथ तृतीयं फलदेवतासम्बद्धधर्माणामप्यपूर्वप्रयुक्तताधिकरणम् (सूत्रे ४-५)

**फलदेवतायोश्च ॥ ४ ॥**

**(न चोदनातो हि ताद्गुण्यम् ॥ ५ ॥)**

पूर्ववैषम्येणात्र शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोर्मन्त्रौ श्रुतौ ''अगन्म सुवः सुवरगन्म'' इत्येकः। ''अग्नेरहमुज्जितिमनूज्जेषम्'' इत्यपरः । किमेतौ मन्त्रौ स्वर्गस्वरूपाग्निस्वरूपप्रयुक्तौ, किं वा स्वर्गस्य यदपूर्वसाध्यत्वरूपमग्नेश्च यद्देवतात्वरूपं तत्प्रयुक्ताविति **सन्देहे,** मन्त्रलिङ्गपर्यालोचनया स्वर्गाग्निस्वरूपयोरेव प्रतीतेरितोऽन्याकारस्याप्रतीतेर्मन्त्रलिङ्गबलात्स्वर्गाग्निस्वरूपप्रयुक्तावेतौ मन्त्रौ । न तूक्तरूपान्तरप्रयुक्तौ । तथात्वे स्वर्गाग्निवाचिपदयोस्तादृशाकारलक्षणाप्रसङ्गेन मन्त्राणां मुख्यार्थ एव विनियोग इति तृतीयाध्यायद्वितीयपादीयाद्याधिकरणोक्तिविरोधः । न चानर्थक्यदोषः । मन्त्रौ प्रति शेषिभूतयोः स्वर्गाग्न्योरपूर्वार्थत्वात् । **यद्वा** फलस्य स्वतः पुरुषार्थतयाऽपूर्वादपि प्रधानत्वाद्देवतायाश्च मन्त्रेण शंसितायाः फलदातृत्वसम्भवाच्चैवञ्च पूर्वत्रानर्थक्यप्रतिहततया दुर्बलस्य वाक्यस्य प्रकरणेन बाधेऽपीह लिङ्गस्य न बाधः । ततो मन्त्रौ दार्शपौर्णमासिकस्वर्गाग्न्यर्थाविति **प्राप्तम् ।** तथा **च सूत्रम् । फलदेवतयोश्चेति** । प्रयोजकता स्यादिति शेषः । **सिद्धान्तस्तु,** स्वर्गाख्यफलस्य सर्वस्मात्प्राधान्येऽपि तत्स्वरूपप्रकाशनेन फलासिध्या तन्मात्रप्रकाशनस्याऽनर्थक्यात् अतोऽस्य मन्त्रस्य स्वर्गार्थतावादिना प्रकरणेनापूर्वशेषत्वं स्वीकृत्य तद्द्वारेण तत्साध्यस्वर्गार्थता वाच्येति सुवरित्यादिस्वर्गवाचिपदेन प्राकरणिकापूर्वसाध्यत्वाकारं लक्षयित्वा तत्प्रयुक्त एव ''अगन्म सुवः'' इति मन्त्र इत्युपेयम् ।

एवमग्नेर्मन्त्रप्रशंसितस्य फलदायित्वेपि तत्प्रकाशनद्वारा फलार्थत्वेऽदृष्टार्थत्वप्रसङ्गात्तत्स्वरूपप्रकाशनमात्रेण फलाभावाच्चानर्थक्यप्रसङ्गात् क्रत्वङ्गदेवतात्वमग्निपदेन लक्षयित्वा तत्प्रयुक्त एवायं मन्त्र इत्यभ्युपेयम्। एवञ्च लिङ्गस्य स्वतो बलवत्त्वेऽप्यानर्थक्यप्रतिहततया दुर्बलत्वेन तस्य प्रकरणेन बाधः। फलन्तु, ''सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः'' इति विकृतौ स्वर्गाग्न्योरभावेन मन्त्रयोरप्रवृत्तेर्नोहः पूर्वपक्षे। सिद्धान्ते तु, सूर्यब्रह्मवर्चसयोरपूर्वीयत्वरूपप्रयोजकस्य सत्वेन तत्प्रयुक्तयोर्मन्त्रयोः प्राप्तिसत्वात् ''अगन्म ब्रह्मवर्चसम्'' इति ''सूर्यस्याहमुज्जितिम्'' इत्यस्त्यूह इति।

इति तृतीयं फलदेवतासम्बद्धधर्माणामप्यपूर्वप्रयुक्तताधिकरणम् (सूत्रे ४-५)

### अथ चतुर्थं धर्माणामदेवताप्रयुक्तत्वाधिकरणम् (सूत्राणि ६-१०)

**देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥ ६ ॥**

**(आर्थपत्यात् ॥ ७ ॥ ततश्च तेन सम्बन्धः ॥ ८ ॥ अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद्गुणत्वे देवताश्रुतिः ॥ ९ ॥ अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्तस्य प्रीतिप्रधानत्वात् ॥ १० ॥)**

अत्र पूर्वोक्तसर्वाक्षेपेणास्यारम्भणादाक्षेपिकी **सङ्गतिः**। आग्नेयादियागः किं देवताराधनार्थः संस्तत्प्रीतिद्वारा स्वर्गादिफलार्थः, उतापूर्वद्वारा स्वर्गादिफलार्थ इति **सन्देहः**। **पूर्वपक्षस्तु**, अग्नीन्द्रादिदेवताया यागे सम्प्रदानत्वेन प्राधान्यात्, यागस्य च ''यजि देवपूजासङ्गतिकरणदानेषु'' इत्युक्त्याऽतिथेर्भोजनादेरिव पूजारूपतया तदङ्गत्वादग्न्यादिदेवताराधनार्थः सन् देवताप्रसादद्वारा फलार्थो यागो देवताप्रयुक्तो नापूर्वप्रयुक्त इति प्रागुक्तं सर्वमयुक्तमिति। तथा च वाक्यशेषः ''तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति'' इत्यादिः। तदाह **सूत्रे, देवता वेति**। व्यक्तः **सूत्रार्थः**।

**सिद्धान्तस्तु**, यजेतेतिप्रत्ययोपात्तभावना पुमर्थं भाव्यमपेक्षमाणा, पदश्रुत्यवगतमपि यागमयोग्यत्वादुपेक्ष्य पदान्तरोपात्तं स्वर्गादिफलं भाव्यत्वेन गृहीत्वा, तस्य साधनमाकाङ्क्षन्ती, एकपदोपात्तं यागं फलकरणत्वेनोपादाय, तस्य साध्यरूपत्वेन तन्निर्वर्तकसन्निपात्यङ्गाकाङ्क्षायां सिद्धरूपतया तन्निर्वर्तनक्षमे द्रव्यदेवते यागार्थतया गृह्णन्ती, देवतां यागार्थां करोतीति ततः प्राग्देवतायाः फलार्थत्वानवगमान्न देवताराधनाय यागविधिः। येन यागो देवताराधनार्थः संस्तत्प्रीतिद्वारा फलहेतुः स्यात्। अत उक्तदिशा शब्दादेवावगम्यमानं यागस्य फलहेतुत्वं तस्य भङ्गुरत्वादपूर्वद्वारैव निर्वाह्यम्। किञ्च देवताद्वारत्वे देवता तद्विग्रहहविः स्वीकारतद्भोजनतृप्तिप्रसादाः प्रत्यक्षासिद्धाः कल्प्याः। तत्प्रतिपादकमन्त्रार्थवादयोः



स्वार्थे तात्पर्याभावादतिथिभोजनमप्यदृष्टद्वारैव फलहेतुरिति। फलन्तु अपूर्वमेव फलहेतुतया धर्माणां प्रयोजकमिति विकृतावग्न्यादिदेवताभावेऽपि धर्मप्रयोजकस्यापूर्वस्य सत्वेन धर्माणां प्राप्तेरूहसिद्धिरिति ज्ञेयम्।

इति चतुर्थं धर्माणामदेवताप्रयुक्तत्वाधिकरणम् (सूत्राणि ६-१०)

### अथ पञ्चमं प्रोक्षणादीनामपूर्वप्रयुक्तताधिकरणम् (सूत्राणि ११-१९)

**द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ११ ॥**

**(अर्थकारिते च द्रव्येण न व्यवस्था स्यात् ॥ १२ ॥ अर्थो वा स्यात्प्रयोजनमितरेषामचोदनात्तस्य च गुणभूतत्वात् ॥ १३ ॥ अपूर्वत्वाद्व्यवस्था स्यात् ॥ १४ ॥ तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम् ॥ १५ ॥ तद्युक्तस्येति चेत् ॥ १६ ॥ नाश्रतित्वात् ॥ १७ ॥ अधिकारादिति चेत् ॥ १८ ॥ तुल्येषु नाधिकारः स्यादचोदितश्च सम्बन्धः पृथक्सतां यज्ञार्थेनाभिसम्बन्धस्तस्माद्यज्ञप्रयोजनम् ॥ १९ ॥)**

अत्र पूर्वन्यायेन शङ्कनात्सङ्गतिः। दर्शपूर्णमासयोः श्रूयते ''व्रीहीन् प्रोक्षति'' इति **प्रोक्षणम्**। ''त्रीन् परिधीन्'' इति मन्त्रः। तथा चातुर्मास्येषु श्रूयते ''शूर्पेण जुहोति। तेन ह्यन्नं क्रियते'' इति **होमः**। तथा दर्शपूर्णमासयोरेव श्रूयते ''चतुर्होत्रा पौर्णमासीमभिमृशेत्। पञ्चहोत्राऽमावास्याम्'' इति। चतुर्होतृपञ्चहोतृसञ्ज्ञकाभ्यां ''पृथिवी होता'' ''अग्निर्होता'' इत्यादिमन्त्राभ्यां क्रमात्पौर्णमास्यममावास्याहविर**भिमर्शनम्**। चर्तुहोत्रादिमन्त्रस्वरूपमुक्तं तृतीयस्य सप्तमे पादे। तत्र प्रोक्षणमन्त्रहोमाभिमर्शनानि चत्वारि किं द्रव्यसङ्ख्याहेतुसमुदायप्रयुक्तानि, उतापूर्वप्रयुक्तानीति **सन्देहः**। **पूर्वपक्षस्तु** व्रीहीनिति द्वितीयाश्रुत्या तद्युक्तवाक्येन च व्रीहीणां शेषित्वस्य प्रोक्षणादेः शेषत्वस्य प्रतीतेस्तत्प्रयुक्तमेव प्रोक्षणम्। तथा त्रीनिति मन्त्रोऽपि लिङ्गबलात्परिधिगतत्रित्वसङ्ख्याप्रकाशनार्थः संख्यित्वसङ्ख्याप्रयुक्त एव।

होमोऽपि ''तेन हि'' इति ''हि'' शब्दश्रुत्यवगतान्नकरणत्वरूपहेतुप्रयुक्तः सन् ''यद्यदन्नकरणं शूर्पदर्वीपिठरादि तत्सर्वस्याङ्गम्। तथाऽभिमर्शनमपि द्वितीयाश्रुत्या समुदायस्यैव शेषित्वप्रतीत्या पौर्णमास्यममावास्याहविःसमुदायप्रयुक्तमेव। न च प्रकरणबलादपूर्वप्रयुक्तं प्रोक्षणादेः शङ्क्यम्। तथात्वे व्रीह्यादिपदानामपूर्वसाधनद्रव्यत्वादौ लक्षणाप्रसङ्गेन प्रकरणेन बलवच्छ्रुत्यवगतमुख्यार्थबाधा-

योगात्पूर्वत्र श्रुतिप्राबल्येन यागस्य फलसाधनतेवात्रापि श्रुतिबलेन व्रीह्याद्यर्थतैव प्रोक्षणादेर्युक्तेति । तथा च **सूत्रम् द्रव्येत्यादि** । द्रव्यश्च सङ्ख्या च हेतुश्च समुदायश्च । द्वन्द्वैकवद्भावः । प्रयोजयेदित्यनुवर्तते । **व्रीह्यादिद्रव्यादिकं** प्रोक्षणादिकं प्रयोजयेत् । कुतः ? व्रीहीनिति द्वितीयादिशब्दरूप**श्रुतिसंयोगादिति** । **सिद्धान्तस्तु,** प्रोक्षणादेर्व्रीह्यादिस्वरूपार्थत्वे तेन विनापि व्रीह्यादिस्वरूपसिध्या वाक्यानर्थक्यप्रसङ्गात् श्रुतेः स्वतो बलीयस्त्वेऽप्यानर्थक्यप्रतिहतत्वेन दुर्बलतया प्रकरणेन श्रुत्यवगतमुख्यार्थबाधेनापूर्व-साधनहविर्व्रीहिपदेन लक्षयित्वा तत्प्रयुक्तमेव प्रोक्षणमित्युपेयम् । तथा मन्त्रोऽपि परिधिगतत्रित्वत्यागेन तद्गतेयत्ताप्रकाशनद्वारा परिधिगतलक्षितापूर्वसाधनत्वप्रयुक्तः । होमस्तु शूर्पेणेति तृतीयाश्रुत्या शूर्पादि-र्गुणत्वावगमेन न शूर्पादिसंस्कारकतया शूर्पाद्यर्थः । 'तेन हि' इत्यस्यार्थवादत्वेन हिशब्दस्य हेतुत्वा-बोधकत्वस्य हेतुवन्निगदाधिकरण एवोक्त्या होमस्यारादुपकारकत्वात् । न चैवमत्राविचार्यता शङ्क्या । इहान्नकरणसंस्कारार्थत्वनिरासेनापूर्वार्थे होमे स्थिते, तत्र किं होमसाधनत्वेनान्नकरणं सर्वं विधीयते । शूर्पकरणत्वन्त्वयुत्याऽनुवादः, उत शूर्पं विधीयते । तस्यान्नकरणत्वोक्तिः स्तुतिरिति विचार्यत इति न पौनरुक्तिदोषः । एवमभिमर्शनमपि न समुदायस्वरूपप्रयुक्तम् । वाक्यवैयर्थ्यात् । किन्तु प्रकरणा-ल्लक्षितापूर्वप्रयुक्तमेवेति । **फलन्तु,** प्रोक्षणादेर्विकृतिष्वतिदेशेन ''नीवारान् प्रोक्षति'' इत्यूहसिद्धिः । एवं परिधिमन्त्रस्य परिधिद्वयवति महापितृयज्ञे''द्वौ परिधी'' इत्यूहसिद्धिः । एवमभिमर्शनमन्त्रस्यापि सौर्यादिविकृतिष्वतिदेशसिद्धिरिति ज्ञेयम् ।

अत्र ''त्रीन् परिधीन्'' इति वाक्योदाहरणं **भाष्यकारीयमयुक्तम्** । लिङ्गयुक्तवाक्यत्वात् । सूत्रे श्रुतिसंयोगादित्युक्तत्वात् । फलदेवतयोश्चेत्यनेन गतार्थत्वाच्चेत्याहुः ।

इति पञ्चमं प्रोक्षणादीनामपूर्वप्रयुक्तताधिकरणम् (सूत्राणि ११-१९)

## अथ षष्ठमग्निष्टोमे उपांशुत्वस्य दीक्षणीयाद्यपूर्वप्रयुक्तत्वाधिकरणम् (सूत्राणि २०-२२)

**देशसम्बद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्तस्य च तत्र भावात् ॥ २० ॥**

**(यज्ञस्य वा तत्संयोगात् ॥ २१ ॥ अनुवादश्च तदर्थवत् ॥ २२ ॥)**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । ज्योतिष्टोमे श्रूयते ''त्सरा वा एषा यज्ञस्य तस्माद्यत्किञ्चित् प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति'' इति । **अस्यार्थः,** त्सरेति छन्नगतिरुच्यते तस्मादग्नीषोमीयात् प्राचीनं यत्पदार्थजातं तेनोपांशु चरन्तीति यत् एषा यज्ञस्य त्सरा छन्नगतिः । कोऽर्थः ? यथा शकुनिं गृहीतुकामस्य प्रच्छन्ना गतिर्भवति शनैः पदन्यासो, दृष्टिप्रणिधानं, अशब्दकरणञ्चेत्येवंरूपा



तामनवबुद्धः शकुनिर्गृह्यते एवमिहाप्यनुष्ठातुरुपांशुत्वानुष्ठानं छन्नगतिरूपं यज्ञसाध्यपरमापूर्वग्रहणा-येत्यर्थो **भाष्योक्तः** । तत्र **सन्देहः,** किमुपांशुत्वं ज्यौतिष्टोमिकपरमापूर्वप्रयुक्तमुत दीक्षणीया-द्यवान्तरापूर्वप्रयुक्तमिति । **पूर्वपक्षस्तु,** यथा हि पूर्वत्र हविरभिमर्शनं समुदायापूर्वप्रयुक्तं तथोपांशुत्वमपि ग्रहहोमाभ्याससमुदायात्मकसोमयागापूर्वप्रयुक्तम् । कुतः? यज्ञस्य प्राचीनं यत्किञ्चिदित्यवयवार्थषष्ठ्या यज्ञस्यावयवभूतो यः प्राचीनभागस्तमुपांशु चरन्तीति यज्ञभागधर्मत्वश्रवणात् । न च यज्ञस्येत्यस्य सन्निहितत्सरापदान्वयेनैव निराकाङ्क्षत्वसम्भवे व्यवहितप्राचीनपदान्वयो न युक्तः । प्राचीनशब्दोऽपि सन्निहिताग्नीषोमीयपदान्वयेनैव निराकाङ्क्षः सन्न व्यवहितयज्ञपदेनान्वेतुमर्हतीति वाच्यम् । यज्ञस्येत्यस्य त्सरेत्यनेनान्वयेऽर्थवादत्वमात्रतापत्त्या वैयर्थ्यप्रसङ्गाव्द्यवहितेनापि प्राचीनपदेनान्वये विकृतिषु तत्प्राग्भागीये प्राकृतेऽपि पदार्थे उपांशुत्वोहरूपप्रयोजनसत्वेन सार्थक्यात् । अतो व्यवहितेनाप्यन्वये-नोपांशुत्वस्य सोमयागावयवप्राग्भागधर्मत्वादुपांशुत्वं सोमापूर्वप्रयुक्तमेव । नावान्तरापूर्वप्रयुक्तमिति । **सिद्धान्तस्तु,** यत्किञ्चित्प्राचीनमित्युद्देश्यसमर्पकस्य प्राचीनशब्दस्य साकाङ्क्षस्य यज्ञस्येति श्रुतेन तस्मादित्यनेन व्यवहिततयाऽन्वयायोग्येन नैराकाङ्क्ष्यकरणायोगात्सन्निहितेनाग्नीषोमीयपदेनान्वययोग्येन नैराकाङ्क्ष्यकरणसम्भवादग्नीषोमीयाद्ये प्राग्भाविनः पदार्था दीक्षणीयादयस्ते उपांशु कार्या इत्यग्नीषोमीय प्राग्भाविपदार्थधर्म एवोपांशुत्वम् । न सोमप्राग्भागस्य । एवञ्च यथा ''प्रणीताः प्रणेष्यन् वाचं यच्छति'' इति विहितवाग्यमस्य प्रणीताशब्दितप्रणयनपदार्थधर्मतया तदपूर्वप्रयुक्तत्वमेवमुपांशुत्व-स्याप्यग्नीषोमीयप्राग्भाविपदार्थधर्मतया तदपूर्वप्रयुक्तत्वमेव । यज्ञस्येत्यस्य तु त्सराशब्देनान्वयेनोपांशु-त्वस्य त्सरात्वेन स्तुतिरिति । तथा च **सूत्रम् ॥ देशेत्यादि ॥ देशसम्बद्धं** प्राचीनदेशसम्बद्ध**मुपांशुत्वं तेषां** तद्देशस्थानां दीक्षणीयादिपदार्थानां **स्याद्धर्म** इति । तथा च तदपूर्वप्रयुक्तत्वमेवेति भावः । कुतः? **श्रुतिनिर्देशात्** अग्नीषोमीयादिति श्रुतिनिर्देशात् । **तस्य च** धर्मप्रयोजकापूर्वस्य च **तत्र** तेषु दीक्षणीयादिषु **भावात्** सत्वादिति । **फलन्तु** कुण्डपायिनामयने ''उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति'' इति विहिते मासाग्निहोत्रे परमापूर्वप्रयुक्तोपांशुत्वप्राप्तिः **पूर्वपक्षे** । **सिद्धान्ते तु,** दीक्षणीयाद्यवान्तरापूर्वप्रयुक्त-त्वान्नास्ति प्राप्तिः । मासाग्निहोत्रस्याप्राकृतत्वेन तत्र प्राकृतकार्यस्य द्वारभूतस्याभावात् । बर्हिर्धर्मस्य लवनादेः प्राकृतबर्हिःकार्यहविरासादनादिप्रयुक्तत्वात्तस्य यूपावटास्तरणबर्हिष्यभावान्न तत्र तद्धर्मप्राप्ति-रिति तार्तीयान्त्यपादाद्यनयोक्तन्यायात्तद्वदिति ज्ञेयम् । पूर्वं दीक्षणीयादिप्रयुक्तो यथाकाम्यादिस्वरः प्रधानदीक्षणीयादिविषयः । अयन्त्वङ्गविषय इत्यविरोधः इत्याहुः ।

इति षष्ठमग्निष्टोमे उपांशुत्वस्य दीक्षणीयाद्यपूर्वप्रयुक्तत्वाधिकरणम् (सूत्राणि २०-२२)

अथ सप्तमं वाग्यमस्यापरमापूर्वप्रयुक्तत्वाधिकरणम् (सूत्रे २३-२४)

**प्रणीतादि तथेति चेन्न यज्ञस्याश्रुतत्वात् ॥ २३ ॥**

**(तद्देशानां वा सङ्घातस्याचोदितत्वात् ॥ २४ ॥)**

अत्र पूर्वक्षेपेण शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोः श्रूयते ''यज्ञं वितनिष्यन्तावध्वर्युयजमानौ वाचं यच्छतः । यदध्वर्युयजमानौ वाचं यच्छतस्तत्प्रजापतिहृदयं गत्वा यज्ञं तन्वाते । तस्मात्प्रणीताः प्रणेष्यन् वाचं यच्छति'' इति । तत्र ''प्रणेष्यन् वाचं यच्छति'' इति श्रुतो वाग्यमः किं प्राकरणिकपरमापूर्वप्रयुक्तः, उतावान्तरापूर्वप्रयुक्त इति **सन्देहः । पूर्वपक्षस्तु,** यदुक्तं पूर्वत्र प्रणीताप्रणयनीयवाग्यमवदवान्तरापूर्वप्रयुक्तमुपांशुत्वमिति तदयुक्तम् । पूर्वतनपूर्वपक्षेऽप्युपांशुत्वस्येव ''वाचं यच्छति'' इति वाग्यमस्य यज्ञमिति यज्ञशब्दान्वयेन यज्ञधर्मत्वप्रतीत्या वाग्यमस्य तदीयपरमापूर्वप्रयुक्तत्वावगमादिति । **सिद्धान्तस्तु,** ''यज्ञं वितनिष्यन्तौ'' इति ''यज्ञं तन्वाते'' इति च द्विः श्रुतस्यापि यज्ञशब्दस्य सन्निहिततनुप्रातिपदिकोक्तविस्तारेणान्वयेन व्यवहितवाग्यमेनानन्वयात् । यज्ञस्य यो भागस्तत्र वाग्यम इति विभक्तिविपरिणामाद्यापाताच्च । अतः प्रणेष्यन्निति शतृप्रत्ययाभिहितप्रणीताप्रणयनकर्त्रर्थतयोक्तस्य वाग्यमस्य ''हविष्कृता वाचं विसृजति'' इति हविष्कृदाह्वानकाले विसर्जनविधानात्तावत्पर्यन्तमनुवर्तमानस्य स्वसंस्कार्यपुरुषकर्तृकतया प्रणीताप्रणयनहविष्कृदाह्वानमध्यवर्तिसर्वपदार्थार्थतया तदपूर्वप्रयुक्तत्वमेव । न परमापूर्वप्रयुक्तत्वमिति । तदाह **सूत्रे, प्रणीतादि** तथा उपांशुत्ववदिति **चेन्न । यज्ञसंयोगस्याश्रुतत्वादिति** । फलन्तु पूर्ववदेव ध्येयम् ।

इति सप्तमं वाग्यमस्यापरमापूर्वप्रयुक्तत्वाधिकरणम् (सूत्रे २३-२४)

अथाष्टममिष्टकासु सकृद्विकर्षणाद्यनुष्ठानाधिकरणम् (सूत्राणि २५-२७)

**अग्निधर्मः प्रतीष्टकं सङ्घातात्पौर्णमासीवत् ॥ २५ ॥**

**(अग्नेर्वा स्याद्द्रव्यैकत्वादितरासां तदर्थत्वात् ॥ २६ ॥ चोदनासमुदायात्तु पौर्णमास्यां तथा स्यात् ॥ २७ ॥)**

अत्र पूर्वतनाधिकरणे ग्रहयागाभ्याससमुदायात्मकज्योतिष्टोमप्रयुक्तचिन्ताप्रसङ्गादिष्टकासमुदायप्रोक्षणं चिन्त्यत इति **प्रासङ्गिकी सङ्गतिः** । पूर्वाधिकरणन्तु तदन्तर्गतमित्याहुः । ''इष्टकाभिरग्निं चिनुते'' इति विधाय श्रूयते ''मण्डूकेनाग्निं विकर्षति । वेतसशाखयाऽवकाभिश्चाग्निं विकर्षति ।





हिरण्यशकलसहस्रेणाग्निं प्रोक्षति । दध्ना मधुमिश्रेणाग्निं प्रोक्षति'' इति । तत्र प्रोक्षणं विकर्षणञ्च किं सकृदेव कार्यमुत प्रतीष्टकं भेदेन कार्यमिति सन्देहे, प्रतीष्टकं कार्यमिति **प्राप्तम्** । कुतः? इष्टकाव्यतिरिक्तावयविनः कस्यचिदभावादिष्टका एव संहता वह्निधारणार्थत्वेन स्थापिता अग्निशब्देनाभिधीयन्ते । एकावयवाकर्षणे यत्रावयवान्तराकर्षणं सन्धिदर्शनञ्चास्ति तत्रैव देवदत्तादावयविता । न चेहैकेष्टकाकर्षणेऽन्यासां तदस्ति । एकत्वबुद्धिस्तु वनादाविव समुदायविषयेति । तदाह **सूत्रे, अग्निधर्मः** प्रोक्षणं **प्रतीष्टकं** कार्यमिति शेषः । कुतः? **सङ्घातात्** इष्टकासङ्घातवाच्यग्निशब्दोपबन्धात् **पौर्णमासीवत्** ''चतुर्होत्रा पौर्णमासीमभिमृशेत्'' इतिवदिति । **सिद्धान्तस्तु,** संहतास्विष्टकासु प्रत्यक्षतो जायमानैकत्वबुद्धेः, दूरस्थवनैकत्वबुद्धेः सन्निधान इव, जपाकुसुमसन्निधानकालीनस्फटिकलौहित्यबुद्धेस्तदसन्निधानकाल इव देशभेदेन कालभेदेन वा बाधाभावात्तयाऽवयविन एकत्वस्य सिद्धेः सकृदेव प्रोक्षणमिति । एकावयवाकर्षणेनान्यावयवाकर्षणं तु नावयवितासाधकम् । वृक्षादावेकशाखाकर्षणेन शाखान्तराकर्षणाभावेऽप्यवयवित्वस्य सत्वात् । पटादौ सन्ध्यदर्शनेऽप्यवयविनः सत्वेन तदपि नावयवितासाधकमिति । **फलन्तु, पूर्वपक्षे प्रतीष्टकं प्रोक्षणम् । सिद्धान्ते तु सकृदेवेति** व्यक्तम् ।

इत्यष्टममिष्टकासु सकृद्विकर्षणाद्यनुष्ठानाधिकरणम् (सूत्राणि २५-२७)

अथ नवममुत्तमान्यानामह्नां पत्नीसंयाजसंस्थाधिकरणम् (सूत्राणि २८-३१)

**पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ २८ ॥**

**(लिङ्गाद्वा प्रागुत्तमात् ॥ २९ ॥ अनुवादो वा दीक्षा यथा नक्तसंस्थापनस्य ॥ ३० ॥ स्याद्वाऽनारभ्यविधानादन्ते लिङ्गविरोधात् ॥ ३१ ॥)**

पूर्वत्र समुदायविषयचिन्तायाः प्रसक्तत्वादत्राप्यहःसमुदायरूपद्वादशाहविषयविचारः क्रियत इति प्रासङ्गिकी **सङ्गतिः** । द्वादशाहे श्रूयते ''पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते । न बर्हिरनुप्रहरति, असंस्थितो हि यज्ञः'' इति । सन्तिष्ठन्ते समाप्यन्त इत्यर्थः । पत्नीसंयाजस्वरूपमुक्तं तृतीयाध्याये तृतीयपादे । तत्र किं सर्वेषामह्नां पत्नीसंयाजान्तत्वमुतान्त्यमहर्वर्जयित्वाऽन्येषामिति **संशयः । पूर्वपक्षस्तु,** पत्नीसंयाजान्तान्यहानीत्यविशेषश्रवणात्सर्वेषामेव तदन्तत्वम् । न च ''असंस्थितो हि यज्ञः'' इति वाक्यशेषे ''हि यस्मात् असंस्थितोऽसमाप्तो यज्ञस्तस्मात्पत्नीसंयाजान्तान्यवतिष्ठन्ते'' इत्यसंस्थितत्वस्य पत्नीसंयाजान्तत्वे हिशब्देन हेतुत्वकथनात्तस्य च हेतोरन्त्येऽहनि यज्ञसमापनावश्यम्भावेनायोगात्तदन्याहःस्वेव समापनस्य तदन्तत्वं व्यवस्थाप्यमिति वाच्यम् । **स्तुतिस्तु**

**शब्दपूर्वत्वादिति** हेतुवन्निगदाधिकरणसिद्धान्तन्यायेन ''असंस्थितो हि'' इति वाक्यशेषस्यार्थवादतया हेत्वसमर्पकत्वात्। न चार्थवादत्वेऽपि ''तेजो वै घृतम्'' इत्यस्य ''अक्ताः शर्कराः'' इत्युक्ताञ्जनसाधनद्रवद्रव्यव्यवस्थापकत्वमिवान्त्याहर्भिन्नाहःसु पत्नीसंयाजान्तत्वव्यवस्थापकत्वमस्त्विति शङ्क्यम्। वैषम्यात्। ''अक्ताः'' इत्यत्र द्रवद्रव्योपलक्षकतयोपपत्तावपि घृतशब्दविध्युद्देशगतविशेषाकाङ्क्षावशाद्विशेषस्थापकोऽर्थवादः। न चेह विध्युद्देशस्याकाङ्क्षाऽस्ति। वाक्यशेषस्यापि विलम्बिताभिप्रायत्वेनोपपत्तेः। लोके चिरकालं शनैर्भुञ्जानं प्रति ''नास्य भोजनं समाप्यते'' इति वचनदर्शनात्। तस्मात्सर्वेष्वहस्सु पत्नीसंयाजान्तं कृत्वा, चोदकप्राप्तं पत्नीसंयाजात्परमङ्गजातं लोपयित्वाऽवभृथान्येव कर्तव्यानीति। तथा च **सूत्रम्॥ पत्नीसयाजान्तत्वमित्यादि॥ व्यक्तोऽर्थः। सिद्धान्तस्तु,** द्वादशाहस्सु कार्या यागाः ''द्वादशाहेन प्रजाकामं याजयेत्'' इति फलेन सह विहितत्वात्सह कर्तव्याः। सहप्रयोगश्चाद्येऽहन्युपक्रम्य सर्वाण्यहानि किञ्चित्पर्यन्तं कृत्वा शेषमवशेष्य चरमेऽहनि शेषसमापन एवोपपद्यते। नान्यथा। तत्र कियत्पर्यन्तं कृत्वा स्थाप्यान्यहानीत्याकाङ्क्षायां पत्नीसंयाजान्तानीति वाक्यादचरमाण्यहानि पत्नीसंयाजान्तान्यनुष्ठाय चरमे सर्वयागार्थतया तन्त्रेण शेषसमापनं कार्यं दीक्षोपसदादेस्तन्त्रेणानुष्ठानमिवेति चरमान्यैकादशाहस्स्वेव पत्नीसंयाजान्ततेति न चोदकबाधोऽपीति। **फलन्तु,** द्वादशाहविकृतिषु द्विरात्रादिष्वन्त्यस्याप्यह्नः प्रकृताविव पत्नीसंयाजान्ततैव प्राप्तेति शेषकार्याभावादनूहः **पूर्वपक्षे। सिद्धान्ते तु,** अन्त्येऽहनि प्रकृताविव शेषकार्याणां भावात्तदनुगुणतयोहेनानुष्ठानमित्याहुः।

इति नवममुत्तमान्यानामह्नां पत्नीसंयाजसंस्थाधिकरणम् (सूत्राणि २८-३१)

## अथ दशमं त्रिःप्रथमामन्वाहेत्यादिष्वभ्यासस्य स्थानधर्मताधिकरणम् (सूत्रम् ३२)

### अभ्यासः सामिधेनीनां प्राथम्यात्स्थानधर्मः स्यात्॥ ३२॥

पूर्वन्यायेन शङ्कनात्सङ्गतिः। दर्शपूर्णमासयोः ''पञ्चदश सामिधेनीरनुब्रूयात्'' इति विधायैकादशर्चः पठित्वा ''त्रिः प्रथमामन्वाह त्रिरुत्तमां। ताः पञ्चदश सम्पद्यन्ते'' इति श्रूयते। तत्र त्रिरभ्यासः किं प्रथमाशब्दलक्षितायाः प्रकरणे प्रथमपठितायाः ''प्र वो वाजा अभिद्यवः'' इति ऋचो धर्मः, उत यत् प्रथमस्थानगतं तद्धर्म इति **सन्देहः।** पूर्वत्र पत्नीसंयाजान्तताऽन्त्याहर्व्यतिरिक्ताहर्विशेषधर्मः, तथा स्त्रीलिङ्गनिर्देशात्प्रथमाशब्देन ''प्र वो वाजा'' इति ऋच एव ग्रहणात्तस्या एव त्रिरभ्यासरूपो धर्म इति **प्राप्ते,** प्रत्ययादपि प्रबलप्रतिपादिकेन वचनवृत्या प्रथमस्थानं प्रतीयते। ऋक्तु लक्षणया। न च प्रातिपदिकानुसारेण मुख्यार्थसम्भवे दुर्बलस्त्रीप्रत्ययानुरोधेन लक्षणा युक्ता।



तस्मात्प्रथमस्थानधर्मः ''यत्प्रथमं तत्त्रिरभ्यसितव्यम्'' इति। तच्च प्राथम्यं ''ताः पञ्चदश'' इति वाक्यशेषबलेन ऋगाश्रयत्वेनैव भवतीति स्त्रीलिङ्गं नित्यानुवादः। तथा **चायमर्थः** ''या प्रथमस्थानपठिता ऋक्'' ''प्र वो वाजा इति वा, अन्या वा, या काचित्तां त्रिरभ्यसेत्'' इति। तथा च **सूत्रम्॥ अभ्यास इत्यादि॥** प्रथमोत्तमयोरिति शेषः। **सामिधेनीनां** प्रथमोत्तमयोरभ्यासः। **प्राथम्यात्** प्राथम्येनोपबन्धात् **स्थानधर्मः** प्रथमस्थानधर्मः **स्यादिति। फलन्तु पूर्वपक्षे,** ''प्र वो वाजा'' इति मन्त्रस्य विकृतिष्वादावन्ते मध्ये वा यत्र क्वचित् स्थितायास्त्रिरभ्यासः। तथा च नोहः। **सिद्धान्ते तु,** प्र वो वाजीयातोऽन्या या काचिद्विकृतौ प्रथमपठिता सा ऊहेन त्रिरभ्यसितव्येति।

इति दशमं त्रिः प्रथमामन्वाहेत्यादिष्वभ्यासस्य स्थानधर्मताधिकरणम् (सूत्रम् ३२)

## अथैकादशमारम्भणीयेष्टेः पुरुषसंस्कारताधिकरणम् (सूत्रे ३३-३४)

### इष्ट्यावृत्तौ प्रयाजवदावर्तेताऽरम्भणीया॥ ३३॥

### (सकृद्वाऽऽरभ्यसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात्॥ ३४॥)

प्रथमस्थाने मन्त्रावृत्तिचिन्ताप्रसङ्गात्तत्रैव स्थाने इष्टेरावर्तनचिन्तनात्प्रसङ्गिकी **सङ्गतिः।** दर्शपूर्णमासप्रकरणे ''आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः। सरस्वत्यै चरुम्। सरस्वते चरुम्'' इति श्रुता आरम्भणीयेष्टिः किं ''यावज्जीवं दर्शपूर्णमासाभ्यां यजेत'' इति विधिबलाद्दर्शपूर्णमासावृत्तावावर्तते, अथ सकृदेव प्रथमप्रयोगवेलायामनुष्ठेयेति **सन्देहः। पूर्वपक्षस्तु,** दर्शपूर्णमासशब्दसमभिव्याहाररूपवाक्यात्प्रकरणाच्चेयमिष्टिर्दर्शपूर्णमासाङ्गम्। सा च प्रधानावृत्तावङ्गानामपि प्रयाजवदावृत्तिरावश्यिकीति प्रतिप्रयोगमावर्तनीया। न चाङ्गानां कर्मार्थत्वेऽपि न प्रयोगाङ्गत्वमिति शङ्क्यम्। कार्यं प्रति कर्मणो व्यापृतिवेलायां तदङ्गस्यापि कर्तव्यत्वेन प्रयोगाङ्गत्वस्याप्युपेयत्वात्कर्मव्यापारस्य च प्रयोगरूपत्वेन प्रयोगावच्छिन्नकर्मावृत्तौ तदावृत्तेरावश्यकत्वादिति। तदाह **सूत्रे॥ इष्ट्यावृत्तावित्यादि॥** व्यक्तोऽर्थः। **सिद्धान्तस्तु,** ''क्रियार्थायां क्रियायामुपपदे'' इति विहितेन लृट्प्रत्ययेनारम्भार्थत्वेनेयमिष्टिरवगम्यते। अतो न साक्षाद्दर्शपूर्णमासाङ्गम्। आरम्भश्च ''यावज्जीवं मया दर्शपूर्णमासौ कर्तव्यौ'' इत्यध्यवसायः। स चैक एव सर्वप्रयोगसाधारण इति सकृदेवानुष्ठेय इति। एतच्च **वृत्तिकारमतम्।**

**भाष्यकारीयन्तु मतम्** इयमिष्टिरारम्भार्थेति यदुक्तं तत्तथैव। आरम्भस्तु नोक्तरूपोऽध्यवसायः। किं त्वग्न्यवाधानरूपः प्रथमः पदार्थो वा। अप्रवृत्तस्य प्रथमप्रवर्तनं वा। तथा चाग्न्यन्वाधानरूपपदार्थ-

स्याङ्गमुत दर्शपूर्णमासावारभमाणस्य पुरुषस्य संस्कारकतयाऽङ्गमिति **संशये**, पुरुषार्थत्वे फलकल्पनाप्रसङ्गाद्दर्शपूर्णमासयोरारम्भरूपस्याग्न्यन्वाधानरूपाद्यपदार्थस्याङ्गभूतेयमिष्टिस्तदावृत्तावावर्तनीयैव । अग्न्यन्वाधानरूपेतिकर्तव्यतायाः प्रयोगप्रयुक्तत्वेन प्रतिप्रयोगमावर्तनीयत्वादिति **प्राप्ते सिद्धान्तः**, न प्रथमपदार्थ आरम्भशब्दार्थः । किं त्वप्रवृत्तस्य प्रथमप्रवर्तनमेव । तथा चारप्स्यमान इत्यनेन क्रत्वारम्भकर्तृभूतपुरुषोद्देशेन निर्वपेदिति विधीयमानाया इष्टेर्दीक्षणीयेष्टिवत् क्रतुकर्तृसंस्कारद्वारेण क्रत्वर्थतया क्रतुफलेनैव फलवत्वेन पृथक्फलकल्पनाऽप्रसक्तेः प्रथमं प्रवर्तमानस्य पुरुषस्याङ्गमियमिष्टिः । एकस्य एककर्मण एकैव प्रथमप्रवृत्तिः । न बहव इति सापीष्टिः सकृदेवानुष्ठेयेति । **फलन्तु**, पक्षद्वयेऽप्यावृत्त्यनावृत्तिरूपं व्यक्तम् ।

इत्येकादशमारम्भणीयेष्टेः पुरुषसंस्कारताधिकरणम् (सूत्रे ३३-३४)

## अथ द्वादशं निर्वापमन्त्रे सवित्रादिशब्दानामनूहाधिकरणम् (३५-३६)

**अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः**
**स्यात्तत्राचोदितं प्राप्तश्चोदिताभिधानात् ॥ ३५ ॥**

**(ततश्चावचनं तेषामितरार्थं प्रयुज्यते ॥ ३६ ॥)**

इयता ग्रन्थेनोहोपोद्घाततत्प्रसक्तानुप्रसक्तप्रासङ्गिकविचारः कृतः । अधुनाऽवसरप्राप्तो मन्त्रोहः **आम्नातादिति** सूत्रात्प्राक् षड्भिर्नयैः क्रियते । पूर्वत्रारम्भणीयेष्टेरावृत्त्यभावप्रसङ्गान्मन्त्रगतजुष्टनिर्वापपदयोरनुषङ्गरूपावृत्त्यभावप्रतिपादनादत्र **पूर्वसङ्गतिः** । दर्शपूर्णमासयोर्निर्वापमन्त्रः श्रूयते ''देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि'' इति । तत्र किमेते सवित्रादिशब्दाः कर्मसमवेतदेवताप्रकाशनार्थाः, उतासमवेतदेवताप्रकाशनद्वारा निर्वापप्रशंसनार्था इति **सन्देहः । पूर्वपक्षस्तु**, निर्वापप्रशंसार्थत्वे प्रशंसाया दृष्टफलत्वेऽपि तस्या न किञ्चिद्दृष्टमस्तीत्यदृष्टं कल्प्यम् । न च दृष्टे सम्भवति तद्युक्तम् । दृष्टार्थत्वञ्च सवित्रादिपदानां देवताप्रकाशनार्थत्वपक्षे द्वेधा सम्भवि । गौणवृत्त्या कर्मसमवेताग्निप्रकाशकत्वेन वा । अग्निना सह देवस्य त्वेति मन्त्रवर्णप्राप्तवैकल्पिक कर्मदेवतावाचित्वेन वा । न चाद्ये अग्निपदेनैवाग्न्यभिधानसिद्धेःसवित्रादिशब्दैर्गौण्या वृत्त्या पुनस्तदुक्तिर्व्यर्थेति शङ्क्यम् । सवित्रश्विपूषशब्दोपेतवाक्येषु प्रत्येकं ''जुष्टं निर्वपामि'' इति पदद्वयानुषङ्गेण वाक्यचतुष्टयोपगमात्कदाचित्कस्यचित्प्रयोगे सर्वस्याप्यग्निप्रकाशकस्य सार्थक्यसम्भवात् । द्वितीये तु मुख्यवृत्त्यैव सवित्रादिप्रकाशनार्थत्वेन दृष्टार्थत्वमिति कर्मसमवेतदेवताप्रकाशनार्था एवैते शब्दा इति ।



तथा च **सूत्रम्, अर्थाभिधानसंयोगात्** समवेतार्थकतया तत्सम्बन्धात् देवस्य त्वेत्यादिमन्त्राणां क्रतौ **शेषभावः स्यात्** । तस्मात् ईदृशानां मन्त्राणां **चोदिताभिधानात्** समवेताभिधायकत्वात् **अचोदितं** विकृतावसमवेताभिधायकं सवित्रादिपदं ऊह्यतया विकृतिं **प्राप्तमिति** । **सिद्धान्तस्तु**, निर्वापप्रशंसारूपैकप्रयोजनकत्वेनैकवाक्यत्वे सम्भवति जुष्टपदाद्यनुषङ्गेणानेकवाक्यभेदकल्पनायोगात् भिन्नभिन्नविभक्त्यन्तपदत्वेन ''सिंहश्चैत्रः'' इत्यादाविव सामानाधिकरण्याभावेन गौणवृत्तेरशक्यत्वाच्च नाद्यः पक्षः । द्वितीयोऽप्ययुक्तः । **गुणश्चापूर्वसंयोगादिति** गुणाधिकरणन्यायेन

**तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः ।**
**देवतासङ्गतिस्तत्र दुर्बलन्तूत्तरोतरम् ॥**

इत्युक्तन्यायेन च ''आग्नेयोऽष्टाकपालः'' इत्युत्पत्तिवाक्ये तद्धितोक्तेनाग्निना कर्मोत्पत्त्यनन्तरं मन्त्रवर्णोक्तेन सवित्रादिना विकल्पासम्भवात् । तस्मादसमवेतार्थप्रकाशनद्वारा निर्वापप्रशंसार्थत्वात् सवित्रादिपदानां निर्वपामीत्यन्त एको मन्त्र इति । **फलं तु, पूर्वपक्षे** विकृतिषु तत्तद्देवतानुगुणतया मन्त्र ऊहितव्यः । **सिद्धान्ते तु**, यथाश्रुतस्यैवाविकृतस्य मन्त्रस्य प्रयोग इति ।

इति द्वादशं निर्वापमन्त्रे सवित्रादिशब्दानामनूहाधिकरणम् (सूत्रे ३५-३६)

## अथ त्रयोदशमग्नये जुष्टमिति मन्त्रे अग्निशब्दस्य विकृतावूहाधिकरणम् (सूत्रे ३७-३८)

**गुणशब्दस्तथेति चेत् ॥ ३७ ॥**

**(न समवायात् ॥ ३८ ॥)**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । दर्शपूर्णमासगते देवस्य त्वेतिति मन्त्र एव **सन्देहः** । ''अग्नये जुष्टम्'' इत्यग्निशब्दः दर्शपूर्णमासकर्मासमवेतवचनः, उत समवेतदेवतावचन इति । **पूर्वपक्षस्तु** 'अग्नये' इति चतुर्थ्या इह दानकर्मणोऽश्रवणेन सम्प्रदानत्वायोगेन तृतीयार्थे स्वीकर्तव्यत्वेनाग्निना जुष्टं सेवितमिति भूतार्थकनिष्ठाप्रत्ययान्तजुष्टशब्दस्य भूतार्थवाचित्वान्निर्वापवेलायां तादृशद्रव्यस्याभावेन जुष्टशब्दस्यासमवेतवाचितया तद्विशेषणाग्निशब्दस्यापि तथात्वावश्यम्भावात् पूर्वत्र सवित्रादिशब्दादिरिवासमवेतार्थवचनः सन्निर्वापप्रशंसार्थोऽयं मन्त्रगतोऽग्निशब्द इति । तथा च **सूत्रम्, गुणशब्दः** जुष्टशब्दोपसर्जनभूतोऽग्निश्ब्दः **तथाऽसमवेतवचन इति चेदिति । सिद्धान्तस्तु**, ''यज्जुष्टं तन्निर्वपामि''

इति जुष्टानुवादेन निर्वापो विधीयते । निर्वपेदिति लिङ्गप्रत्ययोपात्तभावनां भाव्यतया जुष्टमित्येतदन्वेति ''निर्वापेण जुष्टं भावयेत्'' इति । किमुक्तं भवति ? ''यथा निरुप्तेनाग्निना जुष्टं भविष्यति, तथा करोमि'' इत्यर्थ इत्युक्तं भावति । तथा च जुष्टपदस्य तद्विशेषणाग्निपदस्य च समवेतवाचित्वमेवेति न सवित्रादिशब्दसाम्यमग्निपदस्य । तदाह **सूत्रे, इति चेन्न समवायादिति । फलं तु,** सौर्यादिविकृतिषु यागेषु ऊहासिद्धिसिद्धी व्यक्ते ।

इति त्रयोदशमग्नये जुष्टमिति मन्त्रे अग्निशब्दस्य विकृतावूहाधिकरणम् (सूत्रे ३७-३८)

## अथ त्रयोदशं तण्डुलावापमन्त्रे धान्यशब्दस्योहाधिकरणम् (सूत्रे ३७-३८) (वर्णकान्तरम्)

### गुणशब्दस्तथेति चेत् ॥ ३७ ॥

### (न समवयात् ॥ ३८ ॥)

**वर्णकान्तरन्तु,** दर्शपूर्णमासयोः ''धान्यमसि धिनुहि देवान्'' इति दृषदि तण्डुलाधिवपनार्थमन्त्रे, तण्डुलेषु विनियुज्यमानो धान्यशब्दः किं समवेतप्रकाशनार्थः, उतासमवेतार्थक इति **सन्देहे,** धान्यशब्दस्य सतुषद्रव्यवाचितया वितुषीभूततण्डुलप्रकाशने शक्त्यभावात्सवित्रादिशब्दवदसमवेतार्थः सन्नदृष्टार्थोऽयं मन्त्र इति **प्राप्ते सिद्धान्तः,** मन्त्राधिकरणोक्तदिशा मन्त्रपदानां दृष्टार्थत्वादिह च धान्यपदस्य तण्डुलप्रकृतिभूतसतुषद्रव्यवाचिनोऽपि लक्षणया तद्विकृतिभूततण्डुलप्रकाशकत्वसम्भवात् ''शालयो भुज्यन्ते'' इति लोकेऽपि लाक्षणिकप्रयोगदर्शनात्समवेतार्थ एवार्थ धान्यशब्दो नादृष्टार्थ इति । तथा च **सूत्रम्, गुणशब्दस्तथेति चेन्न समवायादिति । गुणशब्दो** धान्यशब्दः **तथा** सवित्रादिशब्दवददृष्टार्थ **इति चेन्नेत्येवमर्थो** ध्येयः । **फलं तु,** षट्त्रिंशदाब्दिके शाक्यानामयनाख्ये सत्रे ''संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति । तत्र यान् हन्ति तेषां तरसमयाः सवनीयाः पुरोडाशाः'' इति श्रुते मृगयाप्रयुक्तगृहपतिहतमृगमांसमये सवनीये हविषि दृषदि हविरधिवपनार्थतया चोदकप्राप्तोऽयं मन्त्रः **पूर्वपक्षे** यथाश्रुत एव पठितव्योऽदृष्टार्थत्वात् । **सिद्धान्ते तु,** प्रकृतौ दृष्टार्थत्वाद्विकृतावपि दृष्टार्थत्वाय ''मांसमसि'' इत्यूहितव्य इति । न च प्रकृतियागे धान्यपदेन लक्षणया तण्डुलप्रकाशनं दृष्टमितीह विकृतावपि मांसमये हविषि तत्प्रकृतिभूतमृगवाचिपदप्रक्षेपेण ''मृगोसि'' इत्येवं लक्षणया मांसहविःप्रकाशनं कार्यमिति वाच्यम् । प्रकृतियागे धान्यपदे लक्षणाश्रयणस्याऽर्थिकत्वेन तत्राताप्तर्यादार्थिकस्य चोदकेन विकृतावप्रापणात् ।

इति त्रयोदशं तण्डुलावापमन्त्रे धान्यशब्दस्योहाधिकरणम् (सूत्रे ३७-३८)



## अथ चतुर्दशमिडोपाह्वानमन्त्रे यज्ञपतिशब्दस्यानूहधिकरणम् (सूत्रम् ३९)

### चोदिते तु परार्थत्वाद्विधिवदविकारः स्यात् ॥ ३९ ॥

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । दर्शपूर्णमासप्रकरणे, ''इडोपहूताः उपहूतेडा उपोस्मान्'' इत्यादीडोपाह्वाननिगदे ''दैव्या अध्वर्यव उपहूताः उपहूताः मनुष्याः, य इमं यज्ञमवान्, ये च यज्ञपतिं वर्धान्'' इति मध्ये श्रूयते । **अस्यार्थः,** ये अध्वर्यवो यज्ञमवान् अवन्ति, एव ये मनुष्या यज्ञपतिं यजमानं वर्धान् वर्धयन्ति, ते ऋत्विजो मनुष्याश्चोपहूता इति । तत्र मध्ये श्रुतमिदं वाक्यं यज्ञपतिवृद्धिप्रकाशनार्थं सत्समवेतार्थकमुतेडास्तुत्यर्थं सदसमेतार्थकमिति **सन्देहः । पूर्वपक्षस्तु,** इडास्तुत्यर्थमन्त्रैक वाक्यतयेडास्तुत्यर्थत्वमस्य वाक्यस्य प्रतीयते । लिङ्गेन च यज्ञपतिवृद्धिप्रकाशनार्थता । वाक्याच्च लिङ्गं बलवत् । स्तुतिरूपत्वे अदृष्टार्थत्वम् । यजमानवृद्धिप्रकाशनार्थत्वे तु यजमानस्योत्साहजननेनोत्साहरूपयजमानसंस्कारहेतुत्वेन दृष्टार्थत्वं लभ्यते । अतः ''स्योनं ते'' इति मन्त्र इव लिङ्गबलाद्वाक्यबाधेन पूर्वत्र धान्यशब्दवत्समवेतार्थमिदं वाक्यमिति । **सिद्धान्तस्तु** सत्यं वाक्यात् लिङ्गं बलीय इति । तथापीह ''इडोपहूतेति'' ''इडाह्वयामि'' इति प्रत्यक्षवचनेन लिङ्गादपि बलवता कृत्स्नस्य इडानिगदस्येडोपाह्वाने विनियोगात् ''ये यज्ञपतिम्'' इति वाक्यस्यापि तन्मध्यगतस्य तदेकवाक्यतयेडोपाह्वानशेषतया इडास्तुत्यर्थत्वमेव युक्तम् । इडाप्रकरणश्चैवं सत्यनुगृहीतं भवति । यत्तु ''स्योनं ते'' इति मन्त्र इवेति । तन्न । वैषम्यात् । तत्र यच्छब्दाश्रवणेन स्वतन्त्रमेव सदनकरणं प्रतिष्ठापनश्च लिङ्गात्प्रतीयत इत्युभयमप्यनुष्ठेयतया प्रकाशनीयमिति युक्तो वाक्यबाधेन लैङ्गिको विनियोग इति । अत्र तु ''ये यज्ञपतिं वर्धान्'' इति यच्छब्दोपबन्धेन श्रुत्यैव वृद्धिरन्यविशेषणतया प्रतीयते । न स्वार्थतया । यज्ञपतिशब्दोऽपि वृद्धिविशेषणतया प्रतीयते न स्वार्थतयेति यज्ञपतिविशिष्ट वृद्धिरिडोपाह्वानशेषतयैव प्रकाशनीयेत्यसमवेतार्थमेवेदं वाक्यमिति । तदाह **सूत्रे, चोदिते** श्रुते यज्ञपति शब्दे **परार्थत्वात्** वृद्धिविशेषणत्वात् सत्रेष्व**विकारोऽनूहः स्यात् । विधिवत्** ''यजमानसम्मितौदुम्बरी इति विधौ यथैकपक्षमानेन समानेन, सिद्धिस्तथैकयज्ञपतित्वविशिष्टवृद्धिप्रकाशनेनापि यज्ञपतिविशिष्ट वृद्धिप्रकाशनसिद्धिरिति । **फलन्त्वनेक**यजमानकेषु सत्रेष्वेकस्यैव यजमानस्य वृद्धिप्रकाशने त्वन्यः प्रोत्साहरूपसंस्कारेणासंस्कृतः स्यादिति सर्वसंस्कारार्थं ''यज्ञपतीन् वर्धान्'' इत्यूहितव्यमिति **पूर्वपक्षे । सिद्धान्ते तु,** एकयजमानवृद्धिप्रकाशनद्वारापि स्तुतिसिद्धेरनूहेन यथाश्रुतस्यैव प्रयोग इति ।

इति पञ्चदशमिडोपाह्वानमन्त्रे यज्ञपतिशब्दस्यानूहाधिकरणम् (३९)

अथ षोडशं प्रहरणकरणसूक्तवाके यजमानशब्दस्योहाधिकरणम् (४०)

**विकारस्तत्प्रधाने स्यात् ॥ ४० ॥**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । दशपूर्णमासयोः ''सूक्तवाकेन प्रस्तरं प्रहरति'' इति प्रस्तरप्रहरण करणत्वेन विनियुक्तसूक्तवाकमन्त्रे श्रूयते ''अयं यजमानोसावायुराशास्ते'' इति । तत्र यजमानशब्दः किं विकृतावूहनीयो वा न वेति **सन्देहे,** प्रस्तरप्रहरणाङ्गसूक्तवाकमन्त्रमध्यपतितस्य ''यजमान आयुराशास्ते'' इत्येतस्य तदेकवाक्यतापन्नस्य पृथगायुराशासने विनियोगायोगाद्यज्ञपतिविशिष्ट-वृद्धिरिव यजमानसम्बद्धा आयुरादयः स्तुत्यर्थत्वेन वाच्या इत्यनेकयजमानके सत्रे एकस्मिन् यजमाने कीर्तिते तादृशायुरादिकीर्तनसिद्धेः ''यजमाना आयुराशासते'' इति नोहितव्यमिति **प्राप्ते सिद्धान्तः,** तृतीयाविभक्त्या सर्वोऽपि सूक्तवाकः प्रहरणाङ्गं विज्ञायमानः क्रियां तत्सम्बन्धिनश्च प्रकाशयन् क्रियाङ्गं भवतीति तन्मन्त्रे प्रकाश्या अग्न्यादयो यथा तत्क्रियासाधनीभूतदेवतात्वेन कल्प्यन्ते, तथा आयुरादिक-मपि क्रियासाध्यफलत्वेन, कल्पनीयमेवेति सूक्तवाकस्य स्वसाध्यप्रहरणकर्तृफलप्रकाशनद्वारैव करणत्व-मित्यनेकयजमानकसत्रे सूक्तवाकेन कस्यचित्सम्बन्धिनः फलस्य प्रकाशने तं प्रत्येव मन्त्रः करणं स्यात् । नान्यान् प्रतीत्यन्येषामपि फलसिद्धये ''यजमाना आयुराशासते'' इत्यूहितव्यमिति । तदाह **सूत्रे, तत्प्राधान्ये** यजमानप्राधान्ये ''यजमान आयुराशास्ते'' इत्यादौ श्रुते सति तस्य विकृतिषु **विकार** ऊहः स्यादिति । **फलन्तु** पूर्वोत्तरपक्षयोरनूहोहौ ।

इति षोडशं प्रहरणकरणसूक्तवाके यजमानशब्दस्योहाधिकरणम् (४०)

अथ सप्तदशं सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दस्यानूहाधिकरणम् (सूत्राणि ४१-४३)

**असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ ४१ ॥**

**(कर्माभावादेवमिति चेत् ॥ ४२ ॥ न परार्थत्वात् ॥ ४३ ॥)**

अत्रापि पूर्वन्यायेन शङ्कनात्सङ्गतिः । ज्योतिष्टोमे सुब्रह्मण्याह्वानार्थो निगदः ''इन्द्र आगच्छ । हरिव आगच्छ । मेधातिथेर्मेष । वृषणश्वस्य मेने । गौरावस्कन्दिन् । अहल्यायै जार'' इति पठ्यते । सोऽयं निगदोऽग्निष्टुन्नामकयागे चोदकेनातिदिष्टः । तत्र ''आग्नेयी सुब्रह्मण्या'' इति वचनादिन्द्रोप-स्थानेऽग्निपदं प्रक्षिप्यते ''अग्न आगच्छ'' इति । तस्मिन्निगदे हरिव इत्यादिसम्बुद्ध्यन्तेन्द्रविशेषणा-न्यप्यग्न्यनुगुणविशेषणतयोहनीयान्युत नेति सन्देहे ''पूर्वपक्षापरपक्षौ वा हरी'' इत्यादिव्याख्यानबलात् हरिव इत्यादिविशेषणानामिन्द्रे सम्भवेन तद्द्वारेणैवेन्द्रः प्रकृतौ प्रकाश्य इति समवेतार्थकत्वाद्विशेषणानां



पूर्वत्र यजमानपदमिव विकृतौ विशेषणान्यप्यग्न्यनुगुणतयोहनीयानीति **प्राप्ते सिद्धान्तः,** स्यादेवमिन्द्रे यद्येते गुणाः स्युः । न चैवम् । तत्सत्वे मानाभावात् । ''हरिव आगच्छ'' इति ''पूर्वपक्षापरपक्षौ वा हरी । ताभ्यां ह्येष सर्वं हरति'' इत्याद्येतन्निगदव्याख्यानपरं ब्राह्मणवाक्यं स्तुतिपरं सन्नार्थविवक्षां साधयितुमलमितीन्द्रोऽप्यविद्यमानगुण एव प्रकाश्य इत्यग्निरपि तैरेव गुणैः सम्बोद्ध्य इत्यनूह इति । तदाह **सूत्रे, तद्विशिष्टं** हरिवदादिपदविशिष्टमेवाग्निष्टुत्यपि **प्रतीयेत** । हरिवदादिपदानां **तदर्थेषु** इन्द्राद्यर्थेषु **असंयोगादसम्बन्धादिति** । **फलन्तूहानूहौ** व्यक्तौ ।

इति सप्तदशं सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दस्यानूहाधिकरणम् (सूत्राणि ४१-४३)

अथ सप्तदशं सोमक्रियसाधनकाण्डे ''तस्यै शृतम्'' इत्याद्यनूहाधिकरणम् (वर्णकान्तरम्) (सूत्राणि ४१-४३)

**असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ ४१ ॥**

**(कर्माभावादेवमिति चेत् ॥ ४२ ॥ न परार्थत्वात् ॥ ४३ ॥)**

**वर्णकान्तरन्तु,** ज्योतिष्टोमे एकहायन्यां मन्त्रः श्रूयते ''इयं गौः सोमक्रयणी । तया ते क्रीणामि'' इति । ''तस्यै शृतं, तस्यै पयः, तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चनम्'' इत्यादि । स च साद्यस्क्रनामके यागेऽतिदिष्टः । तत्र च ''त्रिवत्सः साण्डः सोमक्रयणः'' इत्यन्यो गौर्विहितः । तत्र ''इयं गौः सोमक्रयणी'' इति पदस्थाने ''अयं गौः सोमक्रयणः । तेन ते क्रीणामि'' इति पुल्लिङ्गतयोहे पूर्वभागस्य सिद्धे सति ''तस्यै शृतम्'' इत्याद्युत्तरभागेऽपि ''तस्मै शृतम्'' इति पुल्लिङ्गतयोहनीयम्, उत नेति **सन्देहे,** एकहायन्या सोमक्रयसमये शृतादेरभावेऽपि त्रिचतुरवर्षोत्तरकाले सम्भवद्भिः शृतादिगुणैरेकहायन्याः प्रकाशने दृष्टार्थत्वलाभात्प्रकृतौ समवेतार्थत्वात्साण्डे कदाचिद्धेनूत्पादनसम्भवेन तद्द्वारा क्षीरादिनिमित्ततासम्भवाद्विकृतावपि समवेतार्थत्वादूहेनैव साद्यस्क्रेऽपि प्रयोगो मन्त्रस्येति **प्राप्ते सिद्धान्तः,** स्यादेवं, यदि प्रकृतौ समवेतार्थोऽग्रेतनभागः स्यात् । न चैवम् । क्रयवेलायां शृतादेर-भावात् । कालान्तरे शृतादिभावोऽपि न निश्चेतुं शक्यते । मध्ये मृतेरपि सम्भवात् । अत एकहायन्यामपि स्तुत्यर्थत्वेनासमवेतार्थतया विकृतावप्यनूहेन यथाश्रुतस्यैव प्रयोग इति । तदाह **सूत्रे, तद्विशिष्टम्** ''तस्यै शृतम्'' इत्यादिपदविशिष्टमेव मन्त्रपदजातं साद्यस्क्रेऽपि **प्रतीयेत** । **तदर्थेषु** शृताद्यर्थेषु **तेषां** पदानाम-सम्बन्धादिति ।

इति सप्तदशं सोमक्रयसाधनकाण्डे ''तस्यै शृतं'' इत्याद्यनूहाधिकरणम् (वर्णकान्तरम्) (सूत्राणि ४१-४३)

**अथाष्टादशं सारस्वत्यां मेष्यामध्रिगुवचनाभावाधिकरणम् (सूत्राणि ४४-४८)**

**लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ ४४ ॥**

**(पश्वभिधानाद्वा तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम् ॥ ४५ ॥ विशेषो वा तदर्थनिर्देशात् ॥ ४६ ॥ पशुत्वश्चैकशब्द्यात् ॥ ४७ ॥ यथोक्तं वा सन्निधानात् ॥ ४८ ॥)**

अत्रापि पूर्वन्यायेन शङ्कनात्सङ्गतिः । ज्योतिष्टोमे संस्थाभेदेन सवनीयाः पशवः पूर्वपूर्वसाहित्येनोत्तरोत्तरवृद्ध्या नाना श्रूयन्ते । ''आग्नेयमजमग्निष्टोम आलभते । ऐन्द्राग्नमुक्त्थ्ये द्वितीयम् । ऐन्द्रं वृष्णिं षोडशिनि तृतीयम् । सारस्वतीं मेषीं चतुर्थीमतिरात्रे'' इति । तत्र ''दैव्याः शमितारः आरभध्वम् । उत मनुष्याः । उपनयत मेध्यादुर आशासाना मेधपतिभ्यां मेधं । प्रास्मा अग्निं भरता'' इत्यध्रिगुशब्दितशमितॄन् प्रत्युच्यमानमध्रिगुप्रैषवचनमिदमजादिषु त्रिषु प्रवर्तमानं मेष्यां चतुर्थ्यामपि प्रवर्तते, अथ नेति **सन्देहे,** प्रवर्तत इति **प्राप्तम्** । कुतः? पशुधर्माणां सर्वपशुसाधारण्यात्संस्थानामपि समानविधानत्वात्सर्वनाम्नः सन्निहितपरत्वेन प्रकरणसन्निधापितमेषीपरत्वस्याप्यध्रिगुवचनान्तर्गतास्मैशब्दस्य न्याय्यत्वात् । न च पुल्लिङ्गविरोधः । पशुशब्दाध्याहारेण पूर्वत्र त्रिवत्से साण्डे ''तस्यै शृतम्'' इत्यादेरिव ''प्रास्मै पशवः'' इति मेष्यामप्युक्त्यविरोधादिति । **सिद्धान्तस्तु,** स्यादेवं पशुशब्दश्रवणे मेष्यामपि प्रवृत्तिर्वचनस्य । न चात्र पशुशब्दोऽस्ति । प्रयोगवेलायां प्रत्यक्षसन्निहिताजादिपरत्वेन ''अस्मै'' इति शब्द उपपन्नः सन्न मेष्यां स्त्रियां लिङ्गविरोधात्प्रवर्तते । कल्पकाभावान्नाध्याहार इति । तदाह **सूत्रे, समानविधानेषु** पशुषु **सारस्वती** मेषी **स्त्रीत्वाद**ध्रिगुवचनमप्राप्तेति । **फलन्तु** मेष्यामध्रिगुवचनाप्रवृत्तिरिति व्यक्तम् ।

इदं तु कृत्वाचिन्तया प्रवृत्तम् । **तुल्यः सर्वेषां पशुविधिरिति** सूत्रे पशुधर्माणामग्नीषोमीयार्थत्वस्य **संस्थास्तु समानविधाना** इति संस्थानामग्निष्टोमसंस्थाविकृतित्वस्य तार्तीयषष्ठपादेऽभिधानेनाग्नीषोमीयः सवनीयस्य प्रकृतिरित्यष्टमाद्यपादे **दैक्षस्य चेतरेषु** इति सूत्रेऽभिधानेन च समानविधित्वाभावेन पश्वन्तरेषूहेन प्रवृत्तिसिद्धेरिति ध्येयम् ।

**इत्यष्टादशं सारस्वत्यां मेष्यामध्रिगुवचनाभावाधिकरणम् (४४-४८)**



**अथैकोनविंशं यज्ञायज्ञीये गिराशब्दस्य स्थाने इराशब्दस्यैव कर्तव्यताधिकरणम् (४९-५२)**

**आम्नातादन्यदधिकारे वचनाद्विकारः स्यात् ॥ ४९ ॥**

**(धैं वा तुल्यहेतुत्वात्सामान्याद्विकल्पः स्यात् ॥ ५० ॥ उपदेशाच्च साम्नः ॥ ५१ ॥ नियमो वा श्रुतिविशेषादितरत्साप्तदश्यवत् ॥ ५२ ॥)**

मन्त्रसंस्कारविषयोपोद्धातम**र्थाभिधानसंयोगा**दिति सूत्रपर्यन्तं विचार्य, तत आरभ्यैतावत्पर्यन्तं प्रातिपदिकांशे मन्त्रोहश्च षड्भिर्नवैर्विचार्याधुनोत्तरपादे **सामप्रदेशे विकारः** इति सूत्रप्रभृति सामोहं विवक्षुस्ततः प्राक्तनैः सप्तदशभिरधिकरणैस्तदुपोद्धातं चिन्तयति । सामानि खल्वक्षरान्तरेषु गीतान्यक्षरान्तरेषूह्यन्ते । पूर्वाधिकरणन्यायेन प्रवर्तिष्यमाणोत्तरनयोपोद्धातत्वेनेदमारभ्यते । ज्योतिष्टोमे ''यज्ञायज्ञीयेन स्तुवीत'' इति श्रुतम् । यज्ञायज्ञीयं नाम यज्ञायज्ञशब्दोपेतायामृच्युत्पन्नं साम । तस्यामृचि गिराशब्दः पठ्यते ''यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे'' इति । तत्रेदं वचनं श्रूयते ''न गिरा गिरेति ब्रूयात् । ऐरं कृत्वोद्गायेत्'' इति । ऐरमिति प्रज्ञादित्वात्स्वार्थेऽण् प्रत्ययः । गकारलोपेन इराशब्दं कृत्वा गेयमिति । तत्र गिरापदस्थानापत्तिरिराशब्दस्य किं वैकल्पिकी, किं वा नित्येति **सन्देहः । पूर्वपक्षस्तु,** ''ऐरं कृत्वा'' इतीरापदस्यात्र गिरापदस्थानापत्तिमात्रं ''एरं कृत्वा'' इति ब्राह्मणेन विधीयते । न तु स्तुवीतेत्युक्तस्तोत्रसम्बन्धो गानसम्बन्धो वोच्यते । स्तुवीतेत्युक्तस्तोत्रप्रकरणात्तु स्तोत्राङ्गत्वमिरापदस्य वाच्यम् । यज्ञायज्ञीयगानसाध्यस्तोत्रं प्रत्यङ्गत्वस्य तादृशगानसम्बन्धं विना अनुपपत्त्याऽर्थात्प्राप्तस्तत्साधनभूतयज्ञायज्ञीयगानसम्बन्धः ''उद्गायेत्'' इत्यनूद्यते । गिरापदस्याग्निष्टोमस्तोत्रक्रमपठितयज्ञायज्ञीयसामाश्रयमन्त्रैकदेशतयाऽङ्गत्वं कल्प्यम् । न साक्षात्तद्द्वारा च गानसम्बन्धः । एवञ्च ''साङ्गप्रधानकेन यज्ञायज्ञीयेन स्तुवीत'' इति प्रत्यक्षप्रयोगवचनेन गिरेरापदयोर्द्वयोरपि स्तोत्राङ्गतया विधिः समान इति कदाचिद्गिरापदं कदाचिदिरापदमिति वैकल्पिकी स्थानापत्तिरिरापदस्येति । **सिद्धान्तस्तु,** यदि ''ऐरं कृत्वा'' इति वाक्यमिरापदस्य गिरापदस्थानापत्तिविधिमात्रपरं तदा ''उद्गायेत्'' इत्यंशो व्यर्थः । ''ऐरं कुर्यात्'' इत्येव पूर्तेः । अतः श्रुत्योद्गानसम्बन्धविधिरेवायम् । प्रकरणाच्चोद्गानस्य स्तोत्रसाधनता । गिरापदस्य तु सामाश्रयमन्त्रैकवाक्यतया गानसम्बन्धः । स्तोत्रप्रकरणे पठ्यमानर्चां मध्ये यज्ञायज्ञीयसामाश्रयो मन्त्रोऽग्निष्टोमस्तोत्रक्रमे पठ्यत इति क्रमप्रमाणेन मन्त्रस्य स्तोत्राङ्गत्वात्तदेकदेशगिरापदस्यापि क्रमप्रमाणेन तदङ्गत्वमवसेयमिति

क्रमापेक्षया श्रुतिप्रकरणयोर्बलवत्वाद्गिरापदस्याऽज्ञानमात्रत्वेन, विधेरभावादविहितस्याङ्गत्वायोगात् ''गिरेति ब्रूयात्'' इति विधिकल्पनाद्वाराऽङ्गत्वस्य कल्प्यत्वात्। इरेत्यस्य तु विधेः प्रत्यक्षत्वेनाङ्गत्वस्याकल्प्यतया लाघवाच्च तुल्यबलत्वाभावेन प्रयोगवेलायां गिरापदबाधेन तत्स्थाने नित्यतया इरापदमेवोक्त्वा गातव्यमिति। तदाह सूत्रे, आम्नाताद्गिरापदादन्यत् इरापदं अधिकारे गिरापदस्थाने वचनात् विधानात् विकारः गिरापदबाधकः स्यादिति। फलं व्यक्तम्।

इत्येकोनविंशं यज्ञायज्ञीये गिराशब्दस्य स्थाने इराशब्दस्यैव कर्तव्यताधिकरणम् (सूत्राणि ४९-५२)

### अथ विंशमिरापदस्य प्रगीतताधिकरणम् (सूत्राणि ५३-५७)

**अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशात् ॥ ५३ ॥**

**(यत्स्थाने वा तद्गीतिः स्यात्पदान्यत्वप्रधानत्वात् ॥ ५४ ॥ गानसंयोगाच्च ॥ ५५ ॥ वचनमिति चेत् ॥ ५६ ॥ न तत्प्रधानत्वात् ॥ ५७ ॥)**

पूर्वोपजीवनेनास्य प्रवृत्तेः सङ्गतिः। नियतमिरापदमिति स्थिते तत्किं प्रगीतमेव प्रयोक्तव्यम्, उताप्रगीतमिति संशयः। पूर्वपक्षस्तु, अप्रगीतमेव प्रयोक्तव्यम्। ऐरमिति केवलादेवाप्रगीतादिराशब्दात्तद्धितस्योत्पत्तेरवगमात्। अन्यथा प्रगीतात्तद्धितोऽयमित्यङ्गीकृतौ आयिरीयमिति निर्देशः श्रुतौ स्यात्। तथा हि, वृद्धं तालव्यं प्रथमस्वरश्च इत्यौहिकाख्यग्रन्थोक्तवचनेन यत्तालव्यं प्रथमस्वराख्यश्च तद्वृद्धसञ्ज्ञं भवतीत्युक्तेरिकारस्य वृद्धसञ्ज्ञायां ''अथ तालव्यमाइ यद्वृद्धम्'' इति तद्ग्रन्थोक्तवचनेनेकारस्य आइभावे सति ''आइरा'' इति भवति। तस्मात् ''वृद्धिर्यस्याचामादिस्तद्वृद्धम्'' इति पाणिनिसूत्रेण वृद्धसञ्ज्ञायां वृद्धाच्छः इति छप्रत्यये तस्येयादेश यस्येति लोपे आइरीयमिति भवति। न चैवं श्रुतौ निर्देशोऽस्ति। एरमित्येव श्रवणात्। अतोऽप्रगीतमेवेरापदं प्रयोज्यमिति। तदाह सूत्रे, गिरापदाच्छब्दान्यत्वे चोदिते सत्यप्रगाणादेव तस्मात्पदात्स्तुतिः साध्येत ऐरमिति। तथाभूतस्यैव निर्देशादिति। सिद्धान्तस्तु, गिरापदस्थाने हीदमिरापदं विधीयते। अन्यथा गिरापदस्येरापदेनानिवृत्त्या ''न गिरा गिरेति ब्रूयात्'' इति तत्प्रतिषेधानुवादोऽयुक्तः स्यात्। तथा च धर्मस्यार्थकृतत्वात् द्रव्यगुणविकारेत्यादौ वक्ष्यमाणदिशातत्स्थानापन्नस्य तद्धर्मलाभाद्गिरापदस्येव प्रगीतस्यैवेरापदस्य प्रयोगः। तथा गिरापदे गातव्यस्य साम्नस्तत्पदनिवृत्तौ स्वस्यावैकल्याय तत्स्थानापन्नगेयाक्षराकाङ्क्षया इरापदस्यापि प्रकरणावगतस्तोत्राङ्गभावस्य स्तोत्रे द्वारभूतस्वसंस्कारकसामाकाङ्क्षायाः सत्वेना-



न्योन्याकाङ्क्षावशाच्च प्राप्तः प्रगीतस्यैव प्रयोग इति। तदाह सूत्रे, यत्स्थाने वा तद्गीतिः स्यात्पदान्यत्वप्रधानत्वादिति। फलं व्यक्तम्।

इति विंशमिरापदस्य प्रगीतताधिकरणम् (सूत्राणि ५३-५७)

इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्यश्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते नवमाध्यायस्य प्रथमः पादः

अस्मिन् पादे अधिकरणानि २० सूत्राणि ५७

आदितः अधिकरणानि ५४९ सूत्राणि १५८८

## अथ नवमाध्यायस्य द्वितीयः पादः

ॐ। पूर्वत्र गिरापदस्थानापन्नेरापदस्य तद्गीतिप्राप्तिरित्युक्तम्। तत्साम्नामूहे सत्येव स्यात्। स एवायुक्त इत्याक्षिप्यात्र पादे समाधीयत इति पूर्वानन्तर्यमस्य पादस्य ध्येयम्।

### अथ प्रथमं गीतीनां सामनामताधिकरणम् (सूत्रे १-२)

अत्र भाष्ये सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् इति सूत्रे ''प्रगीतो मन्त्रः साम'' इत्यध्येतृस्मरणात् ''अहेर्बुध्न्य मन्त्रं मे गोपाय। यमृषयस्त्रैविदा विदुः। ऋचः सामानि यजूंषि'' इति मन्त्रे सामशब्दोपदेशाच्च मन्त्रमेके सामानीति मन्यन्त इति पूर्वपक्षयित्वा, तदुक्तदोषम् इति सूत्रेण ऋक्षु ऋगन्तरातिदेशायोगात् ''कवतीषु रथन्तरं गायन्ति'' इत्यतिदेशानुपपत्तिरूपोक्तदोषं तत् पूर्वसूत्रोक्तं ''प्रगीतमन्त्र एव साम'' इति मतम्। अतो गीतिरेव सामेति सप्तमस्य द्वितीयपादाद्यनयोक्तमेवात्रोहविचारार्थं स्मर्यत इत्युक्त्वा वर्णकान्तरश्चोत्तरविचारोपोद्घाततत्वेनोक्तम्।

इति प्रथमं गीतीनां सामनामताधिकरणम् (सूत्रे १-२)

### अथ प्रथममूहग्रन्थस्य पौरुषेयत्वाधिकरणम् (सूत्रे १-२) (द्वितीयं वर्णकम्)

**सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥**

**(तदुक्तदोषम् ॥ २ ॥)**

तथा हि, सामगानामस्ति ग्रन्थत्रयं योनिग्रन्थः ऊहग्रन्थः उत्तराग्रन्थ इति । **योनिग्रन्थो** नाम नानाभूतानां साम्नां योनिभूता ऋचो यत्रोक्ताः स उच्यते । छन्द इत्यप्युच्यते स ग्रन्थः । **ऊहग्रन्थस्तु**, एकैकसाम्ना प्रगीतं त्र्यृचं त्र्यृचं यत्र ग्रन्थे स उच्यते । **उत्तराग्रन्थस्तु** त्र्यृचात्मकानि सूक्तानि यत्राम्नातानि स उच्यते । तत्राद्यछन्दोगतऋग्योनिरूहग्रन्थः किं पौरुषेयः, उतापौरुषेय इति सन्देहे, अनध्याय-वर्जनेन, कर्तृरस्मरणेनाध्यापकानां वेदत्वप्रसिद्धया च वेदसमानयोनिग्रन्थ सदृशत्वादूहग्रन्थोऽप्यपौरुषेय एवेति **प्राप्ते सिद्धान्तः**, अर्थान्तरे कृतस्यार्थान्तरे कृतिरूपोहत्वप्रसिद्धेरपौरुषेयत्वेऽनुपपत्तेः ''यद्योन्यां तदुत्तरयोर्गायति'' इत्यतिदेशविद्ध्यनुपपत्तेश्च पौरुषेय एवोहग्रन्थः । यद्योन्यामित्यस्य ह्ययमर्थः । अपौरुषेयतया सम्मते ग्रन्थे पठितायां ''कया नश्चित्र आभुवत्'' इत्यस्यां योन्यामेकस्यामृचि यद्वामदेव्य नामकं सामोपदिष्टं तदुत्तरयोरुत्तरदेशे पठितयोः ''कस्त्वा सत्यो मदानाम्'' ''अभीषुणः सखीनाम्'' इति ऋचोर्द्वितीयतृतीययोर्गातव्यमिति । ऊहग्रन्थस्यापौरुषेयत्वेऽतिदेशविधिर्व्यर्थः स्यात् । अनादि-तस्त्र्यृचेऽध्ययनसिद्धस्योत्तरयोर्गानानुष्ठानस्यातिदेशविधिं विनापि सिद्धेः । अतस्त्र्यृचे गानानुष्ठानमूहग्रन्थे पौरुषमेव । कर्तुरस्मरणन्तु चिरकालत्वाद्वाऽनादराद्वोपपन्नम् । अनध्यायवर्जनादिनियमस्तु साम्नां तत्तदाधारभूतानामृचाश्च वेदत्वाद्युक्त इति । **फलन्तु** पौरुषेयत्वात्तन्मध्ये न्याय्यस्य सङ्ग्रहोऽन्याय्यस्य त्याग इति ।

इति प्रथममूहग्रन्थस्य पौरुपेयत्वाधिकरणम् (सूत्राणि १-२)

### अथ द्वितीयं साम्नो ऋक्संस्कारकर्मताधिकरणम् (सूत्राणि ३-१३)

**कर्म वा विधिलक्षणम् ॥ ३ ॥**

**(तादृग्द्रव्यं वचनात्पाकयज्ञवत् ॥ ४ ॥ तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशश्च ॥ ५ ॥ शब्दार्थत्वात्तु नैवं स्यात् ॥ ६ ॥ परार्थत्वाच्च शब्दानाम् ॥ ७ ॥ असम्वन्धश्च कर्मणा शब्दयोः पृथगर्थत्वात् ॥ ८ ॥ संस्कारश्चाप्रकरणेऽग्निवत्स्या-त्प्रयुक्तत्वात् ॥ ९ ॥ अकार्यत्वाच्च शब्दानामप्रयोगः प्रतीयेत ॥ १० ॥ आश्रितत्वाच्च ॥ ११ ॥ प्रयुज्यत इति चेत् ॥ १२ ॥ ग्रहणार्थं प्रयुज्येत ॥ १३ ॥)**

प्रासङ्गिकी वा वक्ष्यमाणोपोद्धातत्वेन चिन्तनाद्वा **सङ्गतिः** । रथन्तरादिसामानि किमृगपेक्षया प्रधानकर्माण्युत ऋगक्षराभिव्यक्तिरूपसंस्कारहेतुतया गुणभूतानीति **सन्देहे**, ऋगक्षराभिव्यञ्जकतया ऋक्संस्कारकत्वेन ऋचं प्रति गुणकर्मत्वे क्रतुमध्य एव प्रयोगापत्या क्रतोर्बहिरपि सामाध्ययनं न स्यात् ।





न चान्यदा कृतं साम कर्मकाले प्रयुज्यमानऋगक्षराभिव्यञ्जकम् । तदानीमेव तस्य नाशात् । तत्संस्कारकत्वे वा क्रतुमध्ये पुनः सामोक्तिर्व्यर्था स्यात् । संस्कृतस्य पुनः संस्कारायोगात् । अतो बहिर्गानस्य विश्वजिदादिवत्फलकल्पनात्प्रधानं कर्म सामगानम् । कर्ममध्ये गानन्तु प्रयाजादि वदारादुपकारकमिति **प्राप्तम्** । तदाह **सूत्रे**, **कर्म** प्रधानं कर्म साम । कुतः? ''रथन्तरं गायति'' इत्यादौ प्रधान**विधिलक्षणं** यतोऽत्र भवतीति । **सिद्धान्तस्तु**, ''आज्यैः स्तुवते'' ''यज्ञायज्ञीयेन स्तुवीत'' इति फलवज्ज्योतिष्टोमाङ्गत्वेन श्रुतस्तोत्रसाधनीभूतऋगक्षराभिव्यक्तिरूपदृष्ट प्रयोजनसम्भवेनादृष्टकल्पनानु-पपत्तेः ऋगक्षराभिव्यञ्जकतया ऋचं प्रति गुणकर्मैव गानम् । न प्रधानकर्म । न च यथा ''सक्तून् जुहोति'' इत्यत्र सक्तूनां कर्मण्यविनियोगान्न होमसंस्कार्यता तथैव विनियुक्तऋगक्षराणां न सामसंस्कार्यतेति वाच्यम् । अत्रेव तत्र फलाभावात् । संस्कार्यत्वे फलवत्वस्यैव प्रयोजकत्वात् । ग्रहणावेक्षणसम्यग्जरणानामविनियुक्तानामपि ''भक्षे हि मा विश'' इत्यादिमन्त्रप्रकाशनसंस्कार्यत्व-दर्शनात् । बहिरध्ययनन्तु, अनभ्यस्तस्य कर्मकाले प्रयोगायोगाद्भूमिरथिकशुष्केष्टिन्यायेनाभ्यासार्थं भविष्यति । यथा भूमिरथिको भूमौ रथमालिख्याभ्यासं करोति । यथा वा शिष्यः शुष्केष्ट्या प्रयोगपाटवं सम्पादयति तथेति । **फलं** तु व्यक्तम् ।

इति द्वितीयं साम्नो ऋक्संस्कारकर्मताधिकरणम् (सूत्राणि ३-१३)

### अथ तृतीयं त्र्यृचे प्रत्यृचं कृत्स्नसाम्नः समापनाधिकरणम् (सूत्राणि १४-२०)

**त्र्यृचे स्याच्छ्रुतिनिर्देशात् ॥ १४ ॥**

**(शब्दार्थत्वाद्विकारस्य ॥ १५ ॥ दर्शयति च ॥ १६ ॥ वाक्यानां तु विभक्त-त्वात्प्रतिशब्दं समाप्तिः स्यात्संस्कारस्य तदर्थत्वात् ॥ १७ ॥ तथा चान्यार्थदर्शनम् ॥ १८ ॥ अनवानोपदेशश्च तद्वत् ॥ १९ ॥ अभ्यासेनेतरा श्रुतिः ॥ २० ॥)**

पूर्वोक्तोपजीवनेनास्य प्रवृत्तेः **सङ्गतिः** । ''एकं साम त्र्यृचे क्रियते स्तोत्रीयम्'' इति श्रूयते । साम च ऋचः संस्कारकमित्युक्तम् । तत्र किमेकं साम त्रेधा विभक्तं सदेकैकांशेनैकैकामृचं संस्करोति, किं वा प्रत्यृचं समस्तं साम परिसमाप्तं संस्कारकमिति **सन्देहे**, ''एकं साम क्रियते इति यत् तत् त्र्यृचे'' इति सामानुवादेन त्र्यृचगतं त्रित्वमङ्गतया विधीयते । तच्च त्रित्वस्याङ्गत्वमेकस्य साम्नस्तिसृभी ऋग्भिर्निष्पाद्यत्व एव निर्वहतीत्येकैकांशेनैव ऋक्त्रयसंस्कारकत्वम् । न त्वेकैकस्यामृचि सामस्त्येन । तथात्वे ''एकं साम त्र्यृचेऽभ्यस्यते'' इत्यर्थसम्पत्त्या क्रियत इत्यस्याभ्यासे लक्षणा स्यादिति **प्राप्तम्** ।

तदाह **सूत्रे, श्रुतिनिर्देशात्** क्रियत इत्यस्य श्रुत्यर्थलाभात् त्र्यृचे व्यासज्य गानं **स्यादिति** । **सिद्धान्तस्तु,** एकं सामेति वाक्ये स्तोत्रीयं स्तोत्रसाधनमेकं सामेति स्तोत्राङ्गसामानुवादेन तस्य त्र्यृचसम्बन्धो बोध्यते । स्तोत्राङ्गत्वञ्च साम्नो न साक्षात् । निराश्रयस्य तदयोगात् । किन्तु स्तोत्रसाधन-ऋगक्षरव्यक्तिद्वारा । ऋचां तु प्रत्येकमेव स्तोत्राङ्गत्वम् । न सङ्कशः । एवञ्च क्रमप्रकरणसहितेन लिङ्गेन स्तोत्राङ्गतया विहितामृचमृद्दिश्यानेन वाक्येन विधीयमानं त्रित्वं स्तोत्रस्यैवाङ्गतया विधीयते । ऋगुद्देशेन त्रित्वविधानेन च ऋक्संस्कारकस्य साम्नः प्राप्तं तिसृषु प्रत्येकं गानमभ्यासरूपं ''क्रियते'' इत्यनेन लक्षणयाऽनूद्यते । अनुवादत्वादेव च लक्षणा न दोषः । तस्मात्प्रत्यृचं परिसामप्य त्र्यृचे त्रिर्गेयमेकमेव सामेति । तदाह **सूत्रे, वाक्यानान्तु विभक्तत्वात्प्रतिशब्दं समाप्तिः स्यात्संस्कारस्य तदर्थत्वादिति** । **वाक्यानामृचामित्यर्थः** । फलं व्यक्तम् ।

इति तृतीयं त्र्यृचे प्रत्यृचं कृत्स्नसाम्नः समापनाधिकरणम् (सूत्राणि १४-२०)

## अथ चतुर्थं समास्वेव तिसृष्वृक्षु गानाधिकरणम् (सूत्रे २१-२२)

**तदभ्यासः समासु स्यात् ॥ २१ ॥**

**(लिङ्गदर्शनाच्च ॥ २२ ॥)**

प्रासङ्गिकी **सङ्गतिः** । पूर्वत्र ऋक्त्रये गानमित्युक्तम् । तत्र किं तिसृषु समछन्दस्कासु गानमुत विषमछन्दस्कास्वपीति **सन्देहे,** समास्वेवेत्यत्र नियामकाभावादनियम इति **प्राप्ते,** शरलेशपरिहारार्थं समछन्दस्कास्विति **सिद्धान्तः** । शरो हिंसा । लेशोऽल्पत्वम् । यद्यधिकछन्दस्कायां योनावुत्पन्नं साम न्यूनछन्दस्कयोरुत्तरयोर्गायेत्तदा सामैकदेशेनैव तादृशऋगक्षरव्यक्तिपूर्तेरवशिष्टः साम्नो भाग आश्रयाभावेन हिंस्येत नश्येदित्यर्थः । यदि योनेरधिकछन्दस्कयोरुत्तरयोर्गायेत्तदा साम्नोऽल्पत्वादवशिष्ट-ऋग्भागः सामहीनः स्यात् । अतस्तद्दोषद्वयनिरासाय समास्वेव गानं कार्यमिति । तदाह **सूत्रे, तदभ्यास इति** । व्यक्तः सूत्रार्थः । फलञ्च व्यक्तम् ।

इति चतुर्थं समास्वेव तिसृष्वृक्षु गानाधिकरणम् (सूत्रे २१-२२)

## अथ पञ्चमं ''उत्तरयोर्गायति'' इत्यत्रोत्तराग्रन्थसमधीतयोरेव ऋचोर्ग्रहणाधिकरणम् (सूत्रे २३-२४) (प्रथमं वर्णकम्)

**नैमित्तिकन्तूत्तरात्वमानन्तर्यात्प्रतीयेत ॥ २३ ॥**



**(ऐकार्थ्याच्च तदभ्यासः ॥ २४ ॥)**

**प्रथमं वर्णकम्** । पूर्वाक्षेपेणात्र शङ्कनात्सङ्गतिः । सामगानां छन्दोनामके ग्रन्थे उत्तराग्रन्थे च सामाश्रयभूता **ऋचः** पठिताः । छन्दोग्रन्थे रथन्तरबृहदादिसाम्नां योनिभूता **ऋच** एव पठिताः । उत्तराग्रन्थे तु रथन्तरयोनिं ''अभि त्वा शूर'' इत्यृचं पटित्वा साम्नः कस्यचिदप्ययोनिभूते ''न त्वा वाम्'' इत्यादिके द्वे **ऋचौ** पठिते । एवं बृहदादिसाम्नो योनिपाठानन्तरं द्वे द्वे ऋचावयोनिभूते पठिते । एवं स्थिते सति ''यद्योन्यां तदुत्तरयोर्गायति'' इत्यत्रोत्तराशब्दः किं योन्युत्तरपरः, उतोत्तराग्रन्थस्थपर इति **सन्देहे,** उत्तराशब्दस्य सम्बन्धिशब्दत्वेन पूर्वपठितयोन्युत्तरदेशपठित**ऋक्पर** एवात्रोत्तराशब्दः । तथा च रथन्तरयोनेः परतो बृहदादियोनेः पाठात्तयोः ''त्वामिद्धि हवामहे'' इत्यादिकयो रथन्तरसाम्नो गानम् । उत्तराग्रन्थे तु रथन्तरयोनेरुत्तरत्र ''न त्वा वाम्'' इत्यादिकयोः पाठात्तत्र गानमिति, कदाचिद्बृहदादियोनिभूतयो ऋचो रथन्तरस्य गानं, कदाचित्तु ''न त्वा वाम्'' इत्याद्युत्तराग्रन्थस्थयो ऋचोर्गानमित्यनियमः । द्वयोरपि रथन्तरयोन्युत्तरत्वात् । एवं च पूर्वत्रोक्तं समास्वेव गानमित्ययुक्तम् । विषमछन्दस्कयोरपि योन्युत्तरयोर्गानस्यावर्जनीयत्वादिति **प्राप्ते सिद्धान्तः,** उत्तराशब्दस्य सम्बन्धि-शब्दत्वेऽपीह न तस्य ग्रहणम् । उत्तराग्रन्थे सञ्ज्ञाशब्दत्वात् । तस्य निरपेक्षस्य सापेक्षसम्बन्धि-शब्दादपि बलवत्वान्निरपेक्षस्यैव ग्रहणमत्रेत्युत्तराग्रन्थस्थयोः ''न त्वा वाम्'' इत्यादिकयोरेव गानमिति । तदाह **सूत्रे नैमित्तिकन्तु** सञ्ज्ञानिमित्तकमेवोत्तरात्वं **प्रतीयेत** ज्ञातव्यम् । कुतः ? **आनन्तर्यात्** अन्याव्यवधानेनार्थबोधकत्वात्सञ्ज्ञाया इत्यर्थः । **फलं** व्यक्तम् ।

इति पञ्चमं ''उत्तरयोर्गायति'' इत्यत्रोत्तराग्रन्थसमधीतयोरेव ऋचोर्ग्रहणाधिकरणम् (सूत्रे २३-२४) (प्रथमं वर्णकम्)

## अथ पञ्चममतिजगत्यामभ्यस्यमानायां त्रिशोकगानाधिकरणम् (सूत्राणि २१-२४) (द्वितीयं वर्णकम्)

**तदभ्यासः समासु स्यात् ॥ २१ ॥**

**(लिङ्गदर्शनाच्च ॥ २२ ॥ नैमित्तकन्तूत्तरात्वमानन्तर्यात्प्रतीयेत ॥ २३ ॥ ऐकार्थ्याच्च तदभ्यासः ॥ २४ ॥)**

**द्वितीयवर्णकन्तु,** द्वादशाहे चतुर्थेऽहनि ''त्रैशोकं साम ब्रह्मसामातिजगतीषु स्तुवते'' इति श्रुतम् । तच्च त्रैशोकं नाम साम ''विश्वाः पृतनाः'' इत्यतिजगत्यामुत्पन्नम् । तदुत्तरे द्वे बृहतीछन्दस्के

''नेमिं नमन्ति चक्षसा'' इत्यादिके । तत्र त्यृचे गाने क्रियमाणे सति द्वे बृहत्यावुपेक्ष्य तत्स्थाने द्वे अतिजगत्यावानीय समासु गेयम्, उत बृहत्योरेव विषमछन्दस्कयोर्गेयमिति **सन्देहे,** ''अतिजगतीषु स्तुवते'' इति श्रुतातिजगतीबहुत्वानुग्रहाय अतिजगत्यावन्ये समानीय समास्वेव प्रागुक्तदिशा गानं कार्यम् । अन्यथाऽधिकछन्दस्कायामुत्पन्नस्य त्रैशोकसाम्नोऽल्पाक्षरबृहत्योर्गाने सामैकदेशेनैव तादृशऋगक्षराभिव्यक्त्याऽवशिष्टसामभागस्याश्रयाभावेन हिंसापरपर्यायसंशरशब्दितविनाशप्रसङ्गादिति **प्राप्ते सिद्धान्तः,** बृहत्योरुत्तराग्रन्थपठितयोः क्रत्वर्थत्वात्तत्त्यागे तयोरानर्थक्या पातात् ''एकविंशः षोडशी वैराजं साम'' इति चतुर्थेऽह्नि श्रुतैकविंशतिस्तोमकत्वसम्पत्त्ये ब्रह्मसामाख्यस्तोत्रावृत्तौ तत्साधनातिजगत्यादेरप्यावर्तननियमेन प्रथमाया अतिजगत्या उत्तरयोरिव सप्तकृत्व आवर्तनीयत्वेन तदपेक्षया बहुत्वस्योपपत्तेः ''उत्तरयोर्गायति'' इति वचनबलाद्विषमास्वेव बृहतीसहितासु गानम् । संशरस्तु वचनबलात्सह्य इति ।

इति पञ्चममतिजगत्यामभ्यस्यमानायां त्रिशोकगानाधिकरणम् (सूत्राणि २१-२४) द्वितीयं वर्णकम्

## अथ षष्ठं बृहतीपङ्क्त्योरेव प्रग्रथनेन रथन्तरस्य गानाधिकरणम् (सूत्राणि २५-२८) (प्रथम वर्णकम्)

**प्रागाथिकन्तु ॥ २५ ॥**

**(स्वे च ॥ २६ ॥ प्रगाथे च ॥ २७ ॥ लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥)**

पूर्ववैषम्येणात्र शङ्कनात्सङ्गतिः । ज्योतिष्टोमे रथन्तराख्यं साम ''अभि त्वा शूर'' इति बृहत्यामुत्पन्नम् । तस्याश्चोत्तरा ''न त्वा वाम्'' इति पङ्क्तिरेकैव पठिता । तथा बृहदाख्यं साम ''त्वामिद्धि हवामहे'' इति बृहत्यामुत्पन्नम् । तस्याश्चोत्तरा ''स त्वं नश्चित्र वज्रहस्त'' इति पङ्क्तिरेकैव पठिता । तत्रैवं श्रूयते ''न वै बृहद्रथन्तरमेकछन्दो, यत्तयोः पूर्वा बृहती । ककुभावुत्तरे'' इति । **अस्यार्थः,** द्वन्द्वैकवद्भावः । बृहद्रथन्तराख्यं सामद्वयं एकछन्दस्कं एकछन्दस्कऋगाधारकं न भवति । यस्मात्तयोः साम्नोराश्रयभूतास्वृक्षु पूर्वा बृहतीछन्दस्का । उत्तरे तु द्वे **ऋचौ** ककुप्छन्दस्काविति । तत्र किं पङ्क्तिद्वयं परित्यज्य द्वे द्वे ककुभावानेतव्ये, किं वा योनिभूतां बृहतीमुत्तरां पङ्क्तिश्च प्रग्रथ्य ककुभावुत्तरे ऋचावत्रैव सम्पाद्ये इति **सन्देहे,** ककुप्छब्दस्य स्वभावसिद्धककुप्छन्दस्कायामेव मुख्यत्वात्प्रग्रथनसम्पादितककुभोऽमुख्यत्वात् ''उत्तरे ककुभौ'' इति मुख्यार्थवचनबलात्स्वतःसिद्धककुभावानीय त्यृचे गातव्यं रथन्तरादिसामेति, पूर्वत्रोत्तराग्रन्थपठितऋक्परिग्रहेऽपि नात्र तत्परिग्रह इति **प्राप्ते । सिद्धान्तः,**



ककुभन्तरानयने तूत्तरत्र पङ्क्तिपाठस्यानर्थक्यापत्तेः, ''काकुभः प्रगाथः'' इति **कल्पसूत्रकारैः** प्रगाथसञ्ज्ञाकरणात्, तस्याश्च ''सोस्यादिरिति छन्दसि प्रगाथेषु'' इति सूत्रे ''प्रग्रथ्यत इति प्रगाथः'' इति **मञ्जर्यामुक्त्या** प्रग्रथननिमित्तत्वात्, ''पदात्पदं पुनरारभते'' इति वाक्ये ''पदं चतुर्थं पादमुद्गाता ऋगन्तरसम्पादनाय पुनरारभते आदत्ते'' इति लिङ्गदर्शनाच्च, प्रग्रथनेनात्रैव ककुभौ सम्पाद्ये इति । तदाह **सूत्रे, प्रागाथिकं** प्रग्रथनप्राप्तककुप्सु गानं कार्यमिति ।

**प्रग्रथनप्रकारश्च** ''अभि त्वा शूर नोनुमो दुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः'' इति प्रथमायां बृहत्यामविकृतायामेव गानं कृत्वा, तस्या ऋचश्चतुर्थं ''ईशानमिन्द्र तस्थुषः'' इति पादमुपादाय ''न त्वा वां अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते । अश्वा यन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे'' इत्युत्तरस्याः पङ्क्तेः पूर्वार्धेन प्रग्रथनीयम् । सेयमष्टाविंशत्यक्षरा त्रिपदा द्वितीया स्तोत्रीयैका ककुप् । पुनस्तस्यां ककुभि ''न जातो न जनिष्यते'' इति चरमं पादमादाय पूर्वस्याः पङ्क्तेरुत्तरार्धेन ''अश्वायन्तः'' इत्यनेन सह प्रग्रथनीयम् । सेयमष्टाविंशत्यक्षरा तृतीया स्तोत्रीया द्वितीया ककुप्भवतीत्येवंरूपेण ध्येयमिति ।

इति षष्ठं बृहतीपङ्क्त्योरेव प्रग्रथनेन रथन्तरस्य गानाधिकरणम् (सूत्राणि २५-२८) प्रथमवर्णकम्

## अथ षष्ठं बृहतीविष्टारपङ्क्त्योः प्रग्रथनेन रौरवयौधाजयसाम्नोर्गानाधिकरणम् (सूत्राणि २५-२८) द्वितीयं वर्णकम्

**प्रागाथिकन्तु ॥ २५ ॥**

**(स्वे च ॥ २६ ॥ प्रगाथे च ॥ २७ ॥ लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥)**

**वर्णकान्तरन्तु,** ज्योतिष्टोमे माध्यन्दिने सवने ''रौरवयौधाजये बार्हते त्र्यृचे भवतः'' इति श्रूयते । रौरवाख्यं यौधाजयाख्यञ्च साम बार्हते बृहतीछन्दस्के त्र्यृचे भवत इति **तदर्थः** । तयोः पूर्वा बृहती । उत्तरा विष्टारपङ्क्तिः । ''पुनानः सोम धारयापो वसानो अर्षसि । आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्मयः'' इति बृहती ॥ ''दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत् । आपृछ्य धरुणं वाज्यर्षति नृभिर्धौतो विचक्षणः'' इति विष्टारपङ्क्तिः । तत्रोत्तरां विष्टारपंक्तिमुद्धृत्य स्वतः सिद्धे द्वे बृहत्यावानीय रौरावादी द्वे सामनी गातव्ये, किं वाऽत्रैव बृहतीविष्टारपङ्क्त्योः प्रग्रथनेन बृहतीत्रयं सम्पाद्यमिति **सन्देहे,** युक्तः पूर्वत्र प्रग्रथनेन ककुप्द्वयसम्पत्तेरनागमः । इह तु विशिष्य ''बार्हते त्र्यृचे भवतः'' इति त्र्यृचपदश्रवणादवश्यं मुख्ये बृहत्यावानेये इति **प्राप्ते** प्रगाथसमाख्यादिनात्रैव प्रग्रथनेन सम्पाद्ये बृहत्याविति **सिद्धान्तः** ।

**प्रग्रथनप्रकारश्च** ''पुनानः सोम'' इत्यस्यां बृहत्यामविकारायामेवादौ रौरवं यौधाजयञ्चेति सामद्वयं गेयम् । तदनन्तरं तस्यां बृहत्यां ''उत्सो देवो हिरण्मयः'' इति चतुर्थं पादं पुनरुपादाय द्विरभ्यस्य ''दुहान ऊधर्दिव्यम्'' इत्यस्या विष्टारपंक्तेः पूर्वार्धेन सह प्रग्रथ्य द्वितीया स्तोत्रीया षट्त्रिंशदक्षरा बृहती कार्या । तदनन्तरं तस्या बृहत्याः ''प्रत्नं सधस्थमासदत्'' इति चतुर्थं पादमुपादाय द्विरभ्यस्य विष्टारपङ्क्तेः ''आपृच्छ्य धरुणं'' इत्युत्तरार्धेन प्रग्रथ्य तृतीया स्तोत्रीया षट्त्रिंशदक्षरा बृहती कार्येत्येवं ध्येयम् । अत्र प्रग्रथनेनैव बृहतीसम्पादने ''षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनम्'' इति लिङ्गदर्शनमाहुः । तच्च **लिङ्गदर्शनाव्यतिरेकाच्चेति सूत्रभाष्यादौ** व्यक्तम् ।

इति षष्ठं बृहतीविष्टारपंक्त्योः प्रग्रथनेन रौरवयौधाजयसाम्नोर्गानाधिकरणम् (सूत्राणि २५-२८)

## अथ षष्ठमनुष्टुप्गायत्र्योः प्रग्रथनेन श्यावाश्वान्धीगवयोर्गानाधिकरणम् (सूत्राणि २५-२८) (तृतीयं वर्णकम्)

**प्रागाथिकन्तु ॥ २५ ॥**

**(स्वे च ॥ २६ ॥ प्रगाथे च ॥ २७ ॥ लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥)**

**तृतीयवर्णकन्तु,** ''श्यावाश्वान्धीगवे आनुष्टुभे त्र्यचे भवतः'' इति ज्योतिष्टोमे तृतीयसवने श्रूयते । श्यावाश्वाख्यश्चान्धीगवाख्यश्च सामद्वयमनुष्टुप्छन्दस्के त्र्यृचे भवत इति तदर्थः । तत्राद्या ''पुरोजिती वो अन्धसस्सुताय मादयित्नवे । अप श्वानं श्नथिष्टन सखायो दीर्घजिह्वम्'' इत्यनुष्टुप् । यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्यः'' इति ''तं दुरोषमभी नरः सोमं विश्वस्या धिया । यज्ञं हिन्वन्ति अद्रिभिः'' इति चोत्तरे गायत्र्यौ । तत्र किमुत्पत्तिशिष्टावनुष्टुभावानेये, उतात्रैव प्रग्रथनेनानुष्टुप्त्रयं सम्पाद्यमिति **संशये,** मुख्ये अनुष्टुभे आनेये इति **प्राप्ते सिद्धान्तः,** ''आनुष्टुभः प्रगाथः'' इति स्मरणात्प्रगाथसमाख्यानाद्गायत्र्योरुत्तरत्र पाठानर्थक्यप्रसङ्गाच्चात्रैव प्रग्रथनेनानुष्टुप्त्रयं सम्पाद्यमिति ।

**तत्प्रकारश्च** ''सखायो दीर्घजिह्वम्'' इत्यनुष्टुभश्चतुर्थं पादं ''यो धारया'' इति गायत्र्या प्रग्रथ्य द्वितीया स्तोत्रीयाऽनुष्टुप् कार्या । तस्याश्च ''इन्दुरश्वो न कृत्व्यः'' इति चतुर्थं पादमुपादाय ''तं दुरोषम्'' इत्यनेन गायत्र्या प्रग्रथ्य तृतीया स्तोत्रीयाऽनुष्टुप् कार्येत्येवं ध्येयः । अत्र पूर्वस्माद्विशेषशङ्काया अभावेऽपि प्रग्रथनेनैवानुष्टुप्त्रयं सम्पाद्यमित्यत्र ''चतुर्विंशतिर्जगत्यस्तृतीयसवने । एका च ककुप्'' इति लिङ्गान्तरप्रदर्शनार्थमिदं वर्णकान्तरमित्याहुः । तच्च **लिङ्गान्तरं भाष्यतन्त्ररत्नवार्तिकाभरणेषु** व्यक्तम् ।

इति षष्ठमनुष्टुप्गायत्र्योः प्रग्रथनेन श्यावाश्वान्धीगवयोर्गानाधिकरणम् (सूत्राणि २५-२८)



## अथ षष्ठं पादप्रग्रथनेन ब्रह्मसामगानाधिकरणम् (सूत्राणि २५-२८) (चतुर्थं वर्णकम्)

**प्रागाथिकन्तु ॥ २५ ॥**

**(स्वे च ॥ २६ ॥ प्रगाथे च ॥ २७ ॥ लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥)**

**चतुर्थवर्णकन्तु,** गवामयने ''अभिवर्तो ब्रह्मसाम भवति'' इति विहितं ब्रह्मसामस्तोत्रं प्रकृत्य श्रूयते ''चतुश्शतमैन्द्रा बार्हताः प्रगाथाः'' इति । चतुरुत्तरशतसङ्ख्याका इन्द्रदेवताका बृहतीछन्दस्काः प्रगाथसञ्ज्ञका ऋग्द्वयात्मकाः सूक्ता इति तदर्थः । तत्र किमृग्द्वयात्मकेषु प्रगाथसञ्ज्ञकेषु चतुश्शत सङ्ख्याकेषु सूक्तेषु मध्ये एकप्रगाथगते द्वे ऋचौ द्वितीयप्रगाथगतामेकामृचञ्च प्रग्रथ्य त्र्यृचं सम्पाद्याभिवर्तनामकं साम गातव्यम्, उत द्वयोर्द्वयोरेव प्रग्रथनेन सम्पादिते त्र्यृचे गातव्यमिति **सन्देहे,** ''एकं साम त्र्यृचे क्रियते स्तोत्रीयम्'' इति प्रकृतौ विहितस्येह चोदकेन प्राप्तस्य त्र्यृचे गानस्यावश्यकत्वात्पूर्वप्रगाथगतऋग्द्वयस्योत्तरप्रगाथगताद्यर्चा प्रग्रथनेन ऋक्त्रयं मुख्यमेव सम्पाद्य त्र्यृचे गातव्यम् । पुनस्तत्प्रगाथगताद्यर्चा प्रग्रथनेन सम्पादितमृग्द्वयं तदुत्तरप्रगाथगताद्यर्चा प्रग्रथ्य त्र्यृचं सम्पाद्य गेयमिति **प्राप्ते सिद्धान्तः,** ब्रह्मसामाधिकृत्याऽम्नातेषु चतुश्शतप्रगाथेष्वेकं प्रगाथं पादप्रग्रथनेन त्र्यृचं कृत्वा प्रग्रथनसम्पादितासु तिसृषु ऋक्षु गातव्यम् । अन्यथैतेषु प्रगाथसमाख्यानुपपत्तेः । ''अन्यान्या ऋचो भवन्ति'' इति विरोधेनैकस्यामृचि द्विर्गानायोगाच्चेति ।

इति षष्ठं पादप्रग्रथनेन ब्रह्मसामगानाधिकरणम् (सूत्रे २५-२८) चतुर्थं वर्णकम्

## अथ सप्तमं गीतिसम्पादकानामक्षरविकारादीनां विकल्पाधिकरणम् (सूत्रम् २९)

**अर्थैकत्वाद्विकल्पः स्यात् ॥ २९ ॥**

सामवेदे शाखानां सहस्रत्वात्प्रतिशाखं गीतिशब्दितसामनिष्पादकानामक्षराणां विकारः, विश्लेषः, विकर्षणम्, अभ्यासः, विरामः, स्तोभः इत्यादयो विलक्षणाः सन्तीति सहस्रशाखागतनिर्वर्तकभेदात्तन्निष्पाद्यगीतिरपि सहस्रप्रकारा भवति । तत्र किं सर्वेषां गीतिनिर्वर्तकानां विकारविश्लेषादीनां प्रतिशाखं भिन्नानामेकस्यां गीतिव्यक्तौ समुच्चयोऽथ विकल्प इति **सन्देहे,** सर्वेषामाम्नातत्वाविशेषात्प्रयोगवचनेन सामार्थानां सर्वेषां परिगृहीतत्वात्समुच्चय इति **प्राप्ते सिद्धान्तः,** नानाशाखागतगीत्युपायानां सर्वेषामपि गीतिनिर्वृत्तिरूपैकप्रयोजनकत्वादेकशाखागताक्षरविकार-

विश्लेषादिभिर्गीतिनिर्वृत्तिसिद्धेर्गुणभूतोपायानुरोधेन गीतेरावृत्त्ययोगादेकस्यां व्यक्तौ नानाशाखागतोपायानां युगपदनुष्ठानासम्भवेन समुच्चयायोगाद्व्रीहियववद्विकल्प इति । तदाह **सूत्रे, अर्थैकत्वादित्यादि** । व्यक्तः **सूत्रार्थः** । फलञ्च व्यक्तम् । यद्यपीदं **तुल्यार्थास्तु विकल्पेरन्निति** द्वादशाध्यायतृतीयपादे वक्ष्यमाणन्यायेन गतार्थं तथापि सामप्रसङ्गाद्विस्पष्टार्थमिदं सूत्रमित्याहुः ।

इति सप्तमं गीतिसम्पादकानामक्षरविकारादीनां विकल्पाधिकरणम् (सूत्रम् २९)

**अथाष्टमं ''ऋचा स्तुवते'' ''साम्ना स्तुवते'' इति विधिना साम्नैव स्तवविंधानाधिकरणम् (सूत्रे ३०-३१) प्रथमं वर्णकम्**

**अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तत्परत्वात् ॥ ३० ॥**

**(वचनाद्विनियोगः स्यात् ॥ ३१ ॥)**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । कचिद्विकृतिविशेषे कानिचिदप्राकृतानि स्तोत्राणि विहितानि । तेषामप्राकृतत्वादेव तत्र प्राकृतानां रथन्तरादिसाम्नामृग्विशेषाणां वा प्राकृतबर्हिर्धर्माणामप्राकृतयूपावटास्तरणबर्हिषीव न प्राप्तिरस्ति । तत्र साधकाकाङ्क्षायामप्राकृतस्तोत्रसन्निधाविदं श्रूयते ''ऋचा स्तुवते । साम्ना स्तुवते । यदृचा स्तुवते । तदसुरा अन्ववायन् । यत्साम्ना स्तुवते । तदसुरा नान्वायन् । य एवं विद्वान् साम्ना स्तुवीत'' इति । तत्र सामशब्दः सामारूढऋक्परः । केवलसाम्नः स्तोत्रासाधनत्वात् । ऋक्शब्दः केवलर्क्परः । तत्र किमृचा साम्ना वा स्तोतव्यमिति विकल्पः किं वा साम्नैव स्तोतव्यमिति **सन्देहे**, द्वयोर्वचनसिद्धत्वात्पूर्वत्र गीत्युपायानामिव विकल्प इति **प्राप्तम्** । **तदाह सूत्रे, ऋक्सामयोस्तत्परत्वात्स्तोत्रसाधनत्वादर्थैक्याद्विकल्पः स्यादिति** । **सिद्धान्तस्तु**, ऋचा स्तवनं घातुकासुरागमनहेतुतया निन्दित्वा तदनागमनहेतुत्वेन साम्नः प्रशंसितत्वेन तत्रैव प्रशंसारूपार्थवादबलेन सामवाक्य एव विधित्वागमात्साम्नैव स्तोत्रं कार्यम् । ऋङ्निन्दावचनमपि सामप्रशंसार्थमिति । तदाह **सूत्रे, वचनद्विनियोगः स्यादिति** । ''असुरा नान्ववायन्'' इति वचनादित्यर्थः ।

इत्यष्टमं ''ऋचा स्तुवते'' ''साम्ना स्तुवते'' इति विधिना साम्नैव स्तवविधानाधिकरणम् (सूत्रे ३०-३१) प्रथमं वर्णकम्



**अथाष्टमं ''अयं सहस्रमानवः'' इत्यृचा प्रगीतयैवाहवनीयोपस्थानाधिकरणम् (सूत्रे ३०-३१) द्वितीयं वर्णकम्**

**अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्ततपरत्वात् ॥ ३० ॥**

**(वचनाद्विनियोगः स्यात् ॥ ३१ ॥)**

**वर्णकान्तरन्तु**, द्वादशाहान्तर्गतदशममहरधिकृत्य सामवेदे श्रूयते ''अयं सहस्रमान इत्येतयाऽहवनीयमुपतिष्ठते'' इति । सामवेदे संहिताग्रन्थे ''अयं सहस्र'' इति ऋगप्रगीता पठिता । गानग्रन्थे च प्रगीता पठिता । तत्र किं प्रगीतया अप्रगीतया वेत्यनियमः, उतप्रगीतयैवेति **सन्देहे**, द्वयोरपि वेदे पाठे सन्निहितत्वाविशेषेणैतयेति सर्वनाम्ना परामर्शस्य ''अयंसहस्रमानवः'' इति प्रतीकग्रहणस्य वाऽविशेषादनियम इति **प्राप्ते**, सत्यं, द्वयोरपि परामर्शसम्भव इति । तथापि ऋक्स्वरूपापरिज्ञाने गानस्य तत्र कर्तुमशक्यत्वात्, गानस्य सौकर्यार्थमृक्स्वरूप परिज्ञानायाप्रगीतर्कपाठः संहिताग्रन्थे गानार्थः सन्निराकांक्षः । प्रगीता त्वनन्यार्थेति प्रयोजनमपेक्षमाणोपस्थाने विनियुज्यत इति प्रगीतयैवोपस्थानमिति **सिद्धान्तः** ।

इत्यष्टमं ''अयं सहस्रमानवः'' इत्यृचा प्रगीतयैवाहवनीयोपस्थानाधिकरणम् (सूत्रे ३०-३१)

**अथाष्टमं ''अग्निर्मूर्धा'' इत्यादियाज्यानुवाक्यादीनां तानेन प्रयोगाधिकरणम् (सूत्रे ३०-३१) तृतीयं वर्णकम्**

**अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तत्परत्वत् ॥ ३० ॥**

**(वचनाद्विनियोगः स्यत् ॥ ३१ ॥)**

तृतीयं **वर्णकन्तु**, ''अग्निर्मूर्धा'' इत्यादियाज्यापुरोनुवाक्यामन्त्राः सामवेदे कचिच्छाखायामुदात्तानुदात्तस्वरितरूपस्वरत्रयविशिष्टतया पठ्यन्ते । ते शाखान्तरे चोदात्तानुदात्तस्वरितैकश्रुतिरूपस्वरचतुष्टय विशिष्टत्वेन । तत्रैकश्रुतिं प्रचय इत्याचक्षते । तत्र कर्मप्रयोगकाले मन्त्रेषु किं त्रैस्वर्यचातुस्स्वर्ययोः समुच्चयः उत विकल्पोऽथैकश्रुतिस्वर एवेति त्रेधा **सन्देहे**, प्रयोगवचनेनाऽज्ञातसर्वपरिग्रहात्समुच्चयो वा अध्ययननिर्वृत्तिरूपप्रयोजनस्यैकत्वात्तस्य चान्यन्तरेणापि सिद्धेर्विकल्पो वेति **प्राप्ते सिद्धान्तः**, ''यज्ञकर्मण्यजपन्यूङ्खसामसु'' इत्याद्यद्वितीयपादीयपाणिनिसूत्रे ''अग्निं गृह्णामिसुरथम्'' इत्यादियजमानजप्यमन्त्रं न्यूङ्खशब्दितान् ओम् ओम् ओम् इत्यादिषट्प्रणवान्, साम चेति त्रयं विना

यज्ञकर्मणि प्रयोज्या मन्त्रा एकश्रुतिमन्तो भवन्तीत्युक्त्याऽनुमितेन ''तानो यज्ञकर्मणि'' इति वेदवाक्येन पूर्वाचार्यसञ्ज्ञया तानशब्दितैकश्रुत्याख्यस्वरस्य मन्त्रेषु प्राप्तेरेकश्रुत्यैवोचार्या मन्त्रा इति । ऐकश्रुत्यं नामोदात्तादीनामविभागेन पठनम् ।

इत्यष्टमं ''अग्निर्मूर्धा'' इत्यादियाज्यानुवाक्यादीनां तानेन प्रयोगाधिकरणम् (सूत्रे ३०-३१)

**अथ नवमं ''रथन्तरमुत्तरयोर्गायति'' इत्यादावुत्तरावर्णवशेन गानाधिकरणम् (सूत्रे ३२-३३)**

**सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात् ॥ ३२ ॥**

**(वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात् ॥ ३३ ॥)**

''आम्नातादन्यत्'' इत्यारभ्योपोद्घातः प्रासङ्गिकश्च विचारः कृतः । अथोऽवसरप्राप्तः सामोहश्चिन्त्यते । ''यद्योन्यां तदुत्तरयोर्गायति । रथन्तरमुत्तरयोर्गायति'' इत्यादि श्रूयते । तत्र ''कया नश्चित्र आभुवदूती'' इतीयमृग्योनिः । ''कस्त्वा सत्यो मदानाम्'' इति ''अभीषुणः सखीनाम्'' इति द्वे ऋचावुत्तरे । तत्र योनौ पठितं सामोत्तरयोरूहेन गातव्यम्, उत नेति **सन्देहे**, योनिगानस्य योनिवर्णवशेनैव कृतत्वात्, योनौ ''कया नश्चित्र'' इत्यत्र चकारस्योपरिस्थितेकारस्य ''वृद्धं तालव्यं प्रथमस्वरं भवति'' इति वचनेन वृद्धसञ्ज्ञायां, ''वृद्धं तालव्यमायि भवति'' इत्यायिभावेन साम्नो गीतत्वात्, ''कस्त्वा सत्यो'' इत्युत्तरस्यामृच्यपि योनाविव चतुर्थवर्णस्य तकारस्योपरिस्थितयकारोकारस्थाने आइभावं कृत्वा साम गातव्यम् । तथा तदुत्तरस्यामपि ''अभीषुणः'' इत्यत्र णकारस्योपरिस्थिताकारस्थाने आइभावं कृत्वा साम गेयमित्यनूहेनैव सामगानमिति **प्राप्तम्** । **तदाह सूत्रे, सामप्रदेशे** सामातिदेशे **तदपेक्षो** योनिवर्णापेक्षो **विकार** आइभावरूपो **विकारः स्यात्** । कुतः? ''यद्योन्यां तदुत्तरयोर्गायति'' इति **शास्त्रकृतत्वाद्विकारस्येति** । **सिद्धान्तस्तु**, योनाविकारस्य लोपेन न वर्णान्तरस्यागमः । किन्तु विद्यमान एव चकारस्थेकारो ''वृद्धं तालव्यम्'' इति वचनेन वृद्धः सन्नैकाररूपसन्ध्यक्षरभावं प्राप्तः । स चैकार आकार इकाररूपाक्षरसन्धि- रूपत्वेन प्रसिद्धः । तस्य विश्लेषेणोच्चारणे सति आइ इति भावति । तथा चोत्तरयोश्चतुर्थाक्षरस्योपरि स्थाने नास्ति इकार इति कुतस्तस्य आयिभावः । अतो न योनिवर्णवशेन गानम् । किन्तूत्तरावर्णवशेनैव गानमिति यत्रोत्तरयोरिकारोऽस्ति तत्रैव आयिभावेन गानमिति । **फलन्तु पूर्वपक्षे** ''कस्त्वा सत्यः'' इति, ''अभीषुणः'' इत्युत्तरऋग्द्वये



यथाक्रमं तकारणकारयोरुपरि स्थितयोराइभावः । **सिद्धान्ते तु**, ''अभीषुणः सखीनामविता जरितॄणाम्'' इत्यत्र द्वादशाक्षरस्य रेफस्योपरि स्थितेकारस्य आइभाव इति ।

इति नवमं ''रथन्तरमुत्तरयोर्गायति'' इत्यादावुत्तरावर्णवर्णवशेन गानाधिकरणम् (सूत्रे ३२-३३)

**अथ दशममुत्तरयोः स्तोभातिदेशाधिकरणम् (सूत्राणि ३४-३८)**

**स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् ॥ ३४ ॥**

**(सर्वातिदेशस्तु सामन्याल्लोकवद्विकारः स्यात् ॥ ३५ ॥ अन्वयश्चापि दर्शयति ॥ ३६ ॥ निवृत्तिर्वाऽर्थलोपात् ॥ ३७ ॥ अन्वयो वाऽर्थवादः स्यात् ॥ ३८ ॥)**

सामातिदेशप्रसङ्गात्स्तोभाक्षराणामप्यतिदेशोऽस्त्युत नेति चिन्त्यत इति **सङ्गतिः** । ''यद्योन्यां तदुत्तरयोर्गायति'' इति साम्न एवातिदेशेन स्तोभाक्षराणां ''गीतिमात्रं साम'' इत्युक्तत्वेन ऋगक्षराणामिव साम्नो भिन्नत्वान्नातिदेश इति **प्राप्तम्** । तदाह **सूत्रे, ऋगन्तरे ऋगन्तराक्षराणामिव स्तोभस्यापि निवृत्तिमनतिदेशमत्रैके** मन्यन्त इति । **सिद्धान्तस्तु**, ऋगक्षराणां प्राधान्यात्सामातिदेशेनानतिदेशेऽपि स्तोभाक्षराणां ऋगक्षरैरपरिपूर्णगीत्यंशपूरकत्वाद्गीत्यतिदेशेन तदनतिदेशे गीत्यंशस्य निराधारतया विनाशापत्तेः स्तोभानामप्यतिदेश इति ।

इति दशममुत्तरयोः स्तोभातिदेशाधिकरणम् (सूत्राणि ३४-३८)

**अथैकादशं स्तोभलक्षणाधिकरणम् (सूत्रम् ३९)**

**अधिकश्च विवर्णश्च जैमिनिः स्तोभशब्दत्वात् ॥ ३९ ॥**

प्रसङ्गात्स्तोभलक्षणार्थमिदं सूत्रम् । यत् अर्थाभिधानोपयुक्तऋगक्षरेभ्योऽधिकं ऋगक्षरापेक्षया विलक्षणञ्च तदक्षरं स्तोभं **जैमिनिर्मन्यते** । लोके तादृशविदूषकादिवाक्यस्य **स्तोभशब्दत्वदर्शना**दित्यर्थः । ''अग्न आयाहि वीतये'' इत्यस्यामृचि गानसमये अकारस्थाने ओकारं प्रक्षिप्य ''ओग्नायी'' इति गीयते । तत्र ओकारस्य ऋगक्षरविलक्षणवर्णत्वमस्ति । न स्तोभत्वमिति तत्राति व्याप्तिनिरासायाधिकमिति विशेषणम् । ''पिबा सोममिन्द्र दनुत्वा'' इत्यस्यामृचि ''दनुत्वा'' इत्यक्षरत्रयं गानकाले त्रिरभ्यस्यते । स्तोभत्वञ्च तस्य नेति विवर्णमिति विशेषणम् ।

इत्येकादशं स्तोभलक्षणाधिकरणम् (सूत्रम् ३९)

**अथ द्वादशं नीवारादिषु प्रोक्षणावघातादिधर्मानुष्ठानाधिकरणम् (सूत्रम् ४०)**

**धर्मस्यार्थकृतत्वाद्द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धसमवायात् ॥ ४० ॥**

एवं प्रतिपादितोहाक्षेपेणास्य प्रवृत्तेराक्षेपिकी सङ्गतिः । सामोहं विचार्य संस्कारोहोऽत्र चिन्त्यत इति **सङ्गतिः** । वाजपेये ''बार्हस्पत्यं चरुं नैवारं द्वादशशरावं निर्वपति'' इति श्रुतनीवारेषु व्रीहिधर्माः प्रोक्षणावघातादयः कार्याः, उत नेति **सन्देहे,** विकृतौ प्राकृतस्थानापन्नपदार्थे प्राकृतपदार्थकार्याणि प्रवर्तन्ते । न च नीवाराणां प्राकृतव्रीहिस्थानापत्तौ प्रमाणम् । अतो न कार्या व्रीहिधर्मा इति न प्रागुक्तोहो युक्त इति **प्राप्ते सिद्धान्तः,** यथा व्रीहयोऽवघातद्वारा तण्डुलनिर्वृत्तिसमर्था एवं नीवारा अपीति तण्डुलनिर्वृत्तिरूपसामर्थ्यस्य व्रीहीणामिव नीवाराणामपि प्रत्यक्षत्वात्सामर्थ्यानुसारेण च शब्दस्य प्रवृत्तेः ''नैवारः'' इति विकारार्थकतद्धितेन चरुप्रकृतित्वागमाच्चरोश्च देवतासंयोगेन पुरोडाशस्थानापन्नत्वावगमेन **द्रव्यसङ्ख्याहेतुसमुदायम्** इति पूर्वपादोक्तन्यायेन द्वारभूतापूर्वसाधन चरुप्रकृतिभूता नीवारा अपि पुरोडाशप्रकृतिभूतव्रीहिस्थानापन्ना इति प्रोक्षणादयस्तत्रापि कार्या इति ।

तथा ''संस्थिते पृष्ठ्यषडहे मध्वाशयेद्घृतं वा'' इति द्वादशाहे श्रुतमध्वशने षडहधर्मो व्रतनियमादिः कार्यः । नैऋतश्चरुर्नखावपूतानाम्'' इति राजसूये श्रुतनखेषूलूखलधर्मः प्रोक्षणं कार्यम् । ''परिधौ पशुं नियुञ्जीत'' इति चातुर्मास्येषु श्रुतपरिधौ प्राकृतयूपकार्यपशुनियोजनं कार्यम् । अत्र पशुनियोजनस्य वाचनिकत्वेऽपि पश्वनतिक्रमातिशयार्थं प्राकृतस्यापि नियोजनस्य ग्राह्यत्वादस्यापि सूत्रे ग्रहणम् । ''ऐरं कृत्वोद्गेयम्'' इति ज्योतिष्टोमे श्रुतेरापदे गिरापदधर्मा आइभावादयः कार्या इति । तथा च **सूत्रं द्रव्येत्यादि** । नीवारादिद्रव्ये, मध्वशनरूपगुणे, नखावपनरूप**विकारे,** वैतुष्यरूपविकारहेतुनखेष्विति यावत् । **व्यतिक्रमे** यूपं व्यतिक्रम्य नियोजनार्थतया श्रुते परिधौ, **प्रतिषेधे** गिरापदं प्रतिषिद्ध्य विहितेरापदे **चोदनानुबन्धः** चोद्यन्त इति चोदनाः प्रोक्षणादयो धर्माः, तदनुबन्धस्य तत्सम्बन्धस्य तेषां नीवारादीनां प्राकृतव्रीह्यादिकार्य**समवायात्** । तावता कथं धर्मसम्बन्ध इत्यत उक्तम् ॥ **धर्मस्यार्थकृतत्वादिति** ॥ धर्मस्य प्रोक्षणादेः कार्यप्रयुक्तत्वादिति । **फलन्तु** ''नीवारान् प्रोक्षति'' इत्याद्यूहसिद्धिरिति व्यक्तम् ।

इति द्वादशं नीवारादिषु प्रोक्षणावघातादिधर्मानुष्ठानाधिकरणम् (सूत्रम् ४०)

**अथ त्रयोदाशं परिधौ यूपधर्मानुष्ठानाधिकरणम् (सूत्राणि ४१-४३)**

**तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात् ॥ ४१ ॥**



**(आवेश्येरन् वाऽर्थवत्वात्संस्कारस्य तदर्थत्वात् ॥ ४२ ॥ आख्या चैवं तदावेशाद्विकृतौ स्यादपूर्वत्वात् ॥ ४३ ॥)**

पूर्वाक्षेपेणास्य प्रवृत्तेराक्षेपिकी **सङ्गतिः** । चातुर्मास्येषु यूपकार्यं पशुनियोजनं स्थविष्ठे मध्यमे परिधावाम्नायते ''परिधौ पशुं नियुञ्जीत'' इति । तत्र परिधौ यूपधर्माश्छेदनतक्षणादयः कर्तव्याः, उत नेति **सन्देहे,** नीवारादयोऽवघातद्वारा तण्डुलनिर्वृत्त्यादिरूपकार्यार्थतया विधीयमानाः सन्तः कार्यार्थान् व्रीहिधर्मान् प्राप्नुवन्तीति युज्यते । परिधिस्तु न पशुनियोजनादिकार्यार्थं विधीयते । किन्तु ''परिधीन् परिदधाति'' इति परिधानार्थं विहितः परिधिः ''परिधौ पशुं नियुञ्जीत'' इति वचनबलान्नियोजनार्थमुपादीयत इत्येव । न तु यूपकार्यार्थं विधीयते । अतः परिधौ यूपधर्मप्राप्त्युक्तिः पूर्वत्रोक्ता न युक्तेति **प्राप्तम्** । तदाह **सूत्रे, तदुत्पत्तेः** तस्य परिधेराहवनीय परिधानार्थतयोत्पत्तेर्यूपधर्माणां **निवृत्तिः** । **तेषां** यूपोत्पत्ति**कृतत्वादिति** । **सिद्धान्तस्तु,** अन्यार्थमुत्पन्नस्यापि परिधेर्वचनबलादस्त्येव यूपकार्यनियोजनार्थतया तच्छेषत्वम् । यथा ''आग्नेयोऽष्टाकपालः'' इति पुरोडाशार्थतयोत्पन्नस्य कपालस्य ''पुरोडाशकपालेन तुषानुपवपति'' इति तृतीयया अधिष्ठानलक्षणया तुषोपवापशेषत्वं तद्वत् । तथा च परिधावसम्भवतश्छेदनतक्षणादेरयोगेऽप्यञ्जनपरिव्याणादयः सम्भवन्तो यूपधर्माः परिधौ कार्या इति कतिपययूपधर्मवत्वं परिधावस्तीति तावन्मात्रेणापि तत्र यूपपदप्रयोगसम्भवात् ''यूपायेज्यमानायानुब्रूहि'' इति प्रैषमन्त्रश्चोदकतः प्राप्तो यथाश्रुत एव प्रयोज्यः । न तु ''परिधये इज्यमानाय'' इत्यूहेनेत्यूहाभावः **फलमित्याहुः** ।

इति त्रयोदशं परिधौ यूपधर्मानुष्ठानाधिकरणम् (सूत्राणि ४१-४३)

**अथ चतुर्दशं शृतादौ प्रणीताधर्मानुष्ठानाधिकरणम् (सूत्रे ४४-४५)**

**परार्थे त्वर्थासामान्यात्संस्कारस्य तदर्थत्वात् ॥ ४४ ॥**

**(क्रियेरन्वाऽर्थनिर्वृत्तेः ॥ ४५ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः ।''यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति । स त्रेधा तण्डुलान्विभजेत् । ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् । ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम् । येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय श्रृते चरुम्'' इत्यभ्युदयेष्ट्यां श्रुतयोर्दधिश्रुतयोः प्रकृतिगतप्रणीताधर्माः कर्तव्या न वेति **सन्देहे,** हविःश्रपणार्थमुत्पन्ना उत्पवनादिधर्मसंस्कृता आपः **प्रणीता** इत्युच्यन्ते । दधिपयसी तु श्रपणार्थं नोत्पन्ने । किन्तु प्रदेयद्रव्यतया हविष्ट्वेन । तथैव

षष्ठपञ्चमपादादावुक्तेः । सप्तम्योरर्थप्राप्तयोरनुवादात् । एवञ्च पूर्वत्र परिधौ नियोजनार्थतयाऽनुत्पन्नेऽपि नियोजने विनियोगाद्विनियोजनरूपकार्यप्रयुक्तधर्मप्राप्तावपिदधिपयसोः प्रणीताकार्ये विनियोगस्याप्यभावान्न प्रणीताकार्योत्पवनादिधर्मप्राप्तिरिति **प्राप्तम्** । तदाह **सूत्रे, परार्थे** यागार्थे दध्नि शृते च **अर्थासामान्यात्** प्रणीताभिस्सह कार्यसामान्यस्याप्यभावान्न प्रणीताधर्माः स्युः । **संस्कारस्य** धर्मस्य **तदर्थत्वात्** कार्यार्थत्वादिति । **सिद्धान्तस्तु,** विनियोगाभावेऽपि दधिशृतयोः कृतचर्वोः प्रदेयत्वे, दधिशृतयोः सप्तमीनिर्दिष्टयोरप्यर्थात्प्रदेयतया हविष्ट्वप्राप्तेरपूर्वसाधनत्वयोगात्तद्द्वारेण प्राप्तिरस्तीति दधिशृतयोरपि प्रणीताधर्मा उत्पवनादयः कार्या इति । **फलं** व्यक्तम् ।

इति चर्तुदशं शृतादौ प्रणीताधर्मानुष्ठानाधिकरणम् (सूत्रे ४४-४५)

## अथ पञ्चदशं बृहद्रथन्तरयोर्धर्मव्यवस्थाधिकरणम् (सूत्रे ४६-४७)

### एकार्थत्वादविभागः स्यात् ॥ ४६ ॥

### (निर्देशाद्वा व्यवतिष्ठेरन् ॥ ४७ ॥)

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । ज्योतिष्टोमे ''बृहत्पृष्ठं भवति'' ''रथन्तरं पृष्ठं भवति'' इति वैकल्पिके पृष्ठस्तोत्रसाधनत्वेन बृहद्रथन्तरसामनी विहिते । तयोर्धर्माश्च विहिताः । ''बृहति स्तूयमाने समुद्रं मनसा ध्यायेत्'' ''बृहत्युच्चैर्गेयम् । बलवद्गेयम्'' इति । ''रथन्तरे स्तूयमाने सम्मीलयेत् । स्वर्देशं प्रतिवीक्षेत'' ''नीचैर्गेयम् । न बलवद्गेयम्'' इति । तत्र किमुभयेऽपि धर्मा उभयत्र कार्याः, उत यथाश्रुति व्यवस्थयेति **सन्देहे,** पूर्वत्र यथा तण्डुलनिर्वृत्त्यादिरूपकार्यैक्येन व्रीह्यादिधर्मा नीवारविध्यादौ क्रियन्ते । यथा वा ''व्रीहीन् प्रोक्षति'' इत्यादौ व्रीह्युद्देशेन विहिता अपि धर्मा अपूर्वसाधनत्वप्रयुक्ताः सन्तो व्रीहिकार्यसाधनयवेष्वपि क्रियन्ते, तथा बृहदुद्देशेन विहिता अपि धर्मा बृहद्गतस्तोत्रसाधनत्वप्रयुक्ताः सन्तः स्तोत्रसाधने रथन्तरेऽपि कार्याः । एवं रथन्तरधर्मा अपि बृहति । एवमुभयेऽप्युभयत्र कार्याः । स्तोत्ररूपैककार्यसाधनत्वाद्द्वयोः । न च बृहत्साम्ना ''कया नश्चित्रः'' इति चित्रादिप्रकारेण, रथन्तरेण तु ''अभि त्वा शूर नोनुमः'' इति शूरादिप्रकारेण स्तोत्रनिष्पादनात्स्तोत्रनिष्पादनप्रकारभेदान्न धर्मसाङ्कर्यमिति वाच्यम् । कार्यैक्यस्यैव धर्मप्राप्तिप्रयोजकत्वेन प्रागुक्ततयाऽत्र प्रकारभेदस्याप्रयोजकत्वात् । अन्यथा व्रीहिधर्माणां नीवारादिष्वप्राप्त्यापत्तेः । पिष्टादिनिष्पादनप्रकारस्य नीवारादिष्वभावादिति **प्राप्तम्** । तदाह **सूत्रे,** बृहद्रथन्तरयो**रेकार्थत्वाद्धर्माणामविभागः** साङ्कर्यम् स्यादिति । **सिद्धान्तस्तु,** धर्मविधिपरवाक्ययोः ''बृहति स्तूयमाने'' ''रथन्तरे स्तूयमाने'' इति भेदेन



बृहद्रथन्तरयोर्निर्देशाद्धर्मसाङ्कर्ये भेदेन निर्देशायोगादुभयधर्माणामन्योन्यविरुद्धानामुच्चैर्गेयत्वनीचैर्गेयत्वबलवद्गेयत्वाबलवद्गेयत्वानामेकत्र समावेशायोगाच्च व्यवस्थयैव धर्माः कार्याः । ''पृष्ठैः स्तुवते'' इत्यस्योत्पत्तिवाक्यत्वे पृष्ठबहुत्वापत्त्या तद्बहुत्वस्य सप्तमस्य तृतीयपादे **विश्वजिति सर्वपृष्ठे** इति नये **षडहाद्वा तत्र चोदनेति** गुणसूत्रभाष्ये **''ज्योतिष्टोमे न पृष्ठबहुत्वमस्ति''** इत्युक्त्या तद्विरोधाद्बृहत्पृष्ठं रथन्तरपृष्ठमित्येवमेवोत्पत्तिवाक्यमिति वाच्यत्वेन बृहद्रथन्तराभ्यां साध्ययोः स्तोत्रयोर्भिन्नत्वाच्च कार्यैक्याभावाच्चेति । तदाह **सूत्रे, निर्देशाद्वा व्यवतिष्ठेरन्निति** । फलं व्यक्तम् ।

इति पञ्चदशं बृहद्रथन्तरयोर्धर्मव्यवस्थाधिकरणम् । (सूत्रे ४६-४७)

## अथ षोडशं कण्वरथन्तरे बृहद्रथन्तरधर्मसमुच्चयाधिकरणम् (सूत्रम् ४८)

### अप्राकृते तद्विकारत्वाद्विरोधाद्व्यवतिष्ठेरन् ॥ ४८ ॥

पूर्वन्यायेन शङ्कनात्सङ्गतिः । वैश्यस्तोमे ज्योतिष्ठोमविकृतौ ''कण्वरथन्तर पृष्ठं भवति'' इति श्रूयते । तत्र बृहद्रथन्तरयोः स्थानापन्ने कण्वरथन्तराख्ये साम्नि किं तदुभयधर्मा विकल्पेन कार्याः, उत समुच्चयेनेति सन्देहे, प्रकृतावसमुच्चिता निमीलनादयो धर्मा इहापि चोदकेन तथैव प्राप्ता इति पूर्वत्रेव विकल्पेनैव कदाचिद्बृहद्धर्माः कदाचिद्रथन्तरधर्मा अनुष्ठेयाः । अन्यथा प्रकृतौ मिथोऽनपेक्षाणामेव धर्माणां स्तुत्युपकारकत्वं दृष्टमितीह समुच्चित्योपकारकत्वे कार्यान्तरकल्पनाप्रसक्त्या तद्भावो न स्यादिति **प्राप्ते सिद्धान्तः,** प्रकृतौ भेदेन निर्देशबलाद्धर्माणां व्यवस्था यद्यप्यस्ति तथापि यदि चोदकेन केवलधर्माः प्राप्नुयुस्तदा यथाप्रकृति व्यतिष्ठेरन् । किन्त्विह कार्यापत्त्या धर्मप्राप्तिः । कण्वरथन्तरञ्च सामद्वयकार्ये पतितमित्युभधर्माः समुच्चयेनानुष्ठेया इति । तदाह **सूत्रे, अप्राकृते** कण्वरथन्तरे **तद्विकारत्वाद्**बृहद्रथन्तरोभयविकारत्वादुभयधर्माः स्युः । नन्वेवमुच्चैस्त्वनीचैस्त्वादिविरोधः । ते तु विरोधाद्व्यवतिष्ठेरन् । अन्यानि समुच्चीयेरन्निति **भाष्यकारः** ।

**वार्तिककारस्तु** इममेव सिद्धान्तं पूर्वपक्षीकृत्य **अप्राकृते** कर्मणि रथन्तरधर्मा **व्यवतिष्ठेरन्** । कुतः । **तद्विकारत्वात्** वैश्यस्तोमस्य ज्योतिष्टोमविकारत्वात् धर्माणां **विरोधाच्चेति** सूत्रार्थमुपेत्य **भाष्यकारीयपूर्वपक्षमेव सिद्धान्तितवान्** । **फलन्तु,** मतद्वये क्रमात्समुच्चयविकल्पाभ्यां धर्मानुष्ठानम् ।

**इति षोडशं कण्वरथन्तरे बृहद्रथन्तरधर्मसमुच्चयाधिकरणम् (४८)**

**अथ सप्तदशं द्विसामके बृकद्रथन्तरधर्मयोर्व्यवस्थाधिकरणम् (सूत्रे ४९-५०)**

**उभयसाम्नि चैवमेकार्थापत्तेः ॥ ४९ ॥**

**(स्वार्थत्वाद्वा व्यवस्था स्यात्प्रकृतिवत् ॥ ५० ॥)**

पूर्वन्यायेन **शङ्कनात्सङ्गतिः**। ''संसव उभयं कुर्यात्'' इत्यादिना संसवादौ कर्मणि बृहद्रथन्तराख्य सामद्वयं समुच्चित्य पृष्ठस्तोत्रसाधनत्वेन विहितम्। तत्र किमुभयोः साम्नोः कदाचिद्बृहद्धर्मैरनुष्ठानं कदाचिद्रथन्तरधर्मैः, उत बृहति बृहद्धर्मैरनुष्ठानं रथन्तरे रथन्तरधर्मैः इति **सन्देहे**, यथा कण्वरथन्तरस्य कदाचिद्बृहत्कार्ये कदाचिद्रथन्तरकार्ये च विधानाद्विकल्पेनोभयधर्मग्राहिता तथा बृहद्रथन्तरयोर्मिलितयोः कदाचिद्बृहत्कार्ये; विधानाद्बृहति रथन्तरे च बृहद्धर्माः स्युः। तथा तयोर्मिलितयोः कदाचिद्रथन्तरकार्ये विधानाद्रथन्तरे बृहति च रथन्तरधर्माः स्युरिति विकल्पेन द्वयोरप्युभयधर्मेणानुष्ठानमिति **प्राप्तम्**। तदाह **सूत्रे, उभयसाम्नि** संसवादौ कर्मणि **च एवं** कण्वरथन्तर इव विकल्पेनोभयोर्धर्माः स्युः। **एकार्थापत्तेः**। एकैकस्य कार्ये द्वयोः पतितत्वादिति। **सिद्धान्तस्तु,** यद्येकैकस्य साम्नः कार्ये द्वयोर्मिलितयोर्विधानं तदा स्यादेवम्। न चैवम्। किन्तु सामद्वयसाध्ययोः पृष्टस्तोत्रयोः स्वस्वधर्मयुक्तयोरेव विकल्पेन चोदकप्राप्तयोरिह समुच्चयो विधीयते। लाघवात्। अन्यतरकार्ये द्वयोर्विधौ तु गौरवम्। रथन्तरकार्ये बृहतः बृहत्कार्ये; रथन्तरस्य च प्राप्तेरप्राकृतकार्यताप्रसङ्गश्च स्यादिति। **फलन्तु,** धर्माणां व्यवस्थयाऽनुष्ठानम्।

**इति सप्तदशं द्विसामके बृहद्रथन्तरधर्मयोर्व्यवस्थाधिकरणम् (सूत्रे ४९-५०)**

**अथाष्टादशं सौर्यादिषु पार्वणहोमाद्यननुष्ठानाधिकरणम् (सूत्रे ५१-५६)**

**पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभिज्या हि ॥ ५१ ॥**

**(कालस्येति चेत् ॥ ५२ ॥ नाप्रकरणत्वात् ॥ ५३ ॥ मन्त्रवर्णाच्च ॥ ५४ ॥ तदभावेऽग्निवदिति चेत् ॥ ५५ ॥ नाधिकारिकत्वात् ॥ ५६ ॥)**

**प्रसङ्गिकी सङ्गतिः**। दर्शपूर्णमासयोः श्रूयते ''स्रुवेण पार्वणौ जुहोति'' इति। तत्र वाक्ये पार्वणावित्यत्र तद्धितश्रुत्या पर्वदेवत्यौ द्वौ होमौ श्रुतौ। तत्र पर्वशब्दः किं कालपर अथ कर्मसमुदायपर इति **सन्देहे,** पर्वपदस्य तिथिविशेषरूपकाले सर्वजनप्रसिद्ध्या तत्र शब्दस्य मुख्यत्वात्पर्वरूपकालविशेषदेवताकाविमौ होमौ दर्शादिरारादुपकारकाविति **प्राप्ते सिद्धान्तः**। पृणातिधातुर्दानार्थः सन् ''दीयते हविरस्मिन् काले'' इत्यधिकरणव्युत्पत्त्या पर्वकाल इव भावव्युत्पत्त्या दानरूपकर्मण्यपि



मुख्यः। तथा लोके प्रयोगवशेन पर्वकाले प्रसिद्ध इव ''पर्वेष्टिरद्य प्रवर्तते। इत्यभियुक्तप्रयोगबलेन दर्शपूर्णमासाख्यकर्मसमुदायेऽपि प्रसिद्ध एव। अतः काल इव कर्मण्यपिमुख्यत्वात् ''ऋषभं वाजिनं वयं पूर्णमासं यजामहे'' इति ''अमावास्या सुभगा सुशेवा'' इति च मन्त्रद्वयेन कर्मसमुदायद्वयस्मरणात्प्रकरणानुग्रहाच्च कर्मसमुदायद्वयपरोऽत्र पर्वशब्द इति समुदायद्वयसंस्कारकतया दर्शपूर्णमासाख्यकर्मसमुदायद्वयदेवताकौ सन्निपात्यङ्गमिमौ होमाविति। तदाह **सूत्रे, पार्वणहोमयोर्विकृतिषु सौर्यादिष्वप्रवृत्तिः** पर्वशब्दस्य आग्नेयादिकर्मसमुदायद्वयरूपार्थवाचित्वेन **तत्संयोगात् तदभिज्या** तत्संस्कारकहोमो हि यत इति। **फलन्तु पूर्वपक्षे** कालदैवत्यत्वात्कालस्य चासंस्कार्यत्वेनाऽरादुपकारकौ होमाविति सौर्यादिविकृतिष्वेतयोः प्रवृत्तिः। **सिद्धान्ते तु,** समुदायदेवताकत्वात्सौर्यादिराग्नेयादिसमुदायिविकृतितया समुदायाविकरत्वान्नास्ति तत्रैतयोरतिदेश इति।

**इत्यष्टादशं सौर्यादिषु पार्वणहोमाद्यननुष्ठानाधिकरणम् (सूत्रे ५१-५६)**

**अथैकोनविंशं दर्शपूर्णमासयोर्होमद्वयस्य व्यवस्थाधिकरणम् (सूत्रे ५७-५८)**

**उभयोरविशेषात् ॥ ५७ ॥**

**(यदभिज्या वा तद्विषयौ ॥ ५८ ॥)**

पूर्वत्र होमयोस्समुदायद्वयदैवत्यत्वे सामान्यतः सिद्धेऽत्र विशेषचिन्तनात्सङ्गतिः। इमौ प्रागुक्तवाक्योक्तौ पार्वणहोमौ किं पौर्णमास्याममावास्यायाञ्च कर्तव्यावुत पौर्णमास्यां ''ऋषभं वाजिनम्'' इति मन्त्रकरणको होमोऽमावस्यायां तु ''अमावास्या सुभगा'' इति मन्त्रकरणको होम इति **सन्देहे,** प्रकरणाविशेषादुभावपि होमावुभयत्र कर्तव्याविति **प्राप्तम्। तदाह सूत्रे, उभयोर्दर्शत्रिक** पौर्णमासत्रिकरूपसमुदाययोः प्रकरणा**विशेषादिति। सिद्धान्तस्तु,** पौर्णमासीलिङ्गकमन्त्रस्यामावास्यायामावास्यालिङ्गकमन्त्रस्य पौर्णमास्यां प्रयोजनाभावेनादृष्टार्थतापत्तेः, दृष्टे सम्भवति तदयोगात्तत्तल्लिङ्गवशेन तत्तन्मन्त्रकरणकतत्तद्धोमस्य तत्तल्लिङ्गसंस्कार्यभेदेन भेदाद्व्यवस्थयैव होमयोरनुष्ठानमिति। तदाह **सूत्रे, यदभिज्या वा तद्विषयाविति**। यस्य संस्कारकौ होमौ तद्विषयावेव भवत इति **भाष्यकारः**।

**वार्तिककारस्तु** सूक्तवाकस्य यथा निष्कृष्य पर्वद्वये प्रयोगः **कृत्स्नोपदेशादुभयत्र सर्ववचनम्** इति तृतीयाध्यायद्वितीयपादोक्तस्तथाऽत्रापि तेनैव न्यायेन होमद्वयस्यापि व्यवस्थासिद्धेर्नेदमधिकरणान्तरम्। किन्तु पूर्वाधिकरणे कालदैवत्यत्वपूर्वपक्षे द्वयोरपि समुदाययोरिमौ होमावङ्गमिति फलं वक्तुं

उभयोरविशेषादिति सूत्रम् । यदभिज्या वा तद्विषयाविति सूत्रन्तु व्यवस्थया होमावङ्गमिति फलमिति वक्तुमित्यूचे ।

इत्येकोनविंशं दर्शपूर्णमासयोर्होमद्वयस्य व्यवस्थाधिकरणम् (सूत्रे ५७-५८)

**अथ विंशं समिदादीनां यागनामधेयताधिकरणम् (सूत्रे ५९-६०)**

**प्रयाजेऽपीति चेत् ॥ ५९ ॥**

**(नाचोदितत्वात् ॥ ६० ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । दर्शपूर्णमासप्रकरणे ''समिधो यजति'' इत्यादिना प्रयाजपञ्चकमाम्नातम् । तत्र किं दर्शपूर्णमाससम्बन्धिनः समित्तनूनपादादीन् देवतात्वेनोद्दिश्य तत्संस्कारार्थतया पञ्च याग विधीयन्ते, उताऽरादुपकारकाः प्रयाजा इति **सन्देहे,** ''विष्णुं यजति'' ''वरुणं यजति'' इत्यादौ द्वितीयानिर्दिष्टस्यापि देवतात्वदर्शनेनेहापि द्वितीयानिर्दिष्टानामपि समिदादीनां देवतात्वसम्भवेन तत्संस्कारकतया सन्निपातित्वे सम्भवति तद्विधित्वायोगात्पार्वणहोमवद्देवतोद्देशेन तत्संस्कारविधय इति **प्राप्तम् ।** तथा च **सूत्रम्,** पार्वणवत् **प्रयाजेऽपि** देवतासंस्कारकत्वेन सामवायिकतेति । **सिद्धान्तस्तु,** देवतात्वलिङ्गस्य ''आग्नेयोऽष्टाकपालः'' इत्यादाविव तद्धितेन निर्देशस्य ''यदग्नये सायं जुहोति'' इत्यादाविव चतुर्थ्या वा निर्देशस्याभावेन न समिदादेरत्र देवतात्वम् । ''विष्णुं यजति'' इत्यादौ तु मन्त्रवर्णप्राप्तं विष्णोर्देवतात्वमनूद्यते । अनुवादश्च यथाप्राप्ति । उद्देश्यक्रियाकर्मताया एव प्राप्ततया सैव हविस्त्यागरूपे यागे उपचारादनूद्यते । अनुवादे चोपचारस्यादोषत्वात् । प्रकृते तु समिदादिदेवताविधिपरत्वे विधावुपचारायोगात्केवलं यागविधिरेवाश्रयणीय इति ''समिधोऽग्न आज्यस्य वियन्तु'' इत्यादिमन्त्रवर्णप्राप्तसमिदादिदेवता निमित्तीकृत्य तत्प्रख्यन्यायेन नामधेयानीति तत्तन्नामकाः पञ्च यागाः प्रकरणबलेन दर्शपूर्णमासयोरारादुपकारकतया विधीयन्त इति । द्वितीया तूद्देश्यक्रियाकर्मत्ववादिनीति । तदाह **सूत्रे, नाचोदितत्वादिति ।** समिदादेर्देवतात्वेन दर्शपूर्णमासयोरचोदितत्वात्पूर्वपक्षो न युक्त इत्यर्थः । **फलन्तु** विकृतावपि प्रवृत्तिः ।

इति विंशं समिदादीनां यागनामधेयताधिकरणम् (सूत्रे ५९-६०)

**इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते नवमाध्यायस्य द्वितीयः पादः**

अस्मिन् पादे अधिकरणानि २० सूत्राणि ६०

आदितः अधिकरणानि ५६८ सूत्राणि १६४८



## अथ नवमाध्यायस्य तृतीयः पादः

ओम् । पूर्वत्र पादे सामोहः संस्कारोहश्च चिन्तितः । अत्र पादे मन्त्रोहश्चिन्त्यते । प्रथमपादे **अर्थाभिधानसंयोगात्** इत्यारभ्य मन्त्रोहस्य विचारसत्वेऽपि तत्र प्रायेण प्रातिपदिकांशोहश्चिन्तितः । अत्र प्रत्ययभूतवचनांशोह इत्येके । अन्ये तु तत्रावान्तरसङ्गतिलाभेनाऽगतसामोहप्रस्तावेन प्रक्रान्तमन्त्रोहोऽन्तरितो न कार्त्स्न्येन चिन्तितः । अत्र तु तथा चिन्त्यत इत्याहुः ।

**अथ प्रथमं विकृतौ मन्त्रगतव्रीह्यादिशब्दानामूहाधिकरणम् (सूत्रे १-२)**

**ओम् प्रकृतौ यथोत्पत्ति वचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतिकत्वादर्थे च कार्यत्वात् ॥ १ ॥**

**(लिङ्गदर्शनाच्च ॥ २ ॥)**

दर्शपूर्णमासयोः ''अग्नये जुष्टं निर्वपामि'' इति श्रुतो मन्त्रः ''सौर्यं चरुं निर्वपेत्'' इत्यादिविकृता वूहितव्यः, उत नेति **सन्देहे,** नोहितव्य इति **प्राप्तम् ।** प्रकृतौ पठितस्य यथाश्रुतमन्त्रस्वरूपस्य विकृतौ चोदकेन प्रापणात् । न चाद्यपादे **फलदेवतयोश्चेत्यत्र** ''अग्नेरहमुज्जितिमनूज्जेषम्'' इत्यादिमन्त्रा नाग्न्यादिस्वरूपमात्रप्रकाशनार्थाः । व्यर्थताया वा अदृष्टार्थताया वा प्रसङ्गात् । किन्त्वपूर्वीयदेवताप्रकाशनार्थतया तथाऽभिप्रेताः सन्तोऽपूर्वीयदेवताप्रकाशनरूपकार्यार्थतया विकृतौ चोदकेन प्रापिताः । अतः कथमग्निपदमनूहे सति सूर्यदेवतां प्रकाशयेदिति शङ्क्यम् । ऐन्द्या गार्हपत्यस्येवाग्निपदेनैव तेजोरूपत्वगुणयोगेन सूर्यप्रकाशनसम्भवात् । अन्यथा ''कदाचनस्तरीरसि नेन्द्र'' इति मन्त्रगतेन्द्रपदस्थानेऽग्निपदस्यापि गार्हपत्ये ऊहप्रसङ्गात् । तथा च **वचनात्त्वयथार्थमैन्द्री** इति सूत्रविरोध इति । तदाह **सूत्रे, प्रकृतौ** यथोत्पत्ति मन्त्रे **अर्थानां** वचनमभिधानं कृतं **तथैव** यथोत्पत्त्येवोत्तरस्यां ततौ विकृतिसमूहेऽप्यर्थाभिधानं कर्तव्यम् । कुतः ? **तत्प्रकृतिकत्वादिति । सिद्धान्तस्तु,** प्रकृतौ यद्रूपं मन्त्राणां विवक्षितं तद्रूपमेव विकृतौ चोदकेन प्रापणीयम् । प्रकृतौ देवतावाचिपदत्वेनाग्निपदं विवक्षितमिति विकृतावपि तथैव भाव्यत्वात्तस्याग्निपदस्थाने सूर्यपदप्रक्षेपेण विनाऽनुपपत्तेरूहितव्यो मन्त्रः । ऐन्द्यास्तु प्रत्यक्षवचनेन स्वरूपेणैव विनियोगान्न तत्रोह इति । **तदाह, अर्थे च कार्यत्वादिति** सूत्रखण्डेन सिद्धान्तं **भाष्यकारः ।** चशब्दः पूर्वपक्षनिरासकः । **अर्थे** अर्थाभिधानस्य मन्त्र**कार्यत्वा**दग्निपदस्य विकृतिदेवताभिधायकत्वायोगान्न यथोत्पत्ति मन्त्रैरर्थाभिधानं विकृताविति सूर्यमित्यूहितव्यमिति । एवं ''व्रीहीणां मेध सुमनस्यमानः'' इति प्रकृतौ हविःप्रकृतिद्रव्यप्रकाशनार्थतया प्रकृतमन्त्रस्य विकृतौ चरुरूपहविःप्रकृतिद्रव्यनीवारेषु ''नीवाराणां मेध'' इत्यूहसिद्धिर्ध्येया ।

इति प्रथमं विकृतौ मन्त्रगतव्रीह्यादिशब्दानामूहाधिकरणम् (सूत्रे १-२)

### अथ द्वितीयं पौण्डरीकेषु बर्हिष्षुस्तरणमन्त्रस्योहाधिकरणम् (सूत्रे ३-८)

**जातिनैमित्तिकं यथास्थानम् ॥ ३ ॥**

**(अविकारमेकेऽनार्षत्वात् ॥ ४ ॥ लिङ्गदर्शनाच्च ॥ ५ ॥ विकारो वा तदुक्तहेतुः ॥ ६ ॥ लिङ्गं मन्त्रचिकीर्षार्थम् ॥ ७ ॥ नियमो वोभयभागित्वात् ॥ ८ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''मौद्गं चरुं निर्वपेच्छ्रीकामः'' इत्यत्र ''पौण्डरीकाणि बर्हींषि भवन्ति'' इति श्रूयते । तत्र ''दर्भैः स्तृणाति हरितैः'' इति स्तरणमत्रे चोदकप्राप्ते दर्भपदस्थाने तृतीयान्ततया पुण्डरीकपदस्योहः पूर्वन्यायेन सिद्धः । हरितैरिति पदस्थाने रक्तैरिति विशेषणपदमूहितव्यमुत नेति **सन्देहे,** पूर्वत्राग्निव्रीह्यादिपदं प्रकृतौ समवेतद्रव्यदेवतादिप्रकाशकतया दृष्टार्थत्वेन विकृतावूहितव्यम् । इह तु प्रकृतौ स्तरणमन्त्रगतदर्भादिपदेनैव दर्भस्तरणप्रकाशनसिद्धेर्हरितपदमदृष्टार्थमिति विकृतावपि तथैव प्रयोक्तव्यम् । नोहितव्यमिति **प्राप्ते सिद्धान्तः** मन्त्राणामुत्सर्गतो दृष्टार्थाभिधानपरत्वात्प्रकृतौ हरितत्वरूपगुणद्वारा स्तरणद्रव्यप्रकाशनेन दृष्टार्थत्वसम्भवेऽदृष्टार्थत्वकल्पनायोगेन विकृतावपि दृष्टार्थत्वलाभाय रक्तैरित्यूहितव्यमिति । तदाह **सूत्रे, जातिशब्दो** दर्भशब्दो **नैमित्तिको** गुणनिमित्तको हरित शब्दश्च **यथास्थान**मूहितव्य इति ।

इति द्वितीयं पौण्डरीकेषु बर्हिष्षु स्तरणमन्त्रस्योहाधिकरणम् (सूत्राणि ३-८)

### अथ तृतीयमग्नीषोमीयपशौ लौकिकयूपस्पर्शप्रायश्चित्ताधिकरणम् (सूत्रम् ९)

**लौकिके दोषसंयोगादपवृत्ते हि चोद्यते निमित्तेन प्रकृते स्यादभागित्वात् ॥ ९ ॥**

प्रासङ्गिकी **सङ्गतिः** । ज्योतिष्टोमे अग्नीषोमीयप्रकरणे यूपस्पर्शस्य प्रायश्चित्तं श्रूयते ''यद्येकं यूपमुपस्पृशते 'एष ते वायो' इति ब्रूयात्'' इति । किमिदं प्रायश्चित्तमुच्छ्रयणाञ्जनादिकालीनवैदिकस्पर्शे भवति, उत लौकिक इति **सन्देहे,** प्रकरणाल्लौकिके फलकल्पनापाताद्वैदिकस्पर्श एवेदं प्रायश्चित्तम् ।

न चैवमुच्छ्रयणादिविधिलभ्यस्पर्शबाध इत्युच्छ्रयणादिविधिवैयर्थ्यं स्यादिति वाच्यम् । षोडशीग्रहणाग्रहणवदगत्या स्पर्शास्पर्शयोर्विकल्पोपपत्तेरिति **प्राप्ते सिद्धान्तः,** दोषनिरासार्थं हि प्रायश्चित्तम् । दोषश्च निषिद्धानुष्ठाने । निषेधश्च ''यूपो वै यज्ञस्य दुरिष्टमामुञ्चते । तस्माद्यूपो नोपस्पृश्यः'' इति वाक्ये ''यज्ञस्य दुरिष्टं पापं स्वस्मिन्नामुञ्चते बध्नाति यूपोऽतो नोपस्पृश्यः'' इत्युक्त्यनन्तरं ''यद्येकं यूपमुपस्पृशेत्'' इति श्रुतः पुरुषार्थतया रागप्राप्तलौकिकस्पर्शविषयत्वेनोपपन्नो न विहितोच्छ्रयणादि-



प्राप्तस्पर्शविकल्पनाक्षम इति लौकिकस्पर्श एवेदं प्रायश्चित्तम् । तदाह सूत्रे, ''यूपो यज्ञस्य दुरिष्टमामुञ्चते'' इति **दोषसंयोगा**त्प्रायश्चित्तविधिरयं **लौकिके** स्पर्शे स्यात् । कुतः ? **हि** यस्मात् **अपवृत्ते** समाप्ते कर्मणि ''यद्येकं यूपं'' इति प्रायश्चित्तं स्पर्शेन **निमित्तेन चोद्यते** । क्रतौ स्पर्शस्यावश्यकत्वात्ततश्च **प्रकृते** क्रतौ **स्यात्** । **अभागित्वात्** क्रतौ दोषभाक्त्वाभावात्स्पर्शस्येति । फलन्तु क्रतौ यूपस्पर्शस्योच्छ्रयणादिहेतुकस्याविकल्पः ।

इति तृतीयमग्नीषोमीयपशौ लौकिकयूपस्पर्शप्रायश्चित्ताधिकरणम् (सूत्रम् ९)

### अथ चतुर्थं द्विपशुयागे पाशमन्त्रयोरेकवचनान्तबहुवचनान्तपदयोर्द्विवचनान्तत्वेनोहाधिकरणम् (सूत्राणि १०-१४)

**अन्याय्यस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥ १० ॥**

**(विकारो वा तदर्थत्वात् ॥ ११ ॥ अपि त्वन्यायसम्बन्धात्प्रकृतिवत्परेष्वपि यथार्थं स्यात् ॥ १२ ॥ यथार्थन्त्वन्यायस्याचोदितत्वात् ॥ १३ ॥ छन्दसि तु यथादृष्टम् ॥ १४ ॥)**

पूर्वाधिकरणस्य प्रासङ्गिकत्वात्प्रपूर्वतनाधिकरणवैषम्येण शङ्कनात्सङ्गतिर्ध्येया । ज्योतिष्टोमे अग्नीषोमीयपशावेकवचनान्तबहुवचनान्तौ द्वौ पाशमन्त्रौ शाखाभेदेनाम्नातौ ''अदितिः पाशं प्रमुमोक्त्वेतम्'' इत्येकस्यां शाखायाम् । ''अदितिः पाशान् प्रमुमोक्त्वेतान्'' इति शाखान्तरे । तौ च मन्त्रौ ''मैत्रं श्वेतमालभेत । वारुणं कृष्णम्'' इति विहिते द्विपशुके विकृतियागे चोदकेन प्राप्तौ । तत्र किं बहुवचनान्तस्याविकारेण प्रवृत्तिरेकवचनान्तस्य निवृत्तिः, उत बहुवचनान्तस्य निवृत्तिरेकवचनान्तस्योहेन प्रवृत्तिः, किं वा एकवचनान्तस्योहेनान्यस्यानूहेन द्वयोरपि प्रवृत्तिः, यद्वोभयोरप्यूहेन प्रवृत्तिः, इति चतुर्धा **सन्देहः । पूर्वपक्षस्तु,** एकेनैव चरितार्थत्वेन द्वयोरनतिदेशादविकारेणोपपत्तौ विकारायोगादनूहेन बहुवचनान्तस्य प्रवृत्तिः । अन्यस्य तु निवृत्तिरित्याद्यः । ''दर्भैः स्तृणाति हरितैः'' इत्यत्र प्रकृतौ समवेतार्थतया विकृतावविकारेण प्रयोगायोगाद्विकार आश्रितः । इह तु बहुवचनान्तपाशमन्त्रस्यावयवावयविनोरत्यन्तभेदाभावेन बहुत्वमवयविन्युपचर्यप्रवृत्तत्वेन प्रकृतावसमवेतार्थत्वात् । तदाह **सूत्रे,** प्रकृतावन्याय्यनिगदो बहुवचनान्तस्तु द्विपशुकेऽप्यविकारेणैव प्रवर्तते । प्रकृतावेकस्मिन्नदृष्ट**प्रतिघातित्वा**द्दृष्टाप्रवृत्तिकत्वात् । **तेनैकेन** पाशेनास्य पाशद्वयस्या**विशेषा**दिति । प्रकृत्यर्थपाशस्य प्रत्ययार्थस्य द्वित्वस्य चाभिधानसम्भवे पाशमात्राभिधानायोगादेकवचनान्तस्य द्विवचनान्ततयोहेन

प्रवृत्तिः । केवलपाशमात्राभिधायिनो बहुवचनान्तस्य निवृत्तिरिति **द्वितीयः** । द्वयोरपि चोदकेन प्राप्तत्वा विशेषादाद्यस्योहेनान्त्यस्य त्वनूहेन द्वयोरपि कालभेदेन विकल्पेन प्रयोग इति **तृतीयः** । बहुवचनान्तस्यापि ''छन्दसि सुपां सुपो भवन्ति'' इत्यनुशासनबलेन बहुवचनान्तस्यापि प्रकृतावेकत्वबोधन इव द्वित्वबोधनेऽपि शक्तत्वादिति । **सिद्धान्तस्तु,** अनुशासनसत्वेऽपि तस्य प्रयोगानुसारित्वादेकस्मिन् बहुवचनस्य दृष्टचरत्वेऽपि द्वयोर्बहुवचनस्यादृष्टत्वात्तदपि द्विवचनान्ततयोहनीयमिति । **फलं** व्यक्तम् ।

इति चतुर्थं द्विपशुयागे पाशमन्त्रयोरेकवचनबहुवचनान्तपदयोर्द्विवचनान्तत्वेनोहाधिकरणम्

## अथ पञ्चममग्नीषोमीयपशौ पाशैकत्वपाशबहुत्वाभिधायिमन्त्रयोर्विकल्पाधिकरणम् (सूत्राणि १५-१९)

**विप्रतिपत्तौ विकल्पः स्यात्समत्वाद्गुणे त्वन्याय्यकल्पनैकदेशत्वात् ॥ १५ ॥**

**(प्रकरणविशेषाच्च ॥ १६ ॥ अर्थाभावात्तु नैवं स्याद्गुणमात्रमितरत् ॥ १७ ॥ द्यावोस्तथेति चेत् ॥ १८ ॥ नोत्पत्तिशब्दत्वात् ॥ १९ ॥)**

पूर्वाक्षेपेणात्र शङ्कनात्सङ्गतिः । अग्नीषोमीयपशौ द्वौ पाशमन्त्रावित्युक्तम् । तत्र बहुवचनान्तो मन्त्रः किं प्रकरणे निविशते, किं वा बहुपाशके पशुगणे उत्कृष्यत इति **सन्देहे,** बहुवचनस्यैकस्मिन्नयोगाद्बहुवचनोक्तबहुत्वलिङ्गेन प्रकरणं बाधित्वोत्कृष्यत इति प्रकृतावनिवेशे विकृतौ चोदकेनाप्राप्तेः प्राक्तनचिन्ता न युक्तेति **प्राप्ते सिद्धान्तः,** प्रधानभूतप्रातिपदिकार्थस्य पाशस्य विभक्त्यर्थस्य च कर्मत्वस्य प्रकरणे निवेशसम्भवेन गुणभूतवचनोक्तबहुत्वानुरोधेनोत्कर्षस्यायुक्तत्वादवयवबहुत्वाभिप्रायेण बहुवचनमपि प्रकरण एव कथञ्चिन्निवेशनीयमिति नोत्कष्टव्यो मन्त्रः । एवञ्चैकवचनान्तबहुवचनान्तयोर्द्वयोरपि प्रकरण एव निवेशाद्विकल्प इति । तदाह **सूत्रे, विप्रतिपत्तौ** पाशमन्त्रयोः प्रकृतौ कः प्रयोज्य इति विशये **विकल्पः स्यात्** । कुतः? पाशप्रकाशनसामर्थ्यरूपलिङ्गस्य प्रकरणस्य च **समत्वात्** । **गुणे तु** बहुवचने तु **अन्याय्यनिगदत्व- कल्पनात्तस्यैकदेशत्वाद** प्रधानत्वादिति । **फलन्तु** विकृतौ प्रवृत्तिर्मन्त्रस्य ।

इति पञ्चममग्नीषोमीयपशौ पाशैकत्वपाशबहुत्वाभिधायिमन्त्रयोर्विकल्पाधिकरणम् (सूत्रे १५-१९)



## अथ षष्ठं दर्शपूर्णमासयोर्द्विपत्नीके प्रयोगे ''पत्नीं सन्नह्य'' इति मन्त्रस्यानूहाधिकरणम्

**अपूर्वे त्वविकारोऽप्रदेशात्प्रतीयेत ॥ २० ॥**

पूर्ववैषम्येणात्र शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोः ''पत्नीं सन्नह्य'' इति श्रुतो मन्त्रः किं द्विबहुपत्नीकर्तृकप्रयोगेष्वनूहेन प्रयोज्यः, उतोहेनेति **सन्देहे,** पूर्वत्र पाशानिति बहुवचनस्यागत्यौपचारिकत्वेऽपीहैकवचनस्यैकपत्नीकयजमानकर्तृकप्रयोगे समवेतार्थत्वसम्भवाद्द्विबहुपत्नीकयजमानकर्तृकप्रयोगेऽपि दृष्टार्थत्वलाभायोहितव्यो मन्त्र इति **प्राप्ते सिद्धान्तः** । स्यादेवं यद्येकपत्नीकप्रयोगाभिप्राय एतन्मन्त्रपाठः । न चैवम् । किन्तु सर्वप्रयोगसाधारण्येनैवाऽम्नातः । सर्वत्रोपदेशात एव मन्त्रस्य प्राप्तेः । अदृष्टार्थमेकवचनं सत्सर्वप्रयोगेष्वविकारेणैव प्रयोगं सम्पादयतीत्यनूहो मन्त्रस्येति । तदाह **सूत्रे, अपूर्वे** प्रकृतिभूते द्विबहुपत्नीकप्रयोगे ''पत्नीम्'' इति मन्त्रस्याविकारोऽनूहः **प्रतीयते** । कुतः ? **अप्रदेशादनतिदेशात्** । सर्वप्रयोगाणां प्रकृतिविकृतिभावाभावेन समप्रधानत्वादित्यर्थः । **फलन्तु** अनूहेन सर्वत्र प्रयोगः ।

इति षष्ठं दर्शपूर्णमासयोर्द्विबहुपत्नीके प्रयोगे ''पत्नीं सन्नह्य'' इति मन्त्रस्यानूहाधिकरणम् (सूत्रम् २०)

## अथ सप्तमं द्विबहुपत्नीककर्तृकविकृतियागेऽपि ''पत्नीं सन्नह्य'' इति मन्त्रस्यानूहाधिकरणम् (सूत्रम् २१)

**विकृतौ चापि तद्वचनत्वात् ॥ २१ ॥**

अत्रापि पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''पत्नीं सन्नह्य'' इति मन्त्रो विकृतियागे द्विबहुपत्नीकयजमानकर्तृके किमूहितव्यः, उत नेति **सन्देहे,** प्रकृतौ ह्यर्थानुसारणोहः प्राप्नुवन्नपि प्रयोगत्रयसाधारणाऽम्नानबलाद्बाधितः । विकृतौ त्वाम्नानाभावेन बाधकाभावात्स्वायत्ते प्रयोगे अर्थानुसाराय साधुत्वार्थमेव युक्त ऊहः । अत एव ''पाशान्'' इति मन्त्रस्य द्विपाशिकायां विकृतावूह इत्युक्तम् । एवञ्च पूर्वत्र बाधकेनानूहोक्तावपीह विकृतौ तदभावादूह इति **प्राप्ते सिद्धान्तः** । ''पत्नीम्'' इत्येकवचनस्य निर्देशमात्रार्थत्वेनैकत्वस्याविवक्षितत्वेनादृष्टमात्रार्थत्वेन वा ''सुपां सुपो भवन्ति'' इत्यनुशासनबलेनैकवचनस्यैकत्व इव द्विबहुत्वयोरप्यभिधानशक्तत्वेन वाऽविकृतस्य प्रयोगाद्यथाप्रकृति विकृतावपि चोदकेन मन्त्रस्य प्रापणान्नोहितव्यो मन्त्र इति । तदाह **सूत्रे, विकृतावपि** ''पत्नीम्'' इत्येकवचनान्तस्य न द्विबहुवचनान्ततयोहः । **तद्वचनत्वात्** एकत्ववचनस्यैकवचनस्यैव प्रकृति-

वद्विकृतावपि द्विबहुवचनत्वात् द्विबहुत्वयोः साधुत्वात् । पाशमन्त्रे तु बहुवचनस्य द्वित्वे प्रयोगादर्शनेन तत्रासाधुत्वादेकत्वस्य पुनः प्रकृतौ समवेतार्थकत्वेन चोह उक्त इति वैषम्यम् । **फलं** व्यक्तम् ।

इति सप्तमं द्विपत्नीके विकृतियागेऽपि ''पत्नीं सन्नह्य'' इति मन्त्रस्यानूहाधिकरणम् (सूत्रम् २१)

## अथाष्टमं सवनीयपशूनामग्नीषोमीयसमानविधानत्वे ''प्रास्मै अग्निं'' इति मन्त्रेऽनूहाधिकरणम् (सूत्रम् २२)

**अध्रिगुः सवनीयेषु तद्वत्समानविधानाश्चेत् ॥ २२ ॥**

आतिदेशिकी **सङ्गतिः** । तृतीयस्य षष्ठे पादे ''तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात्'' इत्यत्राग्नीषोमीयसवनीयानुवन्ध्यानां समानविधित्वं पूर्वपक्षयित्वा अग्नीषोमीयस्यैव सामीप्यादुपदेशतो धर्माः । अन्यत्र त्वतिदेशत इति समानविधित्वं नेति सिद्धान्तितम् । तथा तत्रैव पादे ''संस्थास्तु समानविधानाः प्रकरणाविशेषात्'' इत्यत्राग्निष्टोमोक्थ्यषोडश्यतिरात्राख्यसंस्थानां समानविधित्व-माशङ्क्य दीक्षणीयाग्नीषोमीयादिधर्मा अग्निष्टोमस्यैव । उक्थ्यादीनां त्वदिदेशतो न साम्येनेत्युक्तम् । पशूनां संस्थानां समानविधित्वं कृत्वाऽत्र चिन्त्यते । अग्निष्टोमे सवनीय एक एव पशुः, उक्थ्ये द्वौ, षोडशिनि त्रयः, अतिरात्रे चत्वारः । तत्र ''प्रास्मा अग्निं भरता'' इत्यध्रिगुप्रैषमन्त्रे ''प्रास्मा'' इत्येक वचनं पदमुक्थ्यादिष्वनेकपशुकेषु द्विवचनबहुवचनान्ततयोहितव्यमुत नेति **सन्देहे,** ''अपूर्वे त्वविकारः'' इत्यत्र पूर्वपक्ष इवोहितव्यमिति **प्राप्ते** संस्थाः पशवश्च **समानविधानाश्चेत् सवनीयेषु** पशुषु **अध्रिगुवचनं तद्वत्** ''पत्नीम्'' इति पदवदविकारेण भवतीति सूत्रेण सिद्धान्तितम् । तेन चास्य गतार्थत्वादधिकाशङ्काभावात्तृतीयाध्यायोक्तपूर्वपक्षद्वयस्य प्रयोजनोक्तिमात्रपरे नात्र पूर्वोत्तरपक्षौ युक्ताविति वदन्ति । तत्रैव वक्तव्येपीहोक्तिः पूर्वाधिकरणेऽनूहेन प्रवृत्तेः सिद्धत्वात्प्रसङ्गादिति ॥ ८ ॥

इत्यष्टमं सवनीयपशूनामग्नीषोमीयसमानविधानत्वे ''प्रास्मै अग्निं'' इति मन्त्रेऽनूहाधिकरणम् (सू. २२)

## अथ नवमं नीवाराणां व्रीहिप्रतिनिधित्वे मन्त्रे व्रीहिशब्दस्यानूहाधिकरणम् (सूत्राणि २३-२६)

**प्रतिनिधौ चाविकारात् ॥ २३ ॥**

**(अनाम्नानादशब्दत्वमभावाचेतरस्य स्यात् ॥ २४ ॥ तादर्थ्याद्वा तदाख्यं स्यात्संस्कारैरविशिष्टत्वात् ॥ २५ ॥ उक्तश्च तत्वमस्य ॥ २६ ॥**



अध्रिगुरिति सूत्रस्य प्रयोगनोक्तिमात्रपरत्वात्ततः पूर्वतने ''विकृतौ च'' इत्यत्रोक्तसिद्धान्त वैषम्येणात्र शङ्कनात्सङ्गतिः । व्रीहीणामलाभदशायां कर्मणोऽवश्यकर्तव्यतया नीवारान् प्रतिनिधाय कर्म क्रियते । तत्र प्रतिनिहितेषु नीवारेषु ''व्रीहीणां मेध सुमनस्यमानः'' इति मन्त्रे व्रीहिशब्द ऊहितव्यः, उत **नेति सन्देहे,** ''पत्नीम्'' इत्यस्य द्वित्वबहुत्वयोः साधुत्वेनानूहेपि नीवारेषु व्रीहिपदस्यासामर्थ्या-न्नीवारप्रयोगस्य व्रीहिप्रयोगविकृतित्वाभावेपि व्रीहिकार्यकरत्वं नीवाराणां प्रत्यक्षमिति तत्कार्यकरेषु नैवारचराविव कार्यप्रयुक्तैर्धर्मैर्भावर्व्यत्वादूहनीयो मन्त्र इति **प्राप्ते सिद्धान्तः** । यदि नीवाराणां व्रीहिकार्यकरत्वं स्यात्तदा स्योदवम् । न त्वेवम् । किन्तु ''व्रीहिभिर्यजेत'' इति शास्त्रार्थसिद्ध्ये नीवारगता विकला अपि व्रीह्यवयवाः सकलाभावादुपादीयन्ते । अत एव साधनं नीवारद्रव्यम् । नीवारोपादानत्ववर्जनीयतया नान्तरीयकम् । ततश्च नीवारगतव्रीह्यवयवा एव साधनत्वात्प्रकाशनीयाः । न नीवाराः । ते च व्रीहिगता इव व्रीहिशब्देन प्रकाशयितुं शक्या इति नोहितव्यो व्रीहिशब्द इति । तदाह **सूत्रे, प्रतिनिधौ नीवारादावविकारादेव** मन्त्रः प्रयोज्य इति । **फलं** व्यक्तम् ।

इति नवमं नीवाराणां व्रीहिप्रतिनिधित्वे मन्त्रे व्रीहिशब्दस्यानूहाधिकरणम् (सूत्राणि २३-२६)

## अथ दशमं द्विपशुयागे ''सूर्यं चक्षुर्गमयतात्'' इति मन्त्राणामनूहाधिकरणम् (सूत्रे २७-२८)

**संसर्गिषु चार्थस्यास्थितपरिमाणत्वात् ॥ २७ ॥**

**(लिङ्गदर्शनाच्च ॥ २८ ॥)**

अत्रापि पूर्ववैषम्येण शङ्कनात्सङ्गतिः । अध्रिगुप्रैषमन्त्रे संसर्गिशब्दिताश्चक्षुः प्राणासुप्रभृतयः पदार्थाः श्रुताः ''सूर्यं चक्षुर्गमयतात् । वातं प्राणमन्ववसृजतात् । अन्तरिक्षमसुर्दिशः श्रोत्रम्'' इति । ये घटादिवत्संयुक्ता अपि पृथङ्नावतिष्ठन्ते, संयुक्ता एकीभवन्ति, आज्यपयस्तैलतेजोवत्ते संसर्गिण इति वदन्ति । ते चक्षुरादयः संसर्गिपदार्था द्विबहुपशुकेषूहितव्या न **वेति सन्देहे,** उक्तरूपाज्यादिसंसर्गिषु स्वतः सङ्ख्याव्यवहाराभावाद्घटद्रोणाद्युपाधिकृतो भेदव्यवहार इति चक्षुःशब्देनात्राभिमतस्य गोळक-द्वयगततेजसोऽधिष्ठानौपाधिकभेदे सत्यपि स्वतो भेदाभावेनैकत्वस्य पशूपाधिकत्वादेकवचनान्त चक्षुः शब्दः प्रकृतौ समवेतार्थः । पशुरूपोपाधेरेकत्वात् । तथा च पूर्वत्र व्रीहिपदस्य नीवारेष्वपि सामर्थ्या-दनूहेपि चक्षुःशब्दस्यैकवचनान्तस्यानेकपशुष्वसामर्थ्यात्पशुसङ्ख्यावशादूहितव्याश्चक्षुरादयः शब्दा इति **प्राप्ते सिद्धान्तः** । स्यादेवं यदि पशूपाधिकं चक्षुरित्याद्येकवचनम् । न चैवम् । किन्तु निर्गतं

तेजोऽनेकप्रदीपप्रभावदेकीभवतीति तदभिप्रायमेकवचनं प्रकृतौ । तथा च विकृतौ बहूनां पशूनां निर्गतानि चाक्षुषाणि तेजांस्यनेकप्रदीपप्रभावदेकीभवन्तीति तदभिप्रायेणैकवचनं युक्तमित्यनेक पशुकेपि नोहितव्याश्चक्षुरादयः शब्दा इति । तदाह **सूत्रे, संसर्गिषु द्रव्येषु अर्थस्य तेजसोऽस्थितपरिमाणत्वात्** एकीभूतत्वादिति यावत् । अत एकवचनं तदभिप्रायमित्यनूह इति ।

इति दशमं द्विपशुयागे ''सूर्यं चक्षुर्गमयतात्'' इति मन्त्राणामनूहाधिकरणम् (सूत्रे २७-२८)

### अथैकादशं द्विपशुयागेऽध्रिगुप्रैषे एकधेत्यस्य शब्दस्याभ्यासाधिकरणम् (सूत्राणि २९-३१)

**एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यादसर्वविषयत्वात् ॥ २९ ॥**

**(अविकारो वा बहूनामेककर्मवत् ॥ ३० ॥ सकृत्वन्त्वैकध्यं स्यादेकत्वा-त्वचोऽनभिप्रेतं तत्प्रकृतित्वात्परेष्वभ्यासेन विवृद्धावभिधानं स्यात् ॥ ३१ ॥)**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । तस्मिन्नेवाध्रिगुप्रैषवचने ''एकधाऽस्य त्वचमाछ्र्यतात्'' इति श्रूयते । **अस्य पशोः त्वचं एकधा** एकयत्नेन छिन्धि । न त्ववयवश इत्यर्थः । तत्रैकधाशब्दः पशुगणे किमनूहेन प्रयोज्यः, उतैकधैकधेत्यभ्यासेनोहितव्य इति **सन्देहे,** यद्यपि प्रकृतौ ''एकधाऽस्य त्वचमाछ्र्यतात्'' इति त्वक्छेदनस्यैकप्रयत्नसाध्यत्वमेवोच्यते । त्वच एकत्वात् । न तु ''युगपदाछ्र्यतात्'' इति यौगपद्यम् । तथापि बहुपशुगणे त्वचां बहुत्वादेकेनैव प्रयत्नेन त्वचां छेदनस्य कर्तुमशक्यत्वादेक-प्रयत्नसाध्यत्वं तत्र नैकधाशब्दार्थः । किन्तु यौगपद्यमर्थः । ''एकधा गाः पाययति'' इत्यादाविव । एवञ्चैकस्मिन् काले बहुभिः कर्तृभिरनेकत्वचां छेदनसम्भवेन समवेतार्थत्वात्पूर्वत्र चक्षुरादिशब्द-वदेवैकधाशब्दस्यापि विकृतावनूह इति **प्राप्ते सिद्धान्तः** । एकार्थद्वारा हि विकृतौ मन्त्रा अतिदिश्यन्ते । न स्वरूपेण । ततश्च तेषां प्राकृतं कार्यं निर्वर्तयितुं प्रकृतौ क्लृप्त एवार्थो विकृतौ ग्राह्यः । नार्थान्तरम् । अप्राकृतकार्यापत्तेः । प्रकृतौ च छेदनस्य सकृत्प्रयत्नसाध्यत्वप्रकाशनं क्लृप्तमिति तदेव पशुगणेष्वपि ग्राह्यम् । न यौगपद्यमिति समवेतार्थत्वसिद्धये प्रतिपश्वेकधैकधेत्यूहितव्यो मन्त्र इति । तदाह **सूत्रे, एकधेत्यस्य प्रकृताविव विकृतावप्येकार्थतयैव संयोगादेकधैकधेत्यभ्यासेनैवाभिधानं स्यात्** । अनभ्यासे सर्वासां त्वचामैकध्यं न प्रतिपादयेद्यत इति । **फलं व्यक्तम्** ।

इत्येकादशं द्विपशुयागे अधिगुप्रैष एकधेत्यस्य शब्दस्याभ्यासाधिकरणम् (सूत्राणि २९-३१)



### अथ द्वादशं द्विपश्वादिपशुविकृतौ मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम् (सूत्राणि ३२-४०)

**मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वत्र च प्रयुक्तत्वात्तस्य चान्याय्यनिगदत्वात्सर्वत्रैवाविकारः स्यात् ॥ ३२ ॥**

**(अपि वा द्विसमवायोऽर्तान्यत्वे यथासङ्ख्यं प्रयोगः स्यात् ॥ ३३ ॥ स्वामिनो वैकशब्यादुत्कर्षो देवतायां स्यात्पत्न्यां द्वितीयशब्दः स्यात् ॥ ३४ ॥ देवता तु तदाशीष्ट्वात्सम्प्राप्तत्वात्स्वामिन्यनर्थिका स्यात् ॥ ३५ ॥ उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात् ॥ ३६ ॥ उत्कृष्येतैकसंयुक्तो द्विदेवते सम्भवात् ॥ ३७ ॥ एकस्तु समवायात्तस्य तल्लक्षणत्वात् ॥ ३८ ॥ संसर्गित्वाच्च तस्मात्तेन विकल्पः स्यात् ॥ ३९ ॥ एकत्वेपि गुणानपायात् ॥ ४० ॥)**

पूर्ववैषम्येणात्र शङ्कनात्सङ्गतिः । अध्रिगुप्रैषनिगदे ''उपनयत मेध्या उर आशासाना मेधपतिभ्यां मेधम् ''इति, शाखान्तरे ''मेधपतये मेधम्'' इति च श्रूयते । हे मेध्या ऋत्विजः, मेधं पशुं मेधपतिभ्यां पशुपतिभ्यां, मेधपतये पशुपतये वा, आशासाना आशंसमानाः, उरो यज्ञस्य द्वारं चात्वालोत्करमध्यदेशम्, उपनयतेत्यर्थः । तत्र मन्त्रद्वयं ज्योतिष्टोमे प्रकृतावग्नीषोमीये देवतायजमान-रूपोभयपरम् । उतैकवचनान्तो यजमानपरो द्विवचनान्तो देवतापरः, किं वोभयं यजमानपरं, यद्वोभयं देवतापरमिति चतुर्धा **सन्देहः । पूर्वपक्षस्तु,** द्विदैवत्ये एकयजमानके अग्निषोमीयपशौ देवताभूता-वग्नीषोमौ द्वौ । यजमान एकः । त्रयोपि मेधपतिप्रातिपदिकार्थः । यजमानस्य पशुस्वामित्वात् । तेन च देवतायै दीयमानत्वाच्च । तथा च तेषु त्रिष्वर्थेष्वेकवन्निगदस्य द्विवन्निगदस्य च प्रकृतावसमवेतार्थ-कत्वात्पूर्वत्रैकधेत्यस्य विकृतावूहेपीह विकृतिभूते पशुगणे बहुयजमानके च तयोरुभयोरपि मन्त्रयोः प्रकृताविवानूहेनैव प्रयोग **इत्याद्यः** । तदाह **सूत्रे, स्वामिनो देवतायाश्च मेधपतित्वम्** । यजमानस्य स्वामित्वेन देवताया उद्देश्यत्वेनोभयोरपि मेध**समवायात्** । यज्ञपतिमित्यादौ तत्सम्बन्धिनि पतिशब्दस्य **प्रयुक्तत्वात् । तस्य मन्त्रद्वयस्यान्याय्यनिगदत्वात्** विकृतिषु **सर्वत्राविकारः स्यादिति** ।

प्रकृतौ समवेतार्थत्वसम्भवे अन्याय्यनिगदत्वायोगादेकवन्निगदो यजमानपरो द्विवन्निगदोऽग्नी-षोमाख्यदेवताद्वयपर इति **द्वितीयः** ।

एक एवायं मन्त्रः शाखाभेदेन किञ्चिद्भिन्नः । अत एकवन्निगदवद्द्विवन्निगदोपि यजमानपरः सन्

पत्न्यभिप्रायेणोपपन्न एकवन्निगदवत्समवेतार्थ एव । **लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायन** इति षष्ठस्याद्यपादे दम्पत्योरधिकारोक्तेरिति **तृतीयः** ।

**सिद्धान्तस्तु,** मेधपतिशब्दस्य यजमानमात्रार्थत्वे यजमानाय यजमानाभ्यां वा यो मेधस्तमाशासाना उपनयतेत्यन्वयः स्यात् । तदा तु ''किमर्थमाशासानाः'' इत्याकांक्षोदयादपूर्णं वाक्यं स्यात्। देवतापरत्वे तु ''यजमानसम्बन्धिमेधं अग्नीषोमाभ्यामाशासानाः'' इति वाक्यं परिपूर्णं भवतीति द्वयमपि देवतापरमेव । द्वयोर्देवताकारकमेकं व्यासज्यवृत्तीति तदभिप्रायेण मेधपतये अग्नीषोमाख्यदेवतायै इत्येकवन्निगदस्य, देवताकारकाधिष्ठानयोर्द्वित्वात्तदभिप्रायेण अग्नीषोमाभ्यां मेधपतिभ्यामिति द्विवन्निगदस्य चार्थवत्वेन समवेतार्थत्वमस्तीति देवतापरावेव मन्त्राविति । **फलं** त्वाद्यपक्षे बहुपशुके बहुयजमानके च विकृतियागे मन्त्रयोरनूहः । **द्वितीयपक्षे** द्वयोरपि मन्त्रयोरूहः । **तृतीयपक्षे**पि कुलाये सत्रे वा अनेकयजमानकविकृतौ स्वामिप्रकाशनार्थतयोहितव्यौ । **सिद्धान्ते** तु देवताविवृद्धियुक्तविकृतौ देवतापरतयोहितव्यौ मन्त्राविति ।

इति द्वादशं द्विपश्वादिपशुविकृतौ मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम् (सूत्राणि (३२-४०)

## अथ त्रयोदशं बहुदैवत्ये पशावप्येकवचनान्तमेधपतिशब्दस्य विकल्पाधिकरणम् (सूत्रे ४१-४२)

**नियमो बहुदेवतेऽविकारः स्यात् ॥ ४१ ॥**

**(विकल्पो वा प्रकृतिवत् ॥ ४२ ॥)**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । ''वैश्वदेवं धूम्रमालभेत'' इति विहिते बहुदैवत्ये पशौ द्विवन्निगदस्य देवतात्वाधिष्ठानसङ्ख्यावशेनोह्यत्वाद्वैश्वदेवादिषु देवतात्वाधिष्ठानानां बहुत्वात्तदनुरोदेन ''मेधपतिभ्यः'' इत्यूह इत्यविवादम् । ''मेधपतये'' इत्येकवन्निगदस्तु तत्र चोदकप्राप्तः किं बहुवचनान्ततयोहितव्यः, उताविकारेण प्रयोज्य इति **सन्देहे,** बहुष्वेकवचनस्यासामर्थ्यात्सोपि मन्त्रः पूर्वोक्तरीत्योहितव्य इति **प्राप्ते,** प्रकृताविव सर्वेषु देवताकारकस्यैक्येन समवेतार्थत्वसम्भवादनूहेनैवैकवन्निगदः प्रयोज्य इति । तदाह **सूत्रे, बहुदेवते** एकवन्निगदस्य **नियमः** स्वरूपेणानिवृत्तिः । अतोऽविकारः स्यादिति ।

पूर्वाधिकरण एव देवतारूपैकत्वाभिप्रायमेकवचनमित्युक्तत्वेन वैश्वदेवादिष्वपि देवतारूपैक्यादविकार एव युक्त इति तत्रोहशङ्का न युक्तेति नेदमधिकरणं युक्तमिति मन्वानो देवतारूपैक्याभिप्रायमेक-



वचनमिति पूर्वाधिकरणोक्तस्य वैश्वदेव ऊहाभावः प्रयोजनमिति वक्तुं वा उत्तराधिकरणोपोद्घातार्थं वेदं सूत्रम् । अत्रानूहे सिद्धे तन्न्यायेनोत्तराधिकरणपूर्वपक्षप्रवृत्तेरित्याहुः ।

इति त्रयोदशं बहुदैवत्ये पशावप्येकवचनान्तमेधपतिशब्दस्य विकल्पाधिकरणम् (सूत्रे ४१-४२)

## अथ चतुर्दशमेकादशिन्यामेकवचनान्तमेधपतिशब्दस्योहाधिकरणम् (सूत्रम् ४३)

**अर्थान्तरे विकारः स्याद्देवतापृथक्त्वादेकाभिसमवायात्स्यात् ॥ ४३ ॥**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । ''आग्नेयः कृष्णग्रीवः । सारस्वती मेषी । बभ्रुसौम्यः । पौष्णः श्यामः'' इत्यादिना श्रुतबहुदैवत्यपशुगणयुक्तपश्वेकादशिन्यां चोदकप्राप्तो ''मेधपतये'' इत्येकवन्निगद ऊहितव्यो न वेति **सन्देहे,** पूर्वत्रेव गणस्यैव देवतात्वादनूह इति **प्राप्ते,** पूर्वत्र वैश्वदेवादिषु गणस्य देवतात्वाद्देवतारूपैक्यादनूह उक्तः । अत्र तु प्रत्येकं तद्धितनिर्देशेन प्रत्येकं देवतात्वावगमेन देवतानां गणत्वमिति देवतारूपभेदात्तावद्देवताभिधानार्थं बहुवचनान्ततयोहनीयो मन्त्र इति । तथा च द्विवन्निगदैकवन्निगदयो- र्द्वयोरप्येकार्थत्वाद्विकल्प इति । तदाह **सूत्रे, अर्थान्तरे** पशुगणे **विकारः स्यात् । देवतारूपस्य पृथक्त्वात् । न** चात्रापि गणस्यैव देवतात्वमस्त्विति वाच्यम् । ''आग्नेयः'' इति प्रत्येकमेव तद्धितसमवायात् प्रत्येकमेव देवता स्यादिति । फलं व्यक्तम् ।

इति चतुर्दशमेकादशिन्यामेकवचनान्तमेधपतिशब्दस्योहाधिकरणम् (सूत्रम् ४३)

**इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-**
**श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते नवमाध्यायस्य तृतीयः पादः**

अस्मिन् पादे अधिकरणानि १४ सूत्राणि ४३
आदितः अधिकरणानि ५८२ सूत्राणि १६९१

# अथ नवमाध्यायस्य चतुर्थः पादः

ओम्, पूर्वपादे ''एकधाऽस्य त्वचमार्छतात्'' इत्यत्रैकधाशब्दस्याभ्यास इत्युक्तं ''एकधेत्येकसंयोगादभ्यासेनाभिधानम्'' इत्यत्र । तस्यापवादोऽस्मिन् पादे क्रियत इति पादभेदस्तदानन्तर्यञ्चास्य ध्येयम् ।

अथ प्रथमं ''षड्विंशतिरस्य वङ्क्रयः'' इत्यादौ समस्योहाधिकरणम् (सूत्राणि १-१६)

**षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद्गुणस्य प्रविभक्तत्वादविकारे हि तासामकार्त्स्न्येनाभिसबन्धो विकारान्न समासः स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥**

**(अभ्यासेपि तथेति चेत् ॥ २ ॥ न गुणादर्थकृतत्वाच्च ॥ ३ ॥ समासेपि तथेति चेत् ॥ ४ ॥ नासम्भवात् ॥ ५ ॥ स्वाभिश्च वचनं प्रकृतौ तथेह स्यात् ॥ ६ ॥ वङ्क्रीणां तु प्रधानत्वात्समासेनाभिधानं स्यात्प्राधान्यमध्रिगोस्तदर्थत्वात् ॥ ७ ॥ तासाञ्च कृत्स्न वचनात् ॥ ८ ॥ अपि त्वसन्निपातित्वात्पत्नीवदाम्नातेनाभिधानं स्यात् ॥ ९ ॥ विकारस्तु प्रदेशत्वाद्यजमानवत् ॥ १० ॥ अपूर्वत्वात्तथा पत्न्याम् ॥ ११ ॥ आम्नातस्त्वविकारात्सङ्ख्यासु सर्वगामित्वात् ॥ १२ ॥ सङ्ख्या त्वेवं प्रधानं स्याद्वङ्क्रयः पुनः प्रधानम् ॥ १३ ॥ अनाम्नातवचनमवचनेन हि वङ्क्रीणां स्यान्निर्देशः ॥ १४ ॥ अभ्यासो वाऽविकारात्स्यात् ॥ १५ ॥ पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात्तस्मात्समासशब्दः स्यात् ॥ १६ ॥)**

अध्रिगुपैषनिगदे श्रूयते ''षड्विंशतिरस्य वङक्रयः । ता अनुष्ठ्योऽच्यावतात्'' इति । वङ्क्र्यो वक्राणि पार्श्वास्थीनि । तान्यस्य पशोः षड्विंशतिसङ्ख्यानि । एकैकस्मिन् पार्श्वे त्रयोदशानामवस्थितत्वात् । अनुष्ठ्य अनुष्ठाय । अनुक्रमेण गणयित्वेति यावत् । उच्यावतात् उद्धरतादित्यर्थः । अयं मन्त्रो वङ्क्रीणामुद्धरणे न विनियुक्तः । किन्तु सञ्ज्ञपनाय प्राकृतपशौ नीयमाने होत्रा प्रयुज्यते । स च मन्त्रः पशुगणे चोदकप्राप्तः । स किं तत्र ''षड्विंशतिरस्य'' इत्युभयपदाभ्यासेन प्रयोज्यः, किंवा प्रकृताविव ''षड्विंशतिरस्य'' इत्यविकारेण प्रयोज्यः, उत षड्विंशतिशब्दोऽस्येतिशब्दश्च द्वावपि द्विवचनबहुवचनान्ततयोऽहितव्यौ, यद्वा षड्विंशतिरस्येत्यत्रास्येतिपदस्यैवाभ्यासः, अथ वा यत्र पशुगणे यावत्यो वङ्क्रयस्तत्र तावतीनां समस्य प्रयोगः । अस्येत्यस्य तु अनयोरिति वा एषामिति वा द्विवचनादिना पशुसङ्ख्यानुरोधेनोह इति पञ्चधा **सन्देहः** । अत्राद्यः पक्षः सङ्ख्यापशुसम्बन्धप्राधान्याभिप्रायः । द्वितीयस्त्वदृष्टार्थताभिप्रायः । **तृतीयः** सङ्ख्याप्रधान्याभिप्रायः । **चतुर्थः** पशुप्राधान्याभिप्रायः अन्यस्तु वंक्रिप्राधान्याभिप्रायः इत्याहुः । पूर्वपक्षस्तु, षड्विंशतिसङ्ख्याया अस्येत्युक्तपशोश्च यः सम्बन्धस्तत्प्रधानकत्वादस्य वाक्यस्य द्विबहुपशुगणे प्रतिपशु सङ्ख्यासम्बन्धं प्रकाशयितुं षड्विंशतिपदस्यास्येति पदस्य च पशुसङ्ख्यानुरोधेनाभ्यासः कार्य इत्याद्यः । तदाह सूत्रे, **पशुगणे** तत्प्रकृतित्वादग्नीषोमीयपशुप्रकृतिकत्वात्पशुवाचिनोऽस्येति **पदस्याभ्यासेन षड्विंशति-**



पदमावर्तेत । प्रकृतावेकस्मिन् पशौ षड्विंशतिसङ्ख्याका वङ्क्रयः प्रकाशिता इतीहापि तथैव ताः प्रकाशनीया इति यावत् । कुतः? **गुणस्य** वङ्क्रिरूपस्य प्रतिपशु **प्रविभक्तत्वात्** । प्रकृतिवदविकार एव पशुगणे किं नेति न वाच्यम् । **अविकारे तासां** वङ्क्रीणां **कार्त्स्न्येनाभिधानं न स्यात्** । न चैवं समस्योक्तिरस्त्विति वाच्यम् । तथात्वे ''द्विपञ्चाशदनयोर्वङ्क्रयः'' इत्येवं **विकारापत्त्या** षड्विंशतिपदं निवर्ततेति **न समासः स्यात्** । **सर्वाभिः** समस्योक्ताभिर्वङ्क्रिभिः प्रत्येकं पशूना**मसंयोगाच्च** प्रतिपशु साकल्येनोद्धरणार्थं प्रतिपशु समवेता एव वङ्क्रयः प्रकाशनीया इति प्रतिपशु समवेतानां तासां प्रकाशनं युक्तमिति । प्रकृतौ करणत्वेनास्य मन्त्रस्याविनियोगेनादृष्टमात्रार्थतया विकृतावपि तथैवेत्यविकारेणैव प्रयोज्य इति **द्वितीयः** । अकरणभूतोप्ययं मन्त्रः शमितॄणामनूनावदानोद्धरणाय पार्श्वयोर्वङ्क्रिसाकल्यं स्मारयन् दृष्टार्थो भवति । एतन्मन्त्रोक्त्यनन्तरमेव शमितृभिः सञ्ज्ञपनकरणात् । तथा च सङ्ख्याप्रधानमिदं वाक्यमिति विकृतौ सङ्ख्यां प्रकाशयितुं ''षड्विंशती अनयोर्वङ्क्रयः'' ''षड्विंशतय एषां वङ्क्रयः'' इति पदद्वयमपि द्विबहुपशुसङ्ख्यानुरोधेन द्विवचनबहुवचनान्तयोहितव्यमिति **तृतीयः** । ''पशुमालभेत'' इति पशोश्चोदितत्वात्सङ्ख्याया अचोदितत्वात्पशुर्हि प्रधानो न सङ्ख्या । सा तु गुणभूता । वङ्क्र्योपि तथैव । षड्विंशतिवङ्क्रिकः पशुरिति पशुरेव प्रधानः । तथा च पशुप्रधानेनानेन वाक्येन पशुरेव प्राधान्येन प्रकाशनीय इति पशुसङ्ख्यानुरोदेन षष्ठ्यन्तं पशुवाचकमस्येतिपदमेवावर्तनीयमिति **चतुर्थः** । **सिद्धान्तस्तु,** उत्पत्तौ पशुर्यद्यपि चोदितस्तथापि न तस्य साक्षात्साधनत्वं सम्भवति । विशसनादिश्रवणेन तस्य नाशात् । किन्तु हृदयादिद्वारेणैवेति दशमे वक्ष्यमाणत्वेन हृदयादेरेव हविष्ट्वेन पशोस्तदभावात्षष्ठ्योपसर्जनतया निर्देशाच्च शब्दतोऽर्थतश्चाप्राधान्यम् । वङ्क्रीणान्तु प्रथमानिर्देशेन विशेष्यतया हविष्ट्वेन च शब्दतोऽर्थतश्च प्राधान्यमस्तीति वंक्रिप्रधानमिदं वाक्यं प्राधान्येन वङ्क्रीः प्रकाशयितुं द्विबहुपश्वनुरोधेन सर्वा वङ्क्रीः समस्य ''द्विपञ्चाशदनयोवङ्क्रयः'' ''अष्टसप्ततिरेषां वङ्क्रयः'' इत्यूहितव्यमिति । **फलं** व्यक्तम् ।

इति प्रथमं 'षड्विंशतिरस्य वङ्क्रयः'' इत्यादौ समस्योहाधिकरणम् (सूत्राणि १-१६)

### अथ द्वितीयं ''चतुस्त्रिंशद्वाजिनः'' इत्यनेनाऽश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वङ्क्रिरूपविशेषवचनविकल्पाधिकरणम् (सूत्रम् १७)

**अश्वस्य चतुस्त्रिंशद्वचनात्तस्य वैशेषिकम् ॥ १७ ॥**

उत्तराधिकरणोपोद्घाततयेदमारभ्यत इति **सङ्गतिः** । अश्वमेधे द्वितीये सौत्येऽहनि सवनीयाः पशवोऽश्वस्तूपरो गोमृगश्चेति त्रयः श्रुताः । तत्राश्वस्य चतुस्त्रिंशद्वङ्क्रयः । अन्ययोस्तु प्रत्येकं

षड्विंशतिः । तत्र वैशेषिको मन्त्रः ''चतुस्त्रिंशद्वाजिनो देवबन्धोवङ्क्रीरश्वस्य स्वधितिः समेति'' इति । तत्रान्यदपि वचनं ''न चतुस्त्रिंशदिति ब्रूयात् । षड्विंशतिरित्येव ब्रूयात्'' इति । स्वाधितिश्छेदन-हेतुभूतायुधविशेषो वङ्क्रीश्छेत्तुं समेतीत्यर्थः । शिष्टः स्पष्टः । तत्र ''न चतुस्त्रिंशत्'' इत्यनेन निषिद्धं ''चतुस्त्रिंशत्'' इति वैशेषिकंवचनं सर्वथा किं निवर्तते, किं वा पक्षे प्रवर्तते इति **सन्देहे**, यथा ''न गिरा गिरेति ब्रूयात् । ऐरं कृत्वोद्गायेत्'' इति पाठप्राप्तं गिरापदं निषिध्य प्रत्यक्षवाक्यविहितमिरापदं निषिद्धं गिरापदं नित्यवद्बाधित्वा सर्वदाशब्दप्रयोज्यमित्युक्तमाद्यपादे **आम्नातादन्यदधिकारे** इत्युपान्त्यनये । तथात्रापि पाठप्राप्तं चतुस्त्रिंशत्पदयुक्तं मन्त्रमत्र निषिद्ध्य विहितः षड्विंशतिपदयुक्तोऽ-ध्रिगुमन्त्रो निषिद्धं तु चतुस्त्रिंशत्पदयुक्तं मन्त्रं नित्यं बाधित्वा सदा प्रयोक्तव्यः । अन्यथा गिरापदमपि वैशेषिकमन्त्रवत्पक्षे स्यादिति **प्राप्ते सिद्धान्तः** । ''ऐरं कृत्वा'' इति प्रत्यक्षवचनेनेरापदं गिरापदस्थाने विहितं पाठप्राप्तं गिरापदं बाधत इति युज्यते । तेनैव निवृत्तस्य गिरापदस्य ''न गिरा गिरा'' इति निषेधोऽनुवादः । न विधिः । इह तु यदि ''षड्विंशतिरित्येव ब्रूयात्'' इति वाक्यं षड्विंशतिविधायकं स्यात्तदा हि तेनैवान्यनिषेधप्राप्तेः ''न चतुस्त्रिंशत्'' इति निषेधोऽनुवादः सन्न निषेध्यस्य प्राप्तिम-पेक्षेतेति स्यात् । षड्विंशतिवाक्यमेवकारेण प्रतिहतविधिशक्तिकतया न विधायकम् । किन्तु ''न चतुत्रिंशत्'' इति निषेधवाक्यमेव निषेधं विधत्ते । तस्यैव च स्तुत्यर्थश्चोदकप्राप्तषड्विंशत्यनुवादी ''षड्विंशतिरित्येव'' इति मन्त्रः । निषेधश्च प्राप्तिपूर्वक इति वैशेषिकवचनस्य प्रकरणपाठबलेन ''चतुस्त्रिंशदिति ब्रूयात्'' इत्यनुमितवाक्येन प्राप्तिमपेक्ष्य निषेधतीति वाच्यम् । एवञ्च विहितप्रतिषिद्ध-त्वाच्छोडशीग्रहणवद्विकल्पेन पक्षे प्रवर्तते वैशेषिकमन्त्रः । पक्षान्तरे च षड्विंशतिपदोपेतोऽध्रिगुप्रैष इति प्राप्त्युक्तिरयुक्तेति प्राप्ते सिद्धान्तः पूर्वत्रहि ''षड्विंशतिरित्येव, इति वाक्यं न विधिः । एवकारो तदाह **सूत्रे, अश्वस्य चतुस्त्रिंशद्वङ्क्रयः** सन्ति । **वचनात्** ''चतुस्त्रिंशद्वाजिनः'' इति मन्त्रतस्तस्य **वैशेषिकं** वचनं कर्तव्यम् । न सर्वात्मना निवृत्तिरिति ।

इति द्वितीयं ''चतुस्त्रिंशद्वाजिनः'' इत्यनेनाऽश्वमेधिकसवनीयाश्वस्य
चतस्त्रिंशद्वङ्क्रिरूपविशेषवचनविकल्पाधिकरणम् (सूत्रम् १७)

## अथ तृतीयमाश्वमेधिकसनीयाश्वस्य ''न चतुस्त्रिंशदिति ब्रूयात्'' इत्यनेन समस्ताया एव ऋचो निषेधाधिकरणम् (सूत्राणि १८-२१)

**तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ १८ ॥**

**(ऋग्वा स्यादाम्नातत्वादविकल्पश्च न्याय्यः ॥ १९ ॥ तस्यां तु वचनादैरवत्पद-विकारः स्यात् ॥ २० ॥ सर्वप्रतिषेधो वाऽसंयोगात्पदेन स्यात् ॥ २१ ॥)**



पूर्वाक्षेपेणात्र शङ्कनात्सङ्गतिः । पूर्वत्राश्वे वैशेषिकवचनं पक्षे प्रवर्तते । पक्षान्तरे तु प्राकृत-मित्युक्तम् । तत्र किं ''न चतुस्त्रिंशत्'' इति वाक्यं वैशेषिकं वचनमेव निवर्त्य तस्य स्थाने प्राकृत-षड्विंशतिपदयुक्ताध्रिगुप्रैषवाक्यमेव विदधाति, किं वा वैशेषिकमन्त्रमनिवर्त्यैव तद्गतचतुस्त्रिंशत्पदमात्रं निवर्त्य तस्य स्थाने षड्विंशतिपदं विदधाति इति **सन्देहे**, यथा ''यज्ञा यज्ञावो अग्नये गिरा गिरा च दक्षसे'' इति पठित एव मन्त्रे गिरापदं निषिध्य तत्स्थाने इरापदं विधीयते । न तु स मन्त्र एव निवर्त्यते । तथाऽत्रापि ''चतुस्त्रिंशद्वाजिनो देवबन्धोः'' इति पठित एव मन्त्रे पाठप्राप्तं चतुस्त्रिंशत्पदं निषिध्य तत्स्थाने षड्विंशतिपदमेव विधीयते । न तु ''चतुस्त्रिंशत्'' इति प्रतीकमुखेन पठितमेव मन्त्रं निषिध्य तत्स्थाने षड्विंशतिपदयुक्तः प्राकृतो मन्त्रः प्रतिप्रसूयते । तथा च ''षड्विंशतिर्वाजिनो देवबन्धोः'' इति किञ्चिद्विकारेण वैशेषिक एव मन्त्रो नियमेन वक्तव्य इति पूर्वत्र पाक्षिकाध्रिगुप्रैष प्राप्त्युक्तिरयुक्तेति प्राप्ते **सिद्धान्तः** पूर्वत्रहि ''षड्विंशतिरित्येव, इति वाक्यं नविधिः । एवकारोपहत-विधिशक्तिकत्वात् । किन्तु ''न चतुस्त्रिंशत्'' इत्येष निषेधविधिः । षड्विंशतिरितित्वनुवाद इत्युक्तम् । स यदि निषेधः कृत्स्नवैशेषिकमन्त्रस्य स्यात्तदा चोदकेन षड्विंशतिपदोपेतप्राकृताध्रिगुप्रैषवाक्यस्य चोदकतः प्राप्तिसम्भवात् ''षड्विंशतिरित्येव'' इति वाक्यस्यानुवादता प्रागुक्ता युज्यते । वैशेषिक-मन्त्रगतपदमात्रस्य निवृत्तौ तत्राश्वे वैशेषिकमन्त्रस्यैव वक्तव्यत्वेन चोदकतः प्राकृताध्रिगुवचनस्या-प्राप्तेरनुवादता न स्यात् । तस्मान्मन्त्रस्यैव प्रतीकमुखेन निषेध इति पूर्वोक्तदिशा प्राकृतस्यापि पक्षे प्राप्तिरिति । तदाह **सूत्रे, तत्** वैशेषिकं वचनं **प्रतिषिध्य, प्रकृतिः** प्राकृतमध्रिगुवचनं **नियुज्यते** । अतः **सा** प्रकृतिश्चतुस्त्रिंशत्पदोपेता वैकृती च पक्षे भवतीति **वाच्यत्वादित्यस्यार्थः** ।

यदा तु प्राकृतमध्रिगुप्रैषवचनं पक्षे प्रवर्तते तदा स किमश्वतूबरगोमृगाणां त्रयाणां ''षडशीतिरेषां वङ्क्रयः'' इति समस्य प्रयोज्यम्, उत तूबरगोमृगयोरेव ''द्विपञ्चाशदनयोः वङ्क्रयः'' इति समस्य वचनं प्रयोज्यं, अश्वे तु ''षड्विंशतिरस्य वङ्क्रयः'' इति प्रयोज्यमिति **सन्देहे**, ''षड्विंशतिरित्येव ब्रूयात्'' इति वचनादेवमेव प्रयोगो अश्वे, अन्ययोस्तु समस्येति प्राप्ते, ''इत्येव ब्रूयात्'' इति वचनस्याविधित्वेन निषेधस्यैव विधितयोक्तत्वेन प्राकृतमध्रिगुवचनं समस्यैव ''षडशीतिरेषां वङ्क्रयः'' इति सर्वेषों समासेनैव प्रयोज्यमिति **सिद्धान्त** इति ।

**इति तृतीयमाश्वमेधिकसवनीयाश्वस्य ''न चतुस्त्रिंशदिति ब्रूयात्'' इत्यनेन समस्ताया एव ऋचो निषेधाधिकरणम् (सूत्राणि १८-२१)**

## अथ चतुर्थमग्नीषोमीयपशावुरूकपदेन वपाभिधानाधिकरणम् (सूत्रम् २२)

**वनिष्टुसन्निधानादुरूकेण वपाभिधानम् ॥ २२ ॥**

पूर्वन्योयेन शङ्कनात्सङ्गतिः । अध्रिगुवचन एव श्रूयते ''वनिष्टुमस्य मा राविष्टोरूकं मन्यमानाः'' इति । वनिष्टुर्नाम वपासमीपवर्ती पश्वङ्गविशेषः । तमुरूकं मन्यमानाः । उरूकं बुद्ध्वेति यावत् । मा राविष्ट तस्य लवनं छेदनं मा कुरुतेत्यर्थः । तत्र किमुरूकशब्दः काकविरोधिन उलूकशब्दितपक्षि-विशेषस्य वाचकः, उत वपावाचक इति **सन्देहे**, रोमसु लोमपदप्रयोगदृष्ट्या लयोरभेदानुमानादुरूक-शब्दस्योलूकपरत्वेन वपोद्धरणकाले वनिष्टुमुलूकसदृशं मत्वा मा राविष्टेति मन्त्रार्थः । एवञ्च पूर्वत्र यथा ''न चतुस्त्रिंशत्'' इति प्रतिषेधाद्वैकृतऋचः पाक्षिकता तथा ''वनिष्टुमग्नीधे षडवत्तं सम्पादयति'' इति लवनविधानेनावश्यलवितव्यस्यापि वनिष्टोर्मा राविष्टेति निषेधात्पाक्षिकता वनिष्टोर्लवनस्येति **प्राप्ते** **सिद्धान्तः**, किमत्र वनिष्टोर्लवनं निषिध्यते । किं वा तत्रोलूकसादृश्यबुद्धिः । नाद्यः । ''वनिष्टुमग्नीधे षडवत्तम्'' इति विधानेनावश्यलवितव्यस्य निषेधायोगात् । न च विकल्पः । नित्यवच्छ्रुतस्य ''वनिष्टु-मग्नीधे'' इत्यस्यान्यार्थमन्त्रवर्णानुरोधेन पाक्षिकत्वायोगात् । ''उरूकं मन्यमानाः'' इत्यस्य वैयर्थ्या-पाताच्च । न द्वितीयः । सादृश्यबुद्धिनिषेधस्य दृष्टासम्भवेनादृष्टार्थत्वापातात् । तस्मादुरुर्विस्तीर्णश्रीरूको मेदो यत्रेति भाष्योक्तव्युत्पत्त्योरूकशब्दो वपावचनः । अवयवशक्तेः रूढितो दौर्बल्येपि दृष्टार्थत्वानुरोधेन सैव ग्राह्येति वपोद्धरणकाले सन्निधानाद्वपाभ्रान्त्या वनिष्टोर्लवनं प्रसक्तमाशङ्क्य निरसितुमिदं ''वनिष्टु-मस्य'' इति वचनमिति । तदाह **सूत्रे, उरूकेणोरूकशब्देनात्र वपाभिधानं वनिष्टुशब्दसन्निधाना दिति ।** **फलन्तु** विकृतौ पशुगणेन वपाभिवृद्धौ ''उरूकान्मन्यमानाः'' इत्युरूकशब्दस्योह इति ।

**इति चतुर्थमग्नीषोमीयपशावुरूकशब्देन वपाभिधानाधिकरणम् (सूत्रम् २२ )**

## अथ पञ्चममध्रिगौ ''प्रशसा बाहू'' इत्यत्र प्रशसाशब्दस्य प्रशंसापरत्वाधिकरणम् (सूत्रे २३-२४)

**प्रशसाऽस्यभिधानम् ॥ २३ ॥**

**(बाहुप्रशंसा वा ॥ २४ ॥)**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । अध्रिगुप्रैष एव श्रूयते ''प्रशसा बाहू कृणुतात्'' इति । तत्र प्रशसेति पदं तृतीयान्तं सदसिनेत्यर्थकम्, उत द्वितीयान्तं सत्प्रशस्तरूपार्थकमिति **सन्देहे**, प्रपूर्वात् ''शसु हिंसायाम्'' इत्यतः करणे क्विप्प्रत्यये प्रशस् इति स्थिते प्रशसेति सकारान्ततृतीयान्तं पदम् ।



प्रशसा असिना पशोर्बाहू छेत्तव्यावित्यर्थः । एवञ्च यथा पूर्वत्रादृष्टार्थत्वदोषादुरूकशब्दस्य न पक्षि-विशेषपरत्वं तथा प्रशसेति पदस्यादृष्टार्थत्वदोषप्रसङ्गान्न प्रशस्तार्थकत्वं वाच्यमिति **प्रशसेतिपदेनासेरभिधानमिति** । **सिद्धान्तस्तु**, ''स्वधितिना पशुं विशास्ति'' इति विहितस्वधिति-साधनके छेदने करणत्वमसेः प्रतिपादयितुमशक्यमित्यगत्याऽदृष्टार्थतापातेऽपि प्रपूर्वस्य ''शंसु स्तुतौ'' इत्यस्य कर्मणि निष्पन्नस्य द्वितीयाद्विवचनान्तस्य ''सुपां सुलक्'' इत्यादिना द्वितीयाविभक्तेरौकारलोपे आकारादेशे मकारलोपे च प्रशसेति सिध्या ''प्रशस्तौ बाहू कृणुतात्कुरुतात्'' इत्यर्थतया प्रशस्तार्थ-कोऽयं शब्दः । बाह्वोः प्रशस्तत्वञ्चाविकलत्वमिति कार्त्स्न्येन बाह्वोरुद्धरणरूपदृष्टार्थत्वान्नादृष्टार्थत्व-मपीति ज्ञेयम् । **फलन्तु**, विकृतौ बहुपशुगणे बाहूनित्यूहितव्यो बाहुशब्द इति ।

**इति पञ्चममध्रिगौ ''प्रशसा बाहू'' इत्यत्र प्रशसाशब्दस्य प्रशंसापरत्वाधिकरणम् (सूत्रे २३-२४)**

## अथ षष्ठमध्रिगौ ''श्येनमस्य वक्षः'' इत्यादौ श्येनादिशब्दानां कार्त्स्न्यवचनाधिकरणम् (सूत्राणि २५-२७)

**श्येनशलाकश्यपकवषोरुस्रेकपर्णेष्वाकृतिवचनं प्रसिद्धसन्निधानात् ॥ २५ ॥**

**(कार्त्स्न्येन वा स्यात्तथाभावात् ॥ २६ ॥ अध्रिगोश्च तदर्थत्वात् ॥ २७ ॥)**

पूर्ववैषम्येणात्र शङ्कनात्सङ्गतिः । अध्रिगुप्रैष एव श्रूयते ''श्येनमस्य वक्षः कुणुतात् । शला दोषिणी । कश्यपेवांसौ । कवषोरू । स्रेकपर्णा ष्ठीवन्ता'' इति । अस्यार्थः । श्येनसदृशं वक्षः । शलाका सदृशौ दोषिणी भुजौ । कश्यपः कच्छपस्तत्सदृशांवसौ । कवषः कवाटस्तत्सदृशावूरू । स्रेकपर्णः करवीरपत्रं तदाकारावष्ठीवन्ता अष्ठीवन्तौ जान्वोरधोभागौ । कुणुतात् कुरुतादिति सर्वत्रान्वयः । किमत्र श्येनादिसादृश्यमेव वक्षःप्रभृतिषु विवक्षितम्, उत वक्षःप्रभृतेः कार्त्स्न्येनोद्धरणमभिप्रेतमिति **सन्देहे**, प्रसिद्धश्येनादिशब्दसन्निधानात्तत्सादृश्यमेवात्राभिप्रेतम् । ''पिष्टपिण्डाः सिंहाः क्रियन्ताम्'' इत्यादौ प्रसिद्धसिंहशब्दसन्निधौ श्रुतानां पिष्टपिण्डानां तदाकारतया करणावगमात् । तथा च पूर्वत्र प्रशसा-शब्दस्य साकल्यार्थत्वसम्भवेन प्रशस्तार्थपरत्वेऽपीह श्येनादिपदानां निरूढार्थकत्वेन साकल्यपरत्वा-सम्भवाद्वक्षःप्रभृतीनि स्वधितिनोद्धृत्य कर्तनाद्युपायेन पक्षचरणचञ्च्वादिसम्पादनेन श्येनाद्याकारं कर्तव्यमिति **प्राप्तम्** । तदाह **सूत्रे, श्येनेत्यादि** । व्यक्तोऽर्थः । सूत्रे वक्षःप्रभृत्यवयवान्तरोप-लक्षकतयोरुग्रहणमिति ध्येयम् । **सिद्धान्तस्तु**, नात्र श्येनादिशब्देन तत्सादृश्यमभिमतम् । तथात्वे अदृष्टार्थताप्रसङ्गात् । कर्तने सति वक्षःप्रभृत्याकारवैकल्येन हविर्नाशप्रसङ्गात् । एवञ्च पशोरविकलेषु

वक्षःप्रभृत्यवयवेषु सत्सु स्वत एव तेषु श्येनादिसादृश्यमस्तीति यथा तन्न नश्यति तथोद्धरणीयमिति विवक्षया श्येनादिशब्दोऽत्र वक्षःप्रभृतिषु प्रयुक्तो न श्येनादिसारूप्याभिप्रायेण । तथा च श्रुतिः ''गात्रं गात्रमस्यानूनं कुणुतात्'' इति । तदाह **सूत्रे, कात्स्न्यैर्न वा स्यात्तथाभावादिति** । अस्याधिकरणस्य श्येनमित्यादिवाक्यार्थोक्तिमात्रपरत्वेन प्रासङ्गिकत्वान्नात्रोहादिरूपफलमन्वेषणीयम् ।

इति षष्ठमध्रिगौ ''श्येनमस्य वक्षः'' इत्यादौ श्येनादिशब्दानां कात्स्न्यर्चवचनाधिकरणम् (सू. २५-२७)

## अथ सप्तमं दर्शार्थोद्धृताग्निलोपे प्रायश्चित्तरूपज्योतिष्मत्या अननुष्ठानाधिकरणम् (सूत्रम् २८)

**प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते ॥ २८ ॥**

''संसर्गिषु'' इत्यारभ्यैतावत्पर्यन्तमेकादशनयैरध्रिगुप्रैषगतपदानामवान्तरकार्यनिरूपणमूहसिध्यर्थं प्रस्तुतम् । तत्प्रसङ्गाज्ज्योतिष्मतीष्टेः कार्यविशेषोऽत्र चिन्त्यत इति **सङ्गतिर्ध्येया** । अग्निहोत्रप्रकरणे श्रूयते ''अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत्'' इति । **अस्यार्थः**, सायं प्रातश्चाग्निहोत्रार्थं गार्हपत्यादुद्धृत्याहवनीयेऽग्निः प्रणीयते । सोऽयं प्रणीतोऽग्निर्यदि कदाचिदकृतेऽग्निहोत्रे नश्येत्तदेयमिष्टिः कार्येति । तत्र पर्वणि दर्शार्थमुद्धृतेऽग्नावग्निहोत्रप्रवृत्तेः पूर्वमुद्वाते सतीयमिष्टिः कार्या न वेति **सन्देहे**, उद्वायेदित्येकपदश्रुत्या धात्वर्थस्योद्वानशब्दितनाशस्य निमित्तत्वं लिङ्प्रत्ययादवगम्यते । तच्चोद्वानमनङ्गत्वात्फलाभावाच्च नेष्ट्या संस्कारार्हम् । अग्निस्तूत्पाद्यतया संस्कारार्होऽप्युद्वानस्य निमित्तभूतस्य विशेषणतया कार्यान्वयायोगान्न तस्य संस्कार्यतेति प्रयाजादिवत्फलापूर्वसहकारितया आरादुपकारकमेवेदम् । न तु प्रोक्षणादिवद्द्रव्यगतातिशयहेतुतया सामवायिकमिति दर्शार्थोद्धृताग्नेरुद्वानेऽपीयमिष्टिः कार्येति **प्राप्ते सिद्धान्तः**, विशेषणं हि तद्भवति यद्विशेष्यं सर्वं व्याप्नोति । यथा नीलमुत्पलमित्यादौ नैल्यादि । इह चाग्निर्नोद्वानस्य विशेषणार्हः । उद्वानशब्दितविनाशस्य चिन्तानिमेषादावपि सत्वेन तत्राग्निसम्बन्धस्याभावेन विनाशमात्रं प्रत्यग्नेरव्यापनात् । स्फुलिङ्गादिविनाशस्य सदा सत्वेनाग्निनाशस्य नित्यतया निमित्तत्वायोगाच्च । अतोऽत्रोद्वातोऽग्निरेव निमित्तमिष्टेरित्युद्वानमेव विशेषणमग्नेरिति स्वीकार्यम् । कदाचित्कृत्स्नस्याप्यग्नेरुद्वानसम्भवेनोद्वानेनाग्नेर्व्यापनादुद्धृतकृत्स्नाग्निं व्याप्नुवत उद्वानस्य कादाचित्कत्वेनानित्यतयोद्वाताग्नेर्निमित्त त्वसम्भवात् । ततश्चोद्वाताग्न्युत्पादनद्वारा अग्निहोत्राङ्गत्वात्सामवायिकैवेयमिष्टिः । तथा चाग्निहोत्रार्थमुद्धृताग्नेरुद्वानेऽस्योत्पादनरूपं संस्कारं कुर्वन्तीयमिष्टिरग्निहोत्राङ्गं स्यात् । नान्यार्था स्यात् । अतो दर्शार्थोद्धृताग्नेरुद्वाने सति नैतत्प्रायश्चित्तरूपेष्टिः कार्येति । तदाह सूत्रे **प्रासङ्गिके** प्रसङ्गादुपकारिणि । अन्यार्थमुद्धृत इति



यावत् । तस्मिन्नग्नौ नष्टे **प्रायश्चित्तं न विद्यते** । न कार्यम् । तस्याग्नेः **परार्थत्वात्** । **तदर्थे** अग्निहोत्रार्थे अग्नावुद्धृते हि नष्टे प्रायश्चित्तं **विधीयत** इति । फलं व्यक्तम् ।

इति सप्तमं दर्शार्थोद्धृताग्निलोपे प्रायश्चित्तरूपज्योतिष्मत्या अननुष्ठानाधिकरणम् (सूत्रम् २८)

## अथाष्टमं धार्योद्वाने प्रायश्चित्तरूपज्योतिष्मत्यननुष्ठानाधिकरणम् (सूत्रे २९-३०)

**धारणे च परार्थत्वात् ॥ २९ ॥**

**(क्रियार्थत्वादितरेषु कर्म स्यात् ॥ ३० ॥)**

पूर्वन्यायातिदेशादातिदेशिकी सङ्गतिः । ''धार्यो गतश्रिय आहवनीयः'' इत्यनारभ्य श्रूयते । गतश्रियस्तु ''त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यः'' इति श्रुतिप्रसिद्धा धनाढ्याः । तत्र यदि ध्रियमाणोऽग्निरग्निहोत्रकाले उद्वायति तदा किमियमिष्टिः कार्या, न वेति सन्देहे, पूर्वत्राग्नि होत्रार्थोद्धृताग्नेरुद्वाने हीयमिष्टिः कार्येत्युक्तम् । गतश्रीत्वेन च निमित्तेन गार्हपत्यादुद्धृत्याहवनीये धार्यमाणोऽग्निस्तत्र करिष्यमाणसर्वकर्मार्थो न पुरुषार्थः । तथात्वे फलकल्पनाप्रसङ्गात् । अतो भवत्ययमग्निहोत्रार्थोऽपि । न च सर्वकर्मसमुदायार्थोऽग्निर्न समुदायिनामङ्गमिति वाच्यम् । समुदायस्याफलत्वेन फलवतां समुदायिनामेव प्रत्येकमङ्गत्वस्य वाच्यत्वात्तस्मिन्नुद्वाते निमित्तसत्त्वात्कार्यैव प्रायश्चित्तरूपेष्टिरिति प्राप्ते सिद्धान्तः, यद्यप्ययं धार्योऽग्निरग्निहोत्रार्थो भवति तथाप्यग्निहोत्रकाले तदुद्वानं नेष्टेर्निमित्तम् । किन्तु योग्निरग्निहोत्रोद्देशेनोद्धृत उद्वातः स एव । ''यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्रे'' इत्यादिश्रुतेः । अयश्चाग्निरन्यार्थमेवोद्धृतो गतश्रीत्वेन निमित्तेन धार्यत इत्यर्थादग्निहोत्रस्याप्युपकरोतीति न तस्मिन्नुद्वाते प्रायश्चित्तेष्टिरियं कार्येति । तदाह सूत्रे, धारणे च प्रायश्चित्तं न विद्यते । धारणस्य परार्थत्वात् सर्वार्थत्वादिति ।

इत्यष्टमं धार्योद्वाने प्रायश्चित्तरूपज्योतिष्मत्यननुष्ठानाधिकरणम् । (सूत्रे २९-३०)

## अथ नवमं दर्शार्थस्योद्धरणस्यामन्त्रकत्वाधिकरणम् । (सूत्रम् ३१)

**न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् ॥ ३१ ॥**

अन्यार्थमुद्धृतोऽप्यग्निरग्निहोत्रसाधनत्वात्तद्धर्मभाक् स्यादिति शङ्कनात्सङ्गतिः । दर्शार्थेनाग्न्युद्धरणकाले अग्निहोत्रप्रणयनाङ्गभूतो ''वाचा त्वा होत्रा, प्राणेनोद्गात्रा'' इत्यादिमन्त्रः प्रयोक्तव्यो न वेति

सन्देहे, दर्शार्थमप्युद्धृतेऽग्नावग्निहोत्रस्य क्रियमाणत्वेनान्यार्थोद्धरणत्वेऽप्यस्याप्यग्नि होत्रसाधनत्वात्साधननिवेशिनो धर्मा इति तदङ्गमन्त्रस्तदा प्रयोक्तव्यः । यागार्थयोरपि दधिपयसोः प्रणीताकार्यसाधनत्वमात्रेण प्रणीताधर्मा भवन्ति । न त्वङ्गत्वमपेक्ष्यत इति द्वितीयपादे अत्रैव **परार्थेन त्वर्थसामान्यम् । संस्कारस्य तदर्थत्वात्** इत्यत्राभिधानात् । दर्शार्थाग्न्युद्धरणस्याग्निहोत्राङ्गत्वं वाऽभ्युपेत्य तन्मन्त्रप्रयोगोऽङ्गीकार्यः । अन्यथाऽग्निहोत्रस्य प्रणयनाभावेन वैगुण्यप्राप्तेरिति **प्राप्ते सिद्धान्तः,** दर्शार्थमुद्धरणं प्रातरग्निहोत्रे हुते पश्चाद्विहितम् । अग्निहोत्रार्थं तूद्धरणं सायमधिवृक्षे सूर्ये प्रातराविः सूर्ये च काले विहितम् । कालस्य च गुणत्वेऽप्यनुपादेयतयाऽङ्गान्तरवत्त्यागायोगात्तस्मिन् काले सति तत्कालजीविनं पुरुषमधिकृत्य साङ्गं कर्म विधीयते इति तत्काल एव कर्म कार्यमिति **अभ्यासो वा कर्मशेषत्वात्** इति षष्ठस्य द्वितीयपादीयसप्तमाधिकरणेऽभिधानाद्विहितकालात्प्राक्पश्चाद्वा कर्मणि पुरुषस्य नाधिकारः। अनिधिकारिणा कृतश्च न फलाय भवतीत्यकाले नास्ति समन्त्रकमुद्धरणमिति तदा न प्रयोज्यो मन्त्र इति । तदाह **सूत्रे,** उत्पन्ने परार्थमुद्धृतेऽग्नौ **यस्याग्निहोत्रस्य चोदना** तदीयमन्त्र इति यावत् । **परार्थोद्धरणे न स्यादप्राप्तकालत्वदिति ।** फलं व्यक्तम् ।

इति नवमं दर्शार्थस्योद्धरणस्यामन्त्रकत्वाधिकरणम् (सूत्रम् ३१)

## अथ दशमं प्रायणीयचरौ प्रदानधर्माणामननुष्ठानाधिकरणम् (सूत्राणि ३२-४०)

**प्रदानदर्शनं श्रपणे तद्धर्मा भोजनार्थत्वात्संसर्गाच्च मधूदकवत् ॥ ३२ ॥**

**(संस्कारप्रतिषेधश्च तद्वत् ॥ ३३ ॥ तत्प्रतिषेधे च तथाभूतस्य वर्जनात् ॥ ३४ ॥ अधर्मत्वमप्रदानात्प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः ॥ ३५ ॥ परो नित्यानुवादः स्यात् ॥ ३६ ॥ विहितप्रतिषेधो वा ॥ ३७ ॥ वर्जने गुणभावित्वात्तदुक्तप्रतिषेधात्स्यात्कारणात्केवलाशनम् ॥ ३८ ॥ व्रतधर्माच्च लेपवत् ॥ ३९ ॥ रसप्रतिषेधो वा पुरुषधर्मत्वात् ॥ ४० ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ज्योतिष्टोमे ''आदित्यः प्रायणीयः पयसि चरुः'' इति श्रूयते । तत्र किं पयसि सान्नाय्यधर्मा वत्सापाकरणादयः कार्याः, उत प्रणीताधर्मा उत्पवनादयः कार्या इति **सन्देहे,** चरुपयसी द्वे अपीह प्रदेयतया देवतासम्बन्धित्वेन विधीयेते । अन्यथा ''चरुरादित्यः'' इति द्रव्यदेवतयोस्सम्बन्धः ''स च चरुः पयसि'' इति चरुपयसोः सम्बन्धश्च विधेय इति वाक्यभेदप्रसङ्गात् । न चैवं द्वयोः प्रदेयत्वे पयसीति सप्तम्ययोगः । यथा अभ्युदयेष्टौ ''ये स्थविष्टास्तानिन्द्राय प्रदात्रे



दधंश्चरुम्'' इत्यत्र दधिप्रातिपदिकार्थस्य देवतासम्वन्धित्वादर्थसिद्धं दध्न आधारत्वं सप्तम्याऽनूद्यते तद्वदिहाप्युपपत्तेः । एवञ्च पूर्वत्र दर्शार्थोद्धरणेऽग्निहोत्राङ्गमन्त्रस्याप्रवृत्तावपीह प्रायणीयेष्टौ पयसि प्रदेयधर्माः स्युरेवेति **प्राप्तम् । तदाह सूत्रे, सहश्रपणे सह प्रदानदर्शनं** भवति । चरुर्यदा त्यज्यते तदा पयोऽपि त्यज्यमानं दृश्यते । ततः पयसोऽपि **भोजनार्थत्वात्तद्धर्माः** प्रदेयधर्माः । न च देवतोद्देशेन चरुरेव त्यज्यते । न पयः । तत्कथं प्रदानदर्शनमिति वाच्यम् । ''दधि मधु घृतमापो धाना उदकं तन्दुलास्तत्संसृष्टं प्राजापत्यम्'' इत्यत्रेव संसृष्टत्वादुभयोः प्रदेयत्वावश्यम्भावादिति । **सिद्धान्तस्तु,** त्प्रथमानिर्दिष्टश्चरुरेव हविः । सप्तमीनिर्दिष्टपयस्त्वाधारत्वेन सम्बध्यत इत्येवमवाक्यभेदे सति सप्तमीनिर्देशस्याविवक्षोपगमेन चरुतुल्यकक्ष्यत्वमयुक्तम् । अभ्युदयेष्टौ तु वाक्यान्तरावगतसहश्रपणसामर्थ्यादर्थसिद्धमाधारत्वं सप्तम्याऽनुवदितुं शक्यम् । इह तु वाक्यान्तरेण सहश्रपणाप्राप्तेराधारस्यानुवदितुमप्यशक्यत्वात् । तस्मात्प्रदेयत्वाभावात्पयसि प्रदेयसान्नाम्यधर्मा न कार्याः । किन्तु प्रणीताकार्यार्थत्वात्प्रणीताधर्मा उत्पवनादय एव कार्या इति ।

इति दशमं प्रायणीयचरौ प्रदानधर्माणामननुष्ठानाधिकरणम् (सूत्राणि ३२-४०)

## अथैकादशमभ्युदयेष्टौ दधिश‍ृतयोः प्रदेयधर्मानुष्ठानाधिकरणम् (सूत्रे ४१-४२)

**अभ्युदये दोहापनयः स्वधर्मः स्यात्प्रवृत्तत्वात् ॥ ४१ ॥**

**(श‍ृतोपदेशाच्च ॥ ४२ ॥)**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । अभ्युदयेष्टौ श्रूयते ''ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम् येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय श‍ृते चरुम्'' इति । तत्र दधिश‍ृतयोः किं प्रदेयसान्नाय्यधर्मा कार्याः, उत प्रणीताधर्मा इति **सन्देहे,** पूर्वत्रोक्तदिशा ''दधन् श‍ृते'' इति सप्तमीनिर्देशेन श्रपणार्थत्वप्रतीत्या प्रदेयत्वाप्रतीतेः प्रणीताधर्मा उत्पवनादय एव कार्या इति **प्राप्ते सिद्धान्तः** पूर्वत्र हि प्रायणीयकर्मणोऽप्राप्तत्वाद्द्रव्यं देवता श्रपणाधारभूतं पयश्चेत्यनेकार्थविशिष्टमेकं कर्मैकेन वाक्येन विधातुं शक्यमिति तत्र पयसः केवलाधारत्वान्न प्रदेयधर्मास्तत्र भवन्ति । प्रकृते तु नापूर्वं कर्म विधीयते । किन्तु प्रवृत्त एव दर्शकर्मणि कालापराधनिमित्ते सति पूर्वदेवताभ्योऽपनीतानां हविषां देवतान्तरसम्बन्धोऽपेक्षितो विधीयते स्थविष्ठानां तण्डुलानां दध्नश्च प्रदातृत्वगुणविशिष्टेन्द्रो देवतेत्यादिना । न तु तण्डुलानां देवतासम्बन्धो दधिश‍ृतयोः प्रणीताकार्यकरत्वञ्च विधीयते । प्राप्ते कर्मण्यनेकार्थविधौ वाक्यभेद-

प्रसङ्गात्। तस्माद्दधिशृतयोः प्रदेयधर्मा एव कार्या इति। तदाह **सूत्रे, अभ्युदये दोहापनयः** दधिशृतरूपो दोहः। पूर्वदेवताभ्योऽपनीयत इति यावत्। **स्वधर्म** प्रदेयसान्नाय्यधर्मः **स्यात्**। कर्मणः **प्रवृत्तत्वात्**। प्रवृत्तकर्मण्यनेकविध्यसम्भवादिति। **फलन्तु** सान्नाय्यधर्मानुष्ठानम्। यद्यप्येषोऽर्थः षष्ठस्य पञ्चमे पादे **अभ्युदये कालापराधात्** इत्याद्यनये सिद्धस्तथापि पूर्वाधिकरणसिद्धान्तजनितभ्रान्तिं निवारयितुं षष्ठोक्तसिद्धान्त एवात्र स्फुटित इति वदन्ति।

इत्येकादशमभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम् (सूत्रे ४१-४२)

**अथ द्वादशं पशुकामेष्टौ दधिशृतयोः प्रदेयधर्माननुष्ठानाधिकरणम् (सूत्रे ४३-४४)**

**अपनयो वाऽर्थान्तरे विधानाच्चरुपयोवत् ॥ ४३ ॥**

**(लक्षणार्था शृतश्रुतिः ॥ ४४ ॥)**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः। ''यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्'' इति ''ये मध्यमास्तान्विष्णवे शिपिविष्टाय शृते चरुम्। ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधनि चरुम्'' इति च श्रुतम्। तत्र किं दधिपयसोः प्रदेयधर्माः, उत प्रणीताधर्मा इति **सन्देहे**, अभ्युदयेष्ट्या समानश्रुतित्वात्तेनैव न्यायेन दधिशृतयोः प्रदेयधर्मा इति **प्राप्ते**, अभ्युदयेष्टौ प्राप्ते कर्मण्येनेकगुणविधानायोगेन सप्तम्यर्थस्याधारत्वस्याविवक्षायामप्यत्रापूर्वकर्मत्वविधानात्पयसि चरुरित्यत्रेव सप्तम्यर्थाविवक्षा न युक्तेत्यप्राप्तविधानयोर्दधिपयसोस्सप्तम्या श्रपणार्थत्वावगमादित्यर्थः। ''आदित्यः प्रायणीयः पयसि चरुः'' इत्यत्र चरुपयोवत्प्रणीताकार्य एव विधानान्न कार्याः प्रदेयधर्माः। किन्तु प्रणीताधर्मा एवेति। तदाह **सूत्रे**, ''आदित्यः प्रायणीयः पयसि चरुः'' इति **चरुश्रपणार्थपयोवदिह** दधिपयसोर**र्थान्तरे** प्रणीताकार्ये **विधानात्**प्रदेयधर्माणा**मपनय** इति।

इति द्वादशं पशुकामेष्टौ दधिशृतयोः प्रदेयधर्माननुष्ठानाधिकरणम् (सूत्रे ४३-४४)

**अथ त्रयोदशं ज्योतिष्टोमे श्रयणानां प्रदेयधर्माननुष्ठानाधिकरणम् (सूत्राणि ४५-५०)**

**श्रयणानां त्वपूर्वत्वात्प्रधानार्थे विधानं स्यात् ॥ ४५ ॥**

**(गुणो वा श्रयणार्थत्वात् ॥ ४६ ॥ अनिर्देशाच्च ॥ ४७ ॥ श्रुतेश्च तत्प्रधानत्वात् ॥ ४८ ॥ अर्थवादश्च तदर्थवत् ॥ ४९ ॥ संस्कारं प्रति भावाच्च तस्मादप्यप्रधानं स्यात् ॥ ५० ॥)**



पूर्ववैषम्येणात्र शङ्कनात्सङ्गतिः। ज्योतिष्टोमे ''पयसा मैत्रावरुणं श्रृणाति। सक्तुभिर्मन्थिनम्। धानाभिर्हारियोजनम्। हिरण्येन शुक्रम्। आज्येन पात्नीवतम्'' इत्यादिना पयःप्रभृतिभिर्द्रव्यैर्ग्रहपात्रगतसोमरसस्य श्रृणातीति मिश्रणं श्रूयते। तत्र किं श्रयणार्थेषु पयःप्रभृतिषु सोम इव प्रदेयधर्माः क्रयादयो भवन्ति, उत नेति **सन्देहे**, पयःप्रभृतिभिर्मिश्रिते सोमे हूयमाने पयोऽपि होमेन सम्बध्यत इति पयःप्रभृत्यपि प्रदेयमेव। अन्यथा पयःप्रभृतिभिर्मिश्रणस्य व्यर्थतापत्तेः। सोमरससंस्कारकत्वेनादृष्टं वा कल्प्यं स्यात्। एवञ्च पूर्वत्र दधिपयसोरन्यथापि दृष्टार्थत्वलाभेन प्रदेयत्वाभावेऽपि पयःप्रभृतीनां दृष्टार्थत्वाय प्रदेयत्वमेवेति प्रदेयधर्माः क्रयादयः कार्या इति **प्राप्ते सिद्धान्तः**, मानान्तरसिद्धेऽर्थे दृष्टादृष्टाविचारः। न ह्यत्र पयःप्रभृतेर्देवतासम्बन्धो यागसम्बन्धो वा मानातरावगतः। येन पयःप्रभृतेर्होमसम्बन्धाद्यागनिर्वृत्तिरूपं दृष्टं फलं कल्प्येत। सोमसंस्कारकत्वं तु पयसेत्यादितृतीयया सोमस्य संस्कार्यत्वञ्च मैत्रावरुणमित्यादि- द्वितीययाऽवगम्यते। तस्मात्पयःप्रभृति सोमसंस्कारकम्। न प्रदेयमिति न तत्र प्रदेयधर्माः कार्या इति। तदाह **सूत्रे, श्रयणानामपूर्वार्थत्वा**द्दधिपयोवदन्यकार्ये विध्यभावात्**प्रधानार्थे** सोमार्थे तत्संस्कारकतया **विधानं स्या**दिति।

इति त्रयोदशं ज्योतिष्टोमे श्रयणानां प्रदेयधर्माननुष्ठानाधिकरणम् (सूत्राणि ४५-५०)

**अथ चतुर्दशमश्वमेधे ''ईशानाय परस्वतः'' इत्यनेन यागान्तरविधानाधिकरणम् (सूत्राणि ५१-५५)**

**पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ ५१ ॥**

**(शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत् ॥ ५२ ॥ पूर्ववत्त्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते ॥ ५३ ॥ प्रवृत्तेर्यज्ञहेतुत्वात्प्रतिषेधे संस्काराणामकर्म स्यात्तत्कारितत्वाद्यथा प्रयाजप्रतिषेधे ग्रहणमाज्यस्य ॥ ५४ ॥ क्रिया वा स्यादवच्छेदादकर्म सर्वहानं स्यात् ॥ ५५ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः। अश्वमेधे ''ईशानाय परस्वत आलभते'' इति श्रूयते। तत्सन्निधाविदं पठ्यते ''पर्याग्निकृतानारण्यानुत्सृजति'' इति। परस्वत इत्यस्याऽरण्यमृगविशेषानित्यर्थः। तत्र किं ''ईशानाय परस्वत आलभते'' इत्यत्र परस्वतां ''आलभते'' इति स्पर्शमात्रं विधीयते। तेषाञ्च पर्यग्निवाक्येन पर्यग्निकरणविशिष्ट उत्सर्गस्त्यागो विधीयते, किं वा ''ईशानाय'' इति वाक्ये परस्वत्पशुद्रव्यक ईशानदेवताको यागो विधीयते। पर्यग्निवाक्येन त्वालब्धपशुद्रव्यत्यागो विधीयत इति **सन्देहे**,

ईशानवाक्ये यागविधौ ह्युत्सर्गरूपत्यागस्य प्राप्तत्वादुत्सर्गवाक्यमनुवादकं सदनर्थकं स्यात् । पर्यग्निकरणस्य वा उत्सर्गस्य तदुत्तरकालत्वं वा न विधेयम् । चोदकप्राप्तत्वात् पर्यग्निकरणाव्यवहितोत्तरत्वस्य चेहाप्रतीत्या तस्याप्यविधेयत्वात् । पदश्रुत्योत्सर्गस्य विधिसम्भवे वाक्यप्रमाणकस्य तस्य विध्ययोगाच्च । तस्मादीशानवाक्ये देवतासम्बन्धे सत्यपि यागविधिमनादृत्य पूर्वत्र श्रयणमिव पशुसंस्काररूपालम्भनशब्दितस्पर्शमात्रविधिमभ्युपेत्यालब्धास्ते परस्वन्तः पशवः पर्यग्निवाक्येन पर्यग्निकरणानन्तरमुत्स्रष्टव्या इत्युत्सर्गविधिरेवोपेयः । यथा ''चरुमुपदधाति । बृहस्पतेर्वा एतदन्नम्'' इत्यत्र देवतासम्बन्धे सत्यपि यागविधिमनादृत्योपधानार्थत्वम् । तथैव द्वितीयस्य तृतीयपादे **संयुक्तस्त्वर्थशब्देन** इत्यत्रोक्तेः । तद्वदत्रापीति **प्राप्तम्** । तदाह **सूत्रे, पर्यग्निकृतानामुत्सर्गे** देवतामुद्दिश्य त्यागे पर्यग्निकरणवाक्येन विहिते ईशानवाक्यविहितस्यालम्भनस्य स्पर्शस्य **तादर्थ्यं** तदङ्गार्थत्वमुपधानवच्चरूपधानवत् ''चरुमुपदधाति'' इति विहितोपधानार्थत्वं चरूपधानस्य तद्वदिति । **सिद्धान्तस्तु,** ईशानवाक्ये द्रव्यदेवतासम्बन्धश्रवणेन ''सौर्यं चरुं निर्वपेत्'' इत्यत्रेव यागविधेः स्पष्टत्वादगत्या वाक्यप्रमाणकोऽपि क्लृप्तोपकारप्राकृतपर्यग्निकरणान्ताङ्गकलाप एवोत्सर्गवाक्ये ईशानवाक्यविहितं यागमुत्सृजतिधातुनाऽनूद्य प्रत्ययेन विधीयत इति प्रत्यक्षविहितेनाङ्गकलापेन निराकांक्ष ईशानप्रयोगवचनो न चोदकमपेक्षत इति चोदकनिवृत्तिरिति । **फलन्तु पूर्वपक्षे** पर्यग्निकरणान्तं कृत्वा तूष्णीं पशोस्त्याज्यत्वाद्यागधर्माप्रवृत्तिः । **सिद्धान्ते तु** पर्यग्निकरणान्ता यागधर्माः कार्या इति ।

इति चतुर्दशमश्वमेधे ''ईशानाय परस्वत'' इत्यनेन यागान्तरविधानाधिकरणम् (सूत्राणि ५१-५५)

**अथ पञ्चदशं ''आज्येन शेषं संस्थापयति'' इत्यनेन कर्मान्तरविधानाधिकरणम्**
**(सूत्राणि ५३-६०)**

**आज्यसंस्था प्रतिनिधिः स्याद्द्रव्योत्सर्गात् ॥ ५३ ॥**

**(समाप्तिवाचनात् ॥ ५७ ॥ चोदना वा कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात् ॥ ५८ ॥ अनिज्याश्च वनस्पतेः प्रसिद्धां तेन दर्शयति ॥ ५९ ॥ सङ्ख्या तद्देवतत्वात्स्यात् ॥ ६० ॥)**

पूर्ववैषम्येणात्र शङ्कनात्सङ्गतिः । यूपैकादशिन्यां ''त्वाष्ट्रं पात्नीवतमालभेत'' इति विहितं त्वाष्ट्रं पात्नीवतं पशुं प्रकृत्य ''पर्यग्निकृतं पात्नीवतमुत्सृजति'' इत्युत्सर्गं विधाय श्रूयते ''आज्येन शेषं संस्थापयति'' इति । संस्थापयति समापयतीत्यर्थः । तत्र किं पूर्वस्मिन् पात्नीवतयागे पर्यग्निवाक्योक्तो-



त्सृष्टपशोः स्थाने प्रतिनिधिभूतमाज्यं विधीयते, किं वाऽऽज्यद्रव्यकं कर्मान्तरमिति **सन्देहे,** पात्नीवतपशुयागस्य पशुनोपक्रान्तस्य चोदकप्राप्तदैक्षपशुयागे(गाङ्गे)ष्वनुष्ठीयमानेषूत्सर्गवाक्येन विहिते पर्यग्निकरणान्ताङ्गानुष्ठानेन पशोरुत्सर्गे कृते सति प्रक्रान्तस्य पात्नीवतयागस्य समाप्त्यर्थं द्रव्यापेक्षायां ''आज्येन शेषं संस्थापयति'' इति विधीयमानमाज्यं प्रतिनिधिरेव भवति । न त्वत्र कर्मान्तरविधिः । देवताऽश्रवणात् । शेषपदसंस्थापनपदयोरस्वारस्याच्च । आज्यमात्रस्य कर्मस्वरूपमात्रस्य च वाच्यत्वेन शेषपदोक्तेः समाप्त्युक्तेश्चायोगात् । एवञ्च पूर्वत्र पर्यग्निकरणान्ताङ्गरीतिविधावपीहाऽज्येन प्रतिनिधिना समाप्तिविधानेन प्रक्रान्तकर्मणः पर्यग्निकरणान्ताङ्गैः समाप्त्ययोगेन पर्यग्निकरणवाक्येन तदन्ताङ्गरीतिर्विधातुं शक्यत इति पर्यग्निकरणानन्तरं पशूत्सर्ग एव विधेय इति **प्राप्तम्** । तदाह **सूत्रे, आज्येन संस्था समाप्तिः प्रतिनिधिः स्यात्** । कुतः ? **द्रव्यस्य** पशोरु**त्सर्गा**दिति । **सिद्धान्तस्तु,** पर्यग्निकरणानन्तरं पशोस्तूष्णीं त्यागे सत्युत्पत्तिवाक्यावगतो देवतासम्बन्धो नानुष्ठितः स्यादिति देवतासम्बन्धविधिरप्रमाणं स्यात् । असति च देवतासम्बन्धे यागविधेरभावेन दैक्ष्यपशुविध्यन्तस्य चोदकेन प्राप्तेः पर्यग्निकृतोत्सर्गशेषसमापनयोरयोगः । यागस्यैवाभावात् । अत उत्पत्तिवाक्यावगतदेवतासम्बन्धेन यागविधौ निश्चिते सति पशुनैव देवतोद्देशेन द्रव्यत्यागरूपे यागे सिद्धे पुनरुत्सर्गविध्ययोगात्पूर्वन्यायेन पर्यग्निवाक्ये तदन्ताङ्गरीतिरेव विधेयेति प्रत्यक्षविहिततदन्ताङ्गकलापेन निराकांक्षस्य पूर्वकर्मणस्समाप्तत्वान्न शेषभागोऽस्ति य आज्यभागेन समाप्यः । तस्मात्कर्मान्तरविधिरेवायम् । न च देवताभावः । पात्नीवतपदस्यानुवृत्त्या तल्लाभसम्भवाच्छेषसंस्थापनशब्दावौपचारिकौ नेयाविति । फलं पूर्ववत् ।

इति पञ्चदशं ''आज्येन शेषं संस्थापयति'' इत्यनेन कर्मान्तरविधानाधिकरणम् (सूत्राणि ५३-६०)

इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्यश्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते नवमाध्यायस्य चतुर्थः पादः ॥

अस्मिन् पादे अधिकरणानि १५ सूत्राणि ६०

आदितः अधिकरणानि ५९७ सूत्राणि १७५१

## अथ दशमाऽध्याये प्रथमः पादः

ॐ ऊहश्चिन्तितः । अत्राध्याये बाधश्चिन्त्यते । ऊहबाधयोर्विकृतिष्वतिदिष्टपदार्थविषयकत्वेन सप्तमाष्टमानन्तर्येऽविशिष्टेऽपि विकृतिष्वतिदेशतः प्राप्यमाणाः पदार्थाः किमविकारेणैव प्राप्यन्ते किं वा किञ्चिद्विकारेणेति प्राप्यमाणपदार्थगतविशेषचिन्तारूपत्वादूहः पूर्वं निवेशितः । एवं सविशेषायां प्राप्तौ चिन्तितायामवसरप्राप्तप्राप्त्यपवादरूपबाधविचारः पश्चात्प्रवर्त्यत इति ध्येयम् । **बाधो** नाम चोदकप्रापित प्राकृताङ्गानुष्ठानबुद्धेर्भ्रान्तित्वनिश्चय इत्याहुः ।

**अथ प्रथमं विकृतौ लुप्तार्थानां प्राकृतानां बाधाधिकरणम्**
**(सूत्राणि १-३) प्रथमवर्णकम्**

**विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥**

**(अपि वाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥ तेषामप्रत्यक्षविशिष्टत्वात् ॥ ३ ॥)**

पूर्वोक्तोहाक्षेपकतया बाधचिन्तोपोद्घाततया चेदमधिकरणमारभ्यते । राजसूये दर्शपूर्णमासविकृतिभूतानि कानिचिद्धवींषि विहितानि । तत्र मैत्रबार्हस्पत्ये हविषि श्रूयते ''स्वयं दितं बर्हिर्भवति । स्वयं कृत इध्मः'' इति । दितं खण्डितम् । दो अवखण्डने । लवनेन विना स्वयमेव लूनं दर्भजातं बर्हिर्भवतीत्यर्थः । एवं स्वयं कृत इत्यादावपि ध्येयम् । तत्र ''बर्हिर्लुनाति'' इति प्रकृतौ विहितं बर्हिर्धर्मभूतं लवनं स्वयं दिते बर्हिषि कर्तव्यं न वेति **संशयः** । **पूर्वपक्षस्तु,** पूर्वत्र मन्त्राः सामानि प्रोक्षणादिसंस्काराश्च देवताप्रकाशनादिरूपावान्तरस्वस्वकार्यद्वारा विकृतावतिदिश्यमानाः कार्यानुरोधेन विकृतावूहनीया इत्युक्तमयुक्तम् । पदार्थाः प्रकृतावुपदेशेनेव विकृतावपि चोदकेन स्वरूपाण्येव प्राप्यन्ते । न त्ववान्तरकार्यद्वारा । तथा च चोदकेन प्रापितेषु पदार्थेषु प्राकृतोपकारासम्भवे अदृष्टं कल्पनीयम् । चोदकवचनप्रामाण्यात्प्राकृतमङ्गजातं सर्वं विकृतौ कर्तव्यमेवति स्वयं दिते बर्हिषि प्रकृतौ क्लृप्तप्रयोजनस्याभावेन लुप्तप्रयोजनमपि लवनमदृष्टार्थं कर्तव्यमिति नास्ति बाध इति । तदाह सूत्रे, **विधेर्विधि**विषयस्य प्राकृतपदार्थजातस्य **प्रकरणान्तरे** विकृतावविशेषेणा**तिदेशात् सर्वेषां** लुप्तकार्याणामलुप्तकार्याणाञ्च **कर्मानुष्ठानं स्यादिति** । **सिद्धान्तस्तु,** स्यादेवं यदि पदार्थाः स्वरूपेणातिदिश्येरन् । न चैवम् । किन्तूपकारविशिष्टा एव । प्रकृतौ पदार्थानां यथायोग्यं दृष्टादृष्टोपकारजननद्वारा यागस्य फलसाधनतासामर्थ्यसम्पादनस्य दृष्टत्वेन प्रकृतिवदिदं कुर्यादिति चोदकमपि यथाप्रकृति क्लृप्तोपकार-



विशिष्टानेव पदार्थानतिदिशति । न स्वरूपमात्रेण । तथात्वे प्रकृतिवत्कुर्यादिति वचनमनृतं स्यात् । विकृतियागस्य फलनिष्पादनसामर्थ्याभावापाताच्च । एवञ्च स्वस्वकार्यद्वारेणैव विकृतौ धर्माणां प्राप्तेर्लुप्तप्रयोजनकस्य विकृतावप्राप्तेः स्वयं दितादौ लवनादेरननुष्ठानमिति । **फलन्तु,** विकृतौ **पूर्वपक्षे** प्राकृतसर्वाङ्गानुष्ठानम् । **सिद्धान्ते** त्वलुप्तप्रयोजनकानामेवेति ।

**इति प्रथमं विकृतौ लुप्तार्थानां प्राकृतानां बाधाधिकरणम् (सूत्राणि १-३) प्रथमवर्णकम्**

**अथ प्रथमं कृष्णले अवहन्तिबाधाधिकरणम् (सूत्राणि १-३) द्वितीयं वर्णकम्**

**विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥**

**(अपि वाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥ तेषामप्रत्यक्षविशिष्टत्वात् ॥ ३ ॥)**

**वर्णकान्तरन्तु,** विकृतिभूतानां काम्येष्टीनां काण्डे पठ्यते ''प्राजापत्यं धृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः'' इति । तत्र शतकृष्णलशब्दितस्वर्णमाषेषु व्रीहिधर्मोऽवघातादिः कर्तव्यो न वेति **सन्देहे,** वैशद्ययुक्तादनीयद्रव्यवचनश्चरुशब्दो न कृष्णलेष्वनदनीयेषु मुख्यः । तेन यथा मासाग्निहोत्रे अग्निहोत्रशब्दो नित्याग्निहोत्रधर्मातिदेशार्थस्तथाऽत्र चरावपि कृष्णले प्रयुज्यमानश्चरुशब्दस्तद्धर्मातिदेशार्थः । तथा च तुषविमोचनरूपदृष्टप्रयोजनहीनतया निवर्तमाना अपि व्रीहिधर्मा आतिदेशिकचरुशब्दप्रयोगबलेन प्रतिप्रसवाददृष्टार्थाः कर्तव्या इति प्राप्तम् । तदाह सूत्रे विधेश्चरुशब्दात्प्रकरणान्तरगते कृष्णले धर्मातिदेशादवधातादि**सर्वकर्म स्यादिति** । **सिद्धान्तस्तु,** स्यादेवं, यदि मासाग्निहोत्रे अग्निहोत्रशब्द इव चरुशब्दोऽत्र धर्मातिदेशार्थः । न चैवम् । स्थाल्यां पाकेन वैशद्येन च सिद्धेन चरुसादृश्येन कृष्णलेषूपपन्नः संश्चरुशब्दो नावघातादिधर्मविधौ शक्तः । अग्निहोत्रशब्दस्त्वधर्मके मासाग्निहोत्रे नित्याग्निहोत्रसादृश्यस्य सिद्धस्याभावादगत्या धर्मातिदेशपर आश्रितः । अतो नावघातादिः कर्तव्यः । न च श्रपणमात्रकार्यस्यावयवविक्लित्तिरूपस्याभावेऽप्यदृष्टार्थतया श्रपणकर्तव्यत्ववददृष्टार्थमेवावधातोऽप्यस्त्विति शङ्क्यम् । ''घृते श्रपयति'' इति प्रत्यक्षविधिवदवघाते वचनाभावात् । चरुशब्दस्त्वन्यथोपपन्न इत्युक्तमिति । **फलं** व्यक्तम् ।

**इति प्रथमं कृष्णले अवहन्तिबाधाधिकरणम् (सूत्राणि १-३) द्वितीयं वर्णकम्**

## अथ प्रथमं वैश्वदेवे चरौ विष्णोरावाहनबाधाधिकरणम्
## (सूत्राणि १-३) तृतीयं वर्णकम्

**विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥**

**(अपि वाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥ तेषामप्रत्यक्षविशिष्टत्वात् ॥ ३ ॥)**

काम्येष्टिष्वेव श्रूयते ''वैश्वदेवं चरुं निर्वपेद्भ्रातृव्यवान् । तं बर्हिषदं कृत्वा शम्यया स्फयेन व्यूहेदिदमहममुश्चामुश्च व्यूहामीति । यं द्विष्यात्तं ध्यायेत् । यदधोऽवमृज्यते यच्च स्फय आश्लिष्यते तद्विष्णव उरुक्रमायावद्यति'' इति । **अस्यायमर्थः** । शत्रुवधकामो विश्वदेवदेवताकेन चरुद्रव्येण यागेन भावयेत् । तत्र यागे इडाभक्षणानन्तरं ब्रह्मादीनां चतुर्णामृत्विजां भक्षणाय चतुर्धाकरणे कर्तव्ये तं चरुं बर्हिषदं कृत्वा प्रकृताविव न हस्तेन विभजेत् । किन्तूग्रत्वादस्य कर्मणः शम्यया स्फयेन च व्यूहेद्विभजेत् । तस्मिन् काले ''इदमहं ब्रह्मभागं व्यूहामि । इदमहं होतृभागं व्यूहामि'' इत्येवमादिरूपं मन्त्रमुच्चारयेत् । तदा यदि चरुलेशो वेदेरधः पतेत् स्फये वा आश्लिष्येत तं लेशमुरुक्रमगुणकविष्णुदैवत्येन यागेन प्रतिपादयेदिति । तत्र किं वैश्वदेविकदेवतावाहनकाले विष्णोरप्यावाहनं कार्यं न वेति **संशये**, उरुक्रमविष्णुयागस्यौषधद्रव्यकत्वादेकदैवत्यत्वाच्च चोदनासामान्येनाऽग्नेयविकारभूतस्य वैश्वदेविकमध्ये पतितत्वेन वैश्वदेविकाङ्गान्याधारप्रयाजादीनि सर्वाण्यपि प्रसङ्गाद्वैष्णवयागे उपकुर्वन्तीति न तानि पृथक् क्रियन्ते । आवाहनन्तु वैश्वदेविककर्मणि ''विश्वदेवानावह'' इति । वैष्णवयागे तु ''उरुक्रमं विष्णुमावह'' इति । प्रयोगभेदाद्विश्वदेवावाहनेन विष्णोरावाहनं न सिध्यतीति सामिधेनीप्रयाजयोर्मध्यकाले वैश्वदेविकदेवतावाहनकाले पृथग्विष्णुमुद्दिश्य कार्यम् । अन्यथा तत्क्रतोर्वैगुण्यापातादिति **प्राप्ते सिद्धान्तः**, निमित्तनिश्चये सति नैमित्तिकविधिःप्रधाननैमित्तिककर्मचिकीर्षाद्वाराऽङ्गान्यनुष्ठापयति । प्रकृते च स्फ्याश्लेषादेर्निमित्तस्यावश्यम्भावाभावेन वैश्वदेविकदेवताह्वानकाले निमित्तानिश्चयेन तन्निमित्तकवैष्णवयागानिश्चयान्न प्रधानचिकीर्षेति न वैष्णवयागविधिरावाहनं प्रयोजयितुमलमिति कदाचित्स्फ्याश्लेषाभावेन यागाननुष्ठाने प्रागावाहिता देवता कुप्येदिति नावाहनं कार्यमिति । **फलन्त्वावाहनबाधः** । अत्रैके प्राग्देवताह्वानं कृत्वा पश्चाद्यागाकरणेपि न काचन क्षतिः । देवताचैतन्यस्य नवमाद्यपादे **देवता वा प्रयोजयेदतिथिवदिति** निरासेन कोपाप्रसक्तेरित्याहुः ।

**इति प्रथमं वैश्वदेवे चरौ विष्णोरावाहनबाधाधिकरणम् (सूत्राणि १-३) तृतीयवर्णकम्**



## अथ द्वितीयं दीक्षणीयादिष्वारम्भणीयाबाधाधिकरणम् (सूत्रम् ४)

**इष्टिरारम्भे संयोगादङ्गमभूतान्निवर्तेताऽरम्भस्य प्रधानसंयोगात् ॥ ४ ॥**

पूर्ववैषम्येणात्र शङ्कनात्सङ्गतिः । ''आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः'' इति दर्शपूर्णमासयोरारम्भणीयेष्टिर्विहिता । सा च विकृतिषु प्रवर्तत इति द्वादशस्य द्वितीये पादे **अन्वारम्भणीया विकृतौ** इत्यत्र वक्ष्यते । तथा च सेयमिष्टिः सोमयागाङ्गभूतदीक्षणीयादीष्टिषु दर्शपूर्णमासेष्टिविकृतिषु कर्तव्या न वेति **सन्देहे**, पूर्वत्र देवतावाहनकाले निमित्तानिश्चयेनाऽवाहनबाधेऽपीह दीक्षणीयादीनामनारब्धानामनुष्ठातुमशक्यतयाऽऽरम्भावश्यम्भावादारम्भरूपनिमित्ते सति तन्निमित्तकारम्भणीयेष्टिश्चोदकप्राप्ता दीक्षणीयादिषु कर्तव्येति **प्राप्ते सिद्धान्तः**, आरप्स्यमान इति शानच्प्रत्ययेनारम्भकर्तृपुरुषोऽभिधीयते । तत्समभिव्याहृताऽऽरम्भणीया च वाक्येनारम्भकर्तृपुरुषसंस्कारार्थाऽवगम्यते । न साक्षात्प्रयाजादिवत्क्रत्वङ्गम् । येन प्रयाजादिवच्चोदकतोऽङ्गभूतेष्विष्टिष्वपि स्यात् । किन्त्वारम्भरूपद्वारेणैव । तथा च साङ्गप्रधानविषयेणाऽद्यप्रवृत्तिरूपारम्भेणैव प्रसङ्गादङ्गानामप्यनुष्ठानसिद्धेर्दीक्षणीयाद्यङ्गानां पृथगारम्भाभावेनारम्भरूपद्वाराभावान्न कर्तव्या तत्रारम्भणीयेष्टिरिति । तदाह सूत्रे, **इष्टिरारम्भे संयोगादारम्भद्वारकत्वादङ्गभूताद्दीक्षणीयादितो निवर्तेत । तत्रारम्भस्य प्रधानेन संयोगात्** पृथगारम्भाभावादिति यावत् । नन्वेवं तदारम्भनिमित्तत्वेनापि कर्तव्यतया प्राप्तेति चेन्न । सोमस्यापूर्वत्वेन दर्शादीष्टिविकारत्वाभावात् । तद्विकारभूतप्रधानेष्टिषु तु स्यादेवेति । **फलन्तु** दीक्षणीयाद्यङ्गभूतेष्टिष्वारम्भणीयेष्टेर्बाधः ।

**इति द्वितीयं दीक्षणीयादिष्वारम्भणीयाबाधाधिकरणम् (सूत्रम् ४)**

## अथ तृतीयमनुयज्ञादिष्वारम्भणीयाबाधाधिकरणम् (सूत्रम् ५)

**प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्तेतानङ्गत्वात् ॥ ५ ॥**

अत्रापि पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''राजसूयेन स्वाराज्यकामो यजेत'' इति श्रुते राजसूये अनुमत्यादीन्यैष्टिककर्माणि पशुसोमदर्वीहोमादीन्यन्यान्यपि कर्माण्येकफलसाधनत्वेन श्रूयन्ते । तत्र दर्शपूर्णमासविकृतिभूतास्वनुमत्यादीष्टिष्वारम्भणीयेष्टिः कर्तव्या न वेति **सन्देहे**, युक्तं पूर्वत्र साङ्गप्रधानविषयेणैवारम्भेणानुष्ठानसिद्धेरङ्गानां पृथगारम्भाभावात्तन्निमित्तकारम्भणीयेष्ट्यप्रवृत्तिर्वैकृताङ्गभूतेष्विति । अत्र तु राजसूयेऽनुमत्यादीष्टीनामपि प्रधानत्वेन पृथगारम्भसम्भवाल्लुप्तद्वारत्वाभावेनारम्भणीया कर्तव्येति **प्राप्ते सिद्धान्तः**, प्रकृतौ हीष्टिमात्रविषयारम्भो द्वारमारम्भणीयेष्टेरवगतम् । अत्र

त्विष्टिपशुसोमानामेकप्रयोगभाजामेक एव व्यासक्तारम्भो न पृथक्पृथगारम्भः । तथा च प्रकृतौ क्लृप्तस्य केवलेष्टिविषयकस्यारम्भस्य द्वारभूतस्येह विकृतावनुमत्यादावभावेन द्वारलोपान्न कर्तव्येष्टिरिति । तदाह **सूत्रे, अन्यसंयुक्तात्सौमिकप्रधानान्तरसंयुक्तात्प्रधानादैष्टिकात्कर्म** आरम्भणीयाख्यं कर्म **निवर्तेत । सर्वारम्भात्** सर्वेष्विष्टिपशुसोमेष्वारम्भस्य व्यासज्यवृत्तित्वेन प्रत्येकारम्भाभावात् । आरम्भणीयायाश्च साधारणारम्भानङ्गत्वादिति । फलं त्विष्टेर्बाधः ।

इति तृतीयमनुयज्ञादिष्वारम्भणीयाबाधाधिकरणम् (सूत्रम् ५)

## अथ चतुर्थमारम्भणीयायामारम्भणीयाबाधाधिकरणम् (सूत्राणि ६-८)

**तस्यां तु स्यात्प्रयाजत् ॥ ६ ॥**

**(न वाऽङ्गभूतत्वात् ॥ ७ ॥ एकवाक्यत्वाच्च ॥ ८ ॥)**

अत्रापि पूर्ववैषम्येण शङ्कनात्सङ्गतिः । आरम्भणीयायामारम्भणीया कर्तव्या न वेति **सन्देहे,** अस्या अपीष्टित्वेन दर्शपूर्णमासविकृतित्वेन चोदकतस्तदङ्गभाक्त्वात्तत्रापि सा कर्तव्यति **प्राप्तम् ।** पूर्वत्रानुमत्यादेः समुदायारम्भात्पृथगारम्भाभावेऽपीह ''दर्शपूर्णमासावारप्स्यमानः'' इति भविष्यदवस्थापन्ने दर्शपूर्णमासारम्भे आग्नावैष्णवमित्यारम्भणीयेष्टेर्विधानेन दर्शपूर्णमासेष्टयारम्भयोग्यतासम्पादकतया कर्तृसंस्कारकत्वेन दर्शाद्यारम्भात्प्रागेव पृथगारम्भसम्भवेनालुप्तद्वारत्वात् । न चैवमनवस्था । दर्शाद्यनुष्ठानदिवसे यावत्यः कर्तुं शक्यास्तावतीनामेव तृतीयस्य षष्ठे पादे **तासामग्निः प्रकृतितः प्रयाजवत्** इति पवमानेष्टयधिकरणपूर्वपक्षोक्तदिशा कार्यत्वेनानवस्थाभावात् । न चैवं तेनैव गतार्थम् । पवमानेष्टीनामग्न्यर्थत्वेन दर्शपूर्णमासानङ्गतयाऽनतिदेशेऽप्यस्या इष्टेर्दर्शाद्यङ्गत्वेन प्रयाजादिवदतिदेशः स्यादित्यधिकाशङ्कयाऽस्योत्थानात् । तदाह **सूत्रे,** तस्यामारम्भणीयायामारम्भणीया **स्यात्प्रयाजादिवदिति । सिद्धान्तस्तु,** यद्यपीयमिष्टिरिष्टित्वेन दर्शपूर्णमासविकृतित्वात्तदङ्गान्यतिदेशतो भजते । तथाऽप्यारम्भणीयां दर्शपूर्णमासाङ्गभूतामपि न भजते । किन्तु तदन्यप्रयाजान्येव । कुतः? स्वविधिवेलायां स्वस्य दर्शपूर्णमासाङ्गत्वेनानिर्ज्ञातत्वात् । निर्ज्ञाताङ्गान्येव हीतिकर्तव्यतात्वेन विधिर्गृह्णाति । न ह्येतदेवाऽग्नावैष्णवमिति वाक्यं कर्तृसंस्कारद्वारा दर्शाङ्गत्वेनेष्टिं विदधत्तद्विकृतित्वेन तदङ्गभूतामेतामेवेष्टिमतिदेशेनैतदङ्गतया गृहीतुं शक्नोति । तस्मात्तत्र सा न कर्तव्येति ।

इति चतुर्थमारम्भणीयायामारम्भणीयाबाधाधिकरणम् (सूत्राणि ६-८)



## अथ पञ्चमं खलेवाल्यां यूपाहुतिबाधाधिकरणम् (सूत्रम् ९)

**कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत तादर्थ्यं श्रुतिसंयोगात् ॥ ९ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । साद्यस्कनामके यागे ''खलेवाली यूपो भवति'' इति श्रूयते । धान्यानां प्रहरणस्थलं खलम् । तस्मिन् खले पादघातैः पलालेभ्यो धान्यमोचनाय बलीवर्दबन्धनार्थं स्थापितो मेढिः **खलेवालीत्युच्यते ।** प्रकृतावग्नीषोमीयपशौ यूपमाप्तुं गमिष्यतः पुरुषस्य यूपाहुतिर्विहिता ''यूपमच्छैष्यता होतव्यम्'' इति । सा किं खलेवाल्यां कर्तव्या न वेति **संशये, पूर्वत्रारम्भणीयेष्टा-**वारम्भणीयानतिदेशेऽपीह खलेवाल्यामग्नीषोमीयप्रकृतितो यूपधर्माणामतिदेशसम्भवेन चोदकतो यूपाहुतेरपि प्राप्तत्वाकर्तव्येति **प्राप्ते सिद्धान्तः,** यूपमच्छैष्यतेति होमविधिवाक्यस्य खादिरादिकाष्ठविशेषं शास्त्रीयछेदनादिसंस्कारैर्यूपं कर्तुं गमिष्यता तस्य काष्ठस्य शास्त्रीयछेदन- योग्यतायै तत्सन्निधौ मथिताग्नौ होमः कार्य इत्यर्थकत्वाच्छेदनार्थो होमोऽवगम्यते । न चेह खलेवाल्यां छेदनमस्ति । प्रागेव कृषीवलेन छित्वा स्थापितत्वात् । तस्माच्छेदनरूपद्वाराभावेनानतिदेशान्न कर्तव्या यूपाहुतिरिति । तदाह **सूत्रे, द्रव्यसंयोगार्थं** द्रव्यस्य यूपस्य प्राप्त्यर्थं यद्गमनं तदर्थं **कर्म** यूपाहुतिरूपं **अर्थाभावात्तद्दशगमनाभावान्निवर्तेत ।** तादर्थ्यञ्च तादृशगमनार्थत्वञ्च तस्य लृट्श्रुतिसंयोगादिति । फलन्तु यूपाहुतिबाधः ।

इति पञ्चमं खलेवाल्यां यूपाहुतिबाधाधिकरणम् (सूत्रम् ९)

## अथ षष्ठं साद्यस्के खलेवाल्यां स्थाण्वाहुतिबाधाधिकरणम् (सूत्राणि १०-१३)

**स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥ १० ॥**

**(अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत ॥ ११ ॥ समाख्यानञ्च तद्वत् ॥ १२ ॥ मन्त्रवर्णश्च तद्वत् ॥ १३ ॥)**

अत्रापि पूर्ववैषम्येण शङ्कनात्सङ्गतिः । प्रकृतावग्नीषोमीयपशौ ''स्थाण्वाहुतिं जुहोति'' इति स्थाण्वाहुतिर्विहिता । च्छिन्नाद्यूपार्थवृक्षादवशिष्टं भूमौ रूढमूलं **स्थाणुरुच्यते ।** तत्र क्रियमाणाऽऽहुतिः **स्थाण्वाहुतिः ।** सा किं खलेवाल्यां कर्तव्या न वेति **सन्देहे,** पूर्वत्र यूपाहुतेर्यूपस्य शास्त्रीयछेदनयोग्यतायै सन्निपात्यङ्गत्वेन खलेवाल्यां च्छेदनरूपद्वाराभावेनाकर्तव्यत्वेऽपीह ''बृहस्पते शतवल्शो विरोहेत्याव्रश्चने जुहोति'' इति वाक्ये ''आवृश्च्यते छिद्यते यूपोऽत्र'' इति व्युत्पत्त्या आव्रश्चनशब्दोक्तस्थाणुसामान्य एव होमविधानेन यूपच्छेदनाधिकरणस्थाणावेव होम इत्यत्र प्रमाणाभावाद्यूपार्थं छिन्नवृक्षाद्वियोजिते स्थाणौ

कृतहोमस्य यूपसंस्कारकत्वायोगेनाऽरादुपकारकत्वावश्यम्भावाद्यस्मिन् कस्मिन्नपि स्थाणौ कर्तव्येति विकृतावपि खलेवाल्यां यत्र क्वचित्कृतत्वमात्रेण तदुपकारकत्वसम्भवात्कर्तव्यैव खलेवाल्यां स्थाण्वाहुतिरिति **प्राप्तम् । तदाह सूत्रे, देशमात्रार्थत्वात्स्थाणोराधारत्वेन** गुणतया संस्कार्यत्वाभावा**त्स्थाणावाहुत्यनिवृत्तिः प्रतीयेतेति । सिद्धान्तस्तु,** स्थाण्वाहुतिविधिवाक्यस्योक्तरीत्या स्थाणुसामान्यपरत्वप्रतीतावप्यवान्तरप्रकरणेन यूपव्रश्चनस्थाणोरेवात्र ग्रहणं युक्तम् । तथा च यथा यूपसम्बन्धिनि मथिताग्नौ क्रियमाणाया अपि यूपाहुतेर्यूपसन्निधिमात्रेण यूपसंस्कारकतया सन्निपात्यङ्गत्वं तथा स्थाण्वाहुतेरपि यूपार्थच्छिन्नदारुवियोजनावधिभूतस्थाणौ क्रियमाणाया अपि यूपार्थदारुसन्निधानाद्यूपसंस्कारकत्वेन सन्निपात्यङ्गत्वसम्भवे आरादुपकारकाङ्गत्व कल्पनायोगात् । तादृशस्य च स्थाणोः खलेवाल्यामभावान्न कर्तव्या तत्र स्थाण्वाहुतिरिति ।

**इति षष्ठं साद्यस्के खलेवाल्यां स्थाण्वाहुतिबाधाधिकरणम् (सूत्राणि १०-१३)**

## अथ सप्तममुत्तमप्रयाजस्य संस्कारकर्मताधिकरणम् (सूत्रे १४-१५)

**प्रायाजे च तन्न्यायात् ॥ १४ ॥**

**(लिङ्गदर्शनाच्च ॥ १५ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोः ''स्वाहाकारं यजति'' इति पञ्चमः प्रयाजः श्रुतः । स किं समिदादिवद्दर्शपूर्णमासयोरारादुपकारकः, उत यक्ष्यमाणाग्न्यादिरूपाज्यभागादिदेवतानामव्यवधानेन स्मरणरूपसंस्कारद्वारा सामवायिक इति सन्देहे, यजतीति तावद्यागविधिः । तत्र च जौहवाद्याज्यस्य द्रव्यस्य लाभेऽपि देवताकांक्षायामपेक्षिता देवता स्वाहाकारपदेन विधीयते । न चेदं स्वाहाकारपदं ''स्वाहाऽग्निं, स्वाहा सोमं, स्वाहा प्रजापतिं, स्वाहाऽग्नीषोमौ, स्वाहेऽन्द्रम्'' इत्यादिमन्त्रवर्णप्राप्तदेवताप्राप्त्या नामधेयमिति शङ्क्यम् । वचनेनैव झटिति देवताप्राप्त्यैवाकांक्षाशान्तौ प्रकरणविनियोज्यमन्त्रान्वयानुपपत्तिवशेन मान्त्रवर्णिकदेवताकल्पनस्यानुचितत्वात् । न चैवं विधिमन्त्रयोर्वैयधिकरण्यापत्तिः । विधिना स्वाहाकारदेवताविधानात् । प्रकरणविनियुक्तमन्त्रे च यक्ष्यमाणाज्यभागादिदेवतानामग्न्यादीनां प्रकाशनादिति वाच्यम् । यथा हि मातृशब्दो धान्यमातारं जननीञ्च वक्ति, एवं मन्त्रवर्णस्थाग्न्यादिशब्दोऽपि रूढ्या स्वाहाकारदेवतां प्रतिपादयतीति समानार्थकत्वसम्भवात् । न च स्वाहाकारदेवतैव यागेन संस्क्रियतामिति वाच्यम् । स्वाहाकारस्य क्वाप्यदेवतात्वेन तस्याः स्मरणरूपसंस्कारस्य व्यर्थत्वाद्देवताविधिरेवेति न कस्या अपि देवतायाः संस्कारकः । अतः स्थाण्वाहुतेरारा-



दुपकारकत्वाभावेऽपीष्टेरारादुपकारक एव पञ्चमः प्रयाज इति **प्राप्ते सिद्धान्तः,** ''तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः । देवतासङ्गतिः'' इत्युक्तदिशाऽत्र देवताबोधकतद्धितादेरभावाद्यागविधावुपक्षीणस्य विधेर्देवताविधावप्यशक्तत्वाद्विशिष्टविधेश्च केवलयागविधिनैवोपपत्त्या गौरवपराहतत्वात् । तस्मात्प्रकरणविनियुक्तमन्त्रवर्णसम्बन्धनिमित्तं ''स्वाहेति कृतिः करणं यस्मिन् कर्मणि'' इति व्युत्पत्त्या नामधेयमेव यागस्य स्वाहाकारपदमिति ''स्वाहाऽग्निं'' इत्यादिमन्त्रेण क्रियमाणः स्वाहाकारनामकः पञ्चमः प्रयाजो यथाक्रमं यक्ष्यमाणाज्यभागादिदेवतानामग्न्यादीनां स्मरणरूपसंस्कारार्थ इति सामवायिक एव, नाऽरादुपकारक इति । तदाह सूत्रे, **उत्तमप्रायाजे च संस्कारकर्मता स्यात् ।** स्थाण्वाहुताविव दृष्टे सम्भवत्यदृष्टकल्पना न युक्तेति **न्यायादिति । फलन्तु,** विकृतिषु सौर्यादियागेष्वग्न्यादिदेवताभावादग्न्यादिपदानां मन्त्रे परित्यागः ।

**इति सप्तममुत्तमप्रयाजस्य संस्कारकर्मत्वाधिकरणम् (सूत्रे १४-१५)**

## अथाष्टममग्नियागस्यारादुपकारकताधिकरणम् (सूत्रे १६-१८)

**तथाऽऽज्यभागाग्निरपीति चेत् ॥ १६ ॥**

**(व्यपदेशाद्वा देवतान्तरम् ॥ १७ ॥ समत्वाच्च ॥ १८ ॥)**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोः ''आज्यभागौ यजति'' इति विहितावाज्यभागौ प्रकृत्य श्रूयते ''अग्नीषोमाभ्यां यजति'' इति । तत्र तयोः प्रथम आग्नेयः । द्वितीयः सौम्यः । तत्र सौम्ये नास्ति सन्देहः । प्रधानकर्मणि केवलसोमदेवताया अभावात् । तत्र य आग्नेययागः स किमारादुपकारको दर्शादीष्टेः, उत प्रधानाग्नेययागदेवताया अग्नेः प्रकाशनरूपसंस्कारक इति सन्देहे, दृष्टे सम्भवत्यदृष्टकल्पनाऽयोगादिति पूर्वोक्तन्यायेन यक्ष्यमाणाग्निदेवतास्मरणेन तत्संस्कारकत्व रूपदृष्टप्रयोजने सम्भवति नादृष्टहेतुतयाऽऽरादुपकारकत्वकल्पना युक्तेति **प्राप्ते सिद्धान्तः,** आवाहनमन्त्रस्वाहाकारमन्त्रस्विष्टकृन्निगदसूक्तवाकेषु मन्त्रेषु ''अग्ने अग्निमावह । सोममावह । अग्निमावह'' इत्यादिरूपेण ''हे होमाधारभूताग्ने अग्निः सोमः अग्निः इति त्रीन् इहेष्टावावह'' इत्यादिरूपेण द्विरग्निश्रवणेन सोमात्परतः श्रुतप्रधानाग्नेययागदेवतातोऽग्नेः सोमात्पूर्वं श्रुतोऽग्निराज्यभागदेवता पृथगित्यवगम्यते । अन्यथा द्विरुक्तिवैयर्थ्यापत्तेः । तथा ''अग्नीषोमाभ्यां यजति'' इति वाक्ये सोमस्येवाग्नेरपि चतुर्थ्या यागं प्रति देवतात्वेन गुणत्वं स्पष्टमेव प्रतीयते । तस्मान्न प्रधानदेवताया अग्नेः संस्कारकः । किन्त्विष्टेरारादुपकारक एवेति । तदाह **सूत्रे, आज्यभागगताग्निरपि तथा** स्वाहाकारमन्त्रगताग्निरिव संस्कार्य इति **चेन्न । व्यपदेशाद्वा**

देवतान्तरमिति । फलन्तु सौर्यादिविकृतियागेष्वाज्यभागदेवतावाहननिगदे नाग्निपदस्य निवृत्तिरूपो बाध इति ।

इत्यष्टममग्नियागस्यारादुपकारकताधिकरणम् (सूत्राणि १६-१८)

**पशावपीति चेत् ॥ १९ ॥**

**(न तद्भूतवचनात् ॥ २० ॥ लिङ्गदर्शनाच्च ॥ २१ ॥ गुणो वा स्यात्कपालवद्गुणभूतविकाराच्च ॥ २२ ॥ अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत स्वाहाकारवदङ्गानामर्थसंयोगात् ॥ २३ ॥ व्यृद्धवचनश्च विप्रतिपत्तौ तदर्थत्वात् ॥ २४ ॥ गुणेऽपीति चेत् ॥ २५ ॥ नासंहानात्कपालवत् ॥ २६ ॥ ग्रहाणाञ्च सम्प्रतिपत्तौ तद्वचनं तदर्थत्वात् ॥ २७ ॥ ग्रहाभावे च तद्वचनम् ॥ २८ ॥ देवतायाश्च हेतुत्वं प्रसिद्धं तेन दर्शयति ॥ २९ ॥ अविरुद्धोपपत्तिरर्थापत्तेः शृतवद्गुणभूतविकारः स्यात् ॥ ३० ॥ स व्यर्थः स्यादुभयोः श्रुतिभूतत्वाद्विप्रतिपत्तौ तादर्थ्याद्विकारत्वमुक्तं तस्यार्थवादत्वम् ॥ ३१ ॥ विप्रतिपत्तौ तासामाख्याविकारः स्यात् ॥ ३२ ॥ अभ्यासो वा प्रयाजवदेकदेशोऽन्यदैवत्यः ॥ ३३ ॥)**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । ज्योतिष्टोमे अग्नीषोमीयपशौ पुरोडाशः श्रूयते ''अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति'' इति । स किं पशोरारादुपकारकः, उत पशुदेवताभूताग्नीषोमसंस्कारक इति **सन्देहः । पूर्वपक्षस्तु,** ''यो दीक्षितोऽग्नीषोमीयं पशुमालभेत'' इति ''अग्नीषोमीयं पशुपुरोडाशं निर्वपति'' इत्युभयत्रापि तद्धितनिर्देशेनोभयत्रापि देवताया गुणत्वेन भिन्नभिन्नदेवतात्वेनैवावगमान्नान्यदन्यदेवतासंस्कारकम् । किञ्च ''आसोमं वहन्त्यग्निना प्रतितिष्ठति'' इति वाक्यशेषाल्लतारूपस्सोमः प्रणीयमानोऽग्निश्च पशुयागे देवते । न हि तावेव पशुपुरोडाशे देवते इत्यत्र मानमस्ति । अतस्तद्देवतातोऽपि भिन्नैव पुरोडाशे देवतेति न तद्देवतासंस्कारः पशुपुरोडाशः । किन्तु पूर्वत्र प्रथमाग्नेयाज्यभागवदारादुपकारक एवेति । **सिद्धान्तस्तु,** दृष्टे देवतास्मरणरूपे संस्कारे सम्भवत्यदृष्टहेत्वारादुपकारकत्वकल्पनायोगात्पशुयागस्य ज्योतिष्टोमप्रकरणपाठेन तदङ्गत्वेन निर्णीतस्य पुरोडाशदेवतासंस्कारकत्वस्यानाशङ्क्यत्वात्पशुपुरोडाशस्याप्युभयतः पठितपशुधर्ममध्ये पठितत्वेन पशुदेवताया एव तद्धितान्ताग्नीषोमीयपदेन स्मारणसम्भवात्संस्कारक एव पशुपुरोडाशो नारादुपकारक इति तदाह **सूत्रे, पशावपि** पुरोडाशयाग आग्नेयाज्यभागवदुपकारक **इति चेन्न । तद्भूतवचनात्** ''आसोमं



वहन्ति'' इति प्रागुक्तार्थवादवचनादित्यर्थः । तत्र सोमलतायाः प्रणीयमानाग्नेश्च देवतात्वेन तयोरेव पशुपुरोडाशेऽनुवादादिति भावः । फलन्तु, अग्नीषोमीयपशुविकृतौ वायव्यादिपशौ संस्कार्ययोरग्नीषोमयो र्निवृत्तिरिति ।

इति नवमं पशुपुरोडाशयागस्य देवतासंस्कारकताधिकरणम् (सूत्राणि १९-३३)

अथ दशमं सौर्यं चरुं निर्वपेदित्यत्र चरुशब्दस्यौदनवाचिताधिकरणम् (सूत्राणि ३४-४४)

**चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥ ३४ ॥**

**(प्रसिद्धग्रहणत्वाच्च ॥ ३५ ॥ ओदनो वाऽन्नसंयोगात् ॥ ३६ ॥ न द्व्यर्थत्वात् ॥ ३७ ॥ कपालविकारो वा विशयेऽर्थोपपत्तिभ्याम् ॥ ३८ ॥ गुणमुख्यविशेषाच्च ॥ ३९ ॥ तच्छ्रुतौ चान्यहविष्ट्वात् ॥ ४० ॥ लिङ्गदर्शनाच्च ॥ ४१ ॥ ओदनो वा प्रयुक्तत्वात् ॥ ४२ ॥ अपूर्वव्यपदेशाच्च ॥ ४३ ॥ तथा च लिङ्गदर्शनम् ॥ ४४ ॥)**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । ''सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः'' इत्यत्र चरुशब्दः किं स्थालीवचनः, उतौदनवाची । यदा स्थालीवचनस्तदापि किं पुरोडाशरूपहविर्विकारः, किं वा कपालविकार इति **सन्देहः । पूर्वपक्षस्तु,** चरुशब्दस्य स्थाल्यां प्रयोगात्स्थालीवचनः । याज्ञिकानामोदने चरुशब्दप्रयोगस्तु स्थाल्यां पक्व एवौदने चरुपदप्रयोगेण केवलौदने प्रयोगाभावात्स्थालीसम्बन्धनिमित्तको लाक्षणिक इति स्थालीवचनः सन्ननदनीयतया हविष्ट्वायोग्योऽपि चरुः श्रपणसाधनयोग्यतया कपालविकारः । सौर्यमिति तद्धितनिर्देशस्तु स्थाल्याः सूर्यसम्बन्धभावेन तस्येदमिति सम्बन्धमात्रार्थः । एवञ्च पूर्वत्र यथा देवतान्तरयुक्तविकृतिष्वग्नीषोमयोर्बाधस्तथा सौर्यचरावप्याग्नेयरूपप्रकृतितश्चोदकप्राप्तकपालानां बाध **इत्येकः ।** सौर्यमिति तद्धितप्रत्ययः ''साऽस्य देवता'' इति देवतार्थे विहितो न सम्बन्धमात्रार्थ उपेयः । प्रत्यक्षयज्यश्रवणेन द्रव्यदेवतासम्बन्धेनैवात्र यागस्यानुमेयत्वेन सम्बन्धमात्रार्थत्वे याग एवात्र न सिध्येत् । तथा च देवतासंयोगादनदनीयापि चरुशब्दितस्थाली वचनबलात्कृष्णलवद्धविरेवेति पुरोडाशविकारस्सन् पुरोडाशनिवर्तक इति **द्वितीयः । तदाह सूत्रे,** सौर्यमिति देवतातद्धितानुमितेज्याशब्दितयाग**संयोगाच्चरुः प्राकृतहविर्विकारः स्यादिति । सिद्धान्तस्तु, शास्त्रस्था वा तन्निमित्तत्वात्** इति स्मृतिपादीयाधिकरणे बलवत्वेन निर्णीतया अनिस्सारितयवागूके अन्ने चरुशब्दस्य याज्ञिकप्रसिध्या ''आदित्यः प्रायणीयश्चरुः'' इति विधिशेषे ''अदितिमोदनेन'' इत्यनुवादेन वैदिकप्रसिद्ध्या चरुशब्दस्यौदनार्थत्वमेव ग्राह्यम् । न चामरप्रसिध्या स्थालीपरत्वमिति, प्राकृतपुरोडाशविकारश्चरुशब्दित ओदन

इति पुरोडाशनिवृत्तिरिति । फलन्तु आद्यपूर्वपक्षे स्थाल्या कपालनिवर्तनात्तस्यां चोदकप्राप्तः पुरोडाशः श्रपणीय इति । पेषणसंयवनोपधानानि कार्याणि द्वितीयपक्षे । सिद्धान्ते च पुरोडाशस्यैव निवृत्तिरिति पेषणादीन्यर्थलोपान्न कार्याणीति ज्ञेयम् ।

इति दशमं सौर्यं चरुं निर्वपेदित्यत्र चरुशब्दस्यौदनवाचिताधिकरणम् (सूत्राणि ३४-४४)

### अथैकादशं सौर्यचरोः स्थाल्यामेव पाकाधिकरणम् (सूत्राणि ४५-४८)

**स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतत्वात् ॥ ४५ ॥**

**(एकस्मिन् वा विप्रतिषेधात् ॥ ४६ ॥ न वाऽर्थान्तरसंयोगादपूपेपाकसंयुक्तं धारणार्थं चरौ भवति तत्रार्थात्पात्रलाभः स्यादनियमोऽविशेषात् ॥ ४७ ॥ चरौ वा लिङ्गदर्शनात् ॥ ४८ ॥)**

पूर्ववैषम्येणात्र शङ्कनात्सङ्गतिः । सौर्यवाक्यश्रुतश्चरुशब्दित ओदनः किं यत्र क्वच पक्तव्यः, उत कपाले, किं वा स्थाल्यामिति **सन्देहः** । **पूर्वपक्षस्तु,** प्रकृतियागादाग्नेयाच्चोदकतः कपालप्राप्तेस्तत्रैव चरुः श्रपयितव्यः । यद्यप्यष्टाकपाल इत्येकपदम् । विशिष्टे सङ्ख्याकपाले द्वे अपि युगपच्चोदकेन प्राप्नुत इति पुरोडाशस्येव चरोरनेककपालेषु पाको न सम्भवति तथाप्यष्टत्वसङ्ख्याया ।

असम्भवात्तन्मात्रमेव निवर्तते, न कपाल इति, सौर्यचरौ पुरोडाशस्य बाधेऽपि न कपालस्य बाध इति महत्येकस्मिन् कपाले चरुः पक्तव्यः **इत्येकः** । तदाह सूत्रे, स पाकः **कपाले प्रकृतिवत्स्यादन्यस्य** पाकसाधनस्याश्रुतत्वदिति । यदि प्रकृताविव कपालगतोष्मणा चरुः पच्येत तदा चोदकः कपालमिति निर्दिशेत् । न चैवम् । किन्तूदकगतोष्मणैव चरुः पक्तव्यः । तत्रोदकधारणार्थमुपादीयमानं कपालमप्राकृतकार्यं स्यादिति न चोदकतः कपालप्राप्तिरिति यत्र क्वचित्पक्तव्यश्चरुरिति **द्वितीयः** । **सिद्धान्तस्तु,** अनिस्सारितस्थालीगतोदकोष्मपक्व एवौदने याज्ञिकानां चरुशब्दप्रयोगात्स्थाल्यामेव चरोः पाको न यत्र क्वचिदिति ।

इत्येकादशं सौर्यचरोः स्थाल्यामेव पाकाधिकरणम् (सूत्राणि ४५-४८))

### अथ द्वादशं सौर्यचरौ पेषणबाधाधिकरणम् (सूत्रे ४९-५०)

**तस्मिन् पेषणमनर्थलोपात्स्यात् ॥ ४९ ॥**



**(अक्रिया वाऽपूपहेतुत्वात् ॥ ५० ॥)**

''सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः'' इति सौर्यश्चरुर्विहितः । ओदनेन हविर्हि क्रियते इति समधिगतम् । पेषणं चूर्णनम् । चरौ पेषणं कर्तव्यं न वेति **सन्देहः** । तण्डुलेषु हि पेषणं कर्तुं शक्यते । अतः कर्तव्यमिति **प्राप्तम्** । **सिद्धान्तस्तु,** यद्यपि शक्यते कर्तुम् । तथापि न क्रियते । अपूपः पेषणेन विना न निर्वर्तते । ओदनस्तु विनैव पेषणेन भवति । कामं पेषणेन व्याहन्यते । पिष्टकं यवागूर्वा स्यात्खलिर्वा । तस्माच्चरोः पेषणं निवर्ततेति ।

इति द्वादशं सौर्यचरौ पेषणबाधाधिकरणम् (सूत्रे ४९-५०)

### अथ त्रयोदशं सौर्यचरौ संयवनबाधाधिकरणम् (सूत्रम् ५१)

**पिण्डार्थत्वाच्च संयवनम् ॥ ५१ ॥**

प्रकृतौ श्रूयते ''प्रणीताभिर्हवींषि संयौति'' इति । पिष्टस्योदकमिश्रणं **संयवनम्** । तत्संयवनमिह सौर्यचरौ कर्तव्यं न वेति **सन्देहः** । शक्यते हि कर्तुं संयवनम् । अतः कर्तव्यमिति ।

**प्राप्तम्** । **सिद्धान्तस्तु,** पिण्डार्थं हि संयवनं कर्तव्यम् । पिण्डेन चापूपस्य प्रयोजनं भवति । न चरोः । अतो न कर्तव्यमिति ।

इति त्रयोदशं सौर्यचरौ संयवनबाधाधिकरणम् (सूत्रम् ५१)

### अथ चतुर्दशं सौर्यचरौ संवपनबाधाधिकरणम् (सूत्रम् ५२)

**संवपनश्च तादर्थ्यात् ॥ ५२ ॥**

प्रकृतौ श्रूयते ''सवितृप्रसूत इत्यैवैनं देवताभिः संवपति'' इति । उदकमिश्रणाय पिष्टस्य पात्रे निक्षेपः **संवपनम्** । सौर्यचरौ संवपनं कर्तव्यं न वेति **सन्देहः** । शक्यत्वाच्चोदकवाक्यानुग्रहाय च कर्तव्यमिति **प्राप्तम्** । **सिद्धान्तस्तु,** संयवितुं हि प्रकृतौ क्रियते । न चरोः संवप्तव्येन प्रयोजनमस्ति । अतो न कर्तव्यमिति ।

इति चतुर्दशं सौर्यचरौ संवपनबाधाधिकरणम् (सूत्रम् ५२)

### अथ पञ्चदशं सौर्यचरौ सन्तापनबाधाधिकरणम् (सूत्रम् ५३)

**सन्तापनमधःश्रपणात् ॥ ५३ ॥**

प्रकृतौ श्रूयते ''वसूनां रुद्राणामादित्यानां भृगूणामङ्गिरसां धर्मस्य तपसा तप्यध्वम्'' इति । कपालानामङ्गारैः प्रतापनं सन्तापनम् । सौर्यचरौ सन्तापनं कर्तव्यं न वेति सन्देहः । प्रकृतिवद्वचनात्कर्तव्यमिति प्राप्तम् । सिद्धान्तस्तु, कपालादधः पाकार्थं हि सन्तापनं क्रियते । तस्मादुपरि सन्तप्तव्ये चरौ चोदकं न प्रापयति । तस्मान्न कर्तव्यमिति ।

इति पञ्चदशं सौर्यचरौ सन्तापनबाधाधिकरणम् (सूत्रम् ५३)

### अथ षोडशं सौर्यचरावुपधानबाधाधिकरणम् (सूत्रम् ५४)

**उपधानञ्च तादर्थ्यात् ॥ ५४ ॥**

सौर्यचरावेवोपधानं कर्तव्यं न वेति सन्देहः । अङ्गारेषु कपालस्थापनमुपधानम् । प्रकृतिवद्वचनात्कर्तव्यमिति प्राप्तम् । सिद्धान्तस्तु, अधःपाकार्थत्वान्न कर्तव्यमिति ।

इति षोडशं सौर्यचरावुपधानबाधाधिकरणम् (सूत्रम् ५४)

### अथ सप्तदशं सौर्यचरौ पृथुश्लक्ष्णबाधाधिकरणम् (सूत्रम् ५५)

**पृथुश्लक्ष्णे वाऽनपूपत्वात् ॥ ५५ ॥**

प्रकृतौ श्रूयते ''उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति । सं ते तन्वा तनूः सृज्यतामिति त्रिभिः परिमार्ष्टि'' इति । कपालेष्ववस्थापितस्य पुरोडाशस्य हस्तसङ्घट्टनेन सर्वेषु कपालेषु प्रसारणं पृथुभावः । मार्जनं श्लक्ष्णीभावकरणम् । सौर्ये चरौ पृथुभावः श्लक्ष्णभावश्च कर्तव्यौ न वेति सन्देहः । चोदहानुग्रहाय कर्तव्याविति प्राप्तम् । सिद्धान्तस्त्वनपूपत्वान्न कर्तव्याविति ।

इति सप्तदशं सौर्यचरौ पृथुश्लक्ष्णबाधाधिकरणम् (सूत्रम् ५५)

### अथाष्टादशं सौर्यचरावभ्यूहबाधाधिकरणम् (सूत्रम् ५६)

**अभ्यूहश्चोपरि पाकार्थत्वात् ॥ ५६ ॥**



प्रकृतौ श्रूयते ''वेदेन भस्मनाऽङ्गारानभ्यूहति'' इति । भस्मना अङ्गारैश्चोपर्याच्छादनमभ्यूहः । स च सौर्यचरौ कर्तव्यो न वेति सन्देहः । प्रकृतिवद्वचनात्कर्तव्य इति प्राप्तम् । सिद्धान्तस्तु, पुरोडाशस्योपरि पाकार्थो ह्यभ्यूहः क्रियते । न चरोः परिपाकोऽपेक्षितः । अतो न कर्तव्य इति ।

इत्यष्टादशं सौर्यचरावभ्यूहबाधाधिकरणम् (सूत्रम् ५६)

### अथैकोनविंशं सौर्यचरावववज्वलनबाधाधिकरणम् (सूत्रम् ५७)

**तथाऽवज्वलनम् ॥ ५७ ॥**

दर्शपूर्णमासयोः श्रूयते ''दर्भपिञ्जूलैरवज्वलयति'' इति । दर्भपिञ्जूलैः प्रज्वालनमवज्वलनम् । तत्किं सौर्यचरौ कर्तव्यं न वेति सन्देहः । प्रकृतिवद्वचनात्कर्तव्यमिति प्राप्तम् । सिद्धान्तस्तु, उपरि पाकार्थत्वान्न कर्तव्यमिति ।

इत्येकोनविंशं सौर्यचरावववज्वलनबाधाधिकरणम् (सूत्रम् ५७)

### अथ विंशं सौर्यचरौ व्युद्धृत्यासादनबाधाधिकरणम् (सूत्रम् ५८)

**व्युद्धृत्यासादनञ्च प्रकृतावश्रुतित्वात् ॥ ५८ ॥**

प्रकृतौ श्रूयते ''अन्तर्वेद्यां हवींष्यासादयति'' इति । कपालेभ्यः पुरोडाशं पृथक्कृत्यान्तर्वेद्यामवस्थापनं व्युद्धृत्यासादनम् । तच्च सौर्ये चरौ कर्तव्यं न वेति सन्देहः । प्रकृताविव कर्तव्यमिति प्राप्तम् । सिद्धान्तस्तु, तदिदं व्युद्धृत्यासादनं प्रकृतौ न श्रूयते । कपित्थवत्परिशोष्यकरणे कपालभेदः स्यात् । अर्थात्पूर्वमेव क्रियते । तस्य चोद्धरणस्यार्थिकत्वात् न कर्तव्यत्वमिति ।

इति विंशं सौर्यचरौ व्युद्धृत्यासादनबाधाधिकरणम् (सूत्रम् ५८)

**इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्यश्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते दशमाध्यायस्य प्रथमः पादः**

अस्मिन् पादे अधिकरणानि २० सूत्राणि ५८

आदितः अधिकरणानि ६१७ सूत्राणि १८०९

## अथ दशमाध्याये द्वितीयः पादः

हरिः ओं। पूर्वपादे बाधः प्रधान्येन चिन्तितः। अत्र पादे तदपवादश्चिन्त्यत इति सङ्गतिरर्थभेदश्च ज्ञेयः।

### अथ प्रथमं कृष्णले चरौ पाकानुष्ठानाधिकरणम् (सूत्रे १-२)

**कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥**

**(स्याद्वा प्रत्यक्षशिष्टत्वात्प्रदानवत् ॥ २ ॥)**

प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः'' इति श्रुतकृष्णलशब्दितस्वर्णमाषेषु पाकः कार्यो न वेति **सन्देहे**, पाको हि नाम रूपरसादीनां पूर्वेषां तिरोधानेनापूर्वाणां प्रादुर्भावरूपविक्लित्तिः। एवंरूपपाकस्य कृष्णलेष्वसम्भवान्न कर्तव्यः पाक इति **प्राप्तम्**। तदाह **सूत्रे, अर्थलोपाद्विक्लित्ति-रूपार्थलोपान्न पाकः स्यादिति। सिद्धान्तस्तु**, मुख्यस्य विक्लित्तिरूपपाकस्यायोगेऽपि ''घृतेश्रपयति'' इति वचनबलादमुख्यस्याप्युष्णीकरणमात्ररूपपाकस्य सम्भवात्कर्तव्यः पाकः। उष्णीकरणमेव पाकशब्दार्थ इति पक्षे तु मुख्य एव पाक इति। तदाह **सूत्रे, स्याद्वा प्रत्यक्षशिष्टत्वात्प्रदानवदिति**। अनदनीयस्यापि यथा प्रदानं तद्वदित्यर्थः।

इति प्रथमं कृष्णले चरौ पाकानुष्ठानाधिकरणम् (सूत्रे १-२)

### अथ द्वितीयं कृष्णले उपस्तरणाभिघारणयोर्बाधाधिकरणम् (सूत्राणि ३-१२)

**उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् ॥ ३ ॥**

**(क्रियेत वाऽर्थवादत्वात्तयोः संसर्गहेतुत्वात् ॥ ४ ॥ अकर्म वा चतुर्भिराप्तिवचनात्सह पूर्णं पुनश्चतुरवत्तम् ॥ ५ ॥ क्रिया वा मुख्यावदानपरिमाणात्सामान्यात्तद्गुणत्वम् ॥ ६ ॥ तेषाश्चैकावदानत्वात् ॥ ७ ॥ आप्तिः सङ्ख्यासमानत्वात् ॥ ८ ॥ सतोस्त्वाप्तिवचनं व्यर्थम् ॥ ९ ॥ विकल्पस्त्वेकावदानत्वात् ॥ १० ॥ सर्वविकारे त्वभ्यासानर्थक्यं हविषो हीतरस्य स्यादपि वा स्विष्टकृतः स्यादितरस्यान्याय्यत्वात् ॥ ११ ॥ अकर्म वा संसर्गार्थनिवृत्तित्वात्तस्मादाप्तिसमर्थत्वम् ॥ १२ ॥)**



पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः। कृष्णलचरावेव किमुपस्तरणाभिघारणे कार्ये न वेति **सन्देहे**, चोदकतस्तयोः प्राप्तत्वात्कर्तव्ये पाकवत्ते अपीति **प्राप्ते सिद्धान्तः**, ''यदुपस्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोति'' इति वचने अमृताहुतिसाधनत्वमवगम्यते। तच्च हविषः स्वादिमसम्पादनं विना न युक्तमिति कृष्णलेष्वनदनीयेषु स्वादिमा न सम्भवतीत्यर्थलोपान्न स्वाद्वर्थोपस्तरणाभिघारणे कार्ये इति। तदाह **सूत्रे, उपस्तरणाभिघारणयोरमृतार्थत्वात्स्वाद्वर्थत्वाकृष्णलेषु तदभावात्तयोरकर्मानुष्ठानं स्यादिति**। यदि च **क्रियेत वाऽर्थवादत्वादिति** सूत्रोक्तदिशा ''अङ्गेषु फलश्रुतिरर्थवादः'' इति न्यायेनामृताहुतिवचनस्य केवलं स्तुत्यर्थत्वान्न स्वादिमार्थमुपस्तरणादि तर्हि हविरवयवानां स्रुचि संसर्गसम्भवेन यथा स्रुच्यसंसक्तं कृत्स्नं हविराहवनीये पतेदित्येवमर्थमुपस्तरणेन स्रुक् स्निग्धा क्रियते, अभिघारणेन च विशरणपरिहाराय हविः स्निग्धं क्रियते इत्युपस्तरणाभिघारणयोर्दृष्टार्थत्वात्कृष्णलानां स्रुचि संसर्गप्रसक्त्यभावाद्विशरणप्रसक्त्यभावाच्च न तत्परिहारार्थं कर्तव्ये। न च ''चतुरवत्तं जुहोति'' इति चतुरवदानसंस्कृतस्य होमं विधाय ''उपस्तृणात्यभिघारयति। द्विर्हविषोऽवद्यति'' इति श्रवणादुपस्तरणाभिघारणव्द्यवदानैश्चतुरवत्तसङ्ख्याविशिष्टहोमसम्पत्त्यर्थमुपस्तरणादि कार्यमिति वाच्यम्। ''चतुरवत्तं जुहोति'' इत्यत्रावत्तहोममात्रविधानेन चतुःशब्दस्योपस्तरणादिवाक्यप्राप्तसङ्ख्यानुवादकतया विध्यभावेन चतुष्ट्वसङ्ख्याया अनङ्गत्वदिति।

इति द्वितीयं कृष्णले उपस्तरणाभिघारणयोर्बाधाधिकरणम् (सूत्राणि ३-१२)

### अथ तृतीयं कृष्णले चरौ भक्षसद्भावाधिकरणम् (सूत्राणि १३-१६)

**भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात् ॥ १३ ॥**

**(स्याद्वा निर्धानदर्शनात् ॥ १४ ॥ वचनं वाऽऽज्यभक्षस्य प्रकृतौ स्यादभागित्वात् ॥ १५ ॥ वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् ॥ १६ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः। ''प्राजापत्यं चरुं निर्वपेद्घृते शतकृष्णलम्'' इति कृष्णलचरौ प्रकृतितश्चोदकप्राप्तहविश्शेषभक्षणं शेषस्य प्रतिपत्तिरूपमिति तृतीयस्य चतुर्थपादान्त्यनये, तथा **शेषभक्षाश्च तद्वत्** इत्यत्रैव च पादेऽग्रे सिद्धत्वात्कर्तव्यमेव। अथापि प्रकृतौ भक्षणं पुरुषप्रीत्यर्थमेव। न प्रतिपत्तिरिति कृत्वाचिन्तया कृष्णलचरौ कर्तव्यं न वेति **सन्देहे**, कृष्णलानामनदनीयत्वेन तद्भक्षणे पुरुषप्रीतेरजननेन लुप्तार्थत्वादुपस्तरणाभिघारणवन्न कर्तव्यमिति **प्राप्तम्**। यत्तु ''चुच्छूषाकारं भक्षयति'' इतीक्षुदण्डादिभक्षणे तद्रसस्वीकारार्थोत्पन्नशब्दसमानशब्दपूर्वकभक्षणविधिवाक्यं तत्तु घृते भृतेषु

कृष्णलेषु लिप्ताज्यस्यैव भक्षणविधायकमिति । तदाह **सूत्रे, भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यादननुष्ठानं** कृष्णलेषु स्यात् । प्रीतिरूपार्थाभावादिति । **सिद्धान्तस्तु,** ''प्राजापत्यं चरुं निर्वपेद्धृते'' इति वाक्ये कृष्णलानां प्राधान्येन घृतस्य चरुगुणत्वेन निर्देशात्प्रधानानामेव फलवाक्ये अन्वय स्यौचित्यात्तेषाश्चान-दनीयानामपि वचनबलाद्भक्षणमुपपन्नमिति चुच्छूषाकारविशिष्टभक्षणं कृष्णलानां विधीयत इति कार्यमेव तदिति ।

इति तृतीयं कृष्णले चरौ भक्षसद्भावाधिकरणम् (सूत्राणि १३-१६)

## अथ चतुर्थं कृष्णले चरौ ''एकधा ब्रह्मण उपहरति'' इत्यनेन सहपरिवारविधानाधिकरणम् (सूत्रम् १७)

**एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहितत्वात् ॥ १७ ॥**

भक्षप्रसङ्गाद्भक्षार्थोपहारे प्रकारविशेषचिन्तनात्सङ्गतिः । कृष्णलचरावेव श्रूयते ''एकधा ब्रह्मण उपहरति'' इति । तत्रैकधाशब्दः किमिडाप्राशित्रचतुर्धाकरणशंयुवाककालभक्षाणामेकधापदेन सकृत्वं सहत्वं वा विधीयत इत्यनियमः, उत सहत्वमेवेति नियम इति **सन्देहे,** यः सकृद्गायति यश्च सह गायति तत्रोभयत्राप्येकधा गायतीति लोके प्रयोगात्सकृत्वं सहत्वं वोभयमपि शब्दार्थ इत्यविशेषाद्यत्किञ्चि-द्विधीयत इति **प्राप्ते सिद्धान्तः** । एकधाशब्दस्योक्तदिशोभयार्थत्वेऽपि सहत्वमेव विधेयम् । न सकृत्वम् । तथात्वे हि प्रकृतितश्चोदकप्राप्तानामिडाप्राशित्रचतुर्धाकरणशंयुवाककालभक्षाणां चतुर्णामप्येककाले उपहारः सिध्यति । सकृत्वविधानेत्वेक एवास्य भक्ष उपसंहर्तव्यो भक्षन्तराणि निवर्तेरन्नित्यनेकबाधः स्यात् । न च सहत्वविधावपि चोदकप्राप्तनानाकालबाधोऽस्तीति वाच्यम् । प्रधानभक्षबाधापेक्षया गुणभूतकालबाधस्य न्याय्यत्वादिति । तदाह **सूत्रे,** ब्रह्मभक्षाणां **प्रकृतौ विहितत्वा**द्भिन्नकालत्वादिह **सहत्वमेकधोपहार** इत्यनेन विधीयत इति । **फलन्तु,** चोदकप्राप्तसर्वभक्षाणां युगपदुपहारः ।

इति चतुर्थं कृष्णले चरौ ''एकधा ब्रह्मण उपहरति'' इत्यनेन सहपरिवारविधानाधिकरणम् (सूत्रम् १७)

## अथ पञ्चमं कृष्णले चरौ ब्रह्मणे सर्वभक्षभागार्पणाधिकरणम् (सूत्रे १८-१९)

**सर्वत्वञ्च तेषामधिकारात्स्यात् ॥ १८ ॥**

**(पुरुषापनयो वा तेषामवाच्यत्वात् ॥ १९ ॥)**



पूर्वन्यायेन शङ्कनात्सङ्गतिः । कृष्णलचरावेव श्रूयते ''सर्वं ब्रह्मणे परिहरति'' इति । परिहरति समर्पयतीत्यर्थः । ब्रह्मसहितानामृत्विजामेकैकस्येडाभक्षणादि । चतुर्षु कालेषु चत्वारो भक्षभागा-श्चोदकतः प्राप्ताः । तत्र सर्वत्वं ब्रह्मसम्बन्धिचतुर्थभागमात्रविषयं विधीयते, किं वाऽध्वर्य्वादि-पुरुषान्तरभागविषयमपीति **सन्देहः । पूर्वपक्षस्तु,** ''यद्ब्रह्मणे परिहरति तत्सर्वमिति वा, यद्ब्रह्मणे सर्वं तत्परिहरति'' इति वा वचनव्यक्तिमाश्रित्य ब्रह्मभागस्य परिहर्तव्यस्य सर्वत्वं सर्वस्य ब्रह्मसम्बन्धिनो भागस्य परिहर्तव्यत्वं वोभयथापि ब्रह्मसम्बन्धिन एव भागचतुष्टयस्य सर्वत्वं विधीयते । तथा च यथा पूर्वत्र चोदकप्राप्तभक्षान्तराबाधायैकधापदेन सहत्वविधिरेवमत्रापि चोदकप्राप्ताध्वर्य्वादिपुरुषान्तर-सम्बन्धिभक्षाबाधाय सर्वब्रह्मभागपरिहारविधिः । अन्यथा ''यत्परिहरति तत्सर्वं ब्रह्मणे, नाध्व-र्य्वादिभ्यः'' इति व्यक्त्याश्रयेण परिहार्यस्य सर्वस्य ब्रह्मसम्बन्धिताविधौ पुरुषान्तरस्य भक्षबाधः स्यात् । तदाह **सूत्रे तेषामध्वर्युप्रभृतीनामपि** चोदकतो भक्षणे**ऽधिकारा**त्तदबाधाय ब्रह्मभागपरिहारानु-वादेन **सर्वत्वं** विधेयं **स्या**दिति । **सिद्धान्तस्तु,** यद्यत्र ब्रह्मसम्बन्धिभागानां सर्वत्वविधिपरमिदं वाक्यं स्यात्तदा वाक्यमेतदनर्थकं स्यात् । सर्वस्यापि तदीयभागस्य चोदकत एव ब्रह्मणः प्राप्तत्वात् । अतः परिहरतीत्यविशेषात्प्राकृतसर्वपरिहारमनूद्य ब्रह्मसम्बन्ध एव विधेय इति प्राप्ताम्नानादन्येषामृत्विजां भक्षो बाध्यत एवेति ।

इति पञ्चमं कृष्णले चरौ ब्रह्मणे सर्वभक्षभागार्पणाधिकरणम् (सूत्रे १८-१९)

## अथ षष्ठं भक्षभागानां स्वस्वकाले ब्रह्मणा भक्षणाधिकरणम् (सूत्रम् २०)

**पुरुषापनयात्स्वकालत्वम् ॥ २० ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । अध्वर्युप्रभृतीनां भक्षाः सर्वे ब्रह्मण उपहार्याः । ते च ''एकधा ब्रह्मण उपहरति'' इति सहत्वविधानादेकस्मिन्नेव काले उपहार्या इत्यधिकरणद्वयेन स्थिते सति किं युगपदुप-हृतानां तेषां युगपदेव भक्षणं, उत कालभेदेनेति **सन्देहे,** उपहारस्य यौगपद्याद्भक्षणमपि युगपदेव । विलम्बे हेत्वभावात् । एवञ्च पूर्वत्र भक्षाणां पुरुषान्तरसम्बन्धस्येव प्राकृतनानाकालस्यापि बाध इति **प्राप्ते सिद्धान्तः,** उपहरणस्य यौगपद्येऽपि तदैव भक्षणीयमित्यत्र हेत्वभावाच्चोदकप्राप्तप्राकृततत्तत्काला बाधाय स्वस्वकाल एव भक्षणम् । तदाह **सूत्रे,** ''सर्वं ब्रह्मणे'' वचनात्सर्वेषां प्राकृतानां भक्षाणां **पुरुषापनयात्**पुरुषान्तरेभ्योऽपनयात्स्वकालत्वं भक्षाणामिति ।

इति षष्ठं भक्षभागानां स्वस्वकाले ब्रह्मणा भक्षणाधिकरणम् (सूत्रम् २०)

### अथ सप्तमं ब्रह्मभक्षे चतुर्धाकरणादीनामभावाधिकरणम् (सूत्रम् २१)

**एकार्थत्वादविभागः स्यात् ॥ २१ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । प्रकृतावाग्नेये पुरोडाशचतुर्धाकरणं विधाय ''इदं ब्रह्मणः । इदं होतुः । इदमध्वर्योः । इदमग्नीधः'' इति व्यादेशशब्दितो निर्देशो विहितः । तौ किं चतुर्धाकरणव्यादेशौ कृष्णलेषु कर्तव्यौ न वेति **सन्देहे,** चोदकतः कृष्णलेष्वपि तयोः प्राप्तेः पूर्वत्र भक्षकालानामबाधो यथा तथाऽत्रापि चतुर्धाकरणव्यादेशयोरपि न बाध इति **प्राप्ते सिद्धान्तः,** प्रकृतौ चतुर्धाकरणं ब्रह्मादीनां चतुर्णामृत्विजां भक्षणार्थम् । नादृष्टार्थम् । सर्वर्त्विक्सम्बन्धिनोऽपि भक्षभागस्य ''सर्वं ब्रह्मणे परिहरति'' इति वचनेन ब्रह्मसम्बन्धिताकरणे भक्षणरूपार्थलोपान्न चतुर्धाकरणव्यादेशौ कर्तव्याविति । तदाह **सूत्रे,** एकार्थत्वाद्ब्रह्ममात्रार्थत्वाद्विभागश्चतुर्धाकरणं न स्यादिति ।

इति सप्तमं ब्रह्मभक्षे चतुर्धाकरणादीनामभावाधिकरणम् (सूत्रम् २१)

### अथाष्टमं ज्योतिष्टोमे ऋत्विग्दानस्याऽनत्यर्थताधिकरणम् (सूत्राणि २२-२८)

**ऋत्विग्दानं धर्ममात्रं स्याद्ददातिसामर्थ्यात् ॥ २२ ॥**

**(परिक्रियार्थं वा कर्मसंयोगाल्लोकवत् ॥ २३ ॥ दक्षिणायुक्तवचनाच्च ॥ २४ ॥ न चान्येनानम्येत परिक्रयात्कर्मणः परार्थत्वात् ॥ २५ ॥ परिक्रीतवचनाच्च ॥ २६ ॥ सनिवन्येव भृतिवचनात् ॥ २७ ॥ नैष्कर्तृकेण संस्तवाच्च ॥ २८ ॥)**

पूर्ववैषम्येणात्र शङ्कनासङ्गतिः । ज्योतिष्टोमे ''गौरश्वश्च'' इत्यादिना ''तस्य द्वादशशतं दक्षिणा'' इत्यन्तेन गवादिदक्षिणां विधाय तत्सन्निधौ ''ऋत्विग्भ्यो दक्षिणां ददाति'' इति श्रुतं दक्षिणादानं किमदृष्टार्थम्, उत ऋत्विगानत्यर्थमिति **सन्देहे,** ''दद्यात्'' इत्याख्यातोपात्तभावनाया भाव्याकांक्षायामेकपदोपात्तं दानमेवैकपदश्रुत्या भाव्यत्वेनान्वेति । न तु वाक्यप्रमाणकं पदान्तरोपात्त-मृत्विगानमनम् । श्रुतितो वाक्यस्य दुर्बलत्वात् । वशीकरणरूपानत्यर्थत्वे च कर्मानुरूपेण द्रव्यं देयम् । वैरूप्यश्चात्र दृष्यते । स्वल्पकर्मणि त्रैधातवीये ''सहस्रं देयम्'' इति, बह्वायाससाध्ये ऋतपेयाख्ये कर्मणि ''औदुम्बरः सोमचमसो दक्षिणा'' इति । तथा द्वादशशतादिपरिमाणनियमो मन्त्रवत्व-नियमश्चानत्यर्थत्वेऽनुपपन्नः । न हि यजमानाऽभिमतद्रव्यपरिमाणेन कर्मकरा आनमेयुः । किन्तु स्वाभिमतेनैव । तस्माच्चतुर्धाकरणव्यादेशयोर्दृष्टार्थत्वेऽप्यदृष्टार्थं दक्षिणादानमिति **प्राप्तम्** । तदाह **सूत्रे,**



ऋत्विग्दानं धर्ममात्रमदृष्टार्थं ददातिसामर्थ्यात् पदश्रुतिबलादिति । **सिद्धान्तस्तु,** द्रव्यपरिमाणादि-नियमस्यादृष्टार्थत्वेऽपि कर्मकरेभ्यो दीयमानस्यापेक्षिताऽनतिद्वारा दृष्टार्थत्वसम्भवेऽदृष्टार्थत्वायोगात् ''दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयेयुः'' इति स्पष्टवचनाच्चाऽनत्यर्थमेव दक्षिणादान-मिति । **फलन्तु, सूत्रे** ऋत्विजां यजमानत्वाद्भृतिरूपे दक्षिणा न देयेति दक्षिणाबाधः ।

इत्यष्टमं ज्योतिष्टोमे ऋत्विग्दानस्याऽनत्यर्थताधिकरणम् (सूत्राणि २२-२८)

### अथ नवमं ज्योतिष्टोमे भक्षस्य प्रतिपत्त्यर्थताधिकरणम् (सूत्राणि २९-३३)

**शेषभक्षाश्च तद्वत् ॥ २९ ॥**

**(संस्कारो वा द्रव्यस्य परार्थत्वात् ॥ ३० ॥ शेषे च समत्वात् ॥ ३१ ॥ स्वामिनि च दर्शनात्तत्सामान्यादितरेषां तथात्वम् ॥ ३२ ॥ तथा चान्यार्थदर्शनम् ॥ ३३ ॥)**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः । सन्तीष्टाविडाप्राशित्रचतुर्धाकरणशंयुवाककालभक्षाः सोमे च होतृ-चमस इत्यादिसमाख्यानिमित्तकवषट्कारनिमित्तकहोमाभिषवनिमित्तकाश्च भक्षाः । ते किमृत्विगा-नत्यर्था, उत प्रतिपत्त्यर्था इति **सन्देहे,** पूर्वत्र ऋत्विग्भ्यो दक्षिणादानस्येव शेषभक्षणस्य ऋत्वि-क्प्रीतिद्वारा तदानतेः प्रत्यक्षतोऽवगतिसम्भवेन परिक्रयार्था भक्षा इति **प्राप्तम्** । **तदाह सूत्रे, शेषभक्षाश्च तद्वत्** ऋत्विग्दानवत्परिक्रयार्था इति । **सिद्धान्तस्तु,** यद्यपि प्रत्यक्षा प्रीतिस्तथापि ''कृतकार्यं द्रव्यं प्रतिपत्तिमपेक्षते'' इत्यपेक्षितविधिलाभाद्दृष्टार्थत्वाविशेषाद्देवतायै सङ्कल्पितद्रव्यशेषेण परिक्रयणस्य यजमानेन कर्तुमशक्यत्वत् ''यजमानपञ्चमाः सम्भूयेडां भक्षयन्ति'' इत्यक्रीतस्यापि यजमानस्य श्रुत-भक्षसहभावाच्च प्रतिपत्त्यर्थाः शेषभक्षा इति । **फलन्तु,** सत्रेष्वपि भक्षाणामबाधः । **भक्षाश्रवणाद्दान-शब्दः परिक्रये** इति तार्तीयचतुर्थपादान्त्यनयेन पौनरुक्त्यमाशङ्क्यात्र भक्षाणामानत्यर्थता निरस्यते । तत्र तु ''इदं ब्रह्मणः'' इत्यादिनिर्देशस्याऽनत्यर्थता निरस्तेत्यपौनरुक्त्यमित्याहुः ।

इति नवमं ज्योतिष्टोमे भक्षस्य प्रतिपत्यर्थताधिकरणम् (सूत्राणि २९-३३)

### अथ दशमं सत्रे ऋत्विग्वरणाभावाधिकरणम् (सूत्रम् ३४)

**वरणमृत्विजामानत्यर्थत्वात्सत्रे न स्यात्स्वकर्मत्वात् ॥ ३४ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । सोमे ''अग्निर्होता'' ''समे होता'' इत्यादिमन्त्रै ऋत्विजां वरण-माम्नातम् । **वरणं** नाम ''अग्निर्होता'' इत्यादिमन्त्रेण प्रार्थनम् । तत्सत्रे कर्तव्यं न वेति **सन्देहे,** प्रकृतौ

वरणस्य ऋत्विक्त्वार्थत्वात्सत्रे च ''ये यजमानास्ते ऋत्विजः'' इति वचनेन यजमानेष्वार्त्विज्यमाधातव्यमिति भक्षणवदलुप्तार्थत्वात्कर्तव्यमेव वरणमिति **प्राप्ते सिद्धान्तः**, प्रकृतौ वरणस्याऽनत्यर्थत्वात्सत्रे च यजमानानामेव ऋत्विक्त्वेन यजमानैरात्मनो वरणेनाऽनतिकरणासम्भवादानतिरूपार्थलोपान्न कर्तव्यं वरणम्। कर्मकर्तृत्वरूपऋत्विक्त्वस्य च प्रकृतौ वरणविधानद्वारेणाऽनतानामेव भवति। सत्रे तु वरणस्यार्थलोपेन निवृत्तत्वादवृतानामेवाविगुणमृत्विक्त्वमध्वर्य्वादित्वञ्च युज्यते इति। तदाह **सूत्रे, ऋत्विजामानत्यर्थत्वात्सत्रे वरणं न स्यात्**। सत्रस्य **स्वकर्मत्वात्**। स्वार्थकर्मत्वेन तत्र स्वयमेव यजमानानामानतत्वादिति। **फलन्तु** सत्रे वरणबाधः।

इति दशमं सत्रे ऋत्विग्वरणाभावाधिकरणम् (सूत्रम् ३४)

## अथैकादशं सत्रे परिक्रियाभावाधिकरणम् (सूत्राणि ३५-३८)

**परिक्रयश्च तादर्थ्यात् ॥ ३५ ॥**

**(प्रतिषेधश्च कर्मवत् ॥ ३६ ॥ स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात् ॥ ३७ ॥ न दक्षिणाशब्दात्तस्मान्नित्यानुवादः स्यात् ॥ ३८ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः। दक्षिणादानं परिक्रयार्थं नादृष्टार्थमित्युक्तम्। परिक्रय एव सत्रेऽस्ति न वेति **सन्देहे**, ''नात्र गौर्दीयते'' इति सत्रे गोदानप्रतिषेधस्य दानप्रसक्त्यभावेऽनुपपत्तेर्वरणस्याकरणेऽपि गोव्यतिरिक्तानामश्वादीनां दानं न बाध्यम्। किन्तु कार्यमिति **विशेषशङ्कायां** गोदाननिषेधवाक्यस्य ''अदक्षिणानि सत्राण्याहुः'' इत्युपक्रम्य ''न ह्यत्र गौर्दीयते, न वासो, न हिरण्यम्'' इति पठितत्वेन ''अदक्षिणानि'' इति विध्यान्तरशेषत्वेन ततः प्राप्तगोदानाभावानुवादकतयोपपत्त्या न गवादिव्यतिरिक्ताश्वादिदानप्रापकत्वमस्तीत्यानतिरूपार्थाभावाद्वरणस्येव परिक्रयस्यापि बाध इति **सिद्धान्तः**। तदाह **सूत्रे, परिक्रयश्च** नास्ति सत्रे। **तादर्थ्या**दानत्यर्थत्वादिति।

इत्येकादशं सत्रे परिक्रयाभावाधिकरणम् (सूत्राणि ३५-३८)

## अथ द्वादशमुदवसानीयस्य सत्रानङ्गतया तत्र दानस्य परिक्रियार्थत्वाधिकरणम् (सूत्रे ३९-४०)

**उदवसानीयः सत्रधर्मा स्यात्तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ ३९ ॥**



**(न त्वेतत्प्रकृतित्वाद्विभक्तचोदितत्वाच्च ॥ ४० ॥)**

पूर्वाक्षेपेण **शङ्कनात्सङ्गतिः**। अस्ति सोमविकृतिः पृष्ठशमनीयो नाम यागः, ''सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्'' इति श्रवणात्। ज्योतिष्टोमविकारः पृष्ठशमनीययागः किं सत्राङ्गमुत नेति **सन्देहः**। **पूर्वपक्षस्तु**, उदवसायेति क्त्वादेशल्यप्प्रत्ययेन सत्रसमाप्तेः पूर्वकालत्वस्य पृष्ठशमनीयस्योत्तरकालत्वस्य तयोस्समानकर्तृकत्वस्य चावगमात् ''अग्निं चित्वा सौत्रामण्या यजेत'' ''वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत'' इत्यादौ सौत्रामणिबृहस्पतिसवादेरग्निचयनवाजपेयाद्यङ्गत्वमिव फलवत्सत्रोत्तरकालश्रुतोऽप्ययं पृष्ठशमनीयः सत्राङ्गम्। अन्यथा कालार्थसम्बन्धपक्षे उदवसायेत्यस्य समाप्त्यनन्तरकाल इति काललक्षणा, पृष्ठशमनीये फलकल्पनाप्रसङ्गश्च। अङ्गत्वपक्षे तु सत्रफलेनैव फलवत्त्वम्। तथा चायमर्थः, यथोक्ताङ्गसहितं सत्रं समाप्य न तावता कृती। किन्त्विदमपरमप्यङ्गं कार्यमिति। तथा च ये सत्रकर्तारो यजमानास्त एव पृष्ठशमनीयेऽपि कर्तार इति तत्र श्रुतदक्षिणादानमदृष्टार्थम्। तेषां तत्र स्वत एवाऽनतत्वेनाऽनतिरूपार्थलोपेन दृष्टार्थत्वासम्भवाद्दक्षिणादानं दृष्टार्थमेवेति प्रागुक्तमयुक्तमिति। तदाह **सूत्रे, उदवसानीयः** पृष्ठशमनीयः **सत्रधर्मा स्यात्** सत्रवद्यजमानकर्तृकः स्यात्। कुतः? **तदङ्गत्वात्**। तस्मात्तत्र दक्षिणादानं **धर्ममात्र**मदृष्टार्थं स्यादिति। **सिद्धान्तस्तु**, उत्पूर्वो ह्यवस्यतिशब्दस्त्यागवचनः। त्यागश्च निश्शेषं समाप्तस्यैव भवति। त्यक्तस्य न पुनरङ्गविधिः सम्भवति। ''वाजपेयेनेष्ट्वा'' इत्यादौ तु वाजपेयकरणिकाया भावनायाः पूर्वकालतावगमाद्वाजपेयप्रयोगसमाप्तिरेवावगम्यते। न तु त्यागः। समाप्तिश्च क्रियाया अवस्थाविशेषो न त्यागः। क्रियाया अवस्थाविशेषा ह्येते प्रारम्भानुष्ठानपरिसमाप्तयः'' इति **तन्त्ररत्नोक्तेः**। ततश्च यथोक्तं वाजपेयप्रयोगं समाप्येदमपरमङ्गं कर्तव्यमिति युज्यते विधिः। नात्र तथा। कर्मण एव त्यागश्रवणात्। तस्मादनङ्गं पृष्ठशमनीययाग इति। केवलं सत्रावसानं निमित्तीकृत्य पृष्ठशमनीयस्य विधानेन गृहदाहेष्टिवत्फलनैरपेक्ष्यान्न विश्वजिन्न्यायेन फलकल्पनाप्रसङ्ग इति। **फलन्तु पूर्वपक्षे** यजमानकर्तृकत्वात्तत्र दक्षिणादानमदृष्टार्थम्। **सिद्धान्ते तु** वक्ष्यमाणदिशा ऋत्विग्भिः कर्तव्यत्वाद्दृष्टार्थमिति।

इति द्वादशमुदवसानीयस्य सत्रानङ्गतया तत्र दानस्य परिक्रियार्थत्वाधिकरणम् (सूत्रे ३९-४०)

## अथ त्रयोदशमुदवसानीये सत्रिभ्योऽन्येषामृत्विक्त्वाधिकरणम् (सूत्रे ४१-४२)

**तेषां तु वचनाद्द्वियज्ञवत्सहप्रयोगः स्यात् ॥ ४१ ॥**

**(तत्रान्यानृत्विजो वृणीरन् ॥ ४२ ॥)**

**प्रासङ्गिकी सङ्गतिः** । पृष्ठशमनीय उदवसानकर्तृभिरेव कार्य इति ल्यप्प्रत्ययेन समानकर्तृकत्वार्थ-कत्त्वादेशभूतेन सिद्धे सति किं तैः सर्वैर्मिलित्वा कार्यः, उतैकैकश्येनेति **सन्देहे**, यथा ''ऋद्धिकामाः सत्रमासीरन्'' इत्यत्राख्यातोपात्तस्य बहुत्वस्योपादेयकर्तृगामित्वेन विवक्षिततया बहुभिः संहत्य सत्रं क्रियते तथा ''सत्रादुदवसाय'' इत्यादिवाक्ये यजेरन्नित्याख्यातोपात्तस्य बहुत्वस्य विवक्षितत्वात्संहत्यैव सर्वैः कर्तव्य इति **प्राप्तम्** । तदाह **सूत्रे, तेषां** सत्रिणां यजेरन्निति **वचनात्संहत्य प्रयोगः स्याद्वियज्ञवत्** यथा ''राजपुरोहितौ यजेयाताम्'' इत्यत्र राजपुरोहितयोः संहत्य प्रयोगस्तद्वदिति । अस्य पूर्वपक्षस्य **एकशस्त्वविप्रतिषेधात्प्रकृतेश्चैकसंयोगात्** इति सूत्रेण सिद्धान्तं चिकीर्षुर्मध्ये **तत्रान्यानृत्विजो वृणीरन्** इति सूत्रेण चिन्तान्तरं कृतवान् । तथाहि, संहत्य कर्तव्यः पृष्ठशमनीय इति **स्थिते** सति, किं यजमानैरेव मिलित्वा कर्तव्यः, उत **ऋत्विग्भिरिति सन्देहे**, उदवसाने यजमानानामेव कर्तृत्वात्तत्समान कर्तृकत्वस्यत्त्वादेशल्यपा प्रतीतेर्यजमाना एव संहत्य कुर्युरिति **प्राप्ते सिद्धान्तः**, यजेरन्नित्याख्यातेन यो व्यापारो विधीयते तस्यैवोदवसानकर्तृसमानकर्तृकता त्त्वादेशल्यप्प्रत्ययेनोच्यते । यजिना यागक्रियैव यजमानव्यापारोऽभिधीयत इति यजमानव्यापारस्यैव ल्यपोदवसानसमानकर्तृकत्वावगतेश्चोदकाबाधेन प्रकृताविव **ऋत्विजो** वरणीया इति । तदाह सूत्रे, **तत्रान्यानृत्विजो वृणीरन्निति** ।

इति त्रयोदशमुदवसानीये सत्रिभ्योऽन्येषामृत्विक्त्वाधिकरणम् (सूत्रे ४१-४२)

## अथ चतुर्दशमुदवसानीयस्य ऋत्विजामेकैकेनानुष्ठानाधिकरणम् (सूत्रम् ४३)

**एकशस्त्वविप्रतिषेधात्प्रकृतेश्चैकसंयोगात् ॥ ४३ ॥**

एकशस्त्विति सूत्रेण स्थितपूर्वपक्षस्योत्तरमुच्यते । तथा हि, यदि ''यजेरन्'' इत्यत्र बहुवचनार्थस्य बहुत्वस्य विधिः स्यात्, स्यात्तदा संहत्य प्रयोगः । न चैवम् । सत्रसमभिव्याहारेण सत्रकर्तृणामेव बहूनामुदवसानेऽपि कर्तृत्वेन पृष्ठशमनीयेऽपि समानकर्तृकताबोधकत्त्वादेशल्यप्प्रत्ययेनोदवसानकर्तार एव कर्तार इत्यवगत्या बहुत्वस्य प्राप्तत्वेनाविधानादविहितस्यानङ्गत्वात्तदभावे कुतो वैगुण्यम् । राजपुरोहितावित्यत्र तु यज्यर्थस्य द्विवचनार्थद्वित्वस्य चागत्योभयविधानेऽपीह यज्यर्थमात्रविधानात् । किञ्चोदवसानशब्दिते च त्यागेऽन्योन्यनिरपेक्षा एव कर्तारो न संहत्येति तत्समानकर्तृकत्वादन्योन्या-नपेक्षाः सन्त एव पृष्ठशमनीयेऽपि कर्तारः प्राप्ता इत्येकैकशः प्रयुञ्जीरन्न संहत्येति **सिद्धान्तः** । तदाह **सूत्रे, एकशस्तु** प्रयुञ्जीरन् **विप्रतिषेधाभावात्** । **प्रकृतेरेकयजमानसंयोगेन** चोदकेनैकयजमानप्राप्तेरिति । फलन्त्वेको यजमानो ऋत्विग्भिः परिश्रितैः पृष्ठशमनीये कर्तेति व्यक्तम् ।

इति चतुर्दशमुदवसानीयस्य ऋत्विजामेकैकेनानुष्ठानाधिकरणम् (सूत्रम् ४३)



## अथ पञ्चदशं कामेष्टौ दानस्यादृष्टार्थताधिकरणम् (सूत्रे ४४-४५)

**कामेष्टौ दानशब्दात् ॥ ४४ ॥**

**(वचनं वा सत्रत्वात् ॥ ४५ ॥)**

पूर्वन्यायेन शङ्कनासङ्गतिः । सारस्वते सत्रे ''प्लाक्षं प्रस्रवणमासाद्य अग्नये कामायाष्टाकपालं निर्वपति'' इति तदङ्गतया विहितायां कामेष्टौ ''अश्वां पुरुषीं धेनुके च दद्युः'' इत्यश्वादीनां श्रुतं दानं किं परिक्रयार्थम्, उतादृष्टार्थमिति **संशयः** । **पूर्वपक्षस्तु**, साङ्गस्य सारस्वतस्य यजमानकर्तृकता न प्रत्यक्षवचनसिद्धा । किन्तु सत्रात्मकद्वादशाह एव ''ये यजमानास्ते ऋत्विजः'' इति श्रवणेनेहातिदेशेनैव कार्यद्वारेण प्राप्तायास्तस्याः प्राकृतकार्यस्थानापन्नेष्वङ्गेष्वेव प्राप्तिः । काम्येष्टिस्त्वपूर्वत्वान्न प्राकृतकार्यस्थानापन्नेति यूपावटास्तरणबर्हिषि बर्हिर्धर्माणां लवनादीनामिव न तत्र यजमानैककर्तृकताया श्चोदकतः प्राप्तिरित्यन्ये ऋत्विजः सम्पाद्या इति पृष्ठशमनीय इव परिक्रयार्थमश्वादिदानमिति । तदाह **सूत्रे**, यथा पृष्ठशमनीये ऋत्विजः परिक्रेतव्यास्तथा **कामेष्टौ च** परिक्रेतव्याः । कुतः? **दानशब्दादिति** । **सिद्धान्तस्तु**, यद्यपि यजमानैककर्तृकताकामेष्टौ वचनाद्वा चोदकाद्वा न प्राप्नोति तथापि पूर्वत्र पृष्ठशमनीय इव न दक्षिणापदश्रवणमत्रास्ति । येन परिक्रयार्थता विज्ञायेत । किञ्च कर्तृणां साङ्गप्रधान-विषयकप्रयोगाङ्गत्वात्तैश्च साङ्गप्रधानप्रयोगे क्रियमाणे सति तन्मध्ये प्राप्तस्यापूर्वस्याप्यङ्गस्य तैरेव यजमानैरनुष्ठानं प्रसङ्गात्सिध्यतीति कर्त्राकांक्षाविरहान्न ऋत्विजां प्राप्तिरित्यदृष्टार्थं दानम् । बर्हिधर्मा लवनादयस्तु कार्यद्वारेण विकृतिं प्राप्यमाणास्तत्कार्यसाधनेष्वेव भवन्ति । न त्वपूर्वयूपावटास्तरण-बर्हिषीति वैषम्यमिति ।

इति पञ्चदशं कामेष्टौ दानस्यादृष्टार्थताधिकरणम् (सूत्रे ४४-४५)

## अथ षोडशं दर्शपूर्णमासयोर्द्वेष्याय दानस्यादृष्टार्थताधिकरणम् (सूत्रम् ४६)

**द्वेष्ये चाऽचोदनाद्दक्षिणापनयः स्यात् ॥ ४६ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोः श्रूयते ''यदि पत्नीः संयाजयन् कपालमभिजुहुया-द्वैश्वानरं द्वादशकपालं निर्वपेत् । तस्यैकहायनी गौर्दक्षिणा । तां स द्वेष्याय दद्यात्'' इति । किमिदं दक्षिणादानं परिक्रयार्थम्, उतादृष्टार्थमिति **सन्देहे**, दर्शपूर्णमासयोर्नैमित्तिकाङ्गभूता तत्तन्त्रमध्ये अनुष्ठेयापीयमिष्टिस्तद्दक्षिणयैव दक्षिणावत्यपि ''गौर्दक्षिणा'' इति वचनबलात्पृथग्दक्षिणा तस्या

युक्तेति, दक्षिणापदाश्रवणेन कामेष्टौ दानस्यापरिक्रयार्थत्वेऽपीह दक्षिणापदश्रवणात्परिक्रयार्थमेव दानमिति **प्राप्ते सिद्धान्तः** । स्यादेवं यदि द्वेष्योपि ऋत्विक्स्यात्तदा कर्मकरायेदं दानं परिक्रयार्थं स्यात् । न च द्वेष्यो ऋत्विग्भवति । "नातिचरितव्यावृत्विगाचार्यौ" इति स्मृतिविरोधात् । तस्मादकर्मकरायेदं दानमदृष्टार्थमिति । तदाह सूत्रे, कामेष्टाविव द्वेष्ये च दानमदृष्टार्थम् । **अचोदनात्** द्वेष्यस्य ऋत्विक्त्वेन चोदनाभावात् । अस्मिन् दाने **दक्षिणापनयो** दक्षिणात्वापनयः स्यात् । दक्षिणाशब्दोऽत्रागत्या दानमात्रपर इति ।

इति षोडशं दर्शपूर्णमासयोर्द्वेष्याय दानस्यादृष्टार्थताधिकरणम् (सूत्रम् ४६)

## अथ सप्तदशं जीवतामेवास्थियज्ञाधिकरणम् (४७-४८)

**अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम् ॥ ४७ ॥**

**(यावदुक्तमुपयोगः स्यात् ॥ ४८ ॥)**

दर्शपूर्णमासनैमित्तिकाङ्गविचारप्रसङ्गात्सत्रीयनैमित्तिकाङ्गविचार इति **सङ्गतिः** । इदं श्रूयते "सत्राय सन्दीक्षितानां यजमानः प्रमीयेत तं दग्ध्वा तस्य कृष्णाजिनेऽस्थीन्युपनह्य योस्य नेदिष्ठः स्यात्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् । ततः संवत्सरेऽस्थीनि याजयेयुः" इति । अत्र योऽयं संवत्सरान्तेऽस्थियागः श्रुतः स किमस्थिपदेन लक्षितमृतपुरुषाधिकारकः, उतास्थिपदलक्षितास्थिसहायेतरजीवद्यजमाधिकारक इति **सन्देहे,** याजयेयुरिति प्रयोजककर्तृवाचिणिच्प्रत्ययेन परस्मैपदेन च परार्थकर्मप्रवृत्त्यवगमादस्थिपदेन लक्षणया अस्थिमच्छरीरकमृतपुरुषग्रहणेन तदधिकारकोऽयं सत्रमध्ये मृतिनिमित्तको यागः । फलमपि तस्यैव । सर्वस्वारे मृतस्यापि यजमानस्य फलस्वाम्यदर्शनात् । जीवतां सत्रिणां तत्कर्मकर्तृत्वमात्रमिति **प्राप्ते सिद्धान्तः,** सर्वस्वारे हि माध्यन्दिनसवनात्प्राक्तनेषु याजमानेषु यजमानस्य साक्षादेव कर्तृत्वम् । तदुपरितनेषु च "ब्राह्मणाः समापयत मे यज्ञम्" इत्युक्त्वा अग्नौ शरीरप्रक्षेपात्प्रैषद्वारेणास्ति कर्तृत्वम् । इह तु न द्वेधापि दैवान्मृतस्यास्ति कर्तृत्वमिति कथं तस्य फलस्वाम्यलक्षणाधिकारो भवेत् । फलस्य कर्तृगामित्वात् । अतोऽस्थिशब्देनास्थिसहायान् जीवतः सत्रिणो लक्षयित्वा तेषामेवायं यागविधिः । णिच्प्रत्यययोगश्च तेषां ये याजकास्तदभिप्रायः । एवञ्चास्यास्थियागस्य सत्राङ्गत्वम् । न पृथक्फलकल्पनाप्रसङ्गोऽपीति । तदाह सूत्रे, **अस्थियज्ञो** "अस्थीनि याजयेयुः" इति विहितो यागः **इतरेषां** मृतेतरेषां जीवतां सत्रिणां स्यात् । **अविप्रतिषेधात्** । अस्थ्नामस्थिमताश्च मृतानां **विप्रतिषेधादिति** । फलं व्यक्तम् ।

इति सप्तदशं जीवतामेवास्थियज्ञाधिकरणम् (सूत्रे ४७-४८)



## अथाष्टादशमस्थियज्ञेऽस्थ्नां जपाद्यननुष्ठानाधिकरणम् (सूत्रम् ४९)

**यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात् ॥ ४९ ॥**

कृत्वाचिन्तयेदमारभ्याधिकरणपञ्चकमारभ्यते । यदा त्वस्थियागो मृताधिकारस्तदा किं चोदकप्राप्ताङ्गजातमध्ये किञ्चित्याज्यमुत सर्वं कार्यमिति **सन्देहे,** प्रकृतौ मन्त्रजपकेशश्मश्रुवपनादयो याजमानधर्माः श्रुताः । दीक्षणीयेष्टिश्च । ते सर्वे चोदकप्राप्ता मृते कर्तव्या इति **प्राप्ते** दीक्षार्थत्वात्सर्वधर्माणां, मृते दीक्षाऽसम्भावान्न कर्तव्याः । केशश्मश्रुवपनादेरशक्यत्वाच्चेति **सिद्धान्तः** । तदाह **सूत्रे, यदि वचनात्तेषां** मृतानां यागः स्यात्तदा **सेष्टि** इष्ट्या सहितं **जपसंस्कारमर्थलुप्तं तदर्थत्वा**दिष्टेदीक्षार्थत्वादीक्षायाश्च मृतेष्वसम्भवादिति ।

इत्यष्टादशमस्थियज्ञेऽस्थ्नां जपाद्यननुष्ठानाधिकरणम् (सूत्रम् ४९)

## अथैकोनविंशमस्थियज्ञे औदुम्बरीमानशुक्रस्पर्शानुष्ठानाधिकरणम् (सूत्रम् ५०)

**क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ॥ ५० ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । मृगाधिकारकोऽस्थियाग इति पक्षे "शुक्रं यजमानोऽन्वारभेत" इत्यादिवाक्योक्तशुक्रग्रहस्पर्शादिकमस्थिरूपयजमानेन कर्तव्यं न वेति **सन्देहे,** अन्वारभेतेत्याख्यातोपात्तव्यापारानुकूलकृतिमत्त्वलक्षणकर्तृत्वस्याचेतनानामस्थ्नामसम्भवाद्दीक्षादिवच्छुक्रान्वारम्भणादिकमपि न कार्यमिति **प्राप्ते सिद्धान्तः,** आख्यातोपात्तव्यापारानुकूलकृतिमत्त्वं न कर्तृत्वम् । "रथो गच्छति" इत्यादावभावात् । गौरवाच्च । किन्तु तादृशव्यापारयोगित्वमेव कर्तृत्वम् । लाघवात् । सार्वत्रिकत्वाच्च । अतोऽचेतनानामप्यस्थ्नां शुक्रान्वारम्भणकर्तृत्वसम्भवात्कर्तव्यमेव शुक्रग्रहस्पर्शनाद्यङ्गमिति । तदाह **सूत्रे, क्रत्वर्थं** शुक्रान्वारम्भणादिकं **क्रियेत** । **गुणभूतत्वा**दचेतनैरप्यन्वारम्भकरणसम्भवादिति ।

इत्येकोनविंशमस्थियज्ञे औदुम्बरीमानशुक्रस्पर्शानुष्ठानाधिकरणम् (सूत्रम् ५०)

## अथ विंशमस्थियज्ञेऽस्थ्नां काम्यकर्माद्यननुष्ठानाधिकरणम् (सूत्रम् ५१)

**काम्यादि न विद्यते कामाज्ञानाद्यथेतरस्यानुच्यमानानि ॥ ५१ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । अस्थियागो मृताधिकारक इति पक्ष एव चिन्त्यते "यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुयात्" इत्यादयो गुणकामा अस्थियागे प्रवर्तन्ते न वेति **सन्देहः** ।

यद्यप्यष्टमाद्यपादे **गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात्** इत्यत्र विकृतिषु गुणकामप्रवृत्तिर्नेति सिद्धत्वान्न चिन्तावकाशस्तथापि विकृतिष्वस्ति प्रवृत्तिरित्यपि कृत्वाचन्तेयमिति ध्येयम् । चोदकवशात्प्रवर्तत इति **प्राप्ते सिद्धान्तः**, कामयेतेत्यादिवाक्योक्ता गुणकामा अपि यजमानस्य । **न ऋत्विजामिति** तृतीयान्त्य-पादे **तथा कामोऽर्थसंयोगात्** इति नये निर्णीतत्वान्मृतस्य च वर्षादिकामस्याज्ञानाद्गुणकामानामस्थियागे निवृत्तिरिति । तदाह सूत्रे, **काम्यादि** गुणकामादिकमस्थियज्ञे **न विद्यते** । यजमानकामस्याज्ञानात् । यथेतरस्य जीवतोऽप्यनुच्यमानानि काम्यानि न ज्ञायन्ते तद्वदिति ।

इति विंशमस्थियज्ञेऽस्थ्नां काम्यकर्माद्यननुष्ठानाधिकरणम् (सूत्रं ५१)

## अथैकविंशमस्थियज्ञेऽस्थ्नां सूक्तवाकगताशासनाननुष्ठानाधिकरणम् (सूत्राणि ५२-५४)

**इहार्थाश्चाभावात्सूक्तवाकादिवत् ॥ ५२ ॥**

**(स्युर्वा अर्थवादत्वात् ॥ ५३ ॥ नेच्छाभिधानात्तदभावादितरस्मिन् ॥ ५४ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । अस्थियज्ञे हि दर्शपूर्णमासप्रकृतिकाः प्रायणीयाद्या इष्टयश्चोदक-प्राप्ताः । तत्र ''इदं द्यावापृथिवी भद्रमभूत्'' इत्यादिसूक्तवाको होत्रा पठ्यमानश्चोदकेन प्राप्तः । तत्रैवं श्रूयते ''आशास्तेऽयं यजमानोऽसावायुराशास्ते सुप्रजास्त्वमाशास्ते'' इत्यादि । तत्र सूक्तवाकस्थानि ''आयुराशास्ते'' इत्यादीनि फलपदानि प्रवर्तन्ते न वेति **सन्देहे, नीचैस्त्वादिगुणानां** काम्यत्वेन विधानाद्यजमानगतकामनाऽपरिज्ञानेन गुणकामानां मृताधिकारेऽस्थियागे निवृत्तावपि सूक्तवाकस्य नित्यवत्प्रहरणप्रयोगाङ्गतया प्राप्तत्वात्तत्संयुक्तानामायुरादिशब्दानां तदेकवाक्यत्वान्नित्यं प्रवृत्तिः स्यादे-वेति होत्रा सोऽपि सूक्तवाकांशः पठनीय इति **प्राप्ते सिद्धान्तः**, ''सूक्तवाकेन प्रस्तरं प्रहरति'' इति श्रुत्या सर्वोऽपि सूक्तवाकः प्रस्तरप्रहरणे करणत्वेन विनियुज्यमानः क्रियान्तरसम्बन्धि फलञ्च प्रकाश-यन्नेव तत्करणतां भजत इत्यायुरादेः फलत्वं कल्प्यते । फलत्वकल्पनश्च यजमानाशास्यतया निर्देशा-त्तथाभूतानामेव भवति । न मृतस्याऽशासनमस्तीत्यस्थियज्ञे तेषामपाठ इति ।

तदाह सूत्रे **सूक्तवाकवदिति** वतिप्रत्ययोऽर्हार्थः । सूक्तवाके योग्या ये **इहार्था** ऐहिकफल-प्रतिपादकाः शब्दाश्च निवर्तन्तेऽस्थियज्ञे । मृतस्याशासनरूपार्थाभावादिति । तदाह **भाष्ये, सूक्तवाक इति वक्तव्ये वतिप्रत्ययोऽर्हार्थ** इति ।

इत्येकविंशमस्थियज्ञेऽस्थ्नां सूक्तवाकगताशासनाननुष्ठानाधिकरणम् (सूत्राणि ५२-५४)



## अथ द्वाविंशमस्थियज्ञे होतृकामाभावाधिकरणम् (सूत्रे ५५-५६)

**स्युर्वा होतृकामाः ॥ ५५ ॥**

**(न तदाशीष्ट्वात् ॥ ५३ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । होतृकामनामकाः केचन काम्यफलहेतुभूताः पदार्थाः प्रकृतौ श्रूयन्ते ''यं कामयेत वसीयान् स्यादिति उच्चैस्तरां तस्य याज्याया वषट् कुर्यात्'' इत्यादिनोच्चैस्त्वादयः । ते किं मृताधिकारेऽस्थियज्ञे प्रवर्तन्ते न वेति **सन्देहे**, पूर्वत्र यजमानेनाशास्यानामेवायुरादीनां फलत्वकल्पना न्मृताधिकारे कर्मणि यजमानाशासनापरिज्ञानात्तेषां फलत्वाभावेन तत्प्रतिपादकशब्दानां निवृत्तावपि वसीयस्त्वादीनां होत्रा कामयमानानामेव फलत्वनिश्चयान्मृतेऽपि यजमाने तद्गतं पशुमत्त्वादिकं होता कामयेतेत्युच्चैस्तरत्वादयो न निवर्तेरन् । अपि तु प्रवर्तेरन्नेवेति **प्राप्तम्** । तदाह सूत्रे **स्युर्वा होतृकामा** इति । **सिद्धान्तस्तु**, आधानवाक्यगतेनात्मनेपदेन ''यां वै काञ्चन यज्ञे ऋत्विगाशिषमाशास्ते यजमानस्यैव सा'' इति वचनेन च यज्ञसम्बन्धि सकलमपि फलं यजमानस्यैव । यद्यदिच्छाविषयस्तदेव तस्य फलं भवति । न त्वनिच्छाविषयः । तस्माद्यजमानेच्छानुसारी यो होतुः कामः स एवात्र निर्दिश्यते ''यं कामयेत'' इति । न तु निरपेक्षः । मृतस्य च वर्सीयस्त्वादिविषयकेच्छानवगमादुच्चैस्त्वादीनामपि निवृत्तिरिति । एतदधिकरणपञ्चकं जीवतामेवायं याग इति सिद्धान्तविरुद्धमिति मृताधिकार इति कृत्वाचिन्तया प्रवृत्तम् । जवीदधिकारपक्षे न कस्यापि चोदकप्राप्तस्य बाध इति ज्ञयम् ।

इति द्वाविंशमस्थियज्ञे होतृकामाभावाधिकरणम् (सूत्रे ५५-५६)

## अथ त्रयोविंशं यजमानस्य दिष्टगतावपि सर्वस्वारस्य समापनाधिकरणम् (सूत्रे ५७-५८)

**सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात् ॥ ५७ ॥**

**(स्याद्वोभयोः प्रत्यक्षशिष्टत्वात् ॥ ५८ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः ।''शुनः कर्णस्तोमोऽग्निष्टोमः मरणकामो ह्येतेन यजेत'' इति वाक्येन सर्वस्वारो नामैकाहः क्रतुर्विहितः । तत्र तृतीये सवने आर्भवस्तोत्रे प्रस्तूयमाने ''औदुम्बरीं दक्षिणेन देशेनाहतेन वाससा परिवेष्टय ब्राह्मणाः समापयत मे यज्ञमिति सम्प्रेष्याग्निं संविशति'' इति वचनेन ऋत्विग्भ्यः प्रैषं प्रदाय यजमानो म्रियत इत्युच्यते । तस्मिन्मृते कर्मशेषः समाप्यो न वेति **सन्देहे**, यजमानस्य फलसिध्द्यर्थमृत्विग्भिः समाप्यं कर्म, उतात्मफलार्थम् । नाद्यः । शास्त्रफलं प्रयोक्तरीति

न्यायेन कर्मफलस्य कर्तृगामित्वाद्यजमानस्य च मृतास्याकर्तृत्वान्न तस्य फलम् । न द्वितीयः । यजमान-परिक्रीतै ऋत्विग्भिर्यजमानस्य यत्फलसाधनं तदेव कर्तव्यम् । न स्वफलसाधनम् । न हीदं समापन-मकर्तुर्यजमानस्य फलसाधनम् । अतो न समानपीयम् । एवञ्च यथा पूर्वत्र कामिनो यजमानस्याभावेन फलाभावादुच्चैस्त्वादीनां निवृत्तिरेवं सर्वस्वारे कर्तुरभावात्फलाभावेनोत्तरेषां कर्मणां निवृत्तिः । प्रैष-वचनन्त्वदृष्टार्थमिति प्राप्तम् । तदाह सूत्रे, दिष्टगतौ यजमानस्य मृतौ सत्यां **सर्वस्वारस्य समापनं न विद्यते । कर्मणो जीवदधिकारकत्वादिति** । सिद्धान्तस्तु स्यादेवं यदि मृतस्य सर्वात्मना कर्तृत्वं न स्यात् । मृतस्यापि जीवदवस्थायामेव वरणभृतिप्रैषैः ऋत्विक्प्रयोजकतया सम्भवति च कर्तृत्वम् । जीवद्दशायामपि वरणादिना ऋत्विक्प्रयोजकत्वस्यैव कर्तृत्वसम्पादकत्वात् । अतो मृतस्यासमाप्ते ऋत्विक्प्रवर्तकतया कर्तृत्वात्प्रैषस्य दृष्टार्थत्वे सम्भवत्यदृष्टार्थत्वायोगाच्च मृतस्य कामितस्वर्गफलप्राप्त्यर्थं समापनीयमेव ऋत्विग्भिः कर्मेति ।

इति त्रयोविंशं यजमानस्य दिष्टगतावपि सर्वस्वारस्य समापनाधिकरणम् (सूत्रे ५७-५८)

## अथ चतुर्विंशं यजमानस्य दिष्टगतौ सर्वस्वारस्य शुक्रस्पर्शादियोग्याङ्गाद्यनुष्ठानाधिकरणम् (सूत्रम् ५९)

**गते कर्मास्थियज्ञवत् ॥ ५९ ॥**

प्रासङ्गिकी सङ्गतिः । गते यजमाने कर्मशेषो ऋत्विग्भिः समापनीय इत्युक्तम् । तत्र समापनीये कर्मशेषे चोदकप्राप्ताङ्गमध्ये किं बाध्यं किं नेति प्रश्नस्योत्तरार्थमिदं सूत्रम् । **गते** यजमाने शिष्टं **कर्मास्थियज्ञवत्**कर्तव्यमिति । यथा शुक्रान्वारम्भणाकं क्रत्वर्थं योग्यत्वात्कार्यं जीवद्यजमानकर्तृकं मन्त्र-जपादिकमायोग्यत्वाद्बाध्यमित्युक्तं तथेहापि योग्यं क्रत्वर्थं कार्यमयोग्यं यजमानकर्तृकं बाध्यमिति भावः सूत्रकारस्य ।

इति चतुर्विंशं यजमानस्य दिष्टगतौ सर्वस्वारस्य शुक्रस्पर्शादियोग्याङ्गाद्यनुष्ठानाधिकरणम् (सूत्रम् ५९)

## अथ पञ्चविंशं सर्वस्वारे यजमानस्य दिष्टगतावपि आयुरांशंसनाधिकरणम् (सूत्रे ६०-६१)

**जीवत्यवचनमायुराशिषस्तदर्थत्वात् ॥ ६० ॥**

**(वचनं वा भागित्वात्प्राग्यथोक्तात् ॥ ६१ ॥)**



पूर्वन्यायेन शङ्कनात्सङ्गतिः । सूक्तवाके श्रुतः ''आयुराशास्ते'' इत्याद्यंशः सर्वस्वारे जीव-दवस्थायां वक्तव्यः, उत नेति सन्देहे, अस्थियज्ञवन्न वक्तव्यः । अभिप्रेतमरणविरोधादिति प्राप्तम् । तदाह सूत्रे **आयुराशिषो जीवत्यवचनमेव** । तदाशासनस्य तदर्थत्वादायुरर्थत्वात् यजमानस्य च मरणार्थित्वादिति । **सिद्धान्तस्तु**, तृतीयसवने आर्भवस्तोत्रकाले मुमूर्षोर्यजमानस्य ततः प्रागपि सम्भावितमरणस्य प्राप्तौ क्रतुवैगुण्यापत्तेस्तावत्कालं जीवितार्थं ''आयुराशास्ते'' इत्ययमंशो होत्रा पठितव्य इति ।

इति पञ्चविंशं सर्वस्वारे यजमानय दिष्टगतावपि आयुराशंसाधिकरणम् (सूत्रे ६०-६१)

## अथ षड्विंशं द्वादशाहे ऋतुयाज्याद्यनुष्ठानाधिकरणम् (सूत्रम् ६२)

**क्रिया स्याद्धर्ममात्राणाम् ॥ ६२ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । यत्प्रकृतावानत्यर्थमृत्विजां वरणं दक्षिणादानञ्च तद्द्वयं **वरणमृत्विजा-मानत्यर्थत्वात्सत्रे न स्यादिति, परिक्रयश्च तादर्थ्यादिति** सूत्राभ्यां सूत्रे नास्तीत्युक्तम् । यत्वदृष्टार्थं ''आत्रेयाय दक्षिणां ददाति'' इत्युक्तदक्षिणादानादि तत्तु सूत्रे कर्तव्यमिति प्रत्युदाहणार्थमिदं सूत्रम् । **धर्ममात्राणां** केवलमदृष्टार्थानां सत्रे **क्रिया स्यात्** अनुष्ठानं स्यादिति । नात्र संशयादीत्याहुः ।

इति षड्विंशं द्वादशाहे ऋतुयाज्याद्यनुष्ठानाधिकरणम् (सूत्रम् ६२)

## अथ सप्तविंशं पवमानेष्टौ निर्वापानुष्ठानाधिकरणम् (सूत्रम् ६३)

**गुणलोपे च मुख्यस्य क्रिया स्यात् ॥ ६३ ॥**

पूर्ववैषम्येणात्र शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोः ''अग्निहोत्रहवण्यां हवींषि निर्वपति'' इति श्रुतो निर्वापः ''अग्नये पवमानायाष्टाकपालं निर्वपेत् । अग्नये पावकायाग्नये शुचये'' इत्याधानप्रकरणे श्रुतपवमानेष्टिषु चोदकप्राप्तः कर्तव्यो न वेति सन्देहे, ''अग्निहोत्रहवण्यां हवींषि निर्वपति'' इति शास्त्रस्य ह्यग्निहोत्रहवीगुणको निर्वापोऽर्थो न केवलनिर्वापः । पवमानेष्टिषु चाग्निहोत्रहवण्यभावात्तद्गुणको निर्वापोऽपि नास्त्येव । अशास्त्रार्थे केवलनिर्वापे कृते नियमादृष्टानुबद्धहविः संस्काररूपफलासिद्धेः । अग्निहोत्रं यया हुतं सा ह्यग्निहोत्रहवणी । न चाधानवेलायामग्निहोत्रमस्ति । अतः सत्रे वरणदानयोर-दृष्टार्थत्वेनाबाधेऽपि पवमानेष्टिषु वैगुण्यान्नियमादृष्टाख्यादृष्टाभावादग्निहोत्रहवणीरूपगुणासम्भवा-न्निर्वापो लुप्यत इति **प्राप्ते सिद्धान्तः**, चोदको हि प्रकृतितः पदार्थान् विकृतौ प्रापयत् कार्यमुखेन

प्रापयति । कार्यश्च हविःसंस्काररूपनिर्वापस्यास्तीति तन्मात्रमेव प्रापयति । अग्निहोत्रहवणीन्त्व-सम्भवान्न प्रापयति । न चाप्राप्तस्याङ्गत्वम् । किञ्च गुणभूताग्निहोत्रहवण्यभावेन प्रधानलोपो न युक्त इति तदभावेऽप्यविगुणत्वान्निर्वापमात्रं कार्यमिति । तदाह **सूत्रे**, अग्निहोत्रहवणीरूपगुणलोपेपि **मुख्यस्य** प्रधानस्य निर्वापस्य क्रियाऽनुष्ठानं स्यादिति पवमानेष्टिषु निर्वापसिद्धिः ।

इति सप्तविंशं पवमानेष्टौ निर्वापानुष्ठानाधिकरणम् (सूत्रम् ६३)

## अथाष्टविंशं वाजपेये मुष्टिलोपाधिकरणम् (सूत्राणि ६४-६७)

**मुष्टिलोपात्तु सङ्ख्यालोपस्तद्गुणत्वात्स्यात् ॥ ६४ ॥**

**(न निर्वापशेषत्वात् ॥ ६५ ॥ सङ्ख्या तु चोदनां प्रति सामान्यात्तद्विकारः संयोगाच्च परं मुष्टेः ॥ ६६ ॥ न चोदनाभिसम्बन्धात्प्रकृतौ संस्कारयोगात् ॥ ६७ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । वाजपेये बार्हस्पत्ये ''नैवारः सप्तदशशरावः क्षीरे चरुर्भवति'' इति चरुः श्रुतः । प्रकृतौ तु ''चतुरो मुष्टीन्निर्वपति'' इति चतुःसङ्ख्यामुष्टी श्रुते । तदुभयमिह चोदकेन प्राप्तम् । तत्र किमुभयमप्यनुग्राह्यम्, अथोभयं बाध्यम्, उतान्यतरत्, तत्रापि किमनियमः, उत मुष्ट्यनुग्रहः सङ्ख्याया बाधः, किं वा सङ्ख्यानुग्रहो मुष्टेर्बाध इति षोढा **सन्देहः** । **पूर्वपक्षस्तु**, चोदक-प्राप्तत्वादुभयमन्यनुग्राह्यमित्याद्यः । चतुर्भिर्मुष्टिभिर्निरुप्तैर्द्रव्यैः सप्तदशशरावपरिमाणश्चरुः सम्पादयितुं न शक्य इति पूर्वत्र निर्वापस्याबाधेऽपीह समानकार्यत्वात्सप्तदशत्वसङ्ख्यया चतुष्ट्वसङ्ख्यायाः शरा-वद्रव्येण मुष्टेर्बाध इत्युभयं बाध्यमिति **द्वितीयः** । यद्यत्र सङ्ख्याद्रव्ययोः प्राकृतसङ्ख्याकार्ये साक्षाद्विधानं स्यात्तदा भवेदेवं द्वाभ्यां द्वयोर्बाधः । न चैवम् । इह सङ्ख्याद्रव्ययोर्यागीयद्रव्याङ्गतया विधानात्प्रकृतौ च तयोर्निर्वापाङ्गत्वान्न साक्षादेकविषयत्वम् । किन्त्वर्थात् । अर्थादर्थश्चान्यतरबाधेनापि सिध्यतीति नोभयं बाधनीयमिति **तृतीयः** । अन्यतरबाधपक्षेऽपि द्वयोरपि चोदकप्राप्तत्वाविशेषाद्विनिगमकाभावादनियम इति **चतुर्थः** । चतुरो मुष्टीनित्यत्र मुष्टेः परिच्छेद्यतया प्राधान्यात्सङ्ख्यायाश्च तत्परिच्छेदकतया गुणत्वात्प्रधानमलोपयित्वा गुणभूतचतुष्ट्वसङ्ख्यैव लोपनीयेति **पञ्चमः** । तदाह **सूत्रे**, **मुष्टिलोपात्तु सङ्ख्याया** अपि **लोपः स्यात्** । **गुणिलोपे गुणस्यापि लोपावश्यम्भावात्**। अतोऽन्यतरलोपेप्यर्थसिद्धः सङ्ख्याया एव लोपो न मुष्टेरिति । **सिद्धान्तस्तु**, स्यादेवं, चतुष्ट्वस्य मुष्ट्यङ्गतया तद्गुणत्वं स्यात् । न चैवम् । चतुर इति द्वितीयाविभक्त्या चतुष्ट्वं कारकत्वेनावगम्यते । कारकश्च क्रिययैव साक्षादन्वेति । न मुष्टिद्रव्येण । द्वयोर्मिथोऽन्वयायोगात् । अतो वाक्यप्रमाणकयोमुष्टिचतुष्ट्वयोः सम्बन्धः । तद्बाधेन



कारकविभक्तिश्रुत्या ''चतुरो निर्वपति'' ''मुष्टीन्निर्वपति'' इति चतुःसङ्ख्यागुणको मुष्टिगुणकश्च निर्वापो विधीयते । श्रुतेर्वाक्याद्बालीयस्त्वात् । एवञ्चोभयोः क्रियाङ्गत्वे समाने सति मुख्यत्वात्सङ्ख्यानु-ग्रहेण जघन्यत्वान्मुष्टेर्लोप इति चतुर्भिः कुडवैः सप्तदशशरावश्चरुः कार्य इति । फलं व्यक्तम् ।

इत्यष्टाविंशं वाजपेये मुष्टिलोपाधिकरणम् (सूत्राणि ६४-६७)

## अथैकोनत्रिंशं ''धेनुमालभेत'' इत्यादिश्रुतौ धेन्वादिशब्दानां गवादिवाचिताधिकरणम् (सूत्रम् ६८)

**औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्व्त् ॥ ६८ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । पशुविकृतिषु श्रूयते ''द्यावापृथिव्यां धेनुमालभेत । वायव्यं वत्सम् । ऐन्द्रमृषभम्'' इति धेनुवत्सवृषभशब्दा गोव्यक्तिगतधानक्रियावयोविशेषमांसलतास्वेव प्रयोगप्राचुर्या-द्गोद्रव्यगतासाधरणधर्मवचनाः । तेषां चोदकप्राप्ताजादिपशुषु प्रवृत्तिरस्त्युत नेति **सन्देहे**, धेन्वादिशब्दतो गोव्यक्तिप्रतीतावपि धेन्वादिशब्दा न धानक्रियादिविशिष्टगोवाचकाः । किन्त्वाकृत्यधिकरणन्यायेन गोगतधानक्रियादिमात्रवाचका एव । तथा चात्र धेन्वादिपदोक्तधानादिधर्माणामाधारभूतव्यक्त्यपेक्षायां गोव्यक्तेरुपदेशेनातिदेशेन वा प्राप्त्यभावादजव्यक्तेश्च चोदकतः प्राप्तेस्तत्रैव धेन्वादिशब्दा लक्षणया वर्तेरन्नित्यस्ति विकृतिष्वप्यजादिप्राप्तिरिति, पूर्वत्र चोदकप्राप्तद्रव्यबाधेऽपि नात्र तद्बाध इति **प्राप्ते सिद्धान्तः**, अवगते ह्यौपदेशिकशास्त्रार्थे पश्चाच्चोदकस्य प्रवृत्तिरिति प्रथममेव धेन्वादिपदैर्गोगता-साधारणधर्मावगमात्तदनुरोधेन गोव्यक्तिमेवोपादाय पश्चात्प्रवर्तमानश्चोदकबाध एव युक्तः । न तु तदनुरोधेनौपदेशिकशास्त्रार्थमुपादाय श्रुतधेन्वादिपदानां लक्षणाश्रयणं युक्तमिति, न चोदकतोऽजस्य प्राप्तिरिति । तदाह सूत्रे **औत्पत्तिके** उत्पत्त्यैवाऽधिष्ठानगुणवचने शब्दे प्रयुक्ते द्रव्यतोऽपि गोव्यक्ति-द्रव्यतोऽपि **विकारः** प्राकृताजविकारः स्यात् । न गुणमात्रतः । श्रुतस्य धानकर्मत्वादिगुणस्य चोदक-प्राप्तेऽजद्रव्ये **अकार्यत्वात्** कर्तुमशक्यत्वदिति । फलन्तु चोदकप्राप्ताजबाधः ।

इत्येकोनत्रिंशं ''धेनुमालभेत'' इत्यादिश्रुतौ धेन्वादिशब्दानां गवादिवाचिताधिकरणम् (सूत्रम् ६८)

## अथ त्रिंशं ''वायव्यं श्वेतमालभेत'' इत्यनेनाजस्यैवालम्भनाधिकरणम् (सूत्रम् ६९)

**नैमित्तिके तु कार्यत्वाप्रकृतेः स्यात्तदापत्तेः ॥ ६९ ॥**

''वायव्यं श्वेतमालभेत'' इत्यादौ श्वैत्यादिसाधारणधर्मश्रवणस्थले चोदकप्राप्ताजादिद्रव्यप्रवृत्ति-रस्तुत नेति **सन्देहे,** पूर्वत्र गोगतासाधरणधर्मवाचित्वाद्धेन्वादिशब्दानां तैः श्रुतासाधारणगुणविरोधेन चोदकप्राप्तद्रव्यबाधेऽपि श्वैत्यगुणस्य साधारणत्वेन चोदकप्राप्ताजादिद्रव्येऽपि सम्भवान्न तस्य निवृत्तिरिति पूर्वोक्तस्य प्रत्युदाहणार्थमिदम्। नात्र पूर्वपक्षादीत्याहुः। तदाह **सूत्रे, नैमित्तिके** श्वेतगुण-मात्रनिमित्तके शब्दे श्रुते **प्रकृतेः** प्राकृतद्रव्यस्यैवालम्भः स्यात्। कुतः? **तदापत्तेः** तस्यैव द्रव्यस्य चोदकतः प्राप्तेः। तस्मिंश्चाजद्रव्ये श्रुतस्य तस्य गुणस्य **कार्यत्वाकर्तुं** शक्यत्वादिति।

इति त्रिशं ''वायव्यं श्वेतमालभेत'' इत्यनेनाजस्यैवालम्भनाधिकरणम् (सूत्रम् ६९)

## अथैकत्रिंशं साद्यस्क्रे चित्रायाश्च खलेवाल्याखास्तण्डुलस्य च यथाक्रमं रवादिरत्वव्रैहत्वानियमाधिकरणम् (सूत्रम् ७०)

**विप्रतिषेधे तद्वचनात्प्रकृतेर्गुणलोपः स्यात्तेन च कर्मसंयोगात् ॥ ७० ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः। साद्यस्क्रे श्रूयते ''खलेवाली यूपो भवति'' इति। खलेवाली शब्द-स्यार्थ उक्तः पूर्वपादे **कर्म च द्रव्यसंयोगार्थम्** इत्यत्र। तत्र किं चोदकप्राप्तं खादिरादिकं छेदनादिभिर्यूपं कृत्वा खलेवाली कर्तव्या, किं वा यथावत्तया पूर्वं स्थितैव खलेवाली यूपः कार्येति **सन्देहः। पूर्वपक्षस्तु** ''या खलेवाली सा यूपः'' इति खलेवाल्यनुवादेन यूपत्वविधावयूपे खलेवाल्यां यूपशब्दो वर्तमानः कार्यपरः सन्नमुख्यः स्यात् ''खलेवाली यूपकार्यकारिणी'' इति। अतो ''यो यूपश्छेदनादिना निष्पन्नः खादिरादिः स खलेवाली भवति'' इति वचनव्यक्तिमाश्रित्य यूपानुवादेन खलेवालीत्वमेव विधेयम्। एवञ्च पूर्वत्र चोदकप्राप्ताजादिद्रव्यबाध इवात्रापि चोदकाबाधायतत्प्रापितखादिरं यूपच्छेदनादित-त्संस्कारांश्च संपाद्य यूपं कृत्वा स एव खलेवालीत्वेन स्थाप्यः। अन्यथा खादिरतत्संस्कारछेदनादि-बहुबाधः स्यादिति। **सिद्धान्तस्तु,** यूपानुवादेन तस्य खलेवालीत्वविधौ तस्य न किञ्चिद्दृष्टमित्यदृष्टार्थं तद्विधानं स्यात्। खलेवाल्यनुवादेन यूपत्वविधौ तु यूपकार्यं पशुनियोजनं दृष्टमेव लभ्यते। न च दृष्टे सम्भवत्यदृष्टकल्पनं युक्तम्। अदृष्टार्थत्वे च फलान्तरकल्पना प्रकरणादुत्कर्षश्च स्यात्। तस्मात्खादर्या-मखादर्यां वा खलेवाल्यां यूपकार्यार्थं यूपताविधानमिति। तदाह **सूत्रे, तद्वचनात्** ''खलेवाली यूपो भवति'' इति वचनात् **विप्रतिषेधे** संशये सति **प्रकृतेः** प्राकृतस्य पशुनियोजनसाधनत्वस्य खादिरत्व-**गुणलोपः स्यात्। तेन** खलेवालीद्रव्येण नियोजनकर्मणः **संयोगादिति।** फलन्तु प्राकृतरवादिरादिबाधः।

इत्येकत्रिंशं साद्यस्क्रे चित्रायाश्च खलेवाल्यास्तण्डुलस्य च यथाक्रमं खादिरत्वव्रैहत्वानियमाधिकरणम् (सूत्रम् ७०)



## अथ द्वात्रिंशं खलेवाल्यां रक्षणाद्यननुष्ठानाधिकरणम् (सूत्रे ७१-७२)

**परेषां प्रतिषेधः स्यात् ॥ ७१ ॥**

**(प्रतिषेधाच्च ॥ ७२॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः। पूर्वत्र खलेवाली पूर्वसिद्धैव ग्राह्येत्युक्तम्। तत्र चोदकप्राप्तखादि-रत्वगुणस्य बाधेऽपि छेदनतक्षणनिखननोच्छ्रयणादयोऽपि धर्माः कर्तव्या उत नेति **सन्देहे,** चोदकानु-ग्रहाय कर्तव्या इति **प्राप्ते** प्रागेव छित्वा श्लक्ष्णीकृत्योच्छ्रितत्वेन निखातितत्वात्पुनश्छेदनादेः फलाभावान्न कर्तव्या इति **सिद्धान्तः।** तदाह **सूत्रे, परेषाञ्च** छेदनादिसंस्काराणाञ्च **प्रतिषेधः स्यादिति।**

इति द्वात्रिंशं खलेवाल्यां तक्षणाद्यननुष्ठानाधिकरणम् (सूत्रे ७१-७२)

## अथ त्रयस्त्रिंशं खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानाधिकरणम् (सूत्रम् ७३)

**अर्थाभावे संस्कारार्थत्वं स्यात् ॥ ७३ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः। प्रकृतौ यूपधर्माः केचन दृष्टार्थाः। यथा यूपस्याभितः पांसुप्रक्षेपण-रूपं **पर्यूहणं,** प्रक्षिप्तानां पांसूनां मैत्रावरुणदण्डेन समीकरणाख्यं **परिबृंहणं,** समीकृतपांसुषु जलप्रक्षेपणरूप**परिषेचन**मित्येवंरूपाः। केचनाञ्जनप्रोक्षणादयोऽदृष्टार्थाः। ते चोभयविधाः खलेवाल्यां चोदकतः प्राप्ताः कर्तव्या न वेति **सन्देहे,** तेषां धर्माणां यूपार्थत्वादयूपस्यैव बलिवर्दैन चङ्क्रमणाय खले स्थापितस्य काष्टस्य पूयकार्ये विनियोगान्न तत्र पूर्वत्र छेदनादिरिव यूपसंस्काराः पर्यूहणपरिबृंहणाभि-षेचनादयः कार्या इति **प्राप्ते सिद्धान्तः।** यूपशब्दो हि छेदनतक्षणादिसंस्कारनिमित्तको न जातिनिमित्तकः। तथा च यूपशब्दाभिधेयाः संस्कारा न यूपार्थाः। किन्तु पशुनियोजनाङ्गभूताः खलेवाल्यामपि चोदकतः प्राप्यमाणाः। यदि खलेवाली बलीवर्दैश्चालिता तदा तद्दृढीकरणार्थं पर्यूहणादयः कार्याः। यदि तु प्रागेव दृढास्तदा तु लुप्तार्थत्वान्न कार्याः। अदृष्टार्थास्तु कार्या एवेति। तदाह सूत्रे **अर्थाभावे** छेदनादेरिव प्रयोजनाभावे पर्यूहणादीनां केवलं यूपशब्दवाच्य**संस्कारार्थत्व-**मित्यकरणं **स्यात्।** अस्ति च तेषामिह खलेवालीदृढीकरणरूपदृष्टमदृष्टञ्च प्रयोजनमिति खलेवाल्या-मपि ते स्युरिति।

इति त्रयस्त्रिंशं खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानाधिकरणम् (सूत्रम् ७३)

अथ चतुस्त्रिंशं महापितृयज्ञे भाष्यमतेन धानास्ववघातानुष्ठानाधिकरणम् (सूत्रम् ७४)

**अर्थेन च विपर्यासे तादर्थ्यात्तत्वमेव स्यात् ॥ ७४ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । महापितृयज्ञे श्रूयते ''सोमाय पितृमते पुरोडाशमष्टाकपालं निर्वपति । पितृभ्यो बर्हिषद्भ्यो धानाः । पितृभ्योऽग्निष्वात्तेभ्यो दुग्धे मन्थः'' इति । **धाना** भर्जिता-स्तण्डुला **इत्येके** । भर्जिता व्रीहय **इत्यन्ये** । तत्र चोदकप्राप्तोऽवघातः किं धानासु कर्तव्यो न वेति सन्देहे, पूर्वत्र खलेवालीत्वाविघातकतया पर्यूहणादेश्चोदकप्राप्तस्याबाधेऽपीह धानास्ववघाते कृते सति सक्तुभावापत्या धानारूपत्वभञ्जेन श्रुतद्रव्यकत्वाविघाताय न कर्तव्योऽवघात इति **प्राप्ते सिद्धान्तः** भर्जनानन्तरं कृतेऽवघाते हि धानात्वहानिः स्यात् । भर्जनात्प्रागेवावघाते सति तदभावात्पूर्वमवघातेन तण्डुलान् सम्पाद्य पश्चाद्भर्जनमित्यस्त्यवघातः । परन्तु धानात्वदशायां प्राप्तोऽवघातो धानात्वदशातः पूर्वं कार्य इति प्राकृतक्रमबाधमात्रम् । तावता नावघातरूपपदार्थबाधः । अग्निहोत्रहवणीरूपगुणलोपेऽपि मुख्यनिर्वापस्य पवमानेष्टिक्रियार्थत्वस्यात्रैव पादे पूर्वत्र **गुणलोपे च मुख्यस्य क्रिया स्यात्** इत्यत्रोक्तत्वादिति ।

इति चतुस्त्रिंशं भाष्यकारमतेन धानास्ववघातानुष्ठानाधिकरणम् (सूत्रम् ७४)

अथ चतुस्त्रिंशं वार्तिककारमतेन पेषणस्य प्राकृततासमर्थनाधिकरणम् (सूत्रम् ७४)

**अर्थेन च विपर्यासे तादर्थ्यात्तत्वमेव स्यात् ॥ ७४ ॥**

**तदेतद्भाष्यकारीयं मतमयुक्तम्** प्रकृतावपि पूर्वमवघातः पश्चात्पाक इति नास्ति धानास्वप्यवघात-भर्जनयोः क्रमबाध इति दूषयित्वा **वार्तिककारः** ''पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्'' इति वाक्यमुदाहृत्य व्यचारयत् । अभिवान्यायै **अभिवान्याया** मृतवत्साया गोर्दुग्धे क्षीरे प्रक्षिप्य मथितास्सक्तवो **मन्थशब्दार्थः** । तत्र सक्तूनां मन्थशब्दितं पेषणं किं प्राकृतमुताप्राकृतमिति संशये, अप्राकृतमेवेदं पेषणम् । न तु प्राकृतम् । इदं हि पेषणं पाकोत्तरकालमर्थाद्भवति । कथं ? भर्जिता-स्तण्डुलास्तु धानाः । ताश्चूर्णीकृताः सक्तवः । ते च पयसि प्रक्षिप्य मथिता मन्थ इति पाकोत्तरकालं भवति । प्राकृतन्तु पेषणं प्रथमतः कार्यम् । पश्चात्तु पाकः । पूर्वं पेषणाभावे पुरोडाशनिर्वर्तकपाकस्या-शक्यत्वात् । अतः क्रमव्यत्यासात्प्रकृतौ पेषणस्य पाकार्थत्वादिह च पेषणानन्तरं पाकरूपद्वाराभावेन प्राकृतस्य पेषणस्य निवृत्तत्वात्प्राकृतधर्महीनमिदमपूर्वं पेषणमिति **प्राप्ते सिद्धान्तः**, स्यादेवं यदि प्रकृतौ पेषणं पाकार्थं स्यात्तदा लुप्तपाकत्वान्न प्राकृतपेषणस्यात्र प्रवृत्तिः। न चैवम् । ''तण्डुलान् पिनष्टि ।



कपालेषु श्रपयति'' इति द्वितीया श्रुत्या पेषणश्रपणयोर्द्वयोरपि द्विरवत्तरूपहविरर्थत्वात्कपालेष्वित्यत्र किमित्याकांक्षायां प्राकृतपुरोडाशस्यैव द्वितीयान्ततयाऽन्वयात् । एवञ्च प्रकृतौ पेषणं विना पिष्टसाध्य-पुरोडाशानिष्पत्तेरर्थात्पेषणं श्रपणात्पूर्वं क्रियते। इह तु प्रागुक्तदिशा अर्थादेव पश्चात्क्रियते इति क्रमव्यत्ययमात्रम् । न तावता पेषणरूपपदार्थभेदः । **गुणलोपेऽपि मुख्यस्य क्रिया स्यादिति** पूर्वोक्तन्यायेन प्राकृतक्रमलोपेऽपि मुख्यपेषणरूपपदार्थलोपायोगात् । तस्मात्प्राकृतमेव पेषणमिति । तदाह सूत्रे **अर्थात्क्रमविपर्यासेपि तादर्थ्यात्** प्राकृतपेषणकार्यकरत्वात्तत्वं तद्धर्मवत्वं स्यादिति । **फलन्तु**, प्राकृतपेषणधर्माणामननुष्ठानानुष्ठाने पूर्वोत्तरपक्षयोः ।

इति चतुस्त्रिंशं वार्तिककारमतेन पेषणस्य प्राकृतताससमर्थनाधिकरणम् (सूत्रम् ७४)

इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-
श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते दशमाध्यायस्य द्वितीयः पादः

अस्मिन् पादे अधिकरणानि ३४ सूत्राणि ७४
आदितः अधिकरणानि ६५१ सूत्राणि १८८३

## अथ दशमाध्याये तृतीयः पादः

पूर्वपादे विकृतिषु चोदकप्राप्तानां केषाञ्चित्पदार्थानामबाधः प्रधान्येन चिन्तितः । अत्र तु पादे प्राकृतपदार्थानुवादेन विहितानामप्राकृतानां धर्माणामबाधः प्राधान्येन चिन्त्यत इति पादभेदं पूर्वानन्तर्य-श्चास्य पादस्याहुः ।

अथ प्रथमं पश्चादौ सामिधेन्यादिप्राकृतेतिकर्तव्यतानुष्ठानाधिकरणम् (सूत्राणि १-१२)

**विकृतौ शब्दवत्वात्प्रधानस्य गुणानामधिकोत्पत्तिः सन्निधानात् ॥ १ ॥ प्रकृति-वत्तस्य चानुपरोधः ॥ २ ॥ चोदनाप्रभुत्वाच्च ॥ ३ ॥ प्रधानन्त्वङ्गसंयुक्तं तथा-भूतमपूर्वं स्यात्तस्य विध्युपलक्षणात्सर्वो हि पूर्ववान् विधिरविशेषात्प्रवर्तितः ॥ ४ ॥ न चाङ्गविधिरनङ्गे स्यात् ॥ ५ ॥ कर्मणश्चैकशब्द्यात्सन्निधाने विधेराख्यासंयोगो गुणेन तद्विकारः स्याच्छब्दस्य विधिगामित्वाद्गुणस्य चोपदेश्यत्वात् ॥ ६ ॥ अकार्य-त्वाच्च नाम्नः ॥ ७ ॥ तुल्या च प्रभुता गुणे ॥ ८ ॥ सर्वमेवं प्रधानमिति चेत् ॥ ९ ॥ तथाभूतेन संयोगाद्यथार्थविधयः स्युः ॥ १० ॥ विधित्वञ्चाविशिष्टमेवं प्राकृतानां**

**वैकृतैः कर्मणा योगात्तस्मात्सर्वं प्रधानार्थम् ॥ ११ ॥ समत्वाच्च तदुत्पत्तेः संस्कारै-रधिकारः स्यात् ॥ १२ ॥)**

अग्नीषोमीयपशौ श्रूयते ''एकादश प्रयाजान्यजति'' इति । तत्र किं सङ्ख्यारूपगुणविशिष्ट-प्रयाजविधिः, उत चोदकप्राप्तप्रयाजानुवादेन सङ्ख्यामात्रविधिरिति **सन्देहे,** विकृतिभावनायाः ''केन प्रकारेणेष्टं भावयेत्'' इत्युपकाररूपप्रकारमात्रस्याकांक्षित्वेन तन्मात्रस्यैव चोदकेन प्राप्त्या स्वरूपेण प्रयाजादिपदार्थानामप्राप्तेस्तदनुवादेन न सङ्ख्यारूपगुणविधिः सम्भवति । किञ्च सन्निहितधात्वर्थ-विधिसम्भवे न पदान्तरोक्तसङ्ख्याविधानं युक्तम् । तस्माद्गुणविशिष्टप्रयाजनामकयागविधिरेवायमिति **प्राप्तम्** । तदाह सूत्रे **विकृतावग्नीषोमीयपश्वादौ प्रधानस्य शब्दवत्त्वाद्विहितत्वात्** प्रधानमात्रस्य विधानादिति यावत् । उपकाराकांक्षायां **गुणानामङ्गभूतप्रयाजादीनामधिकोत्पत्तिः** सङ्ख्याविशिष्ट-तयोत्पत्तिः । कुतः ? **सन्निधानादिति । सिद्धान्तस्तु,** विकृतिभावनाया उपकाराकाङ्क्षित्वेन तन्मात्राति देशेऽप्युपकारावच्छेदकतया पश्चादार्थिकः पदार्थानामप्यतिदेशोऽप्यस्तीति चोदकप्राप्तपदार्थानुवादेन गुणमात्रविधिसम्भवेन विशिष्टप्रयाजविधिकल्पनं न युक्तम् । गौरवात् । वाक्यार्थविधिशेषस्तु विशिष्ट-विधिपक्षेऽपि विशेषणीभूतसङ्ख्यायाः पदान्तरोपात्तत्वात्तुल्य एव । तस्माच्चोदकप्राप्तानुवादेन सङ्ख्या-मात्र विधिः । एवं चातुर्मास्येषु श्रूयते ''न च प्रयाजा इज्यन्ते'' इति वाक्ये । तथा यत्र यत्र प्राकृताङ्ग-मप्राकृतगुणयुक्तं श्रूयते ''हिरण्यगर्भः समवर्तताग्र इत्याघारयति'' इत्यादौ तत्र सर्वत्राप्येवमेव पूर्वोत्तरपक्षौ ध्येयौ । **फलन्तु पूर्वपक्षे** चोदकबाधः । **सिद्धान्ते** तु नेति ।

इति प्रथमं पश्वादौ सामिधेन्यादिप्राकृतेतिकर्तव्यतानुष्ठानाधिकरणम् (सूत्राणि १-१२)

## अथ द्वितीयं वायव्यपशौ ''हिरण्यगर्भः'' इत्यादिमन्त्रस्योत्तरस्मिन्नाधारे गुणात्वाधिकरणम् (सूत्राणि १३-१७)

**हिरण्यगर्भे पूर्वस्य मन्त्रलिङ्गात् ॥ १३ ॥**

**(प्रकृत्यनुपरोधाच्च ॥ १४ ॥ उत्तरस्य वा मन्त्रार्थित्वात् ॥ विध्यतिदेशात्तच्छ्रुतौ विकारः स्याद्गुणानामुपदेश्यत्वात् ॥ १६ ॥ पूर्वस्मिंश्चामन्त्रत्वदर्शनात् ॥ १७ ॥**

पूर्वत्र वायव्यपशौ श्रुते ''हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति'' इतिवाक्ये प्राकृताघारानु-वादेन मन्त्रवधिरिति स्थिते सत्यत्र विशेषचिन्तनात्सङ्गतिः । प्रकृतौ हि द्वावाघारौ स्तः । आद्यः प्राजा-पत्योऽमन्त्रकः । ''प्रजापतिं मनसा ध्यायन्नाघारयति'' इति ध्यानमात्रोक्तेः । उत्तरश्चैन्द्रः ''ऊर्ध्वोऽ-



ध्वरः'' इत्यादिमन्त्रोपेतः । द्वावप्याघारौ वायव्ये पशौ चोदकप्राप्तौ । तत्र किं प्राकृताद्याघारानुवादेन ''हिरण्यगर्भः'' इति मन्त्ररूपगुणविधिः, उत उत्तरसमन्त्रकाघारानुवादेन तन्मन्त्रविधिरिति **सन्देहे,** ''प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय'' इति मन्त्रविधिवाक्यशेषे हिरण्यगर्भस्यैव प्रजापतित्व-श्रवणेन मन्त्रस्य प्रजापतिलिङ्गोपेततया प्राजापत्येप्यमन्त्रके पूर्वाघार एव मन्त्रविधिरिति **प्राप्तम्** । तदाह **सूत्रे, हिरण्यगर्भे** हिरण्यगर्भवति वाक्ये **मन्त्रलिङ्गात् पूर्वस्याघारस्य** मन्त्रविधिरिति । **सिद्धान्तस्तु,** प्रकृतौ ह्यनुष्ठेयार्थस्मृतौ कर्तव्यायां तद्धेतुतया मन्त्रब्राह्मणोपद्रष्टृवचनकल्पसूत्रेष्वनेकेषु प्राप्तेषूत्तराघारे ''ऊर्ध्वोऽध्वरो दिविस्पृशम्'' इति मन्त्रविधानान्नियमादृष्टं कल्पितम् । पूर्वाघारे तु मन्त्रविध्यभावान्न नियमादृष्टकल्पनमिति विकृतावपि तथैव प्राप्तेरिह पूर्वाघारे मन्त्रमात्रविधौ प्रकृतावक्लृप्तं नियमादृष्टं कल्प्यम् स्यात् । उत्तरस्मिंस्तु न तत्कल्प्यम् । प्रकृतौ क्लृप्तत्वात् । अतो लाघवान्मन्त्रमात्रविधिरुत्तरत्र । न चेन्द्रमन्त्रस्यासामर्थ्यं शङ्क्यम् । हिरण्यं गर्भेऽस्येति हिरण्यगर्भः ऐश्वर्यवानिन्द्रः । सोऽग्रे भूतसृष्टेः प्राक् समवर्तत समजनि । जातश्च स एक एव भूतस्य पञ्चमहाभूतस्य पतिरासीदित्येवं भाष्य एव मन्त्रलिङ्गस्येन्द्रे दर्शितत्वात् । वाक्यशेषस्यापि प्रजानां पतिरितीन्द्रेप्युपपत्तेरिति । तदाह **सूत्रे, उत्तरस्य वा मन्त्रार्थित्वादिति । फलन्तु** ''ऊर्ध्वोऽध्वरः'' इति प्राकृतमन्त्राबाधः **पूर्वपक्षे । सिद्धान्ते** तु तद्बाधेन हिरण्यगर्भ इति मन्त्रपाठः ।

इति द्वितीयं वायव्यपशौ ''हिरण्यगर्भः'' इत्यादिमन्त्रस्योत्तरस्मिन्नाघारे गुणत्वाधिकरणम् (सूत्राणि १३-१७)

## अथ तृतीयं चातुर्मास्येषु सोमेष्वासादननियोजनयोः प्राकृतगुणविधित्वाधिकरणम् (सूत्राणि १८-२२)

**संस्कारे तु क्रियान्तरस्य विधायकत्वात् ॥ १८ ॥**

**(प्रकृत्यनुपरोधाच्च ॥ १९ ॥ विधेस्तु तत्र भावात्सन्देहे यस्य शब्दस्तदर्थः स्यात् ॥ २० ॥ संस्कारसामर्थ्याद्गुणसंयोगारच्च ॥ २१ ॥ विप्रतिषेधात्क्रिप्रकरणे स्यात् ॥२२॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । सौमिकचातुर्मास्येषु श्रूयते ''उत्करे वाजिनमासादयति । परिधौ पशुं नियञ्जीत'' इति । **उत्करो** नाम वेद्यर्थमुद्धृतानां पांसूनां तीक्ष्णाग्रतया कृतो राशिः । **वाजिनन्तु** दधिनिस्सृतं जलम् । **परिधिस्त्वग्नेः** परितो निहितः काष्ठविशेषः । तत्र कितमुत्करगुणकमासादनं परिधिगुणकं नियोजनश्चापूर्वं विधीयते, किं वा प्राकृतासादननियोजनानुवादेन उत्करपरिधिगुणमात्रं

विधीयत इति **सन्देहे,** चोदकप्राप्तयोः प्राकृतयोरासादननियोजनयोरासत्तिभावपश्चनपक्रमणरूपदृष्टप्रयोजनकत्वादिह च तीक्ष्णाग्रोक्तोत्करे वाजिनासत्तिभावस्याङ्गुलीवदणीयसि परिधौ पश्चनपक्रमणस्य च दृष्टप्रयोजनस्यासम्भवात्पूर्वत्रादृष्टकल्पनां विनोपपत्तावपीह तत्कल्पनां विनाऽयोगाददृष्टार्थमप्राकृतमुत्करगुणविशिष्टासादनाख्यं परिधिगुणविशिष्टमपूर्वं नियोजनाख्यञ्च कर्म विधीयते । तथा च धात्वर्थविधिरप्यनुकूलितो भवति । अन्यथा वाक्यार्थविधिः स्यादिति **प्राप्तम्** । तदाह सूत्रे वाजिनादेरासादनादिरूपसंस्कारे श्रूयमाणे **क्रियान्तरस्यैव विधायकत्वाददृष्टं** कल्प्यमिति शेषः । **सिद्धान्तस्तु,** स्यादेवं यदि दृष्टार्थत्वासम्भवः । सम्भवति तूत्करस्य पृथ्वग्रतासम्पादनेन वाजिनस्यासत्तिभावः । तथा परिधेरपि स्थविष्ठतासम्पादनेन पश्चनपक्रमणं दृष्टं प्रयोजनम् । अतः प्राकृतासादननियोजनानुवादेन उत्करपरिधिरूपगुणमात्रविधिसम्भवान्न विशिष्टविधिगौरवाश्रयणं युक्तम् । वाक्यार्थविधिस्तु विशिष्टविधिपक्षेऽपि विशेषणोत्करादिविधिसंक्रमणात्तुल्य इति । **फलन्तूत्करपरिधिभ्यां** चोदकप्राप्तयोर्बर्हिर्यूपयोर्बाधः ।

**इति तृतीयं चातुर्मास्येषु सोमेष्वासादननियोजनयोः प्राकृतगुणविधित्वाधिकरणम् (सूत्राणि १८-२२)**

**अथ चतुर्थमग्निचयने प्राकृतवैकृतोभयदीक्षाहुतीनामनुष्ठानाधिकरणम् (सूत्राणि २३-२९)**

**षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ २३ ॥**

**(अभ्यासात्तु प्रधानस्य ॥ २४ ॥ आवृत्त्या मन्त्रकर्म स्यात् ॥ २५ ॥ अपि वा प्रतिमन्त्रत्वात्प्राकृतानामहानिः स्यादन्यायश्च कृतेऽभ्यासः ॥ २६ ॥ पौर्वापर्यञ्चाभ्यासे नोपपद्यते नैमित्तिकत्वात् ॥ २७ ॥ तत्पृथक्त्वञ्च दर्शयति ॥ २८ ॥ न चाविशेषाद्व्यपदेशः स्यात् ॥ २९ ॥)**

पूर्वन्यायेनाऽत्र शङ्कनात्सङ्गतिः । अग्निचयने चोदकतो दीक्षार्थाहुतिषु षट्सु प्राप्तासु ''आकूतिमग्निं प्रयुजं स्वाहा'' इत्यादयः षण्मन्त्राः श्रुताः । ते च किं प्राकृतषडाहुत्यङ्गभूतान् ''आकूत्यै प्रयुजेऽग्नये स्वाहे''त्यादीन् षण्मन्त्रान् बाधन्ते, अथैतैः समुच्चीयन्ते इति **सन्देहे,** यद्यपि वैकृता मन्त्राः ''षड्भिर्दीक्षयति'' इति वचनेन दीक्षार्थतया श्रुताः । न होमार्थतया । तथापि स्वाहाकारान्ततासामर्थ्येन होमद्वारैव दीक्षार्थता कल्प्यते । प्राकृता अपि ''आकूत्यै'' इत्यादिमन्त्रा होमद्वारा दीक्षासिध्यर्था इति दीक्षासिद्धिरूपैककार्यकरत्वान्मन्त्राणां वैकृतैः प्राकृतानां बाधः पूर्वत्रोत्करपरिधिभ्यां बर्हिर्यूपयोर्बाध इवेति **प्राप्तम्** । तदाह **सूत्रे,** **''षड्भिर्दीक्षयति''** इत्यत्र **तासां** प्राकृतानां **मन्त्रविकारः स्यात्** ।



निवृत्तिः स्यात् । कुतः? **श्रुतिसंयोगात्** मन्त्रान्तरैः संयोगादिति । **सिद्धान्तस्तु,** विकृतावग्नौ हि ''द्वादश जुहोति'' इति दीक्षार्थहोमानामभ्यासः श्रूयते । तदभ्यासे तदङ्गमन्त्राणामपि द्वादशत्वेन भाव्यम् । तत्र वैकृतानामेव षण्णामावृत्या द्वादशत्वं सम्पाद्यमुत प्राकृऽतैः षड्भिः समुच्चयो वेति विचारे यदि साक्षादेव होमाङ्गता वैकृतमन्त्राणां श्रूयते तदा मन्त्रान्तराणां बाधाद्धोमावृत्तिप्रयुक्ताऽवृत्तिस्तेषां स्यात् । न चैवम् । किन्तु ''षड्भिर्दीक्षयति'' इति दीक्षाङ्गत्वनिर्वाहाय स्वाहाकारलिङ्गवशेन तेषां होमार्थता कल्प्यते । श्रुतश्च दीक्षार्थत्वमनावृत्त्यैव सकृत्प्रयुक्तैस्तैः कृतेषु षट्सु होमेषूपपन्नमिति नावृत्तौ प्रमाणमस्ति । अतो द्वादशत्वसिद्धये प्राकृतैः षड्भिर्मन्त्रैर्वैकृतानां षण्णां मन्त्राणां समुच्चय एव । न बाध इति । **फलन्तु** व्यक्तम् ।

**इति चतुर्थमग्निचयने प्राकृतवैकृतोभयदीक्षाहुतीनामनुष्ठानाधिकरणम् (सूत्राणि २३-२९)**

**अथ पञ्चमं पुनराधानेऽग्न्याधानदक्षिणानां निवृत्त्यधिकरणम् (सूत्राणि ३०-३३)**

**अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ ३० ॥**

**(शिष्टत्वाच्चेतरासां यथास्थानम् ॥ ३१ ॥ विकारस्त्वप्रकरणे हि काम्यानि ॥ ३२ ॥ शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते ॥ ३३ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । आधाने ''एका देया । षड्देयाः । द्वादश देयाः'' इत्यदिना वैकल्पिकगवादिद्रव्यदक्षिणा बहवः श्रुताः । तस्याधानस्य विकृतिरूपं नैमित्तिकं पुनराधानं श्रूयते ''योऽग्नीनाधाय भाग्यज्यानिं पुत्रज्यानिं वा जीयते वार्छेत्स पुनरादधीत'' इति श्रवणात् । ज्यानिं प्राप्तिं वार्छेन्न विन्देदित्यर्थः । ''भाग्ययशःश्रीकामानां पुनरादधीत'' इति श्रवणात्काम्यं वा पुनराधानम् । तत्र पुनराधाने ''पुनर्निकृतो रथो दक्षिणा । पुनरुत्स्यूतं वासो दक्षिणा'' इत्यादिना दक्षिणान्तरञ्च श्रुतम् । भग्नः सन् पुनः समाहितो रथः **पुनर्निकृतः** । पाटितं वासः पुनः समाहितं पुनरुत्स्यूतमुच्यते । तत्र किं पुनर्निकृतरथादिरूपदक्षिणया प्राकृतैकादिदक्षिणानां बाधः, उत समुच्चय इति **सन्देहे,** ऋत्विगानतिरूपैककार्यत्वे समानेऽपि ''उभयीर्ददाति'' इति वाक्ये अग्न्याधायिकीः पौनराधायिकीश्चेत्युभयीर्दक्षिणा ददातीति श्रवणात्पूर्वत्रेव समुच्चय इति **प्राप्तम्** । तदाह सूत्रे **अग्न्याधेयस्य नैमित्तिके** दक्षिणारूप**गुणविकारे** पुनराधेये पुनर्निकृतरथादि**दक्षिणादान**रूप**मधिकं स्यात्** । न तु प्राकृतदक्षिणानिवर्तकं स्यात् । कुतः? ''उभयीर्ददाति'' इति **वाक्यसंयोगादिति** । **सिद्धान्तस्तु,** ददातीति वर्तमानापदेशेन विध्यश्रवणात् ''पुनर्निकृतो रथो दक्षिणा'' इति दक्षिणान्तरविधिशेषत्वादाधानानन्तरमेव नैमित्तिक-

पुनराधानानुष्ठानेन पूर्वमाधानकाले एकादिदक्षिणादानस्य पुनराधानकाले पुनर्निकृतरथादिदक्षिणादानस्य चावश्यकतया पौर्वापर्येणोभयदानस्य प्राप्त्या तदनुवादकतया ''उभयीर्ददाति'' इत्यस्योपपत्तेरेक-कार्यकरत्वेन वैकृतदक्षिणाभिः प्राकृतीनां बाध इति । फलं व्यक्तम् ।

इति पञ्चमं पुनराधानेऽग्न्याधानदक्षिणानां निवृत्यधिकरणम् (सूत्राणि ३०-३३)

## अथ षष्ठमाग्रयणे वासोवत्साभ्यामन्वाहार्यस्य निवृत्त्यधिकरणम् (सूत्रम् ३४)

**वासोवत्सश्च सामान्यात् ॥ ३४ ॥**

आग्रयणेष्टौ ''वासो दक्षिणा । वत्सः प्रथमजो दक्षिणा'' इति श्रुतं वा सोवत्सश्च प्रकृतितश्चोदक-प्राप्तस्यान्वाहार्यरूपदक्षिणादानस्य बाधकमुत नेति **सन्देहे,** समुच्चायकप्रमाणानामभावात्पूर्वत्रैव प्राकृतस्य बाधकमिति सिद्धावप्युत्तरविवक्षयेदं सूत्रमारभ्यते । वासोवत्सश्च द्वन्द्वैकवद्भावः । सामान्याद्दृत्विगानतिरूपसमानकार्यार्थत्वादन्वाहार्यनिवर्तकमिति ॥

इति षष्ठमाग्रयणे वासोवत्साभ्यामन्वाहार्यस्य निवृत्त्यधिकरणम्(सूत्रम् ३४)

## अथ सप्तममाग्रयणे वासोवत्सयोरन्वाहार्यधर्मानुष्ठानाधिकरणम् (सूत्रम् ३५)

**अर्थापत्तेस्तद्धर्म स्यान्निमित्ताख्याभिसंयोगात् ॥ ३५ ॥**

वासोवत्सश्च प्राकृतान्वाहार्यनिवर्तकमित्युक्तम् । तत्र किमन्वाहार्यधर्मा आसादनादयो वासोवत्से कार्याः न वेति **सन्देहे,** कर्तव्या इत्यत्र कस्यचिन्नियामकस्याभावान्न कर्तव्या इति **प्राप्ते,** अन्वाहार्यकार्याऽनतिकरत्वेन तत्स्थानापन्नत्वाद्वासोवत्सेपि तद्धर्माः कार्याः इति **सिद्धान्तः** । तदाह **सूत्रे, निमित्तेन** परिक्रयरूपेण या दक्षिणेत्याख्या तया **अभिसंयोगात्** वासोवत्स**मर्थापत्ते-**रन्वाहार्यकार्यापन्नत्वात्तद्धर्म स्यात् वेद्यासादनाद्यन्वाहार्यधर्मवत्स्यादिति । तत्कार्यापन्नस्य तद्धर्मलाभो नवमे सिद्ध एवेति मन्दान् प्रति तदेवोत्तरविवक्षया स्मारयितुमिदं सूत्रमित्याहुः ।

इति सप्तममाग्रयणे वसोवत्सयोरन्वाहार्यधर्मानुष्ठानाधिकरणम् (सूत्रम् ३५)

## अथाष्टममाग्रयणे वत्से पाकाभावाधिकरणम् (सूत्रम् ३६)

**दाने पाकोऽर्थलक्षणः ॥ ३६ ॥**



वासोवत्सं प्राकृतान्वाहार्यधर्मकमिति पूर्वत्रोक्तप्रमेयेऽत्र विशषचिन्तनात्सङ्गतिः । अन्वहार्यधर्मः पाको वत्से कर्तव्यो न वेति **सन्देहे,** पूर्वन्यायेन चोदकानुग्रहायेतरप्राकृतधर्मवत्पाकोपि कर्तव्य इति पक्त्वा तदीयमांसमेव दक्षिणात्वेन देयमिति **प्राप्ते सिद्धान्तः,** ''प्रथमजो वत्सो दक्षिणा'' इति श्रुतदक्षिणाशब्दो हि कर्मकरेभ्यो यद्भृतित्वेन दीयते तस्य वाचकः । तेन दक्षिणाशब्दसंयोगाद्वत्सद्रव्यमेव देयत्वेन श्रुतम् । न मांसम् । वत्सस्य पाके च वत्सद्रव्यमेव नश्येत् । न च प्रकृतावदनीयेना-न्वाहार्येणाऽनतेः कृतत्वादिहाप्यदनीयेनैव मांसेनाऽनतिः कार्येति वत्सस्यादनीयत्वसिद्धये पाकः कार्य इति वाच्यम् । पुरुषाणां बलपुष्ट्यादिद्वारा क्रत्वनुष्ठानशक्तिं जनयितुं वत्सस्याश्रवणाद्दक्षिणाश्रुति-संयोगेनाऽनत्यर्थत्वादानतिश्चानदनीयेनापि वत्सेन भवतीति न पाकः कर्तव्य इति । तदाह **सूत्रे,** वत्सस्य **दाने** श्रुतेऽर्थलक्षणोऽदनीयतारूपार्थसम्पादको न पाकः कार्य इति । फलं वत्सस्यैव दानम् ।

इत्यष्टममाग्रयणे वत्से पाकाभावाधिकरणम् (सूत्रम ३६)

## अथ नवममाग्रयणे वाससि पाकाभावाधिकरणम् (सूत्रम् ३७)

**पाकस्य चान्नकारित्वात् ॥ ३७ ॥**

पूर्ववैषम्येण शङ्कत्सङ्गतिः । आग्रयणे दक्षिणात्वेन श्रुते वाससि पाकोऽस्ति न वेति **सन्देहे,** पूर्वत्र वत्सस्य विनाशापत्त्या पाकायोगेप्युष्णोदकभाण्डे वाससो निक्षेपेण पाके स्वरूपनाशरूपविरोधा-भावात्पाकः कार्यो वाससीति **प्राप्ते सिद्धान्तः,** यदि प्रकृतौ पाकोऽदृष्टार्थः स्यात्तदा स्यादेवम् । न च तथा । अन्वाहार्यरूपदक्षिणाद्रव्यनिष्पत्तिरूपदृष्टार्थत्वात् । प्रकृते च दक्षिणाद्रव्यस्य वाससः पाकं विनापि सिद्धेः प्रयोजनाभावान्न वाससि पाक इति । तदाह **सूत्रे,** वाससि च न पाकः । पाकस्यान्वाहार्य रूपान्नकारित्वादिति । फलं व्यक्तम् ।

इति नवममाग्रयणे वाससि पाकाभावाधिकरणम् (सूत्रम् ३७)

## अथ दशममाग्रयणे वासोवत्सयोरभिघारणाभावाधिकरणम् (सूत्रम् ३८)

**तथाऽभिघारणस्य ॥ ३८ ॥**

पूर्ववैषम्येण शङ्कनासङ्गतिः । अभिघारणमन्वाहार्यधर्मः प्रकृतौ दृष्टः । स किं वासोवत्सयोः कार्यः, उत नेति **सन्देहे,** प्रकृतावभिघारणेन विनाप्यन्वाहार्यशब्दितान्नं निर्वर्तत इत्यदृष्टार्थमभिघारण-मिति वासोवत्सयोरपि दृष्टार्थपाकस्यासम्भवेन बाधेऽप्यदृष्टार्थमभिघारणं सम्भवतीति कार्यमेव । न

बाधानीयमिति **प्राप्ते सिद्धान्तः**, दृष्टे सम्भवत्यदृष्टकल्पनायोगात्प्रकृतौ स्वादिमार्थमभिघारणम् । स्वादिमा चाऽनतिविशेष उपयुज्यते । यथा हि स्वादुना द्रव्येणाऽनमन्ते, न तथेरतरेणेति लोके सिद्धत्वात् । अनदनीययोर्वासोवत्सयोश्च न स्वादिम्ना कृत्यमस्तीति पाकस्येवाभिघारणस्यापि बाध इति । तदाह **सूत्रे तथा** पाकस्येवाभिघारणस्यापि निवृत्तिरिति । **यत्तूपस्तरणाभिघारणयोरमृतार्थ-त्वादकर्म स्यादिति** पूर्वपादीयद्वितीयनये अभिघारणं न स्वादिमार्थमित्युक्तं तत्तु हविषोऽभिघारण-विषयम् । इदन्त्वानत्यर्थं दीयमानान्वाहार्यविषयमित्यविरोधमाहुः ।

इति दाशममाग्रयणे वासोवत्सयोरभिघारणाभावाधिकरणम् (सूत्रम् ३८)

## अथैकादशं ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणम् (सूत्राणि ३९-४९)

**द्रव्यविधिसन्निधौ सङ्ख्या तेषां गुणत्वात्स्यात् ॥ ३९ ॥**

**(समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात् ॥ ४० ॥ यस्य वा सन्निधाने स्याद्वाक्यतो ह्यभिसम्बन्धः ॥ ४१ ॥ असंयुक्ता तु तुल्यवदितराभिर्विधीयन्ते तस्मात्सर्वाधिकारः स्यात् ॥ ४२ ॥ संयोगाद्विधिश्रुतावेकजाताधिकारः स्याच्छुत्याऽकोपात्क्रतोः ॥ ४३ ॥ शब्दार्थश्चापि लोकवत् ॥ ४४ ॥ सा पशूनामुत्पत्तितो विभागात् ॥ ४५ ॥ अनियमोऽविशेषात् ॥ ४६ ॥ भागित्वाद्वा गवां स्यात् ॥ ४७ ॥ प्रत्ययात् ॥ ४८ ॥ लिङ्गदर्शनाच्च ॥ ४९ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ज्योतिष्टोमे श्रूयते "गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा" इति । तत्र किमेकैकस्य गवादेर्द्वादश-शतसङ्ख्या विधीयते, किं वा कस्यचिदेकस्य, उत माषाणां, अथ सर्वेषां सहितानां, अथानि यमेनैक-जातीयस्य, यद्वा नियमेन पशूनामेव, अथ गवामेवेति सप्तधा सन्देहः । **पूर्वपक्षस्तु**, तस्येति षष्ठ्यन्तेन पूर्वप्रकृतगवादीन् प्राधान्येनोद्दिश्य तद्गुणतया विधीयमाना संख्या प्रतिप्रधानमन्वेतीति प्रत्येकमेव द्वादशशतसङ्ख्या सम्पाद्येत्याद्यः । तदाह सूत्रे, **गवादिद्रवयविधिसन्निधौ** श्रूयमाणा **सङ्ख्या तेषां** द्रव्यादीनां **गुणत्वात्**प्रत्येकं **स्या**दिति । तस्येत्येकवचनेन गवादिसर्वपरामर्शायोगाद्गवादिसर्वद्रव्योद्देशेन सङ्ख्यासम्बन्धे दक्षिणासम्बन्धे च विधीयमाने वाक्यभेदप्रसङ्गात्प्रकृतगवादिद्रव्येष्वनियमेन तस्येति यत्किञ्चित्परामृश्य तादृशैकद्रव्येण सङ्ख्यया च विशिष्टा दक्षिणा विधीयत इति प्रकृतयत्किञ्चिद्द्रव्यस्यैक-स्येयं सङ्ख्येति **द्वितीयः** । सत्यमेकस्यैव सङ्ख्याविधिरिति । अनियमस्त्वयुक्तः । माषाणामव्यवधानेन



प्रकृततया बुद्धौ सन्निहितत्वेन तेषामेव समुदायविवक्षया तस्येति परामर्शेन सङ्ख्याविधिरिति **तृतीयः** । सत्यं माषाः सन्निहिता इति तथापि माषाश्चेति श्रुतचशब्दबलेन माषाणामन्यसाहित्यावगमाद्गवादि-मिलितसर्वसम्पाद्या सङ्ख्येति **चतुर्थः** । तस्येत्यस्यैकवचनान्तत्वेन गवादिसर्वद्रव्यपरामर्शायोगात्तेषां समाहारस्याशाब्दत्वेनाप्रकृततया परामर्शायोगाद्गवादिष्वनियमेन यस्य कस्यचिदेकवचनान्तनिर्दिष्टस्य बहुवचनान्तनिर्दिष्टस्य वा एकजातीयस्य तस्येति परामर्शेन सङ्ख्याविधिरिति **पञ्चमः** । गवादिपशूना-मेवैकवचननिर्दिष्टानाञ्च बहुवचननिर्दिष्टानाञ्च तस्येति परामर्शेन व्रीह्यादीनां तेषामाढकादिपरिमाणा-पेक्षया सङ्ख्याव्यवहारो न पशूनामिव स्वरूपतः सङ्ख्याव्यवहारोऽस्तिलोके व्रीहीणां माषाणां वा पञ्चभिर्द्वादशशतेन वा अयं पदार्थः क्रीत इति व्यवहाराभावात् । अतः स्वरूपतः सङ्ख्यापरिमाण-योगिनां पशूनामेव । तत्र च विशेषानवगमात् यत्किञ्चित्पशूनां तस्येति परामर्शेन सङ्ख्याविधिरयमिति **षष्ठः** । **सिद्धान्तस्तु**, तस्येत्येकवचनान्तेन बहुवचनान्तनिर्दिष्टानामजादीनां परामर्शायोगादेकवचनान्त-निर्दिष्टगवादिपशुपरामर्श इति परिशिष्यते । तेषु च दधिपयःप्रभृतिभिरिह दानेन, परत्र च गवां महोपकारित्वात् "न केसरिणो ददाति" इत्यश्वदानस्येव गोदानस्यानिषिद्धत्वात् "गौश्चाश्वश्च" इत्यादिवाक्ये निर्दिष्टेषु मुख्यत्वाच्च गोद्रव्यस्यैव तस्येति परामर्शेन द्वादशशतरूपसङ्ख्याविधिरिति । **केचित्तु** तस्येत्यस्यास्त्रीलिङ्गत्वान्न गोः परामर्शः । किन्तु प्राकरणिकक्रतोरेव परामर्शः । सङ्ख्या तु परिच्छेद्याकांक्षिणी मुख्यत्वाद्गामेव परिच्छिनत्तीति योग्यतया गवामित्यन्वेतीत्याहुः । तदाह **सूत्रे**, **भागित्वाद्वा गवां स्या**दिति । भागित्वान्महोपकारित्वादित्यर्थः ।

इत्येकादशं ज्योतिष्टामे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणम् (सूत्राणि ३९-४९)

## अथ द्वादशं विभज्य गोदक्षिणाया दानाधिकरणम् (सूत्राणि ५०-५२)

**तत्र दानं विभागेन प्रदानानां पृथक्त्वात् ॥ ५० ॥**

**(परिक्रयाच्च लोकवत् ॥ ५१ ॥ विभागश्चापि दर्शयति ॥ ५२ ॥)**

प्रासङ्गिकी **सङ्गतिः** । ज्योतिष्टोमे गवां द्वादशशतं दक्षिणेति स्थितम् । तत्र किमियं दक्षिणा ऋत्विग्भ्यो विभज्याविभज्य वा देयेत्यनियमः;, उताविभज्यैव, अथ विभज्यैवेति त्रेधा **सन्देहे**, **विशेषा-श्रवणादनियम इत्याद्यः पूर्वपक्षः** । "ऋत्विग्भ्यो दक्षिणां ददाति" इति वाक्ये चतुर्थ्या ऋत्विजां सम्प्रदानकारकत्वोक्तेः कारकस्य दानक्रियां प्रति गुणभूतत्वात्कारकीभूतर्त्विजां गुणभूततया तद्विशेषणी

भूतं बहुत्वमुपादेयगतत्वेन विवक्षित्वा तेभ्यः सहितेभ्योऽविभज्यैव देयेति द्वितीयः । **सिद्धान्तस्तु**, ऋत्विग्भ्यो दक्षिणादानं हि तेषां परिक्रयार्थम् । नादृष्टार्थमिति पूर्वपादे **ऋत्विग्दानं धर्ममात्रं स्याद्ददाति सामर्थ्यात्** इत्यत्रोक्तम् । यद्यत्र दानक्रियायामृत्विजां गुणत्वं स्यात्तर्हि तेभ्यो दानमदृष्टार्थं स्यात् । अतो दक्षिणादानेन न ऋत्विजः परिक्रीणीयादित्यर्थतया ऋत्विजो दानक्रियां प्रति चतुर्थ्यापि प्राधान्यमेवोच्यत इति बहुत्वस्योपादेयगतत्वाभावेनाविवक्षितत्वात् प्रतिप्रधानं गुणावृत्तिरिति विभज्य चैकैकस्मै दक्षिणादानमिति । तदाह सूत्र, **तत्र गवादिषु विभागेन दानं स्यात् प्रदानानां पृथक्त्वाद्भिन्नत्वादिति** भाष्योक्तार्थः। केचित्तु प्रधानानामिति पाठमुपेत्य ऋत्विजां पृथक्त्वादित्यर्थमाहुः ।

इति द्वादशं विभज्य गोदक्षिणाया दानाधिकरणम् (सूत्राणि ५०-५२)

**अथ त्रयोदशं ज्योतिष्टोमे समाख्यानुसारेण दक्षिणाविभागाधिकरणम् (सूत्राणि ५३-५५)**

**समं स्यादश्रुतत्वात् ॥ ५३ ॥**

**(अपि वा कर्मवैषम्यात् ॥ ५४ ॥ अतुल्याः स्युः परिक्रिये विषमाख्याविधिश्रुतौ परिक्रयान्न कर्मण्युपपद्यते दर्शनाद्विशेषस्य तथाऽभ्युदये ॥ ५५ ॥)**

पूर्वत्र सामान्यतो विभज्य दानमिति स्थितम् । तत्र विशेषचिन्तनात्सङ्गतिः । विभागः किं साम्येन, किं वा प्रयासानुसारेण, उत समाख्यानुरोधेनेति त्रेधा **सन्देहे**, विशेषस्याश्रुतत्वात्**समं स्यादिति** सूत्रोक्तदिशा साम्येन विभाग **इत्येकः पूर्वपक्षः** । लोक इवाऽयासानुसारेण विभाग इत्यन्यः । **सिद्धान्तस्तु**, समाख्यानुगुण एव विभाग इति । सत्रात्मके द्वादशाहे हि ''अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारम्, ततो होतारम् । ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्धिनो दीक्षयति ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः । ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति । आग्नीध्रं ब्रह्मण;, प्रतिहर्तारमुद्गातुः, अच्छावाकं होतुः । ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति । पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः । ततस्तमन्यो दीक्षयति ब्रह्मचारी वा आचार्यप्रेषितः'' इति । एतदर्थस्तृतीये सप्तमपादे **नियमस्तु दक्षिणाभिः** इत्यत्रोक्तः । तत्र यदि प्रकृतौ ब्राह्मणाच्छंस्यादीनां ब्रह्मादिभागापेक्षया अर्धं दीयेत तदाऽर्धिन इति समाख्या युक्ता । यद्याग्नीध्रादीनां ब्रह्मादिभागापेक्षया तृतीयो भागस्तदा तृतीयिन इति समाख्या, तथा यदि पोत्रादीनां ब्रह्मादिभागापेक्षया तुरीयो भागस्तदा पादिन इति समाख्या च युक्तेति सत्रात्मकद्वादशाहगतसमाख्योक्तानुरोधेनैव प्रकृतौ विभागः कार्य इत्यध्यवसानात्समाख्यानुगुणो विभाग इति ।

**इति त्रयोदशं ज्योतिष्टोमे समाख्यानुसारेण दक्षिणाविभागाधिकरणम् (सूत्राणि ५३-५५)**



**अथ चतुर्दशं भूनामैकाहे धेनुदानेन कृत्स्नक्रतुदक्षिणाबाधाधिकरणम् (सूत्राणि ५६-५८)**

**तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वात्सामान्यात्तद्विकारः स्याद्यथेष्टिर्गुणशब्देन ॥ ५६ ॥**

**(सर्वस्य वा क्रतुसंयोगादेकत्वं दक्षिणार्थस्य गुणानां कार्यैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात्तस्मात्समवायाद्धि कर्मभिः ॥ ५७ ॥ चोदनानामनाश्रयाल्लिङ्गेन नियमः स्यात् ॥ ५८ ॥)**

विकृतिषु दक्षिणाया बाधाबाधचिन्तोपयुक्तं प्रकृतौ दक्षिणास्थितिप्रकारं **द्रव्यविधिसन्निधौ** इत्यादिना त्रिभिर्नयैरुक्त्वाऽधुनाऽवसरप्राप्तो दक्षिणाबाधाबाधविचार आरभ्यते । अस्ति भूर्नामक एकाहो ज्योतिष्टोमविकारः । ''अथैष भूर्वैश्वदेवः । तस्य धेनुर्दक्षिणा'' इति । तत्रेयं धेनुश्चोदकप्राप्तप्राकृतगवामेव निवर्तिका, अथ गवादिसर्वद्रव्यस्येति **सन्देहे, पूर्वपक्षस्तु** दक्षिणाशब्दो हि गवादिद्रव्येषु वर्तमानः ''दक्षयति कर्मणि शक्तं करोति'' इति व्युत्पत्त्या भृतित्वरूपगुणं निमित्तीकृत्य वर्तत इति गुणवचनः । गवादिशब्दस्तु गोत्वादिजातिनिमित्तकत्वाज्जातिवचनः । तथा च गुणं प्रति जात्याश्रयस्य गवादेर्विशेष्यतया प्राधान्याद्दक्षिणायाश्च गुणत्वात्प्रतिप्रधानं गुणावृत्तिरिति न्यायेन प्रतिगवादिप्रधानं दक्षिणारूपगुणसम्बन्धात्प्रत्येकमेव दक्षिणात्वम् । गवादयो दक्षिणारूपाः कार्या इत्येवं बह्वीषु दक्षिणासु यस्याः कस्याश्चित्स्थाने निविशमाना धेनुर्दक्षिणात्वं प्रतिपद्यत इति धेनुत्वस्य गोलिङ्गत्वाद्गवामेव निवर्तिका धेनुरिति । तदाह **सूत्रे तस्य धेनुरिति** श्रुता धेनुः **प्रकृतौ गवां विभक्तचोदितत्वाद्विभक्तेन** विभागेन प्रत्येकमिति यावत् चोदितत्वात् दक्षिणात्वविधानात् **गोत्वसामान्यात्तद्विकारः स्यात्** तत्स्थाने निविशत इति यावत् **यथेष्टिरि**ष्टिसाधनीभूतसौर्यादिचरुर्निर्वपतीत्यादि**गुणशब्द**सामान्येन पुरोडाशस्थाने निविशते तद्वदिति । **सिद्धान्तस्तु**, गवादयो दक्षिणाः कार्या इत्यस्य भृतिरूपदक्षिणया गवादीन् संस्कुर्यादित्यर्थतया गवादिकं प्रत्येकमुद्दिश्य दक्षिणारूपसंस्कारविधौ संस्कृतानां तेषां विनियोगाभावेनादृष्टार्था दक्षिणा स्यात् ॥ गवादिविशिष्टदक्षिणाविधौ तु ''ऋत्विग्भ्यो दक्षिणां ददाति'' इति ऋत्विगानत्यर्थतया तस्य विनियोगाद्दृष्टार्थतेति गवादिसर्वद्रव्यविशिष्टैकैव दक्षिणा प्रकृतौ विधेया । किञ्च प्रत्येकं गवाद्युद्देशेन दक्षिणाविधौ गौर्दक्षिणेतिवदजाश्च दक्षिणा एव । या च ''दक्षिणाः'' इति दक्षिणाशब्दे बहुवचनान्ततापत्त्यैकवचनानुपपत्तिः ''गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति'' इति वैयाकरणस्मरणाद्गवादिसर्वविशेषणकदक्षिणाविधौ त्वानत्यर्थतया गवादि-

सर्वद्रव्यैः क्रियमाणानतेरेकत्वादेकवचनं युक्तमिति, गवादिसर्वद्रव्येष्वेकमेव दक्षिणात्वमिति तत्सर्व-विकारा धेनुरिति। **फलन्तु पूर्वपक्षे** अश्वादेः प्राप्तिर्विकृतौ। **सिद्धान्ते** सर्वस्य धेन्वा निवृत्तिरिति।

इति चतुर्दशं भूनामैकाहे धेनुदानेन कृत्स्नक्रतुदक्षिणाबाधाधिकरणम् (सूत्राणि ५६-५८)

### अथ पञ्चदशं ''एकां गाम्'' इत्यनेन गोगतसङ्ख्याबाधाधिकरणम् (सूत्रम् ५९)

**एकां पञ्चेति धेनुवत् ॥ ५९ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः। भूनामकैकाह एव ''यदि सोममुपहरेयुरेकां गां दक्षिणां दद्यात्। अभिदग्धे सोमे पञ्च गाः'' इति श्रूयते। तत्रैकामिति पञ्चेति सङ्ख्याद्वययुक्ततया श्रुता गोरूपदक्षिणा किं क्रतुगतगवादिसर्वद्रव्येष्वेकैकद्रव्यस्य निवर्तिका, उत गोरूपद्रव्यमात्रस्येति **सन्देहे,** एकामिति पदं द्वितीयया कारकत्वेनावगम्यते। कारकञ्च क्रिययैव साकांक्षामिति सन्निहितमपि गामित्येतदन्वयं वाक्यप्रमाणकत्वादुल्लङ्घ्य दद्यादिति क्रिययैव श्रुतिप्रमाणेनान्वेति। एवं पञ्चेति च। न च प्रकृतावपि दक्षिणाया एकत्वादिहैकत्वं दक्षिणायां न विधेयमिति वाच्यम्। एकत्वादिसङ्ख्यायुक्तद्रव्यस्यैवात्र विधानात्। स्त्रीलिङ्गन्तु दक्षिणापदसामानाधिकरण्यादनूद्यते। गोपदञ्चाश्वाद्यन्यतमद्रव्योपलक्षणम्। कदाचिद्गोरपि प्राप्तत्वात्पाक्षिकानुवादो वा। तथा च गवाद्यन्यतमेषु यत्किञ्चिदेकं सोमोपहारे दद्यात्, सोमाभिदाहे तु पञ्च दद्यादित्यर्थसम्पत्तेर्गवादिसर्वद्रव्यदानस्य पूर्वत्रेव धेन्वैकत्वादिसङ्ख्ययापि निवृत्ति-रिति **प्राप्तम्**॥ तदाह **सूत्रे, एकां पञ्चेति धेनुवदिति**। सर्वद्रव्यदाननिवर्तकमिति शेषः। **सिद्धान्तस्तु,** उक्तदिशैकादिपदस्य ददातिनान्वये किमित्याकांक्षायां गामितिपदं चोदकप्राप्तगवाद्यन्यतमोपलक्षकं स्यात्। न च तद्युक्तम्। अतो वाक्यप्रमाणकोऽपि सन्निहितगोपदार्थसम्बन्ध एवैकत्वादिसङ्ख्यया विधेयः। ''चोदकप्राप्तगवादिषु गां दक्षिणां दद्यादिति यत्सा एका, न तु द्वादशशतम्'' इति गोगत-सङ्ख्यैव निवर्तते। न त्वश्वादिकमिति न प्राकृतसर्वद्रव्यनिवर्तिका सङ्ख्येति। **फलन्तु पूर्वपक्षे** गवादिष्व-न्यतमस्यैव दानम्। **सिद्धान्ते** तु एकादिगोरश्वादेश्च दानम्।

इति पञ्चदशं ''एकां गाम्'' इत्यनेन गोगतसङ्ख्याबाधाधिकरणम् (सूत्रम् ५९)

### अथ षोडशं साद्यस्क्रे त्रिवत्सेन सोमक्रयसाधनमात्रबाधाधिकरणम् (सूत्राणि ६०-६२)

**त्रिवत्सश्च ॥ ६० ॥**



**(तथा च लिङ्गदर्शनम् ॥ ६१ ॥ एके तु श्रतिभृतत्वात्सङ्ख्यया गवां लिङ्ग-विशेषेण ॥ ६२ ॥)**

पूर्वन्यायेनात्र शङ्कनात्सङ्गतिः। साद्यस्क्रे श्रूयते ''त्रिवत्सः साण्डः सोमक्रयणः'' इति। सोम-क्रयणः सोमक्रयहेतुः। त्रिवत्सस्त्रिवर्षक इत्यर्थः। तत्र साण्डानुवादेन त्रिवत्सविधिः ''यः साण्डः स त्रिवत्स'' इति, किं वा सोमक्रयणानुवादेन त्रिवत्सविधिः ''यः सोमक्रयणः स त्रिवत्सः'' इति **सन्देहे,** यथा पूर्वत्र ''एकां गाम्'' इत्यत्र सन्निहितगवानुवादेनैकत्वविधिरेवमत्राप्यव्यवहितसाण्डानु-वादेन त्रिवत्सविधिः। तथा च ''वृषभेण क्रीणाति'' इति प्रकृतौ क्रयार्थत्वेन विहितवृषभस्यैवेह त्रिवत्सेन निवृत्तिः। न तु ''एकहायन्या क्रीणाति'' ''अजया क्रीणाति'' इत्युक्तसाधनान्तरस्येति **प्राप्ते सिद्धान्तः,** साण्डानुवादेन त्रिवत्सत्वविधावग्नीषोमीयपशोरपि साण्डत्वात्त्रिवत्सत्वप्रसङ्गः। न चेष्टा-पत्तिः। सोमक्रयणासोमक्रयणरूपोभयविधपशोरपि साण्ड इत्यनूद्य त्रिवत्सत्वविधौ सोमक्रयणपद-मवयुत्याऽनुवादः स्यात्। तस्मात्सोमक्रयणानुवादेन त्रिवत्सविधिः। तथा च विधेयगतत्वात्पुल्लिङ्गञ्च त्रिवत्सद्रव्यञ्चैकपदोपात्तं विशिष्टं विधेयमिति, साण्ड इति पदं नित्यानुवाद इति प्राकृतक्रयसाधन-द्रव्याणां सर्वेषां निवृत्तिरिति। तदाह, **त्रिवत्सश्च** धेनुवत्सर्वनिवर्तक इत्यर्थः। **फलं** व्यक्तम्।

इति षोडशं साद्यस्क्रे त्रिवत्सेन सोमक्रयसाधनमात्रबाधाधिकरणम् (सूत्राणि ६०-६२)

### अथ सप्तदशमश्वमेधे प्राकाशावित्यनेनाध्वर्युभागबाधाधिकरणम् (सूत्रे ६३-६४)

**प्राकाशौ तथेति चेत् ॥ ६३ ॥**

**(अपि त्ववयवार्थत्वाद्विभक्तप्रकृतित्वाद्गुणेदन्ताविकारः स्यात् ॥ ६४ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः। अश्वमेधे श्रूयते ''हिरण्मयौ प्राकाशावध्वर्यवे ददाति'' इति। **प्राकाशौ** दीपस्तम्भावित्येके। दर्पणावित्यन्ये। तौ किं प्राकृतस्य दक्षिणाद्रव्यस्य कृत्स्नस्य निवर्तकौ, उताध्वर्युभागस्यैवेति **सन्देहे,** सन्निहिताध्वर्य्वनुवादेन प्राकाशविधौ ददातिधात्वर्थस्य कस्यचिद्विधाना-भावाद्धातोरत्यन्तपारार्थ्यं स्यात्। अतः पूर्वत्र खण्डान्वयमिव वाक्यप्रमाणकमध्वर्युपदसम्बन्धं बाधित्वा कारकत्वबोधकद्वितीयाश्रुतिप्रामाणको ददातिक्रियासम्बन्ध एव विधेयः ''ददातीति यच्चोदकप्राप्तं दानं तत्प्राकाशकर्मकम्'' इति। अध्वर्युपदञ्च ''अध्वरं युंक्ते'' इति व्युत्पत्या ऋत्विङ्मात्रपरम्। एवञ्च ''ऋत्विग्भ्यो ददाति इति यत् तौ प्राकाशौ'' इति दानमात्रे प्राकाशविधानात्प्राकृतकृत्स्नद्रव्यनिवृत्तिरिति **प्राप्तम्**। तदाह **सूत्रे, प्राकाशावपि तथा** धेनुवत्सर्वप्राकृतद्रव्यनिवर्तकाविति चेच्छङ्क्स इत्यर्थः।

**सिद्धान्तस्तु,** उक्तदिशा प्राकाशयोर्ददातिनाऽन्वये प्राकाशौ ददाति'' इत्येतावता वाक्यपूर्तेरध्वर्यव इति व्यर्थम्। अतो वाक्यप्रमाणकोऽप्यध्वर्युप्राकाशसम्बन्ध एव विधेयः। प्राकाशाध्वर्युविशिष्टमपूर्वं दानान्तरं वा विधेयमित्यध्वर्युभागस्यैव चोदकप्राप्तस्य प्राकाशद्रव्येण निवृत्तिः। न प्राकृतद्रव्यमात्रस्येति। **फलं** व्यक्तम्।

इति सप्तदशमश्वमेधे प्राकाशेनाध्वर्युभागबाधाधिकरणम् (सूत्रे ६३-६४)

**अथाष्टादशमुपहव्ये कृत्स्नक्रतुदाक्षिण्यस्य बाधाधिकरणम् (सूत्राणि ६५-६७)**

**धेनुवच्चाश्वदक्षिणा स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य ॥ ६५ ॥**

**(एके तु कर्तृसंयोगात्स्रग्वत्तस्य लिङ्गविशेषेण ॥ ६६ ॥ अपि वा तदधिकाराद्धिरण्यवद्विकारः स्यात् ॥ ६७ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः। ''उपहव्योऽनिरुक्तस्तेनाभिनानश्यमानं याजयेत्'' इत्युपहव्यसंज्ञकमेकाहं विधाय श्रूयते ''अश्वः श्यावो रुग्मललाटो दक्षिणा। स निरुक्तः। स ब्रह्मणे देयः'' इति। **श्यावः** पीतलोहित इत्येके। हरितवर्ण इत्यन्ये। तत्र किमयमश्वश्चोदकप्राप्तब्रह्मभागस्यैव निवर्तकः, उत कृत्स्नप्राकृतद्रव्यमात्रस्येति **सन्देहः। पूर्वपक्षस्तु,** अश्वस्य धेनुवद्दक्षिणासम्बन्धश्रवणेऽपि न तथाऽन्वयः। तथात्वे हि प्राकृतकृत्स्नद्रव्यनिवृत्तिः स्यात्। किन्त्वनन्तरवाक्ये ''ब्रह्मणे देयः'' इति तस्य ब्रह्मसम्बन्धमात्रश्रवणात्पूर्ववाक्यस्थदक्षिणाशब्दो ब्रह्मदक्षिणाविशेषपर इति, पूर्वत्र प्राकाशाभ्यामध्वर्युभागस्येवेह ब्रह्मभागमात्रस्य चोदकप्राप्तस्य निवृत्तिः। न कृत्स्नस्येति। ऋत्विगन्तराणां चोदकप्राप्तदक्षिणाद्रव्यं दातव्यमेवेति। **सिद्धान्तस्तु,** यद्यत्र ''प्राकाशावध्वर्यवे ददाति'' इतिवत् ''अश्वः श्यावो ब्रह्मणे देयः'' इत्येकं वाक्यं स्यात्तदाऽध्वर्युभागमात्रस्येव ब्रह्मभागमात्रस्य निवृत्तिः स्यात्। न चैवम्। द्वे ह्येते वाक्ये। तत्र ''अश्वः श्यावः'' इति पूर्ववाक्येन श्यावाश्वविशिष्टं दक्षिणान्तरं क्रतौ विधीयत इति तेनैव दृष्टार्थत्वादृत्विजामानतिसिद्धेः कृत्स्नं दक्षिणाद्रव्यं निवर्तते। न चैवं धेनुवदश्वोऽपि सर्वर्त्विग्भ्यो देयः स्यात्। अन्यथा तेषामतिदिष्टोपदिष्टदक्षिणाद्वयबाधे तदानतिर्न सिध्येदिति वाच्यम्। क्रतौ भृतित्वेन विहितश्यावाश्वः सर्वर्त्विग्भ्यो देयतया प्राप्तः सन्नप्युत्तरवाक्येन पुरुषान्तरेभ्योऽपनीय ब्रह्मणे दीयत इत्यन्यर्त्विजां विनैव दक्षिणया ''त्वमत्राध्वर्युर्भव'' ''त्वं होता भव'' इत्यादिप्रार्थनादिरूपवरणेन लौकिकद्रव्यादिदानरूपेण प्रकारान्तरेणाऽनतेः कर्तव्यत्वात् श्यावाश्वेन प्राकृतसर्वदक्षिणाद्रव्यनिवृत्तिरिति। तदाह **सूत्रे, अश्वदक्षिणा च धेनुवत्** सर्वनिवर्तिका। स



ब्रह्मण इति वाक्ये तु क्रतुदक्षिणाया एव पुरुषान्तरेभ्योऽपनयः श्रूयते। यथा एकधोपसंहारः सहत्वमिति पूर्वपादीयनयोक्तदिशा हिरण्यस्य कृष्णलस्य ''सर्वं ब्रह्मणे परिहरति'' इति पुरुषान्तरेभ्योऽपनयस्तद्वदिति। **फलं** व्यक्तम्।

इत्यष्टादशमुपहव्ये श्यावाश्वेन कृत्स्नक्रतुदक्षिणाबाधाधिकरणम् (सूत्राणि ६५-६७)

**अथैकोनविंशमृतपेये सोमचमसेन कृत्स्नक्रतुदक्षिणाबाधाधिकरणम् (सूत्राणि ६८-७३)**

**तथा च सोमचमसः ॥ ६८ ॥**

**(सर्वविकारो वा क्रत्वर्थे प्रतिषेधात्पशूनाम् ॥ ६९ ॥ ब्रह्मदानेऽविशिष्टमिति चेत् ॥ ७० ॥ उत्सर्गस्य क्रत्वर्थत्वात्प्रतिषिद्धस्य कर्म स्यान्न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात् ॥ ७१ ॥ यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥ ७२ ॥ सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥ ७३ ॥)**

आतिदेशिकी **सङ्गतिः।** ऋतपेये श्रूयते ''औदुम्बरः सोमचमसो दक्षिणा'' ''स प्रियाय सगोत्राय ब्रह्मणे देयः'' इति। तत्र सोमचमसरूपा दक्षिणा प्राकृतकृत्स्नद्रव्यनिवर्तिका, उत ब्रह्मभागमात्रस्येति **सन्देहे,** पूर्वत्रेवेहापि ''ब्रह्मणे देयः'' इति श्रवणाद्ब्रह्मभागमात्रस्यैव निवृत्तिरिति **प्राप्ते** अत्रापि ''सोमचमसो दक्षिणा'' इति ''स ब्रह्मणे देयः'' इति च पूर्वत्रेव वाक्यद्वयश्रवणात्पूर्वन्यायेन प्राकृतकृत्स्नद्रव्यनिवृत्त्या ब्रह्मण औदुम्बरसोमचमसेनाऽनतिः। अन्यर्त्विजान्तूक्तदिशा प्रकारान्तरेणाऽनतिः। न दक्षिणयेति सिद्धान्तस्य पूर्वाधिकरणेनैव सिद्धावपीह ऋतपेये ''ऋतं सोमः। अनृतं पशवः। यत्पशून् दद्यात्सोऽनृतं कुर्यात्। औदुम्बरः सोमचमसो दक्षिणा'' इति पशुदानप्रतिषेधः श्रूयमाणः प्रकृतितः पशुद्रव्यस्याप्राप्तौ न युज्यत इति न कृत्स्ननिवृत्तिरिति विशेषाशङ्कां **तथा च सोमचमसः** प्राकाशवदेकर्त्विग्भागमात्रनिवर्तको, न कृत्स्नस्येति सूत्रेण कृत्वा पशुदाननिषेधवाक्यस्य सोमचमसस्तुत्यर्थतयाऽर्थवादत्वेन प्रतिषेधाविधायकत्वात्प्राकृतकृत्स्नद्रव्यनिवृत्तिरिति सिद्धान्तयितुमिदमधिकरणमित्याहुः।

इत्येकोनविंशमृतपेये सोमचमसेन कृत्स्नक्रतुदाक्षिण्यबाधाधिकरणम् (सूत्राणि ६८-७३)

**अथ विंशं सोमचमसेन कृत्स्नक्रतुदक्षिणापुरुषान्तरयोर्बाधाधिकरणम् (सूत्रे ७२-७३)**

**यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥ ७२ ॥**

**(सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥ ७३ ॥)**

पूर्वत्र ''औदुम्बरः'' इत्यादिकं वाक्यद्वयमित्युपेत्य निर्णयः कृतः । अत्र त्वेकं वाक्यं ''ब्रह्मणे देयः'' इत्यन्तमिति **कृत्वाचिन्तयेदमारभ्यते** । यदैकं वाक्यं तदा किं सोमचमसः प्राकृतसर्वद्रव्य-निवर्तकः, उत ब्रह्मभागमात्रस्येति **सन्देहे**, दक्षिणासंयोगात्प्राकृतसर्वद्रव्यनिवृत्तिः । प्रकृतौ गवादि-सर्वद्रव्यविशिष्टदक्षिणाया एकत्वादिह सोमचमसदक्षिणा देयेत्युक्त्या चोदकप्राप्तदक्षिणाया निवृत्ते-रौचित्यात् । ''स च ब्रह्मणः'' इति ब्रह्मसंयोगात्पुरुषान्तरेभ्योऽपनय इति **प्राप्ते सिद्धान्तः**, यदीदमेकं वाक्यं स्यात्तदा सोमचमसः क्रतोर्दक्षिणेति स च ब्रह्मणे देय इत्यर्थद्वयं न विधातुं शक्नुयात् । तदुभय-विधानेन च नाभिमतसिद्धिः । अतो दक्षिणाशब्दः सर्वपुरुषसम्बन्धिदक्षिणापरोऽपीह लक्षणया ब्रह्मभागरूपदक्षिणापर इत्यङ्गीकृत्य ''यो ब्रह्मणे देयो दक्षिणांशः स औदुम्बरः सोमचमसः'' इत्यङ्गीकार्यमित्येकवाक्यत्वपक्षे ब्रह्मभागमात्रस्य निवृत्तिः । न कृत्स्नस्येति ब्रह्मभागदक्षिणादीनां प्राकृतं सर्वं द्रव्यमन्येभ्यो ऋत्विभ्यो देयमिति । तदाह सूत्रे यदीत्यादि । यदीत्यसन्दिग्धे सन्दिग्धवचनम् । यदि तु सोमचमसो **ब्रह्मणोऽत्र** विधीयते ततस्तदूनं यथा भवति तथाऽन्येभ्यो दक्षिणाविकारः स्यात् । प्राकृतदक्षिणा देयेति यावदिति । **सर्वं वा पुरुषापनयात्तासां ऋतुप्रधानत्वात्** इति सूत्रेण प्रत्यक्षसिद्धं वाक्यभेदमेव स्वीकृत्य कृत्स्ननिवृत्तिरूपप्राक्तनसिद्धान्तस्योक्त्या कृत्वाचिन्तोद्धाटनं कृतमित्याहुः ।

**इति विंशं सोमचमसेन कृत्स्नक्रतुदक्षिणापुरुषान्तरयोर्बाधाधिकरणम् (सूत्रे ७२-७३)**

### अथैकविंशं वाजपेये रथस्य भागनियामकताधिकरणम् (सूत्रे ७४-७५)

**यजुर्युक्तस्त्वध्वर्योर्दक्षिणाविकारः स्यात् ॥ ७४ ॥**

**(अपि वा श्रुतिभूतत्वात्सर्वासां तस्य भागो नियम्यते ॥ ७५ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । वाजपेये ''सप्तदशरथाः सप्तदश निष्काः'' इत्यनेकदक्षिणां विधाय श्रूयते ''यजुर्युक्तं रथमध्वर्यवे ददाति'' इति । सप्तदशरथमध्ये यजमानारोहणाय ''इन्द्रस्य वज्रोऽसि'' इत्यादिभियुजुर्वेदोक्तमन्त्रैः सज्जीकृतो रथो **यजुर्युक्तरथः** । तत्र यजुर्युक्तो रथोऽध्वर्युभागनिवर्तको न वेति **सन्देहे**, यथा अश्वमेधे ''प्राकाशावध्वर्यवे ददाति'' इत्यत्र ''यदध्वर्यवे ददाति तत् प्राकाशौ'' इति मुख्ययोः प्राकाशयोर्विधेयत्वमुपेत्याध्वर्युभागनिवृत्तिरङ्गीकृता तथात्रापि मुख्यस्य यजुर्युक्तरथस्य ''यदध्वर्यवे ददाति तद्यजुर्युक्तरथम्'' इति विधेयत्वमेवेति पूर्वत्र सोमचमसेन ब्रह्मभागस्येवाध्वर्युभागस्य निवर्तको यजुर्युक्तरथ इति **प्राप्तम्** । तदाह **सूत्रे, यजुर्युक्तो** रथोऽध्वर्योर्दक्षिणाविकारः प्राकृतदक्षिणा-



निवर्तकः स्यादिति । **सिद्धान्तस्तु,** प्राकाशयोरप्राप्ततयाऽपूर्वत्वेन विधानोपगमेऽपीह सप्तदशरथादि-द्रव्यान्तराणां दक्षिणात्वेन विहिततया यजुर्युक्तरथदानस्यापि प्राप्तत्वेन यस्मै कस्मैचिद्दाने प्राप्ते ''यजुर्युक्तं रथं ददाति इति यत्तदध्वर्यवे'' इति नियमविधानमेव । लाघवात् । न त्वपूर्वविधिरिति न **सर्वासां** दक्षिणानां श्रुतिभूतत्वात् श्रतिविहितत्वादित्यर्थः ।

इत्येकविंशं वाजपेये रथस्य भागनियामकताधिकरणम् (सूत्रे ७४-७५)

**इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते दशमाध्यायस्य तृतीयः पादः**

अस्मिन् पादे अधिकरणानि २१ सूत्राणि ७५
आदितः अधिकरणानि ६७२ सूत्राणि १९५८

## अथ दशमाध्याये तुरीयः पादः

ॐ पूर्वं त्रिपाद्यां बाधाबाधचिन्ताद्वारेण विकृतिषु पदार्थानामियत्ता चिन्तिता । अत्र तु प्राकृतधर्मातिरिक्तधर्मवतीषु प्राकृतधर्मसमुच्चयचिन्ताद्वारा पदार्थेयत्तैव चिन्त्यते । समुच्चयस्य बाधापवादत्वात्तदनन्तरताऽस्येति ज्ञेयम् ।

### अथ प्रथममग्न्यादौ नारिष्टहोमादिभिर्नक्षत्रेष्ट्यादीनां समुच्चयाधिकरणम् (सूत्रम् १)

**प्राकृतलिङ्गसंयोगात्कर्म संस्कारं विकृतावधिकं स्यात् ॥ १ ॥**

''अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्'' इत्यादिना विहितायां नक्षत्रेष्टौ ''सोऽत्र जुहोति'' इत्युपहोमान् विधाय तत्र मन्त्रा उक्ताः ''अग्नये स्वाहा । कृत्तिकाभ्यः स्वाहा । अम्बायै स्वाहा'' इत्यादयः । प्रकृतौ च प्रधानहोमादूर्ध्वं नारिष्टहोमा विहिताः ''नारिष्टान् होमान् जुहोति'' इत्युक्तत्वात् । तत्र किं वैकृतैरुपहोमैः प्राकृता नारिष्टहोमा बाध्यन्ते, किं वा समुच्चीयन्त इति **सन्देहे,** यद्यपि ''परिधौ पशुं नियुञ्जीत'' इत्यत्र पशुनियोजनरूपभूतकार्यमिवेह नारिष्टहोमकार्यं न स्वशब्देन निर्दिश्यते तथापि ''सोऽत्र जुहोति'' इति विहितोपहोमानां होमत्वसाम्यात्प्राकृतनारिष्टहोमकार्ये विकृतावुपस्थिते सति तत्कार्य एवैते होमा विधीयन्त इति प्रत्यक्षश्रुतोपहोमैरेव तत्कार्ये निष्पन्ने सति तत्कार्यकराः प्राकृता निवर्तन्ते शरैरिव कुशा इति **प्राप्तम्** । नच ''हिरण्यगर्भः समवर्तताग्रे इत्याघारा-

माघारयति'' इत्यत्रेव प्राकृतहोमानुवादेन मन्त्रविधिरेवायं नापूर्वविधिरिति वाच्यम् । तद्वदत्रेतिकरणाभावात् । तेन साधारणध्रौवाज्यलाभेऽपि देवताभावान्नापूर्वकर्मविधिरित्यपास्तम् । सन्निधिरूपस्थानप्रमाणावगताङ्गभावेन मन्त्रेण देवतालाभादिति । **सिद्धान्तस्तु,** स्यादेवं यदि नारिष्टप्राकृतहोमकार्ये उपहोमाः स्युः । न चैवम् । सन्निपातिनो दृष्टार्थाः । उपहोमास्त्वदृष्टार्थाः । न कार्यकांक्षिणः । अतः सत्यपि होमत्वसामान्ये नारिष्टहोमकार्यं नोपस्थापयितुं शक्ता इति तत्कार्यनिर्वर्तकतया तदनिवर्तकत्वाद्भिन्नकार्यकरत्वात्तैः समुच्चीयन्ते उपहोमा इति । तदाह **सूत्रे, प्रकृतीनां** नारिष्टहोमानां यल्लिङ्गं कार्यं तेनोपहोमानामसंयोगादुपहोमादिकं **कर्म विकृतावधिकं संस्कारमुपकारकम्** । न तु नारिष्टहोमबाधकमिति ।

इति प्रथममग्न्यादौ नारिष्टहोमादिभिर्नक्षत्रेष्ट्यादीनां समुच्चयाधिकरणम् (सूत्रम् -१)

### अथ द्वितीयं शरमयबर्हिषा कौशबर्हिर्बाधाधिकरणम् (प्रथमं वर्णकम्) (सूत्रम् २)

**चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ २ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ''सोमारौद्रं चरुं निर्वपेत्कृष्णानां व्रीहीणामभिचरन्'' इति श्रूयते । तत्र ''शरमयं बर्हिर्भवति'' इति श्रुतम् । तदिदं प्राकृतेन कुशबर्हिषा समुच्चीयते, न वेति **सन्देहे पूर्वपक्षस्तु,** वेद्यास्तरणरूपे कुशकार्ये शरविधौ हि तद्बाधकतया न तैः समुच्चयः शराणां स्यात् । न चैवम् । ''शरमयं बर्हिर्भवति'' इत्यत्र मयटः प्राचुर्यार्थत्वे विकारार्थत्वे वा शरपचुरं शरविकार इति वाऽर्थः स्यात् । न च कुशकार्यस्य वेद्यास्तरणस्य शरप्रचुरत्वं शरविकारत्वं वा युज्यते । अतः शरप्रचुरं बर्हिरिति बर्हिषि शरप्रचुरता विधीयमानाऽल्पकुशानां योग एव सम्भवति । नान्यथेति कुशशरयोरुभयोरप्यतिदेशोपदेशप्रमाणाभ्यामवगतत्वात्पूर्वत्रेवेहापि समुच्चय इति **सिद्धान्तस्तु,** नात्र मयट् प्राचुर्यार्थः । येन बर्हिषि कुशयोगोऽपि स्यात् । किन्तु ''नित्यं वृद्धशरादिभ्यः'' (पा । ४ । ३ । १४३) इति प्रतिपदोक्तविकारार्थः । एवञ्च **बर्हिराज्ययोरसंस्कार** इति नामपादोक्तदिशा जातिवाचिनाऽपि बर्हिःशब्देन लक्षितस्यास्तरणसाधनस्य लवनादिसंस्कृतद्रव्यस्य प्रकृतौ कुशप्रकृतिकस्येह शरविकारता विधीयत इति प्रकृतौ कुशानां यत्कार्यं लवनादिसंस्कृतावस्थापन्न बर्हीरूपोपस्तरणसाधनद्रव्यसम्पादनरूपं तदेव शराणामपि । तादृशद्रव्यप्रकृतित्वात्तेषाम् । अतः प्राकृतकार्यकरत्वाच्छरैः कुशानां निवृत्तिरिति न समुच्चयः । तदाह **सूत्रे, चोदनालिङ्गेन** कुशचोदनाकार्येण वेदिसम्बन्धिस्तरणरूपेण **संयोगे** शरैस्तद्विकारस्तस्य कुशस्य बाधः **प्रतीयेत । प्रकृतिसन्निधानादिति ।** फलं व्यक्तम् ।

इति द्वितीयं शरमयबर्हिषा कौशबर्हिर्बाधाधिकरणम् (प्रथमं वर्णकम्) (सूत्रम् २)



### अथ द्वितीयं वाजपेये रथघोषदुन्दुभिघोषाभ्यां दर्भमन्त्रयोरुभयोर्बाधाधिकरणम् (द्वितीयं वर्णकम्) (सूत्रम् २)

**चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ २ ॥**

**वर्णकान्तरन्तु,** वाजपेये श्रूयते ''रथघोषेण माहेन्द्रस्तोत्रमुपाकरोति'' इति । माहेन्द्रस्तोत्रं कर्तुं स्तोतॄन् प्रेरयतीत्यर्थः । प्रकृतौ हि ''उपावर्तध्वमिति दर्भाभ्यां स्तोत्रमुपाकरोति'' इति वाक्ये उपावर्तध्वमिति मन्त्रेण दर्भाभ्यां स्तोत्रं कर्तुं स्तोतॄणां प्रेरणरूपमुपाकरणं विहितम् । तदिह चोदकप्राप्तम् । तत्र ''रथघोषेण'' इत्यत्र द्वन्द्वाश्रयेण रथघोषाभ्यां क्रमाद्दर्भयोर्मन्त्रस्य च निवृत्तिः, उत षष्ठीतत्पुरुषाश्रयेण रथस्य घोषो दर्भमन्त्रयोरुभयोर्निवर्तका इति **संशयः । पूर्वपक्षस्तु,** षष्ठीतत्पुरुषपक्षे षष्ठ्या अश्रवणेन रथपदे षष्ठ्यर्थलक्षणा स्यात् । अतो द्वन्द्वाश्रयेण रथो घोषश्चोपाकरणसाधनः सन् द्रव्यत्वसामान्याद्रथो दर्भयोर्निवर्तको घोषश्च शब्दत्वसामान्यान्मन्त्रस्य निवर्तक इति **प्राप्ते सिद्धान्तः,** द्वन्द्व इति किमितरेतरयोगद्वन्द्वः, उत समाहारद्वन्द्वः । नाद्यः । तथात्वे ''धवखदिरौ'' इतिवद्द्विवचनान्तताप‍त्तिः । न द्वितीयः । तथात्वे द्वे अपि पदे समाहारलक्षके स्याताम् । अतः पूर्वपदमात्रस्य लक्षणाश्रयणेन षष्ठीतत्पुरुषमाश्रित्य रथस्य घोष उपाकरणसाधनमित्युपेयमिति रथघोष एव मन्त्रस्य दर्भयोश्च निवर्तक इति । तदाह सूत्रे **चोदनालिङ्गेन** ''उपावर्तध्वमिति दर्भाभ्यां स्तोत्रमुपाकरोति'' इति **चोदनालिङ्गेनोपाकरणरूपेण संयोगाद्रथघोषस्य तद्विकारः** दर्भयोर्मन्त्रस्य च रथघोषो विकारः स्यात् । **प्रकृतिसन्निधानादिति । फलन्तु पूर्वपक्षे,** घोषस्य रथसम्बन्धाभावाद्यत्किञ्चिद्घोषेण स्तोत्रोपाकरणम् । **सिद्धान्ते तु** रथघोषेणैवेति ।

इति द्वितीयं वाजपेये रथघोषदुन्दुभिघोषाभ्यां दर्भमन्त्रयोरुभयोर्बाधाधिकरणम् (द्वितीयं वर्णकम्) (सू.-२)

### अथ तृतीयं बृहस्पतिसवादौ बार्हस्पत्यग्रहादिभिः प्राकृतैन्द्रवायवादिग्रहाणां समुच्चयाधिकरणम् (सूत्राणि ३-५)

**सर्वत्र तु ग्रहाम्नानमधिकं स्यात्प्रकृतिवत् ॥ ३ ॥**

**(अधिकैश्चैकवाक्यत्वात् ॥ ४ ॥ लिङ्गदर्शनाच्च ॥ ५ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । बृहस्पतिसवे सोमविकृतियागे श्रूयते ''बार्हस्पत्यं ग्रहं गृह्णाति'' इति । तत्र किं वैकृतो बार्हस्पत्यग्रहः प्राकृतानामैन्द्रवायवादीनां निवर्तको न वेति **सन्देहे,** ''परिधौ पशुं

नियुञ्जीत'' इत्यत्र परिधेः कार्यैक्येन यूपस्येव, पूर्वत्र रथघोषेण स्तोत्रोपाकरणसाधनदर्भमन्त्रयोरिव, प्राकृतग्रहाणामिव वैकृतग्रहस्यापि यागनिर्वर्तकत्वेन कार्यैक्यात्प्राकृतग्रहनिवर्तको वा तैर्वैकल्पिको वा वैकृतग्रह इति **प्राप्ते सिद्धान्तः**, यदि यूपकार्ये परिधिरिव प्राकृतग्रहकार्ये यागनिर्वृत्तिरूपे वैकृता विधीयेरन्, यदि वा व्रीहियववदेककार्ये प्राकृता वैकृताश्च विधीयेरंस्तदा प्राकृतानां प्ररिधिना यूपस्येव बाधो व्रीहीणामिव यवैर्विकल्पो वा स्यात्। न चैवमस्ति। ''बार्हस्पत्येन ग्रहेण यजेत'' इत्यश्रवणात्। अतोऽन्योन्यनिरपेक्षतया यागनिर्वृत्तिरूपैककार्यकराणामैन्द्रवायवादीनां प्रकृतौ युगपत्प्रयोगवचनेन यागसाधनतया ग्रहणात्समुच्चयो यथा तथैव विकृतावप्युपदेशतः सन्निहितानां चोदकतस्सन्निहितानां चाविशेषात्प्रयोगवचनेन युगपद्यागसाधनतया ग्रहणात्समुच्चय इति। एवं विषुवति ''अर्कं गृह्णाति'' महाव्रते ''शुक्रं गृह्णाति'', अश्वमेधे ''सौवर्णराजताभ्यां महिमानौ गृह्णाति'' इत्येवञ्जातीयकवैकृत-ग्रहेष्वपि समुच्चयो ध्येयः। तदाह **सूत्रे, सर्वत्र** विकृतिषु **ग्रहाम्नानमधिकं** समुच्चयार्थकं स्यात्। यथा **प्रकृतावैन्द्रवायवादिग्रहाम्नानं, तद्वदिति**। फलं व्यक्तम्।

इति तृतीयं बृहस्पतिसवादौ बार्हस्पत्यग्रहादिभिः प्राकृतैन्द्रवायवादिग्रहाणां समुच्चयाधिकरणम् (सूत्राणि ३-५)

## अथ तुरीयं वाजपेये प्राजापत्यपशुभिः क्रतुपशूनां समुच्चयाधिकरणम् (सूत्रम् -६)

**प्राजापत्येषु चाम्नानात् ॥ ६ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः। वाजपेये ''सप्तदश प्राजापत्यान् पशूनालभते'' इति श्रुताः पशवः ''आग्नेयमग्निष्टोम आलभते। ऐन्द्राग्नमुक्थ्ये द्वितीयम्। ऐन्द्रं षोडशिनि तृतीयम्। सारस्वतीं मेषीं चतुर्थीमतिरात्रे'' इति श्रुतक्रतुपशूंश्चोदकप्राप्तानाग्नेयादीनथ किं बाधन्ते, उत तैस्समुच्चीयन्त इति **सन्देहे**, पूर्वत्र ''बार्हस्पत्यं ग्रहं गृह्णाति'' इति वाक्ये प्राकृतग्रहानुवादेन बृहस्पतिदेवताविधौ प्राकृतग्रहाणां बहुत्वात् ''ग्रहान्'' इत्यनुवादापत्त्या तदनुवादेन देवताविध्ययोगेनापूर्वविधित्वेऽपीह तादृशबाधका-भावात् ''पशून्'' इति श्रुतपशुपदेन प्राकृतपश्वनुवादेन प्रजापतिदेवताविधिसम्भवेनापूर्वपशुविध्यभावान्न प्राकृतनिवृत्तिः। सप्तदशेति सङ्ख्यापि लक्षणया प्राकृतपशुसङ्ख्यानुवादिनी। यद्वा ''पशून् '' इति श्रुतपशुपदेन पशुत्वसामान्यात्प्राकृतसवनीयपशुकार्योपस्थितौ तत्र विधीयमानाः प्राजापत्यपशवः कार्यैक्यात्तन्निवर्तका इति **प्राप्ते सिद्धान्तः**, मुख्यसङ्ख्यापदस्य लक्षणया प्राकृतपशुसङ्ख्यानुवादकत्वा योगात्प्रवृत्तिविशेषकरत्वाच्च सङ्ख्याविधेरभ्युपेयत्वात्तस्या देवतायाश्च विधौ वाक्यभेदप्रसङ्गान्न प्राकृत-पश्वनुवादेन देवताविधिः। किन्तु सङ्ख्यया देवतया विशिष्टपशुद्रव्यककर्मान्तराणां विधिः। यदपि



यद्वेत्यादि तदपि न। यदि पशुपदमत्र सवनीयपशुष्वेव वर्तेत, तदा पशुपदेन तत्कार्योपस्थितिः स्यात्। पशुपदस्याग्नीषोमीयादिसर्वपशुसाधारण्यात्। अतो न पशुपदोपस्थापितसवनीयपशुकार्ये विध्यसम्भवेन तैराग्नेयादिसवनीयक्रतुपशुभिः समुच्चयः प्राजापत्यपशूनामिति। तदाह **सूत्रे, प्राजापत्येषु** क्रतुपशुभिः समुच्चयः स्यात्कुतः? **समुच्चयाम्नानात्**। तथा ह्येवमाम्नायते ''ब्रह्मवादिनो वदन्ति। नाग्निष्टोमो नोक्थ्यो न षोडशी नातिरात्रः। अथ कस्माद्वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्ते'' इति ''पशुभिरिति ब्रूयात्। आग्नेयं पशुमालभते। अग्निष्टोममेव तेनावरुन्धे। ऐन्द्राग्निनोक्थ्यम्। ऐन्द्रेण षोडशिनः स्तोत्रं सारस्वत्याऽतिरात्रम्'' इत्यवरोधाम्नानाच्चोदकप्राप्ताग्नेयादिपशुसद्भावस्य सिद्धवदनुवादात्समुच्चयो ज्ञायत इति। फलन्तु समुच्चयेनानुष्ठानम्।

इति तुरीयं वाजपेये प्राजापत्यपशुभिः क्रतुपशूनां समुच्चयाधिकरणम् (सूत्रम् ६)

## अथ पञ्चमं साङ्ग्रहणीष्टौ आमनहोमैरनुयाजानां समुच्चयाधिकरणम् (सूत्रम् ७)

**आमने लिङ्गदर्शनात् ॥ ७ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः। ''वैश्वदेवीं साङ्ग्रहणीं निर्वपेद्ग्रामकामः'' इति श्रुतायां साङ्ग्रहणीष्टौ श्रूयते ''आमनमस्यामनस्य देवा ये सजाता इति तिस्र आहुतीर्जुहोति'' इति। तत्रैताभिस्तिसृभि-राहुतिभिः प्राकृतानुयाजत्रयस्य किं बाधः, उत समुच्चय इति **सन्देहे**, पूर्वत्र पशुशब्दस्य साधारण्येन सवनीयपशुकार्यानुपस्थापकत्वेऽपीह ''तिस्रः'' इति श्रुतत्रित्वस्य प्राकृतानुयाजलिङ्गत्वात् ''तिस्रः'' इति पदेनानुयाजत्रयकार्यं लक्षयित्वा तत्र मन्त्रविशिष्टा आहुतयो विधातुं शक्यन्त इति ताभिः प्रत्यक्षश्रुताभिराहुतिभिरानुमानिकचोदकप्राप्तानामनुयाजानां निवृत्तिः। यदि गौरवाद्विशिष्टविधिं न रोचयसे तर्हि ''तिस्र आहुतीर्जुहोतीति यत्'' इति प्राकृतानुयाजहोमानुवादेन ''आमनमसि,'' इत्यादिमन्त्रविधिरस्तु। न त्वपूर्वहोमविधिः। अस्मिन् पक्षे प्राकृतानुयाजमन्त्रत्रयनिवृत्तिः। अत उभयथापि न समुच्चय इति **प्राप्ते सिद्धान्तः** ''तिस्र आहुतीः'' इति त्रित्वस्य होमानाञ्चानुवादेन मन्त्र-विधौ वाक्यभेदापत्तेर्मन्त्रविशिष्टापूर्वहोमविधिरेव। तत्र च त्रित्वस्य गार्हपत्याद्यग्निष्वपि सत्वेन पशुत्व-स्येव साधारण्यान्नैकान्ततोऽनुयाजकार्योपस्थापकत्वमिति तत्कार्ये विध्यभावात्समुच्चय इति। तदाह **सूत्रे, आमने** आमनहोमेऽपि समुच्चयः। कुतः? **लिङ्गदर्शनात्** ''यत्प्रयाजानुयाजानां पुरस्तादुपरिष्टाद्वा जुहुयात् बहिरात्मन् सजातान् धत्ते। अथ यन्मध्यतो जुहोति मध्यत एव सजातान् धत्ते'' इत्यामन-होमानां प्रयाजानुयाजमध्ये होमश्रवणेनानुयाजानामनिवृत्तिरूपलिङ्गदर्शनादित्यर्थः। फलं व्यक्तम्।

इति पञ्चमं साङ्ग्रहणीष्टौ आमनहोमैरनुयाजानां समुच्चयाधिकरणम् (सूत्रम् ७)

**अथ षष्ठं महाव्रते ऋत्विगुपगानस्य पत्न्युपगानेन समुच्चयाधिकरणम् (सूत्रे ८-९)**

**उपगेषु शरवत्स्यात्प्रकृतिलिङ्गसंयोगात् ॥ ८ ॥**

**(आनर्थक्यात्त्वधिकं स्यात् ॥ ९ ॥)**

अत्रापि पूर्ववैषम्येण शङ्कनात्सङ्गतिः । गवामयनाख्यसत्रे महाव्रतं नामैकाहः । तत्र हि ''दिक्षु दुन्दुभयो नदन्ति । पत्न्यश्चोपगायन्ति । काण्डवीणाभिरुपगायन्ति'' इत्यादिविधयः श्रूयन्ते । ताः किञ्चोदकतः प्राप्तानामुपगातृभूतऋत्विजां निवर्तिकाः, उत नेति **सन्देहे**, गानस्योपचयात्मकमुपगानम् । गानशब्दश्च शारीर्यां गीतौ प्रसिद्धः । तथा च पूर्वत्रोपहोमानामनुयाजानिवर्तकत्वेऽपीह काण्डवीणाभिर्गानं कुर्वन्त्यः पत्न्यः प्रकृतितः प्राप्तस्योद्गात्रादिकर्तृकस्य शारीरसम्बन्धिनः सामगानस्योपचयात्मकं कुर्वन्त्यस्सत्यस्तदुपगातॄणामृत्विजां निवर्तिका इति प्राप्तम् । तदाह **सूत्रे, उपगेषु** पत्नीरूपेषूपगातृषु श्रुतेषु ''उपगायन्ति'' इति चोदनालिङ्गसंयोगात् शरेण कुशानामिव ऋत्विजां निवृत्तिरिति । **सिद्धान्तस्तु** गानस्योपचयरूपमुपगानमिति नार्थः । येनोक्तदिशा प्राकृतोपगातुर्निवृत्तिः स्यात् । किन्तूपचयरूपं गानमुपगानमित्येव । सामानाधिकरण्यलाभात् । तथा च दुन्दुभ्यादिध्वनेरुपचयं कुर्वन्त्य उपगायकाः पत्न्यः भिन्नविषयत्वान्न सामगानोपगातृनिवर्तिकाः । गानस्योपचयरूपमुपगानमित्युक्तावपि न गानशब्दः शारीरगाने नियतः । वीणागानादावपि प्रयोगात् । अतस्सन्निधिश्रुतदुन्दुभ्यादिध्वन्युपचयायोपगायन्त्यः पत्न्यो न प्राकृतसामोपगातृनिवर्तिका इति । **फलं** व्यक्तम् ।

**इति षष्ठं महाव्रते ऋत्विगुपगानस्य पत्न्युपगानेन समुच्चयाधिकरणम् (सूत्रे ८-९)**

**अथ सप्तममञ्जनाभ्यञ्जने नवनीताभ्यञ्जनस्य गौग्गुलवाभ्यञ्जनादिभिः समुच्चयाधिकरणम् (सूणि १०-१२)**

**संस्कारे चान्यसंयोगात् ॥ १० ॥**

**(प्रयाजवदिति चेत् ॥ ११ ॥ नार्थान्यत्वात् ॥ १२ ॥)**

अत्रापि पूर्ववैषम्येण शङ्कनात्सङ्गतिः । अञ्जनाभ्यञ्जननामके एकोनपञ्चाशद्रात्रके सत्रविशेषे श्रूयते ''गौग्गुलवेन प्रातस्सवनेऽभ्यञ्जते । वैतुश्रवेण माध्यन्दिने सवने । सौगन्धिकेन तृतीये सवने'' इति । गौग्गुलवेन गुग्गुलुकषायेणेत्यर्थः । तत्किं गौग्गुलवाद्यभ्यञ्जनं नवनीताभ्यञ्जनस्य बाधकम्, उत नेति **सन्देहे**, अञ्जनाभ्यञ्जनयोः सुखेन कर्मप्रचारानुकूलाङ्गमार्दवसम्पादनक्षमस्नेहनरूपदृष्टार्थत्वेनैकार्थ्यात्पूर्वत्र ऋत्विजां पत्नीभिरबाधेऽपीह वैकृतेन गुग्गुलुकषायाभ्यञ्जनेन प्राकृतस्य नवनीताभ्यञ्जनस्य बाध इति **प्राप्ते सिद्धान्तः**, नावनीताभ्यञ्जनस्य स्नेहनार्थत्वेन गौग्गुलवकषायाभ्यञ्जनस्य चन्दनलेपवद्रूक्षार्थत्वेन न तयोरैकार्थ्यम् । गौग्गुलवकषायाभ्यञ्जनेन स्नेहनसम्भवेऽपि वा नावनीताभ्यञ्जनं दीक्षाकालीनं दीक्षाकालीनकर्मानुष्ठानसौकर्याय भवति । गौग्गुलवकषायाभ्यञ्जनन्तु सुत्याकालीनमिति तत्कालीनकर्मप्रचाराय भवतीति भिन्नकालीनत्वान्न तयोर्बाध्यबाधकभावः । अतस्समुच्चयः । तदाह **सूत्रे**, अभ्यञ्जनरूपसंस्कारे च श्रुते समुच्चयः स्यात् । **अन्येन** कार्यान्तरेण **संयोगात्** इति ।



**इति सप्तममञ्जनाभ्यञ्जने नवनीताभ्यञ्जनस्य गौग्गुलवाभ्यञ्जनादिभिः समुच्चयाधिकरणम् (सूत्राणि १०-१२)**

**अथाष्टमं महाव्रते अहतवाससस्तार्प्यादिभिः समुच्चयाधिकरणम् (सूत्राणि १३-१५)**

**आच्छादने त्वैकार्थ्यात्प्राकृतस्य विकारः स्यात् ॥ १३ ॥**

**(अधिकं वाऽन्यार्थत्वात् ॥ १४ ॥ समुच्चयश्च दर्शयति ॥ १५ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । गावामयनिके महाव्रताख्यैकाहे श्रूयते ''तार्प्यं यजमानः परिधत्ते । दर्भमयं पत्नी'' इति । घृताक्तं कम्बलं तार्प्यमुच्यते । तत्र किं ताभ्यां तार्प्यदर्भमयाभ्यां चोदकप्राप्ताहतवाससो दम्पत्योर्निवृत्तिः, किं वा समुच्चय इति **सन्देहे**, पूर्वत्र कार्यभेदाद्गौग्गुलवेन नावनीतस्यानिवृत्तावपीह प्रकृतावहतवाससो गुह्यावयवाच्छादनार्थत्वेन विकृतावपि तार्प्यदर्भमयाभ्यां प्रत्यक्षश्रुताभ्यां तत्कार्ये कृते सति तत्कार्यार्थस्य प्राकृतस्य निवृत्तिः । एककार्यत्वादिति **प्राप्तम्** । तदाह **सूत्रे, आच्छादने** तार्प्याहतवाससोरैकार्थ्यात्प्राकृतस्य विकारो निवृत्तिः स्यादिति । **सिद्धान्तस्तु** स्यादेवं यदि कार्यैक्यम् । न त्वेतदस्ति । अहतवासश्शब्दितेन सद्यः क्रीतानुपभुक्तवाससा गुह्यावयवाच्छादनसम्भवेऽपि तार्प्यदर्भमयाभ्यां तदाच्छादनस्याशक्यत्वान्न तत्कार्यकरत्वम् । अस्तु वा कथञ्चित्तार्प्यदर्भमययोस्तदाच्छादनक्षमत्वं तथापि न गुह्याच्छादनरूपे तत्कार्ये तयोर्विधानं किन्तु ''परितः सर्वतो धत्ते'' इति व्युत्पत्त्या परिधानशब्दस्य यौगिकतयोपरिवासस्यपि प्रयोगदृष्ट्या ''परिधत्ते'' इत्यस्य ''उपरि धत्ते'' इत्यर्थतयाऽबाधेनोपपत्तौ बाधायोगान्न ताभ्यांमहतस्य निवृत्तिरिति समुच्चय इति । तदाह **सूत्रे, अधिकं वाऽन्यार्थत्वात्** इति ।

**इत्यष्टमं महाव्रते अहतवाससस्तार्प्यादिभिः समुच्चयाधिकरणम् (सूत्राणि १३-१५)**

### अथ नवमं महाव्रते रथन्तरादिसाम्नां श्लोकादिसामभिस्समुच्चयाधिकरणम् (सूत्रे १६-१७)

**सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥ १६ ॥**

**(अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् ॥ १७ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । महाव्रते श्रूयते ''श्लोकेन पुरस्तात् सदसि स्तुवीत । अनुश्लोकेन पश्चात्'' इति । तत्र श्लोकानुश्लोकादिनामकैस्सामभिः प्राकृतानां गायत्रादिसाम्नां निवृत्तिरस्ति, उत नेति **सन्देहे**, तार्प्येणाहतस्यानिवृत्तावपीह ''स्तुवीत'' इति प्राकृतस्तुत्यनुवादेन श्लोकादिसाम्नां विधानेन प्राकृतकार्यस्य प्रत्यक्षश्रुतश्लोकादिनैव सिद्धेस्तत्कार्यकराणां प्राकृतानां निवृत्तिरिति **प्राप्ते सिद्धान्तः**, प्राकृतस्तुत्यनुवादेन सामान्तरविधौ पुरस्तात्त्वरूपदेशस्यापि विधानाद्वाक्यभेदः स्यात् । अतो गुणद्वय-विशिष्टा स्तुतिरेवादृष्टार्था विधीयत इति कार्यभेदान्न प्राकृतानां निवृत्तिरिति समुच्चय इति । तदाह **सूत्रे**, श्लोकादि**सामस्व**दृष्टरूपा**र्थान्तरश्रुतेः** प्राकृतसाम्ना**मविकारो**ऽनिवृत्तिः **प्रतीयेत** इति पूर्वन्यायेन गतप्रायत्वात्स्पष्टार्थं वोत्तरोपयोगितया वाऽस्यात्रोक्तिरित्याहुः ।

इति नवमं महाव्रते रथन्तरादिसाम्नां श्लोकादिसामभिस्समुच्चयाधिकरणम् (सूत्रे १६-१७)

### अथ दशमं विकृतिविशेषे प्राकृतसाम्नां कौत्सादिभिर्बाधाधिकरणम् (सूत्रम् १७)

**अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् ॥ १७ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । विकृतिविशेषे श्रूयते ''कौत्सं भवति'' ''काण्वं भवति'' ''वसिष्ठस्य जनित्रौ भवतः'' ''शुद्धाशुद्धीये भवतः'' ''क्रौश्चानि भवन्ति'' इत्यादि । तत्र किं कौत्सादीनि सामानि प्राकृतगायत्रादिसामनिवर्तकानि, उत नेति **सन्देहे**, साममात्रस्यैवात्र श्रवणेन प्राकृतसामकार्यस्तुत्यर्थत्वाश्रवणात्पूर्वत्रेवेहापि न प्राकृतनिवृत्तिरिति **प्राप्ते सिद्धान्तः**, कौत्सादीनां प्रत्यक्षतः स्तुत्यर्थत्वाश्रवणेऽपि प्रकरणात्क्रतुसामान्यसम्बन्धेऽवगते सामर्थ्यवशाद्गुणाभिधानशक्त-ऋगक्षराभिव्यक्तिद्वारा स्तुतिनिर्वर्तकत्वेन दृष्टार्थत्वे सम्भवति नादृष्टार्थता युक्तेति लिङ्गप्रकरणाभ्यां चोदकप्राप्तऋगक्षराभिव्यक्तिद्वारा स्तुतिनिर्वर्तकत्वमवगम्यत इति स्तुतिसाधनानां प्राकृतानां साम्नां निवृत्तिरिति । तदाह **सूत्रे**, **अश्रूयमाणे**ऽपि स्तुतिसाधानत्वरूपे**ऽर्थे प्राकृतस्य** साम्नो **विकारो** निवृत्तिः **स्यात्** । कौत्सादीनां लिङ्गप्रकरणाभ्यामृगक्षराभिव्यक्तिद्वारा स्तुतिसाधनतयैव क्रतुं प्रति **शेषत्वा**-दङ्गत्वादिति । फलं तु प्राकृतसामबाधः ।

इति दशमं विकृतिविशेषे प्राकृतसाम्नां कौत्सादिभिर्बाधाधिकरणम् (सूत्रम् १७)



### अथैकादशं कौत्सादिभिर्व्यवस्थयैकादिबाधाधिकरणम् (सूत्रे १८-१९)

**सर्वेषामविशेषात् ॥ १८ ॥**

**(एकस्य वा श्रुतिसामर्थ्यात्प्रकृतेश्चाविकारात् ॥ १९ ॥)**

पूर्वोक्तप्रमेयेऽत्र विशेषचिन्तनात्सङ्गतिः । पूर्वोक्तान्येकवचनद्विवचन- बहुवचनान्तशब्दनिर्दिष्टानि कौत्सादिसामान्येव विषयः । कौत्सादीनि प्राकृतसामनिवर्तकानीत्युक्तं पूर्वत्र । तानि किमेकैकमेव कौत्सदिकं प्राकृतसर्वनिवर्तकम्, उतैकवचनान्तशब्दनिर्दिष्टमेकस्य, द्विवचनान्तनिर्दिष्टं द्वयो-र्बहुवचनान्तनिर्दिष्टं बहूनामिति **सन्देहे**,कौत्सादीनामृगक्षराभिव्यक्तिद्वारा स्तुतिमात्रसाधनताऽवगता । न तु सामविशेषसाध्यस्तुतिसाधनता । अतः कार्यविशेषानिर्देशात्सर्वप्राकृतसामसाध्यस्तुत्यर्थमेव वैकृत-साम्नामुपदेश इत्यवगमादेकैकस्यैव प्राकृतसर्वसामनिर्वर्त्यस्तुतिरूपकार्यनिर्वर्तकत्वम् । एकेन साम्नाऽनेक प्राकृतसामकार्यनिर्वृत्त्ययोगेऽप्यभ्यासेन तदुपपत्तेरेकैकेनैव प्राकृतसर्वनिवृत्तिरिति **प्राप्तम्** । तदाह **सूत्रे**, **सर्वेषां** प्राकृतानाम**विशेषात्** एकैकमपि वैकृतं निवर्तकमिति । **सिद्धान्तस्तु**, यद्यपि न कार्य-विशेषस्तथापि **आनुपूर्व्यवताम्** इत्युत्तरपादीयाद्यनये वक्ष्यमाणदिशा आद्यस्याद्यमिति न्यायेनैकवचनान्त निर्दिष्टमेकस्य द्विवचनान्तोक्तं द्वयोर्बहुवचनान्तोक्तं बहूनामित्येतावताप्युपदेश-स्यार्थवत्वोपपत्त्याऽभ्यासकल्पनायोगादेकैकेनैवैकैकस्य निवृत्तिः । न त्वेकैकेन सर्वस्येति ।

इत्येकादशं कौत्सादिभिर्व्यवस्थयैकादिबाधाधिकरणम् (सूत्रे १८-१९)

### अथ द्वादशं विवृद्धाविवृद्धस्तोमकक्रतुषु यथाक्रमं प्राकृतसामबाधाबाधाधिकरणम् (सूत्रं २०)

**स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतत्वात् ॥ २० ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ''द्वात्रिंशत्पवमाना अभिषेचनीये'' इत्यभिषेचनीयाख्यविकृतियागे स्तोमविवृद्धिः श्रुता । ''नव राजसामानि'' इति राजाख्यसामानि च श्रुतानि । यद्यत्र द्वात्रिंशत्सङ्ख्या-पूरणं प्रत्यत्र विवृद्धस्तोमेक प्रत्यक्षश्रुतै राजसामभिः प्राकृतसाम्नां बाधः, उत समुच्चय इति **सन्देहे**, प्रत्यक्षपठितैः सोमभिरेव स्यात्तदा **षड्भिर्दीक्षयतीति तासाम्** इति पूर्वपादीयसूत्रोक्तदिशा ''द्वादश जुहोति'' इत्यत्रेवोपदिष्टैरतिदिष्टैश्च समुच्चित्य द्वात्रिंशत्वसङ्ख्यापूरणं स्यात् । न चैवम् । अत्र **स्तोम-विवृद्धौ प्राकृतानामभ्यासेने**त्युत्तरपादीयनये सामागमेनैव सङ्ख्यापूरणमिति वक्ष्यमाणत्वात् । तथा

चानीतैः सामवेदगतसामभिरेव सङ्ख्यापूरणे सति वैकृतै राजाख्यसामभिः सङ्ख्यापूरकत्वाभावेनागत्या प्राकृतसामकार्यं कुर्वद्भिः पूर्वत्राविवृद्धस्तोमेक विकृतिविशेषे श्रुतैः कौत्सादिसामभिस्तावत्सङ्ख्याकप्राकृतसामनिवृत्तिरिव तैः प्राकृततावत्सङ्ख्याकसामनिवृत्तिरिति **प्राप्ते सिद्धान्तः** स्यादेवं, यदि सामागमेन सङ्ख्यापूरणमितीह वचनं स्यात् । न हि तदस्ति । किन्तु सङ्ख्यापूरणान्यथानुपपत्त्या सामागमकल्पना । अत्र च प्रत्यक्षश्रुतैर्वैकृतैरतिदिष्टैश्च समुचित्य सङ्ख्यापूरणं सम्भवतीत्यन्यथाऽनुपपत्त्यभावान्न सामागमकल्पनावकाशः । वक्ष्यमाणं सामागमेन सङ्ख्यापूरणन्त्वनुपदिष्टसामकेषु वाचस्तोमादिषु सावकाशम् । अतो विवृद्धस्तोमकेषु प्राकृतानामबाध इति । तदाह सूत्रे, **स्तोमविवृद्धौ,** **स्तोमो** नाम सामोपेतऋग्विशेषः । तद्विवृद्धौ त्वधिकं स्यात् । प्राकृतैर्विकृतं समुचितं स्यात् । **अविवृद्धौ तु द्रव्यविकारः** स्यात् । यावतां द्रव्याणां साम्नां वैकृतैर्बाधे न्यूना सङ्ख्या पूरिता तावतां साम्नां निवृत्तिः स्यात् । न तु सर्वेषाम् । इतरस्य सामागमेनैव सङ्ख्या पूरणीयेत्यस्याश्रुतत्वादिति । फलं व्यक्तम् ।

इति द्वादशं विवृद्धाविवृद्धस्तोमकक्रतुषु यथाक्रमं प्राकृतसामबाधाबाधाधिकरणम् (सूत्रं २०)

## अथ त्रयोदशं पवमाने विवृद्धाविवृद्धस्तोमकक्रतूनां सामावापोद्धापाधिकरणम् (सूत्रे २१-२२)

**पवमाने स्यातां तस्मिन्नावापोद्धापदर्शनात् ॥ २१ ॥**

**(वचनानि त्वपूर्वत्वात् ॥ २२ ॥)**

पूर्वोक्तार्थे विशेषचिन्तनात्सङ्गतिः । प्रपूर्वाधिकरणे अविवृद्धस्तोमकविकृतिविशेषे कौत्सादिसामभिस्तावत्सङ्ख्याकप्राकृतसाम्नां स्तोत्रसाधनऋग्भ्यो निवृत्तिशब्दितोद्धाप उक्तः । पूर्वतनाधिकरणे तु विवृद्धिस्तोमकविकृतौ प्रत्यक्षश्रुतराजसामादीनां प्राकृतसामसमुच्चितानां स्तोत्रसाधन ऋक्षु आवाप उक्तः । तत्र यस्मिन् कस्मिंश्चित्स्तोत्रे यतः कुतश्चिदृग्भ्य उद्धापो यत्किञ्चिदृक्षु आवापः, उत पवमानस्तोत्रेष्वेव । तत्रापि गायत्रीबृहत्यनुष्टुप्छन्दस्कास्वेव ऋक्षु आवापोद्धापाविति सन्देहः । **पूर्वपक्षस्तु,** विशेषाश्रवणात् ''त्रीणि ह वै यज्ञस्योदराणि यद्गायत्री बृहत्यनुष्टुप् च । अत्र ह्येवावपन्ति । अत एवोद्वपन्ति'' इति वचनस्य ''हि'' शब्दोपबन्धवर्तमाननिर्देशाभ्यामर्थवादतयाऽविधित्वेनानिर्णायकत्वात्, निर्णायकत्वे वा पवमानस्तोत्रविषयोद्धापादेर्देशविधिमात्रपरत्वेन त्रिदोषदुष्टस्तोत्रान्तरपरिसङ्ख्यापरत्वाभावाद्यत्किञ्चित्स्तोत्रे यत्र कचिदृक्ष्वावापः, तत उद्धाप इति । **सिद्धान्तस्तु,** 'हि'शब्दादियोगेऽप्यपूर्वार्थत्वात् ''त्रीणि'' इति वाक्यं विधायकमेव । नार्थवादः । अनन्यशेषत्वात् । न चोक्तदिशा



पवमानविषययोरेवोद्धापावापयोर्देशनियमार्थमिदं वचनमिति शङ्क्यम् । ''अत्र ह्येवावपन्ति'' ''अत एवोद्वपन्ति'' इत्येवकाराभ्यामन्यपरिवर्जनस्य स्पष्टं प्रतीतेः । अतः पवमानस्तोत्र एव गायत्रीबृहत्यनुष्टुप्छन्दस्कास्वेव ऋक्षु आवापः । तत एव प्राकृतादुद्धाः । न च 'इमामगृभ्णन्' इति मन्त्रस्येवोभयत्र प्राप्तौ परिसङ्ख्या । प्रकृते च कण्वरथन्तरवत्कौत्सादीनामपि स्वयोनिकर्ष्वेवगानप्राप्त्या गायत्रादिप्राकृतऋचामिहाप्राप्तेः कथं परिसङ्ख्येति वाच्यम् । प्रत्यक्षश्रुतैः कौत्सादिसामभिः प्राकृतसाम्नामेव निवृत्तिः । ऋचस्तु चोदकप्राप्ता एव । तास्तु संस्कार्यत्वात्संस्कारकं सामापेक्षन्ते । सामान्यपि संस्कार्याणीत्यन्योन्याकाङ्क्षावशाद्वैकृतसाम्नां प्राकृतऋग्भिरेवान्वयादिति तदाह सूत्रे, **पवमान** एवावापोद्धापौ **स्याताम्** । **तस्मिन्नेव** ''त्रीणि ह वै यज्ञस्य'' इत्यावापोद्धापदर्शनादिति । फलं व्यक्तम् ।

इति त्रयोदशं पवमाने विवृद्धाविवृद्धस्तोमकक्रतूनां सामावापोद्धापाधिकरणम् (सूत्रे २१-२२)

## अथ चतुर्दशं यागादौ विधिशब्देनैव देवताभिधानाधिकरणम् (सूत्रे २३-२४)

**विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥ २३ ॥**

**(शेषाणां चोदनैकत्वात्तस्मात्सर्वत्र श्रूयते ॥ २४ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोः ''आग्नेयोऽष्टाकपालः'' इति श्रुतम् । तत्र ''अग्नय इदं न मम'' इत्यादिचतुर्थ्यन्तोद्देशेन हविस्त्यागपरलौकिकपौरुषेयवाक्यरूपे निगमे किमग्निशब्द एव चतुर्थ्यन्ततया प्रयोज्यः, किं वाऽग्निशब्दपर्यायशुचिपावकजातवेदःप्रभृतिशब्देष्वन्यतमोऽपीति **सन्देहे,** आग्नेयशब्दो हि विधिवाक्यार्थज्ञानदशायामग्निशब्दार्थस्य देवतात्वं तद्धितेन प्रतिपादयति । तदाऽग्निशब्दस्य सन्निधानेऽपि न तदा शब्दस्वरूपाकाङ्क्षा । यदा हविस्त्यागदशायामग्निपदार्थस्य देवतात्वसम्पत्यर्थमग्निवाचकपदाकाङ्क्षा तदा विधिगतस्याग्निशब्दस्य व्यवहितत्वान्न बुद्धौ विपरिवृत्तिः । किन्तु देवतारूपोऽर्थ एव तदा बुद्धिस्थः स्ववाचकपदं स्मारयन्नविशेषात्सर्वानपि पर्यायान् स्मारयतीत्यन्यतमोऽपि प्रयोज्य इति पूर्वत्र प्राकृतीनामृचामिव पर्यायाणामबाध इति **प्राप्ते सिद्धान्तः,** ''आग्नेयोऽष्टाकपालः'' इति चोदना प्रथमतः श्रुत्याऽग्निशब्दस्य देवतात्वं प्रतिपादयन्ती प्रवर्तनारूपत्वात्सिद्धार्थकपदवत्तावन्मात्रेणापर्यवस्यन्ती हविस्त्यागदशोच्चार्यमाणचतुर्थ्यन्तपदाभिधेयत्वस्यैव देवतात्वेन हविस्त्यागदशायां तद्वाचकपदोच्चारणमप्यर्थाद्विधत्ते । तद्विधानदशायाञ्च विधिगतशब्दस्यैव सन्निहितत्वात्तदुच्चारणमेव विदध्यादिति न पर्यायशब्दप्रसक्तिः । ''अग्नये पावकाय'' ''अग्नये शुचये'' इत्यादौ यत्र विधिवाक्ये पर्यायेण द्वयोः श्रवणं तत्रैकोच्चारणेनैव चतुर्थ्यन्तदेवतावाचिपदोच्चारणरूपस्य देवतो-

द्देशस्य सिद्धेरन्यतरस्यैवोच्चारणमित्यविशेषाद्विकल्प इति । **केचित्तु** आग्येयपदेनाग्निशब्द एव देवतात्वेनोच्यते । न त्वग्निशब्दार्थः । देवताभूताग्न्यादिशब्दार्थस्य चैतन्यरूपस्य **देवता वा प्रयोजयेत्** इति नवमाद्य पादीयनये निरासाद्विध्युद्देशगताग्न्यादिशब्द एव चतुर्थ्यन्तो निगमेषु प्रयोज्य इत्याहुः । तदाह सूत्रे, **मन्त्रत्वे** मन्त्रस्येव देवतावाचिपदस्योच्चार्यत्वे प्राप्ते **विधिशब्दस्यैव भावः** उच्चारणं स्यात् । तेन शब्देनैव **चोदना** यतः अत इति । **फलं** व्यक्तम् ।

इति चतुर्दशं यागादौ विधिशब्देनैव देवताभिधानाधिकरणम् (सूत्रे २३-२४)

### अथ पञ्चदशमतिदेशस्थलेऽपि वैधशब्देनैव देवताभिधानाधिकरणम् (सूत्रम् २५)

**तथोत्तरस्यां ततौ तत्प्रकृतिकत्वात् ॥ २५ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''सौर्यं चरुं निर्वपेत्'' इत्यादिविकृतियागे चोदकप्राप्तेषु ''अग्नेरहमुज्जितिमनूज्जेषम्'' ''अग्नये जुष्टं निर्वपामि'' इत्यादिनिगमेष्वग्न्यादिपदस्थाने वैकृतद्रव्यदेवतावाचिपदमूह्यमित्युक्तमूहाध्याये । तत्र किं विध्युद्देशगतः सूर्यादिशब्द एव प्रयोज्यः, अथादित्यादितत्पर्यायशब्दोऽपीति **सन्देहे**, पूर्वत्र प्रकृतावाग्नेयादिविधिवाक्यगताग्न्यादिशब्द एव ''अग्नय इदं, न मम'' इत्यादिषु पौरुषेयनिगमेषूच्चार्य इत्युक्तन्यायेनेहापि ''सूर्यायेदं, न मम'' इत्यादिलौकिकवाक्येषु विधिगतसूर्यशब्द एव चतुर्थ्यन्ततया प्रयोज्य इति सिद्धावपि ''अग्नेरहमुज्जितिम्'' इत्याद्येषु निगमेषु येन केनापि सूर्यपर्यायेणार्थप्रत्यायनेऽप्यविरोधान्न विधिगतसूर्यपदेनैवार्थप्रत्यायनमिति **प्राप्ते सिद्धान्तः**, सप्तमनवमाद्ययोः ''यागेनापूर्वं भावयेत्'' इति यागकरणिका भावना ह्यनिर्ज्ञातप्रकारत्वात्कथम्भावमपेक्षमाणा प्रयाजाद्यङ्गानि प्रकारार्पकतया गृह्णातीत्यङ्गानां प्रधानापूर्वभावनयाऽन्वय इत्युक्तत्वेनेहापि सौर्यमिति द्रव्यदेवतासम्बन्धेनानुमितयागकरणिकायां भावनायां विधिगतसूर्यशब्द एव देवतारूपाङ्गार्पकतयाऽन्वेतीति तदन्यतत्पर्यायशब्दस्य ''अग्नेरहमुज्जितिं'' इत्यादिनिगमेषु प्रयोगे भावनाश्रुतशब्दत्यागोऽश्रुतशब्दान्तरकल्पना च स्यादित्यपौरुषेयनिगमेष्वपि विधिगत एव शब्दः प्रयोज्यो विकृतिष्विति । तदाह **सूत्रे**, यथा प्रकृतौ विधिशब्द एव निगमेषूच्चार्यते, **तथोत्तरस्यां ततौ** विकृतिपंक्तावपि विधिगतशब्द एव निगमेषूच्चारणीयः । **तत्प्रकृतिकत्वात्** दर्शपूर्णमासप्रकृतिकत्वाद्विकृतेरिति ।

इति पञ्चदशमतिदेशस्थलेऽपि विधिशब्देनैव देवताभिधानाधिकरणम् (सूत्रम् २५)



### अथ षोडशमाधानेऽग्नेः सगुणेनाभिधानाधिकरणम् (सूत्राणि २६-२९)

**प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥ २६ ॥**

**(अविकारो वाऽर्थशब्दानपायात्स्याद्द्रव्यवत् ॥ २७ ॥ तथाऽऽरम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात् ॥ २८ ॥ द्रव्येष्वारम्भगामित्वादर्थे विकारः सामर्थ्यात् ॥ २९ ॥)**

पूर्वोक्त एवार्थेऽत्र विशेषचिन्तनात्सङ्गतिः । पूर्वत्र सामान्यतो निगमेषु वैध एव शब्दः प्रयोज्य इत्युक्तम् । यत्र पवमानेष्टिषु ''अग्नये पवमानाय'' ''अग्नये पावकाय'' ''अग्नये शुचये'' इत्यनेके शब्दा विधौ श्रुतास्तत्र किं निगमेष्वेक एवाग्निशब्दः प्रयोज्यः, उतोभौ शब्दावपीति **सन्देहे**, एकेनापि शब्देन देवतानिर्देशसिद्धेर्नेतरस्य कृत्यम् । तत्रैव चोदकानुग्रहाच्चोदकप्राप्ताग्निशब्द एव मुख्यत्वान्निगमेषूच्चार्य इति प्राप्ते **सिद्धान्तः**, विधिगतशब्देनोच्चार्यमाणेनार्थप्रत्यये जायमानेऽपि न तस्य शब्दस्यार्थप्रत्यायनार्थत्वम् । एकेनैव तत्सिद्धेरितरोच्चारणानर्थक्यं स्यात् । किन्तु विधिगतशब्द एव देवतारूपतया भावनाङ्गत्वेन विधेय इत्युक्तत्वेन सर्वोपि विधिगतः शब्दः ''अग्नये पवमानाय निर्वपामि'' ''अग्निं पवमानमावह'' ''अग्नेः पवमानस्योज्जितिमनूज्जेषम्'' इत्येवंरूपेण प्रयोज्य इति । तदाह **सूत्रे**, **प्राकृतस्याग्नेः** पवमानत्वगुणश्रुतौ **सगुणेन** गुणवत्वेन **अभिधानं** स्यात्, सगुणस्यैव चोदितत्वादिति । **केचित्तु** अर्थस्य देवतात्वेऽपि पवमानत्वादिगुणविशिष्टस्यैव ''विष्णवे शिपिविष्टाय'' इत्यत्रेव देवतात्वेन देवतानिर्देशार्थमेव पदद्वयं वाच्यमित्याहुः ।

इति षोडशमाधानेऽग्नेः सगुणेनाभिधानाधिकरणम् (सूत्राणि २६-२९)

### अथ सप्तदशमाधानाज्ययोरग्नेर्निर्गुणेनाभिधानाधिकरणम् (सूत्रे ३०-३१)

**बुधन्वान् पवमानवद्विशेषनिर्देशात् ॥ ३० ॥**

**(मन्त्रविशेषनिर्देशान्न देवताविकारः स्यात् ॥ ३१ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । पवमानेष्टिष्वेवाग्नेयसौम्याख्यौ द्वावाज्यभागौ प्रकृत्य श्रूयते ''बुधन्वानाग्नेयः कार्यः । पावकवान् सौम्यः कार्यः'' इति । तत्राऽऽज्यभागदेवतयोरग्नीषोमयोर्यथाक्रमं बुधन्वत्वपावकत्वविशेषणयुक्ततया निगमेषूच्चारणं ''बुधन्वन्तमग्निमावह । पावकवन्तं सोममावह''

इति, उत केवलयोरेवोच्चारणमिति **सन्देहे**, बुधन्वानाग्नेयः कार्यः इत्यादेरयमर्थः । ''आग्नेयः आज्यभागो बुधन्वच्छब्दयुक्तः कार्यः । सौम्यश्चाज्यभागः पावकवच्छब्दयुक्तः कार्यः'' इति । तस्य तच्छब्दयुक्तत्वञ्च निगमेषु ''अग्नये बुधन्वत इदम्'' इत्यादिशब्दोच्चारणे सति बुधन्वत्वादिगुणविशिष्टदेवताद्वारेण भवति । नान्यथेति देवतायामेव गुणविधिपर्यवसानात्पूर्वत्र पवमानेष्टिप्रधानयागदेवताया इवाज्यभागदेवतयोरपि बुधन्वत्वादिगुणयुक्तत्वेनैव निगमेष्वभिधानं कार्यमिति **प्राप्तम्** । तदाह **सूत्रे**, यथाऽग्निः **पवमानस्तथा** बुधन्वानग्निर्बुधन्वानाग्नेय इति **विशेषनिर्देशादिति** । **सिद्धान्तस्तु**, आग्नेयः सौम्य इत्याभ्यामाज्यभागरूपयागनिर्देशोऽपि देवताद्वारेणैव तच्छब्दयुक्तत्वं निर्वाह्यमित्यत्र न नियामकमस्ति । मन्त्रद्वारेणापि तच्छब्दयुक्तत्वसम्भवात् । पवमानेष्टिप्रकरणे ह्यग्निलिङ्गकसोमलिङ्गकमन्त्राणां भावेन विशेषनियमार्थं बुधन्वन्मन्त्रयुक्तश्चाग्नेय आज्यभागः । पावकपदोपेतमन्त्रयुक्त एव सौम्य इत्यर्थतया ''अग्निं स्तोमेन बोधयेत्'' इत्यादिमन्त्रे बुधधातुनिष्पन्नशब्दसत्वेन तादृशमन्त्रद्वारेण तच्छब्दवत्वोपपत्तेः । **वस्तुतस्तु** ''आग्नेयः सौम्यः'' इति च नाज्यभागनिर्देशः । किन्तु प्राकरणिकमन्त्रनिर्देशः । अग्निप्रकाशकतयाऽग्निसम्बन्धित्वेनाग्नेय इत्युक्तो यो मन्त्रः स बुधन्वान् कार्यः । सौम्यश्च मन्त्रः पावकशब्दयुक्तः कार्य इति मन्त्रविशेषणमेव बुधन्वत्वादिकं । न देवताविशेषणम् । तदाह **सूत्रे, मन्त्रविशेषनिर्देशात्तु न देवताविकारः स्यादिति** । **फलं तु पूर्वपक्षे**, निगमेषु सगुणतया देवतोच्चारणम् । **सिद्धान्ते तु**, चोदकानुग्रहाय केवलाग्नीषोमयोरविकृतयोरेवेति ।

इति सप्तदशमाधानाज्ययोरग्नेर्निर्गुणेनाभिधानाधिकरणम् (सूत्रे ३०-३१)

## अथाष्टादशं गवानुबन्धपृषदाज्यहोमयोर्विधिशब्दाभ्यामेवोस्रावनस्पतिशब्दाभ्यामभिधानाधिकरणम् (सूत्रे ३२-३३)

**विधिनिगमभेदात्प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदः स्यात् ॥ ३२ ॥**

**(यथोक्तं वा विप्रतिपत्तेर्न चोदना ॥ ३३ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ज्योतिष्टोमे श्रूयते ''गौरनूबन्ध्यः'' इति । तत्र ''उस्राया वपाया मेदसोऽनुब्रूहि'' इति मन्त्ररूपो निगम आम्नातः । तत्र निगमे विध्युद्देशगतगोशब्दादन्येन तत्पर्यायेण येन केनापि शब्देन गोरभिधानम्, उतोऽस्रापदेनैवेति **सन्देहः** । **पूर्वपक्षस्तु**, प्रकृतावग्नीषोमीयपशौ विधिवाक्ये पशुपदश्रवणेऽपि ''छागस्य वपाया मेदसः'' इति निगमे शब्दान्तरश्रवणाद्यथाप्रकृति विकृतावपि कर्तव्यत्वात्तद्विकृतावनुबन्ध्येऽपि विधिवाक्ये गोपदश्रवणेऽपि न तस्यैव निगमवचनम् ।



किन्तु पूर्वत्रेव यथाप्रकृति प्राप्तचोदकानुग्रहाय वैधपदादन्यस्य तत्पर्यायस्य कस्यापीति । उस्रापदन्तु पाठमात्रम् । न तद्विवक्षितमिति । तथा अग्नीषोमीयपशौ स्विष्टकृद्यागविकृतित्वेन ''पृषदाज्येन वनस्पतिं यजति'' इति श्रुतवनस्पतियागीयनिगमेऽपि वैधवनस्पतिशब्दपर्यायो यः कश्चिदेव वाच्यः । तद्विकृतिभूतस्विष्टकृद्यागे ''स्विष्टकृतमग्निं यजति'' इति ''ये दैव्या ऋत्विजस्तेभिरग्ने'' इति विधिनिगमयोस्सविशेषणनिर्विशेषणाग्निपदोपादानेन प्राकृतनिगमे वैधपदादन्यस्योक्तेस्तद्विकृतिवनस्पतियागीयनिगमेऽपि वैधवनस्पतिशब्दपर्यायवृक्षादिपदप्रयोगः कार्य इति **प्राप्तम्** । तदाह **सूत्रे, प्रकृतौ विधिनिगमयोर्भेदात् विकृतावपि तयोर्भेदः स्यात्** । **तत्प्रकृतिकत्वादिति** । **सिद्धान्तस्तु**, प्रकृतौ विधिनिगमयोराम्नानवशेनार्थादिव भेदप्राप्तेः प्रकृतावार्थिकस्य विकृतौ चोदकतोऽप्रापणात् साक्षाच्छ्रुतोस्रापदत्यागे हेत्वभावाद्विधौ गोपदस्य द्रव्यपरत्वेन शब्दपरत्वाभावादुस्रापदेनैवानूबन्ध्यनिगमोक्तिः । वनस्पतिनिगमोक्तिस्तु वनस्पतिशब्दस्य देवतात्वात् **विधिशब्दस्य मन्त्रत्वे भावः स्यात्** इति पूर्वोक्तन्यायेन वनस्पतिशब्दयुक्तत्वेनैवेति ।

इत्यष्टादशं गवानुबन्धपृषदाज्यहोमयोर्विधिशब्दाभ्यामेवोस्रावनस्पति शब्दाभ्यामभिधानाधिकरणम् (सूत्रे ३२-३३)

## अथैकोनविंशमवभृथेऽग्नीवरुणयोः स्विष्टकृच्छब्देनाभिधानाधिकरणम् (सूत्रे ३४-३५)

**स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्तेत ॥ ३४ ॥**

**(संयोगो वाऽर्थापत्तेरभिधानस्य कर्मजत्वात् ॥ ३५ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ''वारुणेनैककपालेनावभृथं यन्ति'' इति श्रुतावभृथेष्टौ श्रूयते ''अग्नीवरुणौ स्विष्टकृतौ यजति'' इति । तत्र निगमेषु स्विष्टकृत्पदं हित्वा ''अग्नीवरुणावावह'' इत्येव निगमोच्चरणम्, उत ''अग्नीवरुणौ स्विष्टकृतावावह'' इति स्विष्टकृच्छब्दयुतत्वेनेति **सन्देहे**, स्विष्टकृच्छब्दः ''सुष्टु इष्टं यजनं कृतवान्'' इति यौगिकश्चेत् भूतकालस्य स्विष्टकरणस्याग्नीवरुणयोरभावेन न तद्विशेषणं भवितुमर्हतीति रूढ्याऽग्नेर्वाचकः सन् लक्षणया स्विष्टकृत्कार्यपर इति स्विष्टकृतौ स्विष्टकृत्कार्यार्थाविति लक्षितस्विष्टकृत्कार्योद्देशेन केवलयोरेवाग्नीवरुणयोर्देवतात्वेन विधानात्पूर्वत्र वनस्पतिशब्दस्येव निगमेषु केवलयोरग्नीवरुणयोरेवाभिधानमिति **प्राप्तम्** । तदाह **सूत्रे, तच्छब्दत्वात्** रूढ्याऽग्निवाचकत्वात् **स्विष्टकृद्देवतान्यत्वे** भेदे सति **निवर्तेत** स्विष्टकृच्छब्द इति । **सिद्धान्तस्तु**, यथा ''अदितिः पाशान्'' इत्यत्र प्रत्ययार्थासम्भवेऽपि प्रकृत्यर्थस्य न हानम् तथैव **गुणाद्वा कल्पनैकदेशात्**

इत्यत्र नवमोक्तेरेवमत्रापि प्रत्ययार्थभूतकालतामात्रासम्भवेऽपि सम्भवतां धाधूपसर्गाद्यर्थानां त्यागायोगेनावयवशक्त्या योगसम्भवे समुदायशक्तिरूपरूढिकल्पनाऽयोगस्य प्रोक्षणाधिकरणेऽभिधानात्प्रयोगान्तरापेक्षया भूतकालताया अपि सम्भवाच्च स्विष्टकृद्गुणकावग्नीवरुणौ यष्टव्याविति मुख्यवृत्तिरेव स्विष्टकृच्छब्दो न कार्यलक्षणार्थ इति सगुणयोरेव देवतात्वात्सगुणमभिधानमिति । फलं व्यक्तम् ।

इत्येकोनविंशमवभृथेऽग्नीवरुणयोः स्विष्टकृच्छब्देनाभिधानाधिकरणम् (सूत्रे ३४-३५)

**अथ विंशमग्नीषोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणेनाग्निशब्देनाग्नेरभिधानाधिकरणम् (सूत्रे ३६-३७)**

**सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् ॥ ३६ ॥**

**(सर्वस्य वैककर्म्यात् ॥ ३७ ॥)**

पूर्वमग्नेस्सगुणमभिधानं निगमेष्वित्युक्तम् । तन्न सर्वनिगमेष्वितीह शङ्कनात्सङ्गतिः । अग्नीषोमीयपशौ पशुपुरोडाशः श्रूयते ''अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशं निर्वपति'' इति । तत्र स्विष्टकृद्यागे देवतायाः स्विष्टकृत्वरूपगुणलोपः श्रूयते ''अग्निं यजति'' इति । तत्रायं गुणलोपः प्रधानमात्रे, किं वा सर्वनिगमेष्वपीति सन्देहे, ''अग्निं यजति'' इति प्रधानमात्र एव गुणलोपश्रवणात् ''अग्नय इदं, न मम'' इति निगम एव गुणलोपः । नान्यत्र । ''अग्नये स्विष्टकृते प्रेष्य'' इत्येवं प्रकृतिवदेव स्विष्टकृत्वगुणकमेवान्यनिगमेष्वग्नेरभिधानमिति **प्राप्तम्** । तदाह **सूत्रे**, प्रकृतौ **सगुणस्याग्नेर्विकृतौ गुणलोपे श्रुते निगमेषु यावदुक्तं** यत्रैव गुणलोपः श्रुतस्तत्रैव प्रधानमात्रे देवताया निर्गुणतयाऽभिधानं न सर्वत्रेति । **सिद्धान्तस्तु**, यथाप्रकृति ''अग्निं स्विष्टकृतं यजति'' इति विहितां यागकरणिकामेव भावनामिह यजतीत्यनूद्याग्निमात्रविधानात्तथोत्तरस्यां ततौ तत्प्रकृतिकत्वादित्यत्र प्रकृताविव विकृतावपि विधिगतसूर्यादिशब्दो यागकरणकभावनान्वयीत्युक्तदिशाऽत्रापि स्विष्टकृत्त्वगुणहीनस्याग्नेर्भावनाशब्दितप्रयोगान्वयात्प्रयोगान्तर्गतेषु सर्वनिगमेष्वपि निर्गुणाग्नेरेवाभिधानमिति । तदाह **सूत्रे**, **सर्वस्य वैककर्म्यादिति** । फलं व्यक्तम् ।

इति विंशमग्नीपोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणेनाग्निशब्देनाग्नेरभिधानाधिकरणम् (सूत्रे ३६-३७)

**अथैकविंशमनुयाजेषु स्विष्टकृद्यागस्य संस्कारकर्मताऽधिकरणम् (सूत्रम् ३८)**

**स्विष्टकृदावापिकोऽनुयाजे स्यात्प्रयोजनवदङ्गानामर्थसयोगात् ॥ ३८ ॥**



स्विष्टकृत्प्रसङ्गादियं प्रासङ्गिकी चिन्ता । दर्शपूर्णमासयोस्त्रयोऽनूयाजाः । तत्र तृतीयः ''स्विष्टकृतमग्निं यजति'' इति स्विष्टकृद्दैवत्यः श्रुतः । स किं तृतीयोऽनूयाजः इतरानूयाजद्वयवदर्शपूर्णमासयोरारादुपकारकः, उत ''उत्तरार्धात्सकृत्स्विष्टकृते समवद्यति'' इति स्विष्टकृद्यागीयस्विष्टकृद्रूपदेवतायाः प्रकाशनरूपसंस्कारार्थ इति सन्देहे, अनूयाजस्विष्टकृद्यागयोर्द्वयोरपि दर्शशेषत्वात् **गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्** इति न्यायेन न मिथः संस्कार्यसंस्कारकत्वरूपाङ्गाङ्गिभावः । किञ्च ''स्विष्टकृतं यजति'' इत्युक्तानुयाजयागस्य, ''देवोऽग्निस्स्विष्टकृत्सु द्रविणमिन्द्रः कविः'' इति मन्त्रोपेतत्वेन तद्युक्तानूयाजेन स्विष्टकृतं संस्कुर्यात्प्रकाशयेदिति स्विष्टकृद्यागदेवताप्रकाशनरूपसंस्कारार्थताऽङ्गीकारे वाक्यार्थविधिः स्यात् । स्विष्टकृद्देवताकेनानूयाजयागेनापूर्वं भावयेदित्यर्थोक्तौ तु श्रुत्यर्थविधिरित्यारादुपकारक एव तृतीयोऽप्यनूयाज इति **प्राप्ते सिद्धान्तः**, दृष्टे सम्भवत्यदृष्टकल्पनायोगादृष्टप्रयोजनस्यान्यस्याभावात्स्विष्टकृद्यागीयदेवताप्रकाशशब्दितसंस्कारार्थतया दृष्टप्रयोजनार्थत्वं तृतीयानुयाजस्य । किञ्चारादुपकारकत्वे प्रकरणेन विनियोगः । संस्कारकतया सन्निपातित्वे तु वाक्येन विनियोगः । प्रकरणाच्च वाक्यं बलीय इति संस्कारार्थोऽनुयाजोऽन्त्यप्रयाजवत् । तदाह **सूत्रे**, **आवापिकः स्विष्टकृत्**प्रधानयागप्राशित्रभक्षणयोरन्तरालदेशे आवापः स्थापनम् तत्र भवः ''शेषात्स्विष्टकृते समवद्यति'' इत्युक्तस्विष्टकृद्याग **आवापिकः** । तदीयः स्विष्टकृदाख्यदेवोऽप्यावापिकः । स आवापिकः स्विष्टकृदनुयाजसंस्कार्यः स्यात् । **प्रयोजनापेक्षिणामङ्गानां** सति सम्भवे **दृष्टेनैवार्थेन संयोगादिति** । फलं तु पूर्वपक्षे, विकृतिषु स्विष्टकृद्देवताया अन्यत्वे अनुयाजः । स्विष्टकृतो न बाधः । सिद्धान्ते तु बाध इति ।

इत्येकविंशमनुयाजेपु स्विष्टकृद्यागस्य संस्कारकर्मताऽधिकरणम् (सूत्रम् ३८)

**अथ द्वाविंशं दर्शपूर्णमासयोर्याज्यापुरोनुवाक्ययोः संस्कारकर्मताऽधिकरणम् (सूत्राणि ३९-४१)**

**अन्वाहेति च शस्त्रवत्कर्म स्याच्चोदनान्तरात् ॥ ३९ ॥**

**(संस्कारो वा चोदितस्य शब्दवचनार्थत्वात् ॥ ४० ॥ स्याद्गुणार्थत्वात् ॥ ४१ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । दर्शपार्णमासयोः ''तिष्ठन् याज्यामन्वाह । आसीनः पुरोनुवाक्यामन्वाह'' इति श्रूयते । तत्र याज्यानुवाक्योच्चारणमदृष्टार्थं सदर्थकर्म, उतार्थप्रकाशनरूप संस्कारकर्मेति सन्देहे, अर्थप्रकाशनार्थत्वेऽर्थ प्रकाशनसामर्थ्यरूपलिङ्गादेवोच्चारण सम्भवे ''अन्वाह'' इत्यनुवचन-

विधानमनर्थकम् । एवञ्च पूर्वत्र दृष्टार्थत्वेऽपीह ''याज्यामन्वाह'' इति वचनानर्थक्याददृष्टार्थतैवेति **प्राप्तम्** । तदाह **सूत्रे,** याज्याद्युच्चारणं **कर्म स्यादर्थकर्म** स्यात् । कुतः? लिङ्गादेवोच्चारणे प्राप्तेऽपि ''अन्वाह'' इति **चोदनान्तरात् शस्त्रवत्** ''शंसति'' इति विधिबलाच्छस्त्रस्यार्थकर्मत्ववदति **सिद्धान्त-स्तु,** स्यादेवम् । यदि ''अन्वाह'' इत्येतद्याज्यादेरनुवचनविधायकं स्यात् । न चैवम् । सामर्थ्यरूप-लिङ्गादेवोच्चारणस्य प्राप्त्या ''अन्वाह'' इत्यनूद्य तिष्ठन्नित्यासीन इति च गुणविधानेन वचनस्यार्थ-वत्वाददृष्टार्थं याज्यापुरोनुवाक्योच्चारणमिति । **फलन्तु, पूर्वपक्षे** विकृतिषु देवताभेदे प्राकृतयाज्या-पुरोनुवाक्ययोरबाधः । **सिद्धान्ते** तु बाध इति ।

इति द्वाविंशं दर्शपूर्णमासयोर्याज्यापुरोनुवाक्ययोः संस्कारकर्मताऽधिकरणम् (सूत्राणि ३९-४१)

## अथ त्रयोविंशं मनोतायामूहाभावाधिकरणम् (सूत्रं ४२)

**मनोतायान्तु वचनादविकारः स्यात् ॥ ४२ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । अग्नीषोमीयपशौ ''त्वं ह्यग्ने प्रथमो मनोता'' इति मन्त्रः श्रुतः । स किं विकृतिषु वायव्यादिपशुषूहितव्यः, ''त्वं हि वायो प्रथमो मनोता'' इति, किं वाऽनूहेनैव प्रयोज्य इति **सन्देहे,** अस्य मन्त्रस्य केवलाग्निदेवताकत्वेन पश्वीयाग्नीषोमदेवताप्रकाशने सामर्थ्याभावेन विकृति-षूत्कर्षप्राप्तौ ''यद्यप्यन्यदैवत्यः पशुराग्नेय्येव मनोता कार्या'' इति वचने ''यद्यपि द्विदैवत्यः पशुस्तथा-प्येकाग्निदैवत्यैव मनोता कार्या'' इत्यर्थप्रतीत्या मनोतामन्त्रस्योत्कर्षवारणेन प्रकृतावेव पशाववस्थाना-वगमादग्निद्वारेण लक्षणया देवताभूताग्नीषोमप्रकाशने शक्ततया पूर्वत्र याज्यादिवत्प्रकृतौ दृष्टार्थत्वा-द्विकृतावूहेन प्रयोज्य इति **प्राप्ते सिद्धान्तः,** यद्ययं मन्त्रोऽग्निं श्रुत्या प्रतिपादयंस्तत्सम्बन्धिनं सोममपि लक्षणया प्रतिपादयितुमीष्टे तर्हि ''यद्यप्यन्यदैवत्य'' इति वचनापेक्षां विनैव लिङ्गप्रकरणाभ्यां प्रकृतावेव दैक्षपशाववतिष्ठत इति प्रकृतावनुपयुक्तं यद्यपीतिवचनं विकृतिष्वेव यथादैवतमूहप्राप्तौ तद्बाधकं स्यादिति वायव्यादिष्वनूह इति । तदाह **सूत्रे, मनोतायां** ''त्वं ह्यग्ने'' इति मनोतामन्त्रे यद्यपीति **वचनादविकारो**ऽनूहो विकृतिष्विति । फलं तु चोदकप्राप्तमन्त्रगताग्निशब्दस्य विकृतावबाधः ।

इति त्रयोविंशं मनोतायामूहाभावाधिकरणम् (सूत्रं ४२)

## अथ चतुर्विंशं कण्वरथन्तरस्य स्वयोनौ गानाधिकरणम् (सूत्राणि ४३-४६)

**पृष्ठार्थेऽन्यद्रथन्तरात्तद्योनिपूर्वत्वात्स्यादृचां प्रविभक्तत्वात् ॥ ४३ ॥**



**(स्वयोनौ वा सर्वाख्यत्वात् ॥ ४४ ॥ यूपवदिति चेत् ॥ ४५ ॥ न कर्म-संयोगात् ॥ ४६ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ''वैश्यो वैश्यस्तोमेन यजेत'' इति श्रुतवैश्यस्तोमे ''कण्वरथन्तरं पृष्ठं भवति'' इति श्रुतम् । पृष्ठस्तोत्रसाधनकण्वरथन्तराख्यं साम ज्योतिष्टोमगतवैकल्पिकबृहद्रथन्तर-साम्नोर्द्वयोरपि विकार इत्युक्तं अप्राकृते तद्विकारादिति नवमद्वितीयपादे । एवञ्च कण्वरथन्तरतसाम किं ''अभि त्वा'' इत्यादिरथन्तरयोनौ, 'त्वामिद्धि हवामहे' इति बृहद्योनौ वा गेयमित्यनियमः, उत रथन्तरयोनावेवेति नियमः, किंवा स्वयोनावेवेति **सन्देहे, पूर्वपक्षस्तु** कण्वरथन्तरशब्देन गीतिमात्र-मेवोच्यते । न ऋगपि । तथा च सा गीतिश्चोदकप्राप्तप्राकृतबृहद्रथन्तररूपगीतिकार्ये वर्तते । न तदाधारऋचः कार्ये । सामर्थ्याभावात् । अतः प्राकृतेभ्यो ऋग्भ्यः प्राकृत्योर्गीत्योरेव निवर्तिका । न तु ऋचोऽपीति तयोरन्यतरत्र कण्वरथन्तरसामगानम् । एवञ्च यथा पूर्वत्र विकृतिषु मनोतास्थाग्निपदस्य न बाधस्तथाऽत्रापि प्राकृतऋचो न बाध इत्याद्यः । **कण्वस्य** रथन्तरं कण्वरथन्तरमिति व्युत्पत्त्या कण्वोच्चारिते सामविशेषे प्रयुज्यमानो रथन्तरशब्दस्तद्धर्मातिदेशार्थ इति रथन्तरसामाधारभूतायां ''अभि त्वा'' इत्यस्यामेव ऋचि गानमिति **द्वितीयः** । तदाह सूत्रे वैश्यस्तोमे **पृष्ठार्थे** पृष्टस्तोत्रार्थतया **रथन्तरादन्यत्**कण्वरथन्तराख्यं यत्साम विधीयते तत्साम **तद्योनिः** रथन्तरयोनिः **स्यात्** । कुतः? **पूर्वत्वात्** वैश्यस्तोमस्य ज्योतिष्टोमपूर्वकत्वात् । ननु प्रकृतौ बृहद्योनावपि पृष्ठस्तोत्रसाधनीयभूतं साम कृतमिति चेत् सत्यं । **ऋचां प्रविभक्तत्वात्** । बृहद्योने रथन्तरयोनेश्च भिन्नत्वान्नामातिदेशेन रथन्तरयोनावेव स्यादिति । **सिद्धान्तस्तु,** कण्वरथन्तरशब्दो योगवृत्तौ मानाभावेन सामविशेषे रूढ इति न रथन्तरयोनौ तद्गानस्य प्राप्तिः । उत्तराग्रन्थे वैश्यस्तोमप्रकरणे कण्वरथन्तराख्यं साम विहितम् । तत्प्रकरण एवोत्तराग्रन्थे तद्योनिरप्याम्नाता । ततश्च यत्र पृष्ठस्तोत्रे कण्वरथन्तरं तत्स्तोत्राङ्गत्वेन तद्यो-निरपि विज्ञायत इति प्रकरणप्राप्ततया चोदकप्राप्तबाध इति न बृहद्योनेरपि प्राप्तिरित्युत्तराग्रन्थाम्नानात्सिद्धं स्वयोनावेव ऋचि गानमिति । तदाह सूत्रे, **स्वयोनौ वा सर्वाख्यत्वादिति** । **सर्वाख्यत्वात्** रूढत्वात्कण्वरथन्तरपदस्येत्यर्थः । फलं प्राकृतऋग्बाधः ।

इति चतुर्विंशं कण्वरथन्तरस्य स्वयोनौ गानाधिकरणम् (सूत्राणि ४३-४६)

## अथ पञ्चविंशं कण्वरथन्तरस्य स्वयोन्युत्तरयोर्गानाधिकरणम् (सूत्रे ४७-४८)

**कार्यत्वात्तूत्तरयोर्यथाप्रकृति ॥ ४७ ॥**

**(समानदेवते वा त्यृचस्याविभागात् ॥ ४८ ॥)**

पूर्वोक्तेऽर्थेऽत्र विशेषचिन्तनात्सङ्गतिः । पूर्वत्र कण्वरथन्तरस्य स्वयोनावेवाम्नानसिद्धायां गानमिति स्थिते, ''एकं साम त्यृचे क्रियते स्तोत्रीयम् । यद्योन्यां तदुत्तरयोर्गायति'' इति वचनात्कण्वरथन्तरं स्वयोनिऋक्त उत्तरयो ऋचोरपि गातव्यम् । तत्र किं बृहद्योन्युत्तरयो रथन्तरयोन्युत्तरयोर्वेत्यनियमः, उत स्वयोन्युत्तरयोरेवेति **सन्देहे,** कण्वरथन्तरस्याऽम्नानसिद्धपरित्यागभियोत्तराग्रन्थाम्नातस्वयोनावेव गानेऽप्युत्तरयोर्गाने तु स्वयोनिऋक्परित्यागेन ऋगन्तरसञ्चाराविशेषेण चोदकाबाधाय प्राकृतबृहदादियोन्युत्तरयोर्गानमिति **प्राप्तम्** । तदाह **सूत्रे, उत्तरयो** ऋचोः **कार्यत्वात्सामगानं यथाप्रकृति** बृहदादियोन्युत्तरयोरिति । **सिद्धान्तस्तु,** कण्वरथन्तरयोन्युत्तरयोरपि ऋचोरुत्तराग्रन्थे पाठतः सिद्धत्वात्तत्परित्यागायोगात्स्वयोन्युत्तरयोरेव गानमिति ।

इति पञ्चविंशं कण्वरथन्तरस्य स्वयोन्युत्तरयोर्गानाधिकरणम् (सूत्रे ४७-४८)

### अथ षड्विंशमग्निष्टुति स्तुतशस्त्रयोरविकाराधिकरणम् (सूत्रम् ४९)

**ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ॥ ४९ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । अग्निष्टुन्नामकयागे ''आग्नेया ग्रहा भवन्ति'' इति ग्रहाणां प्रकृतितोऽन्यदेवताकत्वं श्रूयते । तत्र प्रकृतितो नानादैवत्यानि स्तोत्रशस्त्राणि चोदकतः प्राप्तानि । तानि किं यथादैवतमग्निपदप्रक्षेपेणोहितव्यानि, उत नेति **सन्देहे,** प्राकृतानि स्तोत्रशस्त्राणि याज्यावद्देवतास्मरणरूपसंस्कारार्थानीति यथादैवतमग्निष्टुत्यूहितव्यानि स्युः । तथा च पूर्वत्र प्राकृत्योरुत्तरयो ऋचोर्बाध इवात्रापि चोदकप्राप्तस्तोत्रादौ देवतावाचिपदबाध इति **प्राप्ते सिद्धान्तः,** देवताप्रकाशनार्थत्वे ''स्तौति'' ''शंसति'' इति श्रुतिविरोधात्तदविरोधाय गुणिनिष्ठगुणाभिधानार्थानीत्यारादुपकारकतयाऽदृष्टार्थानीति द्वितीयाद्यपादे **स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात्** इत्यत्रोक्तत्वादनूहेनैव प्रयोज्यानीति । द्वितीयेऽदृष्टार्थत्वोक्तेः प्रयोजनोक्तिमात्रपरमिदं सूत्रमित्याहुः । अयं हि **सूत्रार्थः,** अग्निष्टुति **ग्रहाणां** प्राकृतदेवताभेदेऽपि **स्तोत्रशस्त्रयोरर्थकर्मत्वादविकारः** अनूहः **स्यादिति** ।

इति षड्विंशमग्निष्टुति स्तुतशस्त्रयोरविकाराधिकरणम् (सूत्रम् ४९)

### अथ सप्तविंशं चातुर्मास्येष्वाज्यशब्दस्याविकारेणावाहनाधिकरणम् (सूत्राणि ५०-५९)

**उभयपानात्पृषदाज्ये दध्नः स्यादुपलक्षणं निगमेषु पातव्यस्योपलक्षणत्वात् ॥ ५० ॥**



**(न वा परार्थत्वाद्यज्ञपतिवत् ॥ ५१ ॥ स्याद्वाऽऽवाहनस्य तादर्थ्यात् ॥ ५२ ॥ न वा संस्कारशब्दत्वात् ॥ ५३ ॥ स्याद्वा द्रव्याभिधानात् ॥ ५४ ॥ दध्नस्तु गुणभूतत्वादाज्यपा निगमास्स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् ॥ ५५ ॥ दधि वा स्यात् प्रधानमाज्ये प्रथमान्त्यसंयोगात् ॥ ५६ ॥ अपि वाऽऽज्यप्रधानत्वाद्गुणार्थे व्यपदेशे भक्त्या संस्कारशब्दः स्यात् ॥ ५७ ॥ अपि वाऽऽख्याविकारत्वात्तेन स्यादुपलक्षणम् ॥ ५८ ॥ न वा स्याद्गुणशास्त्रत्वात् ॥ ५९ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । चातुर्मास्येषु ''पृषदाज्येनानूयाजान् यजति'' इति श्रूयते । पृषदाज्यं नाम दधिमिश्रितमाज्यम् । तत्र प्रकृतितश्चोदकेन देवानाज्यपानावह, स्वाहा इत्यादयोऽनूयाजदेवतावाचकाज्यपशब्दयुक्ता निगमाः प्राप्ताः । तत्र निगमेषु किमाज्यदधिपानित्यूहः कार्यः, किंवा दधिपानिति, उत पृषदाज्यपानिति, यद्वाऽनूह एवेति चतुर्धा **संदेहः । पूर्वपक्षस्तु** ''पृषदाज्यं गृह्णाति'' ''द्वयं वा इदं सर्पिश्चैव दधि च वा'' इति दध्याज्ययोर्द्वयोरपि हविष्ट्वेन सङ्कीर्तनेनोभयं हविरिति पूर्वत्र स्तुतशस्त्रयोरग्निपदानूहेऽपीह दध्याज्यपानित्यूह इत्याद्यः । तदाह **सूत्रे, पृषदाज्ये** त्यज्यमाने अनूयाजदेवतानां दध्याज्यो**भयपातृत्वान्निगमेषु** दध्याज्यपानिति **दध्नोऽप्युपलक्षणं स्यात्** । न चाज्यपानित्येकेनैव दधिपोपलक्षणसिद्धेर्नोभयादर इति शङ्क्यम् । **पातव्यस्य** हविषोऽपि देवतावदनुष्ठेयाङ्गत्वेन स्मरणार्थ**मुपलक्षणीयत्वादिति** । ''यदि वसन्ते यजेत द्विपतृपणीयात् । सकृदभिघारयेत् । यदि प्रावृषि यजेत सकृदुपस्तृणीयात् । द्विरभिघारयेत्'' इति यागीयद्रव्यसंस्कार- भूतोपस्तरणाभिघारणसंस्कार्यत्वेन दध्नः श्रवणाद्दध्येव हविः । तच्च दधि उपस्तरणाद्यर्थाज्यमिश्रितं सचित्रेणाज्येन युक्तं भवतीति पृषत् चित्रमाज्यं यस्येति व्युत्पत्त्या ''पृषदाज्यं गृह्णाति'' इति प्रागुक्तवाक्ये दध्न एव ग्रहणं विधीयते । ग्रहणविधिशेषभूतं च ''द्वयं वा इदं सर्पिश्चैव दधि च वा'' इति वाक्यं श्रुत्यर्थतया नेयम् । ''पृषदाज्येनानूयाजान् यजति'' इति वाक्येन च दध्न एवोपस्तरणादिवाक्यप्राप्तं यागसाधनत्वमनूद्यत इति दध्न एव हविष्ट्वात् ''दधिपानावह'' इत्येवोहः कार्य इति **द्वितीयः** । पृषदाज्यस्य द्रव्यान्तरत्वान्नोभयं हविः । नापि दध्येव । आज्यमेव वा । अतः पृषदाज्यपानित्येवोहः कार्य इति **तृतीयः । सिद्धान्तस्तु,** ''पृषदाज्यं गृह्णाति'' इति वाक्यशेषे हि तुल्यवच्छ्रवणं न यागे । तत्र ''पृषदाज्येनानूयाजान् यजति'' इति पृषत्त्वगुणकस्याज्यस्यैव श्रुत्या विनियोगात् । अतस्तुल्यवच्छ्रवणमर्थवादमात्रम् । पृषन्मृग इत्यादौ पृषच्छब्दस्य चित्रवचनत्वेन प्रसिद्धेः । दध्नो ग्रहणन्त्वाज्यस्य पृषत्त्वार्थम् । न हविष्ट्वेन । अतो नोभयं

हविः । किन्त्वाज्यमेवेत्याज्यपानित्येवाविकारेण प्रयोग इति । तदाह सूत्रे, न वा स्याद्गुणशास्त्रत्वादिति । विकारो न स्यात् । पृषच्छब्दस्य गुणवाचित्वादित्यर्थः ।

इति सप्तविंशं चातुर्मास्येषु आज्यशब्दस्याविकारेणावाहनाधिकरणम् (सूत्राणि ५०-५९)

इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-
श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते दशमाध्यायस्य चतुर्थः पादः

अस्मिन् पादे अधिकरणानि २७ सूत्राणि ५९
आदितः अधिकरणानि ६९९ सूत्राणि २०१७

## दशमाध्यायस्य पञ्चमः पादः

### अथ प्रथममेकदेशग्रहणे प्राथमिकानामेव ग्रहणाधिकरणम् (सूत्राणि १-६)

**आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् ॥ १ ॥**

**(लिङ्गदर्शनाच्च ॥ २ ॥ विकल्पो वा समत्वात् ॥ ३ ॥ क्रमादुपजनोऽन्ते स्यात् ॥ ४ ॥ लिङ्गमविशिष्टं सङ्ख्याया हि तद्वचनम् ॥ ५ ॥ आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद्वचनादन्त्यविधिः स्यात् ॥ ६ ॥)**

पूर्वपादे प्रकृत्यपेक्षयाऽधिकधर्मोपदेशेऽभ्युच्चयश्चिन्तितः । अत्र पादे तत्प्रसङ्गात्प्राकृतधर्मैकदेशोपदेशे कस्य बाधः, कस्य नेति चिन्त्यत इति पूर्वानन्तर्यमस्य ध्येयम् । ''आग्नेयमष्टाकपालं निर्वपेत्'' इति प्रकृतावष्टकपालाः श्रुताः । विकृतिषु तु ''द्यावापृथिव्यमेककपालम्'' ''आश्विनं द्विकपालम्'' ''वैष्णवं त्रिकपालम्'' इत्येकादिकपालाः । तथा ''द्वादशाहेन प्रजाकामं याजयेत्'' इत्युक्तद्वादशाहप्रकृतिकाः ''द्विरात्रेण यजेत'' ''त्रिरात्रेण यजेत'' ''चतूरात्रेण यजेत'' इत्यादयो विकृतियागाः । तथा ''पञ्चदश सामिधेनीरनुब्रूयात्'' इति प्रकृतौ । विकृतौ तु महापितृयज्ञादौ ''एकां सामिधेनीमन्वाह'' ''तिस्रस्सामिधेनीरन्वाह'' इति । तत्र प्राकृतानां बहूनां कपालादिपदार्थानां मध्ये विकृतिष्वेकदेशग्रहणे कार्ये किमाद्यन्तमध्येष्वनियमेन यत्र क्वचित्स्थितस्यैकदेशस्य ग्रहणम्, उतादितः स्थितस्यैकदेशस्यैवेति **सन्देहे**, विशेषाग्रहणादनियम इति **प्राप्ते सिद्धान्तः**, प्रकृतौ हि कपालोपधानात्प्राचीनो यः पदार्थ उपवेशाख्यकाष्ठविशेषेणाङ्गारविशेषस्य स्थापनरूपस्तेन च तत्र ''ध्रुवमसि ।



द्यावापऽथिवीं दह'' इति मन्त्रेण स्थाप्यः प्रथमकपाल उपस्थाप्यते । तेन च द्वितीयः । तेन च तृतीय इत्येवं क्रमेणोपस्थितानां पदार्थानां तेनैव क्रमेण विकृतौ चोदकेन प्रापितत्वादिति तत एवैकदेशग्रहणम् । अवशिष्टैकदेशानान्तु विकृतिषु फलाभावान्निवृत्तिरिति । अयं न्यायो द्विरात्रादिषु सामिधेनीष्वपि ज्ञेयः । तदाह **सूत्रे**, आनुपूर्व्यवतां क्रमवतां पदार्थानामेकदेशग्रहणेष्वन्त्यलोपः स्यात् । आगमवत् यथा समाजेषु निविष्टेष्ववकाशाभावादागन्तुकानां निवृत्तिस्तद्वदिति । फलन्तु, यथाप्रकृत्यादितो ग्रहणं विकृताविति ।

इति प्रथममेकदेशग्रहणे प्राथमिकानामेव ग्रहणाधिकरणम् (सूत्राणि १-६)

### अथ द्वितीयमेकत्रिके आद्ये त्र्यृचे गानाधिकरणम् (सूत्राणि ७-९)

**एकत्रिके त्र्यृचादिषु माध्यन्दिने च्छन्दसां श्रुतिभूतत्वात् ॥ ७ ॥**

**(आदितो वा तन्न्यायत्वादितरस्याऽनुमानिकत्वात् ॥ ८ ॥ यथानिवेशश्च प्रकृतिवत्सङ्ख्यामात्रविकारत्वात् ॥ ९ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । एकत्रिकनामके कस्मिंश्चिद्विकृतियागे स्तोत्रसाधनभूता ऋच एकत्रिभेदेन श्रुताः ''अथैष एकत्रिकः । तस्यैकस्यां स्तोत्रीयायां बहिष्पवमानं स्तुवीत । तिसृषु होतुराज्यम् । एकस्यां मैत्रावरुणस्य । तिसृषु ब्राह्मणाच्छंसिनः । एकस्यामच्छावाकस्य । तिसृषु माध्यन्दिनः पवमानः'' इति । स्तोत्रीयायां स्तोत्रसाधनभूतायामृचि । आज्यमिति स्तोत्रनामः । तदग्रेऽप्यन्वेति । तिसृषु स्तोत्रीयास्वित्यन्वेति । एकस्यामित्यत्रापि स्तोत्रीयायामिति । तिसृषु माध्यन्दिनः पवमानः कार्य इति शेषः । प्रकृतौ सोमे माध्यन्दिन पवमानस्तोत्रे त्रयस्त्र्यृचाः स्तोत्रीयाः । आद्यो गायत्रीच्छन्दस्कः । द्वितीयो बृहतीच्छन्दस्कः तृतीयस्त्रिष्टुप्छन्दस्कः । तत्र विकृतावेकत्रिकयागे तिसृषु स्तोत्रीयास्वृक्षु प्रकृतित उपादातव्यतया प्राप्तासु किं प्राकृतानां त्रयाणां त्र्यृचानां या आद्या ऋचो भिन्नच्छन्दस्कास्ता उपादेयाः, उत गायत्रीरूपैकछन्दस्काः प्रथमऋचस्सर्वा एवोपादेया इति **सन्देहे**, यद्यपि प्रकृतावाद्यत्र्यृचस्यादौ पाठात्तत्र च ''उच्चा ते जातमन्धसः'' इत्याद्यानां गायत्र्यृचां प्रथममेवोपस्थिततया तया द्वितीयायास्तया च तृतीयाया ऋचः पाठक्रमात्क्रमेणोपस्थित्या प्रथमत्र्यृचगतानां तिसृणामेवैकछन्दस्कानां यथाप्रकृति चोदकप्रापितानामृचामुपादानं प्राप्तम्, तथापि प्रकृतावेव ''त्रिच्छन्दा आवापो माध्यन्दिनः पवमानः'' इति वचनेन त्रिच्छन्दस्कतोक्तेः पाठप्राप्तक्रमापेक्षया प्रबलवचनोक्तत्रिच्छन्दस्कत्वस्य प्रकृताविवेहापि चोदकप्राप्ततया तदनुग्रहाय त्रिषु त्र्यृचेषु आद्यास्तिस्रो ऋचस्त्रिच्छन्दस्का

उपादेयाः । एवञ्च पूर्वत्र पूर्वपदार्थोपस्थितोत्तरापरित्यागेऽप्यत्र तत्परित्यागो वचनबलाद्युक्त इति **प्राप्तम्**। तदाह **सूत्रे, एकत्रिकाख्ये** यागे **माध्यन्दिन** पवमानत्पृचानामादिष्वाद्यास्वृक्षु स्यात् । ''त्रिच्छन्दा आवापः'' इति त्रयाणां **छन्दसां श्रुतिभूतत्वात्** श्रुतिप्राप्तत्वादिति । **सिद्धान्तस्तु,** पाठकल्प्यक्रमस्याऽनुमानिकतया ततोऽपि वाचनिकस्य त्रिच्छन्दस्कत्वस्य श्रुतत्वेन बलवत्वेऽपीयं बलाबलचिन्ता प्रकृतावेव श्रुतिपाठरूपप्रमाणद्वयस्य प्रत्यक्षत्वाद्युक्ता । न तु विकृतौ । तस्यां प्राकृतोपकारमात्रातिदेशेन शास्त्रस्यानतिदेशान्नात्र बलाबलचिन्तावकाशः । प्रकृतौ चाविरोधात्पाठवचनरूपप्रमाण द्वयावगतमर्थद्वयमपि लब्धात्मकमेव । तादृशश्चेह चोदकतः प्राप्यत इति प्रागुक्तदिशा क्रमेण प्रथमोपस्थितप्रथमत्पृचगतास्वेकच्छन्दस्कास्वेवर्क्षु स्तुवीतेति । **फलं** व्यक्तम् ।

इति द्वितीयमेकत्रिके आद्ये त्पृचे गानाधिकरणम् (सूत्राणि ७-९)

## अथ तृतीयमेकस्यामृचि धूर्गानाधिकरणम् (सूत्रे १०-११)

**त्रिकी त्र्यृचे धूर्ये स्यात् ॥ १० ॥**

**(एकस्यां वा स्तोमस्याऽवृत्तिधर्मत्वात् ॥ ११ ॥)**

अत्रापि पूर्ववैषम्येण शङ्कनात्सङ्गतिः । एकत्रिकाख्यक्रतावेव व्यतिषङ्गेणैकस्यामृचि तिसृष्वृक्षु च यदा स्तोत्राणि क्रियन्ते तदा यानि तेषु स्तोत्रेषु प्रकृतौ धूर्नामकसामगान सम्पाद्यानि स्तोत्राणि तेषु स्तोत्रेषु यत्स्तोत्रं तिसृषु स्तोत्रीयास्वृक्षु धूर्नामकसामगानेन सम्पाद्यं तत्स्तोत्रं किं भिन्नभिन्नासु तिसृष्वृक्षु गानं कृत्वा सम्पाद्यं उतैकस्या एवर्चोऽभ्यासेन तिस्रः कृत्वा तत्र तिसृषु धूर्नामकसामगानं कृत्वा सम्पाद्यं स्तोत्रमिति **सन्देहे** ''एकं सामत्र्यृचे क्रियते स्तोत्रीय'' इति प्रकृति श्रुतत्र्यृचगानप्रापक-चोदकानुग्रहाय गानमात्रस्य त्र्यृचे कार्यतया धूर्गानमपि त्र्यृच एव कृत्वा स्तोत्रं सम्पाद्यमिति प्राप्तम् । तदाह **सूत्रे, धूर्ये** धूर्गानसम्पाद्ये स्तोत्रे **त्रिकी** तिसृषु कार्या गीति **स्त्र्यृचे**ऋक्त्रये **स्यादिति** । **सिद्धान्तस्तु,** ''आवृत्तं धूर्षु स्तुवते'' इतिवचनेन स्तोत्रावृत्तिरुच्यते । स्तोत्रञ्च गुणिनिष्ठगुणा-भिधानम् । तथा च गुणाभिधानरूपस्तोत्रस्यावृत्ती ऋगावृत्तावेव भवति । ऋग्भेदे तु गुणोक्ते-र्भिन्नाभिन्नत्वेन स्तोत्रावृत्तिर्न स्यात् । तस्मादभ्यासेन ऋक्त्रयं सम्पाद्य तत्र धूर्गानं कृत्वा स्तोत्रावृत्तिः कार्या । न च ''आवृत्तं धूर्षु'' इति वचनमृक्त्रये सामावृत्तिमात्रपरमिति शक्यम् । ''स्तुवते'' इति स्तोत्रस्यैवावृत्तिश्रवणादिति ।

इति तृतीयमेकस्यामृचि धूर्गानाधिकरणम् (सूत्रे १०-११)



## अथ तुरीयं द्विरात्रादिषु दशरात्रस्य विध्यन्तानुष्ठानाधिकरणम् (सूत्रे १२-१३)

**चोदनासु त्वपूर्वत्वाल्लिङ्गेन नियमः स्यात् ॥ १२ ॥**

**(प्राप्तिस्तु रात्रिशब्दसम्बन्धात् ॥ १३ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ''द्विरात्रेण यजेत'' ''त्रिरात्रेण यजेत'' इत्यादिद्विरात्राद्यहर्गणेषु क्रत्वात्मकद्वादशाहविध्यन्त इत्यष्टमाद्यपादे **'गणेषु द्वादशाहस्य''** इति दशमाधिकरणे स्थितम् । तत्र किं द्विरात्रादिषु द्वादशाहस्याद्याद्यहर्विध्यन्तः प्रवर्तनीयः, किं वा प्रायणीयोदयनीयसञ्ज्ञकाद्यन्ताहनी विहाय द्वितीयाहरादिदशमाहरान्तमध्यमदशरात्रविध्यन्त इति **सन्देहे**, यथा पूर्वत्रैकत्रिके क्रतौ प्राकृत-गायत्रबार्हतत्रैष्टुभाख्यत्पृचत्रये चोदकादित्र्यृचस्य प्राप्तिस्तथा द्विरात्रादावपि द्वादशाहिकेष्वहस्स्वाद्या-द्यहर्विध्यन्त एव स्यात् । आद्यन्तौ वर्जयित्वेत्यत्र नियामकाभावादिति **प्राप्ते सिद्धान्तः,** आद्यन्तावहनी वर्जयित्वा मध्यमदशरात्रविध्यन्तस्यैव द्विरात्रादिषु प्रवृत्तिः । द्विरात्रप्रकरणे ह्येवं श्रूयते ''द्विरात्रस्य प्रथममहो द्वादशाहस्य द्वितीयं गायत्रमहः । यच्च द्विरात्रस्य द्वितीयमहस्तद्द्वादशाहस्य त्रैष्टुभं तृतीयमहः । द्वादशाहस्य जागतं चतुर्थमहरन्तर्यन्ति'' इति । अन्तर्यन्ति परित्यजन्तीत्यर्थः । यदि प्रायणीयमारभ्य द्विरात्रादौ प्रवृत्तिः स्यात्तदा द्विरात्रे द्वादशाहिकस्य त्रैष्टुभस्याह्न एव परित्यागः स्यात् । तथा च ''जगतीमन्तर्यन्ति'' इत्यसमञ्जसं स्यात् । द्वादशाहिकद्वितीयाहरादिविध्यन्तप्रवृत्तौ जागतस्यैव त्यागापत्त्या त्रैष्टुभस्य त्यागानापत्तेरिति । तदाह **सूत्रे, चोदनासु** ''द्विरात्रेण यजेत'' इत्याद्यासु चोदनासु प्रायणीयोदयनीययोर**पूर्वत्वा**त्पूर्वत्वाभावात्प्रकृतित्वासम्भवादिति यावत् । **लिङ्गेन** द्विरात्राद्यह्नां द्वितीयत्वोक्तिरूपलिङ्गेन दशरात्रविध्यन्त**नियमः स्या**दिति । **फलं** व्यक्तम् ।

इति तुरीयं द्विरात्रादिषु दशरात्रस्य विध्यन्तानुष्ठानाधिकरणम् (सूत्रे १२-१३)

## अथ पञ्चमं ''सप्तभिराधुनोति'' इत्यनेनाग्नौ धूननाद्यर्थानां मन्त्राणामनियमेनोपादानाधिकरणम् (सूत्रं १४)

**अपूर्वासु तु सङ्ख्यासु विकल्पस्स्यात्सर्वासामर्थवत्वात् ॥ १४ ॥**

आदितः प्राकृतानां कपालादीनामेकदेशश्रवर्णेविचारिते प्रसङ्गादत्र वैकृतानामप्येकदेशग्रहणं चिन्त्यत इति **सङ्गतिः** । अग्निचयनप्रकरणे ''केशानां त्वात्मन्नाधूनोमि'' इत्यादयोऽनेके मन्त्राः पठिताः । तत्रैवावपनार्था ''या जाता ओषधयः'' इत्यादयो विंशतिमन्त्राः श्रुताः । प्रयोगकाले तु

''सप्तभिराधूनोति । चतुर्दशभिर्वपति'' इति तदेकदेशग्रहणं श्रुतम् । तत्र किमादितः सप्त चतुर्दश मन्त्रा ग्राह्याः, उतादितो मध्यतोऽन्ततो वेत्यनियम इति सन्देहे, **आनुपूर्व्यवतामेकदेशग्रहणेषु**, इति प्रथमाधिकरणोक्तन्येयेन प्राकृतानां कपालादीनामिव प्रकरणपठितानामप्येकदेशग्रहणे क्रमानुग्रहार्थमादित एवोपादानमिति **प्राप्ते सिद्धान्तः**, युक्तमुपदिष्टानां कपालादीनामादितो ग्रहणम् । अवशिष्टानां प्रकृतावर्थवत्वात् । वैकृतानां त्वादितो ग्रहणे सङ्ख्याश्रुत्या कतिपयानां ग्राह्यतयाऽवशिष्टानामानर्थक्यमुत्कर्षो वा स्यात् । तच्चोभयमप्ययुक्तम् । बलवता प्रकरणेन सर्वेषां क्रत्वर्थत्वावगमेन प्रकरणबाधायोगात् । पाठक्रमस्वीकारेण प्रकरणबाधेऽवशिष्टमन्त्ररूपपदार्थानां बाधः । प्रकरणानुग्रहे तु पदार्थगुणभूतक्रममात्रबाधेन प्रधानपदार्थाबाध इत्यादितो मध्यतोऽन्ततो वेति विकल्प इति । तदाह **सूत्रे, अपूर्वास्वप्रकृतिपूर्वासु** सङ्ख्यासु **विकल्पः स्यात्** आदितो मध्यतोऽन्ततो वेत्यनियतिः । कुतः ? **सर्वासामर्थवत्वादिति** फलं व्यक्तम् ।

इति पञ्चमं 'सप्तभिराधूनोति' इत्यनेनाग्नौ धूननाद्यर्थानां मन्त्राणामनियमेनोपादानाधिकरणम् (सूत्रं १४)

अथ षष्ठं विवृद्धस्तोमकेऽप्राकृतानां साम्नामागमाधिकरणम् (सूत्राणि १५-२५)

**स्तोमविवृद्धौ प्राकृतानामभ्यासेन सङ्ख्यापूरणमविकारात्सङ्ख्यायां गुणशब्दत्वादन्यस्य चाश्रुतत्वात् ॥ १५ ॥**

**(आगमेन वाऽभ्यासस्याश्रुतित्वात् ॥ १६ ॥ सङ्ख्यायाश्च पृथक्त्वनिवेशात् ॥ १७ ॥ पराक्छब्दत्वात् ॥ १८ ॥ उक्ताविकाराच्च ॥ १९ ॥ अश्रुतित्वान्नेति चेत् ॥ २० ॥ स्यादर्थचोदितानां परिमाणशास्त्रम् ॥ २१ ॥ आवापवचनञ्चाभ्यासे नोपपद्यते ॥ २२ ॥ साम्नाञ्चोत्पत्तिसामर्थ्यात् ॥ २३ ॥ धुर्येष्वपीति चेत् ॥ २४ ॥ नावृत्तिधर्मत्वात् । ॥ २५ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ''एकविंशेनातिरात्रेण स्तुवीत'' इत्यादिषु विवृद्धस्तोमकक्रतुषु किं प्राकृतानां स्तोमानामभ्यासेन विवृद्धिः, उतान्यतोऽप्राकृतानामागमेनेति सन्देहः । स्तोमो नाम सामोपेतमन्त्रः । **पूर्वपक्षस्तु**, पूर्वत्र यथाऽनियमेन तावत्सङ्ख्योपादानेऽपि ''सप्तभिः'' इत्यादिसङ्ख्याश्रुत्युपपत्तेर्नादित उपदाननियमस्तथात्रापि स्तोमान्तराणामश्रवणेन धर्मिकल्पनातो वरं धर्मकल्पनेति प्राकृतानामेव स्तोमानां चोदकप्राप्तानामभ्यासेनैव सङ्ख्यापूरणेऽपि ''एकविंशेन'' इति सङ्ख्याश्रुत्युपपत्तेर्नापूर्वागम इति । तदाह सूत्रे, स्तोमविवृद्धौ प्राकृतानामेवाभ्यासेन सङ्ख्यापूरणं स्यात् ।





**अविकारात्तेषामेव चोदकतस्सन्निधानात् । सङ्ख्यायाश्च गुणशब्दत्वात्** । गुणानुरोधेन प्रधानान्तरागमायोगात् । **अन्यस्य स्तोमान्तरस्य चाश्रुतत्वादिति** । **सिद्धान्तस्तु**, एकविंशत्यादिसङ्ख्या हि भेदसमानाधिकरणा । सा च सङ्ख्येयानां भेद एव युक्ता । न त्वेकस्यैवावृत्त्या । तथा च स्तोत्रगता सङ्ख्या तत्साधनानां स्तोत्रीयाणां भेदसिध्यर्थं स्तोत्रीयाणामागममाक्षिपतीत्यागमेनैव सङ्ख्यापूरणम् । तत्र च स्तोत्रीययो ऋक्सामयोर्मध्ये न ऋगागमः । ''त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च । अत्र ह्येवावपन्ति । अत एवोद्वपन्ति'' इति गायत्रादिऋक्ष्वेवावापादिनियमोक्ते ऋक्षु ऋगन्तरावापादेरयोगात्साम्नामेवागमेन सङ्ख्यापूरणम् । किञ्च ''साम्ना स्तुवीत'' इति साम्नामेव स्तोत्रसाधनत्वं श्रौतम् । साम्नः स्तुतिसाधनत्वञ्च गुणाभिधानरूपस्तुतिसमर्थऋगक्षराभिव्यञ्जकत्वमिति ऋचां स्तोत्रसाधनत्वमाक्षिप्तम् । न श्रौतमिति साम्नामेवागम इति ।

इति षष्ठं विवृद्धस्तोमकेऽप्राकृतानां साम्नामागमाधिकरणम् (सूत्राणि १५-२५)

अथ सप्तमं बहिष्पवमाने ऋगागमाधिकरणम् (सूत्रं २६)

**बहिष्पवमाने त्वृगागमस्सामैकत्वात् ॥ २६ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । पूर्वोक्तविवृद्धस्तोमकक्रतुषु सामागमेन सङ्ख्यापूरणमित्युक्तम् । बहिष्पवमानस्तोत्रे तु किमभ्यासेन सङ्ख्यापूरणम्, उतान्यागमेनेति **सन्देहे**, पूर्वाधिकरणपूर्वपक्षवदेव चोदकप्राप्तप्राकृतस्तोमानामभ्यासेनैव सङ्ख्यापूरणम् । ''पराग्बहिष्पवमानेन स्तुवीत'' इति वचनगतः ''पराक्शब्दः'' पराञ्चमुक्थ्यात् इत्यत्रेव दिग्वचनः । न त्वनभ्यासवचन इति **प्राप्ते** ''पराचीस्सामिधेनीरन्वाह'' इत्यत्रेव पराऽशब्दोनाभ्यासेन बहिष्पवमानेनेत्यर्थपरो न दिग्वचनः । उक्थ्यादितीहावध्यनिर्देशात् । अतोऽन्यागमेनैव पूर्वन्यायेन सङ्ख्यापूरणं, न त्वभ्यासेन । ''पराक्'' इत्यभ्यासनिषेधात् । अन्यागमश्च पूर्वन्यायेन साम्नामिति **प्राप्ते सिद्धान्तः**, ''सर्वस्वारमेव गमयति'' इति वचनेन बहिष्पवमाने साम्न एकत्वेन सामान्तरागमायोगात्तदभ्यासस्य च पराक्पदेन निषेधादृगागमेनैव सङ्ख्यापूरणं बहिष्पवमान इति । तदाह **सूत्रे, बहिष्पवमान** इत्यदि । व्यक्त **सूत्रार्थः** । **यत्तु शास्त्रदीपिकायां** किं सामागमः, उतर्गागम इति **संशये**, पूर्वन्यायेन सामागमे **प्राप्ते** सामैकत्ववचनादृगागम इति पूर्वोत्तरपक्षकरणम् । **तच्चिन्त्यम्** । सामैकत्वादिवचने जाग्रति कथमेवं संशयः पूर्वोत्तरपक्षोत्थितिः । अत उक्तरीत्यैव संशयपूर्वोत्तरपक्षा वाच्या इत्याहुः ।

इति सप्तमं बहिष्पवमाने ऋगागमाधिकरणम् (सूत्रं २६)

**अथाष्टमं सामिधेनीष्ववशिष्टानामागमेन सङ्ख्यापूरणाधिकरणम् (सूत्राणि २७-३३)**

**अभ्यासेन तु सङ्ख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् ॥ २७ ॥**

**(अविशेषान्नेति चेत् ॥ २८ ॥ स्यात्तद्धर्मत्वात्प्रकृतिवदभ्यस्येताऽसङ्ख्या पूरणात् ॥ २९ ॥ यावदुक्तं वा कृतपरिमाणत्वात् ॥ ३० ॥ अधिकानाश्च दर्शनात् ॥ ३१ ॥ कर्मस्वपीति चेत् ॥ ३२ ॥ न चोदितत्वात् ॥ ३३ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । पर्शपूर्णमासयोः ''पञ्चदश सामिधेनीरनुब्रूयात्'' इति विधायैकादशर्चः क्रत्वर्थाः पठिताः । तर्हि कथं पञ्चदशत्वसङ्ख्यानिर्वाह इत्यपेक्षायां ''त्रिः प्रथमामन्वाह । त्रिरुत्तमाम् । पञ्चदश सम्पद्यन्ते'' इति पठितम् । तत्रैव ''एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य'' इत्यादिना काम्यसामिधेनीविवृद्धिः श्रूयते । काम्याश्च नित्यविकृतयः । तत्र किं प्राकृतीभ्य एकादशभ्योऽधिकानामागमः, उत प्रथमोत्तमयोरभ्यासेन सङ्ख्यापूरणम्, किं वा यथाप्रकृति प्रथमोत्तमयोस्त्रिस्त्रिरभ्यासोऽवशिष्टानां षण्णामागमेन सङ्ख्यापूरणमिति त्रेधा **सन्देहे**, **''स्तोमविवृद्धौ''** इत्यत्रोक्तदिशा एकविंशत्वसङ्ख्याया भिन्नाधिकरणनिवेशिन्याः सामञ्जस्यायान्यासामागमेनैव पूर्वत्रेव बहिष्पवमाने ऋगन्तरागमेनैव सङ्ख्यापूरणमित्याद्यः **पूर्वपक्षः** । प्रकृतौ हि ''त्रिः प्रथमाम् । त्रिरुत्तमाम्'' इति श्रुतवचनस्य यावत्कृत्वः प्रथमोत्तमयोरभ्यासेऽपेक्षितसङ्ख्यापूर्तिस्तावत्कृत्वः प्रथमोत्तमयोरभ्यासः कार्य इत्येवार्थः । तथात्वेऽत्रापेक्षितविधानां न त्रित्वेऽपि तत्र तात्पर्यम् । तस्यानपेक्षितत्वात् । तथा च विकृतौ विवृद्धिस्थलेऽपि यावता सङ्ख्यापूरणं तावत्कृत्वा आद्यन्तयोरभ्यासेन सङ्ख्यापूणम्, पूर्वत्र बहिष्पवमानान्यस्तोत्रेष्विवेति **द्वितीयः** । तदाह **सूत्रे**, विकृतावभ्यासेन **सङ्ख्यापूरणम्** । कुतः? **अभ्यासप्रकृतित्वादभ्यासपूरितसङ्ख्याकसामिधेनीप्रकृतिकत्वादिति** । **सिद्धान्तस्तु**, यदि प्रकृतौ ''त्रिः प्रथमाम्'' इत्यत्र त्रित्वे न तात्पर्यम् । किन्तु यावत्कृत्वा इत्यत्र । एवं तर्हि प्रथमाया द्विरुत्तमायाश्चतुरभ्यासेऽपि सङ्ख्यापूर्त्यापत्तेस्त्रित्वेऽप्यस्ति तात्पर्यमिति यथाप्रकृत्याद्यन्तयोस्त्रिरभ्यासेनान्यासामागमेन सङ्ख्यापूरणमिति । तदाह, **यावदुक्तं वाऽत्र कृतपरिमाणत्वादिति सूत्रे** ।

**इत्यष्टमं सामिधेनीष्ववशिष्टानामागमेन सङ्ख्यापूरणाधिकरणम् (सूत्राणि २७-३३)**

**अथ नवमं षोडशिनां प्राकृतत्वाधिकरणम् (सूत्राणि ३४-४१)**

**षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥ ३४ ॥**



**(प्रकृतौ चाभावदर्शनात् ॥ ३५ ॥ अयज्ञवचनाच्च ॥ ३६ ॥ प्रकृतौ वा शिष्टत्वात् ॥ ३७ ॥ प्रकृतिदर्शनाच्च ॥ ३८ ॥ आम्नातं परिसङ्ख्यार्थम् ॥ ३९ ॥ उक्तमभावदर्शनम् ॥ ४० ॥ गुणादयज्ञत्वम् ॥ ४१ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ज्योतिष्टोमे ऐन्द्रवायवादिग्रहेषु षोडशिनामकः कश्चन ग्रहः''य एवं विद्वान् षोडशिनं गृह्णाति'' इति श्रवणात् । स च षोडशिग्रहः ''षोडशिना वीर्यकामस्स्तुवीत'' इति वाक्येन फलार्थोऽपि ''अग्निष्टोमे राजन्यस्य गृह्णीयात् । अप्युक्थ्ये ग्राह्यः । अतिरात्रे ब्राह्मणस्य । उत्तरेऽहनि द्विरात्रस्य गृह्यते । मध्यमेऽहनि त्रिरात्रस्य । चतुर्थेऽहन्यहीनस्य गृह्यते'' इति वाक्येन क्रत्वर्थोऽप्यवसीयते । तत्र क्रत्वर्थः षोडशी किं ज्योतिष्टोमप्रकृतावेव निविशते, अथ विकृतावुत्कृष्यत इति **सन्देहे**, यथा ज्योतिष्टोमप्रकरणगतमपि ''द्वादशाहीनस्य'' इति वाक्योक्तं द्वादशोपसत्वं प्रकरणं बाधित्वा वाक्येनोत्कृष्यते, तथाऽत्रापि ''उत्तरेऽहनि द्विरात्रस्य'' इत्यादिवाक्यैर्विकृतिसम्बन्धावगमाद्वाक्येन प्रकरणबाधया विकृतिषूत्कर्षः । न च ''अग्निष्टोमे राजन्यस्य गृह्णीयात्'' इति प्रकृत्यर्थत्वमप्यवगम्यत इति शङ्क्यम् । द्विरात्रादिविकृतिप्रायपाठेनाग्निष्टोमपदस्य विकृत्यग्निष्टोमपरत्वात् । अन्यथा प्रकृत्यर्थत्वे चोदकत एव विकृतिषु षोडशिनः प्राप्तेः ''उत्तरेऽहनि'' इत्यादिपुनर्वचनमनर्थकं स्यात् । एवञ्च पूर्वत्र त्रिरभ्यासस्य प्रकृतिविकृत्युभयान्वयित्वेऽपि षोडशिनो विकृतिमात्रान्वयित्वमिति **प्राप्तम्** । तदाह **सूत्रे**, **षोडशिनो वैकृतत्वं** विकृत्यर्थत्वमेव । **तत्रैवोत्तरेऽहनीति कार्त्स्न्येन विधानादिति** । **सिद्धान्तस्तु**, ज्योतिष्टोमप्रकरणपठितैरग्निष्टोमादिपदैः प्रकरणाद्बुद्धौ विपरिवर्तमानानां प्रकृत्यग्निष्टोमादीनामेवाभिधानं युक्तम् । न तु विकृत्यभिधानम् । द्वादशोपसत्तायास्तु द्वादशाहीनस्ये त्यहीनसंयुक्ततयैवोत्पन्नाया वाक्येन प्रकरणादुत्कर्षेऽपि विकृत्यसंयुक्ततया ''एवं विद्वान्'' इति वाक्येनोत्पन्नस्य षोडशिनः ''उत्तरेऽहनि द्विरात्रस्य'' इति वाक्येन विकृत्यर्थत्वेऽपि ''अग्निष्टोमे राजन्यस्य'' इत्यादिवाक्येन प्रकृत्यर्थतापि सम्भवतीति न प्रकरणादत्कर्षः । न चैवं प्रकृत्यर्थत्वे चोदकेनैव विकृतौ प्राप्तेः ''उत्तरेऽहनि'' इत्यादिना विकृत्यर्थतया पुनर्विधानं व्यर्थमिति शङ्क्यम् । प्रकृतौ राजन्यादिनिमित्तेन विहितः षोडशी विकृतिष्वपि निमित्ते सत्येवातिदिश्येत । तन्मा भूत् । निमित्ताभावेऽपि यथा स्यादेवमर्थत्वादिति । तन्त्ररत्ने तु अतिरात्रे विकल्पितस्य षोडशिनोऽतिरात्रसंस्थेषु द्विरात्राद्युत्तराहस्सु विकल्पेनैव प्राप्तौ तन्नियमार्थानि पुनर्वचनानीत्युक्तम् । **शास्त्रदीपिकायां** तु विकृतिष्वनिमित्तेनैको विधीयत इत्युक्तम् । तत्कथमिति विचार्यम् ।

**इति नवमं षोडशिनां प्राकृतत्वाधिकरणम् (सूत्राणि ३४-४१)**

### अथ दशममाग्रयणादेव षोडशिग्रहणाधिकरणम् (सूत्राणि ४२-४८)

**तस्याऽग्रयणाद्ग्रहणम् ॥ ४२ ॥**

**(उक्थ्याच्च वचनात् ॥ ४३ ॥ तृतीयसवने वचनात्स्यात् ॥ ४४ ॥ अनभ्यासे पराक्छब्दस्य तादर्थ्यात् ॥ ४५ ॥ उक्थ्यविच्छेदवचनत्वात् ॥ ४६ ॥ आग्रयणाद्वा पराक्छब्दस्य देशवाचित्वात्पुनराधेयवत् ॥ ४७ ॥ विच्छेदस्स्तोमसामान्यात् ॥ ४८ ॥)**

प्रसङ्गिकी सङ्गतिः । ''य एवं विद्वान् षोडशिनं गृह्णाति'' इति वाक्योक्तः षोडशिग्रहः किमाग्रयण पात्रादुक्थ्यपात्राच्च ग्राह्यः, उताऽग्रयणादेवेति **सन्देहे**, ''आग्रयणाद्गृह्णाति'' ''उक्थ्याच्च निगृह्णाति'' इति वाक्यद्वयाद्विकल्पेन समुच्चयेन वा द्वाभ्यां ग्रहणमिति **तस्याऽग्रयणाद्ग्रहणम्, उक्थ्याच्च वचनादिति** सूत्राभ्यामपर्यवसितं पूर्वपक्षं स्थापयित्वा **अनभ्यासे पराक्छब्दस्य तादर्थ्यात्** इति **उक्थ्यविच्छेदवचनत्वात्** इति च सूत्राभ्यामवशिष्टपूर्वपक्षं **आग्रयणाद्वा पराक्छब्दस्य देशवाचित्वात्** इति सूत्रेण सिद्धान्तं च करिष्यन् मध्ये 'तृतीयसवने वचनात्स्यात् इति सूत्रेण प्रसङ्गाच्चिन्तान्तरं प्रस्तूयते । षोडशी किं सवनत्रये ग्राह्यः, उत तृतीयसवन एवेति सन्देहे ''प्रातस्सवने गृह्णाति'' ''माध्यन्दिने गृह्णाति'' इति सवनत्रयेऽपि श्रवणात्प्रतिसवनं ग्राह्य इति **प्राप्ते सिद्धान्तः**, स षोडशी तृतीयसवने स्यात् । ''तृतीयसवने आग्रयणाद्गृह्णाति षोडशिनम्'' इति वचनात् । ''प्रातस्सवने गृह्णाति'' इत्यादिवचनन्तु ''यत्प्रातस्सवने गृह्णीयाद्वज्रो वै षोडशी'' इत्यादिना सवनद्वये निन्दितत्वात् ''तृतीयसवने गृह्यते'' इति श्रवणात्तृतीयसवन एव ग्रहणस्य स्तुत्यर्थत्वेन तदेकवाक्यतयोपपन्नमिति । ''यत्प्रातस्सवने'' इत्यादि समस्तवाक्यं भाष्ये व्यक्तम् । प्राक्स्थापितपूर्वपक्षशेष उच्यते । यदुक्तं प्रागाग्रयणादुक्थ्याच्च पात्रद्वयाद्ग्राह्यमिति, तत्र ''पराञ्चमुक्थ्याद्गृह्णाति'' इति शाखान्तरे उक्थ्यात्पराञ्चमित्युक्थ्यपरभागे षोडशिग्रहणश्रवणेनोक्थ्यपात्राद्ग्रहणमयुक्तमिति शङ्कायां, तत्र पराक्छब्दो न दिग्वाची । किन्तु ''पराचीस्सामिधेनीरन्वाह'' इत्यत्रेवानभ्यासवचनः । तथा च ''उक्थ्याद्गृह्णाति'' इत्यनभ्यासेनेत्यर्थो न तूक्थ्यात्पराग्भागेनेति । तस्मादुभाभ्यामेव ग्रहणमित्येवेति **प्राप्ते सिद्धान्तः**, शाखान्तरवाक्ये पराक्छब्दस्यानभ्यासवचनत्वे च तस्य वैयर्थ्यम् । अनभ्यासे प्राप्त्यभावात् । तस्माद्दिक्छब्दस्सन् कालवचनः । तन्निमित्ता चेयमुक्थ्यादिति पञ्चमी । नापादाननिमित्ता ''उक्थ्यादूर्ध्वकाले षोडशिनं गृह्णाति'' इति । तत्समानार्थत्वात् ''उक्थ्याद्गृह्णाति'' इत्यपि नापादानपञ्चमीत्याग्रयणादेव ग्रहणमिति न विकल्पसमुच्चयौ ।

इति दशममाग्रयणादेव षोडशिग्रहणाधिकरणम् (सूत्राणि ४२-४८)



### अथैकादशं षोडशिग्रहस्य सस्तोत्रशस्त्रताधिकरणम् (सूत्राणि ४९-५२)

**उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति हि संस्थान्यत्वम् ॥ ४९ ॥**

**(सस्तुतशस्त्रो वा तदङ्गत्वात् ॥ ५० ॥ लिङ्गदर्शनाच्च ॥ ५१ ॥ वचनात्संस्थान्यत्वम् ॥ ५२ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ''अथाग्निष्टोमे राजन्यस्य गृह्णीयत् । अप्युक्थ्ये ग्राह्यः'' इति वाक्येनाग्निष्टोम उक्थ्ये च यदा षाडशी गृह्यते, तदा स किमस्तुतशस्त्रको ग्राह्यः, उत सस्तुतशस्त्रक इति **संशयः । पूर्वपक्षस्तु**, अग्निष्टोमसंस्थाकतयोक्थ्यसंस्थाकतया चाग्निष्टोमनामके उक्थ्यनामके च क्रतौ यः षोडशिग्रहस्तस्य सस्तुतशस्त्रत्वे षोडशिस्तोत्रेणैव समाप्त्यापत्त्या षोडशिस्तोत्रसंस्थ एव स्यात् । नाग्निष्टोमसंस्थः नोक्थ्यसंस्थश्च । अग्निष्टोमे उक्थ्ये इति निर्देश एव न स्यात् । संस्थानिमित्तकत्वादग्निष्टोमादिनाम्नः । अतोऽग्निष्टोम इत्यादिनामनिर्देशभङ्गभिया षोडशिग्रहे पूर्वत्र विकल्पसमुच्चययोरिवेह स्तुतशस्त्रयोर्बाध इति । तदाह **सूत्रे, उक्थ्याग्निष्टोमसंयोगा**दुक्थ्याग्निष्टोमनामकक्रतुसंयोगाच्छोडशी ग्रहो**ऽस्तुतशस्त्रः स्यात् सति** स्तोत्रे शस्त्रे च संस्थावश्यम्भावादिति । **सिद्धान्तस्तु**, ''एकविंशं स्तोत्रं भवति प्रतिष्ठित्यै'' इति प्रत्यक्षवचनात्सस्तुतशस्त्र एव षोडशीसंस्थान्यतापत्त्या नामान्तरता तु वचनबलत्सह्यैव । तथा चाग्निष्टोमे इति वचनस्यायमर्थः । राजन्यस्य प्राप्तौ अग्निष्टोम उक्थ्यश्च षोडशी कार्य इति । फलं व्यक्तम् ।

इत्येकादशं षोडशिग्रहस्य सस्तोत्रशस्त्रताधिकरणम् (सूत्राणि ४९-५२)

### अथ द्वादशमङ्गिरसां द्विरात्रे षोडशिनः परिसङ्ख्याधिकरणम् (सूत्रे ५३-५४)

**अभावादतिरात्रेषु गृह्यते ॥ ५३ ॥**

**(अन्वयो वाऽनारभ्यविधानात् ॥ ५४ ॥)**

प्रासङ्गिकी **सङ्गतिः** । सन्ति बहवो द्विरात्राः । तेषां मध्ये अङ्गिरसां द्विरात्रे श्रूयते ''वैखानसं पूर्वेऽहन् साम भवति । षोडश्युत्तरे'' इति । तत्र द्वितीयेऽहन्यप्राप्तः षोडशी विधीयते, अथ प्राप्तस्य परिसङ्ख्या वेति **सन्देहे**, प्राप्तौ हि परिसङ्ख्या । प्राप्तिश्चात्रातिरात्रसंस्थाके द्विरात्रे चोदकतो वा ''उत्तरेऽहन् द्विरात्रस्य गृह्यते'' इति पूर्वोक्तोदाहृतवाक्येन वा । नाद्यः । चोदकप्राप्तेरानुमानिकत्वेन ततः प्रागेव शीघ्रं ''षोडश्युत्तरे'' इति प्रत्यक्षवचनेन षोडशिग्रहस्य विधानात् । अस्तु वा प्राप्ति-

स्तथाऽप्यतिरात्रे प्रकृतिभूते षोडशिनो विकल्पितत्वेनात्रापि विकल्पेन प्राप्तौ नित्यार्थं विधिर्भविष्यति । न द्वितीयः । ''उत्तरेऽहनि द्विरात्रस्य'' इति वाक्यस्यानारभ्यविधेस्सामान्यविषयत्वेन मन्थरप्रवृत्तिकत्वेन ततः प्रागेव प्राकरणिकेन ''षोडश्युत्तरे'' इति वाक्येन द्विरात्रविशेषेऽस्मिन् षोडशिनो विधानात् । तस्मादप्राप्तविधिरिति **प्राप्तम्** । तदाह **सूत्रे,** अङ्गिरसां द्विरात्रे मन्थरप्रवृत्तिभ्यां चोदकानारभ्यविधिभ्यां षोडशिप्राप्तेरभावादप्राप्तविधानं ''षोडश्युत्तरे'' इति वचनम् । न परिसङ्ख्यार्थम् । अतोऽनारभ्यविधिना निर्विघ्नं विहितः षोडशी **द्विरात्रान्तरातिरात्रेषु गृह्यत इति** । **सिद्धान्तस्तु** अनारभ्यविधौ ''उत्तरेऽहनि द्विरात्रस्य'' इति द्विरात्रसामान्यस्य प्रतिपदोक्ततया वाक्येनैव षोडशिनो द्विरात्रसामान्यसम्बन्ध इत्यङ्गिरसां द्विरात्रेऽपि तत्सम्बन्धस्तेनैव वाक्येन शीघ्रमेव प्राप्नोति । ''षोडश्युत्तरे'' इत्यत्र तु द्विरात्रसामान्यमपि न श्रुतम् । सुतरां तद्विशेष इति । प्रकरणं वाक्याद्दुर्बलमिति ''उत्तरेऽहन् द्विरात्रस्य'' इति वाक्येन प्राप्तत्वान्नाप्राप्तविधानम् । चोदकतो विकल्पेन तत्प्राप्तेरनारभ्यविधिना निवर्तितत्वात्तेनैव नित्यतया प्राप्तस्य ''षोडश्युत्तरे'' इति पुनर्वचनं त्वङ्गिरसां द्विरात्र एवोत्तरेऽहनि षोडशी नियमेन ग्राह्यः । नान्यत्रेति परिसङ्ख्यार्थतया । फलं त्वङ्गिरसां द्विरात्र एव नियमेन षोडशिनो ग्रहणम् । द्विरात्रान्तरेषु यथाप्रकृति विकल्प इति ।

**एतच्च वृत्तिकारोक्तमधिकरणशरीरमयुक्तमित्युपेक्ष्य भाष्यकारो**ऽन्यथाऽधिकरणशरीरमाह । तथा हि ''वैखानसं पूर्वेऽहन् साम भवति । षोडश्युत्तरे'' इति वाक्यं परिसङ्ख्यार्थम्, उत वैखानससामविधि स्तुत्यर्थमिति **सन्देहे,** ''उत्तरेऽहनि द्विरात्रस्य गृह्यते'' इति वचनेन चोदकतो वैकल्पिकप्राप्तिमपोह्य द्विरात्रमात्रे नियमेन षोडशिनः प्रापितत्वेनोक्तदिशा परिसङ्ख्यार्थमिति पूर्वसिद्धान्तं पूर्वपक्षयित्वा परिसङ्ख्यायाः प्रतीतार्थत्यागाप्रतीतार्थग्रहण प्राप्तबाधरूपत्रिदोषत्वान्नपरिसङ्ख्यार्थम् । किन्तु वैखानस सामविधिस्तुत्यर्थतया तच्छेषभूतमिति **सिद्धान्तः इति** । **फलन्तु,** ''उत्तरेऽहनि द्विरात्रस्य गृह्यते'' इत्यनारभ्यविधिना द्विरात्रमात्रे नियमेन षोडशिनः प्रापणात्सर्वत्राविकल्पेनैवानुष्ठानमिति । **एतदप्युक्तम्** । अनारभ्यविधानस्य पूर्ववाक्यप्राप्तराजन्यादिनिमित्तनिवृत्तयेऽनैमित्तिकार्थत्वेनोपपत्तेरसन्निहित-विकल्पनिवृत्यर्थत्वायोगात् ''षोडश्युत्तरे'' इति वाक्यमेवाङ्गिरसां द्विरात्रे नियमविध्यर्थतया सार्थकं सन्न निरर्थकस्तुत्यर्थतयाऽन्यशेषत्वेन नेतव्यमित्याहुः ।

**इति द्वादशमङ्गिरसां द्विरात्रे षोडशिनः परिसङ्ख्याधिकरणम् (सूत्रे ५३-५४)**

## अथ त्रयोदशं नानाहीनेषु चतुर्थे दिने षोडशिग्रहग्रहणाधिकरणम् (सूत्राणि ५५-५७)

**चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् ॥ ५५ ॥**



**(अपि वा सङ्ख्यावत्त्वान्नानाहीनेषु गृह्यते पक्षवदेकस्मिन् सङ्ख्यार्थभावात् ॥ ५६ ॥ भोजने तत्सङ्ख्यं स्यात् ॥ ५७ ॥)**

प्रसङ्गिकी सङ्गतिः । पूर्ववैषम्येण शङ्कनाद्वा । षोडशिग्रहं प्रकृत्य श्रूयते ''चतुर्थेऽहन्यहीनस्य गृह्यते'' इति । अहीनस्य अहर्गणस्येत्यर्थः । स किं षोडशिन एकस्यैव द्वादशाहादिरूपाहीनस्यै-कस्मिंश्चतुर्थेऽहनि सकृद्गृहीत्वा पुनस्तदपेक्षया चतुर्थेऽहनि, पुनस्तदपेक्षया चतुर्थेऽहनीत्येवमभ्यासेन ग्राह्यः, उतैकस्याहीनस्यैकस्मिन्नहनि सकृद्ग्रहणम् । वीप्सा त्वनेकाहीनेषु चतुर्थे चतुर्थेऽहनि सकृत्सकृद्ग्रहणाभिप्रायेति **सन्देहे,** वीप्साया अनेकाहीनेष्वेकस्मिन्नेव चतुर्थेऽहनि सकृद्ग्रहणाभिप्रायत्वे ''उत्तरेऽहन् द्विरात्रस्य । मध्यमेऽहन् त्रिरात्रस्य'' इति पूर्वनयोक्तवाक्य इव विनाऽपि वीप्सां ''चतुर्थे चतुर्थेऽहन्यहीनस्य'' इति सामान्योक्त्यैव यावत्प्रधानमनुष्ठानसिद्धेर्व्यर्थैव वीप्सा स्यात् । ''अहीनस्य'' इत्येकवचननिर्देशाच्चैकस्मिन्नेवाहीने चतुर्थे चतुर्थेऽहन्यभ्यासेन ग्राह्य इति **प्राप्तम्** । तदाह **सूत्रे,** **''चतुर्थेऽहन्यहीनस्य गृह्यते''** इति वाक्ये एकस्मिन्नेवाहीने ग्रहणदिनादारभ्य चतुर्थे चतुर्थेऽहन्यभ्यासेन ग्रहणं **प्रतीयेत, भोजनवत्** । ''चतुर्थे चतुर्थेऽहनि चैत्रो भुङ्क्ते'' इत्यत्र भोजनदिनादारभ्य चतुर्थे चतुर्थेऽहनि भुंक्ते इति गम्यते तथेति । **सिद्धान्तस्तु,** ''चतुर्थेऽहनि'', इत्यस्य **कस्येत्याकांक्षानिवृत्तये** अहीनपदापेक्षत्वादहीनस्य चतुर्थे इत्येवावगम्यते । अहीनस्य चतुर्थद्वयाभावादाद्यं चतुर्थमेव तथा । द्वितीयं चतुर्थं चतुर्थस्य चतुर्थम् । न त्वहीनस्य । किन्तु तस्याष्टममेवान ह्यत्राहीनस्य चतुर्थे, चतुर्थस्य चतुर्थे चेति निर्देशोऽस्ति । तस्मादहीनेषु चतुर्थेऽहनीत्येवार्थः । अहीनस्येत्येकवचनं समुदायाभिप्रायं ''ग्रहं संमार्ष्टि'' ''पत्नीं संनह्य'' इत्यादाविव । वीप्सा च पूर्ववाद्युक्तदिशा सामान्यवाक्यप्राप्तानुवाद इति । **फलन्तु,** सर्वेष्वहीनेषु चतुर्थेऽहनि षोडशिनः सकृद्ग्रहणम् ।

इति त्रयोदशं नानाहीनेषु चतुर्थे दिने षोडशिग्रहग्रहणाधिकरणम् (सूत्राणि ५५-५७)

## अथ चतुर्दशं विकृतौ ग्रहाणामाग्रयणाग्रताया उत्कर्षाधिकरणम् (सूत्रम् ५८) प्रथमं वर्णकम्

**जगत्साम्नि सामाभावादृक्तस्साम तदाख्यं स्यात् ॥ ५८ ॥**

अत्रापि प्रासङ्गिकी **सङ्गतिः** । ज्योतिष्टोमे ''यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् । यदि बृहत्सामा शुक्राग्रान् । यदि जगत्सामा स्यादाग्रयणाग्रान्'' इति श्रुताग्रयणाग्रत्वं किं ज्योतिष्टोमे निविशते, किं वा विकृतिविशेषे उत्कृष्यत इति **सन्देहे,** यदि जगन्नामकं साम कचित्स्या-

त्तत्रैतदुत्कृष्येत । न चैतदस्ति । किन्तु जगत्यामृच्युत्पन्नं साम जगत्सामेति वाच्यम् । तच्च ज्योतिष्टोमे जगत्युत्पन्नं सामार्भवपवमानस्तोत्रसाधनीभूतमस्तीति यदि जगत्सामेति बहुव्रीहिपदेन ज्योतिष्टोमनिर्देश सम्भवात्प्रकरण एव निविशत इति **प्राप्ते सिद्धान्तः**, आर्भवपवमाने जगत्युत्पन्नसामसत्वेऽपि ''यदि रथन्तरसामा'' इत्यादिप्रायपाठात्पृष्ठस्तोत्रसाधनीभूतमेव जगत्युत्पन्नं साम वाच्यं । तच्च नास्ति । विषुवन्नामकविकृतियागे त्वस्तीति तत्रैवाग्रयणाग्रताया उत्कर्ष इति । तदाह **सूत्रे, जगत्साम्नि** श्रुते स्वतो जगन्नामकसाम्नोऽभावाद्दक्तो ऋग्द्वारैव **साम तदाख्यं** जगन्नामकं **स्यात्** । तादृशसामा विषुवानेवेति तत्रोत्कर्ष इति ।

इति चतुर्दशं विकृतौ ग्रहाणामाग्रयणाग्रताया उत्कर्षाधिकरणम् (सूत्रम् ५८)

## अथ पञ्चदशं जगत्सामशब्देन विषुवतो ग्रहणाधिकरणम् (सूत्रम् ५८) द्वितीयं वर्णकम्

**जगत्साम्नि सामाभावादृक्तस्साम तदाख्यं स्यात् ॥ ५८ ॥**

**वर्णकान्तरन्तु,** यदि जगत्साम ''आग्रयणाग्रान्'' इत्यत्र जगत्सामपदेनोक्तं साम किं बृहद्रथन्तरयोरन्यतरत्, किं वोभयम्, उत रथन्तरमेव, अथ विषुवति जगत्यामुत्पन्नं सामान्तरमिति चतुर्धा **सन्देहः । पूर्वपक्षस्तु** जगदाख्यं साम यस्यासौ सोमो जगत्सामेति व्युत्पत्त्या जगत्सामपदेन प्रकृतज्योतिष्टोमस्यैव प्रत्यभिज्ञानेन बृहद्रथन्तरयोरन्यतरसाम्नोरेव कथञ्चिज्जगत्सामनामत्वमुपेत्य जगत्सामेत्यनेन ज्योतिष्टोममेव बृहद्रथन्तरान्यतरसामवन्तमुपादाय प्रकरण एवाग्रयणाग्रतानिवेशः स्वीकार्य इत्याद्यः । नैतद्युक्तम् । सत्यां गतौ बृहद्रथन्तरयोर्जगत्सामपदस्याप्रसिद्धशक्तिकल्पनायोगादैन्द्रवायवाग्रत्वशुक्राग्रत्वाभ्यां पूर्ववाक्योक्ताभ्यामाग्रयणाग्रत्वस्य विकल्पापाताच्च । अतो जगच्छब्दस्य कृत्स्नवाचित्वात् ''जगत् कृत्स्नं साम यस्य स जगत्सामा'' इति बृहद्रथन्तरोभयसामा सोम इति बृहद्रथन्तरोभयसमुच्चितज्योतिष्टोमप्रकरण एवाग्रयणाग्रतेति **द्वितीयः** । एवं हि ''यदि जगत्सामा'' इति निमित्तोक्तिर्व्यर्था स्यात् । रथन्तरसाम्न्यैन्द्रवायग्रतायाः बृहत्साम्नि सोमे शुक्राग्रतायाः पूर्ववाक्येन विहिततया ''यदि जगत्सामा'' इत्यनुक्त्वा ''आग्रयणाग्रान् गृह्णाति'' इत्याग्रयणाग्रता विहिता सती उभयाग्रतावरुद्धोभयसामवत्येव सोमे सामर्थ्यान्निविशत इति न समुच्चयपक्षो युक्तः । किन्तु जगत्यां जगच्छब्दवत्यां ''ईशानमस्य जगतः स्वर्दृशम्'' इत्यस्यामृच्युत्पन्नं साम जगत्सामेति तादृशरथन्तरसामवत्येव सोमे आग्रयणाग्रता । न चैन्द्रवायवाग्रतया विकल्पदोष इति शङ्क्यम् । उत्कर्षापेक्षया विकल्पेन प्रकरणनिवेशस्य वरत्वादिति **तृतीयः । सिद्धान्तस्तु,** ''जगत्सामा'' इत्यत्र जगदित्यनेन



जगत्पदं लक्षयित्वा तेन च जगत्पदवतीमृचं लक्षयित्वा तया च तदुत्पन्नसामलक्षणायामत्यन्तक्लिष्टलक्षितलक्षणा स्यात् । अतो जगच्छब्देन जगतीच्छन्दोवाचितया वैदिकप्रयोगसिद्धेन जगत्युत्पन्नसामलक्षणैव ज्यायसीति तादृशो विषुवानेवात्र जगत्सामपदेन ग्राह्य इति तत्रैवाग्रयणाग्रताया उत्कर्ष इति ।

इति पञ्चदशं जगत्सामशब्देन विषुवतो ग्रहणाधिकरणम् (सूत्रम् ५८)

## अथ षोडशं गोसवादौ उपवत्यग्रवत्योरभावाधिकरणम् (सूत्राणि ५९-६१)

**उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात्स्यात् ॥ ५९ ॥**

**(मुख्येन वा नियम्येत ॥६०॥ निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात् ॥६१॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ''गोसव उभे कुर्यात्'', ''संसव उभे कुर्यात्'' इत्युक्ते बृहत्पृष्ठरथन्तरपृष्ठयोः समुच्चयवति गोसवादियागे ''उपवतीं रथन्तरपृष्ठस्य प्रतिपदं कुर्यात् । अग्रवतीं बृहत्पृष्ठस्य'' इति प्रकृतौ उपशब्दवत्यग्रशब्दवती द्वे ऋचौ रथन्तरपृष्ठस्य बृहत्पृष्ठस्य क्रमादादित्वेन विहिते अतिदेशतः प्राप्ते । ते च ऋचौ गोसवादौ समुच्चयेन स्तोत्रयोरादितया कार्ये, किं वा विकल्पेन, उत रथन्तरनिमित्तैव ऋक्कार्या, अथोभे अपि न कार्ये इति चतुर्धा **सन्देहः । पूर्वपक्षस्तु,** यथा पूर्वत्र पृष्ठस्तोत्रसम्बन्धिजगत्युत्पन्नसामवत्वामाग्रयणाग्रतायां निमित्तं, तथा पृष्ठसम्बन्धिरथन्तरादि सामवत्वमुपशब्दाग्रशब्दवत्यो ऋचोः पृष्ठस्तोत्रप्राथम्ये निमित्तमित्युभयसामोपेतगोसवादौ रथन्तरस्य बृहतश्च सत्वादृग्द्वयमपि प्रतिपच्छब्दितप्रथमत्वेन कार्यमित्याद्यः । युगपदुभयो ऋचोः प्राथम्यायोगेन समुच्चयासम्भवाद्विशेषाग्रहणाच्च विकल्प इति **द्वितीयः** । तदाह **सूत्रे, उभयसाम्नि क्रतौ नैमित्तिकं विकल्पेन** भवति । निमित्तयोर्द्वयोरपि **समत्वेन** विनिगमकाभावादिति । विकल्पस्याष्टदोषदुष्टत्वाद्रथन्तरस्य प्रथमपठितत्वाद्रथन्तरनिमित्तामुपवतीमेव प्रथमऋचं कुर्यादिति **तृतीयः** । **सिद्धान्तस्तु,** प्रकृतौ रथन्तरपृष्ठस्य प्रतिपदं बृहत्पृष्ठस्य प्रतिपदं कुर्यादिति बृहद्रथन्तरयोः क्रतुव्यापनं विना सत्तामात्रेणान्योन्यानपेक्षयोः पृष्ठद्वारा क्रतुविशेषणत्वेन प्रतिपच्छब्दोक्तनिमित्तत्वमवगम्यते । सापेक्षत्वे ''समर्थः पदविधिः'' इत्युक्त्या समर्थानां निरपेक्षाणामेव समासानुशासनाद्रथन्तरपृष्ठस्येत्यादिसमासायोगात् । अतः पृष्ठस्तोत्रेऽन्योन्यानपेक्षयोरेव स्वसत्तामात्रेणान्योन्याव्यवच्छेदकतया पृष्ठद्वारा क्रतुं विशेषतोर्बृहद्रथन्तरयोर्निमित्तत्वम् । इह तु गोसवादौ द्वयोरन्योन्यसापेक्षसत्ताकतया क्रतुविशेषणत्वेनान्यतरेण क्रतोरविशेषणान्निमित्तविघातेनोभयमपि न कर्तव्यमिति ।

इति षोडशं गोसवादौ उपवत्यग्रवत्योरभावाधिकरणम् (सूत्राणि ५९-६१)

अथ सप्तदशमैन्द्रवायवस्य सर्वादावप्रतिकर्षाधिकरणम् (सूत्राणि ६२-६४)

**ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् ॥ ६२ ॥**

**(अपि वा धर्माविशेषात्तद्धर्माणां स्वस्थाने प्रकरणादग्रत्वमुच्यते ॥ ६३ ॥ धारासंयोगाच्च ॥ ६४ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ज्योतिष्टोमे उपांश्वन्तर्यामावाधारग्रहौ विधायैन्द्रवायवमैत्रावरुणादीनां धाराग्रहाणामुपक्रमे श्रूयते ''वाग्वा एषा यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते । वाचमेवानुप्रयन्ति । अण्व्या धारया गृह्णाति'' इति । तत्र किमैन्द्रवायव उपांश्वन्तर्यामाभ्यामपि पूर्वमेव ग्राह्यः, उत पाठप्राप्ते उपांश्वन्तर्यामानन्तरस्थान इति **सन्देहे** ''ऐन्द्रवायवं गृह्णाति'' ''मैत्रावरुणं गृह्णाति'' इत्यादिवाक्यैरेव ग्रहाणां प्राप्तत्वेन तद्वाक्यप्राप्तग्रहानुवादेन ''ऐन्द्रवायवाग्रा ग्रहाः'' इति वाक्ये अग्रतामात्रविधानात्तस्याश्चाग्रताया अविशेषेण सर्वग्रहाङ्गत्वादुपांश्वन्तर्यामयोरवैगुण्यार्थं ताभ्यामपि पूर्वमेवैन्द्रवायवो ग्राह्यः । एवञ्च यथा पूर्वत्र निमित्तविधातादुभयस्यापि नैमित्तिकस्य बाधस्तथेहापि अग्रतावचनात्पाठप्राप्तक्रमस्य बाध इति **प्राप्तम्** । तदाह **सूत्रे, ऐन्द्रेत्यादि** । व्यक्तः **सूत्रार्थः** । **सिद्धान्तस्तु,** ''ऐन्द्रवायवं गृह्णाति'' इत्यादिवाक्यं ग्रहसामान्यपरम् । अग्रतावाक्यन्तु ''अण्व्या धारया'' इति वाक्यशेषाद्धाराग्रहपरम् । अतो न तेनाग्रग्रहप्राप्तिः । ऐन्द्रवायवाग्रता तु धाराग्रहाणां पाठादेव प्राप्नोति । पाठप्राप्ताग्रतानुवादेनैन्द्रवायवादयो धाराग्रहा एव प्रातिस्विकरूपेण विधीयन्त इति । **फलन्तु,** ऐन्द्रवायवाग्रतायाः सर्वाङ्गत्वाभावान्नोपांश्वन्तर्यामाभ्यां पूर्वं ग्रह इति ।

इति सप्तदशमैन्द्रवायवस्य सर्वादावप्रतिकर्षाधिकरणम् (सूत्राणि ६२-६४)

अथाष्टादशं कामसंयोगेऽप्यैन्द्रवायवस्यादावप्रतिकर्षाधिकरणम् (सूत्रे ६५-६६)

**कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यात् ॥ ६५ ॥**

**(तद्देशानां वाऽग्रसंयोगात्तद्युक्तं कामशास्त्रं स्यान्नित्यसंयोगात् ॥ ६६ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ज्योतिष्टोमे ''वाग्वा एषा यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते'' इति संक्षेपेण ग्रहान् विधाय, ''ऐन्द्रवायवं गृह्णाति,'' ''मैत्रावरुणं गृह्णाति'' इत्यादिविस्तरविधानात्राक्कामसंयुक्तानि वचनानि'' ''ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्'' इत्यादीनि श्रूयन्ते । तत्र कामसंयुक्तैन्द्रवायवाग्रता किमुपांश्वन्तर्यामयोरपि कार्या, उत धाराग्रहाणामेवेति



**सन्देहे,** प्रकरणात्क्रत्वर्थतया नित्यानां ग्रहाणां प्रकरणप्राप्तक्रत्वर्थत्वबाधेन क्रतोः फलार्थतया विधिरयुक्त इत्यैन्द्रवायवाग्रतैव ग्रहाणां कामाय विधीयते । धाराग्रहाणां पाठादैन्द्रवायवाग्रतायाः प्राप्तत्वेऽप्याधारग्रहयोरुपांश्वन्तर्यामयोरप्राप्तत्वेन तयोः कामायैन्द्रवायवाग्रताविधिसम्भवात्सर्वादित ऐन्द्रवायवो ग्राह्यः । एवमैन्द्रवायवस्य नित्यप्रयोगे सर्वादित्वाभावेऽपि काम्यप्रयोगे स्यादिति । **प्राप्तम्** । तदाह **सूत्रे, कामेत्यादि** । व्यक्तोऽर्थः । **सिद्धान्तस्तु,** यदि फले विधीयमानस्याग्रतागुणस्य उपांश्वन्तर्यामयोरप्याश्रयत्वं स्यात्तदा स्यादप्राप्तविधानम् । सर्वादितः प्रतिकर्षश्च । न चैवम् । धाराग्रहाणामेवात्र प्रकृतत्वात्तेषामेवाश्रयत्वौचित्यात् । अतो नाप्राप्तविधानम् । नवा सर्वादितः प्रतिकर्षः । किञ्च श्रुत्यर्थविधिलाभाय ''गृह्णाति'' इत्युक्तग्रहाणामेवात्र कामाय विधानं युक्तम् । न तु ग्रहाश्रयेण पाठप्राप्ताग्रतायाः कामाय विधानम् । वाक्यार्थविधेर्जघन्यत्वात् । प्रकरणात्क्रत्वर्थतया नित्यानामपि तेषां वचनात्कामार्थत्वमप्युपपन्नमिति कामसंयोगेऽपि स्वस्थान एव ग्रहणमिति ।

इत्यष्टादशं कामसंयोगेऽप्यैन्द्रवायवस्यादावप्रतिकर्षाधिकरणम् (सूत्रे ६५-६६)

अथैकोनविंशमाश्विनाग्रादीनां ग्रहाणां प्रतिकर्षाधिकरणम् (सूत्राणि ६७-६९)

**परेषु चाग्रशब्दः पूर्ववत्स्यात्तदादिषु ॥ ६७ ॥**

**(प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात् ॥६८॥ प्रतिकर्षञ्च दर्शयति ॥६९॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ज्योतिष्टोमे ''शुक्राग्रान् गृह्णीयात्प्रतिष्ठाकामः । मन्थ्यग्रानभिचरन् ।'' इत्यादि श्रूयते । तत्र च शुक्राग्रादीनां कामसंयुक्तानां स्वस्थान एव ग्रहणम्, उत सर्वादितः प्रतिकर्ष इति **सन्देहे,** पूर्वत्रैन्द्रवायवस्येव शुक्रादेः कामसंयोगेऽपि पाठप्राप्तक्रमाबाधाय स्वस्थान एव ग्रहणमिति **प्राप्तम्** । तदाह **सूत्रे, परेषु** ऐन्द्रवायवात्परेषु **शुक्रादिषु अग्रशब्दः** शुक्राग्रादिशब्द**स्तदादिषु** शुक्रप्रभृतिषु **स्यात्** । अतः शुक्रप्रभृतयः कामाय स्वस्थाने विधीयन्त इति । **सिद्धान्तस्तु,** धाराग्रहाणामैन्द्रवायवाग्रतैव पाठप्राप्ता । न शुक्राग्रता । येनाग्रताऽनुवादेन ग्रहाणां कामे विधानात्स्वस्थान एव शुक्रादेर्निवेशः पूर्वत्रेव स्यात् । ग्रहाणां कामसंयोगं शुक्राग्रत्वञ्च विदधद्वाक्यं भिद्येत । अतो ग्रहाश्रयेणाग्रतैव प्रतिष्ठादिकामाय विधीयत इत्यनेकग्रहेष्वपि तादृशकामाय शुक्राग्रताविधिसम्भवात्स्वस्थानात्पूर्वं प्रतिकर्ष इति ।

इत्येकोनविंशं आश्विनाग्रादीनां ग्रहाणां प्रतिकर्षाधिकरणम् (सूत्राणि ६७-६९)

## अथ विंशमाश्विनादीनां ग्रहाणामैन्द्रवायवस्य पुरस्तात्प्रतिकर्षाधिकरणम् (सूत्राणि ७०-७२)

**पुरस्तादैन्द्रवायवस्याग्रस्य कृतदेशत्वात् ॥ ७० ॥**

**(तुल्यधर्मत्वाच्च ॥ ७१ । तथा च लिङ्गदर्शनम् ॥ ७२ ॥)**

पूर्वत्र सिद्धेऽर्थेऽत्र विशेषचिन्तंनात्सङ्गतिः । पूर्वत्र सामान्यतः शुक्रादिग्रहस्य प्रतिकर्ष उक्तः । स किं सर्वादितः, उतैन्द्रवायवादिधाराग्रहात्प्रागिति **सन्देहे**, ऐन्द्रवायवस्य पाठप्राप्तक्रमबाधापत्त्या सर्वादितः प्रतिकर्षाभावेऽपि शुक्रादिग्रहस्य सिद्धान्तेऽपि प्रतिकर्षाभ्युपगमेन स्वस्थाने बाधस्याविशिष्टतया सर्वादित एव प्रतिकर्षः स्यात् । ऐन्द्रवायवात्पूर्वमित्यत्र विशेषहेत्वभावादिति **प्राप्ते सिद्धान्तः**, शुक्राग्रत्वगुणः प्रतिष्ठादिफलाय विधीयमान आश्रयमपेक्षमाणस्सन् ''ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते'' इति साधारणोपक्रमेण प्राकृतानैन्द्रवायवादिधाराग्रहानाश्रयत इति तदादित एव प्रतिकर्षः । न सर्वत इति । तदाह **सूत्रे, अग्रस्य** शुक्रप्रभृतेरैन्द्रवायवात्**पुरस्तात्प्रतिकर्षः** स्यात् । कुतः? **कृतदेशत्वात्** साधारणोपक्रमेण तस्यैव देशस्य प्रतिकर्षस्थानतया कृतत्वादिति ।

इति विंशमाश्विनादीनां ग्रहाणामैन्द्रवायवस्य पुरस्तात्प्रतिकर्षाधिकरणम् (सूत्राणि ७०-७२)

## अथैकविंशं सादनस्यापि प्रतिकर्षाधिकरणम् (सूत्रे ७३-७४)

**सादनश्चाविशेषात् ॥ ७३ ॥**

**(लिङ्गदर्शनाच्च ॥ ७४ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । धाराग्रहाणां पूर्वपूर्वग्रहं गृहीत्वा सादयित्वा चोत्तरोत्तरग्रहाणां ग्रहणासादने कृत्वा पश्चाद्ग्रहणासादनक्रमेण प्रदानं क्रियत इति क्रमः । तत्र कामार्थशुक्रादिग्रहेष्वपकृष्यमाणेषु सादनमपि प्रतिकृष्यते, अथ नेति सन्देहे, कामार्थशुक्रादिग्रहाणां ''शुक्राग्रान् गृह्णीयात्प्रतिष्ठाकामः'' इत्यादिवचनबलात्पाठक्रमबाधेन प्रतिकर्षेऽपि न सादनस्य । वचनाभावात् । न च सादनस्य ग्रहणाङ्गत्वेन प्रधानापकर्षे तदङ्गस्यापि सिद्ध इति शङ्कचम् । प्रकरणाद्ग्रहणस्येवासादनस्यापि क्रत्वर्थत्वेन ग्रहणाङ्गत्वे मानाभावादिति **प्राप्ते सिद्धान्तः**, सादनस्य ग्रहणाङ्गत्वे वचनाभावेऽप्यन्यथानुपपत्तिरेव मानम् । यथा हि, ग्रहणानि प्रदानार्थानि । प्रदानञ्चैकप्रयोगवचनाद्गृहीतानां ग्रहाणामेकस्मिन्नेव काले कार्यम् । एककालकर्तव्यत्वञ्च तेषां साहित्यमन्तरा न युक्तम् । तच्च साहित्यमासादनं



विना न घटते । न ह्येकेन कर्त्राऽनासाद्यैकमपरो गृहीतुं शक्यत इति साहित्यसम्पादनेन दृष्टार्थमासादनं प्रदानार्थग्रहणाङ्गमिति तदपकर्षेऽपकृष्येतेति । तदाह **सूत्रे**, सादनं च ग्रहणवदपकृष्येत । ग्रहणाङ्गसादनस्यापकर्षे ग्रहणापकर्षवचनतात्पर्यस्याविशेषादिति ।

इत्येकविंशं सादनस्यापि प्रतिकर्षाधिकरणम् (सूत्रे ७३-७४)

## अथ द्वाविंशं प्रदानस्याप्रतिकर्षाधिकरणम् (सूत्रे ७५-७६)

**प्रदानश्चापि सादनवत् ॥ ७५ ॥**

**(न वा प्रधानत्वाच्छेषत्वात्सादनं तथा ॥ ७६ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । शुक्रादेस्सादनमिव प्रदानमप्यपकृष्यते, अथ नेति **सन्देहे**, पूर्वत्र शुक्रादेर्ग्रहणमासादनमिव प्रदानमप्यपकर्षेत् । अवदानादिः प्रदानान्त एकः पदार्थ इति पञ्चमस्य द्वितीयपादे **संयुक्ते तु प्रक्रमात्तदङ्गं स्यादि**त्यत्रोक्तत्वेन तन्न्यायेन ग्रहणादिप्रदानान्त- स्यैकपदार्थत्वादिति । तदाह **सूत्रे**, ग्रहणमासादनमिव प्रदानमपि प्रतिकर्षेदिति **पूर्वपक्षः । सिद्धान्तस्तु**, स्यादेवं यद्यवदानादिप्रदानान्त इव ग्रहणादिप्रदानान्त एकः पदार्थः स्यात् । न चैवम् । किन्तु सर्वेषु गृहीतेष्वासादितेषु पश्चादेव ग्रहणसादनक्रमेण प्रदानस्य विधानान्न प्रदानस्यापकर्ष इति ।

इति द्वाविंशं प्रदानस्याप्रतिकर्षाधिकरणम् (सूत्रे ७५-७६)

## अथ त्रयोविंशं त्र्यनीकायामैन्द्रवायवाग्रतोक्तेः समानविध्यर्थताधिकरणम् (सू.७७-७८)

**त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥ ७७ ॥**

**(अपि वाऽहर्गणेष्वग्निवत्समानविधानं स्यात् ॥ ७८ ॥)**

प्रासङ्गिकी सङ्गतिः । द्वादशाहे त्र्यनीका आम्नाता । अनीकशब्दोऽग्रत्ववाची । त्रयाणामनीकानां समाहारस्त्र्यनीका । त्रिफलेत्यादिवदजादित्वाट्टाप् । तद्यथा, ''प्रायणीयोदयनीयशब्दितावाद्यन्ताहनी दशममहः, ऐन्द्रवायवाग्राणि । अवशिष्टेषु नवानामह्नां त्रीणि त्रीण्यहानि त्र्यनीकतया श्रुतानि ''ऐन्द्रवायवाग्रं प्रथममहः । अथ शुक्राग्रम् । अथाऽग्रयणाग्रम् । अथैन्द्रवायवाग्रम् । अथ शुक्राग्रम् । अथाऽग्रयणाग्रम् । अथैन्द्रवायवाग्रम् । अथ शुक्राग्रम् । अथाऽग्रयणाग्रम्'' इति । नवानामह्नामादित षडहानि पृष्ठ्यषडहनामकानीति तत्क्रमात्षट्स्वहस्सु रथन्तरबृहद्वैरूपवैराजशाक्वररैवताख्यानि पृष्ठस्तोत्र-

साधनसामानि । तत्र पृष्ठ्यषडहे प्रथमद्वितीययोरह्नोः क्रमाद्रथन्तरबृहत्सामत्वमिति तन्निबन्धनं ''यदि रथन्तरसामा'' इत्यादिवाक्योक्तमैन्द्रवायवाग्रत्वं शुक्राग्रत्वं प्रकृतितः प्राप्तमेव । पुनरिह ''ऐन्द्रवायवाग्रं प्रथममहः'' इति तयोर्वचनं किमनुवादमात्रम्, किं वाऽङ्गान्तरपरिसङ्ख्यार्थम्, उतार्थवादार्थम्, यद्वा विध्यर्थमिति **चतुर्धा सन्देहे**, अनुवादमात्रत्वरूपाद्यपक्षस्यानर्थक्यदुष्टत्वात्, ''ऐन्द्रवायवाग्रतैव कार्या न त्वङ्गान्तरम्'' इत्यादिपरिसङ्ख्यारूपद्वितीयपक्षस्य त्रिदोषदुष्टत्वादाग्रयणाग्रस्तुत्यर्थतयाऽर्थवादत्वरूपतृतीयपक्ष एव युक्तः । तृतीयेऽहन्याग्रयणाग्रतैव युक्ता । प्रथमे द्वितीये चाहन्यैन्द्रवायवाग्रता-शुक्राग्रतयोरनुष्ठितत्वात् । ''अजामित्वाय'' इति श्रुतेरुन्नयनादिति **प्राप्तम्** । तदाह सूत्रे **त्र्यनीकायां न्यायप्राप्तविषयकमैन्द्रवायवाग्रताद्याम्नानं तद्गुणार्थमाग्रयणाग्रतास्तुत्यर्थं स्यादिति** । सिद्धान्तस्तु प्रकृतौ रथन्तरबृहत्सामनिमित्तैन्द्रवायवाग्रत्व शुक्राग्रत्वे तथैवेहापि द्वादशाहे चोदकेन प्राप्नुतः । अतो रथन्तरादि निमित्ताभावेऽप्यैन्द्रवायवाग्रत्वादिना ग्रहा ग्राह्या इत्येतद्विध्यर्थं पुनरिह वचनमिति । **फलं तु**, द्वादशाहविकृतौ गर्गत्रिरात्रे वामदेवसामनि द्वितीयेऽहन्यसत्यपि बृहत्सामत्वे शुक्राग्रताया अनुष्ठानम् ।

**इति त्रयोविंशं त्र्यनीकायामैन्द्रवायवाग्रतोक्तेः समानविध्यर्थताधिकरणम् (७७-७८)**

## अथ चतुर्विंशं व्यूढद्वादशाहस्य समूढविकारत्वाधिकरणम् (७९-८२)

**द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समानविधानं स्यात् ॥ ७९ ॥**

**(व्यूढो वा लिङ्गदर्शनात्समूढविकारः ॥ ८० ॥ कामसंयोगात् ॥ ८१ ॥ तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ ८२ ॥)**

द्वादशाहिकाग्रताप्रसङ्गादियं चिन्तेति प्रासङ्गिकी सङ्गतिः । ग्रहाग्रताविशेषाद्द्विविधो द्वादशाहः समूढो व्यूढ इति । समूढः पूर्वनयेनोक्तः । व्यूढस्तु पूर्ववदेव प्रायणीयोदयनीयावैन्द्रवायणाग्रौ । अन्येषां दशानामह्नान्तु ''ऐन्द्रवायवाग्रं प्रथममहः । अथ शुक्राग्रम् । अथ द्वे आग्रयणाग्रे । अथैन्द्रवायवाग्रम् । अथ द्वे शुक्राग्रे । अथाग्रयणाग्रम् । अथ द्वे ऐन्द्रवायवाग्रे'' इति । तत्र किं द्वे अपि रूपे नित्ये, किं वा समूढरूप एव प्रकृतिभूतो नित्यः । व्यूढरूपस्तु काम्यः समूढविकार इति **सन्देहे**, यथा ''दध्ना जुहोति'' ''खादिरो यूपो भवति'' इत्यकामसंयोगेन श्रुतयोः दधिखादिरत्वयोः क्रत्वर्थत्वेऽपि ''दध्नेन्द्रियकामस्य'' ''खादिरं वीर्यकामस्य'' इति वाक्यान्तराभ्यां पुरुषार्थताऽपि । तथैव चतुर्थस्य तृतीयपादे **एकस्य तूभयत्वे** इत्यत्रोक्तेः । एवमिह व्यूढरूपस्यापि प्रागुक्तवाक्यैरकामसंयुक्तैरुत्पन्नस्य नित्यत्वेऽपि ''यत्कामो व्यूढं च्छन्दसा यजेत सोऽस्मै कामस्समृध्यत'' इति वाक्यान्तरेण कामसंयोगात्पुरुषार्थताऽपि स्यादिति समूढवत् व्यूढरूपोऽपि नित्यश्च भवतीति, बृहद्रथन्तरसाम्नोरिव तयोर्विकल्पेन प्रयोग इति **प्राप्तम्** । **तदाह सूत्रे, द्वादशहस्य व्यूढत्वं समूढत्वञ्च** । बृहद्रथन्तरपृष्ठवत् क्रत्वङ्गतया **समानविधानं स्यात्** । न तु व्यूढस्य समूढविकारत्वमिति । **सिद्धान्तस्तु**, दध्यादिवदुभयार्थत्वं न व्यूढरूपस्य लभ्यते । व्यूढरूपस्य लोकतोऽप्रसिद्धत्वेन फलवाक्यापेक्षितव्यूढस्वरूपज्ञापनार्थत्वेन व्यूढोत्पत्तिवाक्यस्य विद्धद्वाक्यस्येवोपक्षीणत्वेन क्रत्वङ्गताबोधनासामर्थ्यात् । दध्यादिस्वरूपन्तु लोकप्रसिद्धमिति तस्य कामसंयोगवाक्यं दधिस्वरूपज्ञानाय ''दध्ना जुहोति'' इत्यादि कामसंयोगहीनवाक्यं नापेक्षत इत्यन्यत्रानुपक्ष्णीणमकामवाक्यं दध्नः क्रत्वङ्गतां बोधयितुमलमिति युक्तमुभयार्थत्वं दध्यादेः । अतः केवलं काम्य एव व्यूढः समूढविकारः । यथाऽग्निष्टोमसंस्थाविकृतित्वमुक्थ्यादिकाम्यसंस्थानां तथेति ।

**इति चतुर्विंशं व्यूढद्वादशाहस्य समूढविकारत्वाधिकरणम् (सूत्राणि ७९-८२)**



## अथ पञ्चविंशं संवत्सरसत्रेऽनीकानां विवृध्यधिकरणम् (सूत्राणि ८३-८७)

**एकादशिनीवत्त्र्यनीकापरिवृत्तिः स्यात् ॥ ८३ ॥**

**(स्वस्थानविवृद्धिर्वा अह्नामप्रत्यक्षसङ्ख्यत्वात् ॥ ८४ ॥ पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात्त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात् ॥ ८५ ॥ वचनात्परिवृत्तिरेकादशिनेषु ॥ ८६ ॥ लिङ्गदर्शनाच्च ॥ ८७ ॥)**

त्र्यनीकाप्रसङ्गादियं चिन्तेति प्रासङ्गिकी सङ्गतिः । द्वादशाहः पूर्वोक्तदिशा समूढव्यूढभेदेन द्विरूपः । अत्र समूढद्वादशाहविकृतिभूते संवत्सरसाध्ये गवामयनाख्ये एकाधिकषष्ट्युत्तराणि त्रीणि शतान्यहानि सन्ति । मध्ये विषुवान्नामैकाहः । तस्य द्वे पक्षसी । अशीत्युत्तरशतमहानि पूर्वतनं पक्षः । अशीत्युत्तरशतमहान्युत्तरं पक्षः । प्रकृतौ प्रायणीयोदयनीयदशमानामह्नां मध्यवर्तीनिय नवाहानि ऐन्द्रवाग्रत्वशुक्राग्रत्वाग्रयणाग्रत्वानां त्रिरावृत्त्या पूरितानि । तानि च त्रीण्यग्रत्वानीह विकृतौ पूर्वपक्षसि स्थितेष्वशीत्युत्तरशतसङ्ख्याकेष्वहस्सु चोदकेन प्राप्तानि । तेषाञ्च त्रयाणामग्रत्वानां प्रकृताविव त्रिरावृत्ति मात्रेणानेकान्यहानि न पूर्यन्त इत्यभ्यासेनैव पूरणीयानि । तत्र किं प्रकृताविवेहापि ''प्रथममहः ऐन्द्रवायवाग्रम् । द्वितीयं शुक्राग्रम् । तृतीयं आग्रयणाग्रणाग्रम् । अथ पुनरैन्द्रवायवाग्रम् । अथ शुक्राग्रम् । अथाग्रयणाग्रम् । अथैन्द्रवायवाग्रम् । अथ शुक्राग्रम् । अथाग्रयणाग्रम्'' इति कृत्स्नां त्र्यनीकामनुष्ठाय तेनैव क्रमेण पुनरपि कृत्स्नानुष्ठानमित्येवं पूर्वपक्षसि स्थिताशीत्युत्तरशतात्मकाहस्समुदाये विंशतिवारं

दण्डकलितवदभ्यासः, उत पूर्वपक्षो नवधा विभज्य प्रथमभागगतानि विंशतिरहानि ऐन्द्रवायवाग्राणि कार्याणि । द्वितीयभागस्थानि विंशतिरहानि शुक्राग्राणि । तृतीयभागस्यान्यहान्याग्रयणाग्राणि । पुनरेवं, पुनरेवम् । एवं नवानां प्राकृतीनामग्रतानां स्वस्थानविवृध्द्या नवधाऽभ्यासः कार्य इति **सन्देहे,** प्रकृतौ ''ऐन्द्रवायवाग्रं प्रथममहः'' इति श्रुताहःपदस्याविवक्षायां हेत्वभावादैन्द्रवायवाग्रताया अहर्धर्मत्वेनाहर पूर्वप्रयुक्ततयाऽहरङ्गत्वात्प्रत्यहमेकैकाग्रतेतीह विकृतावपि तथैव प्राप्तेः प्रागुक्तरीत्या दण्डकलितवदा-वृत्तिरिति **प्राप्तम्** । तदाह सूत्रे, यथाऽस्मिन्नेव गवामयने **एकादशिन्यां** दण्डकलितवदावृत्तिः, तथा **त्र्यनीकायामपि** स्यादिति । **सिद्धान्तस्तु,** प्रकृतौ हि ''ऐन्द्रवायवाग्रं प्रथममहः'' इत्यत्राह्न उद्देश्यत्वे द्वितीयादिसाधारण्येनाहर्मात्रस्योद्देश्यत्वादथेति निर्देशायोगान्मुख्यात्वाच्च प्रथमादिपदमेवोद्देश्यम् । तच्च नाह्ना विशेष्टुं शक्यम् । तथात्वे ''यज्ञस्य यत्प्रथमं तदैन्द्रवायवाग्रम् । प्रथमभूतश्चाहः'' इति वाक्यभेद-प्रसङ्गात् । प्रकरणवशेन यज्ञभागस्यैव विशेष्यतयाऽन्वयेन ''यो यज्ञस्य प्रथमो भागः स ऐन्द्र-वायवाग्रः'' इत्यन्वयेन प्रथमपदस्य नैराकांक्ष्यादहःपदमनुवादमात्रमित्यविवक्षितमिति नवानामनीकानां नवधा विभागः । अतो गवामयनेऽपि विकृतौ पूर्वस्मिन् पक्षसि स्थिताशीत्यधिकशताहानि नवधा विभज्य प्रथमादिभागेषु नवस्वैन्द्रवायवाग्रतादीनां नवानामनीकानामनुष्ठानं कार्यमिति स्वस्थान-विवृद्धिरेवेति । तदाह सूत्रे, **स्वस्थानविवृद्धिर्वाऽह्नामप्रत्यक्षसङ्ख्यत्वादिति** । एवं हि सति पूर्वपक्ष-सोऽन्तिमभागस्याग्रयणाग्रताप्राप्तेरुत्तरपक्षसि प्रथमभागस्याऽग्रयणाग्रता प्राप्ता । गवामयने हि ''आवृत्तं पक्ष उपयन्ति'' इति वाक्येनोत्तरपक्षसः पूर्वपक्षः प्रातिलोम्यविधानेन पूर्वपक्षसोऽन्तिमभागीयाग्रयणा-ग्रतायाः उत्तरपक्षसः प्रथमभागीयतायाः प्राप्तत्वात् । एवञ्च तद्भागस्थे पृष्ठ्यषडहगते त्रयस्त्रिंशत्स्तोमके प्रथमेऽहन्याग्रयणाग्रतादर्शनरूपलिङ्गमुपपन्नमित्युक्तं **भाष्ये** ।

**तदेतद्भाष्यकारीयं** प्रायणीयोदयनीयमध्यवर्तिनीं द्वादशाहिकीं त्र्यनीकां चोदकप्राप्तामाश्रित्य वर्णितमधिकरणशरीरमयुक्तम् । द्वादशाहे प्रायणीयोदयनीययोरन्तराळे दशानामह्नां सत्त्वेन नवत्वा-भावादित्याद्यनेकदोषोक्त्या दूषयित्वाऽन्यथाऽधिकरणशरीरं वर्णितवान् **वार्तिककारः** । तथा हि, गवामयने द्वादशाहतो न चोदकेन त्र्यनीकायाः प्राप्तिः । तथापि गवामयनप्रकरण एव ''ऐन्द्रवायवाग्रं प्रथममहः । अथ शुक्राग्रम् । अथाऽग्रयणाग्रम् अथैन्द्रवायवाग्रम् । अथ शुक्राग्रम् । अथाऽग्रयणाग्रम् । अथैन्द्रवायवाग्रम् । अथ शुक्राग्रम् । अथाग्रयणाग्रम्'' इत्येवं त्रिः श्रवणेन वैशेषिकप्रत्यक्षवचनेन त्र्यनीकायाः प्राप्तेस्तां त्र्यनीकामाश्रित्य किं सा दण्डकलितवदावर्तनीया, उत पूर्वपक्षसि स्थिता-न्यशीत्युत्तरशतमहानि नवधा विभज्य नवस्वपि भागेषु नवानामनीकानां निवेशनमिति **सन्देहे,** अहर्गणस्याविवक्षायां हेत्वभावादहर्धर्मा एवैन्द्रवायवाग्रतादय इति प्रत्यहमेकैकाग्रतेति दण्डकलितवदा-वर्तनीयेति **प्राप्ते,** अह्न उद्देश्यत्वेऽहर्मात्रस्योद्देश्यत्वायाथेति निर्देशायोगात्प्रथममित्यस्यावश्योद्देश्यत्वा-



त्प्रागुक्तदिशा प्रकरणेन यज्ञभागस्यैव विशेष्यतयाऽन्वयेन नैराकांक्ष्यादहः पदमहस्समुदायपरं सत् ''अहःसमुदायरूपः प्रथमो यज्ञभाग ऐन्द्रवायवाग्रः'' इत्यादिरूपार्थसम्पत्त्या स्वस्थानविवृध्द्या नवधा विभक्तेष्वहस्सु नवधाऽऽवर्तनीयम् । एवञ्च प्रागुक्तिदिशा लिङ्गदर्शनञ्च युक्तमिति । **शिष्टं तन्त्ररत्नादौ**

इति पञ्चविंशं संवत्सरसत्रेऽनीकानां विवृध्द्यधिकरणम् (सूत्राणि ८३-८७)

## अथ षड्विंशं व्यूढे मन्त्राणां छन्दोव्यतिक्रमाधिकरणम् (सूत्रम् ८८)

**छन्दोव्यक्तिक्रमाद्व्यूढे भक्षपवमानपरिधिकपालस्य मन्त्राणां यथोत्पत्तिवचनमूहवत्स्यारत् ॥ ८८ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । व्यूढरूपे द्वादशाहे भक्षपवमानस्तोत्रपरिधिकपालानि चोदक-प्राप्तानि तन्मन्त्रादयश्च । तत्र प्रातस्सवनमाध्यन्दिनसवनतृतीयसवनगतानां गायत्रीत्रिष्टुप्जगतीच्छन्दसां व्युत्क्रम शब्दितान्योन्यस्थानप्राप्तिः श्रूयते ''छन्दसि वाऽन्योन्यस्य लोकमभ्यध्यायन् । गायत्री त्रिष्टुभः त्रिष्टुप् जगत्याः । जगती गायत्र्याः'' इति । लोकमित्यनुषङ्गः । तस्यार्थः स्थानमिति । सवनत्रये मन्त्रः । ''सोमदेव ते मतिविदः प्रातस्सवनस्य गायत्रछन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि । माध्यन्दिनसवनस्य त्रिष्टुप्छन्दसस्तृतीयसवनस्य जगतीछन्दसः'' इत्यादिः । तत्र गवामयने पूर्वपक्ष-स्यनुष्ठितत्र्यनीकानामुत्तरपक्षसि वचनबलेन व्युत्क्रमेण स्थानान्तरेऽनुष्ठानमिव प्रातस्सवनगतगायत्र-छन्दस इत्यस्य स्थाने माध्यन्दिनसवनगतस्य त्रिष्टुप्छन्दस इत्यस्य, तस्य स्थाने तृतीयसवनगतस्य जगतीछन्दस इत्यस्य, जगतीछन्दस इत्यस्य स्थाने प्रातःसवनगतगायत्रधन्दस इत्यस्य निवेशेनानुष्ठान-मिति मन्त्रगतछन्दसां प्रागुक्तवचनबलात्सिद्धमेव । वचने ''छन्दसि वाऽन्योन्यस्य लोकम्'' इत्युक्त्या छन्दश्शब्दाभिलप्यत्वं गायत्र्यादेरिव भक्षपवमानपरिधिकपालानामप्यस्ति । ''सोमदेव ते'' इत्यादि-प्रागुक्तमन्त्रेषु ''हे सोम गायत्रच्छन्दसस्ते, त्रिष्टुप्छन्दसस्ते, जगतीछन्दसस्ते भक्षयामि'' इत्यर्थतया भक्षस्य ''श्येनोऽसि गायत्रच्छन्दाः'' इति मन्त्रे बहिष्पवमानस्तोत्रस्य, ''सुपर्णोऽसि त्रिष्टुप्च्छन्दाः'' इति मन्त्रे माध्यन्दिनपवमानस्य, ''सखासि जगतीछन्दाः'' इति मन्त्रे आर्भवपवमानस्य, छन्दोऽभि-लप्यत्वमस्ति । तथा ''गायत्रो मध्यमः परिधिः । त्रैष्टुभो दक्षिणः । जागत उत्तरः'' इत्यर्थवादे परिधीनां छन्दः पदाभिलप्यत्वं, ''यदष्टशकपालो भवति गयत्र्यैवैनं ब्रह्मवर्चसेन पुनाति । यदेकादश-कपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति । यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति'' इत्यर्थवादे कपालानाम् । छन्दश्शब्दाभिलप्यत्वमस्तीति मन्त्रगतगायत्रादिछन्दसामिव भक्षादीनाञ्चतुर्णामपि

व्यतिक्रमः स्वीकार्य इति वा मन्त्रगतगायत्र्यादिछन्दसामेव वेति **सन्देहे**, छन्दःशब्दाभिलप्यत्वाविशेषान्मन्त्रगतछन्दसामिव भक्षाद्यर्थानामपि व्यतिक्रमशब्दितस्थानान्तराक्रमणमिति गायत्रछन्दश्शब्दनिर्दिष्टः प्रातस्सवनिको भक्षस्त्रैष्टुभशब्दितमाध्यन्दिनसवनिकभक्षस्थाने कार्यः । माध्यन्दिनश्च त्रैष्टुभशब्द निर्दिष्टो जागतस्य तृतीयसवनिकभक्षस्य स्थाने कार्यः । तार्तीयभक्षश्च गायत्रशब्दनिर्दिष्टप्रातस्सवनिकभक्षस्य स्थाने कार्यः । तथा प्रातःसवनिकबहिष्पवमानस्तोत्रं माध्यन्दिने माध्यन्दिनश्च पवमानस्तोत्रं तृतीयसवनिकार्भवपवमानस्थाने, आर्भवपवमानश्च प्रातःसवनिकबहिष्पवमानस्थाने कर्तव्यः । तथा मध्यमः परिधिः स्थविष्टो दक्षिणस्य स्थाने, दक्षिणश्चाणीयान् उत्तरस्य स्थाने उत्तरश्चाणिष्ठो मध्यस्य स्थाने परिधातव्यः । तथा प्रातस्सवनिकोऽष्टाकपालो माध्यन्दिने, माध्यन्दिनश्चैकादशकपालस्तृतीयसवने, तृतीयसवनिको द्वादशकपालश्च प्रातस्सवन इति । तथा ''श्येनोऽसि'' इतिमन्त्रगतगायत्रपदस्य ''सुपर्णोऽसि'' इति मन्त्रगतत्रिष्टुप्पदस्थाने तत्रत्यत्रिष्टुप्पदस्य तदुत्तरमन्त्रस्थजगतीच्छन्दस्स्थाने जगतीपदस्य प्रातःसवनिकमन्त्रगतगायत्रपदस्थाने ऊहः कार्य इति **पूर्वपक्षः । सिद्धान्तस्तु**, भक्षाद्यर्थेषु गायत्रादिशब्दनिर्देशस्य स्तुतिरूपत्वेनामुख्यत्वात् ''प्रातस्सवनस्य'' ''गायत्रच्छन्दसः'' इत्यादिमन्त्रेषु ''श्येनोऽसि गायत्रच्छन्दाः'' इत्यादिमन्त्रेषु च भक्षसम्बन्धितया बहिष्पवमानादिसम्बन्धितया च प्रकाश्येषु छन्दःस्वेव गायत्र्यादिपदानां मुख्यत्वान्मुख्यार्थभूतछन्दसामेव व्यतिक्रमविधानम् । न भक्षाद्यर्थानामिति । तदाह सूत्रे, **व्यूढे द्वादशाहे भक्षपवमानपरिधिकपालस्य मन्त्राणां** मध्ये मन्त्रगतानां **छन्दसामेव व्यतिक्रमात् वचनं** ''श्येनोऽसि गायत्रछन्दाः'' इत्यादिवचनं **यथोत्पत्ति ऊहवत्स्यादिति । फलं तु**, पूर्वोत्तरपक्षयोः सर्वव्यतिक्रमछन्दोमात्रव्यतिक्रमरूपं व्यक्तम् ।

इति षड्विंशं व्यूढे मन्त्राणां छन्दोमात्रव्यतिक्रमाधिकरणम् (सूत्रं ८८ )

**इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसूधीन्द्रतीर्थगुरुपादशिष्टश्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते दशमाध्यायस्य पञ्चमः पादः**

अस्मिन् पादे अधिकरणानि २६ सूत्राणि ८८

आदितः अधिकरणानि ७२५ सूत्राणि २१०५

## अथ दशमाध्यायस्य षष्ठः पादः

पूर्वपादे विकृतिषु प्राकृतधर्मैकदेशोपदेशे कस्य बाधः, कस्य नेति चिन्ता कृता । अत्र पादे सामविषये बाधाबाधचिन्ता प्राधान्येन प्रस्तूयते । पूर्वत्र यथा ''श्येनोऽसि गायत्रच्छन्दाः''



इत्यादिमन्त्रेषु छन्दोवाचिपदानामयथास्वाध्यायता यथा न तथा रथन्तरादिसाम्नामयथास्वाध्यायतेति प्राप्ताऽशङ्कानिरासात्पूर्वानन्तर्यमस्य पादस्य ध्येयम् ।

### अथ प्रथमं रथन्तरादिसाम्नां त्यृचे गानाधिकरणम् (सूत्रे १-२)

**एकर्चस्थानि यज्ञे स्युस्स्वाध्यायवत् ॥ १ ॥**

**(त्यृचे वा लिङ्गदर्शनात् ॥ २ ॥)**

ज्योतिष्टोमे पवमानस्तोत्रपृष्ठस्तोत्रादिसाधनानि रथन्तरबृहद्वैरूपादिसामानि श्रुतानि । तानि चाध्येतार एकैकस्यामृच्यधीयते । तानि स्तोत्रप्रयोगकाले किमेकस्यामेवर्चि गेयानि, उत त्यृच इति **सन्देहः । पूर्वपक्षस्तु**, यद्यपि ''एकं साम त्यृचे क्रियते स्तोत्रीयम्'' इत्यस्ति वचनं तथापि त्यृचेऽप्युत्पन्नानां केषाञ्चित्साम्नां सत्वेन तद्विषयानुवादतयावर्तमानसरूपत्वेन विधिविभक्त्यभावान्न विधानक्षममिति स्वाध्यायकाले एकस्यामृचि गीतत्वात्तदवैलक्षण्याय स्तोत्रप्रयोगकालेऽप्येकस्यामृच्येव गेयानीति । तदाह **सूत्रे**, रथन्तरादिसामानि स्वाध्यायकाल इव यज्ञेऽप्ये**कर्चस्थान्येकस्यामेव** गेयानि स्युरिति । **सिद्धान्तस्तु**, ''एकं साम त्यृचे क्रियते'' इति वाक्योपक्रमे ऋग्देवतासामदेवतयोस्संवादरूपेऽर्थवादे ''ऋक्सामोवाच मिथुनीसम्भवावेति । सोऽब्रवीत् । न वै त्वं ममालमसि । जायात्वे वेदो मे महिमेति । ते द्वे भूत्वोचतुर्मिथुनी सम्भवावेति । सोऽब्रवीत् । न वै युवां ममालं स्थ इति । तास्तिस्रो भूत्वोचुर्मिथुनीसम्भवामेति । सोऽब्रवीत्सम्भवामेति'' सामदेवता एकामृचं द्वे ऋचौ च प्रत्याख्याय तिस्रो ऋचोऽङ्गीकारेति श्रवणात्तादृशार्थवादाविर्भूतविधिशक्तिकस्यास्य वचनस्यानर्थकप्रायानुवादमात्रत्वायोगाद्विधायकत्वमेव क्रियत इत्यवश्योपेयम् । एवञ्च तिसृषु ऋक्षु प्रस्तोतृगेयगानोक्तिपरं ''अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति । व्यक्षरेणोत्तरयोः'' इति वाक्यमप्युपपन्नमिति । **फलं** तु, स्वाध्यायप्राप्तं रूपं प्रयोगकाले बाध्यत इति ।

इति प्रथमं रथन्तरादिसाम्नां त्यृचे गानाधिकरणम् (सूत्रे १-२)

### अथ द्वितीयं स्वर्दृक्छब्देन वीक्षणस्य कालार्थताऽधिकरणम् (सूत्रम् ३)

**स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात् ॥ ३ ॥**

पूर्वोक्ते कैमुत्येनात्र शङ्कनात्सङ्गतिः । अस्ति रथन्तरसाम्नो योनौ ''अभि त्वा शूर'' इत्यस्यामृचि ''ईशानमस्य जगतः स्वर्दृशम्'' इति स्वर्दृक्छब्दः । तत्र ''रथन्तरे प्रस्तूयमाने सम्मीलयेत्'' इति

चक्षुर्निमीलनं विधाय श्रूयते ‘‘स्वर्दृशं प्रति वीक्षेत’’ इति । तत्र किं कालार्थः सम्बन्धः ‘‘अभि त्वा शूर’’ इत्यारभ्य स्वर्दृक्छब्दोच्चारणपर्यन्तं निमील्यानन्तरं वीक्षेत चक्षुषी उन्मीलयेत्’’ इति । यद्वाऽङ्गाङ्गिभावार्थः सम्बन्धः । ‘‘स्वर्दृशं इतिशब्दमुच्चारयन् वीक्षेत नान्यथेति स्वर्दृक्छब्दो वीक्षणाङ्गम्,’’ इति वा ‘‘वीक्षमाणः स्वर्दृक्छब्दमुच्चारयेत्, नान्यथेति वीक्षणं स्वर्दृक्छब्दोच्चारणाङ्गमिति **सन्देहे**, कालार्थत्वे स्वर्दृक्छब्दस्य स्वर्दृशमिति शब्दोच्चारणकाल इति लक्षणाप्रसङ्गादङ्गाङ्गिभावार्थः सम्बन्धः । पूर्वत्र क्रियत इत्यत्र विधिविभक्तिराहित्येऽपि विधित्वाङ्गीकारे सतीह ‘‘वीक्षेत’’ इति विभक्तिश्रवणेनाङ्गाङ्गिभावविधानस्य कैमुत्यसिद्धत्वादिति **प्राप्ते सिद्धान्तः**, यदि हि स्वर्दृक्छब्दस्य प्रयोजनाकांक्षा स्यात्तदैवं वीक्षणाङ्गत्वेन विधीयेत । न चैवम् । ‘‘रथन्तरं पृष्ठं भवति’’ इति स्तोत्राङ्गतया साम्नो विनियोगान्न वीक्षणरूपं प्रयोजनमाकांक्षति । ऋचोऽपि प्रकरणेन स्तोत्रे विनियोगात् । द्वयो ऋक्सामयोः स्तोत्रार्थत्वेन प्रयोजनानपेक्षत्वादङ्गाङ्गिभावविधानेऽनपेक्षितविधानं स्यात् । वीक्षणमपि रागप्राप्तत्वेनाऽदृष्टप्रयोजनकतया नान्यदाकांक्षतीति तस्याप्यङ्गत्वविधावनपेक्षितविधिरेव । तस्य स्वर्दृगङ्गत्वेऽदृष्टकल्पना प्रसङ्गश्च । संमीलनविधानाय तदपेक्षितविधिप्रतिपादनेन तदेकवाक्यत्वसम्भवे पृथगङ्गाङ्गिभावविधानेन वाक्यभेदायोगश्च । तस्मात्कालार्थः सम्बन्धः । प्रतिशब्दश्च ‘लक्षणेत्थम्भूताख्यान’ इत्यादिसूत्रेण कर्मप्रवचनीयसंज्ञाविधानेन श्रुत्यैव लक्षणार्थ इति । एवञ्च स्वर्दृक्छब्दोच्चारणपर्यन्तमेव सम्मीलनविधानात्ततः परमर्थप्राप्तस्य वीक्षणस्य ‘‘वीक्षेत’’ इत्यनुवाद इति । **फलं तु**, वीक्षणस्य स्वर्दृक्छब्दाङ्गत्वे यस्यामृचि स्वर्दृक्छब्दस्तत्रैव वीक्षणम् । ‘‘कवतीषु रथन्तरं गायति’’ इति वचनाद्यत्र रथन्तरस्य ऋगन्तरे गानं न तत्रापि वीक्षणमुपलक्षणत्वेन ग्राह्यम् । **सिद्धान्ते तु**, तत्रापि स्वर्दृगंशाभिव्यञ्जकगीतिकाले वीक्षणं कार्यमित्याहुः । वाक्यप्राप्ताङ्गाङ्गिभावबाधादध्यायसङ्गतिः ।

इति द्वितीयं स्वर्दृक्छब्देन वीक्षणस्य कालार्थताधिकरणम् (सूत्रम् ३)

## अथ तृतीयं गवामयनिके पृष्ठ्यषडहे बृहद्रथन्तरयोर्विभागाधिकरणम् (सूत्रे ४-५)

**पृष्ठ्यस्य युगपद्विधेरेकाहवद्द्विसामत्वम् ॥ ४ ॥**

**(विभक्ते वा समस्तविधानात्तद्विभागे विप्रतिषिद्धम् ॥ ५ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । सवत्सरसाध्ये गवामयनाख्ये सत्रे प्रथममासान्तिमानामह्नां, तथा द्वितीये पक्षसि पञ्चममहरारभ्य षण्णामह्नां च पृष्ठ्यष्षडह इति नाम । तत्र च प्रकृतिभूतद्वादशाहिकपृष्ठ्यषडहगतषड्भ्योऽहर्भ्यः क्रमाद्रथन्तरबृहद्वैरूपवैराजशाक्वररैवताख्यानां पृष्ठस्तोत्रसाधनसाम्नां



षण्णामपि प्राप्तौ तत्सर्वनिवृत्त्या द्वयोरेव प्राप्त्यर्थं ‘‘पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्यः’’ इति वैशेषिकवचनं श्रुतम् । तत्र किं प्रत्यहं बृहद्रथन्तरञ्चेति द्वयं द्वयं प्रयोज्यम्, उतैकस्मिन् बृहदन्यस्मिन् रथन्तरमित्येवं कार्यमिति **सन्देहे**, बृहच्च रथन्तरञ्च बृहद्रथन्तरे, बृहद्रथन्तरे सामनी यस्य सः बृहद्रथन्तर सामेति द्वंद्वगर्भबहुव्रीह्याश्रयणे द्वंद्वावगतान्योन्यसाहित्यस्य विवक्षितत्वात्प्रत्यहं द्वयं द्वयं कार्यमिति पूर्वत्र वीक्षणस्य स्वर्दृक्छब्दाङ्गत्वबाध इवेह चोदकप्राप्तबृहद्रथन्तरान्यतरसामत्वाबाध इति **प्राप्तम्** । तदाह **सूत्रे, सामत्वं स्यादिति** । **सिद्धान्तस्तु**, प्रकृतौ बृहद्रथन्तयोरन्योन्यनिरपेक्षयोरेव पृष्ठस्तोत्रसाधनत्वात्तथैवेहापि चोदकप्राप्तनैरपेक्ष्याबाधेन क्वचित्प्रयोगोपपत्तौ तद्बाधायोगाद् द्वंद्वसमासमकृत्वैव बृहद्रथन्तरं साम यस्येत्यनेकपदबहुव्रीहिस्वीकारस्य युक्तत्वात् । न च ‘‘द्वंद्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्’’ इति वार्तिकाद्बृहच्छब्दस्य रथन्तरशब्देन द्वंद्वो भवति । पश्चात्तु व्यवहितेन यस्येत्यनेन सम्बन्ध इति वाच्यम् । महाविभाषाग्रहणेन समासस्य पाणिनिना विकल्पितत्वेनानेकपदबहुव्रीहेरविधातात्प्रत्यहमेकैकमेव साम प्रयोज्यं चोदकानुग्रहायेति ।

इति तृतीयं गवामयनिके पृष्ठ्यषडहे बृहद्रथन्तरयोर्विभागाधिकरणम् (सूत्रे ४-५)

## अथ तुरीयं प्रायणीयोदयनीययोरेकादशिनानां विभागाधिकरणम् (सूत्राणि ६-१२)

**समासस्त्वेकादशिनेषु तत्प्रकृतित्वात् ॥ ६ ॥**

**(विहारप्रतिषेधाच्च ॥ ७ ॥ श्रुतितो वा लोकवद्विभागः स्यात् ॥ ८ ॥ विहारप्रकृतित्वाच्च ॥ ९ ॥ विशये च तदासत्तेः ॥ १० ॥ त्रयस्तथेति चेत् ॥ ११ ॥ न समत्वात्प्रयाजवत् ॥ १२ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । द्वादशाहे ‘‘एकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेरन्’’ इति आद्यन्ताह्नोरेकादश पशव आलभ्यत्वेन श्रुताः । ते किमादावन्ते च सर्वेऽपि कार्याः, उत प्रायणीये केचिदुदयनीये चान्य इत्येवं विभज्यालभ्या इति **सन्देहे**, यथा पूर्वत्र बहुव्रीह्याश्रयेण चोदकानुग्रहस्तथेहापि सम्भवति । प्रायणीयोदयनीयौ हि प्रधानवाक्यत्वान्नैकादशिन्यङ्गत्वेन विधातुंर युक्ताविति तयोरुद्देश्यत्वमवश्यमुपेयम् । ततश्च प्रकरणप्राप्तस्यापि द्वदशाहमात्राङ्गत्वस्य बाधेन प्रायणीयोदयनीयार्थतया एकादशिनी विधीयत इत्युद्देश्यगतत्वेन द्वंद्वावगतसाहित्यस्य विवक्षितत्वाच्चोदकबाधेन प्रतिप्रधानं गुणावृत्तिरिति न्यायेनोभयत्रापि सर्वेऽपि पशव आलब्धव्या इति **प्राप्तम्** । तदाह **सूत्रे,**

**एकादशिनेषु समासः** । समस्तानां प्रायणीयोदयनीययोरालम्भ इति यावत् । कुतः? **तत्प्रकृतित्वात्** युगपदालभ्यमानज्योतिष्टोमैकादशिनप्रकृतित्वादिति । **सिद्धान्तस्तु,** स्यादेवं यद्यत्र प्रायणीयोदयनीयानुवादेनैकादशिनविधिः स्यात् । न चैवम् । किन्तु प्रागेव वाक्यान्तरेणैकादशिनीं विधाय पश्चादिदमाम्नायते ''प्रायणीयोदयनीययोः'' इत्यादि । सा च वाक्यान्तरविहितैकादशिनी प्रकरणाद्द्वादशाहाङ्गत्वेनावगता कस्मिन्नहन्यनुष्ठेयेत्याकांक्षायां ''एकादशिनानालभेरन्'' इति यत्, तत् प्रायणीयदेशे उदयनीयदेशे चेति तदपेक्षितदेशविशेषविशेषणत्वविधिपरमिदं वाक्यमित्युद्देश्यत्वाभावेन विधिकोटिप्रविष्टतया द्वंद्वावगतसाहित्यस्याविवक्षितत्वात्प्रायणीये केचिदुदयनीये केचिदिति मिलित्वोभयत्रैकादशिनी कार्येति विभज्य्यैवालभ्याः पशव इति । न चैवं ज्योतिष्टोमाच्चोदकपरंपरयैकादशिन्याः प्राप्तिसम्भवात्प्रकरणे तद्विधानमनर्थकमिति शङ्क्यम् । प्रकृतावैकादशिन्या वैकल्पिकत्वेनेह नित्यार्थत्वाद्वचनस्येति ।

इति तुरीयं प्रायणीयोदयनीययोरेकादशिनानां विभागाधिकरणम् (सूत्राणि ६-१२)

## अथ पञ्चमं सर्वपृष्ठे देशविशेषव्यवस्थाधिकरणम् (सूत्रे १३-१४)

**सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् ॥ १३ ॥**

**(विधेस्तु विप्रकर्षः स्यात् ॥ १४ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''विश्वजित्सर्वपृष्ठो भवति'' इति श्रूयते । सप्तमस्य तृतीयपादे **विश्वजिति सर्वपृष्ठे तत्पूर्वत्वात् इति** नये प्रकृतौ ज्योतिष्टोमे बृहद्रथन्तरयोरन्यतरस्यैव पृष्ठस्तोत्रसाधनत्वेन पृष्ठबहुत्वाभावान्माहेन्द्रादिस्तोत्रेषु पृष्ठपदस्य गौणत्वान्निरर्थकानुवादत्वायोगाच्च द्वादशाहगतषडहिकानां रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानां सर्वपृष्ठ इति वाचनिकातिदेश इति स्थितम् । तथा च विश्वजिद्यागः रथन्तरादिप्राकृतसर्वसामसाध्यपृष्ठस्तोत्रक इत्यर्थः सम्पन्नो यद्यपि, तथापीह स्तोत्रवाचिनापि पृष्ठशब्देन लक्षणया तत्साधनरथन्तरादिसामानि गृह्यन्ते । प्रकृतौ स्तोत्रसाधनत्वदर्शनात् । अन्यथा पृष्ठस्तोत्रस्यैकत्वेन सर्वपदायोगाच्च । एवञ्च रथन्तरादिसर्वसामको विश्वजिदित्यर्थः । तत्र तानि किं माध्यन्दिनपवमानमैत्रावरुणसाम्नोरन्तराले पृष्ठस्तोत्रदेश एव गेयानि, उत यथावचनं देशव्यवस्थयेति सन्देहे, पृष्ठशब्दोपात्तानां षण्णामपि साम्नामत्र विधानाद्विहितानां तेषां प्रयोजनाकांक्षायां निर्ज्ञातमेव पृष्ठस्तोत्रनिवृत्तिरूपं प्रयोजनं कल्पयितुं युक्तमिति पूर्वत्रैकादशिनानां विभज्य प्रयोगेऽपीह न तथा । किन्तु पृष्ठदेश एव सर्वाणि गेयानीति **प्राप्तम्** । तदाह सूत्रे, सर्वशब्दे श्रूयमाणे **तेषां** रथन्तरादीनामेकदेशत्वं स्यात् । **पृष्ठशब्दात्** पृष्ठसाधनत्वेनावगमात् । **पृष्ठस्य च निश्चितदेशत्वादिति ।**



**सिद्धान्तस्तु** सत्यमेवम्तथापि ''रथन्तरं पवमाने कुर्यात् । आर्भवे बृहत् । मध्यत इतराणि । वैरूपं होतुः पृष्ठे । वैराजं ब्रह्मसाम । रैवतमच्छावाकस्य'' इति वचनाद्वैरूपस्यैव पृष्ठसाधनत्वेन तदेव तत्र गेयम् । इतराणि तु यथावचनं स्तोत्रान्तरेषु गेयानि । न च षडहगतपृष्ठस्तोत्रनिर्वृत्तिप्रयोजनकत्वाबाधेन तत्र निवेशितानामेवैषां पुनर्वचनबलात्स्तोत्रान्तरेऽप्यस्तूपयोग इति शङ्क्यम् । तथात्वे ''वैरूपं होतुः पृष्ठे'' इति पुनर्विधानानर्थक्यात्तस्माद्यथावचनं व्यवस्थेति । अत्र विशेषवचनैरेव विश्वजिति सर्वसाम्नां सामस्त्यसिद्धावपि ''सर्वपृष्ठः'' इति वाक्यं व्यर्थमिति शङ्क्यम् । सर्वेति वाक्येन सर्वसाम्नां प्राप्तौ कार्यविशेषे विनियोगार्थमुभयवचना नामर्थवत्वादिति । **फलं** तु, वचनात्पवमानादिषु चोदकप्राप्तसाम्नां बाध इति व्यक्तम् ।

इति पञ्चमं सर्वपृष्ठे देशविशेषव्यवस्थाधिकरणम् (सूत्रे १३-१४)

## अथ षष्ठं वैरूपवैराजसाम्नोः पऽष्ठकार्ये निवेशाधिकरणम् (सूत्राणि १५-२१)

**वैरूपसामा क्रतुसंयोगात् त्रिवृद्वदेकसामा स्यात् ॥ १५ ॥**

**(पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् ॥ १६ ॥ त्रिवृद्वदिति चेत् ॥ १७ ॥ न प्रकृतावकृत्स्नसंयोगात् ॥ १८ ॥ विधित्वान्नेति चेत् ॥ १९ ॥ स्याद्विशये तन्न्यायत्वात्कर्माविभागात् ॥ २० ॥ प्रकृतेश्चाविकारात् ॥ २१ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ज्योतिष्टोमस्योक्थ्यरूपसंस्थाविशेषे षोडश्याख्यसंस्थाविशषे च ''उक्थ्यो वैरूपसामा । एकविंशः षोडशी वैराजसामा'' इति श्रूयते । तत्र किं वैरूपवैराजसामनी सर्वसामकार्येषु निविशेते, किं वा पृष्ठस्तुतावेवेति सन्देहे, पृष्ठस्तुतावेवेत्यत्र विशेषहेत्वभावात्सर्वसामकार्येषु निविशेते । एवञ्च पूर्वत्र यथा वचनात्पवमानादिषु चोदकप्राप्तसामान्तरस्य बाधस्तथेहापि वैरूपसामेति वचनाच्चोदकप्राप्तसामान्तरबाध इति **प्राप्तम्** । तदाह सूत्रे, **वैरूपाख्यं साम** ''त्रिवृदग्निष्टुदग्निष्टोमः'' इत्यत्र **त्रिवृद्वत्क्रतुसंयोगात्** एकमेव साम **क्रतौ** स्यादिति । **सिद्धान्तस्तु,** प्रकृतौ ''रथन्तरसामा सोमस्स्यात्'' ''बृहत्सामा'' इति निर्देशस्य पृष्ठस्तोत्रविषये दृष्टत्वादिहापि विकृतौ तेन लिङ्गेन पृष्ठस्तोत्रस्य बुद्धावारोहात्तद्द्वारा च साम्नोः क्रतुसम्बन्धोपपत्तेः पृष्ठस्तुतावेव रथन्तरादिसामान्तरनिवर्तकतया निविशेते इति ।

इति षष्ठं वैरूपवैराजसाम्नोः पृष्ठकार्ये निवेशाधिकरणम् (सूत्राणि १५-२१)

**अथ सप्तमं ''त्रिवृदग्निष्टोमः'' इत्यत्र स्तोमगतसङ्ख्याविकाराधिकरणम् (सूत्रे २२-२३)**

**त्रिवृति सङ्ख्यात्वेन सर्वसङ्ख्याविकारः स्यात् ॥ २२ ॥**

**(स्तोमस्य वा तल्लिङ्गत्वात् ॥ २३ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''त्रिवृदग्निष्टुदग्निष्टोमः'' इत्यत्र श्रुतस्त्रिवृच्छब्दः किं ''त्रिवृद्रज्जुः'' इत्यादाविव त्रैगुण्यवचनस्सन्नतिदेशतः प्राप्तः सर्वक्रतुसाधनेषु त्रैगुण्यमापादयति, उत स्तोत्रीयानवकवाची सन् प्राकृतस्तोमविकार इति **सन्देहे,** पूर्वत्रेवेह प्राकृतलिङ्गविशेषाभावात् ''त्रिवृदग्निष्टुत्'' इति शास्त्रस्य बहुविषयत्वलाभाय चोदकप्राप्तानामग्निष्टुद्यागसाधनानामशेषाणां पश्वादीनां त्रिवृच्छब्दितं त्रिगुणत्वं सम्पाद्यमिति प्राकृतपश्वादिसङ्ख्या बाधनीयेति **प्राप्तम्** । तदाह सूत्रे, **त्रिवृति** श्रूयमाणायां **सङ्ख्यात्वा**त्सख्यात्वाविशेषात्**सर्व**क्रतुसाधन**सङ्ख्याविकारः स्यादिति । सिद्धान्तस्तु,** ''त्रिवृद्रज्जुः'' इत्यादौ त्रिवृच्छब्दः त्रिवृच्छब्दः त्रिभिरवयवैर्निर्वर्तित इत्यवयवार्थपुरस्काररूपयोगेन प्रवर्तते । न तु रूढ्या । स्तोत्रीयानवके तु ''त्रिवृद्बहिष्पवमानः'' इत्यादौ रूढ्या प्रवर्तते । योगाद्रूढेर्बलवत्वं षष्ठे रथकारनये स्थितमिति स्तोत्रीयानवकवाची संस्त्रिवृच्छब्दश्चोदकप्राप्तप्राकृतपञ्चदशत्वादिस्तोत्रीयसङ्ख्याविकारस्सन् पञ्चदशत्वादिप्राकृतस्तोत्रसाधनऋक्सङ्ख्यां बाधत इति । अत्र यद्यपि स्मृतिपादे **तेष्वदर्शनाद्विरोधस्य** इति सूत्र एव त्रिवृच्छब्दः स्तोत्रीयागतसङ्ख्यावाचीत्युक्तम् । तथापि ''त्रिवृद्बहिष्पवमानः'' इत्यत्र त्रिवृच्छब्दः ''नवभिः स्तुवन्ति'' इति शाखान्तरस्थवाक्यशेषात्स्तोत्रीयानवकपर इत्युक्तम् । इह तु वाक्यभेदाभावेन तन्न्यायाविषयत्वाद्विचरो युक्त इत्याहुः ।

**इति सप्तमं त्रिवृति स्तोमगतसङ्ख्याविकाराधिकरणम् (सूत्रे २२-२३)**

**अथाष्टममुभयसाम्नि बृहद्रथन्तरयोस्समुच्चयाधिकरणम् (सूत्राणि २४-२६)**

**उभयसाम्नि विश्वजिद्वद्विभागः स्यात् ॥ २४ ॥**

**(पृष्ठार्थे वाऽतदर्थत्वात् ॥ २५ ॥ लिङ्गदर्शनाच्च ॥ २६ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ''संसव उभे कुर्यात्'' इति ''गोसव उभे कुर्यात्'' इति ''अभिजितावेकाह उभे बृहद्रथन्तरे कुर्यात्'' इति ससवादौ यागे उभयसामत्वं श्रूयते । तत्रोभयोः पृष्ठस्तोत्रसाधनत्वम्, उतैकस्यैव । अन्यस्य तु स्तोत्रान्तरे निवेश इति **सन्देहे,** यथा पूर्वत्र चोदकप्राप्तपश्वादिद्रव्यगतैकत्वादिसङ्ख्यानुग्रहाय त्रिवृत्त्वस्य स्तोत्रीयामात्रनिवेशस्तथेहापि प्रकृतावन्यतरस्यैवानुष्ठानेन प्रकृताविव चोदकेन बृहद्रथन्तरसाधनपृष्ठद्वयस्य विकल्पेन प्राप्तेस्तदनुग्रहायैकमेव सामपृष्ठसाधनमन्यत्स्तोत्रान्तरे विश्वजितीव निवेशनीयमिति **प्राप्तम्** । तदाह सूत्रे **उभयसाम्नि** संसवादौ **विश्वजितीव विभज्य प्रयोगः स्यादिति । सिद्धान्तस्तु,** विश्वजिति विभज्य प्रयोगो हि ''रथन्तरं पवमाने कुर्यात्'' ''बृहदार्भवे'' इत्यादिवचनबलादुपेतः । न ह्यत्र तादृशं वचनमस्ति । अतोऽत्र विकल्पेन प्राप्तयोः समुच्चयमात्रं वचनेन क्रियते । न चैवं चोदकबाध इति शंक्यम् । स्तोत्रान्तरे साधनत्वेन निवेशेऽपि तत्स्तोत्रसाधनत्वेन सामान्तरप्रापकचोदकबाधस्य तुल्यत्वादिति । फलं तु, समुच्चयेनानुष्ठानम् ।



**इत्यष्टममुभयसाम्नि बृहद्रथन्तरयोस्समुच्चयाधिकरणम् (सूत्राणि २४-२६)**

**अथ नवमं मध्वशनधृताशनयोः षडहान्तेऽनुष्ठानाधिकरणम् (सूत्रे २७-२८)**

**पृष्ठ्ये रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात्तदानन्तर्यात्प्रकृतिवत् ॥ २७ ॥**

**(अन्ते वा कृतकालत्वात् ॥ २८ ॥)**

पूर्वन्यायेनात्रापि शङ्कनात्सङ्गतिः । द्वादशाहे ''त्रिवृत्पञ्चदशः सप्तदश एकविंशस्त्रिणवस्त्रयस्त्रिंशः'' इति त्रिवृदादिस्तोमकानि षडहानि विहितानि । तानि त्रिवृदादित्रयस्त्रिंशान्तः पृष्ठ्यः षडह इत्युच्यते । तत्रापरं वाक्यं ''संस्थिते पृष्ठ्ये षडहे मध्वाशयेद्घृतं वा'' इति । गवामयनादिषु विकृतिषु पृष्ठ्यषडह नामकानि षडहानि सन्ति । तत्र ''पृष्ठ्यषडहस्त्रयस्त्रिंशारम्भणस्त्रिवृदुत्तमः कार्यः'' इति वचनेन प्राकृतचोदकप्राप्तत्रिवृदादिस्तोमानां प्रातिलोम्येनानुष्ठानं श्रुतम् । तत्र किं त्रयस्त्रिंशेऽहनि संस्थिते मध्वशनम्, उत षडहान्त इति **सन्देहे,** प्रकृतिभूतद्वादशाहगतपृष्ठ्यषडहे त्रयस्त्रिंशे चरमेऽहनि संस्थिते मध्वशनं धृताशनं वा दृष्टमितीहापि त्रयस्त्रिंशाङ्गं मध्वशनादि त्रयस्त्रिंशान्त एव कार्यमिति प्रथमे त्रयस्त्रिंशेऽहनि संस्थिते एव मध्वशनादिकं कार्यम् । एवञ्च पूर्वत्र बृहद्रथन्तरयोस्संसवादौ प्राकृतवैकल्पिकपृष्ठस्तोत्रबाध इव मधुभोजनस्यापि प्राकृतक्रमबाध इति **प्राप्तम्** । तदाह **सूत्रे, पृष्ठ्ये** षडहे **आवृत्ते** प्रातिलोम्येनानुष्ठीयमाने सति **रसभोजनं** मध्वशनं **त्रयस्त्रिंशेऽहनि संस्थिते स्यात् । प्रकृताविव तदानन्तर्यादिति । सिद्धान्तस्तु,** ''संस्थिते षडहे मध्वाशयेत्'' इति वाक्येन द्वादशाहप्रकरणेन च मध्वशनं द्वादशाहाङ्गमवगम्यते । त्रयस्त्रिंशाङ्गत्वं तु प्रकृतावनुष्ठानसन्निधिरूपस्थानप्रमाणेन । तच्च वाक्यप्रकरणाभ्यां दुर्बलम् । न च संस्थितस्य षडहस्याङ्गोपदेशोऽनर्थक इति वाच्यम् । ''संस्थाप्य पौर्णमासीं वैमृधेनानुनिर्वपति'' इत्यत्र सत्यपि संस्थाशब्दे यथा वैमृधस्य पौर्णमास्यङ्गत्वं तथा संस्थितस्याप्यङ्गपदेशोपपत्तेरिति विकृतावपि षडहान्त एव मध्वशनमिति ।

**इति नवमं मध्वशनधृताशनयोः षडहान्तेऽनुष्ठानाधिकरणम् (सूत्रे २७-२८)**

**अथ दशमं षडहावृत्तावपि मध्वशनधृताशनयोः सकृदनुष्ठानाधिकरणम् (सूत्रे २९-३०)**

**अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् ॥ २९ ॥**

**(अन्ते वा कृतकालत्वात् ॥ ३० ॥)**

प्रासङ्गिकी **सङ्गतिः** । गवामयने पृष्ठ्यषडहनामानि षडहानि । तस्य पृष्ठ्यषडहस्य ''आवृत्तं पृष्ठ्यं षडहमुपयन्ति'' इत्यभ्यासः श्रूयते । पूर्वत्र ''संस्थिते पृष्ठ्यषडहे मध्वाशयेत्'' इति स्थितम् । तत्र किं पृष्ठ्यषडहस्यावृत्तावभ्यासेन मध्वशनमप्यावर्तनीयम्, उत सर्वाभ्यासान्ते सकृदेवेति **सन्देहे**, पूर्वोक्त-दिशा वाक्यप्रकरणाभ्यां मध्वशनस्य षडङ्गत्वात्तदावृत्तौ तदप्यावर्तनीयमेवेति **प्राप्तम्** । तादह, षडषाभ्यासे मध्वशनस्याप्यभ्यासः । कुतः? **कर्मणः पुनः प्रयोगादिति** । **सिद्धान्तस्तु**, ''संस्थिते षडहे'' इति मध्वशनं संस्थानिमित्तं चोद्यते । संस्था हि नाम षडहविषयव्यापाराभावः । न हि नैरन्तर्येण पुनः पुनः क्रियमाणस्य षडहस्य व्यापारोपरमोऽस्ति । स एव हि मध्वशनस्य निमित्तमिति पूर्वप्रयोगान्ते निमित्ताभावात्सर्वप्रयोगान्त एव सकृन्मध्वशनमिति ।

**यत्तु भाष्ये** मध्वशनं न षडहाङ्गम् । सस्थितस्याङ्गोपदेशानर्थक्यादित्यनावृत्तिसिद्धये मध्वशन-स्याङ्गत्वनिराकरणम् । तदयुक्तम् । अङ्गत्वेऽप्युक्तदिशा मध्वशनस्यानावृत्तेः सम्भवात्संस्थितस्यापि पूर्वनयोक्तदिशा वैमृधस्येवाङ्गत्वोपपत्तेरित्याहुः ।

एतच्चिन्त्यमित्यन्ये । तत्र त्त्वाश्रुत्या समानकर्तृकतावगमेन वैमृधस्याङ्गत्वेऽपि नेह तथाऽङ्गत्व-कल्पकमस्ति । अतोऽनङ्गमेव मध्वशनमिति ।

**इति दशमं षडहावृत्तावपि मध्वशनधृताशनयोः सकृदनुष्ठानाधिकरणम् (सूत्रे २९-३०)**

**अथैकादशं गवामयने मध्वशनधृताशनयोः प्रतिमाससमावृत्त्यधिकरणम् (सूत्रम् ३१)**

**आवृत्तिस्तु व्यवाये कालभेदात्स्यात् ॥ ३१ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । गवामयने हि संवत्सरसाध्ये एको मासः पञ्चषडहात्मकः । चत्वारोऽभिप्लववाख्याष्षडहाः । एकः पृष्ट्यः षडहः । तस्मिन् मासेऽभ्यस्यमाने पृष्ठ्यषडहमनुष्ठाय पुनरभिप्लवषडहानामनुष्ठानं कृत्वा पुनः पृष्ठ्यषडहस्यानुष्ठानं यदा क्रियते तदा पृष्ठ्यषडहाभ्यास-स्याभिप्लवषडहव्यवधानेन नैरन्तर्यं नास्ति । तत्रापि किं सर्वान्ते मध्वशनम्, उत प्रत्यभ्यासमिति **सन्देहे**,



सत्यप्यभिप्लवैर्व्यवधाने पश्चादपि षडहः करिष्यत इति तद्व्यापारोपरमो न वक्तुं शक्यत इति पूर्वन्यायेन सर्वान्ते स्यादिति **प्राप्ते सिद्धान्तः**, कालान्तरे षडहप्रयोगकरणेऽपि स करिष्यमाणः प्रयोगो विजातीय-योगात्तदुपरमः प्रत्यक्ष इति निमित्तसत्वान्नैमित्तिकं मध्वशनं प्रत्यभ्यासं कार्यमिति । तदाह **सूत्रे**, कर्मान्तरव्यवधाने मध्वशनावृत्तिः स्यात् । पुनष्षडहप्रयोगस्य **कालभेदादिति**

**इत्येकादशं गवामयने मध्वशनधृताशनयोः प्रतिमाससमावृत्त्यधिकरणम् (सूत्रम् ३१)**

**अथ द्वादशं द्वादशाहे सत्रिभिरपि मध्वशनाधिकरणम् (सूत्रे ३२-३३)**

**मधु न दीक्षिता ब्रह्मचारित्वात् ॥ ३२ ॥**

**(प्राश्येत वा यज्ञार्थत्वात् ॥ ३३ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । द्वादशाहो हि सत्रात्मकोऽहीनात्मकश्चेति । तत्र सत्रात्मके द्वादशाहेऽप्यस्ति पृष्ठ्यषडहः । तत्र ''संस्थिते पृष्ठ्यषडहे'' इति वाक्येन प्राप्तं मध्वशनं कार्यम्, उत नेति **सन्देहे**, न कार्यं मध्वशनम् । सत्रे ऋत्विजां यजमानत्वेन सर्वेषां दीक्षितत्वादीक्षितानां च ब्रह्मचर्यविधानाद् ब्रह्मचारिणश्च 'मधु मासं च वर्जयेत्'' इति मध्वशननिषेधात् । एवञ्च पूर्वत्र कर्मान्तरव्यवधानेन मध्वशनस्याबाधेऽपीह सत्रे बाधः स्यात् । क्रतुसाद्गुण्यस्य धृताशनेनापि सम्भवात् । मध्वशनविधेरहीनात्मकद्वादशाहविषयत्वेन संकोचादिति **प्राप्तम्** । तदाह **सूत्रे**, **मध्वित्यादि** । व्यक्तोऽर्थः । **सिद्धान्तस्तु** 'मधु मासं च वर्जयेद्ब्रह्मचारी' इति प्रत्यक्षवचनोक्तप्रतिषेधस्य पुरुषार्थ-त्वान्मध्वशनविधेः क्रत्वर्थत्वाद्भिन्नविषयत्वेनाविरोधादस्ति तत्रापि मध्वशनमिति ।

**यत्तु** प्रकृतितश्चोदकप्राप्तब्रह्मचर्यधर्मान्तर्गतमध्वशननिषेधस्त्वानुमानिकत्वान्न प्रत्यक्षवचनोक्त-क्रत्वर्थमध्वशनस्याहीनविषयतया सङ्कोचनायालमित्यस्ति तत्रापि मध्वशनमिति प्राचीनग्रन्थकारवचनम् **तच्चिन्त्यम्** । प्रकृतौ ब्रह्मचर्यशब्दस्य स्त्रीसङ्गादिनिषेधार्थकत्वेन तद्धर्मेषु मध्वशननिषेधस्याभावेनेह तदप्राप्तेरित्याहुः ।

**इति द्वादशं द्वादशाहे सत्रिभिरपि मध्वशनाधिकरणम् (सूत्रे ३२-३३)**

### अथ त्रयोदशं मानसस्य द्वादशाहाङ्गताऽधिकरणम् (सूत्राणि ३४-४४)

**मानसमहरन्तरं स्याद्भेदव्यपदेशात् ॥ ३४ ॥**

**(तेन च संस्तवात् ॥ ३५ ॥ अहरन्ताच्च परेण चोदना ॥ ३६ ॥ पक्षे सङ्ख्या सहस्रवत् ॥ ३७ ॥ अहरङ्ग वांऽशुवच्चोदनाभावात् ॥ ३८ ॥ दशमविसर्गवचनाच्च ॥ ३९ ॥ दशमेऽहन्निति च तद्गुणशास्त्रात् ॥ ४० ॥ सङ्ख्यासामञ्जस्यात् ॥ ४१ ॥ पश्वतिरेके चैकस्य भावात् ॥ ४२ ॥ स्तुतिव्यपदेशमङ्गेन विप्रतिषिद्धं व्रतवत् ॥ ४३ ॥ वचनादतदन्तत्वम् ॥ ४४ ॥)**

द्वादशाहचिन्ताप्रसङ्गादियं चिन्ता प्रासङ्गिकी । द्वादशाहे दशमस्याह्नः प्रस्तावे श्रूयते ''अनया त्वा पृथिव्या पात्रेण समुद्ररसया प्रजापतये त्वा जुष्टं गृह्णामीति मानसं प्राजापत्यं गृह्णाति'' इति मानसाख्यग्रहविधिः श्रूयते । स किं द्वादशाहशब्दितयागापेक्षया यागान्तररूपमहरन्तरम्, उत दशमस्याह्नोऽङ्गभूतं ग्रहान्तरमिति **सन्देहे**, ''वाग्वै द्वादशाहो मनो मानसम्'' इति वाक्येन द्वादशाहस्य वाक्त्वेन संस्तवान्मानसस्य मनस्त्वेन संस्तवाद्वाङ्मनसयोरिव द्वादशाहमानसयोर्भेदोऽवगम्यत इति यागान्तरमिति **प्राप्तम्** । तदाह **सूत्रे, मानसमित्यादि** । **व्यक्तोऽर्थः** । **सिद्धान्तस्तु**, ''दशमेऽहनि मानसाय प्रसर्पन्ति'' इति वाक्येन दशमस्याह्नो मानसमङ्गमित्यवगमाव्द्यपदेशभेदस्य च द्वादशाह-भूतावयविनो मानसग्रहस्यावयवत्वेनोपपत्तेर्दशमाह्नोऽङ्गम् । न यागान्तरं मानसग्रहणम् । न च ''मानसाय प्रसर्पन्ति'' इति वचनेन मानसस्य दशमाहाङ्गत्वे दशमस्याह्नो मानसान्ततैव स्यादिति ''पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते'' इति वचनविरोध इति शङ्क्यम् । विशेषवचनबलेन सामान्यवचन प्राप्तपत्नीसंयाजान्ततया दशमेऽहनि बाध इति ।

इति त्रयोदशं मानसस्य द्वादशाहाङ्गताऽधिकरणम् (सूत्राणि ३४-४४)

### अथ चतुर्दशं सत्रस्य बहुकर्तृकत्वाधिकरणम् (सूत्राणि ४५-५०)

**सत्रमेकः प्रकृतिवत् ॥ ४५ ॥**

**(वचनात्तु बहूनां स्यात् ॥ ४६ ॥ अपदेशः स्यादिति चेत् ॥ ४७ ॥ नैक-व्यपदेशात् ॥ ४८ ॥ सन्निवापश्च दर्शयति ॥ ४९ ॥ बहूनामिति चैकस्मिन् विशपवचनं व्यर्थम् ॥ ५० ॥)**



पूर्वन्यायेन शङ्कनात्सङ्गतिः । ''ऋद्धिकामास्सत्रमासीरन्'' इति श्रुतसत्राणि किमृद्धिकामा एकैकशः कुर्युः, किं बहवः संहत्य कुर्युरिति **सन्देहे**, आख्यातोपात्तसङ्ख्याया उपादेयकर्तृगततया विवक्षितत्वस्य षष्ठाद्यपादे **स्ववतोस्तु वचनादैककर्म्यं स्यात्** इत्यत्रोक्तावपीह प्रतिप्रयोगमैककर्तृकत्वे नानाप्रयोगगतकर्तृबहुत्वानुवादकतया बहुवचनोपपत्तेः पूर्वत्र द्वादशाहस्य दशमेऽह्नि विशेषवचन प्राप्त-बाध इति **प्राप्तम्** । तदाह **सूत्रे, सत्रमेकः कुर्यात्, प्रकृतिवदिति** । **सिद्धान्तस्तु**, आख्यात-गतसङ्ख्यायाः प्रयोगाङ्गतया विधेयसमर्पकत्वेन प्रवृत्तिविशेषकरत्वे सम्भवति निरर्थकप्रायानुवादकत्वा-योगाद्बहुकर्तृक एव प्रयोगो, नैककर्तृक इति चोदकप्राप्तैककर्तृकत्वबाधेनानेके सम्भूय कुर्युः सत्रमिति ।

इति चतुर्दशं सत्रस्य बहुकर्तृकत्वाधिकरणम् (सूत्राणि ४५-५०)

### अथ पञ्चदशं सत्रे यजमानानामेव ऋत्विक्त्वाधिकरणम् (सूत्राणि ५१-५८)

**अन्ये स्युर्ऋत्विजः प्रकृतिवत् ॥ ५१ ॥**

**(अपि वा यजमानाः स्युः ऋत्विजामभिधानसंयोगात्तेषां स्याद्यजमानत्वम् ॥ ५२ ॥ कर्तृसंस्कारो वचनादाधातृवदिति चेत् ॥ ५३ ॥ स्याद्विशये तन्न्यायत्वात् प्रकृतिवत् ॥ ५४ ॥ स्वाम्याख्याः स्युर्गृहपतिवदिति चेत् ॥ ५५ ॥ न प्रसिद्ध-ग्रहणत्वादसंयुक्तस्य तद्धर्मेण ॥ ५६ ॥ दीक्षितादीक्षितव्यपदेशश्च नोपपद्यतेऽर्थयो-र्नित्यभावित्वात् ॥ ५७ ॥ अदक्षिणत्वाच्च ॥ ५८ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । सत्रेषु किमार्त्विज्यमन्यैः कार्यम्, उत यजमानैरेवेति **सन्देहे**, पूर्वत्र चोदकप्राप्तैककर्तृकत्वस्य बाधेऽपीह चोदकाबाधायान्यैरेवार्त्विज्यं कार्यम् । ''ये यजमानाः'' इति वाक्यं तु ''यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्'' इत्युक्तेर्यच्छब्दयोगाद्यजमानोद्देशेन तत्संस्कारक-तयाऽऽर्त्विज्यविधिपरमिति **प्राप्तम्** । तदाह **सूत्रे, अन्य इत्यादि** । **व्यक्तोऽर्थः** । **सिद्धान्तस्तु**, आर्त्विज्यशब्दस्य ऋत्विक्कर्मभूताङ्गकलापपरत्वेन प्रकृतौ क्रतूपकारार्थस्येह यजमानसंस्कारार्थत्वेऽ-प्राकृतकार्यत्वापत्तेः । न च 'अध्वर्युर्गृहपतिं दीक्षयित्वा' इत्यादिवाक्यप्रापितदीक्षाधर्मसंयोगात् ''ये यजमानाः'' इति वाक्यमनुवाद इति शङ्क्यम् । तथात्वे तद्वाक्यानर्थक्यापत्तेः । तस्माद्यत्तच्छब्द-व्यत्यासेन ''ये ऋत्विजस्ते यजमानाः'' इति ऋत्विक्कार्ये आर्त्विज्ये यजमानाः कर्तृत्वेन विधीयन्त इति चोदकबाधेन यजमानानामेवार्त्विज्यमिति ।

इति पञ्चदशं सत्रे यजमानानामेव ऋत्विक्त्वाधिकरणम् (सूत्राणि ५१-५८)

### अथ षोडशं सत्राहीनयोर्विवेकाधिकरणम् (सूत्रे ५९-६०)

**द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् ॥ ५९ ॥**

**(यजतिचोदनादहीनत्वं स्वामिनां चास्थितपरिमाणत्वात् ॥ ६० ॥)**

द्वादशाहो हि सत्रात्मकोऽहीनात्मकश्चेत्युक्तमष्टमस्य द्वितीये पादे **सत्रमहीनश्च द्वादशाहः** इत्यत्र। कथं तस्योभयात्मकत्वमित्यत उभयलक्षणवत्त्वादिति भावेन सूत्रद्वयेन क्रमात्सत्रस्वरूपलक्षणमहीनस्वरूपलक्षणञ्च पूर्वत्र सत्रचिन्तायाः **प्रसङ्गादिहोच्यते । द्वादशाहस्य सत्रत्वमुपेयम्** । कुतः ? ''य एवं विद्वांसः सत्रमासते'' ''य एवं विद्वांसः सत्रमुपयन्ति'' **इत्यासनोपायिचोदने** सत्रलिङ्गे ''त्रयोदशरात्रमृद्धिकामा उपेयुः'' ''चतुर्दशरात्रं प्रतिष्ठाकामा आसीरन्'' इति त्रयोदशरात्रादौ सति ''चतुर्विंशतिपरमाः सप्तदशावरास्सत्रमासीरन्'' इति **यजमानबहुत्वे** च सति **सत्रशब्दाभिसंयोग**दर्शनाद्द्वादशाहेऽपि सत्रशब्दप्रयोगे तयोरेव निमित्तत्वादिति **प्रथमसूत्रार्थः** । द्वदशाहेऽपि ''द्वादशाहमृद्धिकामा आसीरन्'' इति सत्रलिङ्गस्य दर्शनात् । द्वितीयस्य तु द्वादशाहस्याहीनत्वमस्ति । कुतः? ''द्विरात्रेण यजेत,'' ''त्रिरात्रेण यजेत'' इत्यादिरूपेण द्विरात्रादेरेकादशरात्रान्तस्य यजतिचोदनावत्वादहीनत्वं यथा, तथा ''द्वादशाहेन प्राजाकामं याजयेत्'' इति **यजतिचोदनात्तथा स्वामिनां** यजमानानाम**स्थितपरिमाणत्वा**देतावन्त इति **नियतपरिमाणत्वाभावात्** सत्रे चोक्तरीत्याऽनियतपरिमाणत्वादिति । ननु किमत्र आसनोपायिचोदनावत्त्वे सति बहुकर्तृकतया प्रतीयमानत्वं विशिष्टं सत्रलक्षणम्, उत प्रत्येकम् । नाद्यः । ''आसीरन्'' ''उपेयुः'' इति द्वयोरपि चोदनयोरेकनिष्ठत्वाभावेनासम्भवापत्तेः । नान्त्यः । एकचोदनावति तदन्यचोदनाभावेनाव्याप्तेः । तथा यजतिचोदनावत्वे सति अनेककर्तृकत्वं विशिष्टमहीनलक्षणम् अथ प्रत्येकम् । नाद्यः । प्रसिद्धद्वादशाह एवानेकयजमानकत्वाभावात् । नान्त्यः । यजतिचोदनावत्स्वेकाहेष्वतिव्याप्तेरति चेत् । आसनोपायिचोदनान्यतरवत्वं सत्रलक्षणम् । यजतिचोदनावत्वे सत्यहर्गणत्वानेकयजमानकत्वान्यतरवत्वमहीनलक्षणमिति नैकाहेष्वतिव्याप्तिः, अहर्गणत्वाभावात् । नापि ''एतेन राजपुरोहितौ यजेयाताम्'' इत्युक्ताहीनेऽहर्गणत्वाभावेप्यनेकयजमानकर्तृकत्वसत्त्वान्नाव्याप्तिः । ''एको द्वौ बहवो वा द्वादशाहेन यजेरन्'' इत्युक्तेरेककर्तृकद्वादशाहेऽनेककर्तृकत्वाभावेऽप्यहर्गणत्वस्य सत्वान्नाव्याप्तिः । यदि तु ''एतेन राजपुरोहितौ'' इत्यस्याहीनत्वं नेति मतं तदा तु यजतिचोदनावत्वे सत्यहर्गणत्वम्, अनियतकर्तृकत्वं वाऽहीनत्वमित्याहुः ।

इति षोडशं सत्राहीनयोर्विवेकाधिकरणम् (सूत्रे ५९-६०)



### अथ सप्तदशं पौण्डरीके सकृदेव दक्षिणादानाधिकरणम् (सूत्राणि ६१-६७)

**अहीने दक्षिणाशास्त्रं गुणत्वात्प्रत्यहं कर्मभेदः स्यात् ॥ ६१ ॥**

**(सर्वस्य वैककर्म्यात् ॥ ६२ ॥ पृषदाज्यवद्वाऽह्नां गुणशास्त्रं स्यात् ॥ ६३ ॥ ज्यौतिष्टोम्यस्तु दक्षिणाः सर्वासामेककर्मत्वात्प्रकृतिवत्तस्मान्नाऽऽसां विकारः स्यात् ॥ ६४ ॥ द्वादशाहे वचनात्प्रत्यहं दक्षिणाभेदस्तत्प्रकृतित्वात्परेषु तासां सङ्ख्याविकारः स्यात् ॥ ६५ ॥ परिक्रियाविभागाद्वा समस्तस्य विकारः स्यात् ॥ ६६ ॥ भेदस्तु गुणसंयोगात् ॥ ६७ ॥)**

अहीनप्रसङ्गात्तत्सम्बद्धदक्षिणाविषयचिन्ताऽत्रेति सङ्गतिः । ''पौण्डरीकेणैकादशरात्रेण स्वाराज्यकामो यजेत'' इति श्रुते पौण्डरीके एकादशरात्रात्केऽहीने ''अयुतं दक्षिणा । अश्वसहस्रमेकादशम्'' इति श्रुतम् । तत्र गावां दशसहस्रमेकादशमश्वसहस्रञ्च किं प्रत्यहं देयम्, उत सकृदिति सन्देहे, दक्षिणा हि प्रयोगाङ्गकर्त्रानत्यर्था । तया सामर्थ्यात्प्रयोगाङ्गमपि । प्रकृतिभूते ज्योतिष्टोमे ''दक्षिणा सोमस्य'' इति प्रधानार्थतया षष्ठीश्रुत्या विहिता सती प्रकृते प्रतिकर्मावसायिभिश्चोदकैः प्रतिप्रधानमङ्गान्तरवत्प्राप्तस्य द्वादशशतस्य स्थाने निविष्टं गवायुतमश्वसहस्रं चाऽङ्गान्तरात्प्रतिप्रधानमावर्तते । न च दीक्षणीयाद्यङ्गवत्तन्त्रत्वम् । सुत्याकालीनत्वेन पश्वादिवदतन्त्रत्वात् । अतः प्रत्यहं गवामयुतमश्वसहस्रं च देयमिति प्राप्तम् । तदाह सूत्रे, **अहीने पौण्डरीकादौ दक्षिणाशास्त्रं कर्मभेदात्प्रत्यहं स्यात्** । **दक्षिणाया गुणत्वादिति । सिद्धान्तस्तु,** प्रकृतौ दक्षिणायाः प्रधानाङ्गतया श्रुतावपि प्रधानमात्रस्याफलत्वेन साङ्गप्रधानप्रयोगस्यैव फलहेतुत्वेन प्रयोगद्वारैव दक्षिणा प्रधानाङ्गं वाच्यम् । प्रयोगश्चैकप्रयोगवचनेन परिगृहीतानामेकादशानामह्नामेक एव । फलहेतुतया चिकीर्षितसिध्द्यर्थं सहायोपादानमिति चिकीर्षितप्रयोगस्यैकत्वात्तदर्थं सहायोपादानमप्येकमेव । तदैक्यात्तदानतिरप्येकैवेति तदर्थदक्षिणादानमप्येकमेवेति सकृदेव दानं न प्रत्यहमिति । फलं तु, व्यक्तम् ।

इति सप्तदशं पौण्डरीके सकृदेव दक्षिणादानाधिकरणम् (सूत्राणि ६१-६७)

### अथाष्टादशं पौण्डरीके सर्वासां दक्षिणानां विभज्य नयनाधिकरणम् (सूत्राणि ६८-७१)

**प्रत्यहं सर्वसंस्कारः प्रकृतिवत्सर्वासां सर्वशेषत्वात् ॥ ६७ ॥**

**(एकार्थत्वान्नेति चेत् ॥ ६९ ॥ स्यादुत्पत्तौ कालभेदात् ॥ ७० ॥ विभज्य तु संस्कारवचनाद्द्वादशाहवत् ॥ ७१ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । पौण्डरीके गवामयुतं एकादशमश्वसहस्रञ्च किं प्रत्यहं माध्यन्दिने सवने नेतव्यम्, किं वा यत्र क चाहनि माध्यन्दिने सवने नेतव्यम्, उत प्रत्यहं सहस्रं सहस्रमिति विभज्य दशस्वहस्सु नेतव्यम् । एकादशेऽहनि त्ववशिष्टमश्वसहस्रमात्रं नेतव्यमिति त्रेधा **सन्देहे**, सर्वमूलप्रकृतौ ज्योतिष्टोमे सोम आत्मीय एव माध्यन्दिने सवने नीतयैव दक्षिणयोप्रकृतो दृष्ट इति यत्सोमोपकारार्था दक्षिणा तदीये माध्यन्दिने नीतैव तदुपकारायालमितीह पौण्डरीके प्रत्यहं क्रियमाणसोमोपकारार्था दक्षिणा सर्वेषां माध्यन्दिने सवने नेतव्येति । पूर्वत्र प्रत्यहं दक्षिणाया दानबाधोक्तावपि नेह नयनबाध इत्येकः **पूर्वपक्षः । तदाह सूत्रे, प्रकृतिवत्सर्वासां दक्षिणानां प्रत्यहं नयनरूपसंस्कारः स्यात्** । कुतः? तस्याः **सर्वशेषत्वादिति** । प्रकृतौ हि माध्यन्दिनेन सवनेन संस्कृताया एव दक्षिणाया उपकारकत्वं विवक्षितम् । न तु तत्र स्वीयत्वमपि । अतोऽत्र यत्र काप्यहनि नीतया दक्षिणाया कृत्स्नक्रतूपकारोपपत्तेर्न सर्वत्र नेतव्या । सकृत्तन्नयनसंस्कृतायाः पुनर्नयनसंस्कारेण कृत्याभावादिति **द्वितीयः** । **सिद्धान्तस्तु, गणेषु द्वादशाहस्य** इत्युक्त्या पौण्डरीकस्य द्वादशाहो हि प्रकृतिः । तत्र ''अन्वहं द्वादशशतं ददाति'' इति विभज्य नयनं श्रुतमितीहापि चोदकानुरोधेन विभज्य नयनम् । किञ्च दक्षिणाया नयनं नादृष्ट-संस्कारार्थम् । किन्तु ऋत्विग्भ्यो दानार्थम् । अतो यस्मिन्नहनि यावद्दीयते तावतामेव नयनम् । नान्येषामिति विभज्यैव नयनमिति ।

इत्यष्टादशं पौण्डरीके सर्वासां दक्षिणानां विभज्य नयनाधिकरणम् (सूत्राणि ६८-७१)

**अथैकोनविंशं मानवीषु पञ्चदशानामेव सामिधेनीत्वाधिकरणम् (सूत्राणि ७२-७५)**

**लिङ्गेन द्रव्यनिर्देशे सर्वत्र प्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत् ॥ ७२ ॥**

**(यावदर्थं वाऽर्थशेषत्वादल्पेन परिमाणं स्यात्तस्मिंश्च लिङ्गसामर्थ्यम् ॥ ७३ ॥ आग्नेये कृत्स्नविधिः ॥ ७४ ॥ ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिस्स्यात् ॥ ७५ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । कचिद्विकृतिविशेषे श्रूयते ''मानोर्ऋचस्सामिधेन्यो भवति'' इति ।



तत्र किं सर्वाः मनुसम्बन्धिन्यः संहितायां पठिताः सामिधेनीत्वेन वाच्याः, उत प्रकृतितश्चोदकप्राप्त-पञ्चदशत्वसङ्ख्या यावतीभिः पूर्वते तावत्यो वाच्याः । नाधिका इति सन्देहे, पूर्वत्र यथा यस्य कस्यचिन् माध्यन्दिने नयने न्यायतस्सर्वासां दक्षिणानां नयने प्राप्तेऽपि वचनाद्विभज्य विनियोगस्तथाऽत्रापि प्राकृतपञ्चदशत्वसङ्ख्यापूरणार्थं कासाञ्चिदुपादाने प्राप्तेऽपि प्रत्यक्षवचनेन सर्वासामृचामविशेषेण प्राप्त्य वगमात्प्राकृतसङ्ख्याबाधेन सर्वासामुपादानमिति **प्राप्तम्** । तदाह **सूत्रे**, मनोर्ऋच इति पदाद्द्रव्यनिर्देशे मनोरिति मनुशब्दवत्त्वरूपलिङ्गेन सर्वत्र सर्वासामृचां **प्रत्ययः** प्रतीतिः **स्यात्** । कुतः? मनुशब्द-वत्त्वरूपलिङ्गस्य **सर्वगामित्वादाग्नेयवत्** यथा ''ऋजीषाणामाग्नेयेन संवत्सरमुपधाने आसीत सूक्तेन सूक्तस्याविच्छेदाय'' इत्यत्र आग्नेयसूक्तेनेति सर्वाग्नेयसूक्तोपादानं तथेति । **सिद्धान्तस्तु**, प्रत्यक्षवचन-प्राप्तं मानवऋगुपादानमृचां न संस्कारार्थम् । येन संस्कार्याणां प्रधानत्वाद्यावत्संस्कार्यमुपादानं स्यात्किन्त्वग्निसन्निधानार्थम् । तत्र च कपिञ्जलाधिकरणन्यायेन तिसृणामृचामुपादाने प्राप्ते चोदकानु-ग्रहाय पञ्चदशानामुपादानम् । नाधिकानामिति ।

इत्येकोनविंशं मानवीषु पञ्चदशानामेव सामिधेनीत्वाधिकरणम् (सूत्राणि ७२-७४)

**अथ विंशं वाससि मानोपावहरणयोरनुष्ठानाधिकरणम् (सूत्रं ७६)**

**वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् ॥ ७६ ॥**

प्राकृतस्य वासोगतैकत्वस्याहर्गणेषूत्तरनये बाधं वक्तुं प्राप्तसूत्रमिदम् । मानोपावहरणमिति द्वन्द्वैकवद्भावः । प्रकृतौ ज्योतिष्टोमे सोमस्य वाससि मानमुपावहरणञ्च क्रियते । कुतः? ''वाससा मिनोति'' ''वाससोऽपावहरति'' इति तद्वचनादिति सूत्रार्थः । मिनोति प्रक्षिपति । उपावहरति अभिषवार्थं नयतीत्यर्थः ।

इति विंशं वाससि मानोपावहरणयोरनुष्ठानाधिकरणम् (सूत्रं ७३)

**अथैकविंशमहर्गणेऽया द्वासोऽन्तरोत्पादनाधिकरणम् (सूत्रं ७७)**

**तत्राहर्गणेऽर्थाद्वासः प्रकृतिः स्यात् ॥ ७७ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । पूर्वत्र वाससि मानं, वाससा चोपावहरणमिति स्थितौ, किं द्वादशाहादावहर्गणे प्रत्यहं मानोपावहरणार्थं वासोऽन्तरं सम्पाद्यम्, उत चोदकप्राप्तमेकमेवेति **सन्देहे**,

वासोऽन्तरे मानाभावात्पूर्वत्र यथा चोदकप्राप्तपञ्चदशत्वाबाधाय न सर्वासां मनुशब्दवतीनामुपादानं तथाऽत्रापि चोदकप्राप्तैकवासस्त्वाबाधाय न वासोऽन्तरोपादानम् । न चोपावहरणं वाससो माध्यन्दिनीयाभिषवकाले ग्रावस्तुते दानोक्तेरहरन्तरेऽन्यदुपादेयमिति शङ्क्यम् । ग्रावस्तुते वाससो दानस्य प्रतिपत्तित्वान्निश्शेषं कृतकार्यस्यैव वाससः प्रतिपत्तेर्युक्तत्वेन सर्वान्तेऽपि करणे दोषाभावादिति **प्राप्ते सिद्धान्तः**, स्यादेवं, यदि वासोदानं प्रतिपत्तिस्स्यात् । न चैवम् । किन्तु ग्रावस्तुतोऽबृवाण-स्योत्साहजनेन दृष्टार्थतालाभात् ''ग्रावस्तुते दद्यात्'' इति चतुर्थीश्रवणाच्च ग्रावस्तुदर्थमेव दानमित्यर्था-दुपावहरणार्थं प्रत्यहं वासोऽन्तरं सम्पाद्यमिति । तदाह **सूत्रे, तत्राहर्गणे त्विति** । **व्यक्तोऽर्थः** । **यत्तु शास्त्रदीपिकायां** हविर्धाने शकटेऽवस्थितस्सोमः प्रत्यहं चोदकेन यावानभिषवार्थं प्राप्तस्तावानेव भेदेन वाससाऽभिषवार्थमुपावहरणीयः । अवशिष्टश्शकट एव वाससोऽपनद्धोऽवतिष्ठत इत्यर्थादहरन्तरे वाससो भेद इति । तच्चिन्त्यम् । प्रथमेऽहन्युपात्तेनैव वाससाऽहरन्तरेष्वप्युपावहरणसम्भवात्प्रत्यहं वासोभेदा-सिद्धेः । प्रत्यहं माध्यन्दिने ग्रावस्तुते वासोदानात्प्रत्यहं वासोभेद इत्येव वाच्यत्वादित्याहुः । **फलं** व्यक्तम् ।

इत्येकविंशमहर्गणेऽर्थाद्वासोऽन्तरोत्पादनाधिकरणम् (सूत्रम् ७७)

**अथ द्वाविंशमुपावहरणार्थमेव वासोन्तरोत्पादनाधिकरणम् (सूत्रे ७८-७९)**

**मानं प्रत्युत्पदयेत्प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ ७८ ॥**

**(हरणे वा श्रुत्यसंयोगादर्थाद्विकृतौ तेन ॥ ७९ ॥)**

प्रासङ्गिकी **सङ्गतिः** । पूर्वत्राहर्गणे उपावहरणार्थं वासोऽन्तरं सम्पाद्यमित्युक्तम् । तत्किं वाससि मानकाल एव सम्पाद्यम्, उतोपावहरणकाल इति **सन्देहे**, प्रकृतौ क्रयकाले यस्मिन् वाससि मानं कृतं तेनैव वाससाऽभिषववेलायामुपावहरणं कृतमिति मानकाले सम्पादितवासैवोपावहरणस्य प्रकृतौ दर्शनाद्यथाप्रकृति विकृतावप्यहर्गणे मानकाल एव वासोऽन्तरं सम्पाद्यमिति **प्राप्तम्** । तदाह **सूत्रे, मानं प्रति** मानकाल एव वासोऽन्तर**मुत्पादयेत्, प्रकृतौ तेन** मानवाससोपावहरणस्य **दर्शनादिति** । **सिद्धान्तस्तु**, मानोपावहरणयोर्वाससः एकत्वेन मानकालीनत्वमुपावहरणवाससः आर्थिकमेव । न शास्त्रीयम् । ''वाससोऽपावहरति'' इत्येव श्रवणात् । ततश्च प्रकृतावार्थिकस्य विकृतावनतिदेशादे-



कस्मिन् वाससि मित्वोऽपनह्य शकटे स्थापितस्य तस्य सोमस्योऽपावहरणवेलायां वासोऽन्तरापेक्षायां तदैव तदुत्पाद्यम् । न मानकाल एवेति ।

इति द्वाविंशमुपावहरणार्थमेव वासोऽन्तरोत्पादनाधिकरणम् (सूत्रे ७८-७९)

**इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते दशमाध्यायस्य षष्ठः पादः ।**

अस्मिन् पादे अधिकरणानि २२ सूत्राणि ७९

आदितः अधिकरणानि ७४७ सूत्राणि २१८४

## अथ दशमाध्याये सप्तमः पादः

पूर्वपादे ज्योतिष्टोमतद्विकृत्योरेव बाधाबाधचिन्ता कृता । अत्र पादे दर्शपूर्णमासविकृतिष्वेव सा चिन्ता प्रस्तूयते । प्रकृतिविकृतीत्युभयत्र बाधाबाधचिन्तानन्तरमन्यतरत्र तच्चिन्ताया अनन्तरप्रकृतत्वात् ।

**अथ प्रथमं ज्योतिष्टोमे प्रत्यङ्गं हविर्भेदाधिकरणम् (सूत्रे १-२)**

**पशोरेकहविष्ट्वं समस्तचोदितत्वात् ॥ १ ॥**

**(प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्प्रकल्पनत्वात् ॥ २ ॥)**

''अग्नीषोमीयं पशुमालभेत'' इति श्रुतः पशुः किं कृत्स्नोऽप्येकं हविः, उत पश्ववयवो हृदयादिरेव हविरिति **सन्देहे**, कृत्स्नपशोरेव तद्धितेन देवतासम्बन्धोक्तेः कृत्स्नपशुरेकमेव हविः । न च पशोरेव हविष्ट्वे प्रकृतित एव ''मध्यात्पूर्वार्धाच्चावदाय होतव्यम्'' इति द्व्यवदानप्राप्तेः ''हृदयस्याग्रेऽवद्यति'' इत्यादिवचनानर्थक्यमिति वाच्यम् । चोदकतो मध्यपूर्वार्धाभ्यां प्राप्तस्य द्व्यवदानस्यापवादेन 'अवद्यति' इत्यनूद्य हृदयादिप्रदेशविध्युपपत्तेः । न च मध्यमपूर्वार्धप्रदेशबाधेऽपि चोदकप्राप्तद्व्यवदानस्य हृदया-द्यनेकदेशविधिर्व्यर्थ इति वाच्यम् । एकदेशावदानोपदेशादेव द्व्यवदानस्यापि बाधादिति **प्राप्तम्** । **तदाह सूत्रे, पशोरेकहविष्ट्वम् कुतः? समस्तस्य** पशोर्देवतासम्बन्धितया **चोदितत्वादिति** । **सिद्धान्तस्तु**, प्रकृतौ हविस्संस्कारकतया श्रुतमवदानमिह ''हृदयस्याग्रेऽवद्यति'' इति हृदयादिषु श्रूयमाणं मांस-विशेषरूपाणां हृदयादीनामेव हविष्ट्वमवगमयति । न पशोः । तस्य देवतासम्बन्धोऽपि हृदयादिहविः-प्रकृतित्वेनैव । न हविष्ट्वेन । मध्यपूर्वार्धापवादतया देशविशेषविधिपरत्वे च हृदयादिशब्दानां

देशलक्षकत्वापत्तेः । बाह्याभ्यन्तरसर्वाङ्गोद्धारे च पशोर्नाशापत्त्या होमकालीनत्यागे पशोर्देवतासम्बन्धासिद्धेश्च । तस्माद्धृदयाद्यवदानवचनाद्विशसनवचनाच्च हृदयादीन्येव हवींषि । पशुस्तु तत्प्रकृतिद्रव्यतया प्रणाड्या सोमस्येव यागाङ्गमिति तान्येव देवतायै देयानीति । **फलं तु पूर्वपक्षे** पशोरेवैकादशकृत्वोऽवदाय होमः कार्यः । **सिद्धान्ते तु**, हृदयादेरेव हविष्ट्वात्तेभ्यो द्विरवदाय होमः कार्य इति ।

इति प्रथमं ज्योतिष्टोमे प्रत्यङ्गं हविर्भेदाधिकरणम् (सूत्रे १-२)

## अथ द्वितीयं पशोर्हृदयादिभिरेवाङ्गविशेषैर्यागानुष्ठानाधिकरणम् (सूत्राणि ३-९)

**हविर्भेदात्कर्मणोऽभ्यासस्तस्मात्तेभ्योऽवदानं स्यात् ॥ ३ ॥**

**(आज्यभागवद्वा निर्देशात्परिसङ्ख्या स्यात् ॥ ४ ॥ तेषां वा व्यवदानत्वं विवक्षन्नभिनिर्दिशेत्पशोः पश्चावदानत्वात् ॥ ५ ॥ अंसशिरोऽनूकसक्थिप्रतिषेधश्च तदन्यपरिसङ्ख्यानेऽनर्थकः स्यात्प्रदानत्वात्तेषां निरवदानप्रतिषेधः स्यात् ॥ ६ ॥ अपि वा परिसङ्ख्या स्यादवदानीयशब्दत्वात् ॥ ७ ॥ अब्राह्मणे च दर्शनात् ॥ ८ ॥ शृताशृतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वं ॥ ९ ॥)**

पूर्वं सामान्येनोक्तप्रमेये विशेषचिन्तनादत्र **सङ्गतिः** । पूर्वत्र पश्वङ्गान्येव हवींषीति सामान्येनोक्तम् । तत्र किं यत्किञ्चिदेवाङ्गं हविः, उत सर्वाण्यपि, अथ हृदयादीन्येवेति **सन्देहे**, ''पशुं विशास्ति'' इत्यादिविशसनादिवाक्यावगतं पशोरवयवद्वारकं यागसाधनत्वमेकेनावयवेन यागे कृतेऽपि निर्वहतीति नानेकैस्समुदितैस्तदनुष्ठानं युक्तम् । हृदयादिग्रहणं त्ववयवमात्रोपलक्षणार्थम् । न तु तेषां यागसाधनत्वसिध्द्यर्थमिति यत्किञ्चिदेवैकमङ्गं हविरित्येकः **पूर्वपक्षः** । सत्यां गतावुपलक्षणार्थत्वायोगात्पश्वाख्यावयविन एव देवतासम्बन्धश्रवणादवयविनश्च विशसनादिवचनेनावयवद्वारैव देवतासम्बन्धनिर्वाहादयवविनस्सर्वावयवेषु व्यासज्यवृत्तित्वात्सर्वाण्यप्यङ्गानि हवींषीति सर्वैरपि यष्टव्यमिति **द्वितीयः** । तदाह **सूत्रे**, विशसनश्रवणात्पश्ववयवानां सर्वेषां हविष्ट्वे **हविर्भेदादवदानकर्मणः** सर्वेष्ववयवेष्वभ्यासस्स्यात् । **तस्मात्सर्वेभ्यस्ते**भ्योऽवदानं **स्यादिति** । **सिद्धान्तस्तु**, यदा हि विशसनश्रवणात्पशोर्न हविष्ट्वेन देवतासम्बन्धः । अपि तु हविःप्रकृतित्वेनैवेत्यवगम्यते । तदाऽस्ति यद्यप्यविशेषात्सर्वेषामवयवानां हविष्ट्वप्रसक्तिः । तथापि हृदयादिष्वेव यागार्थद्रव्यसंस्कारत्वेनावधृतावदानदर्शनात्तेषामेव हविष्ट्वं सिद्धमिति तद्द्वारैव पशोर्यागसाधनत्वोपपत्तावङ्गान्तराणां हविष्ट्वकल्पने प्रमाणं नेति हृदयादिभ्यः परिगणितेभ्य एवावदानम् । नाधिकेभ्य इति ।

इति द्वितीयं पशोर्हृदयादिभिरेवाङ्गविशेषैर्यागानुष्ठानाधिकरणम् (सूत्राणि ३-९)



## अथ तृतीयं ज्योतिष्टोमेऽनिज्याशेषैस्त्र्यङ्गैः स्विष्टकृद्धोमाधिकरणम् (सूत्रे १०-११)

**इज्याशेषात्स्विष्टकृदिज्येत प्रकृतिवत् ॥ १० ॥**

**(त्र्यङ्गैर्वा शरवद्विकारः स्यात् ॥ ११ ॥)**

एवं पशोर्न हविष्ट्वाम् । किन्त्वङ्गानामेव । तत्रापि न सर्वेषाम् । किन्तु हृयदादीनामेवेति पूर्वनयद्वयेन स्थिते सत्यत्र बाधाबाधचिन्तेति **सङ्गतिः** । अग्नीषोमीयपशावेव ''त्र्यङ्गैस्स्विष्टकृतं यजति'' इति श्रूयते । तत्र किं हृदयादिष्वेवैकादशस्वङ्गेषु यैः कैश्चिदङ्गैः स्विष्टकृद्यागः कार्यः, उत हृदयादिभ्य एकादशभ्योऽन्यैर्दोःप्रभृतिभिस्त्र्यङ्गैरिति **सन्देहे**, प्रकृतौ ''सकृदुत्तरार्धात्स्विष्टकृतेऽवद्यति'' इति वचनादिज्याशेषस्य पुरोडाशस्योत्तरार्धादवदाय स्विष्टकृद्यागः कृत इतीहापि चोदकाबाधायेज्याशेषैर्हृदयादिभिरेव । तत्र सर्वैः स्विष्टकृद्यागे प्राप्ते, ''अङ्गैः कार्य इति यत्तत् त्रिभिरेव'' हृययादीनां मध्य एव त्र्यङ्गानामुत्तरार्धादवदाय स्विष्टकृद्यागः कार्य इति वक्तुं त्र्यङ्गैरिति वचनं । न त्वङ्गान्तरैरिति वक्तुमिति **प्राप्तम्** । तदाह **सूत्रे**, **इज्येत्यादि** । **व्यक्तोऽर्थः** । **सिद्धान्तस्तु**, स्यादेवं । यदि ''अङ्गैः स्विष्टकृतं यजति इति यत्तत् त्रिभिः'' इति त्रित्वविधिः सम्भवेत । न चैवम् । तथा सति ''अङ्गैः'' इत्यस्य स्विष्टृदन्विततया निराकांक्षत्वेन त्रिशब्देन सामर्थ्यविधातात्समर्थाधिकारविहितसमासानुपपत्तेः । ''दोष्णः पूर्वार्धादग्नये समवद्यति'' ''गुदस्य मध्यतः'' ''श्रोण्या जघनतः'' इत्युक्त्वा ''त्र्यङ्गैस्स्विष्टकृतं यजति'' इति श्रुतवाक्यशेषेणानिज्याशेषाणामेव स्विष्टकृत्साधनत्वेन विधानात्तैरेव स्विष्टकृद्यागः कार्य इति चोदकप्राप्तेज्याशेषाणां बाध एव । न च प्राकृतेज्याशेषाणां प्रतिपत्त्यर्थत्वाद्वचनोक्तानिज्याशेषाणां च स्विष्टकृत्साधनत्वाच्चोदकप्राप्तेज्याशेषकार्येऽनिज्याशेषाणामविधानात्कथं बाध इति शङ्क्यम् । प्रतिपत्त्यर्थानामपीज्याशेषाणां स्विष्टकृत्साधनत्वमप्यार्थिकमस्ति । तस्योभयार्थत्वात् । तत्साधनत्वेन विधीयमानानामप्यनिज्याशेषाणामार्थिके प्राकृतेज्याशेषकार्ये विधिरस्तीति तद्बाधस्य युक्तत्वादिति । तदाह **सूत्रे, त्र्यङ्गैर्वा शरवद्विकारः स्यादिति** ।

इति तृतीयं ज्योतिष्टोमेऽनिज्याशेषैस्त्र्यङ्गैः स्विष्टकृद्धोमाधिकरणम् (सूत्रे १०-११)

## अथ चतुर्थमध्यूध्न्या इडाभक्षविकारताऽधिकरणम् (सूत्राणि १२-१३)

**अध्यूध्नी तु होतुस्त्र्यङ्गवदिडाभक्षविकारः स्यात् ॥ १२ ॥**

**(शेषे वा समवैति तस्माद्रथवन्नियमः स्यात् ॥ १३ ॥ अशास्त्रत्वात्तु नैवं**

**स्यात् ॥ १४ ॥ अपि वा दानमात्रं स्याद्भक्षशब्दानभिसम्बन्धात् ॥ १५ ॥ दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्याच्छेषं प्रत्यविष्टित्वात् ॥ १६ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः। दैक्षपशावेव श्रूयते ''अध्यूध्नीं होत्रे हरति'' इति । अध्यूध्नी मांसविशेषः । सेयमध्यूध्नी प्राकृतेडाभक्षस्य निवर्तिका, अथ नेति **सन्देहे, पूर्वपक्षः**, हृदयादीनिज्याशेषानिडापात्रे निक्षिप्य ''अनस्थिभिरिडां वर्धयन्ति'' इतिवचनेनानस्थिशब्दितमांसविशेषैरिडाभिवृद्धिश्रवणेनानिज्याशेषा अपि तत्र निक्षिप्यन्ते । तथा चाध्यूध्न्यपीडायामन्तर्भूता । सा चेडायामृत्विग्भिर्विभज्य भक्ष्यमाणायां कदाचिद्धोतृभागे स्यात् । कदाचिदन्यस्येत्येवमनियमेन होतुः प्राप्ता सती होतुरेव । नान्यस्येत्यनेन वचनेन नियम्यते । ततश्च **यजुर्युक्तस्त्वध्वर्योः** इत्यत्रैवाध्याये तृतीयपादीयान्त्यनयोक्तदिशा वाजपेये ''यजुर्युक्तं रथमध्वर्यवे ददाति'' इति यजुर्युक्तो रथोऽध्वर्युदक्षिणाया यथा न विकारः, तथाऽध्यूध्नी होतुरिडाभक्षणस्य न विकार इति । पूर्वत्र त्र्यङ्गस्येज्याशेषबाधकत्वेऽपीहाध्यूध्न्या नेडाभक्षबाधकतेति । **सिद्धान्तस्तु**, स्यादेवं यदि ''अनस्थिभिः'' इति वाक्यं विधिः स्यात् । न चैवम् । तस्य ''वर्धयन्ति'' इति वर्तमानसरूपत्वेनानुवादत्वात् । अनुवादोऽपि ''अथ यद्यत्परिशिष्यते तत्तत्समवत्तधान्यामानयति तद्धृदयं प्रास्यति जिह्वां **वक्षस्तनिममतस्तेस्तेस्या** वनिष्ठुम्'' इति वाक्योक्तानामेव । तत्र हृदयादिवनिष्ठ्वन्तानीडायां प्रास्यतीत्युक्तहृदयादिवनिष्ठ्वन्तेषु चाध्यूध्न्या अपाठेनानस्थिवाक्येनानुवादायोगात् । होत्रे हरन्ति यत्तदध्यूध्नीमित्यपूर्वतयेडाभक्षणकार्ये विधानाद्भवति तद्विकारोऽध्यूध्नी इति । तदाह **सूत्रे**, यथा **त्र्यङ्गानीज्याशेषविकारः**, तथा **अध्यूध्न्यपि होतुरिडाभक्षविकार** इति । **फलं व्यक्तम्** ।

इति चतुर्थमध्यूध्न्या इडाभक्षविकारताऽधिकरणम् (सूत्राणि १२-१६)

## अथ पञ्चमं वनिष्ठोर्भक्षविकारताधिकरणम् (सूत्रम् १७)

**अग्नीधश्च वनिष्ठुरध्यूध्नीवत् ॥ १७ ॥**

आतिदेशिकी सङ्गतिः । दैक्षपशावेव ''वनिष्ठुमग्नीधे हरन्ति'' इति श्रूयते । वनिष्ठुर्नाम वपासमीपवर्ती मेदोऽपरपर्यायो मांसविशेष इत्याहुः । तत्र किं वनिष्ठुरग्नीधश्चोदकप्राप्तो भक्षणस्य विकारः, उत नेति **सन्देहे**, पूर्वत्राध्यूध्न्या इडायां प्राप्त्यभावेन होत्रिडाभक्षविकारत्वे पूर्वनयोक्तवाक्ये वनिष्ठोरिडायां प्रासनश्रवणेन ऋत्विग्भिरिडायां विभज्य भक्ष्यमाणायां, कदाचिदग्नीधः, कदाचिदन्यस्येत्यनियमे अग्नीध एवेति नियमार्थमिदं वचनमिति न तस्य प्राकृतभक्षविकारो वनिष्ठुरिति **प्राप्ते सिद्धान्तः**, स्यादेवं



वनिष्ठोरिडायां प्रासनं भक्षार्थं स्यात् । न चैवम् । ''भक्षयितुं प्रास्यति'' इति भक्षसंयोगस्य वा, ''अग्नीधे'' इति चतुर्थीनिदेशस्य वाऽभावात् । किन्तु ''मेदसोऽपस्तृणाति'' ''मेदसाऽभिघारयति'' इति वचनेनेडासंस्कारार्थमेवेत्यप्राप्ता वनिष्ठुरपूर्वत्वात्प्राकृतभक्षणकार्येऽग्नीधो विधीयत इत्यध्यूध्नीव भवति तद्विकार इति । तदाह **सूत्रे, अग्नीधश्चेत्यादि** । **व्यक्तस्सूत्रार्थः** । अत्र भाष्ये **वनिष्ठुरग्नीध** इति सामान्यतः श्रवणेऽपि **तन्त्ररत्ने** ''अग्नीध इति षष्ठ्यापि चतुर्थ्यर्थलाभादिहापि भक्षविकारः'' इत्युक्त्या वनिष्ठुरग्नीध इति षष्ठ्यन्तपाठोऽभिमतः । **शास्त्रदीपिकायां** तु अग्नीधे वनिष्ठुमिति चतुर्थ्याऽग्नीत्सम्प्रदानकहरणे वनिष्ठुर्विधीयत इत्युक्तम्तत्कथमिति चिन्त्यमित्याहुः । **वार्तिकाभरणेऽपि** चतुर्थ्यन्तत्वमेवाश्रित्य तद्विकारत्वमुक्तम् ।

इति पञ्चमं वनिष्ठोर्भक्षविकारताधिकरणम् (सूत्रम् १७)

## अथ षष्ठं मैत्रावरुणस्यापि शेषभक्षास्तित्वाधिकरणम् (सूत्रे १८-१९)

**अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् ॥ १८ ॥**

**(स्याद्वा होत्रध्वर्युविकारत्वात्तयोः कर्माभिसम्बन्धात् ॥ १९ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । दैक्षपशावेव होतृगणस्थप्रैषानुवचनकर्ता मैत्रावरुणनामाऽस्ति कश्चिदृत्विक् । तस्य किमिडाभक्षोऽस्ति, उत नेति **सन्देहे**, प्रकृतौ ''यजमानपञ्चमा भक्षयन्ति'' इति यजमानस्याध्वर्य्वादिऋत्विक्चतुष्टयस्य चेडाभक्षवचनेन मैत्रावरुणस्य प्रकृतौ भक्षाभावेन चोदकतोऽस्य भक्षप्राप्तेरभावात्तत्स्थाने विधीयमानमिडाभक्षणं नास्ति मैत्रावरुणस्येति **प्राप्तम्** । तदाह **सूत्रे, अप्राकृत**त्वात्प्राकृतभक्षहीनत्वा**न्मैत्रावरुणस्याभक्षत्व**मिडायां भक्षाभाव इति । **सिद्धान्तस्तु, भक्षाणां तु प्रीत्यर्थत्वादकर्म स्या**दित्यत्रैवाध्याये द्वितीयपादे कर्तृसंस्कारार्थं भक्षणमित्युक्ततयाऽध्वर्य्वादिसंस्कारार्थत्वादिडाभक्षणस्य मैत्रावरुणस्य च ''मैत्रावरुणः प्रेष्यति चानु चाह'' इत्यध्वर्युकार्ये प्रैषे हौत्रे कार्येऽनुवचने च विधानात्तत्कार्यापत्त्या तद्धर्मलाभान्मैत्रावरुणस्याप्यस्तीडभक्ष इति । अत्र यद्यपि **भक्षाश्रवणाद्दानशब्दः परिक्रये** इति तृतीयचतुर्थपादीयान्त्यनये भक्षणं द्रव्यप्रतिपत्त्यर्थमित्युक्तेः ''यजमानपञ्चमा इडां भक्षयन्ति'' इति वाक्ये द्वितीयासंयोगेन भक्षणं द्रव्यप्रतिपत्त्यर्थम् । तथापि कर्मकर्तृभिरेव भक्षणेन द्रव्यं प्रतिपाद्यमिति कर्तृनियमस्यान्यत्प्रयोजनं नेति दृष्टरूपसंस्कारस्यैव प्रयोजनत्वेन कल्पनादस्ति संस्कारार्थत्वमपीत्याहुः ।

इति षष्ठं मैत्रावरुणस्यापि शेषभक्षास्तित्वाधिकरणम् (सूत्रे १८-१९)

### अथ सप्तमं मैत्रावरुणस्यैकभागताधिकरणम् (सूत्रे २०-२१)

**द्विभागः स्याद्द्विकर्मत्वात् ॥ २० ॥**

**(एकत्वाद्वैकभागः स्याद्भागस्याश्रुतिभूतत्वात् ॥ २१ ॥)**

पूर्वसिद्धान्तमुपजीव्यात्र शङ्कनात्सङ्गतिः । पूर्वत्र मैत्रावरुणोणऽध्वर्युहोत्रोः कर्मकरणादिडां भक्षयेदित्युक्तम् । स किमुभयोरपि भागौ भक्षयेत्, उतैकमिति **सन्देहे**, पूर्वोक्तदिशा यदि मैत्रावरुणो होत्रादिकार्यकर्तृतया तद्धर्म लभेत तर्ह्युभयकार्यकर्तृतयोभयोरपि भागौ द्वावपि भक्षयेदिति **प्राप्तम्** । तदाह, **द्विभागः स्यादिति** । द्वयोर्होत्रध्वर्य्वोः कर्मकर्तृत्वान्मैत्रावरुणो **द्विभागः स्यादिति** । **सिद्धान्तस्तु,** प्राकृततृप्तिरूपसंस्कारार्थमप्राकृतेऽपि मैत्रावरुणे तृप्तिः । प्राकृती च तृप्तिरेकेनैव भागेन जातेति न भागद्वयप्राप्तिः । अत एकमेव भागं भक्षयेदिति ।

इति सप्तमं मैत्रावरुणस्यैकभागताधिकरणम् (सूत्रे २०-२१)

### अथाष्टमं प्रतिप्रस्थातुर्भक्षाभावाधिकरणम् (सूत्रे २२-२३)

**प्रतिप्रस्थातुश्च वपाश्रपणात् ॥ २२ ॥**

**(अभक्षो वा कर्मभेदात्तस्याः सर्वप्रदानत्वात् ॥ २३ ॥)**

पूर्व उत नेति न्यायेन शङ्कनात्सङ्गतिः । दैक्षपशावेव किं प्रतिप्रस्थातुरिडायां भक्षोऽस्ति, **सन्देहे,** पूर्वत्र यथा मैत्रावरुणस्याध्वर्य्वादिकर्मकरत्वादस्ति भक्षस्तथा प्रतिप्रस्थातुरपि वपाश्रपणरूपाध्वयुकार्यकरत्वादस्तीडायां भक्ष इति **प्राप्तम्** । तदाह, **प्रतिप्रस्थातुश्च वपाश्रपणादस्ति** भक्ष इति । **सिद्धान्तस्तु,** वपाश्रपणरूपाध्वर्युकार्यकर्तृत्वेऽपि वपाया निश्शेषतो हुतत्वेनेडायामनुप्रवेशाभावान्नास्ति प्रतिप्रस्थातुर्भक्ष इति । न च तस्या वपाया निश्शेषत्वेऽपि हृदयादिपश्वङ्गशेषसत्त्वादिडायामस्तु भक्ष इति शङ्क्यम् । संस्काररूपं हि भक्षणम् । तत्कर्तृद्वाराऽपूर्वस्योपकुर्वयदपूर्वं । तस्य यः कर्ता, स तदपूर्वाङ्गभूतद्रव्यभक्षणेन तदुपकरोति । प्रकृतौ तथा दर्शनात् । वपापूर्व हृदयादि पश्ववयवजन्यापूर्वयोर्भेदाद्धृदयाद्यपूर्वाद्यङ्ग द्रव्यशेषभक्षणेन वपापूर्वकर्तुस्संस्कार्यत्वायोगेनास्य हृदयादिशेषभक्षाप्राप्तेः । यत्तु **शास्त्रदीपिकायां** शाखान्तरे ''दक्षिणतो निधाय प्रतिप्रस्थाताऽवद्यति'' इत्यवदानरूपाध्वर्युकार्यदर्शनादस्ति प्रतिप्रस्थातुरपीडाभक्ष इत्याशङ्क्य यस्यां शाखायामध्वर्योरिवावदानं श्रुतं तद्विषयमेवेदमधिकरणमित्युक्तम् । तच्चिन्त्यम् । सर्वशाखाप्रत्ययन्यायेन तदनुगुणसमाधेरेव वाच्यत्वादित्याहुः ।



**वार्तिकाभरणे** तु शाखाद्वयवाक्यानुरोधेनाध्वर्योः प्रतिप्रस्थातुश्चावदानकर्तृत्वं विकल्पितमिति, यदाऽध्वर्युकर्तृकत्वमवदानस्य, तदा प्रतिप्रस्थातुर्नेति तद्विषयमेतदधिकरणम् । प्रतिप्रस्थातृकर्तृकत्वपक्षेऽस्ति भक्ष इत्युक्तम् ।

इत्यष्टमं प्रतिप्रस्थातुर्भक्षाभावाधिकरणम् (सूत्रे २२-२३)

### अथ नवमं गृहमेधीये अपूर्वाज्यभागविधानाधिकरणम् (सूत्राणि २४-३३)

**विकृत्यां प्राकृतस्य विधेर्ग्रहणात्पुनःश्रुतिरनर्थिका स्यात् ॥ २४ ॥**

**(अपि वाऽऽग्नेयवद्द्विशब्दत्वं स्यात् ॥ २५ ॥ न वा शब्दपृथक्त्वात् ॥ २६ ॥ अधिकं वाऽर्थवत्त्वास्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥ २७ ॥ प्रतिषेधः स्यादिति चेत् ॥ २८ ॥ नाश्रुतत्वात् ॥ २९ ॥ अग्रहणादिति चेत् ॥ ३० ॥ न तुल्यत्वात् ॥ ३१ ॥ तथा तद्ग्रहणे स्यात् ॥ ३२ ॥ अपूर्वतां तु दर्शयेद्ग्रहणस्यार्थवत्त्वात् ॥ ३३ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । चतुर्मास्येषु साकमेधपर्वणि तदङ्गतया ''मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदने'' इति विहितगृहमेधीयेष्टौ श्रूयते ''आज्यभागौ यजति'' इति । तत्र किं चोदकप्राप्तयोराज्यभागयोरनुवादमात्रम् ''आज्यभागौ यजति'' इत्येतत्, किं वा चोदकेन प्रत्यक्षवचनेन चैकाज्यभागात्मककर्मविधिः, उतार्थवादार्थम्, यद्वाऽधिकयोः कर्मान्तरयोर्विधानम्, अथ परिसङ्ख्या, आज्यभागेतरातिदेशो वा, चोदकेन तावेव प्राप्येते । नान्याङ्गानीति वा, अपूर्वो गृहमेधीयो वेत्यष्टधा **सन्देहः** । **पूर्वपक्षस्तु,** चोदकेनाज्यभागयोः प्राप्तत्वात् ''आज्यभागौ यजति'' इत्यनुवादमात्रमित्याद्यः । तदाह **सूत्रे, विकृत्यां** गृहमेधीयेष्टौ **प्राकृताज्यभाग विधेर्ग्रहणात्पुनःश्रुतिरनर्थिका** अनुवादमात्रत्मिका **स्यादिति** । सत्यां गतौ न निरर्थकानुवादत्वं युक्तम् । किन्तु यथा ''सौर्यं चरुं निर्वपेत्'' इत्यत्र श्रुतो निर्वपतिशब्दः ''चतुरो मुष्टीन्निर्वपति'' इति दर्शपूर्णमासयोर्निर्वपतिसादृश्यं सौर्ययागस्यापाद्य तदीयं विध्यन्तं तत्र नियच्छति, तथा गृहमेधीये सादृश्यहेतोर्निर्वपत्यादेरभावादाज्यभागौ द्वावपि पुनःश्रूयमाणौ गृहमेधीयस्य दर्शपूर्णमाससादृश्यमापाद्य तदीयं विध्यन्तं नियच्छतः । तथा च प्रयाजादीन्यङ्गानि चोदकेनैव विधीयन्ते । आज्यभागौ तु चोदकेन प्रत्यक्षवचनेन च विधीयेते । यथा ''अग्निमग्न आवह'' इति निगदे एक एवाग्निः सम्बुध्यन्तद्वितीयान्ताग्निपदाभ्याममभिधीयते तथेति द्वितीयः । तदाह **सूत्रे, अपि वाऽग्नेयवद्द्विशब्दत्वं स्यादिति** ।

पूर्वोक्ते गृहमेधीयोत्पत्तिवाक्य एव ''सायमोदने'' इत्योदनरूपौषधद्रव्यकत्वरूपसादृश्येनैव दार्शपूर्णमासिकविध्यन्तनियमसिद्धेः पुनराज्यभागाश्रयणं व्यर्थम् । तस्मात्पूर्वप्रितिप्रस्थातुर्यथा हृदयादिषु नाध्वर्युकार्यप्राप्तिस्तथाऽऽज्यभागयोर्न गृहमेधीयेष्टौ यागव्यापारतया प्राप्तिः । किन्तु दार्शपूर्णमासिकविध्यन्तप्रशंसार्थमर्थवादत्वेन श्रवणम् । एवमयं दर्शपूर्णमासविध्यन्तः प्रशस्तो यतस्तत्राज्यभागावपीति **तृतीयः** । यत्र किञ्चिद्विधीयते, तत्रैवार्थवादो युक्तः । **विधिना त्वेकवाक्यत्वात्** इत्यर्थवादनये प्रवर्तनात्मकशब्दभावनारूपविध्यपेक्षितप्राशस्त्यसमर्पकतया विध्यतेकवाक्यतयैवार्थवादस्य प्रामाण्योक्तेः । इह च प्राकृतविध्यन्तस्य चोदकप्राप्तत्वेनाविधेयत्वात्स्तुतिरेव न युक्तेति कुतः पुनःश्रवणस्य तदर्थता । किन्तु ''आज्यभागौ यजति'' इति कर्मान्तरमिति **चतुर्थः** । मासाग्निहोत्रस्येव प्रकरणान्तरत्वेन कर्मान्तरविधिर्वा, अविशेषपुनःश्रुतिरूपाभ्यासेन वा । नाद्यः । औषधद्रव्यकत्वेन सादृश्येन प्राकृतदार्शपूर्णमासिकविध्यन्तातिदेशेन सन्निहिताज्यभागयोरेव प्रत्यभिज्ञानेन कर्मान्तरविध्ययोगात् । नान्त्यः । तथात्वे आज्यभागपदस्याज्यभागसमानधर्मकमिति धर्मलक्षणापत्तेः । अतः पुनःश्रवणं चोदकप्राप्ताङ्गान्तरपरिसङ्ख्यार्थमाज्यभागावेव यजति गृहमेधीयेष्टौ । न प्रयाजाद्यङ्गान्तराणीति **पञ्चमः** ।

परिसङ्ख्यायाः प्रतीतार्थत्यागाप्रतीतार्थस्वीकारप्राप्तबाधरूपदोषत्रयदुष्टत्वान्न परिसङ्ख्या युक्ता । किन्त्वानुमानिकाचोदकाच्छीघ्रं प्रवर्तमानेन वचनेनेज्यभागयोः प्राप्तत्वात्पश्चात्प्रवर्तमानश्चोदकस्तद्वर्जमेवेतराङ्गकलापं प्रापयतीति **षष्ठः** । विकृतिभावना हि न प्रत्येकं पदार्थानपेक्षते येन चोदकः प्रत्येकं पदार्थान् प्रापयेत् । प्रत्यक्षवचनतः प्रागेव प्राप्ततयाऽऽज्यभागावनतिदिश्य तदितरदेवाङ्गं प्रापयेत् । किन्तु ''सौर्येण भावयेत्'' इत्युक्ते ''कथम्'' इति यागाङ्गव्यापारात्मकप्रकारस्यैवापेक्षितत्वेन तमेव प्रापयंश्चोदकस्तदङ्गभूतावाज्यभागावपि प्रापयेत् । न तु तद्वर्जमितरानित्यनर्थकं वचनं स्यात् । तस्माल्लोके यथा ''ब्रह्मणान् भोजयेत्'' इत्युक्त्वा ''वसिष्ठविश्वामित्रभरद्वाजान्'' इत्युक्ते सामान्यवचनस्य ब्राह्मणशब्दस्य वसिष्ठादिष्वेवोपसंहारार्थं वसिष्टेत्यादिवचनं तथा ''प्रकृतिवद्विकृतिं कुर्यात्'' इति सामान्यवचनस्य प्रकृतिवच्छब्दस्य आज्यभागमात्रे उपसंहारार्थं ''आज्यभागौ यजति'' इति पुनर्वचनमिति **सप्तमः** ।

**सिद्धान्तस्तु,** ''ब्राह्मणान् भोजयेत्'' इत्यादौ सामान्यविशेषवचनयोर्द्वयोरपि प्रत्यक्षत्वेन सामान्यवचनस्य विशेषे उपसंहारेऽपि प्रकृते सामान्यवचनस्य कल्प्यत्वात्कल्पितस्यापि चोदकस्य प्रत्यक्षवचनोक्ताज्यभागमात्रपर्यवसाने कृत्स्नाङ्गप्रापकचोदककल्पनैव व्यर्था स्यात् । तस्माद्गृहमेधीयस्य साकमेधाङ्गत्वेन ''मरुद्भ्यः'' इति गृहमेधीयोत्पत्तिवाक्ये ''गृहमेधीयेष्ट्या साकमेधाख्यक्रतूपकारं



कुर्यात्'' इत्युक्ते ''कथम्'' इत्याकांक्षिणी भावना सन्निहितप्रत्यक्षवचनोक्तौ प्रकृतौ क्लृप्तोपकारावाज्यभागावेव गृहीत्वा निराकांक्षा सती प्राकृताङ्गप्रापकचोदकं नापेक्षत इति प्रकृतिसम्बन्धराहित्यलक्षणोऽपूर्वो गृहमेधीययाग इति । तदाह सूत्रे, अपूर्वतां तु दर्शयेद्ग्रहणस्यार्थवत्त्वादिति । आज्यभागपुनः श्रवणस्यार्थवत्त्वादाज्यभागपुनः श्रवणं गृहमेधीयस्यापूर्वतां दर्शयेदिति । फलं तु, चोदकबाधः ।

इति नवममाज्यभागौ यजतीत्यनेन गृहमेधीयेऽपूर्वाऽज्यभागविधानाधिकरणम् (सूत्राणि २४-३३)

## अथ दशमं गृहमेधीये स्विष्टकृदाद्यनुष्ठानाधिकरणम् (सूत्रम् ३४)

**तत्रोपि यावदुक्तं स्यात् ॥ ३४ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । गृहमेधीये स्विष्टृदिडादिकं कार्यम्, उत नेति **सन्देहे,** पूर्वनयोक्तदिशा आज्यभागाभ्यामेव निराकांक्षत्वेनाङ्गान्तराकांक्षाविरहात्पूर्वत्राश्रुतप्रयाजादीनामिव ''अग्नये समवद्यति'' ''इडामुपह्वयति'' इति भाष्योक्तवचनाभ्यां श्रुतानामपि स्विष्टकृदादीनामकर्तव्यतैवेति **प्राप्ते सिद्धान्तः,** आज्यभागवत्स्विष्टकृदादेरपि प्रत्यक्षवचनश्रुतत्वात्प्रकृतौ क्लृप्तोपकारत्वाच्च कार्यमेव स्विष्टकृदादि । तदाह सूत्रे, ततः आज्यभागाभ्यामधिकमपि यावदुक्तं स्विष्टकृदादिकं स्यादिति । फलं तु, प्रकृताविवाज्यभागादीनां सर्वेषां वैकृतप्रकरणेन युगपद्ग्रहणात्सर्वेषां समुच्चयेनानुष्ठानम् ।

इति दशमं गृहमेधीये स्विष्टकृदाद्यनुष्ठानाधिकरणम् (सूत्रम् ३४)

## अथैकादशं गृहमेधीये प्राशित्रादिभक्षणाभावाधिकरणम् (सूत्राणि ३५-३७)

**स्विष्टकृद्भक्षप्रतिषेधः स्यात्तुल्यकारणत्वात् ॥ ३५ ॥**

**(अप्रतिषेधो वा दर्शनादिडायां स्यात् ॥ ३६ ॥ प्रतिषेधो वा विधिपूर्वस्य दर्शनात् ॥ ३७ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । गृहमेधीये स्विष्टकृदिडादिकं प्रत्यक्षश्रुतत्वादाज्यभागवत्कार्यमेवेत्युक्तं पूर्वतनाधिकरणे । ''विकृतौ प्राकृताङ्गपुनःश्रवणमितरपरिसङ्ख्यार्थम्'' इति यः पञ्चमः **पूर्वपक्षस्तस्मिन्** पक्षे ''अग्नये समवद्यति'' इति स्विष्टकृतः प्राकृताङ्गस्य गृहमेधीये पुनःश्रवणं परिसङ्ख्यार्थमिति कृत्वा चिन्तापक्षे प्राशित्रभक्षणचतुर्धाकरणादिशेषकार्याणां निवर्तकम्, उत नेति **सन्देहे,** पूर्वत्राऽज्यभागयोरिव

स्विष्टकृदादेरपि श्रुतत्वाविशेषाद्यथा न बाधस्तथेह ''इडामुपह्वयते'' इतीडोपाह्वानस्य श्रुतत्वात्परिसङ्ख्यापक्षे तद्दर्शनविरोधान्नास्ति प्राशित्रादिशेषकार्यस्य परिसङ्ख्येति **प्राप्ते सिद्धान्तः**, प्राकृताङ्गस्विष्टकृतः पुनःश्रवणमङ्गान्तराणि परिसञ्चष्ट एव । इडोपदर्शनं तु प्रत्यक्षवचनप्राप्तत्वात्तन्मात्रुपपद्यते । अन्यस्य तु परिसङ्ख्येति । तथा च **सूत्रम्, स्विष्टकृति** श्रूयमाणे प्राशित्रादिभक्ष**प्रतिषेधः निवृत्तिः स्यात्**। प्राशित्रादीनामपि स्विष्टकृता द्रव्यप्रतिपत्तौ **करणत्वेन तुल्यत्वादिति** । इयञ्च चिन्ता पूर्वत्रोक्तपरिसङ्ख्यापक्षप्रयोजनरूपेति भाष्य एवोक्तत्वान्नैतच्चिन्तायाः फलमन्वेषणीयमित्याहुः ।

इत्येकादशं गृहमेधीये प्राशित्रादिभक्षणाभावाधिकरणम् (सूत्राणि ३५-३७)

**अथ द्वादशं प्रायणीयातिथ्ययोः शंय्विडान्ततानियमाधिकरणम् (सूत्रे ३८-३९)**

**शंय्विडान्तत्वे विकल्पः स्यात्परेषु पत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात् ॥ ३८ ॥**

**(नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् ॥ ३९ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ज्योतिष्टोमे श्रूयते ''शंय्वन्ता प्रायणीया सन्तिष्ठते । न पत्नीः संयाजयन्ति'' इति । ''तच्छंयोरावृणीमहे'' इति होतृकर्तृकमन्त्रजपपर्यन्ता प्रायणीयेष्टिरित्यर्थः । तथा ''इडान्ताऽऽतिथ्या सन्तिष्ठते । नानूयाजान् यजति'' इति । कदाचिच्छंय्विडापर्यन्तानुष्ठानेन समापनम् । कदचित्पत्नीसंयाजानुयाजवर्जं समस्तमपि कृत्वा समापनमित्येवं शंय्यिडान्तकृत्स्नसंस्थाया विकल्पः, उत शंय्विडापर्यन्तानुष्ठानेनैव समापनमित्येवं **सन्देहे**, पूर्वत्र यथा चोदकात्स्विष्टकृतः कर्तव्यताप्राप्तावपि पुनस्तत्कर्तव्यतावचनं परिसङ्ख्यारूपेण शेषकार्यान्तराकर्तव्यत्वपरं तथा प्रायणीयातिथ्ययोःशंय्विडान्तत्व वचनेन तदनन्तरकर्तव्याङ्गेष्वकर्तव्यतया प्राप्तेषु पत्नीसंयाजानूयाजानां पुनर्निषेधवचनं परिसङ्ख्यारूपेण तदितराङ्गानां शंय्विडान्तता प्राप्ता । कर्तव्यतानिषेधेन ''पत्नीसंयाजानेव न कुर्यात् । अन्यानि तु कुर्यात्'' इति कर्तव्यताप्रापणपरम् । तेन पत्नीसयाजानूयाजवर्जितकृत्स्नसंस्थाविधानाच्छंय्विडान्तत्ववचनाच्चोभयोरुक्तदिशा विकल्प इति **प्राप्तम्** । तदाह **सूत्रे, शंय्विडान्तत्वे** शंयुवाकजपर्यन्तत्वे इडाभक्षणान्तत्वे **विकल्पः स्यात्** । **परेष्वङ्गेषु मध्ये पत्नीसंयोजानूयाजयोः प्रतिषेधात्** । अन्यथा **प्रतिषेधवचनमनर्थकं स्यादिति पूर्वपक्षः** । **सिद्धान्तस्तु**, लक्षणया हि परिसङ्ख्यया पत्नीसंयाजादिवर्जितकृत्स्नसंस्था विधेया । वचनवृत्त्या तु शंय्विडान्तसंस्था विहिता । न च विषमशिष्टयोर्विकल्पः सम्भवति । अष्टदोषदुष्टश्च विकल्पः । परिसङ्ख्या च त्रिदोषा । परिसङ्ख्यार्थत्वे च ''सन्तिष्ठते'' इत्यनेनैकवाक्यतानापत्तिश्च । तस्मात्पत्नीसंयाजाद्यकरणाल्लाघवमिति शंय्विडान्ततत्वस्तावकतया



तद्विधिशेषत्वेन तदेकवाक्यतयाऽर्थवाद एवायं ''न पत्नीः'' इत्यादिवाक्यमिति शंय्विडान्तत्वमेव । न विकल्प इति ।

इति द्वादशं प्रायणीयातिथ्ययोः शंय्विडान्ततानियमाधिकरणम् (सूत्रे ३८-३९)

**अथ त्रयोदशं प्रायणीयातिथ्ययोः पूर्वाभ्यामेव शंय्विडाभ्यां संस्थाधिकरणम् (सूत्राणि ४०-४२)**

**प्रतिषेधार्थवत्वाच्चोत्तरस्य परस्तात्प्रतिषेधः स्यात् ॥ ४० ॥**

**(प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात् ॥ ४१ ॥ प्रतिषेधस्य त्वरायुक्तत्वात्तस्य च नान्यदेशत्वम् ॥ ४२ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । प्रायणीयातिथ्ययोः शंय्विडान्तत्वे सिद्धे सति प्रकृतिभूतदर्शपूर्णमासयोः द्वौ शंयू । पत्नीसंयाजेभ्यः पुरस्तादेकः । पश्चाच्चापरः । तथा इडे अपि द्वे । अनूयाजेभ्यः पुरस्तादेका । पश्चादपरा । तत्र किं पूर्वाभ्यां शंय्विडाभ्यामुत्तराभ्यां वा प्रायणीयातिथ्ययोस्समाप्तिरित्यनियमः, उतोत्तराभ्यामेवेति वा, अथ पूर्वाभ्यामेवेति वा नियमः इति **सन्देहे**, पूर्वत्र शंय्विडान्तत्वकृत्स्नसंस्थयोर्विकल्परूपानियमाभावेऽपीह विशेषनियामकाभावादनियम **इत्येकः पूर्वपक्षः**। उत्तराभ्यामेव शंय्विडाभ्यां समाप्तिरति **द्वितीयः** । तथा हि, यथा ''पर्यग्निकृतं पात्नीवतमुत्सृजति'' इत्यत्र पर्यग्निकरणान्ताङ्गरीतिविधानम् । तथैव **पत्नीवते तु** इति द्वितीयतृतीयपादीयनयोक्तेः । तद्वदिह शंय्विडान्ताङ्गरीतिरेव विधीयते । ''तच्छंयोरावृणीमहे'' इति मन्त्रान्ताङ्गकलापो विधीयत इति यावत् । तस्यां च विहितायां तयैव नैराकांक्ष्ये तदुत्तरेषामङ्गानामननुष्ठानात्प्राप्तैव समाप्तिः ''सन्तिष्ठते'' इत्यनूद्यते । ततश्चोत्तरयोरपि शंय्विडान्तयोः शंय्विडान्तत्वाविशेषात्तयोः प्राञ्चो ये पदार्थास्ते सर्वेऽपि कर्तव्यतयाऽवगम्यन्ते । पूर्वशंय्विडान्तत्वपक्षे तत उपरितनाः उत्तरशंय्विडान्तत्वात्प्राञ्चः पदार्थाः कर्तव्यतयाऽवगता बाध्येरन् । तस्मादुत्तराभ्यामेष शंय्विडान्तत्वाभ्यां समाप्तिः । एवञ्च ''न पत्नीस्संयाजयन्ति'' इति निषेधोऽर्थवान् स्यात् । अन्यथाऽनुवादमात्रत्वेनानर्थकः स्यात् । तदाह **सूत्रे**, ''न पत्नीः'' इति निषेधस्यार्थवत्वायोत्तरशंयोः **परस्तात्** पश्चात्तना ये पदार्थास्तेषामेव **प्रतिषेधोऽ**ननुष्ठानं स्यादिति । **सिद्धान्तस्तु**, शंय्विडान्ताङ्गरीतिविधौ हि प्रायणीयादेः शंय्विडान्ताङ्गरीतेश्चाङ्गाङ्गिभावरूपसम्बन्धविधानेन धात्वर्थविधिर्न स्यात् । तस्मात्सन्तिष्ठतिशब्दोक्तोपरम एवात्र विधीयते । तथा च ''तच्छंयोरावृणीमहे'' इति शंयुरिडाभक्षणं चोपलभ्यते तदैवोपरन्तव्यमिति प्रथमशंय्विडान्ताभ्यामेव

संस्थितिः प्रायणीयादेरिति । **अत्रैके** चोदयन्ति, पूर्वाधिकरणे शंय्विडान्तत्वोक्त्यैव पत्नीसंयाजादेर-कर्तव्यत्वसिद्धौ पुनर्निषेधवचनं परिसङ्ख्येति प्राप्ते वाक्यभेदादिप्रसङ्गादर्थवादः पुनर्वचनमित्युक्त्यैव पूर्वाभ्यां शंय्विडान्ताभ्यां संस्थेति सिद्धेर्नात्र पुनः पूर्वाभ्यामुत्तराभ्यां वेति चिन्ताया उत्थितिरिति । **अन्ये** तु अत्रत्यन्यायेन पूर्वाभ्यामिति सिद्धे पश्चात्पूर्वतनो विचारः प्रवृत्त इति द्वयोरधिकरणयोः पौर्वापर्यव्यत्यासाश्रयणाददोष इति समादधुः ।

इति त्रयोदशं प्रायणीयातिथ्ययोः पूर्वाभ्यमेव शंय्विडाभ्यां संस्थाधिकरणम् (सूत्राणि ४०-४२)

**अथ चतुर्दशं षडुपसद इत्यादिनाऽपूर्वोपसत्कर्मविधानाधिकरणम् (सूत्राणि ४३-४६)**

**उपसत्सु यावदुक्तं कर्म स्यात् ॥ ४३ ॥**

**(स्रौवेण वाऽगुणत्वाच्छेषप्रतिषेधः स्यात् ॥ ४४ ॥ अप्रतिषिद्धं वा प्रतिषिध्य प्रतिप्रसवात् ॥ ४५ ॥ अनिज्या वा शेषस्य मुख्यदेवतानभीज्यत्वात् ॥ ४६ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ज्योतिष्टोमे ''षडुसद उपसाद्यन्ते'' इति विहितोपसदः प्रकृत्य श्रूयते ''अप्रयाजास्ता अननुयाजाः'' इति, तथा ''स्रुवेणाघारमाघारयति'' इति च । तत्र किं प्रतिषिद्धानू-याजादि वर्जयित्वाऽन्यत्सर्वं कार्यम्, उत गृहमेधीयाज्यभागन्यायेनापूर्वत्वमुपसदामिति **सन्देहे**, पूर्वत्र प्रायणीयातिथ्ययोः शंय्विडान्तत्वाङ्गरीतिविध्यभावाद्यथा नापूर्वता तथेहाप्याघारवाक्यस्य चोदकप्राप्ता-घारानुवादत्वेन तद्विध्यभावादुपसदां गृहमेधीयेष्टेरिव पूर्वत्वं नेति चोदकानिवृत्तेस्तत्प्राप्तं सर्वं प्रतिषिद्ध-प्रयाजादि वर्जयित्वा कर्तव्यमेवेति **प्राप्ते सिद्धान्तः**, न स्रौवाघारवाक्यमनुवादकम् । आनर्थक्यापत्तेः । ''यज्ञस्य प्रजात्यै'' इत्यर्थवादरूपवाक्यशेषबलेन ''आघारयति'' इति श्रूयमाणक्रियापदस्य विधित्वा-वगमात् । गृहमेधीयाज्यभागन्यायेन वैकृतोपसत्करणकभावनायाः सन्निधानश्रुतक्लृप्तोपकारप्राकृताङ्गैनैव कथम्भावाकांक्षाशान्त्या चोदकनिवृत्तेरुपसदां गृहमेधीयेष्टेरिवापूर्वत्वमेवेत्यङ्गान्तराप्राप्तेर्न कर्तव्यमङ्गान्तर मिति ''अप्रयाजास्ता अननुयाजास्ताः'' इति वाक्यद्वयन्तु क्रियापदशून्यत्वादनुवादमात्रमिति । तदाह **सूत्रे, उपसत्सु यावदुक्तं** आघाररूपं तावदेव **कर्म स्यादिति** ।

इति चतुर्दशं षडुपसद इत्यादिनाऽपूर्वोपसत्कर्मविधानाधिकरणम् (सूत्राणि ४३-४६)



**अथ पञ्चदशं वारुणेनैककपालेनेत्यादिनाऽपूर्वस्यावभृथस्य विधानाधिकरणम् (सूत्राणि ४७-५०)**

**अवभृथे बर्हिषः प्रतिषेधाच्छेषकर्म स्यात् ॥ ४७ ॥**

**(आज्यभागयोर्वा गुणत्वाच्छेषप्रतिषेधः स्यात् ॥ ४८ ॥ प्रयाजानां त्वेकदेश-प्रतिषेधाद्वाक्यशेषत्वं तस्मान्नित्यानुवादः स्यात् ॥ ४९ ॥ आज्यभागयोर्ग्रहणं नित्यानुवादो गृहमेधीयवत्स्यात् ॥ ५० ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ज्योतिष्टोमगतावभृथेष्टौ श्रूयते ''अप्सुमन्तावाज्यभागौ यजति'' इति । तथा ''अपबर्हिषः प्रयाजान् यजति'' इति । तथा ''अपबर्हिषावनूयाजौ यजति'' इति च । **तस्यार्थः**, प्रयाजपञ्चके चतुर्थः प्रयाजो बर्हिर्नामकः । अनूयाजत्रिके चाद्योऽनूयाजश्च । तदन्यप्रयाजानू-याजाः कार्या इति । अप्सुमन्तावित्यस्य तु ''अप्स्वग्ने अधिष्टव'' इति ''अप्सु मे सोमोऽब्रवीत्'' इति चाप्सुशब्दयुक्तमन्त्रद्वयवन्तावित्यर्थः । तत्र किं बर्हिराख्यप्रयाजानूयाजौ वर्जयित्वाऽन्यत्सर्वमङ्गजातं कर्तव्यम्, उत नेति **सन्देहे**, गृहमेधीये प्राकृताङ्गपुनःश्रवणं गुणान्तरासंयुक्तं चेत्प्रधानकर्मणोऽपूर्वता-पादकमित्युक्तम् । अत्र तु ''आज्यभागौ यजति इति यत् तावप्सुमन्तौ'' इत्यप्सुशब्दयुक्तमन्त्रवत्त्व-रूपगुणविधानार्थतयोपपन्नं सन्नापूर्वतामवभृथेष्टेस्सम्पादयतीति प्रतिषिद्धवर्जं चोदकप्राप्तं सर्वमङ्गजातं कर्तव्यमिति **प्राप्तम्** । तदाह **सूत्रे अवभृथे** बर्हिर्नामक**प्रयाजानूयाजप्रतिषेधाच्छेषकर्म** बर्हिर्वर्जयित्वाऽ-वशिष्टं कर्म **स्यात्** कुर्यादिति । **सिद्धान्तस्तु**, स्यादेवं, यद्यवभृथे प्राकृताज्यभागानुवादेनाप्सुमत्त्व-रूपगुणविधानं स्यात् । न चैवम् । ''अप्सु मे सोमोऽब्रवीत्'' इत्यादिमन्त्रयोर्मन्त्रलिङ्गेन यथा-सङ्ख्याम्नानरूपस्थानप्रमाणेन चाज्यभागयोः प्राप्तत्वादाज्यभागविध्यर्थमेव ''अप्सुमन्तावाज्यभागौ यजति'' इति । तथा च क्लृप्तोपकारप्राकृताज्यभागाभ्यां पुनर्विहिताभ्यामेव वैकृतावभृथकथंभावा-कांक्षाशान्तेर्नाङ्गान्तरापेक्षेति तत्प्रापकचोदकाप्राप्तेरपूर्वैवावभृथेष्टिः । एवञ्च ''अपबर्हिः'' इति वचनं बर्हिरन्यप्रयाजानूयाजविध्यर्थम्चोदकनिवृत्त्या तत्प्राप्तेरभावादिति ।

इति पञ्चदशं वारुणेनैककपालेनेत्यादिना अपूर्वस्यावभृथस्य विधानाधिकरणम् (सूत्राणि ४७-५०)

**अथ षोडशं वाजपेयादौ यूपादीनां खादिरत्वादिनियमाधिकरणम् (सूत्राणि ५१-५७)**

**विरोधिनामेकश्रुतौ नियमः स्याद्ग्रहणस्यार्थवत्त्वाच्छरवच्च श्रुतितो विशिष्टत्वात् ॥५१॥**

(उभयप्रदेशान्नेति चेत् ॥ ५२ ॥ शरेष्वपीति चेत् ॥ ५३ ॥ विरोध्यग्रहणात्तथा शरेष्विति चेत् ॥ ५४ ॥ तथेतरस्मिन् ॥ ५५ ॥ श्रुत्यानर्थक्यमिति चेत् ॥ ५६ ॥ ग्रहणस्यार्थवत्त्वादुभयोरप्रतिपत्तिः स्यात् ॥ ५७ ॥)

पूर्वन्यायेन शङ्कनात्सङ्गतिः । वाजपेये श्रूयते ''खादिरो यूपो भवति'' इति, ''बृहत्पृष्ठं भवति'' ''यवमयः पुरोडाशः'' इति । तत्र किं श्रुतस्य खादिरादेरतिदिष्टस्य च पलाशादेर्विकल्पः, उत श्रुतस्यैव नियम इति सन्देहे, यद्यत्र प्राकृताङ्गखादिरादिपुनःश्रवणं पूर्वत्राऽज्यभागयोरवभृथस्येव वाजपेयस्यापूर्वतार्थं विधायकं स्यात्तदा खादिरयूपातिरिक्तं सर्वं न प्रवर्तेतेति नियोजनस्याप्यभावाद्यूपानर्थक्यं स्यात् । अतो नापूर्वत्वाय विधिः । किन्तु पूर्वत्र यथा ''अप्सुमन्तौ'' इति पदमनुवादस्तथेदमपि चोदकप्राप्तस्यानुवादमात्रम् । एवञ्च प्रकृतौ खादिरपालाशादेः बृहत्पृष्ठरथन्तरपृष्ठयोर्यवमयव्रीहिमयचर्वोर्विकल्पितत्वेन तथैवेह चोदकप्राप्तेः पालाशादिना खादिरादेर्विकल्प इति प्राप्ते सिद्धान्तः, चोदकेन यथाप्रकृति खादिरपालाशादिप्राप्तौ खादिरादिनियमार्थत्वेन पुनःश्रवणस्य सार्थक्योपपत्तौ न निरर्थकानुवादमात्रत्वं कल्प्यमिति खादिरादिरेव नित्यतयाऽनुष्ठेय इति । तदाह सूत्रे, विरोधिनां वैकल्पिकानां द्रव्याणां मध्ये एकस्य पुनः श्रुतौ नियमः स्यात् । ग्रहणस्यार्थवत्त्वार्थं श्रुतितो विशिष्टत्वस्य विहितत्वस्य विशेषात् । शरवत् चोदकप्राप्तबाधः स्यादिति । फलं व्यक्तम् ।

इति षोडशं वाजपेयादौ यूपादीनां खादिरत्वादिनियमाधिकरणम् (सूत्राणि ५१-५७)

### अथ सप्तदशं काम्येष्टिषु प्राकृतद्रव्यदैवतस्य निवृत्त्यधिकरणम् (सूत्राणि ५८-६०)

**सर्वासां च गुणानामर्थवत्त्वाद्ग्रहणमप्रवृत्ते स्यात् ॥ ५८ ॥**

**(अधिकं स्यादिति चेत् ॥ ५९ ॥ नार्थाभावात् ॥ ६० ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''अग्नीषोमीयमेकादशकपालं निर्वपेच्छ्यामाकान् वसन्ताय ब्रह्मवर्चसकामः'' इति विकृतिविशेषे प्रत्यक्षश्रुतश्यामाकादिना चोदकप्राप्तं व्रीह्यादिकं बाधार्हम्, उत नेति सन्देहे, प्राकृतकृत्स्नाङ्गप्रापकेण चोदकेन व्रीह्यादेरपि प्राप्तेः शास्त्रेण प्राप्तस्य केनापि बाधानर्हतया द्वयोस्तुल्यबलत्वेन विकल्पः समुच्चयो वा उपेयः । एवञ्च पूर्वत्र चोदकप्राप्तवैकल्पिकान्यतरखादिराद्युपदेशसार्थक्याय नियमविधितयाऽर्थात्तदितरवैकल्पिकनिवृत्तावपीह प्राकृतद्रव्यदेवताद्युपदेशस्य तत्प्राप्त्यर्थतयैव सार्थक्यान्न प्राकृतद्रव्यदेवतादिनिवृत्तिरिति प्राप्ते सिद्धान्तः । स्यादेवम् । यदि चोदकेन कृत्स्नप्राकृताङ्गानां प्राप्तिः स्यात् । न चैवम् । चोदको हि सर्वाण्यङ्गानि प्रापयितुं प्रवृत्तोऽपि व्रीह्याद्यंशे



प्रत्यक्षश्रुतश्यामाकादिविरोधं पर्यालोच्य तद्व्यतिरिक्ताङ्गविषयो व्यवतिष्ठत इति शास्त्रेण व्रीह्यादेरप्रापणान्न विकल्पसमुच्चयावकाशः । तस्मात्प्रत्यक्षश्रुतद्रव्यदेवतादिना चोदकप्राप्तस्य नित्यं बाध इति । तदाह सूत्रे, सर्वासामेवंरूपप्रत्यक्षचोदनानां सहैवोत्पत्तेरर्थवत्त्वादप्रवृत्तेः श्रुतानामेव गुणानां ग्रहणं स्यादिति । फलं तु, श्रुतद्रव्यदेवतयोरेवोपादानम् ।

इति सप्तदशं काम्येष्टिषु प्राकृतद्रव्यदैवतस्य निवृत्त्यधिकरणम् (सूत्राणि ५८-६०)

### अथाष्टादशं सोमापौष्णपशौ खादिरयूपस्य नियमाधिकरणम् (सूत्राणि ६१-६३)

**तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः प्रवृत्तौ हि विकल्पस्स्यात् ॥ ६१ ॥**

**(यावच्छ्रुतीति चेत् ॥ ६२ ॥ न प्रकृतावशब्दत्वात् ॥ ६३ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''सोमापौष्णं त्रैतमालभेत'' इति श्रुते काम्यपशुयागे श्रूयते ''औदुम्बरो यूपो भवति'' इति । तत्र किं प्राकृतः खादिरः प्राप्यते, अथ नेति सन्देहे, पूर्वत्र प्रत्यक्षोपदिष्टश्यामाकादिनैव कार्यनिवृत्तेः फलाभावात्प्राकृतस्यानतिदेशेन बाधेऽपीह यूपद्वये सुदृढं पशोर्बन्धनेन सर्वथाऽनपक्रमणरूपफलसद्भावाद्विरोधाभावाच्च न चोदकबाधो युक्त इति प्राकृतयूपोऽपि प्राप्यत इति समुच्चयो द्वयोर्यूपयोरिति प्राप्ते सिद्धान्तः, खादिरो यूपोऽन्यनिरपेक्ष एव चोदकेन प्राप्यते । औदुम्बरयूपोऽपि प्रत्यक्षोपदेशेनान्यानपेक्ष एव प्राप्यते । प्रत्येकमेव तद्धितश्रवणात् । समुच्चयपक्षे द्वयोरपि निरपेक्षता बाध्येत । किञ्च चोदकप्राप्तस्य यूपस्य प्रकृतिद्रव्यविधानमौदुम्बरवाक्येन क्रियते । न यूपान्तरं विधीयते । अतोऽतिस्पष्ट एव बाध इति न समुच्चयशङ्कावकाश इति । तदाह सूत्रे, तथा पूर्ववदेव यूपरूपे एकस्मिन्नर्थे विकारे श्रुते प्राकृतस्य खादिरादेरप्रवृत्तिः । तत्प्रवृत्तौ विकल्पः स्यादिति । फलं व्यक्तम् ।

इत्यष्टादशं सोमापौष्णपशौ खादिरयूपस्य नियमाधिकरणम् (सूत्राणि ६१-६३)

### अथैकोनविंशं ब्रह्मवर्चसकामैर्व्रीहिभिरेव यागाधिकरणम् (सूत्राणि ६४-७१)

**विकृतौ त्वनियमः स्यात्पृषदाज्यवद्ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद्गुणशास्त्रं यदेति स्यात् ॥ ६४ ॥**

**(ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात् ॥ ६५ ॥ विरोधित्वाच्च लोकवत् ॥ ६६ ॥ क्रतोश्च तद्गुणत्वात् ॥ ६७ ॥ विरोधिनाञ्च तच्छ्रुतावशब्दत्वाद्विकल्पः स्यात्**

**॥ ६७ ॥ पृषदाज्ये समुच्चयाद्ग्रहणस्य गुणार्थत्वम् ॥ ६९ ॥ यद्यपि चतुरवत्तीति तु नियमे नोपपद्यते ॥ ७० ॥ क्रत्वन्तरे वा तन्न्यायत्वात्कर्मभेदात् ॥ ७१ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । यत्र विकृतियागोत्पत्तिवाक्ये प्राकृतानां वैकल्पिकद्रव्याणां मध्येऽन्यतमं गुणान्तरयुक्तं श्रूयते यथा ''सोमारौद्रं चरुं निर्वपेच्छुक्लानां व्रीहीणाम्'' इत्यादौ । तत्र किं व्रीहीणां चोदकप्राप्तयवैः प्रकृताविव विकल्पः, व्रीहिपक्षे च शौकल्यरूपगुणविधिः, उत व्रीहय एवेति नियम इति **सन्देहे,** श्यामाकादिद्रव्यमात्रोपदेशस्थले प्राकृतद्रव्यबाधेऽपीह प्राकृतव्रीह्यनुवादेन शौक्ल्यगुणविध्यर्थत्वे पुनःश्रवणस्योपपन्नत्वेन व्रीहिविध्यभावान्न चोदकप्राप्तयवानां बाध इति तद्वद्विकल्पो व्रीहीणां यवैर्विकृतावपीति **प्राप्तम्** । तदाह **सूत्रे,** सोमारौद्रादिविकृतौ व्रीहियवयोरनियमः विकल्पः **स्यात्** । **ग्रहणस्य** पुनर्व्रीहिश्रवणस्य शुक्लत्वरूपगुणविध्यर्थत्वेन व्रीहिविध्यभावात् । **पृषदाज्यवत्** यथा ''पृषदाज्येनानूयाजान् यजति'' इत्यत्र पुनराज्यग्रहणं पृषत्त्वरूगुणविध्यर्थं, तद्वत् । शुक्लानामिति **गुणविधानं तु** व्रीहियवयोः **प्रदिष्टत्वादतिदिष्टत्वाद्यदाव्रीहयस्तदा** प्रवर्तेतेति **स्यादिति** । **सिद्धान्तस्तु,** स्यादेवं यदि प्राकृतव्रीह्यनुवादेन गुणविधिश्शङ्क्येतस्त न चैवम् । एकेन वाक्येन कर्मविधानस्य प्राकृतव्रीह्यनुवादेन गुणविधेश्चाङ्गीकारे वाक्यभेदापत्तेः । अतो व्रीहिद्रव्यतत्सम्बन्धिशौक्ल्यगुणविशिष्टकर्मविधिरेवोपेय इति प्रत्यक्षोपदिष्टव्रीहिभिर्यवानां बाधान्नित्या व्रीहय इति । **फलं तु,** व्रीहीणामेवानुष्ठानम् ।

इत्येकोनविंशं ब्रह्मवर्चसकामैर्व्रीहिभिरेव यागाधिकरणम् (सूत्राणि ६४-७१)

## अथ विंशं पश्चावदानतायाः सर्वाङ्गसाधारणताधिकरणम् (सूत्रे ७२-७३)

**यथाश्रुतीति चेत् ॥ ७२ ॥**

**(न चोदनैकत्वात् ॥ ७३ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । अग्नीषोमीयपशौ श्रूयते ''यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैववपा कार्या'' इति । तत्र किं पञ्चावदानं वपायामेव कार्यम्, उत हृदयाद्यङ्गेष्वपीति **सन्देहे,** पूर्वत्र यथा शुक्लादिगुणस्य व्रीहिद्रव्यसम्बन्धितया विधानमेवमिह ''पञ्चावत्तैव वपा कार्या'' इति वाक्ये वपोद्देशेनैव पञ्चावदानविधानान्नाङ्गान्तरेषु पञ्चावदानप्रसक्तिरस्ति । न च पशुयागापूर्वस्यैकत्वात्तदर्थायां वपायां श्रुतं पञ्चावदानं हृदयादिष्वपि भवतीति शङ्क्यम् । वपापूर्वस्य हृदयादियागापूर्वभिन्नतया पञ्चावदानस्य वपायागापूर्वप्रयुक्तत्वेन हृदयाद्यङ्गयागापूर्वाप्रयुक्ततया तत्राप्रसक्तेरिति **प्राप्तम्** । तदाह **सूत्रे, यथा-**



**श्रुतीति** । यत्सम्बन्धितया पञ्चावदानं श्रूयते तत्रैव तत् । नाङ्गान्तरेष्विति । **सिद्धान्तस्तु,** पञ्चावदानं न वपामात्रविषयम् । किन्तु हृदयादिसर्वहविर्विषयमिति ज्ञायते । पशुप्रकरणे हि ''एकादश वै पशोरवदानानि । द्विरवद्यति'' इति श्रूयते । यदि पञ्चावदानं न हविर्मात्रविषयं तदेदं वचनमनर्थकं स्यात् । चोदकेनैव द्विरवदानप्राप्तेः । पञ्चावदानस्य हृदयादिहविर्मात्रविषयत्वे तूपस्तरणाभिघारणाभ्यां सह पञ्चावदानसिद्धये हृदयादेस्त्रिरवदानप्राप्त्या तन्निवृत्त्यर्थत्वेनार्थवद्भवति । तस्मात्तद्वचनान्यथाऽनुपपत्त्योपस्तरणाभिघारणान्यतरविवृध्द्या पञ्चावदानं सर्वविषयम् । वपाग्रहणं तूपलक्षणार्थम् । तदाह **सूत्रे,** इति चेत् न **चोदनैकत्वादिति** । **पशुचोदनाया एकत्वात्** सर्वविषयं पञ्चावदानमित्यर्थः । **यत्तु** चोदकप्राप्तावदानोद्देशेन पञ्चत्वविधानादवदानस्य सर्वविषयत्वात्सर्वत्र पञ्चावदानमिति सिद्धान्तकरणम् । तत्त्वयुक्तम् । ''त्र्यङ्गैस्स्विष्टकृतं यजति'' इत्यत्रोत्तरार्धेनाङ्गान्युद्दिश्यपूर्वार्धेन त्रित्वविधाने प्रवृत्तिभेदेन सामर्थ्यविघातात्समासो न स्यादित्यत्रैव पादे पूर्वत्र **इज्याशेपात्स्विष्टकृदिज्येत** इत्यत्रोक्तत्वेन तद्विरुद्धत्वादिहोत्तरार्धेनोक्तावदानोद्देशेन पञ्चत्वविधानस्यैव युक्तत्वादिति वदन्ति । **फलं तु,** सर्वत्र पञ्चावदानानुष्ठानमिति व्यक्तम् ।

इति विंशं पञ्चावदानतायाः सर्वाङ्गसाधारणताधिकरणम् (सूत्रे ७२-७३)

इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते दशमाध्यायस्य सप्तमः पादः

अस्मिन् पादे अधिकरणानि २० सूत्राणि ७३

आदितः अधिकरणानि ७६७ सूत्राणि २२५७

# अथ दशमाध्यायेऽष्टमः पादः

अत्राध्याये पूर्वमभ्यर्हितार्थलोपनिमित्तं बाधं विचार्य पश्चादर्थलोपाभावेऽपि श्यामाकादिप्रत्याम्नाननिमित्तको बाधः पूर्वपादे चिन्तितः । अत्र पादे विशिष्टपर्युदासादिनिमित्तको बाधश्चिन्त्यत इति पादसङ्गतिः ।

## अथ प्रथमं प्रदेशानारभ्यविधानयोर्निषेधस्य पर्युदासताधिकरणम् (सूत्राणि १-४)

**प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् ॥ १ ॥**

**(अर्थप्राप्तवदिति चेत् ॥ २ ॥ न तुल्यहेतुत्वादुभयं शब्दलक्षणम् ॥ ३ ॥ अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात् ॥ ४ ॥)**

चातुर्मास्येषु साकमेघपर्वणि महापितृयज्ञे श्रूयते ''नार्षेयं वृणीते । न होतारम्'' इति । तथाऽनारभ्य श्रूयते ''यजतिषु येयजामहं करोति'' ''नानूयाजेषु येयजामहं करोति'' इति । तत्र किमति देशतः प्राप्तवरणस्य तत्प्रतिषेधस्य च विकल्पः, तथाऽनुयाजेषु येयजामहतत्प्रतिषेधयो- र्विकल्पः, उत नियमेन वरणयेयजामहयोरनुष्ठानमेवेति **सन्देहः । पूर्वपक्षस्तु,** नञ उत्तरपदेनान्वयमुपेत्य पर्युदासाश्रयणे हि नञ्पदस्य तदुत्तरपदस्य चार्षेयवरणभिन्नं होतृवरणभिन्नमिति, तथाऽनुयाजभिन्नयजतिष्विति लक्षणा स्यात् । अनश्च इत्यादाविवानार्षेयमिति अननुयाजेष्विति च समासेन निर्देशापत्त्या भिन्नपदेन निर्देशायोगश्च स्यात् । अतः क्रियापदेनान्वयमुपेत्य प्रसज्यप्रतिषेध एवोपेयः । प्रापकप्रतिषेधयोर्द्वयोरपि शास्त्रत्वान्निषेधशास्त्रस्य प्रापकशास्त्रसापेक्षत्वेन द्वयोस्तुल्यबलत्वाच्च विकल्प इति । तदाह **सूत्रे, प्रदेशे** चोदकेनातिदेशे सति श्रूयमाणे नार्षेयवाक्ये, **तथाऽनारभ्यविधाने** येयजामहे इति वाक्ये श्रुतनानूयाजवाक्ये च प्रतिषेध एव नञर्थः स्यात् । ततश्च **प्राप्तप्रतिपिद्धत्वाद्विकल्पः स्यादिति । सिद्धान्तस्तु,** प्रतिषेधेऽष्टदोषदुष्टविकल्पापातान्नार्षेयमितिनित्यवच्छुतस्यात्यन्तायुक्तपाक्षिकबाधा- पातात्पदद्वयलक्षणाया अपि पर्युदासाश्रयणमेव युक्तमिति ''आर्षेयवरणवर्जं'' चोदकप्राप्तमाङ्गान्तरं सर्वं कार्यम् । तथाऽनुयाजभिन्नेषु यजतिषु ''येयजामहे'' इति पञ्चाक्षराण्युच्चारयेत् इति वाक्यार्थः । न चास्मिन् पक्षे अनार्षेयमित्यादिसमासेन निर्देशापत्तिः । समासप्रकरणे ''विभाषा'' इति सूत्रेण कदाचित्तु समासः, कदाचित्तु तदर्थ एव वाक्यमस्तीत्युक्तत्वेनासमासेऽपि वाक्ये पर्युदासाश्रयण- सम्भवात् । यत्तु वार्तिककृतो विग्रहसमासयोरेकार्थकत्वं नास्तीत्युपेत्य विभाषापदप्रत्याख्यानं तदे- तदैक्यार्थानुभवन्यायविरोधादयुक्तमित्याहुः ।

प्रतिषेधनिमित्तश्च प्रत्याम्नाननिबन्धनः । अर्थलोपप्रयुक्तश्च त्रेधा बाधोऽत्र वर्णितः । अत्राध्यायेऽयं बाधः प्रतिषेधनिमित्तः । ''शरमयं बर्हिः'' इत्यादौ कुशादीनां शरादिना बाधः प्रत्याम्नानकृतः । ''स्वयं दितं बर्हिर्भवति'' इत्यादावर्थलोपाल्लवनादेर्बाध इति त्रेधा बाध इति वदन्ति ।

**इति प्रथमं प्रदेशानारभ्यविधानयोर्निषेधस्य पर्युदासताधिकरणम् (सूत्राणि १-४)**

## अथ द्वितीयं न तौ पशौ करोतीत्यादिनिषेधस्यार्थवादताधिकरणम् (सूत्रम् ५ )

## अपूर्वे चार्थवादः स्यात् ॥ ५ ॥

पूर्वन्यायेन शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोराज्यभागौ ''अग्नीषोमाभ्यां यजति'' इति विधाय ''न तौ पशौ करोति'' इति निषिध्य पश्चात् ''न सोमेऽध्वरे'' इत्येवमाम्नायते । तत्र नञ् ''न तौ पशौ करोति'' इत्यत्र निषेधार्थ इत्यविवादम् । पर्युदासे हि पशौ नञन्वयेन पश्वन्यत्र तावाज्यभागौ कुर्यादिति वाऽर्थः स्यात्, उत ताविति तच्छब्देनैवान्वयेन पशावाज्यभागव्यतिरिक्तं प्राकृतं सर्वं प्रकृतिवत्कुर्यादिति वाऽर्थः स्यात् । नाद्यः । आज्यभागयोर्दर्शपूर्णमासमात्रासाधारण्येन पशुसाधारण्याभावेन तद्वर्ज- मित्युक्तिवैयर्थ्यात् । नान्त्यः । प्रकृतिवत्कुर्यादिति वाक्यस्यासन्निधानेन प्रकृतिवच्छब्दशेषत्वायोगात् । तस्मान्न सोमेऽध्वर इत्यत्रैव नञ् किं प्रतिषेधः, पर्युदासो वा, अर्थवादो वेति **सन्देहः** । प्रतिषेधस्य पूर्वत्रेवाष्टदोषदुष्टत्वाद्विकल्पादिप्रसङ्गात्पर्युदास इति **प्राप्ते सिद्धान्तः,** ''न सोमेऽध्वरे तौ करोति'' इत्यत्रापि किं नञः सोमान्वयेन सोमान्यकर्मण्याज्यभागौ कुर्यादिति वा पर्युदासः, यद्वा नञस्ताविति तच्छब्देनैवान्वयेनाज्यभागव्यतिरिक्तं चोदकप्राप्तमङ्गजातं कुर्यादिति वा । नाद्यः । पूर्वोक्तरीत्याऽऽज्य- भागविधेर्दर्शपूर्णमासमात्रासाधारण्येन सोमसाधारण्याभावात् । नान्त्यः । सोमस्य दर्शपूर्णमासा- प्रकृतिकत्वेनापूर्वतया तत्र प्रकृतिवच्छब्दाभावेन तच्छेषत्वायोगात् । न च सोमे तयोरभावेऽपि तदङ्गदीक्षणीयादिषु तयोश्चोदकतः प्राप्तिसत्त्वात्तत्र पर्युदासाय न सोम इति वाक्यमिति शङ्क्यम् । तथात्वे तदङ्गपशावपि तयोस्सत्वेन तत्रापि तत्परिवर्जनस्य दीक्षणीयादिन्यायेन सिद्धत्वात् ''न तौ पशौ'' इत्यस्यावक्तव्यतापातात् । तस्मात् ''न तौ पशौ'' इत्यस्यायमर्थवादः ''यथा सोमे नाज्यभागौ तथा पशावपि नाज्यभागौ'' इति । तदाह **सूत्रे, अपूर्वे च सोमे प्रतिषेधोऽर्थवादस्स्यादिति ।** फलं तु, पशौ चोदकतोऽङ्गानामाज्यभागादीनां प्राप्तेः ''न तौ पशौ'' इति निषेधाच्च विकल्पेनाज्यभागयोरनुष्ठानं पशाविति ।

**इति द्वितीयं न तौ पशौ करोतीत्यादिनिषेधस्यार्थवादताधिकरणम् (सूत्रम् ५)**



## अथ तृतीयं नातिरात्रे षोडशिनं गृह्णातीत्यादिनिषेधस्य विकल्परूपताधिकरणम् (सूत्रम् ६)

## शिष्टत्वात्प्रतिषेधः स्यात् ॥ ६ ॥

पूर्वत्र प्रत्यक्षानुमितवाक्यप्राप्तयोर्विकल्प उक्तः । अत्र तु प्रत्यक्षवाक्यप्राप्तयोरेव स उच्यत इति **सङ्गतिः** । ज्योतिष्टोमस्य संस्थाविशेषे श्रूयते ''अतिरात्रे षोडशिनं गृह्णाति,'' ''नातिरात्रे षोडशिनं गृह्णाति'' इति । तत्र किं नातिरात्र इति पर्युदासः, प्रतिषेधः, अर्थवादो वेति **सन्देहे,** अष्टदोषदुष्ट- विकल्पादि- परिहाराय पर्युदासः, अर्थवादो वाऽत्र नञ् इति **प्राप्ते सिद्धान्तः,** पर्युदासो हि ''अतिरात्रव्यतिरिक्ते षोडशिनं गृह्णाति'' इति वा, ''अतिरात्रे षोडशिव्यतिरिक्तमन्यद्गृह्णाति'' इति वा स्यात् । तत्रोभयत्रापि ''अतिरात्रे षोडशिनं गृह्णाति'' इति विध्यानर्थक्यं स्यात् । नाप्यर्थवादत्वम् । ''अतिरात्रे षोडशिनं यथा न गृह्णति तथाऽतिरात्रे गृह्णाति'' इति स्तुतेरसम्भवात् । तस्मात्प्रतिषेध इति

ग्रहणाग्रहणयोरगत्या विकल्पः । प्रतिषेधवत्वाय तदग्रहणेऽपि क्रतुसिद्धिः । विध्यर्थवत्त्वायानुष्ठीयमाने फलभूयस्त्वं कल्प्यत इति व्यवस्थितविकल्पः । तदाह **सूत्रे, शिष्टत्वात्** विहितत्वात् षोडशिनस्तन्निषेधः प्रतिषेध इति । **फलं तु,** फलातिशयकामस्य षोडश्यनुष्ठानम् ।

इति तृतीयं नातिरात्रे षोडशिनं गृह्णातीत्यादिनिषेधस्य विकल्परूपताधिकरणम् (सूत्रम् ६)

## अथ तुरीयमनाहुतिर्वै जर्तिलाश्चेत्यादिनिषेधस्यार्थवादताधिकरणम् (सूत्रम् ७)

**न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्यादानर्थक्यात्परसामर्थ्याच्च ॥ ७ ॥**

आपवादिकी सङ्गतिः । ''अग्निहोत्रं जुहोति'' इति विधाय श्रूयते ''जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा जुहुयात् न ग्राम्यान् पशून् हिनस्ति । नाऽरण्यान् । अथो स्वल्वाहुरनाहुतयो वै जर्तिलाश्च गवीधुकाश्च । पयसाऽग्निहोत्रं जुहोति'' इति जर्तिला आरण्यास्तिलाः । गवीधुकाः आरण्य-गोधूमाः । तत्र किं ''जर्तिलयवाग्वा'' इत्यादिर्विधिः, ''अनाहुतिर्वै'' इत्यादिस्तस्य प्रतिषेधः, उभावप्यर्थवादौ ''पयसाऽग्निहोत्रं जुहोति'' इत्यस्येति **सन्देहे,** पूर्वन्यायेन ''जर्तिलयवाग्वा वा जुहुयात्'' इति प्रत्यक्षलिङ्विहितजर्तिलादेः ''अनाहुतिः'' इति प्रतिषेधः । ततश्च ''पयसाऽग्निहोत्रं'' इति वाक्यान्तरविहितपयसा जर्तिलगवीधुकयवाग्वोर्विकल्प इति **प्राप्ते सिद्धान्तः,** यद्ययं विकल्पार्थः ''अनाहुतिः'' इति प्रतिषेधस्तदा पयोविधिवाक्येनैव तयोर्जर्तिलादियवाग्वोः पाक्षिकत्वरूपविकल्प-सिद्धेर्व्यर्थ एव प्रतिषेधः स्यात् । तस्माज्जर्तिलादिनिन्दाद्वारा पयोविध्येकवाक्यतया पयःस्तुत्यर्थ-त्वेनार्थवादः । ''जर्तिलयवाग्वा'' इत्यादिवाक्यमपि ग्राम्यारण्यादिप्राण्यहिंसारूपगुणार्था अपि ''जर्तिलगवीधुका नाहुतियोग्याः । अतः पय एव प्रशस्ततरम्'' इति पयोविधिस्तुत्यर्थमिति सर्वस्यैक-वाक्यत्वसम्भवे वाक्यभेदाश्रयणायोगात्सर्वोऽप्ययं पयोविध्यर्थवाद इति । तदाह **सूत्रे, अन्यं द्रव्यान्तरं न चेत् प्रकल्पयेत्** न चेद्विदध्यात्तदा विहिते विषये न प्रतिषेधः स्यात् । प्रक्लृप्तौ प्रकृतौ द्रव्यान्तरविधौ तु **अर्थवादः स्यात् । परसामर्थ्याद्** द्रव्यान्तरविधिबलादेव विकल्पसिद्धेः प्रतिषेधस्या**नर्थक्यात्** । यद्वा **परसामर्थ्यात्** परेण द्रव्यान्तरविधिना सावकाशत्वेनैकवाक्यतामुपगन्तुं समर्थत्वाच्चेति । **फलं तु,** जर्तिलयवाग्वोरननुष्ठानं व्यक्तम् । अनाहुतिपदे पर्युदासपक्षासम्भवस्तन्त्ररत्ने व्यक्तः ।

इति तुरीयमनाहुतिर्वै जर्तिलाश्चेत्यादिनिषेधस्यार्थवादताधिकरणम् (सूत्रम् ७)



## अथ पञ्चमं त्रैयम्बकादावभिघारणानभिघारणादीनामर्थवादताधिकरणम् (सूत्रम् ८)

**पूर्वैश्च तुल्यकालत्वात् ॥ ८ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । आधाने श्रूयते ''होतव्यमग्निहोत्रं न होतव्यं वेति मीमांसन्ते ब्रह्मवादिनः । यद्यजुषा जुहुयाद्यथापूर्वमाहुतीर्जुहुयाद्यन्न जुहुयादग्निः पराभवेत्तूष्णीमेव होतव्यमिति । तथा चातुर्मास्येषु त्र्यम्बकमन्त्रसम्बन्धेन त्र्यम्बकनामका बहव एककपालपुरोडाशा विहिताः । तत्र श्रूयते ''अभिघार्या अनभिघार्या इति मीमांसन्ते ब्रह्मवादिनः । यदभिघारयेद्रुद्रायास्ये पशून्निदध्यात् । यन्नाभिघारयेन्न रुद्रायास्ये पशून्निदध्यादथो खल्वाहुरभिघार्या एव'' इति । तत्र किं होमाभिघारण-योर्विकल्पः, उत नियमेनानुष्ठानमिति **सन्देहे,** पूर्वत्र विधेयान्तरश्रवणेन जर्तिलादिवाक्यस्य स्तावकतया तद्विध्येकवाक्यत्वेऽपि प्रकृते विधेयान्तराश्रवणेन प्राथमिकस्य होमाभिघारश्रवणस्य विध्यन्तरशेषत्वा-सम्भवेन विधिपरत्वमेवोपेयम् । न मीमांसाविशेषणत्वम् । विधिसम्भवे तदयोगात् । एवञ्च 'न होतव्यम्' 'नाभिधार्या' इति तु नञ् प्रतिषेधार्थ एव । न मीमांसाविशेषणम् । तन्मात्रकोटिक-मीमांसाऽयोगात् । अतो जर्तिलादिवाक्यवन्नार्थवादत्वमपीति विहितप्रतिषिद्धत्वाद्धोमाभिघारणयो-र्विकल्पः । एवञ्च सति विकल्पेऽन्यतरपक्षपरिग्रहायानुष्ठानकाले प्राप्ता मीमांसाऽनूद्यते । अन्ते ''तूष्णीं होतव्यम्'' इति वाक्यं पूर्वविहितहोमानुवादेन तूष्णींभावरूपगुणविध्यर्थं । ''अभिधार्या'' इत्यन्तिम-वाक्यन्त्वनुवाद इति **प्राप्ते सिद्धान्तः,** ''होतव्यम्, न होतव्यम्'' । ''अभिघार्या'' ''नाभिघार्या'' इति वचनानि न विधिप्रतिषेधपराणि । होमाभिघारणतन्निषेधयोमीमांसासम्बन्धित्वेन तद्विशेषणपरत्वस्य इतिशब्धबलेन स्पष्टत्वात् । अन्ते श्रुतं तूष्णीमेवेत्यादिवाक्यं त्वन्यपरत्वाद्विधायकम् । एवं च मीमांसा-विशेषविषयतया प्रशस्तमित्येवं तत्स्तावकत्वेन सर्वोऽयं तच्छेषतयार्थवादः । न च ''यदभिघारये-द्रुद्रायास्ये पशून्निदध्यात्'' इत्यभिघारणानिन्दाऽर्थवादायोगः । तेन प्रतिषेधस्यावगमादिति शङ्क्यम् । ''एव मिदमभिघारणं प्रशस्तं यत्सन्तमपि दोषमनादृत्य कर्तव्यम्'' इत्येवं निन्दावचनस्यापि प्रशस्त-तरत्वज्ञापनार्थत्वादिति । तदाह **सूत्रे, पूर्वैः** जर्तिलादिवाक्यैर्होमाभिघारणवाक्ययोरप्यन्यार्थतया **तुल्य**त्वात्तद्वदेवार्थवादतेति । **फलं तु,** नियमेन होमाभिघारणयोरनुष्ठानम् ।

इति पञ्चमं त्रैयम्बकादावभिघारणानभिघारणादीनामर्थवादताधिकरणम् (सूत्रम् ८)

## अथ षष्ठमाधाने उपवादस्य विकल्पताधिकरणम् (सूत्राणि ९-११)

**उपवादश्च तद्वत् ॥ ९ ॥**

**(प्रतिषेधादकर्मेति चेत् ॥ १० ॥ न शब्दपूर्वत्वात् ॥ ११ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । आधान एव ''य एवं विद्वान् वारवन्तीयं गायति'' इत्यादिना वारवन्तीयसामगानं विधाय श्रूयते ''उपवीता वा एतस्याग्न्यो भवन्ति । यस्याग्न्याधेये ब्रह्मा सामानि गायेत्'' इति । तत्रायं प्रतिषेधः किमनुवादः, उत प्रतिषेधविधिरेवेति **सन्देहे**, नात्र सामगानमात्रं निषिध्यते । किन्तु ''ब्रह्मा'' इति श्रवणात् ब्रह्मकर्तृकता साम्नो निषिध्यते । तस्याश्चान्यतो न प्राप्तिः । सामगानस्योद्गातृसमाख्ययोद्गातर्येव प्राप्तेः । अतः प्रतिषेधपर्युदासयोरयोगात् ''यतो ब्रह्मापि न गायति ततः प्रशस्तमिदम्'' इति सामविधेरर्थवादोऽयं पूर्ववदेवेत्यर्थवादार्थे नित्यानुवादः ''नान्तरिक्षे न दिवि चेतव्यः'' इत्यादिवदयं निषेध इति **प्राप्ते सिद्धान्तः**, अनुवादमात्रस्याऽनर्थक्याद्गाननिषेधविधिरेवायम् । ब्रह्मशब्दस्य ब्रह्मणपरत्वमादायोद्गातर्येव ब्रह्मशब्धसम्भवात्तदंशेऽनुवादः । तथा च ''यत् ब्रह्म उद्गाता साम न गायेत्'' इति निषेधात् ''वारवन्तीयं साम गायेत्'' इति विधानाच्च विकल्प इति । तदाह **सूत्रे, उपवादः** सामविधिसमीपे श्रूयमाणो निषेधोऽपि ''नातिरात्रे षोडशिनम्'' इति निषेधवत्प्रतिषेध इति । **फलं पूर्वपक्षे** नित्यं साम्नो गानम् । **सिद्धान्ते तु**, पाक्षिकमिति व्यक्तम् ।

इति षष्ठमाधाने उपवादस्य विकल्पताधिकरणम् (सूत्राणि ९-११)

## अथ सप्तमं दीक्षितो न ददातीत्यादिनिषेधस्य पर्युदासताधिकरणम् (सूत्राणि १२-१५)

**दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात्सर्वदानहोमपाकप्रतिषेधः स्यात् ॥ १२ ॥**

**(अक्रतुयुक्तानां वा धर्मः स्यात्क्रतोः प्रत्यक्षशिष्टत्वात् ॥ १३ ॥ तस्य वाप्यानुमानिकमविशेषात् ॥ १४ ॥ अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्प्रतिषेधे विकल्पः स्यात् ॥ १५ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ज्योतिष्टोमे श्रूयते ''दीक्षितो न ददाति । न जुहोति । न पचति'' इति । तत्र किं सर्वेषामेव पुरुषार्थानां क्रत्वर्थानामुपदिष्टानामतिदिष्टानां च प्रतिषेधः, किं वा प्रत्यक्षोपदिष्टभिन्नानां सर्वेषाम्, यद्वा पुरुषार्थानामग्निहोत्रादीनामेवेति त्रेधा **सन्देहे**, अविशेषात्सर्वेषां प्रतिषेध इत्येकः **पूर्वपक्षः** । तदाह सूत्रे, **दीक्षितस्येत्यादि** । व्यक्तोऽर्थः ।

सर्वेषां प्रतिषेधे ''ग्रहैर्जुहोति'' इत्यादिप्रत्यक्षवचनविहितानां बलवत्वात्तदन्यसर्वप्रतिषेध इति द्वितीयः । तदाह **सूत्रे, अक्रतुयुक्तानां वा धर्मः स्यात् क्रतोः प्रत्यक्षशिष्टत्वादिति** । **सिद्धान्तस्तु**,



प्रत्यक्षोपदिष्टकर्मांद्यन्यसर्वनिषेधे क्रत्वर्थानामपि निषेधप्राप्त्या, तेषां विहितप्रतिषिद्धत्वाद्विकल्पः प्राप्नोति । स चाष्टदोषदुष्टः । तस्मात्पुरुषार्थानामेव निषेधः । न च तत्रापि विहितप्रतिषिद्धत्वा-दष्टदोषदुष्टो विकल्पः पुरुषार्थहोमादावपि प्राप्नोतीति शङ्क्यम् । पुरुषार्थतया विहितानामग्निहोत्रादीनां क्रतुमध्येऽप्यवश्यकर्तव्यतया प्राप्तानां प्रतिषेधः प्रकान्तक्रत्वर्थतया क्रियत इति भिन्नविषयतया विकल्पाप्रासक्तेः प्रतिषेध एवाश्रयणीयः । न पर्युदास इति ।

यद्यपि **अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्प्रतिषेधे विकल्पः स्यात्** इति **सूत्रे भाष्ये** च पर्युदासपक्ष एव सिद्धान्तितस्तथापि तत्पक्षे सन्निहितप्रायणीयादिष्वतिदिष्टानां क्रत्वर्थानां चतुरवत्तादि-होमानामेव पर्युदासः स्यादित्यादिदोषकीर्तनेन तं पक्षं दूषयित्वा **शास्त्रदीपिकायां** प्रतिषेधपक्ष एव स्थापितः । स च वार्तिकेऽनुपलम्भात्स्वबुध्युत्प्रेक्षामूलो वा, बृहट्टीकामूलो वेत्याहुः । **फलन्तु**, दीक्षितस्य पुमर्थभूतहोमदानादेरननुष्ठानम् ।

इति सप्तमं दीक्षितो न ददातीत्यादिनिषेधस्य पर्युदासताधिकरणम् (सूत्राणि १२-१५)

## अथाष्टमं वर्त्महोमादिभिराहवनीयस्य बाधाधिकरणम् (सूत्रम् १६)

**अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्सन्दिग्धमाराद्विशेषशिष्टं स्यात् ॥ १६ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ज्योतिष्टशेमे सोमक्रये श्रूयते ''पदे जुहोति'' इति । तथा हविर्धान-प्रवर्तने ''वर्त्मनि जुहोति'' इति, ''गार्हपत्ये पत्नीसंयाजान् जुहोति'' इत्यादि । तत्र किं पदादिना ''आहवनीये जुहोति'' इत्यनारभ्यश्रुताहवनीयस्य बाधोऽस्ति, उत विकल्प इति **सन्देहे**, सामान्यविशेष शास्त्रयोस्तुल्यबलत्वाद्विकल्प इति **पूर्वपक्षः** । सामान्यशास्त्रस्य विशेषशास्त्रेण ''ऐन्द्या गार्हपत्यम्'' इति शास्त्रेण मन्त्रलिङ्गकल्प्यशास्त्रस्येव, शरशास्त्रेण कुशप्रापकशास्त्रस्येव च मन्थरगामिनः शीघ्रगामिना बाध एव । न विकल्प इति वाच्यम् । लिङ्गकल्प्यस्य चोदकशास्त्रस्य च द्वयोः कल्प्यत्वेन प्रत्यक्षश्रुतैन्द्री शरशास्त्राभ्यां बाधेऽपीह सामान्यविशेषशास्त्रयोर्द्वयोरपि प्रत्यक्षत्वेन शीघ्रमन्थरभावकृतविशेषाभावा-ज्जुहोतिशब्दाविशेषेण विशेषेष्वप्याहवनीयस्य विहिततया व्रीहियववदेकविषयत्वात्पूर्वत्र विकल्पा-भावेऽपीह विकल्पस्यैव युक्तत्वादिति । **सिद्धान्तस्तु**, होमसामान्ये श्रुतस्याहवनीयस्य पत्नीसंयाजादि-होमविशेषेषु लक्षणयैव प्राप्तिः । न श्रुत्या । तथा च सामान्यशास्त्रेण यावत्पत्नीसंयाजादिविशेषेषु लक्षणयैव प्राप्तिः । न श्रुत्या । तथा च सामान्यशास्त्रेण यावत्पत्नीसंयाजादिविशेषेषु लक्षणयाऽऽ-हवनीयः प्राप्यते तावदेव गार्हपत्यादिशास्त्रं श्रुत्योपात्तपत्नी संयाजादिषु गार्हपत्यं प्रापयदाहवनीयं

रुणद्धीति विशेषेण सामान्यस्य बाधः । किञ्च सामान्यशास्त्रं विशेषशास्त्रादन्यत्र सावकाशम् । विशेषशास्त्रं तु निरवकाशम् । अतोऽपि तेन तस्य बाधो, न विकल्पः । तदाह **सूत्रे, अविशेषेण यच्छास्त्रं** सामान्यविषयं यच्छास्त्रं तस्यारात् दूरे **विशेषशिष्टं विशेषशास्त्रं** स्यात् । विशेषशास्त्रविषये सामान्यशास्त्रे न स्यादिति यावत् । कुतः ? **सन्दिग्धं हि तत्** सामन्यशास्त्रं विशेषविषयं भवति न वेति सन्देहास्पदम् । अतो निःसन्दिग्धविशेषशास्त्रापेक्षया विलम्बितप्रवृत्तिकञ्च । न च विलम्ब्यापि प्रवर्ततामिति वाच्यम् । **विकल्पस्यान्याय्यत्वादिति । फलं तु,** पदादावेव विशेषहोमानुष्ठानम् ।

इत्यष्टमं वर्त्महोमादिभिराहवनीयस्य बाधाधिकरणम् (सूत्रम् १६)

## अथ नवमं वैमृधादिषु साप्तदश्यविधेर्वाक्यशेषताधिकरणम् (सूत्राणि १७-१९)

**अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाज्यभागवत्प्राकृतप्रतिषेधार्थम् ॥१७॥**

**(विकारे तु तदर्थं स्यात् ॥ १८ ॥ वाक्यशेषो वा क्रतुना ग्रहणात्स्यादनारभ्य-विधानस्य ॥ १९ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ''सप्तदश सामिधेनीरनुब्रूयात्'' इत्यनारभ्य श्रूयते । साप्तदश्यं प्रकृतौ पाञ्चदश्येन बाधितं सद्विकृतिभूतमित्रविन्दादौ निविशत इत्युक्तं तार्तीयषष्ठपादे **प्रकरणाविशेषात्तु विकृतौ विरोधि स्यात्** इति नये । विकृतिष्वपि कासुचित्पशुमित्रविन्दाध्वरकल्पादिषु प्रकरणे साप्तदश्यं श्रुतम् । तत्र किं विकृतिप्रकरणगतं सप्तदशसामिधेनीवचनं गृहमेधीयाज्यभागविधिवत्पशुमित्र-विन्दादेरपूर्वतापादकम्, उतानारभ्यविहितस्य साप्तदश्यस्य तत्रोपसंहारार्थमिति **सन्देहे,** वैकृता भावना हीतिकर्तव्यतामाकंक्षन्ती सन्निहिताः प्रकृतौ क्लृप्तोपकाराः सामिधेनीरुपादाय निराकांक्षा नाङ्गान्तरमपेक्षत इति चोदकनिवृत्त्या गृहमेधीयाज्यभागवदपूर्वतामेव विकृतेरापादयति । न च तत्र सप्तदशसामिधेनीवचनं सामिधेनीविधानार्थम् । किन्तु चोदकप्राप्तसामिधेन्यनुवादेन साप्तदश्यविधानार्थमिति शङ्क्यम् । अनाराभ्यश्रुतवाक्येनैव सर्वविकृतिषु तत्प्राप्तेरविधेयतया साप्तदश्यस्यानुवादकत्वात् । एवञ्च पूर्वत्र यथा पदशास्त्रस्याहवनीयादिबाधकत्वम्, तथा साप्तदश्यवाक्यस्य चोदकबाधकत्वमिति **प्राप्तम् ।** तदाह **सूत्रे, अप्रकरणे अनारभ्य श्रूयमाणं यच्छास्त्रं,** तदेव साप्तदश्यविधायकम् । अतो वैकृतप्रकरणे **श्रूयमाणं** वाक्यं न साप्तदश्यविधायकम् । किन्तु सामिधेनी**विधानार्थमेव । तस्मादाज्यभाग**श्रवणवच्चोदक-लोपार्थमेवेति । **सिद्धान्तस्तु,** स्यादेवमाज्यभागपुनःश्रवणन्यायः । यद्यत्र सामिधेनीविधिः स्यात् । न चैवम् । तासां चोदकत एव प्राप्तेः । किन्तु चोदकप्राप्तसामिधेन्यनुवादेन साप्तदश्यविधिपरमेव वैकृतं



वचनम् । न च तदनारभ्यवाक्यादेव प्राप्तमिति शङ्क्यम् । तद्धि वाक्यं विकृतौ साप्तदश्यं प्राप-यच्चोदकप्राप्तसामिधेन्यनुवादेनैव प्रापयति । ततश्चानारभ्यवाक्यं यावदेव सामिधेनीद्वारा साप्तदश्यस्य सकलविकृत्यङ्गतां कल्पयितुमुपक्रमते, तावत्प्राकरणिकैर्वाक्यैर्मित्रविन्दादौ साप्तदश्यसम्बन्धे कृते तावतैव पर्यवस्यन्न विकृत्यन्तरसम्बन्धकल्पनमित्युपसंहारार्थतया साप्तदश्यपदस्यार्थवत्वे सम्भवति न निरर्थकानुवादकत्वकल्पनं युक्तमिति नापूर्वत्वं मित्रविन्दादेरिति । **फलं तु,** साप्तदश्यवर्जं चोदक-प्राप्तसर्वाङ्गानुष्ठानम् । न चैवं वैकृतवाक्येनैव साप्तदश्यसिद्धेरनारभ्यवादो व्यर्थ इत्याशङ्क्योक्तं **तन्त्ररत्ने** ''वाक्यद्वयाम्नानावैयर्थ्यायोभाभ्यामवगतं सामिधेनीसाप्तदश्यमभ्युदयकारि'' इति । केचित्तु, अनारभ्या धीतवाक्यं सौर्यादिविकृतिष्वातिदेशिकेन पाञ्चदश्येन विकल्पितं साप्तदश्यं विधातुम् । मित्रविन्दादिगतं तु वाक्यं तासु विकृतिषु पाञ्चदश्यनिवर्तनेन साप्तदश्यनियमार्थमिति द्वयमर्थवदित्याहुः ।

इति नवमं वैमृधादिषु साप्तदश्यविधेर्वाक्यशेषताधिकरणम् (सूत्राणि १७-१९)

## अथ दशमं पृथिव्यै स्वाहेत्यादिविधिनाऽविहितस्वाहाकारेषु प्रदानेषु स्वाहाकारविधानाधिकरणम् (सूत्राणि २०-२२)

**मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात् ॥ २० ॥**

**(अनाम्नाते च दर्शनात् ॥ २१ ॥ प्रतिषेधाच्च ॥ २२ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । अनारभ्य श्रूयते ''वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते'' इति । केषुचिद्दर्वीहोमेषु स्वाहाकारमन्त्रः पठ्यते ''पृथिव्यै स्वाहा । अन्तरिक्षाय स्वाहा । दिवे स्वाहा । वायवे स्वाहा'' इति । तत्र किमयं पृथिव्यै स्वाहेत्यादिमन्त्रः अनारभ्यवादप्राप्तस्वाहाकारस्य विशेषेषूपसंहारार्थतया तद्वाक्यशेषः, उत नियमार्थ इति **सन्देहे,** पूर्वत्र यथा वैकृतसाप्तदश्य-वाक्यमनारभ्यवादप्राप्तसाप्तदश्योपसंहारार्थमेवमिदमपि स्वाहेतिश्रवणमुपसंहारार्थमिति **प्राप्ते सिद्धान्तः,** ''पृथिव्यै स्वाहा'' इत्यादिमन्त्रोक्तानारभ्यवादस्योपसंहारार्थमन्त्राणां मानान्तरप्राप्तार्थप्रकाशकत्वेना-विधायकतयोपसंहारे स्वसामर्थ्याभावात् । किन्तु ''स्वाहाकारेण वषट्कारेण वा'' इत्यनियमेन प्राप्तस्य स्वाहाकारस्य नियमार्थो नोपसंहारार्थ इति । तदाह **सूत्रे, मन्त्रेषु** देवतारूप**गुणोपदेशादवाक्यशेषत्व-**मनारभ्यवादशेषत्वं न **स्यादिति । फलं तु पूर्वपक्षे,** होमान्तरे स्वाहाकारस्य बाधः । **सिद्धान्ते तु,** तत्राप्यनुष्ठानमिति ।

इति दशमं पृथिव्यै स्वाहेत्यादिविधिनाऽविहितस्वाहाकारेषु प्रदानेषु स्वाहाकारविधानाधिकरणम् (सूत्राणि २०-२२)

**अथैकादशमग्न्यतिग्राह्यस्य विकृतावुपदेशाधिकरणम् (सूत्राणि २३-२८)**

**अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् ॥ २३ ॥**

**(मासिग्रहणं च तद्वत् ॥ २४ ॥ ग्रहणं वा तुल्यत्वात् ॥ २५ ॥ लिङ्गदर्शनाच्च ॥ २६ ॥ ग्रहणं समानविधानं स्यात् ॥ २७ ॥ मासिग्रहणमभ्यासप्रतिषेधार्थम् ॥२८॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । अनारभ्य श्रूयते ''य एवं विद्वानग्निं चिनुते'' इति । तथा ज्योतिष्टोमं प्रकृत्य श्रूयते ''उपष्टम्भनं वा एतद्यज्ञस्य यदतिग्राह्याः'' इति । अतिग्राह्यनामका ग्रहाः । तत्र किमग्न्यतिग्राह्ययोर्विकृतौ चोदकेन प्राप्तिरस्ति, उत नेति **सन्देहे,** नास्तीति **प्राप्तम्** । कुतः ? ''अथातोऽग्निमग्निष्टोमेनानुयजन्ति । तमुक्थ्येन । तमतिरात्रेण । तं द्विरात्रेण तं त्रिरात्रेण'' इत्याद्यनुक्रमेण द्विरात्रादिद्वादशरात्रान्तं चयननिष्पादिते स्थण्डिले आहवनीयाग्निस्थापनानन्तरं तस्मिन्नग्नौ च ''अग्निष्टोमादिभिर्यजेत'' इत्युक्त्या विकृतिष्वग्नेः पुनःश्रवणात्तथा ''उक्थ्ये गृह्णीयात्'' ''पृष्ठ्ये गृह्णीयात्'' ''विश्वजिति गृहीतव्या'' इत्यतिग्राह्याणामपि कासुचिद्विकृतिषु पुनःश्रवणाद्यदि चोदकेनाग्न्यतिग्राह्ययोर्विकृतिषु प्राप्तिस्स्यात्तदा कासुचिद्विकृतिषु पुनःश्रवणमनर्थकं स्यात् । कृत्यान्तराभावात् । पूर्वत्र स्वाहाकारस्य होमान्तरेषु प्रवृत्तावपीह विकृत्यन्तरे नास्ति चोदकप्रवृत्तिरिति । तदाह **सूत्रे, अग्नेरतिग्राह्यस्य च कासुचिद्विकृतिषु उपदेशात् विकृत्यन्तरेष्वप्रवृत्तिस्स्यात्** । इति । **सिद्धान्तस्तु,** चोदको हि नाग्न्यतिग्राह्यमात्रविषयः । तन्मात्रे प्रत्येकं चोदकताभावात् । किन्त्वङ्गान्तरसाधारणः । तथा च षोडश्यादिविकृत्यन्तरेऽङ्गान्तरप्राप्त्यर्थं चोदकाभ्युपगमादङ्गान्तरवदग्न्यतिग्राह्यावप्यतिदिश्येयातामेन । चोदकार्थत्वाविशेषात् । अतो नातिदेशनिराकरणार्थं पुनःश्रवणम् । किन्तु प्रकृत्या समानविधित्वसिध्द्यर्थमेव प्रकृतौ यथोपदेशेनैवाग्निचयनप्राप्तिस्तथा विकृतावप्युपदेशेन प्राप्त्यर्थम् । अन्यथाऽनारभ्यविधेः प्रकृतावेव निवेशेन षोडश्यादिविकृत्यन्तर इवाग्निष्टोमादावपि प्रकृतिवच्छब्देनैव प्राप्त्या प्रकृत्या तुल्यविधानं न स्यात् । प्रकृतितुल्यविधानं च ''श्येनचितिं चिन्वीत स्वर्गकामः'' इत्याद्युक्तगुणकामानामपि प्रकृतौ प्रवृत्त्यर्थम् । अन्यथा तेषां **गुणकामेष्वाश्रित्वात्प्रवृत्तिः स्यात्** इत्यष्टमाद्यपादोक्तदिशा गुणकामानां विकृतावप्रवृत्तिः स्यात् । गुणकामस्य प्रकृताग्निराश्रयश्च । प्रकृताग्निश्च प्रकृतिविकृतिसाधारण इति विकृतिष्वपि गुणकामप्रवृत्तिरिति । **फलं तु पूर्वपक्षे,** अग्न्यतिग्राह्योपदेशहीन विकृतिषु नानयोरनुष्ठानम् । **सिद्धान्ते तु,** तत्राप्यनुष्ठानमिति ।

**इत्येकादशमग्न्यतिग्राह्यस्य विकृतावुपदेशाधिकरणम् (सूत्राणि २३-२८)**



**अथ द्वादशमुपस्तरणाभिघारणाभ्यां सहैव चतुरवदानाधिकरणम् (सूत्राणि २९-३२)**

**उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वाल्लोकवदुपपत्तेर्गुणभूतत्वात् ॥ २९ ॥**

**(तत्संस्कारश्रुतेश्च ॥ ३० ॥ ताभ्यां वा स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनात् ॥ ३१ ॥ तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमणात् ॥ ३२ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोः ''सकृदुपस्तृणाति । द्विर्हविषोऽवद्यति । सकृदभिघारयति'' इति विधाय श्रूयते ''चतुरवत्तं जुहोति'' इति । तत्र चतुरवत्तहोमे किं हविष एव चतुरवदानम्, उपस्तरणाभिघारणे त्वधिके । किं वा ताभ्यां सह चतुरवदानम् । हविषो द्विरेवेति **सन्देहे,** ''चतुरवत्तं जुहोति'' इति द्वतीयया यदेव होतव्यं, तदेव चतुरवदेयं प्रतीयत इति हविष एव चतुरवदानम् । उपस्तरणाभिघारणयोस्तु हविस्संस्कारार्थत्वेन होमसाधनत्वाभावात् । न चैवं ''द्विर्हविषः'' इत्युक्त्यनुपपत्तिरिति शङ्क्यम् । वचनद्वयबलेन द्विरवदानचतुरवदनयोर्विकल्पाङ्गीकारात् । एवञ्च पूर्वत्रातिदेशबाधाभावेऽप्यत्र चतुरवत्तेन पक्षे व्यवदानस्य बाधः । उपस्तरणाभिघारणे त्वधिके इति **प्राप्तम्** । तदाह **सूत्रे, उत्पत्ता**वाग्नेयादिवाक्येषु पुरोडाशस्यैव **तादर्थ्या**द्धोमार्थत्वावगमात्**प्रधानस्य** पुरोडाशस्यैव **चतुरवदानम्** । न च होमानङ्गस्याप्याज्यस्यावदानं किं न स्यादिति वाच्यम् । **होमसंयोगात्** होतव्यस्यैव द्वितीययाऽवदानसंस्कार्यत्वावगमात् । तस्मादा**ज्यमधिकं** पुरोडाशेना**तुल्यत्वात्** । न चैवं षडवत्ततापत्त्या चतुरवत्तताविधातः । **गुणभूतत्वाल्लोकवदुपपत्तेः** । यथा 'प्रस्थं भुंक्ते चैत्रः' इत्यत्र धृतसूपाद्याधिक्येऽपि प्रस्थभुक्त्वाविधातस्तथाऽऽज्यस्यापि गुणभूतत्वान्न चतुरवत्तताविधात इति । **सिद्धान्तस्तु,** स्यादेवं यदि जुहात्यनुवादेन चतुरवत्तताविधिः स्यात् । न चैवम् । तथात्वे ''होतव्यं यत्तच्चतुरवत्तं'' इति जुहोतिपदस्य होतव्ये लक्षणा स्यात् । जुहोति अग्नौ प्रक्षिपतीति यत्, तच्चतुरवत्तमित्युक्तौ त्वाग्नेयादिवाक्ये देवतोद्देशेन हविस्त्यागमात्रप्राप्तावपि होमस्याऽग्नेयादिवाक्येनाप्राप्तेरनुवादायोगात् । अतो ''यच्चतुरवत्तं तज्जुहोति'' इति चतुरवत्तानुवादेन होम एव विधेयः । उपस्तरणाभिघारणाभ्यां द्विरवदानेन च यच्चतुरवत्तं हविः, तज्जुहोति अग्नौ प्रक्षिपति'' इति होम एव विधेय इति द्विरवदानमेव हविष इति । **फलं तु व्यक्तम्** ।

**इति द्वादशमुपस्तरणाभिघारणाभ्यां सहैव चतुरवदानाधिकरणम् (सूत्राणि २९-३२)**

**अथ त्रयोदशमुपांशुयाजेऽपि चतुरवत्तस्याऽवश्यकताधिकरणम् (सूत्रे ३३-३४)**

**साप्तदश्यवन्नियम्येत ॥ ३३ ॥**

**(हविषो वा गुणभूतत्वात्तथाभूतविवक्षा स्यात् ॥ ३४ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । पूर्वत्र होमाङ्गत्वेन चतुस्संख्या न विधीयत इत्युक्तम् । इदानीं चतुस्संख्या होमाङ्गमिति कृत्वा चिन्त्यते । यदा होमानुवादेन चतुरवत्तमिति चतुस्संख्या होमाङ्गत्वेन विधीयत इति पक्षस्तदा किं चतुरवदानमुपांशुयाजार्थाज्यद्रव्येऽपि कर्तव्यम्, **न वेति सन्देहे**, ''चतुरवत्तं जुहोति'' इति होमाङ्गत्वेन विहितं चतुष्ट्वं कथं सम्पाद्यमित्यपेक्षायां ''उपस्तृणाति'' ''अभिघारयति'' इति दर्शपूर्णमासप्रकरणश्रुतयोरुपस्तरणाभिघारणयोः स्रुच्यसंसर्गार्थतया सामर्थ्यरूपलिङ्गबलेन सान्नाय्यौषधविषयत्वेन हविर्विषयत्वाभावात्सान्नाय्यादावेव ताभ्यां सह चतुरवदानं मित्रविन्दादौ साप्तदश्यवदुपसंह्रियत इत्युपांशुयाजद्रव्ये द्विरेवावदानमिति प्राप्तम् । तदाह सूत्रे, **साप्तदश्यवत्** सान्नाय्यौषधयोरेवोप संह्रियेतोऽस्तरणादि । अतो नाज्यद्रव्ये तयोः प्राप्तिरिति । **सिद्धान्तस्तु,** सत्यमेवमुपस्तरणाभिघारणयोः सान्नाय्यादावेवोपसंहार इति तथापि ''चतुरवत्तं जुहोति'' इति होमाङ्गत्वेन विहितचतुरवदानसम्पादनायाऽज्यरूपहविष्येव चतुरवदानम् । अन्यत्र सान्नाय्यादावुपस्तरणादिना चतुष्ट्वसम्पत्त्या हविषो द्विरवदानेऽपीहान्यतो द्विरवदानप्राप्तेश्चतुष्ट्वस्याऽज्य एव सम्पाद्यत्वादिति । न च ''चतुर्गृहीतं जुहोति'' इत्यनारभ्यविधिना सर्वाऽज्यहविष्षु चतुर्गृहीतत्वस्य सिद्धत्वादयं विचारोऽनारभ्य इति वाच्यम् । चतुर्ग्रहणवाक्यमपि नास्तीति कृत्वाचिन्तयाऽस्यारम्भादित्याहुः । वस्तुतस्तु पूर्वाधिकरणोक्तदिशा चतुष्ट्वस्याविधेयत्वाच्चतुर्ग्रहणवाक्येनैवाऽज्यस्य चतुरवदानमिति ।

इति त्रयोदशमुपांशुयाजेऽपि चतुरवत्तस्यावश्यकताधिकरणम् (सूत्रे ३३-३४)

**अथ चतुर्दशं दर्शपूर्णमासयोराग्नेयैन्द्राग्नयोरनुवादताधिकरणम् (सूत्राणि ३५-४६)**

**पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ॥ ३५ ॥**

**(न त्वनित्याधिकारोऽस्ति विधौ नित्येन सम्बन्धस्तस्मादवाक्यशेषत्वम् ॥३६॥ सति च नैकदेशेन कर्तुः प्रधानभूतत्वात् ॥ ३७ ॥ कृत्स्नत्वात्तु तथा स्तोमे ॥ ३८ ॥ कर्तुः स्यादिति चेत् ॥ ३९ ॥ न गुणार्थत्वात्प्राप्ते च नोपदेशार्थः ॥ ४० ॥ कर्मणोऽस्तु प्रकरणे तन्न्यायत्वाद्गुणानां लिङ्गेन कालशास्त्रं स्यात् ॥ ४१ ॥ यदि तु**



**सान्नाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् ॥ ४२ ॥ अपि वा विहितत्वाद्गुणार्थायां पुनःश्रुतौ सन्देहे श्रुतिर्द्विदेवतार्था स्याद्यथाऽनभिप्रेतस्तथाऽऽग्नेयो दर्शनादेकदेवते ॥ ४३ ॥ विधिं तु बादरायणः ॥ ४४ ॥ प्रतिषिद्धविज्ञानाद्वा ॥ ४५ ॥ तथा चान्यार्थदर्शनम् ॥ ४६ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोः श्रूयते ''पुरोडाशाभ्यामेवासोमयाजिनं याजयेद्वावेतावाग्नेयश्चैन्द्राग्नश्च । सान्नाय्येन तु सोमयाजिनम्'' इति । तत्र किं ''पुरोडाशाभ्यामेव'' इति वाक्यमसोमयाजिनो वाक्यान्तरप्राप्तपुरोडाशद्वयस्यानुवादः, उत विधायकमिति **सन्देहः । पूर्वपक्षस्तु,** आनर्थक्यादनुवादत्वासम्भवेऽपि ''दर्शापूर्णमासाभ्यां स्वर्गकामो यजेत'' इत्यविशेषेण स्वर्गकाममात्रस्याग्नेयादिषट्स्वधिकारप्राप्तावाग्नेयैन्द्राग्नयोरेवासोमयाजिनोऽधिकारो नान्यत्रेति वा, असोमयाजिन एव तयोरधिकारः, नान्यस्येति वाऽधिकारनियमविधिरस्तु । एवञ्च चतुरवत्तमित्यस्याविधित्वेऽप्यस्य विधित्वं सेत्स्यतीत्येकः । तदाह **सूत्रे, पूरोडाशाभ्यामिति वाक्ये अधिकृतानामसोमयाजिनामिति यावत् । पुरोडाशयोरुपदेशः** । कुतः? तच्छ्रुतित्वादसोमयाजिन एव पुरोडाशद्वयं सोमयाजिनस्सान्नाय्यमिति श्रुतत्वात्, **वैश्यस्तोमवत्** यथा ''वैश्यस्तोमेन यजेत'' इत्यत्र वैश्यस्यैव श्रुतत्वादधिकारस्तथेति । सोऽयं पक्षो न युक्त । आद्यनियमे स्वर्गकामिनोऽसोमयाजिनः पुरोडाशद्वयेनैव स्वर्गसिद्धेः । तस्य त्रिकद्वयसाध्यत्वात् । अन्त्यनियमे सोमयाजिनस्ताभ्यां विना सान्नाय्यादिमात्रेण स्वर्गासिद्धेः । तस्माद्यदाग्नेयादिवाक्योक्ताग्नेयैन्द्राग्नाभ्यां कर्मान्तरविधिरेवासोमयाजि इति **द्वितीयः** । सोऽप्ययुक्तः । सन्निहितयदाग्नेयादिवाक्योक्ताऽग्नेयादिप्रत्यभिज्ञानविरोधात् । अतो योऽयमृत्विक्सः असोमयाजिनमाग्नेयैन्द्राग्नाभ्यां याजयेदिति ऋत्विजो याजनविधिरेवायमिति **तृतीयः** । सोऽप्यसाधुः । एवकारवैयर्थ्यात् । विधौ तस्य कृत्याभावात् । याजनस्य फलाश्रवणेन विध्ययोगाच्च । परस्मैपदेन याजनस्य परार्थत्वावगत्या याजकेषु विश्वजिन्न्यायेन फलकल्पनायोगाच्च । तस्मात्कालविधिरेवायम् । असोमयाज्यवस्थायामाग्नेयादिपुरोडाशाविति **चतुर्थः** । अयमपि न । सान्नाय्येन वैकल्पिको ह्यैन्द्राग्नः । सान्नाय्यस्य च ''नासोमयाजी सन्नयेत्'' इति सोमोत्तरकालत्वेन तेन साकं विकल्पितस्य तस्य सोमयागापूर्वकालत्वासिद्धेः । तस्मादाग्नेयांशेऽनुवादः । ऐन्द्राग्नांशस्यामावास्यायां विहितस्य पौर्णमास्यामपि विधिरेवेति **पञ्चमः** । सोऽपि न । एककालोच्चरितयोः पुरोडाशयोरेकेन लिङ्शब्देन कस्यचिदनुवादः, कस्यचिद्विधिरित्ययोगात् । अतोऽसोमयाजिकाले पुरोडाशावेताविति कालविधिरेवायम् । न चोक्तदोषः । ''तदुह सन्नयेत्'' इत्यसोमयाजिनोऽपि सान्नाय्यविधानेन तस्य सोमात्पूर्वं पश्चाच्च प्राप्तौ विकल्पितस्यैन्द्राग्नस्याप्युभयत्र प्राप्तौ प्राक्कालनियमविधित्वेनार्थवत्त्वादिति **षष्ठः** ।

अयमप्युक्तः । असोमयाजिपदे काललक्षणाऽऽपातादिति । **सिद्धान्तस्तु** ''सान्नाय्येन तु सोमयाजिनम्'' इति सोमयाजिनस्सान्नाय्ये नियमिते सति अर्थात्पुरुडाशावसोमयाजिन एव भवत इत्यनुवादोऽयम् । न विधिः । तस्य च पुरोडाशावसोमयाजिन एव । सान्नाय्यं तु सोमयाजिन इति प्रशस्तं सान्नाय्यमिति स्तुतिः प्रयोजनमिति । **फलं तु,** असोमयाजिनस्सान्नाय्यादन्यसर्वानुष्ठानम् ।

इति चतुर्दशं दर्शपूर्णमासयोराग्नेयैन्द्राग्नयोरनुवादताधिकरणम् (सूत्राणि ३५-४६)

## अथ पञ्चदशमुपांशुयाजस्य ध्रौवाज्यद्रव्यताधिकरणम् (सूत्रे ४७-४८)

**उपांशुयाजमन्तरा यजतीति हविर्लिङ्गादश्रुतत्वाद्यथाकामी प्रतीयेत ॥ ४७ ॥**

**(ध्रौवाद्वा सर्वसंयोगात् ॥ ४८ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ''उपांशुयाजमन्तरा यजति'' इत्युक्तोपांशुयागेऽश्रुतद्रव्यके देवतोद्देशेन द्रव्यत्यागरूपयागविध्यन्यथानुपपत्त्याऽर्थात्प्राप्तं यत्किञ्चिदैच्छिकं द्रव्यमुपादेयम्, उताऽज्यमेव, तदपि ध्रौवमिति **सन्देहे,** ऐच्छिकमेव यत्किञ्चिद्द्रव्यमुपादेयमिति **प्राप्तम्** । आज्यस्य ''नावुपांशु पौर्णमास्यां यजन्'' इत्यग्निष्टोमकर्तृकवाक्ये यजन्नित्यत्र विध्यश्रवणेन यागविधौ नावित्यस्य षष्ठीचतुर्थीसाधारण्येन देवताविधानस्य चायोगात् ''उपांशुयाजमन्तरा यजति'' इत्यतिस्पष्टवाक्यविहितयागे पौर्णमास्याख्यकालविधिपरत्वेनाऽज्यद्रव्याविधायकत्वात् ''सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्'' इत्यस्यापि पूर्वत्रैवकारोपबद्धस्य वर्तमानोपदेशरूपस्याऽज्यविधावसामर्थ्यात् । तदाह **सूत्रे, उपांशुयाजमन्तरा यजति** इत्यत्र **हविर्द्रव्यलिङ्गात्सामर्थ्यात् यथाकामीप्रतीयेत** यथेच्छं यत्किञ्चिद्द्रव्यमुपाददीतेति यावत् । कुतः? **अश्रुतत्वात्** द्रव्यविशेषस्याश्रवणादिति । **सिद्धान्तस्तु,** ''यद्ध्रुवायामाज्यम्'' इत्यसंयुक्ततयोत्पन्नं ध्रौवाज्यं प्रयोजनमाकांक्षदश्रुतद्रव्यकोपांशुयागे निविशत इत्याज्यमेवोपादेयम् । ''सर्वस्मै वा'' इति वाक्येऽपि विस्पष्टतादर्थ्यार्थचतुर्थीसंयोगेन 'गृह्यते' इत्यस्य गृह्णीयादिति विधिकल्पनाच्च । विध्यभावे तादर्थ्यचतुर्थ्यसम्भवादिति । **फलं तु,** अनियमबाधेनाऽज्यद्रव्येणैवानुष्ठानम् ।

इति पञ्चदशमुपांशुयाजस्य ध्रौवाज्यद्रव्यताधिकरणम् (सूत्रे ४७-४८)

## अथ षोडशमुपांशुयाजस्य प्राकृतदेवतानियमाधिकरणम् (सूत्रे ४९-५०)

**तद्वच्च देवतायां स्यात् ॥ ४९ ॥**



**(तान्त्रीणां वा प्रकरणात् ॥ ५० ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । उपांशुयागे द्रव्यस्येव देवताया अप्यश्रवणात् यागविधिबलेनार्थात्प्राप्ता या काचिद्देवताऽनियमेनोपादेया, किं वाऽस्ति काचिन्नियता देवतेति **सन्देहे,** पूर्वाधिकरणपूर्वपक्षे यथा द्रव्यनियमो नास्ति तथा देवतायामपि स्यादिति **प्राप्तम्** । **सिद्धान्तस्तु,** ''विष्णुरुपांशु'' इत्यादेरर्थवादत्वेऽपि प्रातिस्विकदेवताविधेरभावेऽपि हविस्त्यागसमये विधिगतशब्देनोद्दिश्यमानत्वस्यैव देवतात्वेनाविहितस्येच्छयोपात्तस्य यस्य कस्यचिद्देवतात्वाभावादुपांशुयागे देवताकांक्षायां सन्निहितया दर्शपूर्णमासगतया कयाचिद्देवतया सम्बध्यते । यथा ''आज्येन शेषं संस्थापयति'' इति विहितो यागो देवतामाकंक्षन् ''त्वाष्ट्रं पात्नीवतमालभेत'' इति पूर्ववाक्ये पशुयागार्थतया विहितया पित्नीवद्देवतया सन्निधानात्सम्बध्यते तथेति । **फलं तु,** पूर्वत्रेवानियमबाधेन दार्शपौर्णमासिकदेवतोपादानेनानुष्ठानम् ।

इति षोडशमुपांशुयाजस्य प्राकृतदेवतानियमाधिकरणम् (सूत्रे ४९-५०)

## अथ सप्तदशमुपांशुयाजस्य विष्ण्वादिदेवताकत्वपौर्णमासीकर्तव्यत्वयोरधिकरणम् (सूत्राणि ५१-६१)

**धर्माद्वा स्यात्प्रजापतिः ॥ ५१ ॥**

**(देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण ॥ ५२ ॥ विष्णुर्वा स्याद्धौत्राम्नानादमावास्याहविश्च स्याद्धौत्रस्य तत्र दर्शनात् ॥ ५३ ॥ अपि वा पौर्णमास्यां स्यात्प्रधानशब्दसंयोगाद्गुणत्वान्मन्त्रो यथाप्रधानं स्यात् ॥ ५४ ॥ आनन्तर्यं च सान्नाय्यस्य पुरोडाशेन दर्शयति अमावास्याविकारे ॥ ५५ ॥ अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधीयते ॥ ५६ ॥ प्रतिषिध्यविधानाद्वाविष्णुस्समानदेशस्स्यात् ॥ ५७ ॥ तथा चान्यार्थदर्शनम् ॥ ५८ ॥ न चानङ्गसकृच्छ्रुतावुभयत्र विधीयेतासम्बन्धात् ॥ ५९ ॥ गुणानां च परार्थत्वात्प्रवृत्तौ विधिलिङ्गानि दर्शयति ॥ ६० ॥ विकारे चाश्रुतित्वात् ॥ ६१ ॥)**

पूर्वत्र सामान्यतो दार्शपौर्णमासिकी देवता ग्राह्येति स्थितेऽत्र विशेषचिन्तनात्सङ्गतिः । उपांशुयागे किं प्रजापत्यग्निविष्णूनामन्यतमः, उत त्रयोऽपि विकल्पेन देवता इति **सन्देहे,** प्रजापतिर्देवतेत्येकः **पूर्वपक्षः** । ''यत्किञ्चित्प्राजापत्यं यज्ञे क्रियते उपांश्वेव तत्क्रियते'' इति वचनेनोपांशुधर्मोपांशुत्वयागः

प्रजापतिश्चोपांशुत्वधर्मेति द्वयोः समानधर्मत्वादिति । तदाह सूत्रे, उपांशुत्वरूपधर्मात्प्रजाप- **तिर्देवता स्यादिति** । नायं पक्षो युक्तः । यत्किञ्चिदिति वाक्यस्य ''प्रजापतिं मनसा ध्यायेत्'' इति तूष्णीभाव-विधिवाक्यशेषत्वेनार्थवादतया तत्रोपांशुपदस्य गौणत्वेनोपांशुत्वाविधायकत्वात् । अतोऽग्निरेव देवता । तत्र यदाग्नेयाद्यैष्टिकदेवताया अमुख्यत्वात् ''अग्निमुखा वै देवाः'' इत्यग्निर्मुख्यदेवतेति देवता-सामान्येऽग्नेर्मुख्यत्वप्रतीतेश्चेति **द्वितीयः** । अयमप्ययुक्तः । तावतोपांशुयाजे अग्निरेव देवतेत्यत्र तद्धित-चतुर्थीमन्त्रवर्णानामन्यतमस्याप्यभावात् । तस्मात् ''तावब्रूताम्'' इत्यादिपूर्वोदाहृतवाक्यादग्नीषोमौ देवतेति **तृतीयः** । दार्शपूर्णमासिकयोराग्नेयैन्द्राग्रपुरोडाशयोर्याज्यानुवाक्यायुगलयोर्मध्ये ''इदं विष्णुर्विचक्रमे,'' ''त्रिर्देव पृथिवीम्'' इति वैष्णवयाज्यानुवाक्यायुगलमाम्नातम् । इदञ्च ''यागरूपोपांशुयाजमन्तरा'' इति पुरोडाशयोरन्तरालयोर्विहितम् । तथा च यथासङ्ख्याम्नानरूपस्थानप्रमाणेन मन्त्रवर्णयोस्तदङ्गत्वावगमेन मन्त्रवर्णाद्विष्णुरूपदेवताप्राप्तेः । तस्मान्मन्त्रवर्णाद्विष्णुरेव देवता । एवञ्च सत्याग्नेयैन्द्राग्नयोरसोमयाजिनोऽमावास्यायां विधानात्तदीयमन्त्रमध्ये उपांशुयाजमन्त्राम्नानबलेनास्य यागस्य दर्शाख्य एवानुष्ठानकालोपि निर्णीतो भवतीति **चतुर्थः** । अयमपि न । तैत्तिरीयशाखायामप्याग्नेय-याज्यानुवाक्यामध्ये प्राजापत्ययाज्यानुवाक्यायुगलस्य शाखान्तरे च तन्मध्य एवाग्नीषोमीययाज्यानु-वाक्यायुगलस्य चाम्नानेनोक्तदिशा तयोरपि देवतात्वौचित्येन विष्णुरेव देवतेति निर्णयायोगात् । यदपि दर्श एवास्यानुष्ठानकाल इति तदपि न । विष्णुप्रजापत्यग्नीषोमाणां देवतात्वौचित्ये मन्त्रवर्णवशात्प्राप्ते सत्याग्नेयैन्द्राग्नयोर्दर्शविषयत्वाद्विष्णुरमावास्यायां देवता । आग्नेयाऽग्नीषोमीययोः पौर्णमासीविषयत्वा-त्पौर्णमास्यां प्रजापतिरग्नीषोमौ च देवते इति पक्षद्वयमप्युपांशुयागकाल इति **चतुर्थः** । अयमपि पक्षो न युक्तः । तिसृणां देवतात्वेऽपि ''तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्'' इति प्रत्यक्षविहितपौर्णमास्या एव कालत्वेन पर्वद्वयस्य कालत्वाभावात् । न चैवमाग्नेयैन्द्राग्नयोर्मध्ये विष्णुमन्त्रपाठो व्यर्थ इति शंक्यम् । तस्य पौर्णमास्यामुत्कर्षसम्भवात् । न च ''तावब्रूतां'' इति वाक्ये अग्नीषोमीयदेवताक एव पौर्णमास्यां श्रूयते । नेतरदेवताक इति वाच्यम् । अग्नीषोमपदस्येतरदेवतोप-लक्षणत्वात् । तस्मान्मन्त्रवर्णाद्विष्णुः प्रजापतिरग्नीषोमौ चेति तिस्रोऽपि विकल्पेन देवता उपादाय पौर्णमासीकाल एव पुरोडाशान्तराले उपांशुयागोऽनुष्ठेय इति **सिद्धान्तः** । **फलं** तु विकल्पेन देवतात्रयानुष्ठानम् ।

इति सप्तदशमुपांशुयाजस्य विष्ण्वादिदेवताकत्वपौर्णमासी कर्तव्यत्वयोरधिकरणम् (सूत्राणि ५१-६२)



**अथाष्टादशमेकपुरोडाशायामप्युपांशुयाजाधिकरणम् (सूत्राणि ६२-७०)**

**द्विपुरोडाशायां स्यादन्तरार्थत्वात् ॥ ६२ ॥**

**(अजामिकरणार्थत्वाच्च ॥ ६३ ॥ तदर्थमिति चेन्न तत्प्रधानत्वात् ॥ ६४ ॥ अशिष्टेन च सम्बन्धात् ६५ ॥ उत्पत्तेस्तु निवेशः स्याद्गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद्विधानादन्तरार्थस्य नैमित्तिकत्वात्तदभावेऽश्रुतौ स्यात् ॥ ६६ ॥ उभयोस्तु विधानात् ॥ ६७ ॥ गुणानां च परार्थत्वादुपवेषवद्यदेति स्यात् ॥ ६८ ॥ अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥ ६९ ॥ प्रशंसार्थमजामित्वम् ॥ ७० ॥)**

प्रासङ्गिकी **सङ्गतिः** । पौर्णमास्यामेवोपांशुयाग इति स्थिते, किं द्विपुरोडाशायामेव पौर्णमास्या-मुपांशुयागः, उतैकपुरोडाशायामिति **सन्देहे**, ''सोमेनेष्ट्वाऽग्नीषीमीयो भवति'' इति वचनेना-सोमयाजिनोऽग्नीषोमीयाभावेनाऽग्नेयरूपैकपुरोडाशा पौर्णमासी । तदा पुरोडाशद्वयान्तरालकाला-भावात्तदा न कार्योऽयमुपांशुयाग इति **प्राप्तम्** । **तदाह सूत्रे, द्विपुरोडाशायामेवोपांशुयागः स्यात् । कुतः? अन्तरार्थत्वात्** पुरोडाशद्वयस्यान्तरकालार्थत्वादिति । **सिद्धान्तस्तु, पुरोडाशद्वयोपलक्षितः** काल उपांशुयागाङ्गम् । सर्वत्र चोपलक्षणापगमेऽप्युपलक्ष्यमवतिष्ठत एव । 'शंखवेलायामागन्तव्यम्' इत्यादौ तथा दर्शनात् । तेन कर्माङ्गभूतकालस्यैकपुरोडाशायामपि सत्त्वात्तत्राप्युपांशुयाजस्य न बाध इति । तदाह **सूत्रे, अनपायश्च कालस्य लक्षणं हि पुरोडाशाविति** । **फलं** त्वेकपुरोडाशायामप्यनुष्ठानम् ।

इत्यष्टादशमेकपुरोडाशायामप्युपांशुयाजाधिकरणम् (सूत्राणि ६२-७०)

**इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते दशमाध्यायस्याष्टमः पादः समाप्तश्चायमध्यायः**

अस्मिन् पादे अधिकरणानि १८ सूत्राणि ७०

आदितः अधिकरणानि ७८५ सूत्राणि २३२७

## अथ श्रीभाट्टसङ्ग्रहे एकादशाध्याये प्रथमः पादः

ॐ पूर्वाध्याये "शरमयं बर्हिर्भवति" इत्यादिवैकृतविधिविहितैः शरादिभिरातिदेशिकानां बर्हिरादीनां यो बाधो यश्च वैकृतैरामनहोमादिभिरातिदेशिकानामनुयाजादीनां बाधाभावरूपः समुच्चयस्तदुभयचिन्ताद्वारा चोदकप्राप्तानां प्रत्ययविहितानाश्चाङ्गपदार्थानामियत्तारूपपरिमाणं चिन्तितम् । अत्राध्याये प्रकृतिविकृतिसाधारणप्रयोगविषयपदार्थपरिमाणं तन्त्रावापचिन्ताद्वारेण क्रियते । पदार्थपरिमाणनिर्णयाधीनत्वात्तत्प्रयोगपरिमाणनिर्णयस्येति तदनन्तरताऽस्याध्यायस्य ध्येया । सकृत्कृतं बहूनामुपकारि तन्त्रम् । आवृत्त्योपकारी आवापः ।

### अथ प्रथममाग्नेयादीनां समुदितानां तन्त्रेण स्वर्गफलकत्वाधिकरणम् (सूत्राणि १-४)

**प्रयोजनाभिसम्बन्धात्पृथक्सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥**

**(शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ॥ २ ॥ अविधानात्तु नैवं स्यात् ॥ ३ ॥ शेषस्य हि परार्थत्वाद्विधानात्प्रतिप्रधानभावः स्यात् ॥ ४ ॥**

**प्रधानकर्मार्थत्वादिति** नवमेऽधिकरणे वक्ष्यमाणोपोद्घातत्वेनेदमारभ्यते "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति श्रुतं फलमाग्नेयादिभिः षड्भिः प्रत्येकं सम्बध्यते, अथ मिलितैरिति **सन्देहे**, "यदाग्नेयोऽष्टाकपालः" इत्यादिवाक्यैर्मिथोऽनपेक्षितयोत्पन्नान्याग्नेयादीति कर्माणि पृथक्पृथगेव फलमाकांक्षन्ति । "यथाकांक्षं फलान्वयः" इति फलाकांक्षीण्याग्नेयादीन्युद्दिश्य विधीयमानं फलं प्रत्येकमेव सम्बध्यते । न च 'दर्शपूर्णमासाभ्याम्' इति द्वन्द्वावगतसाहित्यबलात्सहित्यबलात्सहितैरेव फलान्वय इति वाच्यम् । ग्रहैकत्ववदुद्देश्यविशेषणत्वेन साहित्यस्याविवक्षितत्वात् । अन्यथा वाक्यभेदापत्तेः । तस्मात्पृथक्पृथगेव फलान्वय इति **प्राप्ते सिद्धान्तः**, नात्र दर्शपूर्णमासोद्देशेन स्वर्गाख्यं फलं विधीयते । येन प्रत्युद्देश्यवाक्यं फलान्वयः स्यात् । किन्तु स्वर्गोद्देशेनाऽग्नेयादयो यागा विधीयन्ते । तेषां विधीयमानानां द्वन्दवावगतं साहित्यं विवक्षितमेवेति त्रिकद्वयसमुदाय एव फलान्वयो न प्रत्यकमिति । तदाह **सूत्रे, पृथक्सतां** पृथगुत्पन्नानामप्याग्नेयादीनां **ततः** तेन हेतुना **ऐककर्म्यं** क्रियत इति कर्म फलम् । ऐककर्म्यमेकफलत्वं **स्यात्** । **कुतः ? प्रयोजनाभिसम्बन्धात्** तत्प्रयोजनेन सह सहितानां सम्बन्धात् । प्रयोजनसम्बन्धे कथं साहित्यं ज्ञायत इत्यत उक्तम् । **एकशब्दाभिसंयोगादिति** । नामसामानाधिकरण्यलब्धविशेषावस्थेनैकेनाख्यातेन तत्राभिधानादिति । **फलं पूर्वपक्षे** आग्नेयादीनां प्रत्येकं फलहेतुत्वात्पृथक्पृथगेव प्रयाजाद्यनुष्ठानम् । **सिद्धान्ते तु**, सकृदेवेत्युत्तरनवमाधिकरणक्रियमाणविचारारम्भः ।



**अत्रैके चोदयन्ति । फलश्चाकर्मसन्निधौ** इति द्वितीयस्य तृतीयपादे तथा चतुर्थाद्यपादे "यस्मिन् प्रीतिः पुरुषस्य" इत्यादिलिप्सासूत्रे च फलस्याविधेयत्वसिद्धेः कथमिह फलस्य विधेयत्वोपगमेन पूर्वपक्षोदय इति । अन्ये तु यथाकांक्षमन्वयो वाच्य इति प्रागुक्ताक्षेपेणाभ्यधिकाशङ्कयोत्थितिरिति समादधते ।

इति प्रथममाग्नेयादीनां समुदितानां तन्त्रेण स्वर्गफलकत्वाधिकरणम् (सूत्राणि १-४)

### अथ द्वितीयमङ्गानामैककर्म्याधिकरणम् (सूत्राणि ५-१९)

**अङ्गानान्तु शब्दभेदात्क्रतुवत्स्यात्फलान्यत्वम् ॥ ५ ॥**

**(अर्थभेदस्तु तत्रार्थेहैकार्थ्यादैककर्म्यम् ॥ ६ ॥ शब्दभेदान्नेति चेत् ॥ ७ ॥ न कर्मार्थत्वात्प्रयोगे ताच्छब्द्यं स्यात्तदर्थत्वात् ॥ ८ ॥ कर्तृविधेर्नानार्थत्वाद्गुणप्रधानेषु ॥ ९ ॥ आरम्भस्य शब्दपूर्वत्वात् ॥ १० ॥ एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत्स्यात् ॥ ११ ॥ फलाभावान्नेति चेत् ॥ १२ ॥ न कर्मसंयोगात्प्रयोजनमशब्ददोषं स्यात् ॥ १३ ॥ ऐकशब्द्यादिति चेत् ॥ १४ ॥ नार्थपृथक्त्वात्समत्वादगुणत्वम् ॥ १५ ॥ विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसंयोगादर्थेन युगपत्प्राप्तेर्यथाप्राप्तं स्वशब्दो निवीतवत्सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १६ ॥ तथा कर्मोपदेशत्वात् ॥ १७ ॥ क्रत्वन्तरेषु पुनर्वचनम् ॥ १८ ॥ उत्तरास्वश्रुतित्वाद्विशेषाणां कृतार्थत्वात् संदोहे यथाकामी प्रतीयेत ॥ १९ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । पूर्वत्र प्रधानानां संहत्य फलकारित्वोक्ताविहाङ्गानि किं संहत्य प्रधानमुपकुर्वन्ति, अथ प्रत्येकम् । प्रत्येकमिति पक्षेऽपि किं विकल्पः, उतोपकारबाहुल्येन फलभूयस्त्वादुपकारसमुच्चय इति विचार्यते । **पूर्वपक्षस्तु,** युक्तं पूर्वत्र प्रधानानामानेयादीनामेकेनाऽख्यातशब्देन तन्त्रेणाभिहितानां युगपत्फले विनियुक्तानां संहत्य फलकारित्वम् । अङ्गानान्तु प्रयाजाऽज्यभागानूयाजादीनां स्वस्वविधिरूपपृथक्छब्दविहितानां मिथोऽनपेक्षतयैव फलाकाङ्क्षोदयेन मिथोऽनपेक्षेणैव क्रतूपकारे विनियोगाद्विकल्प **इत्येकः । तदाह सूत्रे, अङ्गानां शब्दभेदाद्विधिभेदादुद्भिच्चित्रादि**क्रतुवत्फलान्यत्वम् । क्रतूपकाररूपफले साधनीयेऽन्यत्वं नैरपेक्ष्यं स्यात् । तथा च विकल्प इति । अङ्गानामन्योन्यनैरपेक्ष्येणोपकारकृत्त्वेऽप्यनेकाङ्गानामाम्नानबलाद्विकल्पस्याष्टदोषदुष्टत्वाद्यावदङ्गान्यनुष्ठातुं शक्यान्यनुभूततावत्करणेनोत्पन्नोपकारबाहुल्येन फलभूयस्त्वं कल्प्यमिति **द्वितीयः** । तथा च **सूत्रम्**

एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु इत्यादि। **सिद्धान्तस्तु,** उद्भिच्चित्रादिक्रतूनां ''उद्भिदा यजेत पशुकामः'' ''चित्रया यजेत पशुकामः'' इत्येवं भेदेन कामपदश्रवणात्तत्र प्रत्येकं फलहेतुत्वं युक्तम्। अङ्गानान्तु पृथक्पृथग्विधिश्रवणेऽपि प्रतिवाक्यं फलाश्रवणात्फलापेक्षाणामङ्गानामिति-कर्तव्यताकांक्षिण्या प्रधानफलभावनयाऽन्योन्याकांक्षारूपप्रकरणबलेन युगपद्गृहीतानां प्रधानभावना-विधिनैव युगपद्विधानात्सर्वेषां संहत्यैवोपकारकत्वमित्यङ्गानां समुच्चयो न विकल्प इति। **फलन्तु** प्रयाजाद्यङ्गानां समुच्चयेनानुष्ठानम्।

इति द्वितीयमङ्गानामैककर्म्याधिकरणम् (सूत्राणि ५-१९)

## अथ तृतीयं काम्यकर्मणां भूयोभ्यासाधिकरणम् (सूत्राणि २०-२६)

**कर्मण्यारम्भभाव्यत्वात्कृषिवत्प्रत्यारम्भं फलानि स्युः ॥ २० ॥**

**(अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः ॥ २१ ॥ सकृत्तु स्यात्कृतार्थ-त्वादङ्गवत् ॥ २२ ॥ शब्दार्थश्च तथा लोके ॥ २३ ॥ अपि वा सम्प्रयोगे यथाकामी प्रतीयेताश्रुतित्वाद्विधिषु वचनानि स्युः ॥ २४ ॥ ऐकशब्द्यात्तथाऽङ्गेषु ॥ २५ ॥ लोके कर्मार्थलक्षणम् ॥ २६ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः॥ ''चित्रया यजेत पशुकामः'' इत्यादिकाम्यकर्मणां सकृत्प्रयोगेणापि फलभूयस्त्वम्, उत पुनः पुनः प्रयोगेणैव फलभूयस्त्वम्। न सकृत्प्रयोगमात्रेणेति **सन्देहे,** कर्मणः क्षयिष्णुत्वेन कालान्तरभाविफलपर्यन्तमवस्थानायोगेन मध्येऽदृष्टाख्यद्वारकल्पने चाऽपूर्वाख्यधर्मिण-स्तस्य कर्मजन्यत्वस्य फलहेतुत्वस्य तावत्स्थायित्वस्य चानेकस्य कल्प्यत्वेन लाघवात्कृतयागस्यात्मन एव स्थायिभूतस्य फलहेतुत्वमात्रं कल्पनीयम्। स च सकृत्प्रयोगादेव कृतयाग इति पुनः पुनरप्रयोगेऽपि स्यादेव फलभूयस्त्वम्। एवञ्च पूर्वत्र यथाऽङ्गानामनेकत्वेऽपि नानेकं कार्यमेव काम्यकर्मप्रयोगस्या-वृत्त्याऽनेकत्वेपि न फलभूयस्त्वम्। किन्तु सकृत्प्रयोगाद्यावत्तावदेवेति **प्राप्ते सिद्धान्तः,** कृतयाग आत्मैव फलहेतुरिति वदन् निरतिशय एवात्मा फलहेतुः, उत सातिशय इति प्रष्टव्यः। आद्ये तादृशात्मनः सदातनत्वेनाकृतयागस्यापि फलहेतुत्वप्रसङ्गः। द्वितीये स एवातिशयोऽपूर्वम्। तच्च कार्यैकनाश्यमिति स्वजन्यं फलं जनयित्वा तदन्ते नश्येदिति पुनः फलान्तरार्थे प्रयोगान्तरं कार्यमेवेति। तदाह सूत्रे, **कर्मणि** काम्यकर्मणि **आरम्भभाव्यत्वा**त्फलस्य प्रयोगजन्यत्वात्कृषिकर्मणीव प्रतिप्रयोगं **फलानि स्यु**रिति। **फलन्तु** फलभूयस्त्वाय काम्यकर्मण आवृत्तिः।

इति तृतीयं काम्यकर्मणां भूयोभ्यासाधिकरणम् (सूत्राणि २०-२६)



## अथ तुरीयमवघातादीनामातण्डुलनिर्वृत्तेरभ्यासाधिकरणम् (सूत्रे २७-२८)

**क्रियाणामर्थशेषत्वात्प्रत्यक्षतस्तन्निर्वृत्त्याऽपवर्गः स्यात् ॥ २७ ॥**

**(धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ॥ २८ ॥)**

पूर्वत्र काम्यकर्मण इवावघातस्यापि सकृदसकृद्वाऽनुष्ठानमिति चिन्तनात्सङ्गतिसन्देहौ। **पूर्वपक्षस्तु,** ''व्रीहीनवहन्ति'' इत्यत्रावहन्तिपदेन मुसलस्योद्यमननिपतनमात्रमेवोच्यते। न तु तदभ्यासोऽपि। तथा च यथाऽग्निचयने ''औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहन्ति। अथै-तदुपदधाति'' इत्यत्र सकृदेवावहननं तथात्रापि सकृदेवावहन्तिः कार्या। न चानभ्यासे दृष्टं फलं न लभ्यत इति वाच्यम्। शब्दार्थानुगुणतयैव फलस्य कल्प्यत्वात्। अत्र च शब्दविहितस्यानभ्य-स्यैवावघातस्य फलत्वे कल्पनीये दृष्टासम्भवाददृष्टमेव किञ्चित्कल्पनीयमिति **प्राप्ते सिद्धान्तः,** सत्यम्। नावघाताभ्यासोऽवहन्तीति शब्देनोच्यते। किन्त्वभ्यस्तानभ्यस्तसाधारणं हन्तिमात्रम्। तथा च तत्र प्रयोजनाकांक्षयां क्रत्वर्थमपेक्षितत्वाद्दृष्टत्वादत्र तण्डुलनिष्पत्तिः प्रयोजनं कल्प्यते। तच्च न विनाऽभ्यासेन सिद्ध्यतीति प्रयोजनवशादभ्यासः। सर्वौषधे तु तण्डुलनिर्वृत्तिरनपेक्षितेति सकृदेव करणम्। तदाह सूत्रे, **क्रियाणा**मवघातादीना**मर्थशेष**त्वात्फलार्थत्वात्**प्रत्यक्ष**दृष्टे तण्डुलनिष्पत्त्यादिरूपे प्रयोजने सम्भवति **तन्निर्वृत्त्या** तादृशदृष्टप्रयोजननिष्पत्त्यैवापवर्गो निवृत्तिः **स्या**दिति।

इति तुरीयमवघातादीनामङ्गानामातण्डुलनिर्वृत्तेरसकृदनुष्ठानाधिकरणम् (सूत्रे २७-२८)

## अथ पञ्चमं प्रयाजादीनामङ्गानां सकृदनुष्ठानाधिकरणम् (सूत्राणि २९-३७)

**क्रतुवच्चाऽनुमानेनाभ्यासे फलभूमा स्यात् ॥ २९ ॥**

**(सकृद्वा कारणैकत्वात् ॥ ३० ॥ परिमाणश्चानियमे न स्यात् ॥ ३१ ॥ फलस्याऽरम्भनिर्वृत्तेः क्रतुषु स्यात्फलान्यत्वम् ॥ ३२ ॥ अर्थवतस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात्प्रधाने च क्रियार्थत्वादनियमः स्यात् ॥ ३३ ॥ पृथक्त्वाद्विधितः परिमाणं स्यात् ॥ ३४ ॥ अनभ्यासो वा प्रयोग-वचनैकत्वात्सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात्क्रियार्थत्वात् ॥ ३५ ॥ अभ्यासो वा छेदनसंमार्गावदानेषु वचनात्सकृत्त्वस्य ॥ ३६ ॥ अनभ्यासस्तु वाच्यत्वात् ॥ ३७ ॥)**

सकृदसकृत्प्रसङ्गादेवाङ्गानां सकृदसकृद्वेति चिन्तनात्सङ्गतिः । कर्मणामावृत्त्यैव फलभूमेति प्रपूर्वतनाधिकरणे स्थिते सतीहैकस्मिन् प्रयोगे प्रयाजाद्यङ्गानामावृत्त्या फलभूमास्ति, उत नेति विचार्यते । अङ्गानामभ्यासेनोपकारबाहुल्यजनाद्बहूपकारयुक्तप्रधानस्य फलबाहुल्यशक्तत्वादस्त्यङ्गावृत्त्यापि फलभूमेति **प्राप्तम्** । तदाह **सूत्रे,** अङ्गाभ्यासः फलभूमहेतुस्स्यात् । फलक्रियाभ्यासत्वात् सौर्यादिक्रत्वभ्यासवदित्य**नुमानेनाङ्गाभ्यासे फलभूमा स्यादिति** । **सिद्धान्तस्तु,** साङ्गप्रधानं हि फलसामग्री । नाङ्गमात्रम् । सामग्र्यावृत्त्या हि फलभूमा दृष्टः । नाङ्गमात्रावृत्त्या । न चातिरात्रे षोडशिग्रहहीनप्रयोगात्तद्युक्ते प्रयोगे फलभूमोक्तिः **शिष्टत्वात्प्रतिषेधः स्यादिति** नञ्पादे, तथेहाङ्गाभ्यासहीनप्रयोगादङ्गाभ्यासयुक्तप्रयोगेऽस्तु फलभूमेति शङ्क्यम् । षोडशिग्रहस्य शास्त्रीयत्वेन तत्र तथात्वेऽपीह प्रयाजाद्यङ्गाभ्यासस्याशास्त्रीयत्वेन वैषम्यात् । न चाशास्त्रीयाभ्यासो वेदे फलाय भवति । अतः फलभूमार्थिनाऽङ्गप्रधानयोर्नान्यतरमात्रमावर्त्यम् । अपि तूभयमपीति ।

**इति पञ्चमं प्रयाजाद्यङ्गानां सकृदनुष्ठानाधिकरणम् । (सूत्रे २९-३७)**

## अथ षष्ठं कपिञ्जलाधिकरणम् (सूत्राणि ३८-४५)

**बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ३८ ॥**

**(दृष्टः प्रयोग इति चेत् ॥ ३९ ॥ भक्त्येति चेत् ॥ ४० ॥ तथेतरस्मिन् ॥ ४१ ॥ प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् ॥ ४२ ॥ श्रुत्यर्थाविशेषात् ॥ ४३ ॥ तथा चान्यार्थदर्शनम् ॥ ४४ ॥ प्रकृत्या च पूर्ववत्तदासत्तेः ॥ ४५ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''वसन्ताय कपिञ्जलानालभत'' इत्यादिषु किं त्रयाणामालम्भः, उत त्रिप्रभृतीनामिति सन्देहे, बहुवचनं द्वित्वाधिकं निमित्तीकृत्य त्रित्वप्रभृतिषु प्रवर्तते । तथा चाङ्गाभ्यासस्याशास्त्रीयत्वेन तेन फलाभावेऽपीह त्रिप्रभृतिसर्वसङ्ख्यानां बहुवचनरूपशास्त्रार्थत्वाच्छास्त्रीयायासगौरवेण फलभूमाऽस्तीत्यस्य षड्देया, द्वादश देयेत्यादौ सिद्धत्वात् । अतो यावदुत्साहं त्रिप्रभृति नानासङ्ख्योपादानम् । तदाह **सूत्रे, बहुवचनेन** सर्वसङ्ख्याप्राप्तेर्विकल्पः स्यादिति । **सिद्धान्तस्तु,** बहुवचनं हि द्वित्वाधिक्यरूपबहुत्वप्रकारकज्ञानजनकतया बहुमात्र एव शक्तम् । बहुत्वं निमित्तीकृत्य त्रित्वादौ वर्तते । त्रित्वाद्यनन्तप्रतीतित्वात् । अतः त्रित्वादीनां षड्देयेत्यत्रेव न भेदेन शास्त्रार्थताऽस्ति । न चाशास्त्रीयायासगौरवेणादृष्टं फलमस्ति । अतस्त्रीननालभ्य चतुर्णामनालम्भा-



दवश्यं त्रयाणामालम्भे तावता शास्त्रार्थसिद्धेर्नाधिकालम्भे शास्त्रप्रवृत्तिः । निर्वृत्ते च शास्त्रविधौ ''न हिंस्यात्'' इति निषेधशास्त्रं प्रवर्तत इति नाधिकालम्भ इति । फलं तु त्रयाणामेवानुष्ठानम् ।

**इति षष्ठं कपिञ्जलाधिकरणम् (सूत्राणि ३८-४५)**

## अथ सप्तममुत्तरा दोहयतीत्यत्र सर्वासां गवां दोहनाधिकरणम् (सूत्राणि ४६-५२)

**उत्तरासु यावत्स्वमपूर्वत्वात् ॥ ४६ ॥**

**(यावत्स्वं वाऽन्यविधानेनानुवादः स्यात् ॥ ४७ ॥ साकल्यविधानात् ॥ ४८ ॥ बह्वर्थत्वाच्च ॥ ४९ ॥ अग्निहोत्रे चाशेषवद्यवागूनियमः ॥ ५० ॥ तथा पयः प्रतिषेधः कुमाराणाम् ॥ ५१ ॥ सर्वप्रापिणाऽपि लिङ्गेन संयुज्यते देवताभिसंयोगात् ॥ ५२ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । सान्नाय्यदोहनं प्रकृत्य श्रूयते ''वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयति'' इति । तत्र किमुत्तरासां तिसृणामेव दोहः, उत यावत्यो यजमानस्य गावस्तासां सर्वासामिति **सन्देहे,** पूर्वोक्तसिद्धान्तन्यायेन तिसृणामेव दोहनम् । न सर्वासामिति **प्राप्ते सिद्धान्तः,** ''नास्यैतां रात्रिं पयसाऽग्निहोत्रं जुहुयात् । कुमाराश्च न पयोलभेरन्'' इति वचनेन कृत्स्नस्य पयसो हविष्ट्वावगमात्सर्वासामेव दोहनम् । न च 'नास्यैतां' इति वाक्येन साक्षान्न सर्वदोहविधिः । किन्तु सर्वदोहे कुमाराणां पयोलाभो न भवेदिति लक्षणया सर्वदोहविधिमुपादाय सर्वस्य हविष्ट्वं विधेयम् । न च लक्षणा युक्ता । अतः कुमाराणां पयोदानप्रतिषेध एव । न तु हविरर्थं सर्वदोहविधिरिति शङ्क्यम् । पयोदानप्रतिषेधस्य दृष्टार्थाभावेनादृष्टार्थत्वप्रसङ्गात् । प्रतिषेधपरत्वे ''कुमारा अपि'' इत्यभिदानर्थक्याच्चेति सर्वासां दोह इति । तदाह, **उत्तरासु यावत्स्वं** यावद्गवां दोहः । **अपूर्वत्वात्,** नास्यैतामिति वाक्ये सर्वदोहस्य विहितत्वदिति । फलं व्यक्तम् ।

**इति सप्तममुत्तरा दोहयतीत्यत्र सर्वासां गवां दोहनाधिकरणम् (सूत्राणि ४६-५२)**

## अथाष्टममाग्नेयादीनां प्रधानानां भेदेप्याघारादीनामङ्गानां तन्त्रताधिकरणम् (सूत्राणि ५३-६६)

**प्रधानकर्मार्थत्वादङ्गानां तद्भेदात्कर्मभेदः प्रयोगे स्यात् ॥ ५३ ॥**

**(क्रमकोपश्च यौगपद्ये स्यात् ॥ ५४ ॥ तुल्यानान्तु यौगपद्यमेकशब्दोपदेशात्स्याद्विशेषाग्रहणात् ॥ ५५ ॥ ऐकार्थ्यादव्यवायः स्यात् ॥ ५६ ॥ तथा चान्यार्थदर्शनं कामुकायनः ॥ ५७ ॥ तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात्संस्कारस्य तदर्थत्वात् ॥ ५८ ॥ असंसृष्टोऽपि तादर्थ्यात् ॥ ५९ ॥ विभावाद्वा प्रदीपवत् ॥ ६० ॥ अर्थात्तु लोके विधिः प्रतिप्रधानं स्यात् ॥ ६१ ॥ सकृदिज्यां कामुकायनः परिमाणविरोधात् ॥ ६२ ॥ विधेस्त्वितरार्थत्वात्सकृदिज्याश्रुतिव्यतिक्रमः स्यात् ॥ ६३ ॥ विधिवत् प्रकरणाविभागे प्रयोगं बादरायणः ॥ ६४ ॥ क्वचिद्विधानान्नेति चेत् ॥ ६५ ॥ न विधेश्चोदितत्वात् ॥ ६६ ॥**

उपोद्घातप्रसक्तानुप्रसक्ता चिन्ता गता । अधुनाऽध्यायार्थस्तन्त्राऽवापविचारः प्रस्तूयत इत्यवसरसङ्गतिः । दर्शपूर्णमासयोः षट्प्रधानानि कर्माणि ''पौर्णमास्यां पौर्णमास्या यजेत'' ''अमावास्यायां अमावास्यया यजेत'' इति वचनात्पौर्णमास्यां त्रीण्यमावास्यायां च त्रीणि कर्तव्यानि । तानि चोत्तरपादाद्यनये वक्ष्यमाणदिशैकस्यामेव पौर्णमास्यां, एकस्मिन्नेव दर्शे एकेनैव कर्त्रा त्रीण्यप्याग्नेयादीनि प्रयाजादितदङ्गानि च कर्तव्यानीति सिद्धम् । तत्र किं त्रयाणां प्रधानानां प्रयाजाद्यङ्गानि भेदेन कार्याणि, उत सकृदेवेति **सन्देहे,** षडप्याग्नेयादिभावनाः ''यदाग्नेय'' इत्याद्युत्पत्तिवाक्यफलवाक्याभ्यां साध्यसाधनांशयुक्ताः मिथोऽनपेक्षा एवेतिकर्तव्यतामपेक्षमाणाः स्वस्वसन्निध्याम्नातानि गृह्णन्तीति तद्वशात्प्रत्येकमेवाङ्गानि विनियुज्यन्ते । एवञ्चाङ्गानां पृथक्पृथगेव प्रधाने विनियोगात्प्रतिप्रधानं भेदेनैवानुष्ठानम् । प्रत्येकं याजमानकथंभावाकांक्षाया भिन्नत्वात् । अत एकं साङ्गं कृत्वा पुनरन्यदपि कर्म तथा कार्यमिति **प्राप्तम् ।** तदाह सूत्रे, **अङ्गानां प्रधानकर्मत्वात्** प्रधानार्थकर्मत्वात् तद्भेदात्प्रधानभेदात्प्रयोगे प्रधानप्रयोगदशायां **कर्मभेदादनुष्ठानभेदः** स्यादङ्गानामिति । **सिद्धान्तस्तु,** यद्यप्याज्यभागादय आग्नेयसन्निधौ, स्विष्टकृदादयोऽग्नीषोमीयसन्निधौ च क्रियन्ते । तथापि सर्वेषामङ्गानां संहत्यकारित्वोक्त्या स्वस्वावान्तरकार्यद्वारा अग्न्यन्वाधानाद्यैर्ब्राह्मणतर्पणान्तैस्सर्वैरङ्गैस्संहत्योपकारो जनयितव्यः । तस्यां च वेलायां सर्वाण्यप्याग्नेयाद्यपूर्वाणि सन्निहितान्येवेति न कस्यचित्सन्निधिविशेषस्तथापि षट्सु भावनासु कथंभावं प्रत्येकमपेक्षमाणास्वपि सकृदाम्नाता एवाङ्गविधयः षण्णामप्यङ्गानि प्रत्येकं समर्पयन्ति । तथैव संहतानां फलसाधनत्वात्कर्तृदेशकालैक्याच्च युगपत्सर्वेष्वप्यनुष्ठातुं प्राप्तेषु सकृत्कृतमप्यङ्गं सर्वार्थचिकीर्षया कृतत्वात्सर्वक्रियार्थं भवतीति सकृदेवाङ्गानामनुष्ठानात्पौर्णमास्यां पौर्णमास्येत्यादिप्रागुक्तवाक्याभ्यां साङ्गस्य त्रिकस्य स्वस्वकाले युगपदनुष्ठानावगतेश्चेति ।

**इत्यष्टममाग्नेयादीनां प्रधानानां भेदेप्याघारादीनामङ्गानां तन्त्रताधिकरणम् (सूत्राणि ५३-६६)**



**अथ नवमं कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेन प्रदानाधिकरणम् (सूत्राणि ६७-७०)**

**व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् ॥ ६७ ॥**

**(भेदस्तु कालभेदाच्चोदनाव्यवायात्स्याद्विशिष्टानां विधिः प्रदानकालत्वात् ॥ ६८ ॥ तथा चान्यार्थदर्शनम् ॥ ६९ ॥ विधिरिति चेन्न वर्तमानापदेशात् ॥ ७० ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । काम्यपशुकाण्डे श्रूयते ''आग्नेयं कृष्णग्रीवमालभेत । सौम्यं बभ्रुम् । आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः'' इति । ममैव पौरोहित्यमस्तु, नान्यस्येति स्पर्धेपितो यथोक्तवर्णोपितपशुत्रयमालभेतेत्यर्थः । तत्राद्यन्तयोः पश्वोरनुष्ठानं तन्त्रम्, क्रमात् पृथगिति **सन्देहे,** आद्यन्तयोः कृष्णाग्रीवपश्वोर्देवतैक्यात्तन्त्रेणानुष्ठानम् । न च पाठक्रमात्क्रमेणानुष्ठानमिति वाच्यम् । क्रमेणानुष्ठेययोः पाठक्रमापेक्षायामपीह देवतैक्येन तन्त्रानुष्ठानस्यैव प्राप्त्या क्रमापेक्षाया अभावादिति । तदाह सूत्रे, **तुल्यकालानां** एकफलतया सहक्रियमाणानां कर्मणा**मगृह्यमाणविशेषाणां यौगपद्यं व्याख्यात**मिति । **सिद्धान्तस्तु,** आग्नेययोस्तन्त्रतासम्भवेऽपि सौम्यस्य देवताभेदेन सहप्रयोगासम्भवादवश्यंभाविनि क्रमे सौम्यात्पूर्वं कस्यचित्पश्चात्कस्यचित्पाठक्रमादनुष्ठानम् । सकृदनुष्ठाने हि सौम्यात्पूर्वापरभावः पाठक्रमादवगतो बाध्येतेति पृथगेवानुष्ठानमिति ।

**इति नवमं कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेन प्रदानाधिकरणम् । (सूत्राणि ६७-७०)**

**इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते एकादशाध्यायस्य प्रथमः पादः ॥**

अस्मिन् पादे अधिकरणानि ९ सूत्राणि ७०

आदितः अधिकरणानि ७९४ सूत्राणि २३९७

## अथैकादशाध्याये द्वितीयः पादः

पूर्वपादे फलकरणयुक्तया भावनयाऽन्वीयमानानामङ्गानां तन्त्रता चिन्तिता । अत्र तु पादे फलकरणेतिकर्तव्यतायुक्तया भावनया सम्बध्यमानानामङ्गानां तन्त्रता प्राधान्येन चिन्त्यत इति वा, पूर्वपादे प्रधानतन्त्रतानुपपत्त्योक्तमङ्गतन्त्रत्वमत्राक्षिप्यत इति वा पूर्वानन्तर्यमस्य पादस्य ज्ञेयम् ।

**तत्र प्रथममाग्नेयादीनां प्रधानानां देशकालतन्त्रताधिकरणम् (सूत्राणि १-१०)**

**एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् ॥ १ ॥**

**(अविधिश्चेत्कर्मणामभिसम्बन्धः प्रतीयेत लक्षणार्थाभिसंयोगाद्विधित्वाच्चेतरेषां प्रतिप्रधानं भावः स्यात् ॥ २ ॥ अङ्गेषु च तदभावः प्रधानं प्रति निर्देशात् ॥ ३ ॥ यदि तु कर्मणो विधिसम्बन्धः स्यादैकशब्द्यात्प्रधानार्थाभिसंयोगात् ॥ ४ ॥ तथा चान्यार्थदर्शनम् ॥ ५ ॥ श्रुतिश्चैषां प्रधानवत्कर्मश्रुतेः परार्थत्वात्कर्मणोऽश्रुतित्वाच्च ॥ ६ ॥ अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरन् तस्मात्स्यादेकदेशत्वम् ॥ ७ ॥ द्रव्यदेवतं तथेति चेत् ॥ ८ ॥ न चोदनाविधिशेषत्वान्नियमार्थो विशेषः ॥ ९ ॥ तेषु समवेतानां समवायात्तन्त्रमङ्गानि भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात्तथा चान्यार्थदर्शनम् ॥ १० ॥)**

दर्शपूर्णमासयोर्देशकालकर्तारो विहिताः । ''समे दर्शपूर्णमासाभ्यां यजेत'' इति, ''पौर्णमास्यां पौर्णमास्या यजेत'', ''अमावास्यायां अमावास्यया यजेत'' इति ''दर्शपूर्णमासयोश्चत्वारो ऋत्विजः'' इति । तत्र किं यस्मिन् देशे यस्मिन् पर्वणि यैः कर्तृभिराग्नेयः कृतस्तस्मिन्नेव देशे तस्मिन्नेव पर्वणि तैरेव कर्तृभिः अग्नीषोमीयः कार्य इति देशकालकर्तारस्तन्त्रम्, उत समान्तरे पौर्णमास्यन्तरे कर्त्रन्तरैः कार्य इति **सन्देहे**, देशकालकर्तारो द्रव्यदेवतावदङ्गम् । फलकरणाङ्गरूपांशत्रयस्यापि यदाऽऽग्नेयेत्याद्युत्पत्तिवाक्यावगतभावना स्वरूपेणैवान्वयः । न मिथः । **गुणानां च परार्थत्वादसम्बन्धस्समत्वात्स्यात्** ''इत्युक्तेः'' । अतः फलवाक्यस्य देशाद्यङ्गवाक्यस्य न मिथः सम्बन्धः । किन्तु भावनयोत्पत्तिवाक्येनैव द्वयोरन्वयः ''आग्नेयादिना देशाद्युपकृतेन फलं भावयेत्'' इति । उत्पत्तिवाक्येषु चाऽग्नेयादयो मिथोऽनपेक्षा एवावगताः । न संहत्येति, तथाभूतैरन्वीयमाना देशादयोऽप्यन्योन्यानपेक्षाणामेव भवन्तीति देशान्तरादावेवाग्नेयादयः षड्यागाः कार्याः । न चैवं फलवाक्यावगताऽनेयादिसाहित्यबाध इति शङ्क्यम् । तत्र मिलित्वा षड्भिरेकं फलं साध्यते । न प्रत्येकमित्युक्तस्येह देशकालादिभेदेनानुष्ठानेऽप्यबाधात् । अन्यथा पर्वद्वये त्रिकद्वयानुष्ठानानापत्तेः । यदि च देशादिविधे रुत्पत्तिवाक्यशेषत्वं तदोत्पत्तिवाक्ये प्रधानमात्रविधानेनाङ्गविध्यभावान्न प्रधानदेशकालकर्तृत्वनियमोऽङ्गानाम् । एवञ्च ''पौर्णमास्यां पौर्णमास्यया यजेत'' ''अमावास्यायाममावास्यया यजेत'' इति वाक्याभ्यां त्रिकस्य त्रिकस्य साङ्गस्य स्वे स्वे कालेऽनुष्ठानं चोद्यत इति पूर्वपादे **प्रधानकर्मत्वात्** इत्यत्रोक्तमयुक्तमिति **प्राप्ते, सिद्धान्तः**, स्यादेवं, यद्युत्पत्तिवाक्यावगतभावनयैव देशाद्यङ्गविधयोऽन्वीयेरन् । न चैवम् । किन्तु फलभावनयैव । उत्पत्तिवाक्येषूत्पन्ना हि भावना



एकप्रत्ययोपात्तप्रवर्तनात्मकशब्दभावनारूपविध्यवरुद्धतयाऽऽदौ पुमर्थरूपं भाव्यमेवापेक्षमाणा फलवाक्येन समर्पितं स्वर्गादिकमादाय, पश्चात्करणमाकांक्षन्ती एकपदश्रुतिप्राप्तयागं करणतया गृहीत्वा, पश्चात्करणानुग्राहिणीमितिकर्तव्यतामपेक्षमाणा पश्चादेवाङ्गैरन्वेतीति फलवाक्यावगतरूपयैव भावनया अङ्गानामन्वयः । फलवाक्ये च फलं प्रति कर्माण्येव विधेयानीत्युपादेयगतं कर्माङ्गं साहित्यं विवक्षितमेवेति तेषु सर्वेषु कर्तव्यतयोपस्थितेषु ''पौर्णमास्यां पौर्णमास्यया'' इत्यादिवाक्यैः कालादिभिर्विहितैः सर्वार्थो भवतीत्येकस्मिन्नेव पर्वण्याग्नेयाग्नीषोमौ तथा देशः कर्ता चेति त्रितयं तन्त्रम् । एवं फलवाक्यावगतसाङ्गरूपभावनयैव देशादेरन्वयादङ्गानामपि प्रधानदेशकालकर्तृकत्वं सिद्धमिति । तदाह सूत्रे, **मुख्यानां** प्रधानानां एकप्रयोगवचनशब्दितफलवाक्यविहिततया सहप्रयोक्तव्यत्वात् **एकदेशकालकर्तृत्वं स्यादिति** । फलं व्यक्तम् ।

इति प्रथममाग्नेयादीनां प्रधानानां देशकालतन्त्रताधिकरणम् (सूत्राणि १-१०)

## अथ द्वितीयं दर्शपूर्णमासेष्टिप्रभृतिषु सङ्घभेदेनाङ्गानां भेदेनानुष्ठानाधिकरणम् (सूत्राणि ११-१७)

**इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादाङ्गानां तन्त्रभावः स्यात् ॥ ११ ॥**

**(कालभेदान्नेति चेत् ॥ १२ ॥ नैकदेशत्वात्पशुवत् ॥ १३ ॥ अपि वा कर्मपृथक्त्वात्तेषां तन्त्रविधानात्साङ्गानामुपदेशः स्यात् ॥ १४ ॥ तथा चान्यार्थदर्शनम् ॥ १५ ॥ तदाऽवयवेषु स्यात् ॥ १६ ॥ पशौ तु चोदनैकत्वात्तन्त्रस्य विप्रकर्षः स्यात् ॥ १७ ॥)**

पूर्वोक्तैकफलानां षण्णामाङ्गतन्त्रत्वमिहापोद्यत इति सङ्गतिः । दर्शपूर्णमासयोरुत्पत्तिवाक्यावगतकालानुरोधाद्विभज्य पर्वद्वये प्रयुज्यमानयोरङ्गानि तन्त्रम्, उत प्रतित्रिकमावर्तेरन्निति सदेहे, ''दर्शपूर्णमासाभ्यां स्वर्गकामो येजेत'' इत्यनेन विवक्षितसाहित्यानां षण्णामपि यागानामेकस्मिन् फले विधानात्सहैव प्रयोक्तव्या इति तेषां षण्णामेवोपक्रमोपसंहारत्वम् । तथा च प्रातःसवन आरब्धस्तृतीयसवन इव पौर्णमास्यामारब्धं सर्वं प्रधानममावास्यायां समाप्यते । तेन पौर्णमास्यां क्रियमाणमप्यङ्गजातं सर्वार्थं भवतीति तन्त्रम् । साहित्यविधिवशाद्युगपदेव षण्णामपि प्रयोगः कार्यतया प्राप्तोऽपि ''यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति'' इति वचनाद्विप्रकृष्यते । न तावताऽङ्गानामावृत्तिः । एवं ''राजसूयेन स्वाराज्यकामो यजेत'' इत्येकफलार्थानामनुमत्यादीष्टीनां

पवित्रादिसोमयागानां च प्रयोगस्य कालभेदेऽपि ''बार्हस्पत्यश्चरुर्ब्रह्मणो गृहे । ऐन्द्र एकादशकपालो राजन्यस्य गृहे । आदित्यश्चरुर्महिष्या गृहे'' इति वचनाद्देशभेदेऽप्यङ्गानि तन्त्रं । तथा ''चातुर्मास्यैः स्वर्गकामो यजेत'' इत्येकप्रयोगवचनेनैकफलार्थैविनियुक्तानां वैश्वदेववरुणप्रधाससाकमेधशुनासीरीयाख्यानां चतुर्णां पर्वणां ''वसन्ते वैश्वदेवेन यजेत । वर्षासु वरुणप्रधासैर्यजेत । हेमन्ते साकमेधैर्यजेत'' इत्यादिवचनात्कालभेदेन प्रयोगविप्रकर्षेऽप्यङ्गानां तन्त्रतेति । तदाह **सूत्रे, इष्टिराजसूयेत्यादि । व्यक्तोऽर्थः । ऐककर्म्यात्** एकफलत्वादित्यर्थः । **सिद्धान्तस्तु,** ''पौर्णमास्यां पौर्णमास्या यजेत'' इति वाक्ये पौर्णमासीसंज्ञकाग्नेयादियागत्रयकरणको यः फलार्थस्साङ्गप्रत्ययवाच्यव्यापारस्तदङ्गत्वेन पौर्णमासीकालो विधीयत इत्यङ्गानामपि यागकरणकफलक्रियान्तर्गतानां तत्कालतैव विहिता भवति । एवमेव ''अमावास्यायाममावास्यया यजेत'' इत्यत्राप्यमावास्याशब्दितयागत्रयकरणकफलार्थव्यापारेऽमावास्याकालो विधीयत इति दर्शयागकरणकफलार्थक्रियायामन्तर्गतानामङ्गानां तत्कालतैवोक्ता भवतीति द्वयोरपि कालयोरङ्गानामावृत्तिः । न च यथा पशुप्रयोगे ''वपया प्रातस्सवने प्रचरन्ति । पुरोडाशेन माध्यन्दिने । अङ्गैस्तृतीयसवने'' इति विप्रकृष्यमाणेऽपि नाङ्गानामावृत्तिस्तथाऽत्र किं न स्यादिति शङ्क्यम् । पशौ प्रातर्वपामात्रस्य माध्यन्दिने पुरोडाशमात्रस्य तृतीयसवने हृदयाद्यङ्गमात्रस्य चोदनात् । अत्र पुनः प्रधानकालभेदस्य चोदनेन वैषम्यात् । एवञ्च राजसूये चातुर्मास्येषु च देशकालभेदेऽप्यङ्गावृत्तिर्ध्येयेति ।

इति द्वितीयं दर्शपूर्णमासेष्टिप्रभृतिषु सङ्घभेदेनाङ्गानां भेदेनानुष्ठानाधिकरणम् (सूत्राणि ११-१७)

### अथ तृतीयमध्वरकल्पायां त्रिषु सङ्घेष्वङ्गानां भेदेनानुष्ठानाधिकरणम् (सूत्राणि १८-२२)

**तथा स्यादध्वरकल्पायां विशेषस्यैककालत्वात् ॥ १८ ॥**

**(इष्टिरिति चैकवच्छ्रुतिः ॥ १९ ॥ अपि वा कर्मपृथक्त्वात्तेषां च तन्त्रविधानात्साङ्गानामुपदेशः स्यात् ॥ २० ॥ प्रधमस्य वा कालवचनम् ॥ २१ ॥ फलैकत्वादिष्टिशब्दो यथाऽन्यत्र ॥ २२ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । काम्येष्टिष्वध्वरकल्पा नाम काचिदिष्टिः । तत्र पूर्वाह्णे मध्याह्ने अपराह्णे च यागानां त्रिकं त्रिकमीषद्भिन्नमेकूपमेवाम्नातम् । ''आग्नावैष्णवमष्टाकपालं निर्वपेत्पूर्वाह्णे । सरस्वतीमाज्यस्य यजेत । बार्हस्पत्यश्चरुः । आग्नावैष्णवमेकादशकपालं निर्वपेन्माध्यन्दिने ।



सरस्वतीमाज्यस्य यजेत । बार्हस्पत्यश्चरुः । आग्नावैष्णवं द्वादशकपालं निर्वपेदपराह्णे । सरस्वतीमाज्यस्य यजेत । बार्हस्पत्यश्चरुः'' इति । तत्र श्रूयते ''पुरा वाचः प्रवदितोर्निर्वपेत्'' इति । प्रवचनात्पूर्वं, सुप्तजनोत्थानात्पूर्वमिति यावत् । तत्र त्रिषु कालेषु प्रयुज्यमानानां त्रयाणामपि त्रिकाणामङ्गानि तन्त्रम्, उतावर्तेरन्निति सन्देहे, ''पुरा वाचः'' इति वाक्येन सुप्तजनप्रबोधात्पूर्वं श्रुतनिर्वापाख्यापकर्षो न प्रातःकालीनयागत्रयमात्रसम्बन्धी । अपि तु ''यस्य भ्रातृव्यः सोमेन यजेत'' ''सैवाध्वरकल्पेष्टियज्ञमेवैतया प्राप्नोति'' इति वचनेनैकस्मिन् फले विनियोगेन सर्वेषां प्रकरणाविशेषात्सर्वसम्बन्ध्यपि । तथा च **तादिभिस्सम्बन्धात् अङ्गानां मुख्यकालत्वात्** इति पञ्चमाद्यपादीयोक्तन्यायेन निर्वापान्तस्याग्न्यन्वाधानादेरङ्गकाण्डस्यापकर्षः । ''पुरा वाचः'' इति वचनबलादेव माध्यन्दिनापराह्णकालीनयागविप्रकृष्टकालीनमप्यङ्गजातं प्रधानानामुपकारकमिति कल्पनात्तंत्रमङ्गानि । एवञ्च नवानामपि यागानां तन्त्रेणैव समापनमित्युत्तराङ्गनामपि तन्त्रेणैवानुष्ठानम् । एवञ्च पूर्वत्र दर्शपार्णमासयोः कालभेदादङ्गावृत्तावप्यध्वरकल्पायां कालभेदेऽपि नाङ्गावृत्तिरिति **प्राप्तम् ।** तदाह **सूत्रे, अध्वरकल्पायामिष्टौ तथा स्यात् । विशेषस्य निर्वापस्यैककालत्वात् ।** सर्वप्रधानाङ्गस्य निर्वापस्यैकस्मिन् काले चोदितत्वेनैकोपक्रमावसानत्वादिति । **सिद्धान्तस्तु,** ''पुरा वाचः'' इति वाक्यं न सर्वसम्बन्धिनिर्वापापकर्षकम् । किन्तु प्रातःकालीनस्यैव निर्वापस्य । माध्यान्दिनादियागीयाङ्गानां प्रधानकालकर्तव्यत्वस्याङ्गानां प्रधानकालत्वनियमबलेन प्राप्तस्य बाधायोगात् । चोदकेनाप्यङ्गानां प्रधानकाल एव प्रापणाच्च । तेषां च वाग्विसर्गपूर्वकालीनताविधौ ''पुरा वाचः'' इत्यस्याप्राप्तविधित्वापातात् । पूर्वाह्णयागीयनिर्वापमात्रापकर्षविधौ नियमविधिस्स्यात् । न च नियमविधिसम्भवेऽत्यन्ताप्राप्तविधिगौरवं युक्तम् । अतः प्रातःकालीनप्रधानाङ्गानामेव कालविशेषः ''पुरा वाचः'' इति वाक्येन नियम्यत इति न सर्वेषामेकोपक्रमावसानमिति नाङ्गानां तन्त्रता । अपि त्वावृत्तिरिति ।

इति तृतीयमध्वरकल्पायां त्रिषु सङ्घेष्वङ्गानां भेदेनानुष्ठानाधिकरणम् (सूत्राणि १८-२२)

### अथ चतुर्थं प्राजापत्यवसाहोमानां तन्त्रेणानुष्ठानाधिकरणम् (सूत्रम् २३)

**वसाहोमस्तन्त्रमेकदेवतेषु स्यात्प्रदानस्यैककालत्वात् ॥ २३ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । वाजपेये ''सप्तदश प्राजापत्यान् पशूनालभते'' इति श्रुतप्रजापतिदेवताकेषु पशुषु प्रकृतिभूताग्नीषोमीयपशौ ''याज्यार्धर्चान्ते वसाहोमं जुहोति'' इति श्रुतो वसाहोमश्चोदकपरम्परया प्राप्तः । स किं तन्त्रेण कार्यः, उताऽवापेनेति सन्देहे, वसा हि पश्ववयवमांसपाकेन निर्गच्छज्ज्वलविशेषः । सा हि पशुभेदाद्भिद्यत इति तद्धोमोऽपि भिन्न एवेति पूर्वत्राङ्गा-

नामिवावापेन कार्य इति **प्राप्ते,** पशुभेदेऽपि सप्तदशपश्ववयवानां सहश्रपणेन वसाया एकत्वादेकदैवत्यत्वाद्याज्यार्धर्चान्तस्यैकत्वान्निमित्तस्य याज्यार्धर्चान्तस्यानावृत्तौ नैमित्तिकस्य वसाहोमस्याऽवृत्तिशङ्कानुदयाच्च सकृदेव कार्यो वसाहोम इति । तदाह **सूत्रे, एकदेवतेषु वसाहोमस्तन्त्रं स्यात्**। तेषु सह प्रदानेन प्रदानकालस्यैकत्वेन वसाहोमकालयाज्यार्धर्चकालयोरप्येकत्वादिति ।

इति चतुर्थं प्राजापत्यवसाहोमानां तन्त्रेणानुष्ठानाधिकरणम् (सूत्रं २३)

### अथ पञ्चममेकादशिनेषु वसाहोमस्य भेदेनानुष्ठानाधिकरणम् (सूत्रं २४)

**कालभेदे त्वावृत्तिर्देवताभेदे ॥ २४ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । एकादशिनेष्वग्नेयसारस्वतसौम्याद्यनेकदैवत्यपशुषु वसाहोमः किं तन्त्रेण कार्यः, उतावापेनेति **सन्देहे,** सहश्रपणेन वसाया एकत्वाद्याज्यार्धर्चान्तभेदेऽपि यस्य कस्यचिदर्धर्चस्यान्ते पूर्वत्रेव सकृदेव वसाहोमः कार्य इति **प्राप्ते सिद्धान्तः,** याज्याशब्दो हि ससम्बन्धिशब्दत्वात्तत्तत्सम्बन्धियाज्यापरः । तथा च सर्वे च पशवः स्वस्वयाज्यार्धर्चान्ते स्वस्ववसाया होमेन प्रतिपत्तिमपेक्षन्त इत्यावापेन वसाहोमः कार्यः । तदाह **सूत्रे, कालभेदे त्वावृत्तिः देवताभेदे** इति । व्यक्तोऽर्थः ।

इति पञ्चममेकादशिनेषु वसाहोमस्य भेदेनानुष्ठानाधिकरणम् (सूत्रम् २४)

### अथ षष्ठं यूपैकादशिन्यां यूपाहुतौ तन्त्रताधिकरणम् (सूत्राणि २५-२७)

**अन्ते यूपाहुतिस्तद्वत् ॥ २५ ॥**

**(इतरप्रतिषेधो वा ॥ २६ ॥ अशास्त्रत्वाच्च देशानाम् ॥ २७ ॥)**

अत्रापि पूर्वन्यायेन शङ्कनात्सङ्गतिः । यूपैकादशिन्यां ''एकादश यूपान् मिनोति'' इति श्रुतैकोत्तरयूपदशकेऽग्नीषोमीयपशौ ''यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति'' इति श्रुतयूपाहुतिश्चोदकेन प्राप्ता किं तन्त्रेण कर्तव्या, अथ प्रतियूपं भेदेनेति **सन्देहे,** पूर्वत्र तद्याज्यार्धर्चान्ते वसाहोमवद्यूपाहुतिरपि भेदेनैव कार्या । याज्याशब्दवदन्तिकशब्दस्यापि सम्बन्धिशब्दतया तत्तद्यूपान्तिकपरत्वेनान्तिकप्रदेशानां भेदादिति **प्राप्तम् । तदाह सूत्रे, अन्ते** अन्तिकदेशे **यूपाहुतिः तद्वत्** नानादैवत्यपशुवसाहोमवदावर्तनीयेति । **सिद्धान्तस्तु,** ''अग्निं मथित्वा'' इति हि श्रूयते । अत्यन्तसमीपे मथनायोगाद्यं देशं



प्राप्तो यूपसमीपं प्राप्त इत्युच्यते । यत्र यूपो दृष्टिपथमापद्यते तत्र मथनं होमश्च । स च सर्वेषामेक एव देशः सम्भवतीत्यगृह्यमाणविशेषत्वात्तन्त्रेणैव कार्या यूपाहुतिरिति ।

इति षष्ठं यूपैकादशिन्यां यूपाहुतौ तन्त्रताधिकरणम् (सूत्रणि २५-२७)

### अथ सप्तमं साङ्गस्यावभृथस्याप्स्वनुष्ठानाधिकरणम् (सूत्रणि २८-३२)

**अवभृथे प्रधानेऽग्निकारः स्यान्न हि तद्धेतुरग्निसंयोगः ॥ २८ ॥**

**(द्रव्यदेवतवत् ॥ २९ ॥ साङ्गो वा प्रयोगवचनैकत्वात् ॥ ३० ॥ लिङ्गदर्शनाच्च ॥ ३१ ॥ शब्दविभागाच्च देवतानयः ॥ ३२ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ज्योतिष्टोमे ''अप्स्ववभृथेन चरन्ति'' इति श्रुतम् । तत्र किं प्रधानमवभृथेष्टिमात्रमप्सु कर्तव्यम्, उताङ्गान्यपीति **सन्देहे** ''अप्स्ववभृथेन चरन्ति'' इत्यवभृथमात्रस्यैव ग्रहणेन तन्मात्रस्यैवाप्स्वनुष्ठानम् । अङ्गानान्त्वाहवनीय एव । तथा च पूर्वत्र यूपाहुतिदेशस्य तन्त्रत्वेऽपीहाङ्गप्रधानयोः प्रधानापां तन्त्रतेति **प्राप्तम्** । तदाह **सूत्रे, अवभृथे प्रधानेऽग्निविकार** आपः । प्रधानमात्रमप्सु कर्तव्यम् । अङ्गजातं त्वाहवनीये । न चाहवनीये प्रधानसंयोगाभावात्कथमङ्गसंयोग इति शङ्क्यम् । **अङ्गानामग्निसंयोगो न तद्धेतुः** न प्रधानसंयोगहेतुकः । किन्तु ''यदाहवनीये जुहोति'' इति वचनहेतुक इति । **सिद्धान्तस्तु,** अवभृथो हि ''वारुणेनैककपालेनावभृथं चरन्ति'' इति वाक्यविहितेष्टिविशेषः । स च ''अप्स्ववभृथेन'' इति तृतीयान्तनिर्दिष्टः । तथा च ''अवभृथेन समीहितं भावयेत्'' इत्यवभृथकरणिकायां फलभावनायां श्रुता आपोऽङ्गानामपि भवन्ति । साङ्गस्यैव करणत्वात् । तस्मादापोप्यङ्गप्रधाने प्रति तन्त्रमिति ।

इति सप्तमं साङ्गस्यावभृथस्याप्स्वनुष्ठानाधिकरणम् (सूत्रणि २८-३२)

### अथाष्टमं वरुणप्रघासेष्वाग्नेयादीनां मरुत्या भेदेनानुष्ठानाधिकरणम् (सूत्रणि ३३-४१)

**दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात्सर्वं क्रियते ॥ ३३ ॥**

**(अचोदनेति चेत् ॥ ३४ ॥ स्यात्पौर्णमासीवत् ॥ ३५ ॥ प्रयोगचोदनेति चेत् ॥ ३६ ॥ इहापि मारुत्याः प्रयोगश्चोद्यते ॥ ३७ ॥ आसादनमिति चेत् ॥ ३८ ॥ नोत्तरेणैकवाक्यत्वात् ॥ ३९ ॥ अवाच्यत्वात् ॥ ४० ॥ आम्नायवचनं तद्वत् ॥ ४१ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । वरुणप्रघासेष्वाग्नेयादीनि नव हवींषि विहितानि । तत्र ''पृथग्वेदी कुरुतः । पृथगग्नी प्रणयतः'' इति विहारभेदः पठितः । **विहारो** नाम हविरासादनहोमप्रदेशः । तत्र श्रूयते ''अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति । मारुतीमेकां प्रतिप्रस्थाता दक्षिणस्मिन्'' इति । तत्र किं नवानामपि हविषामङ्गानि तन्त्रम्, उत भेदेन कार्याणीति **सन्देहे,** ''प्रावृषि वरुणप्रघासैर्यजेत'' इत्येकप्रयोगवचनगृहीतत्वान्नवानामपि हविषामङ्गान्यवभृथे अपामिव तन्त्रमिति **प्राप्तम्** । न च ''पृथग्वेदी कुरुतः'' इत्यादिना विहारशब्दितदेशभेदादङ्गानामावाप इति शङ्क्यम् । हविरासादनमात्रे देशभेदेऽपि होमरूपप्रधाने देशभेदाभावादिति । **सिद्धान्तस्तु,** भवेदेवं यद्यत्रापूर्वमासादनं विधीयेत । न चैवम् । तस्य चोदकेन प्राप्तत्वात् । आसादनं च होमार्थं । अन्यथाऽदृष्टार्थताप्रसङ्गात् । होमश्च विहारद्वये व्यवस्थया प्राप्तः । आहवनीयस्योभयत्र प्राप्तत्वात् । एवञ्च प्रधानस्यैव देशभेदादङ्गानामावापः । न चैवमासादनस्य प्राप्तत्वात् ''उत्तरे हवींष्यासादयति'' इति व्यर्थमिति शङ्क्यम् । अव्यवस्थया प्राप्तस्यासादनस्य व्यवस्थया नियमार्थत्वोपपत्तेरिति । तदाह **सूत्रे, वरुणप्रघासेषु दक्षिणेऽग्नावपि सर्वमङ्गजातं पृथक्क्रियते देशभेदादिति ।**

**इत्यष्टमं वरुणप्रघासेष्वाग्नेयादीनां मारुत्या भेदेनानुष्ठानाधिकरणम् (सूत्राणि ३३ -४१)**

## अथ नवममुत्तरदक्षिणविहारयोः कर्तृभेदाधिकरणम् (४२-४७)

**कर्तृभेदस्तथेति चेत् ॥ ४२ ॥**

**(न समवायात् ॥ ४३ ॥ लिङ्गदर्शनाच्च ॥ ४४ ॥ वेदिसंयोगादिति चेत् ॥ ४५ ॥ न देशमात्रत्वात् ॥ ४६ ॥ एकवाक्यत्वात् ॥ ४७ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । वरुणप्रघासेषु पूर्वत्राङ्गानां तन्त्रावापचिन्ता कृता । अधुना कर्तृषु तन्त्रावापचिन्ता क्रियते । ''चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः'' इति वचनात्पञ्चैवर्त्विजः । तत्राध्वर्युप्रतिप्रस्थातारौ ''अष्टावध्वर्युरुत्तरे हवींष्यासादयति । मारुतीमेकां प्रतिप्रस्थाता दक्षिणस्मिन्'' इति वचनाद्विहारद्वये व्यवस्थितौ । ब्रह्मा होताऽऽग्नीध्रश्चेत्यवशिष्टास्त्रयोऽपि विहारद्वये भेदेन सम्पाद्याः, उत तन्त्रमिति **सन्देहे,** पूर्वत्राङ्गानामिव कर्तृभेदोऽपि स्वीकार्यः । देशभेदेन प्रयोगयोर्भिन्नतया तदङ्गभूतब्रह्मादिकर्तृभेदस्य न्याय्यत्वादिति **प्राप्तम्** । तदाह, यथाऽङ्गानां विहारद्वये भेदस्तथा **कर्तृणामपि भेद इति चेदिति । सिद्धान्तस्तु,** उभयत्र कर्तृभेदे वाचनिककर्तृपञ्चकत्वभङ्गापत्तेः कर्त्रैक्ये विहारद्वयाभिप्रायेणोपपन्नं पञ्चत्वमिति तैरेवोभयकार्यसिद्धेर्न प्रयोगभेदेऽपि ब्रह्मादीनां भेदः । किन्तु तन्त्रतेति ।

**इति नवममुत्तरदक्षिणविहारयोः कर्तृभेदाधिकरण् (सूत्राणि ४२-४७)**



## अथ दशममुत्तरदक्षिणविहारयोः पत्नीसंयोजादीनां भेदेनानुष्ठानाधिकरणम् (सूत्रे ४८-४९)

**एकाग्नित्वादपरेषु तन्त्रं स्यात् ॥ ४८ ॥**

**(नाना वा कर्तृभेदात् ॥ ४९ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । वरुणप्रघासेष्वेव ''गार्हपत्ये पत्नीः संयाजयन्ति'' इत्युक्ता गार्हपत्ये कर्तव्याः पत्नीसंयाजादयः किं तन्त्रम्, उत भेदेन कार्या इति सन्देहे, देशभेदाभावात्पूर्वत्र ब्रह्मादय इव तन्त्रमिति **प्राप्तम्** । तदाह सूत्रे, अपरेषु अपराग्निकेषु गार्हपत्ये कर्तव्येषु एकाग्नित्वात् गार्हपत्याग्रेरेकत्वात् तन्त्रं सकृदेवानुष्ठानं स्यादिति । सिद्धान्तस्तु, प्रधानकर्तृभेदादेशैक्येऽपि भेदेनैव कर्तव्याः । प्रतिप्रस्थातृकृतैरुपकारो मारुत्यामिष्टायामध्वर्युकृतस्त्वाग्नेयादीनामिष्टानामित्यावापः पत्नीसंयाजादेरिति ॥

इति दशममुत्तरदक्षिणविहारयोः पत्नीसंयाजादीनां भेदेनानुष्ठानाधिकरणम् (सूत्रे ४८-४९)

## अथैकादशं वाजपेये प्राजापत्यपश्वालम्भशेषस्य ब्रह्मसामकाल उत्कर्षाधिकरणम् (सूत्रणि ५०-५२)

**पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत्तस्माद्ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥ ५० ॥**

**(संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ॥ ५१ ॥ वपानाञ्चानभिघारणस्य दर्शनात् ॥ ५२ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते ''तान् पर्यग्निकृतानुत्सृजन्ति । ब्रह्मसाम्न्यालभते'' इति । तत्र किमुत्सृजन्तीत्यनेन पर्यग्निकरणान्ताङ्गरीतिविधिः, उतोत्सर्गस्यानुवाद इति सन्देहे ''पर्यग्निकृतानारण्यानुत्सृजन्ति'' इत्यत्रेव पर्यग्निकरणान्ताङ्गरीतिर्विधीयते । न त्यागमात्रम् । तथात्वे ''सप्तदश प्राजापत्यान् पशूनालभते'' इत्युत्पत्तिवाक्यावगतदेवतासम्बन्धो न कृतः स्यात् । तथा च प्रकृतौ क्लृप्तोपकारया पर्यग्निकरणान्ताङ्गरीत्यैवाऽज्यभागाभ्यां गृहमेधीयस्येवेतिकर्तव्यताकांक्षाशान्तेर्न चोदकेनाङ्गान्तरप्राप्तिः । न चैवं ''ब्रह्मसाम्न्यालभते'' इति वाक्यमनर्थकमिति शङ्क्यम् । तस्य कर्मान्तरविधिपरत्वोपपत्तेः । न च द्रव्यदेवतयोरश्रवणान्न यागान्तरविधिरिति वाच्यम् ।

यथा ''पर्यग्निकृतानारण्यानुत्सृजन्ति'' इत्यत्राऽरण्यपशुयागस्य पर्यग्निकरणान्त एव समाप्तेः शेषाभावात् ''आज्येन शेषं संस्थापयति'' इत्यत्र देवताश्रवणाभावेऽप्यारण्यपशुयागदेवतानुषङ्गाश्रयेण कर्मान्तरविधिस्तथैव **शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत्** इति नवमान्त्यपादोपान्त्याधिकरणगुणसूत्रोक्तेः । एवमत्रापि प्राजापत्ययागद्रव्यदेवतानुषङ्गेण कर्मान्तरविधिसम्भवादिति **प्राप्तम्** । तदाह **सूत्रे, पर्यग्निकृतानां** प्राजापत्याना**मुत्सर्गे** चोदिते सति **आरण्यवत्** ''आरण्यानुत्सृजन्ति'' इत्यत्रेव **श्रुतिसामान्यात्** ''पर्यग्निकृतानारण्यानुत्सृजन्ति'' इति श्रुतिसामान्यात्कर्मोत्सर्गः तावता कर्मसमाप्तिः । **तस्मात् ब्रह्मसाम्नीति कर्मान्तरविधिरिति । सिद्धान्तस्तु,** कर्मान्तरविधौ हि सप्तदशपशुयागजन्यादृष्टादन्यदृष्टभेदः कल्प्यः । तथा कर्मद्वयविधौ वाक्यभेदश्च स्यात् । कर्मद्वयविधायकयोर्वाक्ययोर्मिथः कथमपि सम्बन्धाभावात् । अतः पर्यग्निकरणानन्तरं प्राप्तस्य माध्यन्दिनसवने ब्रह्मसामकाले उत्कर्षो विधीयते । न चास्मिन्नपि पक्षे उत्कर्षः सति पर्यग्निकरणानन्तरव्यापारोपरमश्च विधेय इति वाक्यभेदस्तुल्य इति शङ्क्यम् । उत्कर्षविधौ पर्यग्निकरणानन्तरव्यापारोपरतिस्तु प्राप्तैवेति तस्या ''उत्सृजति'' इत्यनेनानुवादेन विधानाभावात्तदेव कर्मोत्कृष्यत इति । फलं तु पूर्वपक्षे कर्मान्तरत्वान्माध्यन्दिने पर्यग्निकरणान्ताङ्गकाण्डस्याऽवापः । **सिद्धान्ते** तु कर्मभेदा भावात्सकृदेवेति ।

इत्येकादशं वाजपेये प्राजापत्यपश्वालम्भशेषस्य ब्रह्मसामकाल उत्कर्षाधिकरणम् (सूत्राणि ५०-५२)

### अथ द्वादशं अहीन उक्ष्णामुत्सर्गस्य कर्मशेषप्रतिषेधार्थताधिकरणम् (सूत्राणि ५३-५६)

**पञ्चशारदीयास्तथेति चेत् ॥ ५३ ॥**

**(न चोदनैकवाक्यत्वात् ॥ ५४ ॥ यातयामत्वाच्च ॥ ५५ ॥ संस्काराणाञ्च दर्शनात् ॥ ५६ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । अस्ति पञ्चशारदीयनामकः पञ्चाहोऽहीनविशेषः । ''मरुतां पञ्चशारदीयः । यः कामयेत बहु स्यामिति स एतेन यजेत'' इति विहितः । स च पञ्चसु संवत्सरेष्वनुष्ठेयः । तत्र प्रथमसंवत्सरे विशाखानक्षत्रयुक्तामावास्यायां ''सप्तदश मारुतीः पृश्नीस्त्रिवत्सा अपचिता उपाकरोति'' ''सप्तदश पृश्नीनुक्ष्णस्तान् पर्यग्निकृतान् प्रोक्षितानितरानालभन्ते'' ''प्रेतरानुत्सृजन्ति'' इति वाक्ये मरुद्दैवत्यान् पृश्न्यादिशब्दितानल्पतरानुपाकृतान् त्रिहायनानप्रसूतानुपाकृतान् सप्तदशस्त्रीपशूनितरानित्यनूद्य ''आलभन्ते'' इत्यालम्भनं विधाय प्रेतरानित्यत्र च पृश्नीन् पर्यग्निकृतान् प्रोक्षितानुक्ष्णो मारुतान् इत्यनुषङ्गेण मरुद्देवताकान् प्रोत्सृजतीत्युक्ष्णामुत्सर्गं च विधाय पुनर्द्वितीये तृतीये



चतुर्थे च संवत्सरे ''राजीवान्यानयन्ति'' तांश्चैवोक्ष्णा इत्यादिप्रागुक्तरूपेणैवानुष्ठानमाम्नाय पञ्चमे संवत्सरे श्रूयते ''पञ्चमे वर्षे दीक्षित एतानुक्ष्णस्त्रींस्त्रीनेकस्मिन्न्यहन्यालभेरन्पञ्चोत्तमेऽहनि'' इति । तत्र **सन्देहः,** य एव प्रथमे संवत्सरे पर्यग्निकृता उक्षाण उत्सृष्टास्तेषामेव द्वितायादिसंवत्सरेषु पर्यग्निकरणं, पञ्चमे च संवत्सरे तेषामेव पञ्चसु सुत्याहेषु त्रीन् त्रीन् चरमेऽहनि पञ्चेत्येवमालम्भः, किं वा प्रथमे वर्षे उपक्रान्तानां पर्यग्निकरणान्ताङ्गरीतिविधानेन तत्रैव समाप्तिः । द्वितीयादिसंवत्सरेष्वन्येवोक्षाणस्संस्कार्याः । पञ्चमे संवत्सरे त्वन्ये उक्षाण आलभ्या इति । **पूर्वपक्षस्तु,** पूर्वत्र यथा ''ब्रह्मसाम्न्यालभ्यते'' इति वाक्ये पर्यग्निकृतानामेव प्राजापत्यपशूनामालम्भोत्कर्षविधिस्तथात्रापि प्रथमवत्सरे पर्यग्निकृत्योत्सृष्टानां पञ्चमवत्सरे आलम्भोत्कर्षमात्रविधिः । लाघवात् । अन्यथा प्रतिवत्सरमन्येऽन्ये सम्पाद्या इति गौरवम् । न च तेषामेवोपादाने पुनः पुनः प्रतिसंवत्सरं पर्यग्निकरणमनर्थकम् । संस्कृतस्य पुनस्संस्कारकरणवैयर्थ्यादिति शङ्क्यम् ।

प्रतिवत्सरं तथा वचनसत्वेनादृष्टार्थतया तस्यावश्यं कार्यत्वात् । न च चोत्सर्गस्यापि विधौ वाक्यभेदः शंक्यः । उत्कर्षविधिबलादेव पूर्वत्रेव तस्य प्राप्तत्वेनानुवादतयाऽविधानादिति । तदाह **सूत्रे, पञ्चशारदीयाः** पशवोऽपि तथाप्राजापत्यपशुवदुत्कृष्यन्त इति । **सिद्धान्तस्तु,** ''पर्यग्निकृतानुत्सृजति'' ''ब्रह्मसाम्न्यालभन्ते'' इत्येकवाक्यतयाऽऽलम्भोत्कर्षसम्भवेनोत्सर्गानुवादः । प्रकृते त्वनेकगुणविशिष्टकर्मान्तरविधिरेवोपेयः । अन्यथोत्कर्षविधौ तु न विशिष्टकर्मविधिः । ''सप्तदश पृश्नीनुक्ष्णः'' इति पुर्वोक्तवाक्येनैवोक्षद्रव्यकमरुद्देवताककर्मण उत्पन्नत्वात् । किन्तु तस्मिन् कर्मणि गुणविधिरिति वाच्यम् । तन्न युक्तम् । तथात्वे ''आलभेरन् इति यत् तदन्वहं त्रीन् त्रीन्'' इति यद्येकाहत्वत्रित्वगुणयोस्तथा आलभेरन्निति यत् तान् पञ्च तांश्चोत्तमेऽहनि'' इति पञ्चत्वोत्तमाहत्वरूपगुणयोश्च विधौ वाक्यभेदापत्तेः । अतोऽनेकगुणविशिष्टापूर्वकर्मविधिरुपेयः । तथा चोत्कर्षविध्यभावादारण्यपशूत्सर्गन्यायेन पर्यग्निकरणप्रोक्षितान्ताङ्गरीतिविधिवदेवोत्सर्गवाक्य इति प्रथमवर्षोप्रक्रान्तानां सप्तदशोक्षयागानां तत्रैव समाप्तिः । एवं द्वितीयादिवत्सरेष्वप्यन्येऽन्ये उपादेयाः । पर्यग्निकरणान्तेनोत्स्रष्टव्याः । पञ्चमेऽपि वर्षे अन्येषामुक्ष्णामालम्भ इति ।

इति द्वादशं अहीन उक्ष्णामुत्सर्गस्य कर्मशेषप्रतिषेधार्थताधिकरणम् (सूत्राणि ५३-५६)

### अथ त्रयोदशं दशपेयाभिषेचनीययोर्भेदेन प्रयोगाधिकरणम् (सूत्राणि ५७-६२)

**दशपेये क्रयप्रतिकर्षात्प्रतिकर्षस्तत प्राचां तत्समानं तन्त्रं स्यात् ॥ ५७ ॥**

**(समानवचनं तद्वत् ॥ ५८ ॥ अप्रतिकर्षो वाऽर्थहेतुत्वात्सहत्वं विधीयते ॥ ५९ ॥ पूर्वस्मिंश्चावभृथस्य दर्शनात् ॥ ६० ॥ दीक्षणाश्चोत्तरस्य ॥ ६१ ॥ समानः कालसामान्यात् ॥ ६२ ॥)**

उत्कर्षप्रसङ्गादपकर्षचिन्ताऽत्रेति **सङ्गतिः** । राजसूये अभिषेचनीयदशपेयाख्यौ द्वौ सोमयागावेकाहौ । तौ किं समानतन्त्रौ, भिन्नतन्त्रौ वेति **सन्देहे**, ''सह सोमौ क्रीणाति'' इति अभिषेचनीयस्य दशपेयस्य च वचनेनाभिषचनीयसोमक्रयकाले दशपेयसोमक्रयस्याप्याकर्षणात्तस्य च **अङ्गानां मुख्यत्वादिति** पञ्चमाध्यायाद्यपादीयोक्ततदन्तापकर्षन्यायेन ततः प्राचामपि पदार्थानामपकर्षाद्वावपि सोमयागौ सहैवोपक्रमयितव्याविति सहैवोपक्रमात्सहैव समापनीयावित्येककालकर्तव्यत्वात्समानतन्त्राविति । तदाह **सूत्रे, दशपेय इत्यादि** । व्यक्तोऽर्थः । **सिद्धान्तस्तु,** ''सह सोमौ क्रीणाति'' इत्यत्र श्रुतक्रयो यदि परकीयस्य मूल्यं दत्त्वा स्वकीयकरणरूपमुख्यक्रयस्तदा स्यादेवं समानतन्त्रत्वम् । न चैवम् । किन्तु गौण्या वृत्त्योपसम्पादनशब्दितो विक्रेत्रा सह मूल्यनिश्चयरूपः क्रीणातिनोच्यते । क्रीणाति सोममूल्यनिश्चयमभिषेचनीयदशपेययोस्सह करोतीति । तथा च तदङ्गभूतमुख्यक्रयापकर्षाभावान्न तदन्तापकर्षेण सहोपक्रमावसानतया तयोस्समानतन्त्रत्वम् । एवं हि दशपेये ''सद्यो दीक्षयन्ति'' ''सद्यस्सोमं क्रीणन्ति'' इति वचनमप्यनुकूलितं भवति । तथाऽभिषेचनीयेऽभिषेचनीयस्य ''अवभृथमवयन्ति'' इत्यवभृथदर्शनं च युक्तं भवति । अन्यथा समानतन्त्रत्वे दशपेयानन्तरमेव कर्तव्यत्वेन तस्याभिषेचनीये तद्दर्शनं न स्यादिति भिन्नकालत्वाद्भिन्नतन्त्राविति ।

इति त्रयोदशं दशपेयाभिषेचनीपयोर्भेदेन प्रयोगाधिकरणम् (सूत्राणि ५७-६२)

## अथ चतुर्दशं वारुणीनिष्कासावभृथस्यार्थकर्मताधिकरणम् (सूत्राणि ६३-६५)

**निष्कासस्यावभृथे तदेकदेशत्वात्पशुवत्प्रदानविप्रकर्षः स्यात् ॥ ६३ ॥**

**(अपनयो वा प्रसिद्धेनाभिसंयोगात् ॥ ६४ ॥ प्रतिपत्तिरिति चेन्न कर्मसंयोगात् ॥ ६५ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । वरुणप्रघासेषु नव हवींषि । तत्र ''मारुत्यामिक्षा । वारुण्यामिक्षा'' इति श्रुतम् । तत्र ''वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति'' इति श्रूयते । वारुण्या आमिक्षाया स्थालीलग्नेनाल्पेन तथाऽऽमिक्षासंस्कारार्थं तन्मध्ये पिष्टस्थापनाय पिष्टप्रकृतिभूतयवतुषैः पुरोडाशार्थव्रीहितुषैश्चावभृथमनुतिष्ठन्तीत्यर्थः । तत्र किं प्रधानस्यैवामिक्षायागस्यायं प्रचारोत्कर्षः, किं वा कर्मान्तरं, स तु निष्कासस्येयं प्रतिपत्तिः, उत निष्कासतुषद्रव्यकं अवभृथधर्मकं कर्मान्तरमेवेति इति त्रेधा **सन्देहः । पूर्वपक्षस्तु,** यथा पशौ ''वपया प्रातस्सवने चरन्ति'' इति ''अङ्गैस्तृतीयसवने'' इत्येकस्यैव पशोः प्रचारविप्रकर्षस्तथा आमिक्षाया एकदेशेनाऽऽज्यभागान्ते प्रचारे कृते समिष्टयजुरनन्तरकाले एकदेशेनाऽऽमिक्षालेपे तस्या एव वरुणदेवतायै दीयमाने सति तस्यैव कर्मणः प्रचारविप्रकर्षः । न कर्मान्तरम् । अवभृथशब्दस्तु अवभृथ इवावभृथ इति, अवभृथो यथा वरुणदैवत्यस्तथाऽयमपीति प्रकृतकर्मणि गौणः । एवञ्च पूर्वत्र क्रीणातौ लक्षणाभ्युपगमेऽपि नेह विधाववभृथशब्दे धर्मलक्षणा युक्तेत्येकः । तदाह **सूत्रे, अवभृथे निष्कासस्याऽऽमिक्षैकदेशत्वात् पशाविव प्रदानविप्रकर्षः स्यात् न कर्मान्तरविधिरिति** । यदि प्रदानस्यैव विप्रकर्षः पशुवत्तदा ''वारुण्या निष्कासेन यन्ति'' इत्येतावता पूर्तेरवभृथशब्दो व्यर्थस्स्यात् । निरर्थकानुवादादपि धर्मलक्षणाया एव युक्तत्वादवभृथसमानधर्मकं निष्कासद्रव्यकं कर्मान्तरं सत् स्विष्टकृदादिवन्निष्कासप्रतिपत्त्यर्थमिति **द्वितीयः । सिद्धान्तस्तु,** कर्मान्तरमिति पक्षे हि यथा प्रसिद्धेनावभृथाख्येन कर्मणा कृतं तथाऽनेनापि कर्तव्यमित्यर्थः स्यात् । तथा च सति द्रव्यं गुणो, यागः प्रधानं । निष्कासप्रतिपत्तित्वे तु द्रव्यं प्रधानं, यागो गुण इति वैपरीत्यापत्त्या प्रसिद्धावभृथवदयं कृतो न स्यात् । अवभृथशब्दविरोधान्न प्रतिपत्तित्वमपि । किं तु केवलं तत्समधर्मकं कर्मान्तरमेवेति ।

इति चतुर्दशं वारुणीनिष्कासावभृथस्यार्थकर्मताधिकरणम् (सूत्राणि ६३-६५)

## अथ पञ्चदशं प्रायणीयनिष्कासे उदयनीयनिर्वापास्य संस्कारकर्मताधिकरणम् (सूत्राणि ६६-६८)

**उदयनीये च तद्वत् ॥ ६६ ॥**

**(प्रतिपत्तिर्वाऽकर्मसंयोगात् ॥ ६७ ॥ अर्थकर्म वा शेषत्वाच्छ्रयणवत्तदर्थेन विधानात् ॥ ६८ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ज्योतिष्टोमे ''प्रायणीयस्य निष्कासे उदयनीयमनुनिर्वपति'' इति श्रूयते । तत्र किं प्रायणीयनिष्कासद्रव्यकमुदयनीयसमानधर्मकं कर्मान्तरं विधीयते, किं वा प्रायणीयनिष्कासस्योदयनीयनिर्वापसंयोगः प्रतिपत्तिः, उत प्रायणीयनिष्कासे निर्वाप उदयनीयस्य संस्कार इति त्रेधा **सन्देहः । पूर्वपक्षस्तु,** पूर्वत्रेव प्रायणीयनिष्कासद्रव्यकमुदयनीयसमानधर्मकं तन्नामकं कर्मान्तर-

मित्याद्यः । तदाह सूत्रे, **उदयनीये च तद्वत्** अवभृथवन्निष्कासो गुणभूतः स्यादिति । ''आदित्य उदयनीयश्चरुः'' इत्युदयनीयस्य मुख्यस्येह प्रकृतत्वात्प्रकृतप्रत्यभिज्ञाविरोधाल्लक्षणादोषाच्च न प्रकरणान्तरन्यायेन तद्धर्मककर्मान्तरविधिः । किन्तु प्रायणीयनिष्कासस्य कृतार्थस्योदयनीयनिर्वापसंयोगः प्रतिपत्तिरिति **द्वितीयः । सिद्धान्तस्तु,** निष्कासस्य प्रतिपाद्यत्वे निष्कासमिति द्वितीया स्यात् । न सप्तमी । तथा च तस्य गुणभावस्यैव प्रतीतेः उदयनीयमिति द्वितीययोदयनीयनिर्वापस्य संस्कार्यत्वप्रतीतेश्च उपयुक्तसंस्कारादप्युपयोक्ष्यमाणसंस्कारस्यैवाकर्तव्यत्वाच्चोदयनीये हविःसंस्कारार्थं प्रायणीयनिष्कासे निर्वाप इति ।

इति पञ्चदशं प्रायणीयनिष्कासे उदयनीयनिर्वापस्य संस्कारकर्मताधिकरणम् (सूत्राणि ६६-६८)

**इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते एकादशाध्यायस्य द्वितीयः पादः**

अस्मिन् पादे अधिकरणानि १५ सूत्राणि ६८

आदितः अधिकरणानि ८०९ सूत्राणि २४८५

## अथैकादशाध्याये तृतीयः पादः

पूर्वपादद्वयेन प्रधानकालकर्तव्यानामङ्गानां तन्त्रावापौ चिन्तितौ । अत्र पादे भिन्नकालकर्तव्यानामङ्गानां तौ चिन्त्येते ।

### अथ प्रथमं वेद्याद्यङ्गानां प्रधानकालादन्यकालकर्तव्यत्वाधिकरणम् (सूत्रम् १)

**अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥ १ ॥**

वक्ष्यमाणोपोद्घातत्वेनेदमारभ्यते । पूर्वपादाद्यनयेन प्रधानसमदेशकालत्वमङ्गानामुक्तम् । अत्र तूत्तरविवक्षया वचनाद्भिन्नकालत्वमप्यङ्गानामस्तीति वक्तुमिदं सूत्रम् । नात्र पूर्वोत्तरपक्षावकाश इत्याहुः । **सूत्रार्थस्तु, अङ्गानां** पूर्वपादोक्तदिशा **मुख्यकालत्वात्** । उपलक्षणमेतत् । मुख्यदेशत्वात् मुख्यकर्तृकत्वात् । तथैव सर्वत्र भाव्यम् । तथापि **वचन**बलादन्यकालदेशकर्तृकत्वमप्युपेयम् । यथा ''पूर्वेद्युरमावास्यायां वेदिं करोति'' इति दर्शपूर्णमासयोः प्रधानकालाद्भिन्नकालत्वं, ''पदे जुहोति'' इति प्रधानदेशादाहवनीयाद्भिन्नदेशत्वम्, ''अप्स्ववभृथेन चरन्ति'' इति च भिन्नदेशत्वम् । अग्नौ सौत्रामण्यां च ''वडवा दक्षिणा'' इति दक्षिणाभेदादुत्तरपादाद्यनयन्यायाद्भिन्नकर्तृकत्वञ्चेति ।

इति प्रथमं वेद्याद्यङ्गानां प्रधानकालादन्यकालकर्तव्यत्वाधिकरणम् (सूत्रम् १)



### अथ द्वितीयमाधानादेस्तन्त्रताधिकरणम् (सूत्रं २)

**द्रव्यस्य चाकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्स्वकालत्वात् ॥ २ ॥**

यदर्थं भिन्नकालत्वं वाचनिकमुक्तं तदिह चिन्त्यते । ''वसन्ते ब्राह्मणोऽग्निमादधीत'' इत्यनारभ्याग्निहोत्रादिकालभिन्नवसन्तादिकाले श्रुतमाधानरूपमङ्गमग्निहोत्रादिप्रतिकर्म एकस्मिन्नपि कर्मणि प्रतिप्रयोगं चावर्तनीयम्, उत सर्वकर्मणां तन्त्रमिति **सन्देहे,** यथा प्रयाजादिकं प्रतिकर्म प्रतिप्रयोगं चावर्तते तथाऽऽधानमनारभ्याधीतमप्याधानानन्तरं निमित्तवशात्कामवशादेव वा किञ्चित् कर्मापतति आनन्तर्यविशेषेण तत्कर्ममात्रार्थं सत्प्रतिकर्मावर्तेत अङ्गत्वाविशेषादिति **प्राप्ते सिद्धान्तः,** यदीदमाधानं यत्किञ्चित्कर्मारम्भे तन्मध्ये वा प्रयुज्येत तदा विशेषग्रहणेन तदर्थत्वावगमात्तत्समाप्तौ स्वस्यापि समाप्तत्वात्कर्मान्तरार्थमावर्तेत । न त्वेवमस्ति । अनारभ्य विधानात् । केवलं वचनबलाद्वसन्तादिस्वकाले स्थितं सदप्याधानं सर्वेषां कर्मणामुपाकरोतीत्यगृह्यमाणविरोधत्वेन सर्वार्थं सत्तन्त्रमिति । **यत्त्वनन्तरोपनिपतितार्थं सन्न सर्वार्थमिति** तन्नैतत्कर्मार्थमाधास्य इति संकल्पाभावात् । प्रत्युत सर्वकर्मार्थमाधास्य इत्येव संकल्पेन तदानीं निमित्तादिवशेनानन्तरं प्राप्तकर्मण आधानसमयेऽनुपस्थितेरिति । तदाह **सूत्रे, स्वकालत्वात्** वसन्तादिकाले विहितत्वेन **द्रव्यस्य** आधानस्या**कर्मकालनिष्पत्तेः तत्प्रयोगः सर्वार्थः स्यादिति** । यद्यप्याधानमग्न्यङ्गमेव । न कर्माङ्गम् । अनारभ्याधीतत्वात् । तृतीयस्य षष्ठे पादे **तत्प्रकृत्यर्थं यथाऽन्येऽनारभ्यवादाः** इत्यत्र तथोक्तेश्च । तथापि सर्वाङ्गमिति कृत्वाचिन्तेयमित्याहुः ।

इति द्वितीयमाधानादेस्तन्त्रताधिकरणम् (सूत्रं २)

### अथ तृतीयमग्नीषोमीयादिपशौ यूपतन्त्रताधिकरणम् (सूत्रे ३-४)

**यूपश्चाकर्मकालत्वात् ॥ ३ ॥**

**(एकयूपञ्च दर्शयति ॥ ४ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ज्योतिष्टोमे अग्नीषोमीयसवनीयानुबन्ध्यास्त्रयः पशवः । तत्राग्नीषोमीयपशावुपदिष्टो यूपः सवनीयानुबन्ध्ययोरितिदेशतः प्राप्तः । स यूपः किं त्रयाणां पशूनां तन्त्रम्, उत प्रतिपशु भिन्नमिति **सन्देहे,** यथाऽध्वरकल्पायां ''पुरो वाचः प्रवदितोर्निर्वपेत्'' इत्यत्र प्रातःकालीनस्यैवाग्नेयादिकस्य निर्वापो, मुख्यत्वादपकृष्यते तथाऽत्राग्नीषोमीययूपस्यैव ''दीक्षासु यूपं

छिनत्ति'' इत्यपकर्षो मुख्यत्वात् । अतोऽग्नीषोमीयपशौ संस्थितस्तदीयो यूपोऽपि समाप्त एवेति सवनीयादौ भेदेन यूप उपादेयः । एवञ्चाऽधानस्य तन्त्रत्वेपि न यूपस्य तन्त्रतेति **प्राप्ते सिद्धान्तः**, ''दीक्षासु यूपं छिनत्ति'' इत्यपकर्षो नाग्नीषोमीययूपमात्रस्य । मुख्यत्वमात्रेण श्रुतेस्संकोचायोगात् । किन्तु त्रयाणामपि यूपानां दीक्षाकाले समाकर्षणम् । तथा चाग्नीषोमीयपशुकालत्वेनागृह्यमाण-विशेषत्वात्सर्वेषां तन्त्रं यूप इति । तदाह **सूत्रे, यूपश्च तन्त्रं भवेत्** । कुतः ? **अकर्मकालत्वात्** दैक्षपशूत्पत्तिकालत्वाभावादिति ।

इति तृतीयमग्नीषोमीयादिपशौ यूपतन्त्रताधिकरणम् (सूत्रे ३-४)

## अथ चतुर्थं यूपसंस्कारतन्त्रताधिकरणम् (सूत्राणि ५-७)

**संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ॥ ५ ॥**

**(तत्कालास्तु यूपकर्मत्वात्तस्य धर्मविधानात्सर्वार्थानाञ्च वचनादन्यकालत्वम् ॥ ६ ॥ सकृन्मानं च दर्शयति ॥ ७ ॥)**

पूर्वैषम्येण शङ्कनात्सङ्गतिः । पूर्वत्र दीक्षाकाले अपकृष्यमाणो यूपः पशुत्रयस्यापि तन्त्रमित्युक्तम् । तत्किं तक्षणशोषणप्रोक्षणादयो यूपसंस्कारा अपि तन्त्रम्, उत प्रतिपशु भेदेन कर्तव्या इति **सन्देहे**, ''दीक्षासु यूपं छिनत्ति'' इति छेदनमात्रस्यापकर्षविधानेन तक्षणादीतरसंस्काराणामपकर्षाश्रवणा-च्छेदनस्य तन्त्रत्वेऽपि तक्षणादिसंस्काराणामग्नीषोमीयपशुकर्मकालीनत्वेन तदपवर्गे तेषामपि समाप्त-त्वेन सवनीयादौ पुनः कार्या इति **प्राप्तम्** । तदाह सूत्रे, **तक्षणादिसंस्कारास्त्वावर्तेरन्** । कुतः? अर्थकालत्वात् कार्यकाले अग्नीषोमीयकालेऽनुष्ठीयमानत्वादिति । **सिद्धान्तस्तु**, ''दीक्षासु यूपं छिनत्ति'' इत्यस्य छेदनेन यूपं कुर्यादित्यर्थः । न हि छेदनमात्रेण यूपो भवति । किन्तु छेदनतक्षणसंस्कारानन्तरमेव यूपशब्दप्रयोगदर्शनेन छेदनादिजन्यानेकसंस्कारनिमित्तक एव यूपशब्द इति यूपोत्पत्तौ तक्षणादिक-मप्यपेक्षितमिति छेदनापकर्षे तेषां छेदनोपलक्षितानामपकर्षात्तन्त्रत्वमिति तेषामनपकर्षेण पशुकालीन-त्वेऽपि वा सर्वसाधारणयूपद्वारत्वेऽपि सर्वसाधारणा एव नावर्तेरन्निति ।

इति चतुर्थं यूपसंस्कारतन्त्रताधिकरणम् (सूत्राणि ५-७)



## अथ पञ्चमं स्वरुतन्त्रताधिकरणम् (सूत्राणि ८-१२)

**स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् ॥ ८ ॥**

**(साधारणो वाऽनुनिष्पत्तिस्तस्य साधारणत्वात् ॥ ९ ॥ सोमान्ते च प्रतिपत्ति-दर्शनात् ॥ १० ॥ तत्कालो वा प्रस्तरवत् ॥ ११ ॥ न चोत्पत्तिवाक्यत्वात् प्रदेशात्प्रस्तरे तथा ॥ १२ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''यूपस्य स्वरुं करोति'' इति स्वरुशब्दितः प्रथमयूपच्छेदशकलः किं तन्त्रम्, उत भेदेन सम्पाद्य इति **सन्देहे** ''यूपस्य स्वरुं करोति'' इत्यस्य हि ''स्वरुणा पशु-मनक्ति'' इति पश्वञ्जनसाधनतया विहितं स्वरुं यूपादुपादत्त इत्यर्थः । यूपार्थं छिन्ने काष्ठे यः प्रथम-शकलः, स च स्वरुः । स च दीक्षाकाल उत्पन्नोऽपि तस्य तत्कालेऽनुपयोगान्न तदुपादीयते । किन्तु ''स्वरुणा पशुमनक्ति'' इत्यञ्जनकाल एवोपादीयते । अग्नीषोमीयपश्वञ्जने समाप्ते स्वरुरपि कृतकार्य-त्वात्समाप्यत इति निवर्तत इति यावत् । अतः प्रतिपशु भेदेन सम्पाद्यः । न चाद्यशकलस्यैव स्वरुत्वा-त्कथमनेकस्वरुसम्पादनमिति वाच्यम् । उक्तदिशा पृथगुपादानावश्यंभावे सति स्वरुबहुत्वं सम्पाद्य-मित्यैकैकप्रहरणापेक्षया प्राथम्यस्योपपादनीयत्वादिति **प्राप्तम्** । तदाह **सूत्रे, स्वरुस्तन्त्रापवर्गः** । तन्त्रं पशुप्रयोगः । तन्त्रे अपवर्गः समाप्तिर्यस्यासौ तन्त्रापवर्गः प्रतिपशु तन्त्रं समाप्तः स्यात् । कुतः अस्वकालत्वात् स्वोत्पत्तिकाले तस्याविनियोगादिति । **सिद्धान्तस्तु**, स्यादेवं यद्यत्र प्रहरणं श्रूयेत । तदा प्रहरणबहुत्वात्तदपेक्षया प्रथमशकलरूपस्वरुबहुत्वम् । न चात्र प्रहरणं श्रूयते, अतो द्वितीयादि-शकलापेक्षयैव प्राथम्यं वाच्यम् । एकस्य यूपस्यैक एव प्रथमः शकल इति न स्वरुबाहुल्यं युक्तम् । किञ्च यूपच्छेदनकाल एवास्येतरशकलासाङ्कर्याय नाशापहारपरिहाराय च तच्छेदनकाल एवोपादातव्य इत्यगृह्यमाणविशेषत्वाच्च तन्त्रमित्यनुबन्ध्याख्यतृतीयपशुपर्यन्तं तमेव स्वरुमवस्थाप्य पश्चादेव निष्कासनमिति ।

इति पञ्चमं स्वरुतन्त्रताधिकरणम् (सूत्राणि ८-१२)

## अथ षष्ठं कृष्णविषाणाप्रासनस्यान्त्याहनियमाधिकरणम् (सूत्रे १३-१४)

**अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्त्ये प्रथमे वाऽहनि विकल्पः स्यात् ॥ १३ ॥**

**(पाणेस्त्वश्श्रुतिभूतत्वाद्विषाणानियमः स्यात्प्रातस्सवनमध्यत्वाच्छिष्टे चाभि-प्रवृत्तत्वात् ॥ १४ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ज्योतिष्टोमे ''कृष्णाविषाणया कण्डूयते'' इति श्रुतम् । तथा ''नीतासु दक्षिणासु कृष्णविषाणां चात्वाले प्रास्यति'' इति श्रूयते । **चात्वालो** नाम वेद्यर्थं मृत्तिकोद्धरणजातगर्तविशेषः । कण्डूयनार्थतयोपात्तकृष्णमृगश्रुङ्गं तत्र निक्षिपेदित्यर्थः । तत्र प्रासनं द्विरात्रत्रिरात्राद्यहर्गणेषु चोदकप्राप्तम् । तत्किमाद्ये, अन्त्ये वाऽहनि कार्यमिति विकल्पः, उतान्त्येऽहन्येवेति नियम इति **सन्देहे,** पूर्वत्र स्वरोरन्तिम एव पशौ प्रासननियमेऽपि, नात्र तथा नियमो भवति । यद्यन्तिमेऽहनि प्रास्येत ततः पूर्वेष्वहस्सु दक्षिणानयनानन्तरं चोदकप्राप्तं पाणिकण्डूयनं बाध्येत । न ह्यप्रास्तायां विषाणायां पाणिकण्डूयनं युक्तम् । प्रक्रान्तनियमविधित्यागे शिष्टाचारविरोधात् । यदि प्रथमेऽहनि प्रास्येत तर्हि तत उत्तरेष्वहस्सु दक्षिणानयनात्प्राग्भाविपदार्थानां विषाणया कण्डूयनं धर्मो न स्यात् । कण्डूयनेन ह्याक्षिप्तचित्तः कर्ता न सुसम्पादार्थाननुष्ठतीति कर्तृसंस्कारद्वारा कण्डूयनं पदार्थधर्मः । अतोऽवश्यंभाविकेषाश्चित्पदार्थानां चोदकप्राप्तधर्मबाध इत्याद्येऽन्त्ये वाऽहनि प्रासनमिति विकल्प इति **प्राप्तम् । तदाह सूत्रे, अहर्गणे** द्विरात्रादौ उभयथापि **धर्मविप्रतिषेधात्** धर्मबाधात् **प्रथमेऽहनि विषाणाप्रासनं विकल्पः स्यादिति । सिद्धान्तस्तु,** अन्त्येऽहन्येव प्रासनम् । न चोक्तदोषः । प्रकृतौ दक्षिणानयनानन्तरं कृष्णविषाणायाः प्रास्तत्वेन पाणिकण्डूयनस्यार्थिकत्वेनाशास्त्रीयत्वात्तस्य चेह चोदकेनाप्राप्तेस्तस्य पदार्थधर्मत्वाभावेन तद्बाधेऽप्यदोषादिति ।

इति षष्ठं कृष्णविषाणाप्रासनस्यान्त्याहनियमाधिकरणम् (सूत्रे १३-१४)

## अथ सप्तमं राजसूये नानाबीजेषु वाग्विसर्गस्य चरमकालनियमाधिकरणम् (सूत्रे १५-१६)

**वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् ॥ १५ ॥**

**(तथाऽऽह्वानमपीति चेत् ॥ १६ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोः ''प्रणीताः प्रणेष्यन्वाचं यच्छति । तां हविष्कृता वाचं विसृजति'' इति श्रूयते । प्रणीता अपः । वाचं यच्छति मौनीभवति । हविष्कृता व्रीह्यादीनऽवघातद्वारा हविर्योग्यान् करोतीति हविष्कृद्यजमानपत्नी । तया हविष्कृता अवननसहायतया हविष्कृदेहीति हविष्कृदाह्वानकाले तां नियमितां वाचं विसृजतीत्यर्थः । स च वाग्विसर्गः राजसूयगतनानाबीजयुक्तयागेषु ''अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणां । सोमाया वनस्पतये श्यामाकं चरुं'' इत्यादिना श्रुतेषु चोदकप्राप्तः **सन्दिह्यते,** स किं प्रथमस्य बीजस्यान्त्यस्य वाऽवघाते कार्ये



सहायतया हविष्कृदाह्वानकाले वाग्विसर्ग इति विकल्पः, उतान्त्यबीजस्यावघातसहायतया हविष्कृदाह्वानकाल एवेति नियम इति । **पूर्वपक्षस्तु,** पूर्वत्र प्रासनस्यान्त्येऽहनीति नियमेऽपि नात्र नियमो युक्तः । यद्यन्तिमबीजस्यावघातार्थाह्वानकाले वाग्विसर्गः स्यात्तर्हि पूर्वबीजावघातसहायार्थकृतहविष्कृदाह्वानकालात्प्रत्यञ्चः परावपनादयः पदार्थास्तेषां धर्मो वग्विसर्गो बाध्येत । न च पाणिकण्डूयनवद्वाग्विसर्गस्याशास्त्रार्थत्वात्तद्बाधो न दोषायेति शङ्क्यम् । ''वाचं विसृजति'' इति तस्य वाजनिकत्वात्यदि प्रथमबीजावघातसहायार्थकृतहविष्कृदाह्वानकाले वाग्विसर्गस्तर्हि पश्चात्तनबीजावघातसहायार्थकृतहविष्कृदाह्वानकालात्प्राञ्चः पदार्था हविरादयस्तेषां धर्मो वाग्यमो बाध्येत । अतोऽवश्यंभाव्यन्यतरधर्मबाध इति विकल्प इति । **सिद्धान्तस्तु, सन्ति** सर्वस्यापि विधौ वाग्यमतद्विसर्गौ । वाग्यमतद्विसर्गयोर्द्वयोरपि विधौ वाक्यभेदादृष्टकल्पनयोरापत्तेः । अतोऽन्तिम एव विसर्ग इति । तदाह **सूत्रे, नानाबीजेषु हविष्कृता वाग्विसर्गः ।** तथा विषाणाप्रासनवदन्त्य **एव स्यादिति ।** फलं व्यक्तम् ।

इति सप्तमं राजसूये नानाबीजेषु वाग्विसर्गस्य चरमकालनियमाधिकरणम् (सूत्रे १५-१६)

## अथाष्टममग्नीषोमीये पौरोडाशिककाल एव वाग्विसर्गाधिकरणम् (सूत्रं १७)

**पशौ च पुरोडाशे समानतन्त्रता भवेत् ॥ १७ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । अग्नीषोमीयपशौ पुराडाशो माध्यन्दिनकालीनः । तत्र हविष्कृदाह्वनमस्ति । पशौ तु नास्ति । तस्य सान्नाय्यविकृतित्वेनावहननस्य तत्राभावात् । तथापि तत्राप्यस्तीति कृत्वा **चिन्त्यते ।** किं पशुकालीनहविष्कृदाह्वानकाले वाग्विसर्गः, उत पुरोडाशकाल एवेति । **पूर्वपक्षस्तु,** पश्वीयहविष्कृदाह्वनकाल एव वाग्विसर्गः । पुरोडाशस्य प्रासङ्गिकत्वेन पशुतन्त्रकृतैरेव वाग्यमाद्यङ्गैस्तस्याप्युपकारसिद्धेस्तत्र पृथग्वाग्यमाभावात् । पूर्वत्रान्त्यबीजे वाग्विसर्गेऽपीह पूर्वत्रैव वाग्विमोक इति । **सिद्धान्स्तु,** वाग्यमो ह्यविक्षिप्तचित्ताधायकतया यजमानसंस्कारः । न त्वारादुपकारकः । प्रागेव च वाग्विमोके सति वाग्यमरूपसंस्कारहीनेन कृतः पुराडाशो विगुणः स्यात् । तस्मात्पुरोडाशकाल एव वाग्विसर्ग इति । तदाह **सूत्रे, पशौ पुरोडाशे** पश्वङ्गे पुरोडाशे वाग्विसर्गस्स्यात् । नानाबीज इव समानतन्त्रता भवेदिति ।

इत्यष्टममग्नीषोमीये पौरोडाशिककाल एव वाग्विसर्गाधिकरणम् (सूत्रं १७)

**अथ नवममग्निचयनेऽग्निविमोकस्यमतभेदेन व्यवस्थाधिकरणम् (सूत्राणि १७-२०)**

**अग्नियोगः सोमकाले तदर्थत्वात्संस्कारकर्मणः**
**परेषु साङ्गस्य तस्मात्सर्वापवर्गे विमोकः स्यात् ॥ १७ ॥**

**(प्रधानापवर्गे वा तदर्थत्वात् ॥ १८ ॥ अवभृथे च तद्वत्प्रधानार्थस्य प्रतिषेधोऽपवृक्तार्थत्वात् ॥ १९ ॥ अहर्गणे च प्रत्यहं स्यात्तदर्थत्वात् ॥ २० ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । अग्निविषये श्रूयते, ''इमं स्तनमूर्जस्वन्तं धयामि'' इत्याज्यस्य पूर्णां स्रुचं जुहोति एष वा अग्नेर्विमोकः'' इति । सोऽयमग्निविमोकः प्रधानमात्रसमाप्तौ स्यात्, उत साङ्गप्रधानापवर्ग इति **सन्देहे**, ''अग्निं युनज्मि । शवसा घृतेनेति जुहोतीत्यग्निमेव तद्युनक्ति'' इत्यग्नियोगरूपसंस्कारस्य सत्यपि प्रधानप्रकरणे ''वेद्यां हवींष्यासादयति'' इत्यत्रेव तस्याविशेषकत्वादाहवनीयाग्निद्वारा तत्साध्यसर्वकार्यार्थत्वात्तद्विमोकोऽपि साङ्गप्रधानापवर्गान्त एव स्यात् । एवञ्च यथा पूर्वत्राग्नीषोमीयपशुहविष्कृदाह्वानकाले वाग्विसर्गस्तथाऽग्नौ न प्रधानमात्रापवर्गकालेऽग्निविमोक इति **प्राप्तम्** । तदाह **सूत्रे, सोमकाले** क्रियमाणोऽग्नियोगः साङ्गस्य प्रधानस्य । कुतः? **संस्कारकर्मणोऽ**ग्नियोगस्य **तदर्थत्वात्** सर्वाग्न्यर्थत्वात् । **तस्माद्विमोकः सर्वापवर्गे स्यादिति** । **सिद्धान्तस्तु,** ''पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमाप्नोति'' इति गुणविधिपरवाक्यशेषेऽग्नियोगस्य यज्ञार्थताऽवगमात्प्रधानापवर्ग एव विमोक इति । तथा च **सूत्रम्, प्रधानापवर्गे वा तदर्थत्वादिति** । प्रधानसमाप्तावेवाग्निविमोकः । अग्नियोगस्य यज्ञसंयोगेन **तदर्थत्वादित्यर्थः** ।

एतच्च **भाष्यकारीयमधिकरणशरीरमयुक्तं** मत्वा **वार्तिककारः** प्रधानापवर्ग इति पूर्वपक्षसूत्रं **सर्वापवर्गे विमोक** इति सूत्रं सिद्धान्तसूत्रमुपेत्य केवलप्रधानवाग्वियोगतद्विमोकौ । वाक्यशेषे यज्ञसंयोगादिति **प्राप्ते**, वाक्यशेषस्य पञ्चभिरिति पञ्चत्वगुणविधिवाक्यशेषत्वेन ''अग्निं युनज्मि'' इत्यग्नियोगोत्पत्तिवाक्यशेषत्वाभावाद्योगोत्पत्तिवाक्ये च सर्वार्थाग्न्यर्थत्वावगमात्सर्वान्ते विमोक इति **सिद्धान्तितवान्** । विस्तरस्तु **तन्त्ररत्ने** ।

इति नवममग्निचयनेऽग्निविमोकस्य मतभेदेन व्यवस्थाधिकरणम् (सूत्राणि १७-२०)

**अथ दशममुपसत्कालस्य सुब्रह्मण्याह्वानस्य तन्त्रताधिकरणम् (सूत्रं २१)**

**सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ॥ २१ ॥**



प्रासङ्गिकी सङ्गतिः । ज्योतिष्टोमे अग्न्युपसत्कालीनं, सुब्रह्मण्याह्वानमहर्गणेषु चोदकप्राप्तमह्नामुपकारकं । तत्किं प्रत्यहमुपकारार्थतयाऽऽवर्तनीयम्, उत तन्त्रमिति सन्देहे, प्रधानाहर्भेदाद्भेदेन कार्यमिति **प्राप्ते सिद्धान्तः**, सुत्याकालीनत्वाभावेनोपसत्कालीनत्वात्सर्वार्थं सकृदनुष्ठितं सर्वोपकारकमेवेति तन्त्रमिति । तदाह सूत्रे, **सुब्रह्मण्या तु** सुब्रह्मण्याह्वानं तु **अन्यकालत्वात्** तन्त्रं दीक्षावद्भिन्नकालत्वाद्दीक्षा यथा सर्वोपकारिणी तथेति ।

इति दशममुपसत्कालस्य सुब्रह्मण्याह्वानस्य तन्त्रताधिकरणम् (सूत्रं २१)

**अथैकादशं सुत्याकालीनसुब्रह्मण्याह्वानस्य भेदेनानुष्ठानाधिकरणम् (सूत्राणिर २२-३२)**

**तत्काला त्वावर्तेत प्रयोगतो विशेषसम्बन्धात् ॥ २२ ॥**

**(अप्रयोगाङ्गमिति चेत् ॥ २३ ॥ स्यात्प्रयोगनिर्देशात्कर्तृभेदवत् ॥ २४ ॥ तद्भूतस्थानादग्निवदिति चेत् तदपवर्गस्तदर्थत्वात् ॥ २५ ॥ अग्निवदिति चेत् ॥ २६ ॥ न प्रयोगसाधारण्यात् ॥ २७ ॥ लिङ्गदर्शनाच्च ॥ २८ ॥ तद्धि तथेति चेत् ॥ २९ ॥ नाशिष्टत्वादितरन्यायत्वाच्च ॥ ३० ॥ विध्येकत्वादिति चेत् ॥ ३१ ॥ न कृत्स्नस्य पुनः प्रयोगात्प्रधानवत् ॥ ३२ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । द्वादशाहाद्यहर्गणेषु सुत्याकलीनमाह्वानं तन्त्रम्, आवापो वेति सन्देहे, प्रथमसुत्याकालीनसुब्रह्मण्याह्वानकृतस्य देवतासंस्कारस्य यावत्प्रयोगमनपवर्गात्प्रथमसुत्याकालीनमप्याह्वानं सर्वसुत्यानामुपकारकम् । न च सन्निधिविशेषात्तस्यैवोपकारकमिति शङ्क्यम् । सत्यपि सन्निधिविशेषे एकादशिन्यां यत्र देशे दृष्टिगोचरो यूपस्तत्र देशे क्रियमाणाहुतिरेकयूपसन्निधौ सत्यपि सर्वयूपार्था तथोपपत्तेः । अतः पूर्वत्रैवैकसुत्याकालीनस्यापि तन्त्रतेति **प्राप्ते सिद्धान्तः**, यत्र हि देशे स्थितस्य यूपादृष्टिविषया भवन्ति, स एव यूपसन्निधिः । स च सर्वेषामविशिष्ट इति विशेषाग्रहणात्सन्तमपि कस्यचिदन्तिकदेशविशेषमनादृत्य यूपाहुतेस्सर्वार्थत्वं स्वीकृतम् । प्रकृते तु सर्वसुत्याकाले क्रियमाणस्याह्वानस्य तादर्थ्यमिति विशेषग्रहणान्न तन्त्रता । अतोऽहरन्तरे पुनः कर्तव्यमिति । तदाह **सूत्रे, तत्काला त्विति** । व्यक्तोऽर्थः ।

इत्येकादशं सुत्याकालीनसुब्रह्मण्याह्वानस्य भेदेनानुष्ठानाधिकरणम् (सूत्राणि २२-३२)

### अथ द्वादशं दर्शपूर्णमासयोर्देशादीनामनियमाधिकरणम् (सूत्रं ३३)

**लौकिकेषु तु यथाकामी संस्कारानर्थलोपात् ॥ ३३ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ''समे दर्शपूर्णमासाभ्यां यजेत'' इति देशः, 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः'' इति कर्तारः, स्रुगादिपात्राणि चेत्येते पदार्थाः प्रतिप्रयोगं भिद्यन्ते, उतानियता इति **सन्देहे**, यथा प्रतिसुत्याकालमाह्वानभेदस्तथा प्रतिप्रयोगमन्येऽन्ये देशादय उपादेयाः । निरिष्टिकोपादानशङ्किते कर्मान्तरे उपयुक्तस्य कर्मान्तरोपयोगितयोपादाने शिष्टाचारविरोधादिति **प्राप्ते सिद्धान्तः**, निरिष्टिकता हि वैदिककर्मान्तरोपयुक्तस्य कर्मान्तरानर्हता । न च सा सुत्यादौ चित्श्रूयते । किन्तु शिष्टाचारपरम्परया ज्ञेया । शिष्टाश्च बर्हिरादीन् परित्यजन्ति । न ऋत्विगादीन् । अतो न तेषु निरिष्टिकताशब्दित-कर्मान्तरानर्हतेति ते वाऽन्ये वेत्यनियम इति । तदाह सूत्रे, **लौकिकेषु** देशकर्त्रादिषु **यथाकामी** त एवान्ये वेत्यनियम इति यावत् । कुतः? **अनर्थलोपात्**, कार्यहानेरभावात् । अन्यैरपि कार्यनिर्वृत्तिसम्भवा-दित्यर्थः । अतो न नियम इति ।

इति द्वादशं दर्शपूर्णमासयोर्देशादीनामनियमाधिकरणम् (सूत्रं ३३)

### अथ त्रयोदशं पात्रतन्त्रतानियमाधिकरणम् (सूत्राणि ३४-४५)

**यज्ञायुधानि धार्येरन् प्रतिपत्तिविधानादृजीषवत् ॥ ३४ ॥**

**(यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात् ॥ ३४ ॥ मुख्य-साधारणं वा मरणस्यानियतत्वात् ॥ ३६ ॥ यो वायजनीयेऽहनि म्रियेत सोऽधि-कृतस्स्यादुपवेषवत् ॥ ३७ ॥ न शास्त्रलक्षणत्वात् ॥ ३८ ॥ उत्पत्तिर्वा प्रयोजक-त्वादाशिरवत् ॥ ३९ ॥ शब्दासामञ्जस्यमिति चेत् ॥ ४० ॥ तथाऽऽशिरे ॥ ४१ ॥ शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावथेहापूर्वार्थवद्भूतोपदेशः ॥ ४२ ॥ प्रकृत्यर्थत्वात्पौर्णमास्याः क्रियेरन् ॥ ४३ ॥ अग्न्याधेये वाऽविप्रतिषेधात्तानि धारयेन्मरणस्यानिमित्तत्वात् ॥ ४४ ॥ प्रतिपत्तिर्वा यथाऽन्येषाम् ॥ ४५ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । स्रुक्स्रुवादिपात्रेषु किं प्रतिप्रयोगमावापोऽथ तन्त्रमति **सन्देहे**, पूर्वत्र कर्त्रादिरिव पात्राण्यपि पूर्वप्रयोगोपयुक्तानि वा, अन्यानि वा? इत्यनियमः । संस्कारानर्थलोपात् संस्कारालोपादर्थालोपाच्चेति पृथक्सम्बन्धः । पूर्वतनपरिग्रहे सति पूर्वप्रयोगे कृतः संस्कारः पुनः



प्रयोगेन लुप्तः । कोऽर्थः? पूर्वप्रयोगे कर्तृषु कश्चन संस्कारः कृतः । पुनरुपादाने संस्कारो लुप्येतेति नोपादानम् । तादृशसंस्कारो नास्त्येवेति न तेषूपादातुं शक्यम् । त इवान्येपि नोपादेयाः । कुतः? अर्थलोपात् इति **प्राप्तम् । सिद्धान्तस्तु**, यदि हि प्रोक्षणादिसंस्कृतानामेव व्रीहीणामपूर्वजनकत्वमिव पूर्वप्रयोगसंस्कृतानामेव पात्राणामुत्तरेषु प्रयोगेषु कार्यजनकत्वमित्यत्र प्रमाणं भवेत्तदा व्रीह्यन्तराणीव पात्रान्तराणि संस्काराभावान्नोपाददीरन् । न त्वेवमस्ति । तथात्वे प्रथमप्रयोगस्य वैगुण्यापत्तेः । न चैवमप्युक्तानां पात्राणामनावश्यकत्वेन यजमानस्य दाहाद्युत्तरकर्मकाले प्रतिपत्तिश्रवणविरोध इति शङ्क्यम् । ''आहिताग्निमग्निभिर्दहन्ति यज्ञापात्रैश्च'' इत्यत्र यज्ञपात्रैरिति तृतीयया यजमानशरीरदाहे पात्राणां गुणभावश्रवणेन प्रतिपत्तेरश्रवणात् । प्रतिपाद्यत्वे द्वितीयाश्रवणापातात् । अतोऽनियम इति ।

अस्तु वा गुणभावः । तथापि मरणान्तान्येव पात्राणि धार्याणि । तेषां परित्यागे ह्युत्तर-प्रयोगात्पूर्वमेव दैवाद्यजमानस्य मृतौ पात्राणामभावाद्यजमानदेहदाहो विगुणस्स्यात् । अतोऽवश्य-धारितेषु तेषु तैरेवोत्तरप्रयोगसिद्धेर्न पुनर्नूतनसम्पादनमित्येवं धारणस्यामरणमवर्जनीयतया प्राप्तेः । न च दैवान्मध्ये मृतौ नूतनपात्रसम्पादनेनास्तु दाहः सगुण इति शङ्क्यम् । यज्ञानुपयुक्तत्वे तेषां यज्ञपात्रत्वा-भावेन ''यज्ञपात्रैः'' इत्युक्तेरनुपपत्तेरित्येवं पात्राणां गुणभावमभ्युपेत्य **मुख्यधारणं वा मरणस्या-नियतत्वादिति** सूत्रेणावान्तरसिद्धान्तं कृत्वा, प्रतिपत्तिरिति परमसिद्धान्तं करिष्यन् अन्तरा गर्भिणी-न्यायेन **प्रकृत्यर्थत्वात्पौर्णमास्यां ध्रियेरन्** इति सूत्रेण चिन्तान्तरं प्रवर्तितम् । आमरणमुक्तदिशा यज्ञपात्राणां धारणस्याऽवश्यकत्वे, तत्किं पात्रधारणं दर्शपूर्णमासप्रभृति कार्यं, उत पवमानेष्टिप्रभृतीति **सन्देहे**, दर्शपूर्णमासयोः सर्वप्रकृतित्वात्तत्रैव पात्राणामुपदेशात्ततः प्रभृतीति **प्राप्ते**, पवमानेष्टिप्रभृतीति **सिद्धान्तः** । अन्यथा दर्शपूर्णमासाभ्यां प्रागेव यजमानस्यापाये तस्य देहसंस्कारो विगुणस्स्यादिति ।

**परमसिद्धान्तस्तु**, ''आहिताग्निमग्निभिः'' इति दाहवाक्ये ''यज्ञपत्रैः'' इति तृतीयाश्रवणेऽपि, ''दक्षिणे पाणौ जुहूमासादयति'' इत्याद्यासादनवाक्येषु द्वितीयानिर्देशेन प्रतिपाद्यत्वावगमेनाऽऽ-सादनरूपप्रतिपत्तिबलादामरणं प्राथमिकानामेव पात्राणां धारणमिति पात्राणि तन्त्रमिति । तदाह सूत्रे, **यज्ञायुधानि** यावज्जीवं **धार्येरन्**, सोमऋजीषस्यावभृथ इव तेषां चरमकर्मणि **प्रतिपत्तिविधानादिति** ।

इति त्रयोदशं पात्रतन्त्रतानियमाधिकरणम् (सूत्राणि ३५-४५)

### अथ चतुर्दशं सर्वसोमनामुपरिष्टात्प्राजापत्यप्रचाराधिकरणम् (सूत्रणि ४६-५२)

**उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः ॥४६॥**

**(अङ्गविपर्यासो विना वचनादिति चेन्न ॥ ४७ ॥ उत्कर्षः संयोगात्कालमात्रमितरत्र ॥ ४८ ॥ प्रकृतिकालासत्तेः शस्त्रवतामिति चेत् ॥ ४९ ॥ न श्रुतिप्रतिषेधात् ॥ ५० ॥ विकारस्थान इति चेत् ॥ ५१ ॥ न चोदनापृथक्त्वात् ॥ ५२ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । वाजपेये प्राजापत्यपशून् प्रकृत्य श्रूयते ''उपरिष्टात्सोमानां प्राजापत्यैश्चरन्ति'' इति । तत्रायं प्रयोगक्रमः । तृतीयसवने प्रथमार्भवः पवमानः । ततो वैश्वदेवग्रहपर्यन्ताः शस्त्रवन्तस्सोमाः । ततः परमशस्त्रवत्सोमग्रहेषु प्रचीर्णेषु अग्निष्टोमसाम्न ऊर्ध्वमुक्थ्यषोडश्यादयस्सोमविकारा इति । तत्र ''उपरिष्टात्सोमानां प्राजापत्यैश्चरन्ति'' इत्यत्र किमार्भवपवमानकाले प्राजापत्यपशूनां प्रचारः, किं वा वैश्वदेवग्रहान्तानां शस्त्रवतां सोमग्रहाणामुपरिष्टात् प्रचारः, उताग्निष्टोमसाम्न ऊर्ध्वं तत्प्रचारः, अथ सर्वसोमानामुपरिष्टादिति चतुर्धा **सन्देहः** । **पूर्वपक्षस्तु,** आर्भवपवमानकाले प्राजापत्यपशूनां प्रचार **इत्याद्यः** । प्रकृतौ ''प्रातर्वपया प्रचरन्त्यङ्गैस्तृतीयसवने'' इति प्रचारविप्रकर्षेणेहापि चोदकेन तथैव प्रापणादार्भवकालस्यापि प्रातःसवनीयमाध्यन्दिनसवनीयसोमानामुपरितनत्वात् । एवञ्च पूर्वत्र पात्राणां देहान्ते प्रतिपादनेऽपि पशूनां न सर्वसोमान्ते प्रचार इति । **अयं पक्षो न युक्तः** । चोदकेनैवार्भवकालस्य प्राप्तत्वेन ''उपरिष्टात्सोमानां'' इति वचनस्य व्यर्थतापत्तेः । अतः प्राकृतकालप्रत्यासत्तिलाभाच्छस्त्रवत्सोमग्रहादुपरि तेषां प्रचार इति **द्वितीयः** । प्राकृतकालप्रत्यासत्तिमात्रेण चोदकानुग्रहायोगा**दयमपि पक्षो न युक्तः** । किन्तु अग्निष्टोमसाम्न ऊर्ध्वमुक्थ्यादिविकाराणां स्थाने प्रचारः । कुतः ? तद्धि आगन्तूनामुक्थ्यादिविकाराणां स्थानम् । प्राजापत्यपशवश्च विकारः । तथा च प्राजापत्यपशुप्रचारः अग्निष्टोमादूर्ध्वं भवितुमर्हतीति आगन्तुकप्रचारत्वादुक्थ्यादिप्रचारवदित्यानुमानादिति **तृतीयः** । **सिद्धान्तस्तु,** तद्धि सोमविकाराणां स्थानम् । न पशुविकाराणाम् । प्राजापत्यपशवश्च पशुविकारा इति न तत्साधनं युक्तम् । अनुमानं तु सोमविकारप्रचारत्वरूपोपाधिग्रस्तम् । अतस्सङ्कोचायोगात्सर्वसोमग्रहादुपरिष्टादेवैतेषां पशूनां प्रचार इति । तदाह **सूत्रे, ''उपरिष्टात्सोमानां''** इत्यविशेषश्रवणात्सर्वसोमान्त एव स्यात् । नार्भवकाले, तस्य **प्रकृतिकालत्वेनैव** चोदकेन प्राप्तत्वादिहा**वाच्यः प्रकृतिकाल** इति ।

**फलं तु पूर्वपक्षे,** आर्भवकालप्रचारे क्रतुपशूनां प्राजापत्यपशूनां चैककालप्रचारत्वान्मनोतायै हविषोर दीयमानस्यानुब्रूहीति मनोतासूक्तवाकानुवचनं तन्त्रम् । **सिद्धान्ते तु,** कालभेदादावर्तेतेति ।

इति चतुर्दशं सर्वसोमानामुपरिष्टात्प्राजापत्यप्रचाराधिकरणम् (सूत्राणि ४६-५२)



### अथ पञ्चदशं सवनीयपुरोडाशे देवतोत्कर्षाधिकरणम् (सूत्रे ५३-५४)

**उत्कर्षे सूक्तवाकस्य न सोमदेवतानामुत्कर्षः**
**पश्वनङ्गत्वाद्यथा निष्कर्षेऽनन्वयः ॥ ५३ ॥**
**(वाक्यसंयोगाद्वोत्कर्षस्समानतन्त्रत्वादर्थलोपादनन्वयः ॥ ५४ ॥)**

प्राजापत्यपशुप्रचारोत्कर्षप्रसङ्गात्सवनीयपुरोडाशदेवतानामप्युत्कर्षोऽत्रोच्यत इति **सङ्गतिः** । ज्योतिष्टोमे सवनीयपशावनुयाजानन्तरं 'भृज्यन्निन्द्राय हरिवते धानाः पूष एव ते करम्भम्' इत्यादिसूक्तवाकमन्त्रः पठितः । स चानुयाजेषु ''अग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति'' इत्युक्तेरग्निमारुतशस्त्रादूर्ध्वमुत्कृष्यमाणेषु तदाद्युत्कर्षन्यायेनोत्कृष्यते । तदुत्कर्षे तत्रत्यपुरोडाशदेवतावाचिपदानामप्युत्कर्षोऽस्त्युत नेति **सन्देहे,** पशुपुरोडाशस्य द्वादशे वक्ष्यमाणदिशा प्रासङ्गिकत्वेन **प्रासङ्गिकश्च नोत्कर्षेदिति** पञ्चमाद्यपादोक्तन्यायेन हरिवदादिपदानामनुत्कर्ष इति **प्राप्तम्** । तदाह **सूत्रे, सूक्तवाकस्य** भृज्यन्नित्यादिमन्त्रस्य **उत्कर्षे, तत्रत्यसवनीयदेवतापदानामनुत्कर्षः । तेषां पश्वनङ्गत्वात्** । पश्वङ्गमेव पश्वङ्गसूक्तवाकोत्कर्षेणोत्कृष्यते । **यथा** पौर्णमास्यां पौर्णमासीदेवतापदानां । **निष्कर्षेऽ**न्येषां सूक्तवाकपदानामनन्वय इति । **सिद्धान्तस्तु,** ''भृज्यन्'' इत्यादिसूक्तवाके पुरोडाशदेवतापदानामनुत्कर्षे भृज्यन्निन्द्राय हरिवते धानाः'' इत्येतावन्मात्रस्योत्कर्षे क्रियार्थपदान्वयाभावेन साकाङ्क्षत्वादनर्थकं वाक्यं स्यात् । यदा तु ''अग्निमद्य होतारमवृणीतायं स्तुन्वन्यजमानः'' इत्यस्यापि प्रयोगस्तदा ''भवते इन्द्राय धाना भृज्यन्सुताः स्तुन्वन्नयं यजयानः अद्याग्निं होतारमवृणीत'' इत्यर्थसमास्यसार्थकं स्यात् । तस्मात्तेषामप्युत्कर्ष इति । तदाह **सूत्रे, वाक्यसंयोगाद्वोत्कर्ष** इत्यादि । **फलं तु पूर्वपक्षे,** ''अग्निमद्य होतारमवृणीत'' इत्यादिपदानामावृत्तिः । **सिद्धान्ते तु** तन्त्रतेति ।

इति पञ्चदशं सवनीयपुरोडाशे देवतोत्कर्षाधिकरणम् (सूत्रे ५३-५४)

**इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-**
**श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते एकादशाध्यायस्य तृतीयः पादः**

अस्मिन् पादे अधिकरणानि १५ सूत्राणि ५४
आदितः अधिकरणानि ८२४ सूत्राणि २५३९

## अथैकादशाध्याये चतुर्थः पादः

पूर्वपादे वाचनिकदेशकालानामङ्गानां तन्त्रावापौ चिन्तितौ । अत्र पादेऽनुक्तदेशकालानां तौ चिन्त्येते इति पादभेदः पूर्वानन्तरता चेत्याहुः ।

### अथ प्रथमं राजसूये सौमापौष्णादिकेऽङ्गानां भेदेनानुष्ठानाधिकरणम् (सुत्राणि १-३)

**चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि ॥ १ ॥**

**(प्रतिदक्षिणं वा कर्तृसम्बन्धादिष्टिवदङ्गभूतत्वात्समुदायो हि तन्निर्वृत्त्या तदेकत्वादेकशब्दोपदेशस्स्यात् ॥ २ ॥ तथा चान्यार्थदर्शनम् ॥ ३ ॥)**

''आग्नावैष्णवमेकादशकपालं निर्वपति । वामनो दक्षिणा । सोमापौष्णं चरुं निर्वपति । श्यामो दक्षिणा'' इति राजसूये भिन्नभिन्नदक्षिणावन्ति कर्माणि श्रुतानि । तत्र किमङ्गानि तन्त्रम्, उताऽवर्तनीयानीति **सन्देहे,** नानाकर्मात्मकराजसूयकरणकप्रयोगापरपर्यायभावनाङ्गत्वेन सर्वदाऽनुपादीयमानवरणं देशकालादिवदविशेषाद्राजसूयावयवभूतानां फलभावनान्तर्गतानां सर्वकर्मणामपि भवतीति दक्षिणाभेदेऽपि वरणभेदाभावाद्देशकालफलभेदहीनानां दक्षिणाभदेऽपि न कर्तृणां भेद इति तन्त्रमङ्गानि । न चैकया दक्षिणयाऽऽतानां दक्षिणान्तरदानमदृष्टार्थं स्यादिति शङ्क्यम् । यथा कर्ममध्ये ''द्वादश प्रष्ठौहीर्ददाति'' इति श्रुतप्रष्ठौहीदानमुत्साहाधिक्यजनकत्वेन दृष्टार्थं तथोपपत्तेरिति **प्राप्तम् ।** तदाह **सूत्रकारः** ''राजसूयेन स्वाराज्यकामो यजेत'' इति **चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां कर्मणां सहप्रयोगात्तन्त्रमङ्गानि** स्युरिति । **सिद्धान्तस्तु,** ''द्वादश प्रष्ठौहीर्ददाति'' इति ''अयं द्वदशशतं ददाति'' इति वाक्ये प्रष्ठौहीनां दानमेव श्रूयते । न दक्षिणा । अत्र तु प्रत्येकं दक्षिणा श्रुता । सा च ''वामनदक्षिणयाऽनतेनाऽऽग्नावैष्णवं कार्यम् ।'' ''श्यामदक्षिणयाऽऽनतेन पौष्णश्चरुः कार्यः'' इति व्यवस्थया श्रुता । सा च दक्षिणाद्वयवतैकेनैवोभयोरनुष्ठाने बाध्यते । तस्माद्दक्षिणाभेदेनाऽनतिभेदात्तत्कृतस्य कर्तृरूपस्यापि भेदात्प्रतिदक्षिणमङ्गान्यावर्तेरन्निति ।

इति प्रथमं राजसूये सोमापौष्णादिकेऽङ्गानां भेदेनानुष्ठानाधिकरणम् (सूत्राणि १-३)

### अत द्वितीयं राजसूये वृतकर्तृतन्त्रताधिकरणम् (सूत्राणि ४-८)

**अनियमः स्यादिति चेत् ॥ ४ ॥**



**(नोपदिष्टत्वात् ॥ ५ ॥ लाघवातिपत्तिश्च ॥ ६ ॥ प्रयोजनैकत्वात् ॥ ७ ॥ विशेषार्था पुनःश्रुतिः ॥ ८ ॥)**

प्रासङ्गिकी **सङ्गतिः ।** राजसूये दक्षिणाभेदात्तत्कृताऽनतिविशिष्टेन रूपेण कर्तृणां भेद उक्तः । तत्र ये पूर्वं प्रवृत्तास्त एवाऽऽनतिभेदविशिष्टेन रूपेण भिन्नभिन्नास्सन्तः आसमाप्ति कुर्युः, उत तेऽपि वा, अन्येऽपि वेत्यनियम इति सन्देहे, यथा प्रयोगाङ्गयोर्देशकालयोर्भेदात्प्रयोगभेदस्तथा दक्षिणाभेदात् प्रयोगाङ्गभूतकर्तृभेदात्प्रयोगभेद इति तदङ्गभूतवरणस्यापि भिन्नत्वाद्यस्मिन् कर्मणि ये वरणभृतिभ्यामुपात्तास्तत्कर्मसमाप्तौ तेऽपि निवृत्तवरणसंस्काराः लौकिका भवन्ति । तत्र पुनः कर्मान्तरार्थं वरणसंस्कार आधातव्यः । तदाधाने चाविशेषात्ते वाऽन्ये वेत्यनियम इति **प्राप्तम् । तथा च सूत्रम्, अनियमः स्यादिति चेत्** इति । **सिद्धान्तस्तु,** लोके चिकीर्षा हि सामग्रीविषया भवति । सामग्री राजसूये च राजसूयशब्दिततत्तत्कर्मकरणकप्रयोगनामकफलभावनैव । तथा च तच्चिकीर्षायां क्रियमाणं वरणोपादानं देशादिवद्राजसूयावयवभूतसर्वकर्मणामपि भवतीति वरणभेदाभावान्न कर्तृणां भेद इत्युपक्रमवृता एवाऽऽन्तं कर्तार इति नियम इति । अत्र स्वाराज्यकामेन मया राजसूयः कार्यः । तत्र भवद्भिरार्त्विज्यं कार्यमिति यत् प्रयोगाद्बहिः क्रियमाणं लौकिकवरणं तदेवात्र **पूर्वपक्षे**ऽतन्त्रमित्युपेत्याऽनियमे शङ्किते तदेव तन्त्रमित्युक्त्वा **सिद्धान्ते** कर्त्तृनियम उक्तः । न तु तत्कर्मसु इष्टिपशुसोमाख्येषु चोदकप्राप्तं शास्त्रीयं वरणम् । तस्य प्रतिकर्म भिन्नत्वदिति ज्ञेयम् ।

इति द्वितीयं राजसूये वृतकर्तृतन्त्रताधिकरणम् (सूत्राणि ४-७)

### अथ तृतीयमवेष्टावङ्गानां भेदेनानुष्ठानाधिकरणम् (सूत्राणि ९-११)

**अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात् ॥ ९ ॥**

**(वचनात्कामसंयोगे ॥ १० ॥ ऋत्वर्थायामिति चेन्न वर्णसंयोगात् ॥ ११ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । राजसूये ''आग्नेयमष्टाकपालं निर्वपति । हिरण्यं दक्षिणा । **ऐन्द्रमेकादशकपालम् ।** ऋषभो दक्षणा । वैश्वदेवं चरुम् । पिशङ्गी प्रष्ठौही दक्षिणा । मैत्रावरुणीमामिक्षाम् । वशा दक्षिणा । बार्हस्पत्यं चरुम् । शितिपृष्ठो दक्षिणा'' इत्येवं पञ्चहविष्का अवेष्टिनामकेष्टिः श्रुता । सा च द्विरूपा । राजसूयमध्यगता स्वाराज्यफलका राजमात्रकर्तृका । तथाऽन्नाद्यफलका त्रिवर्णकर्तृका राजसूयप्रयोगाद्बहिःप्रयोगार्हा चेति । पञ्च हवींष्याम्नाया पश्चात् ''एतयाऽन्नाद्यकामं याजयेत्'' इति श्रवणात् । ''यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय'' इत्यादिश्रवणात् ।

विचारितं चैतद्द्वितीयाध्यायतृतीयपादे, **अवेष्टौ यज्ञसंयोगात्** इत्यत्र । एवञ्च यानि क्रतुमध्यगतानि पञ्च हवींषि, तानि किं समानतन्त्रणि, सकृदनुष्ठेयानीति यावत् । किं भिन्नकालप्रयोक्तव्यानीति **सन्देहे,** समानतन्त्राणीति **प्राप्तम्** । कुतः? बहिःप्रयोगे तावत् ''यदि ब्राह्मणो बार्हस्पत्यं मध्ये निधाय'' इति मध्यश्रुत्या समानतन्त्रभावो गम्यते । पञ्चानां हविषां युगपत्प्रयोग एव मध्य इत्युक्त्युपपत्तेः । तथा च राजसूयमध्यगतानामपि तदैकतन्त्र्यावश्यंभावात्क्रतुमध्ये दक्षिणाभेदयुक्ततया उत्पन्नानामेव हि पञ्चहविषां बहिःप्रयोगेऽन्नाद्यफलादौ विनियोगात् । क्रतुमध्ये दक्षिणाभेदाद्भिन्नतन्त्रत्वे बहिःप्रयोगेऽपि तथा स्यात् । तत्र च मध्ये निधानमयुक्तं स्यात् । अतो बहिःप्रयोगैकतन्त्र्येण क्रतुमध्यगतानां समानतन्त्रतामुपेत्य दक्षिणाभेदः सोम इव तत्प्रधानार्थतया नेयः । न तु प्रयोगाङ्गतया । येन तद्भेदात्प्रयोगभेदः स्यादिति । तथा च प्रधानहविषां तन्त्रत्वात्तदङ्गान्यपि पूर्वत्र लौकिकवरणवत्तन्त्राणीति । तदाह सूत्रे, **अवेष्टौ** बहिः प्रयोगे **मध्ये निधानलिङ्गदर्शनादैकतन्त्र्यं स्यादिति** । **सिद्धान्तस्तु,** एतानि पञ्च कर्माणि क्रतुमध्ये दक्षिणाभेदयुक्तान्येवोत्पन्नानि । दक्षिणा चोत्सर्गतः प्रयोगाङ्गम् । सोमे तु **दक्षिणा सोमस्य** इति वचनात्प्रधानार्थां दक्षिणा । न ह्यत्र तथा वचनमस्ति । अतः प्रयोगाङ्गमेव दक्षिणेति तद्भेदात्प्रयोगभेदः पञ्चकर्मणां क्रतावावश्यक इति प्रथममेव निर्णीयते । पश्चात्तु मध्ये निधानरूपलिङ्गबलात् ''एतयाऽन्नाद्यकामं याजयेत्'' इति प्रयोगवचनैक्याच्च प्रत्येकं तत्र दक्षिणाया अनन्वयात् प्राकृत्येव दक्षिणा प्रयोगाङ्गतया प्राप्नोतीति समानतन्त्रतेति नोभयोः प्रयोगयोरैकरूप्यमिति ।

इति तृतीयमवेष्टावङ्गानां भेदेनानुष्ठानाधिकरणम् (सूत्राणि ९-११)

### अथ चतुर्थं काम्यपवमानेष्टिहविषां भेदेनानुष्ठानाधिकरणम् (सूत्राणि १२-१५)

**पवमानहविष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥ १२ ॥**

**(लिङ्गदर्शनाच्च ॥ १३ ॥ वचनात्तु तन्त्रभेदस्स्यात् ॥ १४ ॥ सहत्वे नित्यानुवादस्स्यात् ॥ १५ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । आधानप्रकरणे पठ्यते ''अग्नये पवमानायाष्टाकपालं निर्वपत्यग्नये पावकायाऽग्नये शुचये'' इति हविस्त्रयम् । एतच्चाधानतुल्यतयाऽग्निनिष्पादकत्वान्नित्यम् । तथा ''यः कामयेतोत्तरं वसीयान् श्रेयान् स्यामिति तस्याग्नेये पवमानाय निरूप्याथ पावकाय शुचये चोत्तरे हविषी समानबर्हिषी निर्वपेत्'' इति वाक्ये उत्तरं वसीयानत्यन्तं वसुमान् स्यामिति कामयत इति श्रवणात्काम्यश्च । तत्र नित्यप्रयोगो हि ''अग्नये पवमानाय'' इत्यादिवाक्यत्रयेण पृथगुत्पन्नानां त्रयाणां



कर्मणां पृथक्पृथगेव प्रयोगस्यौचित्येन न समानतन्त्रता । अतः काम्यप्रयोगे चिन्ता । किं त्रयाणां प्रयोगस्तन्त्रम्, उत प्रथमस्योत्तरद्वयस्य च प्रयोगो भिन्नतन्त्र इति **सन्देहे,** अवेष्टेर्बहिः प्रयोगो नानातन्त्रोपि ''अग्नौ निरूप्याणि सह निरूप्याणि'' इति वचनात्तत्समानतन्त्र एव त्रयाणां हविषां काम्यप्रयोगः । न च ''यः कामयेत'' इति वचनात्प्रयोगभेदः शङ्क्यः । तस्य वाक्यस्य ''अग्नये पवमानाय'' इत्युत्पत्तिवाक्यप्राप्तहविषां फलसम्बन्धपरत्वेन प्रयोगभेदविधिपरत्वाभावात् । अन्यथा वाक्यभेदापत्तेः । अतस्समानतन्त्र इति प्राप्तम् । तदाह **सूत्रे, पवमानहविष्षु ऐकतन्त्र्यं,** निरूप्याणि इति **प्रयोगवचनस्यैकत्वादिति** । **सिद्धान्तस्तु,** ''यः कामयेत'' इति वाक्ये हि न हविषां फलसम्बन्ध विधिः । तेषामग्न्यर्थत्वात् । किन्तु प्रणयनमाश्रित्य गोदोहनं पश्वर्थमिव हवींष्याश्रित्य प्रयोगभेदरूपो गुणः फलाय विधीयते । एवं भेदेनानुष्ठाने वसुमत्तरत्वं भवतीति । अतो वसुमत्तरत्वं कामयमानः पूर्वं हविः पृथङ्निरूप्य, उत्तरे हविषी पश्चान्निरूप्ये इत्युत्तरे एव समानतन्त्रे । न तु त्रयमपीति ।

इति चतुर्थं काम्यपवमानेष्टिहविषां भेदेनानुष्ठानाधिकरणम् (सूत्राणि १२-१५)

### अथ पञ्चमं द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकस्य द्वादशाहताधिकरणम् (सूत्राणि १६-२४)

**द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् ॥ १६ ॥**

**(अह्नां वाऽश्रुतिभूतत्वात्तत्र साङ्गं क्रियेत यथा माध्यन्दिने ॥ १७ ॥ अपि वा फलकर्तृसम्बन्धात्सहप्रयोगः स्यादाग्नेयाग्नीषोमीयवत् ॥ १८ ॥ साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारः स्यात् ॥ १९ ॥ तदपेक्षञ्च द्वादशत्वम् ॥ २० ॥ दीक्षोपसदाञ्च सङ्ख्या पृथक् पृथक्प्रत्यक्षसंयोगात् ॥ २१ ॥ वसतीवरीपर्यन्तानि पूर्वाणि तन्त्रमन्यकालत्वादवभृथादीन्युत्तराणि दीक्षाविसर्गार्थत्वात् ॥ २२ ॥ तथा चान्यार्थदर्शनम् ॥ २३ ॥ चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् ॥ २४ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ''द्वादश दीक्षा द्वादशोपसदः'' इति श्रूयते । तत्र किमेकैकमहो द्वादशदीक्षाभिर्द्वादशोपसद्भिश्च युक्तं कृत्वा द्वादश पञ्चविंशतिरात्राः कार्याः, उतैकैकमहस्सद्य एकैकदीक्षोपसद्युक्तं कृत्वा द्वादश साद्यक्राः कार्याः, किं वा चतुरहे दीक्षाश्चतुरहे उपसदश्चतुरहे सुत्याः, यद्वा स्वस्वस्थान एव दीक्षोपसत्सुत्यानां विवृद्धिर्द्वादशस्वहस्सु दीक्षा द्वादशस्वहस्सूपसदः, ततो द्वादशस्वहस्सु सुत्याः इत्येवं षट्त्रिंशदहोभिः समाप्तिरिति चतुर्धा **सन्देहः** । **पूर्वपक्षस्तु,** द्वादशाहे एकैको

यागः प्रत्येकमङ्गान्याकाङ्क्षन् प्रकृतितो ज्योतिष्टोमात्तानि गृह्णातीति तद्वदेवैकैकमहः द्वादशदीक्षोपसद्युक्तमेव कार्यमिति द्वादश पञ्चविंशतिः कार्या। न च "द्वादशाहेन प्रजाकामं याजयेत्" इति श्रुतद्वादशत्वविरोध इति वाच्यम्। तस्य यज्ञसामानाधिकरण्येनोद्भिदादिवन्नामत्वादित्याद्यः। तदाह सूत्रे, **द्वादशाहे तत्प्रकृतित्वात्** ज्योतिष्टोमप्रकृतिकत्वात् **एकैकं कर्म** दीक्षोपसद्युक्तं **अपवृज्येत** समाप्येत। कर्मणां पृथक्त्वेन पृथगेव कथंभावग्राहित्वादिति। स्यादेवं द्वादशाहशब्दस्य नामत्वे गुणविधिरयम्। द्वादशभिरहोभिर्निर्वर्त्येन यागेनेति। तथा च पञ्चविंशतिरात्रत्वे तदयोगात्प्रागुक्तदिशा साद्याक्राः कार्या इति **द्वितीयः**। न चैवं दीक्षोपसत्सुत्यानां चोदकप्राप्तभिन्नकालत्वबाधः शङ्क्यः। प्रत्यक्षश्रुताहर्गतद्वादशसङ्ख्यानुरोधेन तद्बाधेऽप्यदोषादिति। **अयमपि पक्षो न युक्तः** "द्वादशाहेन प्रजाकामं" इत्येकस्मिन् फले चोदितानां प्रयोगवचनैक्यात्संहत्य कर्तव्यतया तन्त्रेणैव मुख्यकर्मकालान्यङ्गानि स्युरिति एकैकस्यैव द्वादशदीक्षाणां द्वादशोपसदां च तन्त्रेणैव कार्यत्वात्। तस्माद्द्वादशाहत्वस्य गुणविधित्वाद्द्वादशस्वहस्स्वेव सर्वं सम्पाद्यमिति द्वादशाहं चतुरहभेदेन त्रेधा विभज्य, आद्ये चतुरहे एकैकस्मिन्नहनीति तिस्रस्तिस्रो दीक्षाः, द्वितीये चतुरहे एकैकस्मिन्नहनि तिस्रस्तिस्र उपसदः, तृतीये चतुरहे तिस्तिस्तिस्रः सुत्या एकैकास्मिन्नहनीत्येवं कार्याः। तथा च दीक्षोपसत्सुत्यानां सर्वेषां द्वादशत्वं सम्पद्यत इति **तृतीयः**। **सिद्धान्तस्तु,** स्यादेवं, यदि द्वादशाहशब्दो गुणदिधिः स्यात्तदा त्वदुक्तरीत्या द्वादशस्वहस्सु समाप्तिस्स्यात्। न चैवम्। गुणसम्बन्धस्य फलसम्बधस्य च विधौ वाक्यभेदापत्तेः। अतो नामधेयमेवेदमिति न द्वादशाहस्वेव समाप्तिः। द्वादश दीक्षा इति विधानात्स्वस्थान एव विवृध्द्या द्वदशस्वहस्सु दीक्षास्तथा द्वादशस्वहस्सूपसदस्तन्त्रेण कृत्वा ततो द्वादशस्वहस्सु सुत्याः कार्या इति षट्त्रिंशताऽहोभिः समापनम्। एवञ्च "षट्त्रिंशदहो वा एष यद्द्वादशाहः" इति लिङ्गदर्शनमपि युक्तमिति।

इति पञ्चमं द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकस्य द्वादशाहताधिकरणम् (सूत्राणि १६-२४)

## अथ षष्ठं प्रधानैरपृथक्कालानामङ्गानां भेदेनानुष्ठानाधिकरणम् (सूत्राणि २५-२८)

**भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे न स्यात्तेषां प्रधानशब्दत्वात् ॥ २५ ॥**

**(तथा चान्यार्थदर्शनम् ॥ २६ ॥ श्वः सुत्यावचनं तद्वत् ॥ २७ ॥ पश्वतिरेकश्च ॥ २८ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः। द्वादशाहे सुत्याकालीनः सवनीयः पशुपुरोडाशाश्चेत्येवमाद्यङ्गानि द्वादशानां यागानां तन्त्रम्, उत प्रत्यहमावर्तेरन् इति **सन्देहे,** यथा पूर्वत्राकर्मकालीना दीक्षादयस्तन्त्र-



मित्युक्तं तथेह सुत्याकालीनपश्वाद्यङ्गान्यपि "द्वदशाहेन प्रजाकामं याजयेत्" इति प्रयोगचोदनैक्या-दक्षिणाभेदाभावाच्च प्रधानानां तन्त्रत्वात्तन्त्राणीति **प्राप्ते सिद्धान्तः,** प्रकृताविव द्वादशानां सुत्यानामेकैकस्मिन्नहन्येकैकस्या एव कर्तव्यत्वात् "षट्त्रिंशदहो वा एष यद्द्वादशाहः" इति लिङ्गदर्शनाच्च न प्रधानानां तन्त्रतेत्यकर्मकालानां दीक्षादीनां तन्त्रत्वेऽपि तत्तत्कर्मकालीनानां तत्तदर्थत्वेन विशेषग्रहणात्तदर्थतया पूर्वप्रयुक्तानां तदपवर्गेऽपवर्गनियमात्प्रधानान्तरार्थमन्यस्मिन्नहनि पुनः करणेन भाव्यमिति कर्मकालीनाङ्गानां तन्त्रतेति। तदाह सूत्रे, प्रयोगेन **तद्भेदात्** कालभेदात् **कर्मानुष्ठानभेदो** यतस्तस्मात्तत्कालीनानामप्यङ्गानां भेदः स्यात्। तेषामङ्गानां प्रधानशब्दत्वात् प्रधानविधिविधेयत्वादिति।

इति षष्ठं प्रधानैरपृथक्कालानामङ्गानां भेदेनानुष्ठानाधिकरणम् (सूत्राणि २५-२८)

## अथ सप्तममुपसत्काले सुब्रह्मण्याह्वानस्याविकारेण कर्तव्यताधिकरणम् (सू. २९-३१)

**सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत् ॥ २९ ॥**

**(अपि वेन्द्राभिधानत्वात्सकृत्स्यादुपलक्षणं कालस्य लक्षणार्थत्वात् ॥ ३० ॥ अविभागाच्च ॥ ३१ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः। प्रकृतावुपसत्कालीनं सुब्रह्मण्याह्वानं "चतुरहे सुत्यामागच्छ मघवन्निति ब्रूयात्" इति श्रूयमाणं चोदकेन द्वादशाहे प्राप्तम्। प्रकृतौ प्रथमोपसद्दिनापेक्षया चतुर्थमहस्सुत्याह इति चतुरहे इत्युक्तिः प्रकृतौ समवेतार्था। विकृतौ द्वादशाहे तु प्रथमोपसद्दिनमारभ्य सुत्याहस्त्रयोदशाहो भवति। तत्र किं चतुरहशब्दः ""त्रयोदशाहे सुत्यामागच्छ मघवन्," "चतुर्दशाहे सुत्यामागच्छ मघवन्" इत्येवंरूपेण पृथक्पृथक्सर्वेषां द्वादशानामह्नामुपलक्षणम् उताविकारेणैव प्रयोग इति **सन्देहे,** पूर्वत्र सवनीयपश्वादेरावृत्तिरिवात्राहश्शब्दस्यापि "त्रयोदशाहे" "चतुर्दशाहे" इति सर्वसुत्याहानामुपलक्षणतयाऽऽवृत्तिः कार्या। प्रकृतावहश्शब्दस्य सुत्याहोपलक्षणदर्शनात्। न चाहश्शब्दस्य सुत्याकालीनत्वेनागृह्यमाणविशेषतयाऽनभ्यासेनैव सर्वोपलक्षणं सिध्यतीति शङ्क्यम्। अहःपदमात्रस्यानुपलक्षणत्वेऽपि सङ्ख्यावरुद्धस्यैव लक्षकत्वात्तत्र च "त्रयोदशाहे सुत्यामागच्छ" इत्युक्ते चतुर्दशाहे सुब्रह्मण्याह्वानसम्बन्धो न स्यात्। अतस्सर्वसम्बन्धायोक्तरूपेणाभ्यासः कार्य इति **प्राप्तम्।** **तदाह सूत्रे, सुत्याविवृद्धौ** उपसत्कालीनायां **सुब्रह्मण्यायां सर्वेषां** सुत्यानामह्नां "त्रयोदशाहे चतुर्दशाहे" **इत्युपलक्षणं** कार्यम्। **प्रकृत्यन्वयात्** प्रकृताविव सर्वेषु सुत्याहस्सूपलक्षणीयत्वान्वयात्। न च सकृत्प्रकाशनेन संस्कृतानां पुनः प्रकाशनाख्यसंस्कारो व्यर्थ इति शङ्क्यम्। 'आग्नेयं कृष्णग्रीव-

मालभेत् । सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः'' इत्यत्राग्नेरेकत्वेपि यथा कर्मभेदादावाहन-भेदस्तद्वदिहापीति । **सिद्धान्तस्तु,** प्रकृताविन्द्रस्य सुत्यायामागमनप्रकाशनरूपसंस्कारमात्रमेव विवक्षितम् । चतुरहत्वन्त्वर्थप्राप्तमनूद्यते । उभयविवक्षायां ''सुत्यामागच्छ,'' ''चतुरहे आगच्छ'' इति वाक्यभेदापत्तेः । एवञ्च देवताया एकत्वात्सकृत्संत्कारेप्यवैगुण्यात्पुनः पुनस्संस्कारोऽनर्थक इत्युप-सत्काल एव ''चतुरहे सुत्यामागच्छ'' इत्येवाह्वानेपि चतुरहत्वस्याविवक्षितत्वात्सुत्याकारेण द्वादशाना मेकत्वादशेषसुत्याऽऽगमनं सिध्यतीत्यविकारेणैव **द्वादशाहे** तत्प्रकृतित्वादिति पूर्वोक्तदिशा तन्त्रेणोच्चारणमिति ।

इति सप्तममुपसत्काले सुब्रह्मण्याह्वानस्याविकारेण कर्तव्यताधिकरणम् (सूत्रे २९-३१)

## अथाष्टमं वाजपेये प्राजापत्यपशुगणे कुम्भ्यादीनां तन्त्रताधिकरणम् (सूत्राणि ३०)

**पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात्तन्त्रभावः स्यात् ॥ ३० ॥**

प्राजापत्यपशुगणे **कुम्भ्याः** सर्वपश्ववदानानां श्रपणे एकस्या एव प्रभुत्वात्सकृत्वात्तन्त्रभावः **समः स्यात् । शूलस्य च** सर्वपशुहृदयानां **प्रभुत्वाच्छक्तत्वात्तन्त्रभावः स्यात् । वपाश्रपण्याश्च** सर्ववपानां **प्रभुत्वात्तन्त्रभावः स्यात् ।** शूलस्य च सवर्पशुहृदयानां प्रभुत्वात्तन्त्रभावः स्यात् । वपाश्रपण्याश्च सर्ववपानां प्रभुत्वात्तन्त्रभावः स्यादिति सूत्रकृतोत्तरत्र भिन्नदैवत्ये तन्त्रभावादिविवक्षया एकदैवत्येषु पशुषु तन्त्रत्वमुक्तम् । नात्र पूर्वोत्तरपक्षावित्याहुः ।

इत्यष्टमं वाजपेये प्राजापत्यपशुगणे कुम्भ्यादीनां तन्त्रताधिकरणम् (सूत्रं ३०)

## अथ नवममेकादशिनेषु नानादैवत्येष्वेकजातीयपशुषु कुम्भ्यादीनां तन्त्रताधिकरणम् (सूत्राणि ३१-३७)

**भेदस्तु सन्देहाद्देवतान्तरे स्यात् ॥ ३१ ॥**

**(अर्थाद्वा लिङ्गकर्म स्यात् ॥ ३२ ॥ अयाज्यत्वाद्वसानां भेदः स्यात् स्वयाज्या-प्रदानत्वात् ॥ ३३ ॥ अपि वा प्रतिपत्तित्वात्तन्त्रं स्यात्स्वत्वस्याश्रुतिभूतत्वात् ॥ ३४ ॥ सकृदिति चेत् ॥ ३५ ॥ न कालभेदात् ॥ ३६ ॥ पक्तिभेदात्कुम्भीशूल-वपाश्रपणीनां भेदः स्यात् ॥ ३७ ॥)**



पूर्वन्यायेन शङ्कनात्सङ्गतिः । एकादशिनेषु नानादैवत्येष्वेकजातीयपशुषु किं प्रागुक्तकुम्भ्यादीनां भेदः, उत तन्त्रभाव इति **सन्देहे,** कुम्भ्या एकत्वे सर्वेषां पशूनामवयवानां सहश्रपणप्राप्त्या एकस्यै देवतायै किमवदेयमित्यज्ञानात्कदाचिदेकस्यै उपाकृतात्पशोरन्यस्यै देवतायै दानेऽपचारापातात् । अतः पूर्वत्रैकदैवत्येषु तन्त्रत्वेपि भिन्नदैवत्येषु भेद एवेति **पूर्वपक्षः** । तदाह **सूत्रे, देवतान्तरे** पशुगणे **सन्देहात्तत्सन्देहप्राप्तेः कुम्भ्या भेदः स्यादिति । सिद्धान्तस्तु,** तत्तद्देवताकपश्ववयवानां चिह्नकरणेन विवेकसम्भवान्न कुम्भीभेदः । सर्वपश्ववयवीयवसानां कुम्भैक्येनैकीभूतत्वेऽपि तत्तद्देवतायाज्यार्धर्चान्ते होमकरणेन प्रतिपाद्यत्वेऽपि न वैगुण्यदोष इति वसानां भेदार्थमपि न कुम्भीभेद इति ।

इति नवममेकादशिनेषु नानादैवत्येष्वेकाजातीयपशुषु कुम्भ्यादीनां तन्त्रताधिकरणम् (सूत्राणि ३१-३८)

## अथ दशमं एकादशिनेषु नानाजातीयेषु पशुषु कुम्भ्यादीनां भेदाधिकरणम् (सू.३८-३९)

**जात्यन्तरेषु भेदः स्यात्पक्तिवैषम्यात् ॥ ३८ ॥**

**(वृद्धिदर्शनाच्च ॥ ३९ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । नानाजातीयेषु ''आग्नेयः कृष्णग्रीवो मेषः'' ''सारस्वती मेषी'' इत्यादिपशुषु किं कुम्भी तन्त्रम्, उत **भिभा** इति **सन्देहे,** पूर्वन्यायेन कुम्भ्यैक्ये **प्राप्ते सिद्धान्तः, जात्यन्तरेषु कुम्भीभेदः स्यात् ।** कुतः? पक्तिवैषम्यात् । पक्तिः पाकः शीघ्रमविमांसपाकः । अजामांसपाको विलम्बितः । अत इति । **व्यक्तस्सूत्रार्थः । फलं तु** कुम्भीभेदेनानुष्ठानम् ।

इति दशममेकादशिनेषु नानाजातीयेषु पशुषु कुम्भ्यादीनां भेदाधिकरणम् (सूत्रे ३८-३९)

## अथैकादशमश्वप्रतिग्रहेष्टौ प्रतिपुरोडाशं कपालभेदाधिकरणम् (सूत्राणि ४०-४२)

**कपालानि च कुम्भीवत्तुल्यसङ्ख्यानाम् ॥ ४० ॥**

**(प्रतिधानं वा प्रकृतिवत् ॥ ४१ ॥ सर्वेषां चाऽभिप्रथनं स्यात् ॥ ४२ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । अश्वप्रतिग्रहेष्टौ श्रूयते ''यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणां-श्चतुष्कपालान्निर्वपेत्'' इति । इयं चेष्टिः प्रतिग्राहयितुर्दातुरिष्टिरित्युक्तं तार्तीयचतुर्थपादे । तथा च बहुपशुषु प्रतिग्राहितेषु बहवः पुरोडाशाः प्रयोज्याः । तत्र किं तन्त्रेण चत्वार्येव कपालानि स्युः, उत

प्रतिपरोडाशं चत्वारि चत्वरीति **सन्देहे,** भिन्नजातीयेषु कुम्भीभेदेऽपि प्रतिपुरोडाशं न कपालभेदस्स्यात्। दीर्घेष्वेव चतुर्षु कपालेषु सर्वपुरोडाशानां श्रपणसम्भवादिति प्राप्ते, **सिद्धान्तः,** "कपालेषु श्रपयति" इति हि श्रूयते। न कपालावयवेष्विति। कपालैक्ये हि सर्वेषां पुरोडाशानां कपालाववेष्वेव श्रपणात् "कपालेषु श्रपयति" इति श्रुतं कपालानां साधनत्वं बाध्येत। "यावत्कपालमभिप्रथयति" इति वचनेन प्रकृतितो यत्कपालप्रथनं प्राप्तम्, तन्त्रत्वे तदपि बाध्येत। तस्मात्प्रतिपुरोडाशं कपालभेदः। तदाह सूत्रे, **तुल्यसङ्ख्यानां पुरोडाशानां कपालानि कुम्भीवद्भिद्येरन्निति।**

इत्येकादशमश्वप्रतिग्रहेष्टौ प्रतिपुरोडाशं कपालभेदाधिकरणम् (सूत्रणि ४०-४२)

### अथ द्वादशमवघातार्थमन्त्राणां प्रतिप्रहारं तन्त्रताधिकरणम् (सूत्रे ४३-४४)

**एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वम् ॥ ४३ ॥**

**(तस्मिन्मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्यासकृत्प्रयोगः स्यात् ॥ ४४ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः। दर्शपूर्णमासयोरवघातमन्त्रः "अव रक्षो दिवस्सपत्नं वध्यासमित्यवहन्ति" इति श्रूयते। स किं प्रतिप्रहारमावर्तनीयः, उत सर्वादौ सकृदेवेति **सन्देहे,** पूर्वत्र कपालवदवहननमन्त्रोऽपि प्रतिप्रहारं भेदेन स्यात्। अवघाताङ्गभूतस्य मन्त्रस्यावहन्तिशब्दवाच्यप्रधानप्रहरणावृत्तावङ्गावृत्त्यवश्यंभावादिति **प्राप्ते, सिद्धान्तः,** यद्यवहन्तीति धात्वर्थाङ्गमन्त्रः स्यात्तदा धात्वर्थप्रहरणावृत्तावावर्तेत। न चैवम्। किन्तु सप्तमाद्यनयेनावघातकरणिकायास्तण्डुलभावनाया एवाङ्गभूतो मन्त्रस्तण्डुलभावनाकरणस्यैवानुग्राहकः। तत्करणं च साभ्यास एव प्रहारः। न प्रत्येकम्। सामग्र्या एव करणत्वात्। अतोऽत्र करणीभूतावघातसङ्घातस्य तण्डुलनिर्वृत्तिफलकस्यावृत्त्यभावान्न मन्त्रप्रयोगस्याप्यवृत्तिरिति सकृदेव प्रयोग इति। तदाह **सूत्रे, एकस्य** व्रीह्यादिद्रव्यस्य **संस्काराणां** अवहननक्रियाणा**मेककर्मत्वं** एकतण्डुलनिर्वृत्तिरूपैकपदार्थत्वं, तण्डुलनिष्पत्तिपर्यन्तमेकपदार्थत्वमिति यावत्। पञ्चमस्य द्वितीयपादे **नानाबीजेष्वेकमुलूखलं विभवात्** इत्यत्र **व्याख्यातम्।** अतो यत्र कार्यस्य नानात्वं, तत्राग्नौ "लोकं पृणाया" इव मन्त्रस्यावृत्तावपि तस्मिन्नवघाते मन्त्रकार्यभेदाभावेन सकृत्प्रयोगः स्यादिति। **फलं तु,** मन्त्रस्य सर्वप्रहरणादौ सकृदनुष्ठानम्।

इति द्वादशमवघातार्थमन्त्राणां प्रतिहारं तन्त्रताधिकरणम् (सूत्रे ४३-४४)



### अथ त्रयोदशं नानाबीजेष्टौ प्रतिप्रहारं मन्त्रभेदाधिकरणम् (सूत्रं ४५)

**द्रव्यान्तरे कृतार्थत्वात्तस्य पुनः प्रयोगान्मन्त्रस्य च तद्गुणत्वात्पुनः प्रयोगः स्यात्तदर्थेन विधानात् ॥ ४५ ॥**

पूर्वन्यायेन शङ्कनातत् सङ्गतिः। राजसूये श्रुतासु "अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरुम्" इत्यादिनाना नाबीजेष्टिषु सर्वेषां नानाबीजानामवघातमन्त्रस्तन्त्रं, उत भेदेन वक्तव्य इति **सन्देहे,** सर्वादौ प्रयुज्यमानो मन्त्रः सर्वावघातचिकीर्षया प्रयुज्यमानत्वात्तथा "अवहन्ति" पदार्थानुसमयस्य **नानाबीजेष्वेकमुलूखलमिति** पञ्चमद्वितीयपादीयाधिकरणेऽभिधानेनादौ कृताया अवघातस्मृतेर्यावत्सर्वबीजावघातसम्पत्त्यवस्थानाच्च पूर्वत्रेव सकृदेव प्रयोज्य इति **प्राप्ते सिद्धान्तः,** यदि सर्वावघातचिकीर्षया क्रियेत, स्यात्तदा तन्त्रम्। न चैवम्। किन्तु प्रतिबीजं चोदकतोऽवघातप्राप्तौ सन्निपातितया तन्मन्त्रोऽपि प्रतिबीजमतिदेशतो भवतीति यस्मिन् बीजावघाते चिकीर्षिते मन्त्रः पयुज्यते स मन्त्रस्तस्यैव संस्कारक इति विशेषग्रहात्प्रतिबीजमावर्तेत मन्त्र इति। तदाह **सूत्रे,** सकृत्प्रयुक्तस्य **मन्त्रस्य द्रव्यान्तरे** बीजान्तरे **कृतार्थत्वात्तस्या**वघातस्य **पुनर्द्रव्यान्तरे प्रयोगे** मन्त्रस्यापि **पुनः प्रयोगः स्यात्।** तस्य मन्त्रस्य **तद्गुणत्वात्** अवघातगुणत्वात्। तद्गुणत्वं च **तदर्थत्वेन विधानादिति।**

इति त्रयोदशं नानाबीजेष्टौ प्रतिप्रहारं मन्त्रभेदाधिकरणम् (सूत्रं ४५)

### अथ चतुर्दशं प्रतिनिर्वापादिषु मन्त्रावृत्त्यधिकरणम् (सूत्रे ४६-४७)

**निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत्प्रयोजनैकत्वात् ॥ ४६ ॥**

**(द्रव्यान्तरवद्वा स्यात्तत्संस्कारात् ॥ ४७)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः। दर्शपूर्णमासयोः "चतुरो मुष्टीन्निर्वपति" "अयुग्वा युग्वा मुष्टीर्लुनाति" अयुजो युजो मुष्टीनित्यर्थः। तथा "त्रिधातु वा पञ्चधातु वा वेदिं स्तृणाति" इति। त्रिधातुभिस्त्रिभिर्दर्भमुष्टिभिः पञ्चधातुभिः पञ्चभिर्मुष्टिभिर्वा स्तृणातीत्यर्थः। तथा "चतुर्जुह्वां गृह्णाति" इति निर्वपनलवनस्तरणाज्यग्रहणानि श्रुतानि। तेषां च "देवस्य त्वा सवितुः" इति, "बर्हिर्देवसदनं दामि" इति, "ऊर्णा म्रदसं त्वा स्तृणामि" इति "शुक्रं त्वा शुक्रायां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि" इति क्रमात् मन्त्राः श्रुताः। तत्र किमेते मन्त्राः सकृत्प्रयोज्याः, उत प्रतिमुष्टि प्रतिधातु

प्रत्याज्यं ग्रहणं भेदेन प्रयोज्या इति **सन्देहे**, ''व्रीहीनवहन्ति'' इत्यत्र प्रहरणानामनेकत्वेऽपि चतुर्मुष्टिनिर्वापादेः **मुष्टिकपालावदानेत्यादिसूत्रे** पञ्चमद्वितीयपादोक्तन्यायेनैकपदार्थत्वान्नानाबीजेष्ववहननमन्त्रस्य तन्त्रत्वेऽपि मुष्टिनिर्वापादौ सर्वारम्भे सकृत्प्रयोज्या मन्त्रा इति **प्राप्तम्**। तदाह **सूत्रे, निर्वपणादिषु** सकृत्प्रयोगस्स्यात् । **प्रयोजनैकत्वात्** । यावदपेक्षितव्रीह्युपादानबर्हिरुपादानाज्योपादानरूपस्य मुष्टिलवनाज्यग्रहणानां क्रमात्प्रयोजनस्यैकत्वादास्तरणप्रयोजनस्य वेद्याच्छादनरूपस्यैकत्वात् **एकद्रव्यवत् एकद्रव्ये संस्काराणामित्य**त्रोक्तदिशा व्रीह्यवघाताङ्गमन्त्रवदिति । **सिद्धान्तस्तु**, ''व्रीहीनवहान्ति'' इत्यत्रावहतानामेव व्रीहीणां संस्कार्यत्वेन संस्कार्यभेदाभावान्न कार्यभेद इति सर्वादौ सकृत्प्रयुक्तेनैव मन्त्रेण कार्यसिद्धेर्युक्तात्र मन्त्रस्यानावृत्तिः । प्रकृते तु चतुर्मुष्टिनिर्वापादीनामेकपदार्थत्वेऽपि प्रतिमुष्टि अन्येऽन्ये व्रीहयो, अन्येऽन्ये दर्भाः, प्रतिग्रहणमन्यदन्यदेवाज्यमिति संस्कार्यभेदात्तत्संस्काररूपं कार्यं भिद्यते । स च संस्कारो मन्त्रयुक्तनिर्वापादिना जन्यो न केवलनिर्वापादिना । अतो यस्मिन्नेव निर्वापादौ मन्त्रः प्रयुज्यते तत्रैव संस्कारः । अन्यत्र तु लुप्यत इति प्रतिनिर्वापादिकं मन्त्रा आवर्तेरन्निति ।

इति चतुर्दशं प्रतिनिर्वापादि मन्त्रावृत्त्यधिकरणम् (सूत्रे ४६-४७)

## अथ पञ्चदशं वेदिप्रोक्षणे प्रत्यावृत्ति मन्त्रतन्त्रताधिकरणम् (सूत्रे ४८-४९)

**वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् ॥ ४८ ॥**

**(एकस्य वा गुणविधिर्द्रव्यैकत्वात्तस्मात्सकृत्प्रयोगः स्यात् ॥ ४९ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोः श्रूयते ''वेदिरसि बर्हिषे त्वेति त्रिर्वेदिं प्रोक्षति'' इति । तत्र किं प्रतिप्रोक्षणं मन्त्रस्यावृत्तिः, उत सकृदेवादौ प्रयोग इति **सन्देहे**, ''व्रीहीनवहन्ति'' इत्यत्रावहननस्येव प्रोक्षणस्य वेद्या न दृष्टं प्रयोजनमिति येन दृष्टकार्यानुरोधेनावहननस्येव साभ्यासस्य प्रोक्षणरूपधात्वर्थस्यैकं कार्यं स्यात् । किन्त्वदृष्टार्था प्रोक्षणकरणिका वेदिगतसंस्कारभाव्यकभावनैवात्र विधीयते । सा च त्रिरिति सङ्ख्याभेदाद्भिद्यते । तद्भेदाच्च तत्कार्यसंस्कारस्यापि भेदात्तद्धेतुप्रोक्षणार्थमन्त्रस्यापि निर्वपणादिमन्त्रस्येवावृत्तिः । प्रतिप्रधानं गुणावृत्तिरिति न्यायादिति त्रिरिति मन्त्रे त्रित्वसम्बन्धस्य स्पष्टमवगमाच्चेति **प्राप्तम्**। तदाह सूत्रे, **वेद्याः प्रोक्षणे कार्ये मन्त्रस्य त्रिरभ्यासः** कार्यः । प्रोक्षणरूप**कर्मणः** पुनः पुनः **प्रयोगा**दिति । **सिद्धान्तस्तु**, त्रिरिति न मन्त्राणामन्वयः । त्रित्वस्य मन्त्रस्य च द्वयोरपि गुणत्वेन **गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्** इति तार्तीयाद्यपादोक्तन्यायेनान्योन्यमनन्वयात् । किन्तु द्वयोः क्रिययैवान्वयः ''त्रिः प्रोक्षति'' इत्यनेन मन्त्रेण इत्येवं त्रिरिति



क्रियाभ्यास एव । अतोऽत्र त्रिरभ्यासगुणकमंत्रैक्यान्न मन्त्रावृत्तिरिति क्रियावृत्तिरेवोच्यते । न भेदः सङ्ख्यायाः । क्रियाभ्यासावृत्तिगणने ''कृत्वसुचः'' इत्यधिकारे ''द्वित्रिचतुर्भ्यः सुच्'' इति त्रिशब्दात्क्रियावृत्त्यर्थस्य सुचो विधानात् । न चैवं मन्त्रस्याभ्यासगुणस्य च विधौ वाक्यभेदः । उभयविशिष्टक्रियाविधाववाक्यभेदात् । तस्मादभ्यासगुणकप्रोक्षणकरणकभावनाया एकत्वात्तत्कार्यस्यादृष्टस्याप्येकत्वेन तत्प्रयुक्तो मन्त्रोऽपि सकृदेव प्रयोज्य इति ।

इति पञ्चदशं वेदिप्रोक्षणे प्रत्यावृत्ति मन्त्रतन्त्रताधिकरणम् (सूत्रे ४८-४९)

## अथ षोडशं प्रत्यङ्गं कण्डूयने मन्त्रतन्त्रताधिकरणम् (सूत्रे ५०-५१)

**कण्डूयने प्रत्यङ्गं कर्मभेदात्स्यात् ॥ ५० ॥**

**(अपि वा चोदनैककालमैककर्म्यं स्यात् ॥ ५१ ॥)**

पूर्वन्यायेन शङ्कनासङ्गतिः, ज्योतिष्टोमे ''कृष्णविषाणया कण्डूयते'' इत्यत्र ''कृष्यै त्वा सुसस्यायै'' इति श्रुतो मन्त्रः पाण्याद्यनेकाङ्गेषु युगपत्कण्डूत्युत्पत्तौ प्रत्यङ्गं कण्डूयनार्थमावर्तते, किं वा तन्त्रमिति **सन्देहे**, कण्डूयनकर्मणाऽपनेयदुःखस्यान्यान्यत्वात्तदपनयनरूपकार्यस्यापि भिन्नभिन्नत्वात्कण्डूयनसंस्कार्याङ्गानां भिन्नत्वाच्च प्रत्यङ्गं कण्डूयनमन्त्रस्यावृत्तिः पूर्वत्र प्रोक्षणमन्त्रस्येवेति **प्राप्तम्**। तदाह सूत्रे, **कण्डूयने** क्रियमाणे **प्रत्यङ्गं** मन्त्रः **स्यात्**। कुतः? **कर्मभेदात्** कण्डूयनक्रियाभेदादिति । **सिद्धान्तस्तु**, दुःखानां भेदेऽपि तदपनयनं न स्वरूपेण चिकीर्षितम् । नाप्यङ्गानां संस्कार्यत्वेन । येन भेदेन स्यात् । किन्तु कण्डूतिकृतदुःखे निवृत्ते सुखं कर्म करिष्यामीति कर्मोपयोगितया । तथा च यत्किञ्चिद्दुःखेऽपनीतेपि दुःखान्तरे सति न सुखं कर्मकरणमिति यावता दुःखेनापनीतेनात्मा निर्दुःखो भवति, तावत्सर्वमपनेतुमभिसन्धाय कण्डूयनमारभमाणेन प्रयुक्तो मन्त्रोऽगृह्यमाणविशेषत्वात्सर्वार्थो भवतीति सकृदेव प्रयोज्य इति ।

इति षोडशं प्रत्यङ्गं कण्डूयने मन्त्रतन्त्रताधिकरणम् (सूत्रे ५०-५१)

## अथ सप्तदशं स्वप्ननदीतरणादिमन्त्रतन्त्रताधिकरणम् (सूत्रं ५२)

**स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ ५२ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । दीक्षितस्य स्वप्नादिषु मन्त्राः श्रूयन्ते । ''त्वमग्ने व्रतपा असि'' इति

स्वप्नार्थो मन्त्रः । ''देवीरापो आपान्नपात्'' इति नदीतरणमन्त्रः । ''उन्दतीर्बलं धत्ते'' इत्याभिवृष्टस्य मन्त्रः । ''अबद्धं मनो दरिद्रं चक्षुः'' इत्यमेध्यदर्शनमन्त्रः । तत्र दीक्षितो रात्रावुद्बुध्योद्बुध्य स्वपिति बहुस्रोतसं नदीं तरति, बहुवृष्ट्या अभिवृष्येत, युगपदनेकान्यमेध्यानि पश्यति तदा क्रमादुक्तमन्त्राणामावृत्तिः, उत सकृत्प्रयोग इति **सन्देहे,** निमित्तभूतानां स्वप्नादीनामावृत्तौ तदर्थमन्त्रणामपि पूर्वत्रेव यावद्दुःखनिवृत्ति कण्डूयनस्येवावृत्तिरिति **प्राप्तम्** । तदाह सूत्रे, **स्वप्नादिषु** कण्डूयन इव मन्त्रावृत्तिरिति । **सिद्धान्तस्तु,** प्रभातपर्यन्तं निद्रामुद्दिश्य मन्त्रं प्रयुङ्क्ते । तत्र यादृच्छिकेऽवान्तरप्रबोधे सत्यपि न मन्त्रस्य पुनः प्रयोगः । तथा स्रोतोभेदे सत्यपि नद्यैक्यात्तत्तरणमप्येकमिति तन्मन्त्रोऽपि सकृदेव प्रयोज्यः । तथाऽभिवर्षणेऽपि यावत्येका वृष्टिरुपस्थिता तामुद्दिश्य मन्त्रः प्रयुक्त इति धाराभेदेऽपि न तन्मन्त्रावृत्तिः । अनेकामेध्यदर्शनेऽपि कालभेदाभावात्तन्मन्त्रोऽपि सकृदेवेति ।

इति सप्तदशं स्वप्ननदीतरणादिमन्त्रतन्त्रताधिकरणम् (सूत्रं ५२)

## अथाष्टादशं दीक्षितस्य प्रयाणे मन्त्रतन्त्रताधिकरणम् (सूत्रं ५३)

**प्रयाणे त्वार्थनिर्वृत्तेः ॥ ५३ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''भृतिं वनुते'' इत्युक्तभृतिवननार्थं दीक्षितस्य प्रयाणे प्रस्तुते ''भद्रादभिश्रेयः प्रेहि'' इति श्रुतो मन्त्रः पुनः पुनर्विश्रम्य विश्रम्य प्रस्थाने सत्यावर्तनीयः, अथ सकृदेवादौ प्रयोज्य इति **सन्देहे,** प्रयाणे ह्यादावेव मध्ये विश्रान्तेर्निश्चयाद्विश्रमात्प्राग्यत्प्रयाणं तदर्थमेवादावुच्चरितो मन्त्र इति विशेषग्रहणात्स्वप्नादौ मन्त्राणामावृत्तावपि विश्रम्य विश्रम्य पुनर्गमने मन्त्रः पुनः पुनरुच्चार्य इति **प्राप्ते सिद्धान्तः,** भृतिवननार्थप्रयाणस्यायं मन्त्रोऽङ्गमिति भृतिवननरूपकार्यस्यैक्यात्तदर्थप्रयाणमपि पुनः प्रवेशपर्यन्तमेकमेवेत्यवहननवदवान्तरभेदेऽपि सकृदेवादौ प्रयोग इति । तदाह **सूत्रे, प्रयाणे तु आर्थनिर्वृत्तेः** प्रयोजननिष्पत्तिपर्यन्तं प्रयाणस्यैकत्वात्तदर्थोऽयं मन्त्रः सकृदिति ।

इत्यष्टादशं दीक्षितस्य प्रयाणे मन्त्रतन्त्रताधिकरणम् (सूत्रं ५३)

## अथैकोनविंशमुपरवमन्त्रभेदाधिकरणम् (सूत्रे ५४-५५)

**उपरवमन्त्रस्तन्त्रं स्याल्लोकवद्बहुवचनात् ॥ ५४ ॥**



**(न सन्निपातित्वादसन्निपातिकर्मणां विशेषाग्रहणे कालैकत्वात्सकृद्वचनम् ॥ ५५ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ज्योतिष्टोमे उपरवशब्दिताश्चत्वारो गर्ताः । तेषां खननार्थमन्त्रः ''रक्षोहणो वलगहनो वैष्णवान् खनामि'' इति श्रुतः । स किं तन्त्रम्, उत प्रत्युपरवं भिद्यत इति **सन्देहे,** वैष्णवानिति बहुवचनान्तेन चतुर्णामुपरवाणामुक्त्या सकृन्मन्त्रोक्त्याऽपि चतुर्णां प्रकाशनसम्भवात्प्रयाणमन्त्रवत्खननमन्त्रोऽपि सकृदेवादौ प्रयोज्य इति **प्राप्तम्** । तदाह सूत्रे, **उपरवमन्त्रस्तन्त्रं स्यात्** । कुतः ? **लोकवत्** बहुवचनान्तेन सर्वेषां युगपदभिधानादिति । **सिद्धान्तस्तु,** चत्वारो गर्ताः क्रमेण खन्यन्ते न युगपत् । एवञ्च भिन्नकालत्वात् खेयभेदाच्च खननक्रिया भिद्यन्ते । अयं च मन्त्रस्सन्निपाती । तदन्त एव कर्मणस्सन्निपातात् । अतो यस्य खननस्योपक्रमे पठितस्तस्यैवोपकारकः । नान्यस्य । बहुवचनस्य च पूजार्थत्वेन ''अदितिः पाशान्'' इत्यत्रेव कर्मकारकमात्रस्य विवक्षितत्वेन बहुत्वस्याविवक्षितत्वात्प्रत्युपरवं भेदेनोच्चार्यो मन्त्र इति ।

इत्येकोनविंशमुपरवमन्त्रभेदाधिकरणम् (सूत्रे ५४-५५)

## अथ विंशं हविष्कृदादिमन्त्रभेदाधिकरणम् (सूत्राणि ५६-५८)

**हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्याऽवृत्तिः कालभेदात्स्यात् ॥ ५६ ॥**

**(अध्रिगोश्च विपर्यासात् ॥ ५७ ॥ करिष्यद्वचनात् ॥ ५८ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ज्योतिष्टोमे प्रतिसवनं सवनीयाः पुरोडाशाः । तेषु चोदकप्राप्तः ''हविष्कृदेहि'' इति मन्त्रः । स किं तन्त्रम्, उत प्रतिपुरोडाशमावर्तनीय इति **सन्देहः** । तथा वाजपेये प्राजापत्यान् क्रतुपशूंश्च सहोपक्रम्य प्राजापत्यान् पशून् पर्यग्निकृतानुत्सृज्य माध्यन्दिनसवने ब्रह्मसाम्न्यालभन्ते । क्रतुपशूंश्च प्रातस्सवने आलभन्ते । तत्र क्रतुपश्वालम्भकालीनः ''दैव्याश्शमितार'' इत्यध्रिगुप्रैषमन्त्रस्तन्त्रम्, उत प्राजापत्यार्थे ब्रह्मसामकाले पुनर्वक्तव्य इति **सन्देहः** । तथा ''आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवम्'' इत्युक्तकृष्णग्रीवपश्वोः सहोपक्रान्तयोः भेदेनावदाने कार्ये ''अग्ने नय सुपथा राये'' इत्यनुवाक्यामन्त्रः प्रदाने कार्ये ''त्वंह्यग्ने प्रथमो मनोता'' इति मनोतामन्त्रश्च तन्त्रम्, उत भेदेनोच्चार्यः ? इति **सन्देहः** । **पूर्वपक्षस्तु,** यथा प्रयाजादीनामसन्निपातित्वात्प्रयोगापरपर्यायभावनाविधायकवचनेन कथंभावाकाङ्क्षायां युगपद्ग्रहणात्तन्त्रता, तथाऽत्रापि हविष्कृदाह्वानादिसर्वमन्त्राणामसन्निपातित्वाप्रयोगवचनबलाच्च तन्त्रत्वमिति । **सिद्धान्तस्तु,** पुरोडाशा-

दीनां कालभेदान्मन्त्राणामप्यावृत्तिरेव । तत्र तावत्सवनत्रयगतपुरोडाशानां कालभेदः स्पष्टः । तथा क्रतुपशुप्राजापत्यपशूनामपि । द्वयोः कृष्णग्रीवयोश्च मध्ये सोम्यबभ्रुपश्वनुष्ठानात्कालभेद इति ज्ञेयम् । प्रयाजादिजन्यापूर्वस्य कालन्तरपर्यन्तं भावित्वेन तस्य तन्त्रत्वेऽपि मन्त्रजन्यार्थपकाशनरूपकार्यस्य कालान्तरपर्यन्तमनवस्थानेन वैषम्यादावृत्तिरेव मन्त्राणामिति । तदाह सूत्रे, **हविष्कृदित्यादि** । **द्वन्द्वैकवद्भावः । व्यक्तोऽर्थः ।**

**अत्राहुः**, नेदमधिकरणान्तरं युक्तम् । कालभेदेनावृत्तेः स्पष्टतया पूर्वपक्षस्यातिमन्दत्वात् । किन्तु सन्निपातित्वादसन्निपातिनां प्रयाजादीनां तन्त्रत्वस्य प्रत्युदाहरणत्वेन सन्निपातिनामपि हविष्कृदादि-मन्त्राणां न तन्त्रतेति वक्तुमिदं सूत्रमिति । तदुक्तं **तन्त्ररत्ने** ''प्रत्युदाहरणत्वेन व्याख्यैव त्वत्र सम्मता'' इत्यादि ।

इति विंशं हविष्कृदादिमन्त्रभेदाधिकरणम् (सूत्राणि ५६-५८)

**इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते एकादशाध्यायस्य चतुर्थः पादः**

अस्मिन् पादे अधिकरणानि २० सूत्राणि ५८
आदितः अधिकरणानि ८४४ सूत्राणि २५९७

---



## अथ द्वादशाध्याये प्रथमपादः

पूर्वत्र तन्त्रावापावङ्गानां चिन्तितौ । अत्र त्वध्याये प्रसङ्गश्चिन्त्यते । **प्रसङ्गो** नामान्योपकारार्थ-कृतेनान्यास्योपकारसिद्धिः । तदाह **भाष्ये**, ''अन्यत्र कृतस्यान्यत्रापि प्रसक्तिः प्रसङ्गः'' इति । तन्त्रमनेकोपकारकमपि तावदुद्देशेनानुष्ठानमिति प्रसङ्गतस्तस्य भेदो ज्ञेयः । दशमे हि बाधाभ्युच्चयचिन्ता द्वारेणानुष्ठेयाङ्गानामियत्तानिर्णये सति तान्यङ्गानि किं सकृत्कृतान्येव बहूनां प्रधानानामुपकुर्वन्ति, न वेत्याकांक्षायामेकादशे सकृत्कृतान्येव प्रयाजाद्यङ्गान्येकदेशकालकर्तृणामनेकेषामुपकुर्वन्तीति स्थिते तदुपजीवनेन यथा प्रयाजादीन्यगृह्यमाणविशेषत्वादाग्नेयादित्रिकस्याप्युपकारकाणि तथा गृह्यमाणेऽपि विशेषे विशेषग्रहमनादृत्यैकदेशकालकर्तृकत्वमेवोपादाय पश्वर्थं कृतं प्रयाजादिकं पशुपुरोडाशस्याप्युप-कारकमित्यत्रोच्यत इति पूर्वानन्तर्यमस्य ज्ञेयम् ।

### अथ प्रथमं पशुपुरोडाशाधिकरणम् (सूत्राणि १-७)

**तन्त्रिसमवाये चोदनातः समानानामेकतन्त्रत्वमतुल्येषु तु भेदः स्याद्विधिप्रक्रमतादर्थ्यात्तादर्थ्यं श्रुतिकालनिर्देशात् ॥ १ ॥**

**(गुणकालविकाराच्च तन्त्रभेदः स्यात् ॥ २ ॥ तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिस्स्यात्तन्त्रर्थस्याविशिष्टत्वात् ॥ ३ ॥ विकाराच्च न भेदस्स्यादर्थस्याविकृतत्वात् ॥ ४ ॥ एकेषां चाशक्यत्वात् ॥ ५ ॥ आहोपुरीषकं स्यात् ॥ ६ ॥ एकाग्निवच्च दर्शनम् ॥ ७ ॥**

ज्योतिष्टोमे अग्नीषोमीयः पशुः । स च **पशौ च लिङ्गदर्शनात्** इत्यष्टमाद्यपादोक्तन्यायेन तन्त्रि-समवाये चोदनान्यायेन च दर्शपूर्णमासप्रकृतिकः । तत्रापि **पशुः पुरोडाशविकारः स्याद्देवता-सामान्यात्, सान्नाय्यं वा तत्प्रभवत्वात्** इत्यष्टमद्वितीयपादोक्तदिशा सान्नाय्यप्रकृतिकत्वात्तदीय-विध्यन्तस्तत्र प्रवर्तते । तत्र पश्वर्थः पुरोडाशः श्रूयते ''अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पुरोडाशमेकादशकपालं निर्वपति'' इति । तत्र च दार्शपौर्णमासिकाग्नीषोमीयपुरोडाशविध्यन्तः प्रवर्तते । तत्र किं पश्वर्थानुष्ठितान्यङ्गानि पुरोडाशस्योपकुर्वन्ति, उत नेति **सन्देहे,** प्रयाजाद्यङ्गानि पशुकालेऽनुष्ठीय मानानि सन्निधानात्पश्वर्थानि । न कालान्तरेऽनुष्ठीयमानपुरोडाशार्थानि भवितुमर्हन्ति । अन्यार्थं च कृतं नान्यस्योपकारकम् । किन्तु तदर्थेन कृतं तस्यैवोपकारकम् । प्रकृतौ तथा दर्शनात् । प्रकृतावाग्नेयार्थं कृतमप्यरङ्गजातं सन्निधानात्तदर्थेनापि कृतत्वादग्नीषोमीयपुरोडाशस्याप्युपकारकमित्युक्तं पूर्वाध्याये । न

ह्यत्र पुरोडाशार्थमप्यनुष्ठीयतेऽङ्गजातम् । किञ्च यथा ''अप्स्ववभृथेन चरन्ति'' इत्यत्रावभृथकरणिकाया भावनाया अप्सु विधानात्साङ्गमवभृताख्यं कर्माप्सु क्रियते तथाऽत्रापि वपाप्रचारानन्तरं पुरोडाशकरणिकाया, भावनाया विधानात्तस्मिन् काले कथंभावाकांक्षायां चोदकेनैष्टिकाङ्गानां प्रापणात्साङ्ग एव पुरोडाशः कार्यो न प्रधानमात्रमिति **प्राप्तम्**। तदाह सूत्रे, **तन्त्रीत्यादि**। साधारणो धर्मस्तन्त्रम् । तद्वंतस्तन्त्रिणः । तेषामायादीनां **तन्त्रिणां समवाये** एकदेशकालकर्तृकत्वे सति **चोदनातः समानानामे**कचोदनाचादितानामेकतन्त्रत्वं सकृत्सर्वार्थेनानुष्ठानं, **अतुल्येषु** भिन्नप्रयोगवचनचोदितेषु पशुपुरोडाशादिषु **भेदः स्यात्** । भेदेनाङ्गानामनुष्ठानं स्यात् । कुतः? **विधिप्रक्रमस्याङ्गानुष्ठानस्य तादर्थ्यात्** पश्वर्थत्वात् । **पश्वर्थत्वं च श्रुतिकालनिर्देशात्** । श्रुत्या अग्नीषोमीयप्रणयनोत्तरकाले पशोर्निर्देशात् तदानीन्तनाङ्गानुष्ठानस्यापि तादर्थ्यादिति । **सिद्धान्तस्तु,** अङ्गानि पशुकालेऽनुष्ठीयमानानि तदर्थानीति सत्यम् । तथापि प्रयाजाद्यङ्गानि न प्रत्येकमुपकारं प्रधानस्य जनयन्ति । पूर्वोत्तराणि सर्वाण्यपि संहत्यैवेत्युक्तं पूर्वाध्यायाद्यपादे **अङ्गानां तु शब्दभेदात्** इत्यत्र । तथा च पश्चात्तनाङ्गानुष्ठानपर्यन्तं पूर्वकृतान्यङ्गानि स्वस्वापूर्वरूपेण वर्तन्त इति तन्मध्येऽनुष्ठीयमानः पुरोडाशयागः पाशुकमङ्गग्रामं स्वोपकारार्थमुपजीवति । न तु स्वार्थं पृथगनुष्ठानमपेक्षते । अन्यार्थैरेवाङ्गैरात्मन उपकारसिद्धेः । अन्यार्थारोपितदीपेन मार्गादिप्रकाशनवत् । अतो न पुरोडाशार्थं पृथगनुष्ठानम् । यदपि, किञ्च यथेत्यादि तदपि न । चोदकेन प्रापितस्यैष्टिकविध्यन्तस्य पाशुकेन प्रयोगवचनेन पशुयागसमीपे साकल्येन कारितत्वात्तेनैवोपकारसिध्या कथंभावाकांक्षाशान्तेः । पुरोडाशप्रयोगवचनेनाप्राकृतानां पदार्थानां पुरोडाशसमीपेऽनुष्ठानानापादनादिति ।

इति प्रथमं पशुपुरोडाशाधिकरणम् (सूत्राणि १-७)

## अथ द्वितीयं पशुपुरोडाशे आज्यभागयोः कर्तव्यताधिकरणम् (सूत्रं ८)

**जैमिनेः परतन्त्रत्वापत्तेस्स्वतन्त्रप्रतिषेधः स्यात् ॥ ८ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । पूर्वत्र पाशुकैरेवाङ्गैः कार्यसिद्धेर्न पुरोडाशस्य पृथगङ्गानि कार्याणीत्युक्तम् । यत्पुनः पशावविद्यमानमाज्यभागावघातादिकं तत्किं पुरोडाशे कार्यम्, उत नेति **सन्देहे,** ''पुरोडाशं निर्वपति'' इति वाक्योक्तपुरोडाशकरणकभावना लिङा बोध्यमाना कथंभावमाकाङ्क्षन्ती पाशुकेन चोदकेनाङ्गकलापेन प्राकृतानुपकारानुपादाय आज्यभागाभ्यां गृहमेधीयभावनेव सन्निहितैस्तावद्भिरेव निराकांक्षा सती न चोदकप्रापिताङ्गजन्योपकारमपेक्षत इति चोदकस्य निवृत्तेः पूर्वोक्तदिशा प्रयाजादिकमिव नाज्यभागावघातादिकं कार्यम् । न चैवं पुरोडाशानिष्पादः शङ्क्यः ।



लौकिकापिष्टोपादानेनापि तत्सिद्धेरिति **प्राप्तम्**। तदाह **सूत्रे, जैमिनेर्मते परस्य पश्वादेस्तन्त्रे पतितत्वात् स्वतन्त्रस्य** स्वकीयाङ्गस्य **प्रतिषेधः स्यादिति** । **सिद्धान्तस्तु,** यदि पशावङ्गप्रापकेण चोदकेन प्रयाजादीनां कार्यमुखेन पुरोडाशभावनायां प्रापणं स्यात्तदा तावता निराकांक्षां भावनां प्रयोगवचनो लिङ् विदध्यात् । तथा पृथक् तदङ्गप्रापकचोदकस्य निवृत्तिः । न चैवम् । पाशुकचोदको हि पाशुकभावनायामेवाङ्गानि प्रापयति । न पुरोडाशभावनायाम् । येन सा निराकाङ्क्षा स्यात् । अतः पौरोडाशिकश्चोदकोऽप्यङ्गीकार्यः । तेन च कार्यमुखेन प्राकृताङ्गेषु प्रापितेषु तद्विशिष्टां भावनां विदधल्लिङ्प्रत्ययः पश्वर्थानुष्ठितप्रयाजाद्यङ्गजन्योपकारमुपजीव्य तत्राविद्यमानाङ्गान्तरयुक्तां भावनां विदधातीति प्रयाजादिविषय एव चोदकस्य बाधो नाज्यभागाद्यंश इत्यस्त्याज्यभागादेरनुष्ठानमिति ।

इति द्वितीयं पशुपुरोडाशे आज्यभागयोः कर्तव्यताधिकरणम् (सूत्रं ८)

## अथ तृतीयं सोमे दार्शिकवेद्यकरणाधिकरणम् (सूत्रे ९-१०)

**नानार्थत्वात्सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् ॥ ९ ॥**

**(अकर्म वा कृतदूषा स्यात् ॥ १० ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ज्योतिष्टोमे वेदिः श्रुता षट्त्रिंशत्प्रक्रमा प्राची । चतुर्विंशतिरग्रेण । त्रिंशज्जघनेन । इयति शक्ष्यामहेऽस्यां कर्तुमिति । **अस्यार्थः** तार्तीयसप्तमपादे **चिकीर्षया च संयोगात्** इति नयेऽभिहितः । तत्र दर्शपूर्णमासाख्यप्रकृतितश्चोदकेन प्राप्तानामिष्ट्याद्यङ्गानां हविरासादनार्थं प्राकृती वेदिरन्या कार्या, अथ तस्यामेवासादनं । न प्राकृतवेद्यन्तरकरणमिति **सन्देहे, चिकीर्षया च संयोगात्** इत्यत्र सैव वेदिरङ्गप्रधानसर्वार्था न प्रधानमात्रार्थेत्युक्तावपि ''इयति शक्ष्यामहेऽस्यां कर्तुम्'' इत्यनुष्ठानशब्दितप्रचारार्थत्वस्यैवावगमात् । पूर्वोक्तदिशा पाशुकप्रयाजाद्यङ्गानां पशुपुरोडाशोपकारकत्वेऽपीह चोदकप्राप्ताङ्गकर्महविरासादनरूपप्राकृतवेदिकार्यकरत्वं न सौमिकवेद्याः । अतस्तदर्थं प्राकृती वेदिः पृथक्कार्येति । तदाह **सूत्रे,** सौमिकवेद्या ऐष्टिकवेद्याश्च **नानार्थत्वादे**कस्याः प्रचारार्थत्वेनान्यस्या हविरासादनार्थत्वेन भिन्नकार्यत्वा**त्सोमे दर्शपूर्णमासप्रकृतिकानामिष्टीनां वेदिकर्म** वेदिकरणं पृथक् **स्यादिति । सिद्धान्तस्तु,** सत्यं प्रचारार्था वेदिः । तथापि तस्यामेव हविरासादनं कर्तुं शक्यत एव । न च प्रकृतौ स्वोद्देशेन कृतायामेव वेद्यां हविरासादनस्य कृतत्वादिहान्योद्देशेन कृतायां वेद्यां क्रियमाणं हविरासादनं विगुणं स्यादिति शङ्क्यम् । प्रकृतावुद्देशस्याविहितत्वेनानङ्गतयाऽऽर्थिकत्वादार्थिकस्य

चोदकेनानतिदेशात् । अतोऽन्यार्थायामपि वेद्यां हविरासादने नास्ति वैगुण्यमिति प्रचारार्थैव वेदिः प्रसङ्गादासादनेनोपजीव्यत इति न पृथग्वेदिकरणमिति ।

**इति तृतीयं सोमे दार्शिकवेद्यकरणाधिकरणम् (सूत्रे ९-१०)**

## अथ चतुर्थं सौम्यचर्वादिहोमस्यैष्टिकपात्रैरनुष्ठानाधिकरणम् (सूत्रे ११-१२)

**पात्रेषु च प्रसङ्गस्स्याद्धोमार्थत्वात् ॥ ११ ॥**

**(न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गस्स्यात् ॥ १२ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । सोमाङ्गेषु सवनीयपशुपुरोडाशादिकर्मसु सोमार्थान्येव ग्रहचमसरूपपात्राणि प्रसज्यन्ते, किं वा जुह्वादिरूपपात्रान्तराणि पृथगेव सम्पाद्यानीति **सन्देहे**, यथा सौमिकवेद्यैव हविरासादनकार्यसिद्धेरैष्टिकप्राकृतवेद्या निवृत्तिस्तथा सौमिकैरेव ग्रहादिपात्रैस्तदङ्गैष्टिकहोमादिकार्यनिष्पत्त्या जुह्वादीनां निवृत्तेर्न पृथक्सम्पाद्यानि पात्रान्तराणीति **प्राप्तम्** । तदाह सूत्रे, **पात्रेषु** ग्रहचमसादिषु **प्रसङ्गः स्यात्** । तेषामपि होमसाधनत्वसम्भवादिति । **सिद्धान्तस्तु**, यदि जुहूसाधनको होमोऽन्यैर्ग्रहादिसौमिकपात्रैः क्रियेत तदा विगुणस्सन्नास्यकार्यं साधयेत् । न च यथा केवलाज्यकृतानुयाजसाध्यत्वेऽस्यापि पशुपुरोडाशोपकारस्य पृषदाज्यकृतानुयाजसाध्यत्वेऽपि न वैगुण्यं तथा जुह्वादिसाध्यानामपि होमानां सौमिकपात्रसाध्यत्वेऽपि न वैगुण्यमिति शिङ्क्यम् । पशौ पृषदाज्यकृतैरप्यनुयाजैः प्राकृतकार्यस्यैव जननात् । न पुनः केवलाज्यैस्ते क्रियन्ते । प्रकृते तु सौमिकपात्रैरैष्टिकहोमानामकृतत्वेनावश्यं कर्तव्यत्वात्साद्गुण्यार्थं जुह्वाद्युपादानस्यावश्यकत्वान्न पात्रेषु प्रसङ्गः ।

**इति चतुर्थं सौम्यचर्वादिहोमस्यैष्टिकपात्रैरनुष्ठानाधिकरणम् (सूत्रे ११-१२)**

## अथ पञ्चमं शामित्रे पशुपुरोडाशश्रपणाभावाधिकरणम् (सूत्रं १३)

**शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् ॥ १३ ॥**

पूर्ववैषम्येण शङ्कनासङ्गतिः । अग्नीषोमीयपश्ववयवश्रपणार्थः शामित्राग्निनामक औत्तरवेदिकाग्निश्चात्वालोत्करयोर्मध्ये प्रणीताग्निः श्रुतः । **चात्वालो** गर्तविशेषः । **उत्करस्तु** सूक्ष्माग्रमृत्तिकाराशिरित्युत्करशब्दार्थः दशमे तृतीयपादे **संस्कारे तु** इत्यत्रोक्तः । पशुपुरोडाशश्च पशुतन्त्रोपजीवीत्युक्तमत्रैवाद्यनये । एवञ्च पशुपुरोडाशः किं शामित्राग्नौ श्रपयितव्यः, उत गार्हपत्य इति **सन्देहे**,



सोमाहुतीनामन्यत्कार्यमैष्टिकाहुतीनां चान्यदिति सौमिकपात्रकृताभिराहुतिभिरैष्टिकाहुतिकार्याजननाद्युक्तं तत्र सौमिकपात्रेभ्यः पात्रान्तरोपादानम् । इह तु पशौ पुरोडाशे चैक एव पाकश्चोदकेन प्राप्यत इति द्वयोरप्येकत्रैव पाकस्स्यात् । पशुतन्त्रोपजीवित्वात्पुरोडाशस्येति तत्पाकसाधनमेवास्यापि पाकसाधनमिति **प्राप्ते सिद्धान्तः**, यद्यपि पशौ चोदकेनैकः पाकः प्राप्यते तथापि पाशुकैः प्रयाजादिजन्यैरुपकारैरिव पाशुकेन पाकेन न पुरोडाशस्योपकारोऽस्ति । पशौ शृतेऽपि पुरोडाशस्याश्रपणात् । अतः पृथक् पाके कार्ये अवैगुण्याय प्रकृताविव गार्हपत्य एव पाकः कार्य इति । तदाह **सूत्रे**, **शामित्रे पशुपुरोडाशो न** श्रपणीयस्स्यात्, **इतरस्य** तच्छ्रपणेन **प्रयुक्तत्वा**दिति ।

**इति पञ्चमं शामित्रे पशुपुरोडाशश्रपणाभावाधिकरणम् (सूत्रं १३)**

## अथ षष्ठं कुण्डपायिनामयनेऽग्निहोत्रद्रव्यस्य प्राजहिते श्रपणाधिकरणम् (सूत्रं १४)

**श्रपणं चाऽग्निहोत्रस्य शालामुखीये न स्यात्प्राजहितस्य विद्यमानत्वात् ॥ १४ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । कुण्डपायिनामयनगते मासाग्निहोत्रे हविःश्रपणं किं प्राजहितशब्दिते मुख्यगार्हपत्ये कार्यम्, उत शालामुखीय इति **सन्देहे**, **शालामुखीयो** नाम औत्तरवेदिकाग्निप्रणयनात्पूर्वं य आहवनीयः स उच्यते । ज्योतिष्टोमे हि शालामुखीयोऽग्निरेव "अत ऊर्ध्वं गार्हपत्यो भवति" इति गार्हपत्यकार्ये विहितः । स च ज्योतिष्टोमाच्चोदकेन द्वादशाहं प्राप्तः । ततो गवामयनम् । ततः कुण्डपायिनामायनम्, इत्येवं परंपराप्राप्त इति पशुपुरोडाशस्य गार्पपत्ये श्रपणेऽप्यग्निहोत्रहविःश्रपणं शालामुखीय एवेति **पूर्वः पक्षः** । **सिद्धान्तस्तु**, सत्यं चोदकेन शालामुखीयस्य प्राप्तिः । तथाऽप्यग्निहोत्रनामधेयात्तु नित्याग्निहोत्र इव प्राजहितशब्दिते मुख्य एव गार्हपत्ये श्रपणम् । आनुमानिकाच्चोदकात्प्रत्यक्षनामधेयस्य बलवत्तायाः सप्तमान्ते **द्वादशाहिकमहर्गणे तत्प्रकृतित्वात्** इत्यत्राभिधानात् । तदाह **सूत्रे**, **अग्निहोत्रस्य** हविःश्रपणं **च शालामुखीये न स्यात्** । **प्राजहितस्य** मुख्यगार्हपत्यस्य **सत्त्वा**दिति ।

**इति षष्ठं कुण्डपायिनामयनेऽग्निहोत्रद्रव्यस्य प्राजहिते श्रपणाधिकरणम् (सूत्रम् १४)**

## अथ सप्तमं हविर्धानशकटान्यशकटेनौषधद्रव्यकपुरोडाशनिर्वापाधिकरणम् (सूत्राणि १५-१७)

**हविर्धाने निर्वपणार्थं साधयेतां प्रयुक्तत्वात् ॥ १५ ॥**

**(अप्रसिद्धिर्वाऽन्यदेशत्वात्प्रधानवैगुण्यादवैगुण्ये प्रसङ्गस्स्यात् ॥ १६ ॥ अनसाश्च दर्शनात् ॥ १७ ॥)**

अत्रापि पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ज्योतिष्टोमे हविर्धानसमाख्ययोः शकटयोः सोमधारणार्थयोः प्रवर्तने कृते सति यानि सवनीयपुरोडाशादीनि तेषां किं तयोरन्यतरत्र निर्वपणम्, उत शकटान्तरमुपादेयमिति **सन्देहे,** अस्तु पूर्वोक्तदिशा मासाग्निहोत्रस्य शालामुखीयश्रपणे वैगुण्यम् । नेह तथा । यथा हि ''वेद्यां हविरासादयति'' इत्यत्र वेदिमात्रस्य श्रवणात् महावेद्यामासादनेऽपि न वैगुण्यं तथाऽपि ''अनसोऽधि निर्वपति'' इत्यस्य प्रकृतितः प्राप्तस्यानोमात्रस्य श्रवणाद्धविर्धानाभ्यां निर्वापेऽप्यवैगुण्यान्न शकटान्तरमुपादेयमिति **पूर्वपक्षः** । तदाह **सूत्रे, हविर्धाने,** द्विवचनान्तं । पुरोडाशादीनां **निर्वपणरूपकार्यं साधयेतां** तयोस्सोमकर्मणा **प्रयुक्तत्वात्** । अन्यप्रयुक्तयोरपि प्रसङ्गादन्यनिर्वापकरणशक्तत्वादिति । **सिद्धान्तस्तु,** सोमार्थशकटयोर्न पुरोडाशानिर्वापः । सोमधारणार्थानसो महावेद्यामुत्तरवेदिसमीपे मन्त्रपूर्वं नियमेन स्थापितत्वात् । पुरोहाशदिनिर्वापस्य च ''अपरेण गार्हपत्यं निर्वपति'' इति प्रकृतितः गार्हपत्यापरभागदेशस्य श्रवणाद्भिन्नदेशयोस्सामानाधिकरण्यायोगात् । अतो नात्र प्रसङ्गावकाश इत्यनन्तरमेवोपादेयमिति ।

**इति सप्तमं हविर्दानशकटान्यशकटेनौषधद्रव्यकपुरोडाशनिर्वापाधिकरणम् (सूत्राणि १५-१७)**

## अथाष्टमं प्रायणीयादिषु दीक्षाजागरणस्याभावाधिकरणम् (सूत्रं १८)

**तद्युक्तश्च कालभेदात् ॥ १८ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ज्योतिष्टोमे ''यां प्रथमां रात्रिं दीक्षितो जागर्ति तया स्वप्नेन व्यावर्तितो भवति'' इति दीक्षितस्य दीक्षोत्तरकालं रात्रौ जागरणमाम्नातम् । तत्र सोमयागीयासु दर्शपूर्णमासविकृतिभूतासु प्रायणीयादिषु किं चोदकप्राप्तं दार्शपौर्णमासिकमपि जागरणं कर्तव्यम्, उत नेति **सन्देहे,** पूर्वोक्तदिशाऽनसः पृथगुपादानेऽपि जागरणस्य न पृथगुपादानम् । प्रयाजादिजन्योपकारस्यापशुसमाप्तेरिव सोमार्थजागरणजन्यादृष्टस्यासोमपरिसमाप्त्यवस्थानात्सोमार्थेन दीक्षाकालीनजागरणेन प्रसङ्गात्तन्मध्यपतितैष्टिकजागरणकार्यस्यापि सिद्धेर्न पृथक् तेषु जागरणं कार्यमिति **प्राप्ते सिद्धान्तः,** दृष्टार्थस्य सम्भवेऽदृष्टार्थत्वायोगाद्यज्ञसाधनविषयाप्रमादरूपदृष्टार्थत्वाज्जागरणस्य तेन दीक्षाकालीनेषु रक्षितेष्वपि तदुत्तरकालीनरक्षणार्थमैष्टिकं प्राकृतं जागरणमपि कार्यम् । अदृष्टार्थत्वे वा प्रयाजादेः प्राकृतत्वेन प्राकृतार्थोपकारजनकत्वेऽपि सोमस्यापूर्वत्वान्न तत्र दार्शिकं जागरणं प्रवर्तते ।



किन्त्वपूर्वमेवेति भिन्नादृष्टजनकत्वनियमेन तेन प्राकृतेन प्राकृतकार्यस्यादृष्टस्यासिद्धेः प्राकृतकार्यसिध्यर्थं पृथग्जागरणं कार्यमिति । तदाह **सूत्रे,** तद्युक्तं दीक्षाकालयुक्तं न प्रसज्यते । **कालभेदादिति** ।

**इत्यष्टमं प्रायणीयादिषु दीक्षाजागरणस्याभावाधिकरणम् (सूत्रं १८)**

## अथ नवमं विहारपृथक्त्वे मन्त्रभेदाधिकरणम् (सूत्रं १९)

**मन्त्राश्च सन्निपातित्वात् ॥ १९ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । वरुणप्रघासेषु पूर्वोत्तरविहारयोर्निर्वापादिमन्त्रा अध्वर्युणा प्रतिप्रस्थात्रा वा सकृतेव प्रयोज्याः, उतोभाभ्यामपि भेदेनेति **सन्देहे,** जागरणस्य भेदेनानुष्ठानेऽपीहान्यतरेणाप्युच्चार्यमाणैर्मन्त्रैरुभयोः मृतिसम्भवात्सकृदेव प्रयोज्या इति **प्राप्ते सिद्धान्तः,** ''निर्वपामि'' इत्यादिमन्त्रगतोत्तमपुरुषादेः स्वात्मगामित्वादन्यतरेणोच्चारितेन द्वयोरात्माभिवादित्वायोगादध्वर्युप्रतिप्रस्थात्रोः कर्मसु शैघ्र्यविलम्बसम्भवेन मन्त्रान्त एव निर्वापादिकर्मसन्निपातनापत्तेश्चोभाभ्यां भेदेन मन्त्रमुच्चार्य तदन्त एव कर्म कार्यमिति । तदाह **सूत्रे, मन्त्राश्च भेदेन** प्रयोज्याः । कुतः ? कर्मसन्निपातलाभादिति ।

इयं तन्त्रावापचिन्तारूपापि सकृदसकृदनुष्ठानप्रसङ्गादत्र चिन्तितेत्याहुः । यद्यपि पूर्वाध्यायोपान्ते उपरवसूत्रे सन्निपातिनां मन्त्राणां न तन्त्रतेत्युक्तम् । तथाऽप्यत्र विशेषशङ्कानिरासकत्वेनापौनरुक्त्यं वदन्ति ।

**इति नवमं विहारपृथक्त्वे मन्त्रभेदाधिकरणम् (सूत्रं १९)**

## अथ दशमं दीक्षणीयादिष्वग्न्यन्वाधानस्याभावाधिकरणम् (सूत्रं २०)

**धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते ॥ २० ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । सोमाङ्गेषु दीक्षणीयादीष्टिषु चोदकप्राप्तमन्वाधानं कार्यम्, उत नेति **सन्देहे,** पूर्वत्र निर्वापादिमन्त्र इव चोदकानुग्रहायान्वाधानं कार्यमिति **प्राप्ते सिद्धान्तः,** अन्वाधानं हि विहितस्य गार्हपत्यात्पृथक्कृतस्याग्नेः यदाद्यमुपसमिन्धनं तदुच्यते । तच्च धारणार्थम् । न च तत्प्रकृतौ पुनः पुनः क्रियते । पुनः पुनर्विहरणस्याचोदितत्वात्केवलोपसमिन्धनेनापि तत्सिद्धेश्च । तस्मात्सौमिकेनोक्तरूपान्वाधानेन धृतस्याऽक्रतुसमाप्ति धारणाय केवलोपसमिन्धनस्य मध्येऽपेक्षितत्वेन पुनः

पुनर्विहृत्योपसमिन्धनरूपान्वाधानस्यायुक्तत्वात् । सोमार्थेन विहृतस्य धारितस्याग्नेर्धारणेन प्रसङ्गसिद्धकार्यत्वान्न पुनः कार्यमन्वाधानमिति । तदाह **सूत्रे, धारणार्थत्वादित्यादि** । व्यक्तोऽर्थः ।

इति दशमं दीक्षणीयादिष्वग्न्यन्वाधानस्याभावाधिकरणम् (सूत्रं २०)

## अथैकादशं दीक्षणीयादिषु व्रतोपायनाभावाधिकरणम् (सूत्राणि २१-२४)

**तथा व्रतमुपेतत्वात् ॥ २१ ॥**

**(विप्रतिषेधाच्च ॥ २२ ॥ सत्यवदिति चेत् ॥ २३ ॥ न संयोगपृथक्त्वात् ॥ २४ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । तत्रैव ज्योतिष्टोमे दार्शपौर्णमासिकं चोदकप्राप्तं व्रतोपायनं दीक्षणीयादीष्टिषु कार्यम्, उत नेति **सन्देहे**, सौमिकस्यान्वाधानस्य भेदेऽप्यैष्टिकान्वाधान- कार्यकरत्वात्प्रसङ्गसम्भवेऽपि प्रकृते व्रतोपायनस्यादृष्टार्थत्वादैष्टिकमपि पृथक्कार्यं चोदकानुग्रहायेति **प्राप्ते सिद्धान्तः**, सोमार्थव्रतोपायनस्य कर्तृसंस्कारद्वारा सोमप्रयोगाङ्गत्वाद्दीक्षाकालोपेतेनाप्यासोमप्रयोगपरिसमाप्त्यनुवर्तमानेन सौमिकेन व्रतेनैव दीक्षणीयादेरप्यनुग्रहसिद्धेर्न पुनश्चोदकप्राप्तं व्रतोपायनं कार्यमिति । तदाह **सूत्रे, यथाऽग्न्यन्वाधानं पुनर्न क्रियते । तथा व्रतमपि** । कुतः ? सौमिकेन व्रतेन व्रतस्योपेतत्वादिति ।

इत्येकादशं दीक्षणीयादिषु व्रतोपायनाभावाधिकरणम् (सूत्राणि २१-२४)

## अथ द्वादशं ऐष्टिकेष्वग्न्यन्वाधानाननुष्ठानाधिकरणम् (सूत्राणि २५-२७)

**ग्रहणार्थश्च पूर्वमिष्टेस्तदर्थत्वात् ॥ २५ ॥**

**(शेषवदिति चेन्न वैश्वदेवो हि स्याद्वा व्यपदेशात् ॥ २६ ॥ न गुणार्थत्वात् ॥ २७ ॥)**

सिंहावलोकनन्यायेन पूर्वतनाधिकरणेनाक्षेपिकी सङ्गतिः । सौमिकमग्न्यन्वाधानं प्रसङ्गादैष्टिकेषु कार्यं साधयतीति यदुक्तं 'धारणार्थत्वात्' इत्यत्र । तदयुक्तम् । प्रकृतावन्वाधानं धारणमात्रार्थं चेत्तदा सौमिकेनैव धारणेन तत्कार्यसिद्धेर्न पुनरन्वाधानं कार्यं स्यात् । किन्तु प्रकृतिभूतदर्शपूर्णमासयोरन्वाधानं देवतापरिग्रहार्थमपि भवति । ''ममाग्ने वर्चो विहवेष्वस्त्वित्यग्निं गृह्णाति'' ''देवता एव पूर्वेद्युर्गृहीत्वा श्वोभूते यजते'' इति श्रवणात् । अतो धारणार्थत्वाभावेऽपि तत्तद्देवतापरिग्रहार्थमपि प्रायणीयादीष्टिषु



चोदकप्राप्तमन्वाधानं पुनः कार्यमिति **प्राप्ते सिद्धान्तः**, अन्वाधानं हि सामर्थ्याद्देवतापरिग्रहार्थं ज्ञायते । किन्तु धारणार्थं प्रत्यक्षतोऽवगम्यते । तथा ''ममाऽग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तनुवं पुषेम'' इति मन्त्रलिङ्गादपि समिन्धनद्वारा धारणार्थमेव ज्ञायते । न त्वदृष्टदेवतापरिग्रहार्थम् । ''पूर्वमग्निं गृह्णाति'' इत्यादिवाक्यशेषाद्देवतापरिग्रहार्थमप्यत्र गम्यत इति शङ्क्यम् । अन्वाधानस्तुतिमात्रेण वर्तमानापदेशवाक्येनादृष्टदेवतापरिग्रहार्थतायाः कल्पयितुं शक्यत्वात् । अतो धारणमात्रार्थमन्वाधानमिति न पुनः कार्यमिति । तदाह **सूत्रे**, यद्यपीत्यर्थे चशब्दः । यद्यपि पूर्वमन्वाधानं **ग्रहणार्थं** देवतापरिग्रहार्थं तथापीष्टौ देवताया अपि **तदर्थत्वात्** देवतापरिग्रहार्थत्वात्प्रायणीयादिषु तन्न कार्यमिति ।

इति द्वादशं ऐष्टिकेष्वग्न्यन्वाधानाननुष्ठानाधिकरणम् (सूत्रणि २५-२७)

## अथ त्रयोदशमैष्टिकेषु पानीसन्नहनाननुष्ठानाधिकरणम् (सूत्रं २८)

**सन्नहनश्च प्रवृत्तत्वात् ॥ २८ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोः ''योक्त्रेण पत्नीं सन्नह्य'' इति पत्न्यास्सन्नहनं श्रुतं सोमाङ्गप्रायणीयादिषु चोदकप्राप्तं कर्तव्यं, न वेति **सन्देहे**, पूर्वत्र सोमार्थमग्नेर्धृतत्वेन पुनर्धारणार्थमन्वाधानं न कर्तव्यमित्युक्तं युक्तम् । सन्नहनं त्वदृष्टार्थत्वाज्जागरणवत्पुनः कर्तव्यमिति **प्राप्ते सिद्धान्तः**, सन्नहनं नादृष्टार्थम् । वासोधारणार्थत्वात् । दृष्टार्थदीक्षाकालीनेन च सोमार्थेन सन्नहनेन धरितार्थत्वान्न पुनः कर्तव्यम् । न च सोमार्थस्य सन्नहनस्य सञ्चारादिना शैथिल्यसम्भवात्पुनस्सन्नहनं प्राकृतं कार्यमिति शङ्क्यम् । तस्याऽप्रयोगसमाप्ति यथा न शैथिल्यं, तथैव कार्यत्वादिति । तदाह **सूत्रे, सन्नहनं च न कार्यम्**, सौमिकस्य सन्नहनस्य **प्रवृत्तत्वा**त्तेनैव प्रसङ्गात्कार्यसिद्धेरिति ।

इति त्रयोदशमैष्टिकेषु पानीसन्नहनाननुष्ठानाधिकरणम् (सूत्रं २८)

## अथ चतुर्दशमैष्टिकेष्वारण्यभोजनाभावाधिकरणम् (सूत्रं २९)

**अन्यविधानादारण्यभोजनं न स्यादुभयं हि वृत्त्यर्थम् ॥ २९ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोः ''अथो यदारण्यस्स्यात्तेनारण्यानवरुन्धे । अतो इन्द्रियं वा आरण्यमिन्द्रियमेवात्मन् धत्ते'' इत्यारण्याशनं विहितं सोमाङ्गप्रायणीयादिषु चोदकप्राप्तं कर्तव्यं, न वेति **सन्देहे**, सौमिकस्य सन्नहनस्य प्रवृत्तत्वात्प्रायणीयादिषु पुनस्तत्कर्तव्यं दीक्षानन्तरदिने प्रायणीयातिथ्ययोरनन्तरमेव सौमिकस्य ''पयो ब्राह्मणस्य व्रतम्'' इत्याद्युक्तपयोव्रतादिप्रवृत्तेः

प्रायणीयकाले तस्याप्रवृत्तत्वाच्चोदकानुग्रहायाऽरण्याशनं कार्यमिति **प्राप्ते सिद्धान्तः**, प्रायणीयादिषु प्राकृतारण्यभोजनकृतौ तेनैव व्रतसिद्धेरनुपदमातिथ्यान्ते सौमिकं पयोव्रतादि न क्रियेत । न चेष्टापत्तिः । तथात्वे प्रधानगुणस्य बाधः स्यात् । अतो वक्ष्यमाणाङ्गगुणविरोधन्यायेन करिष्यमाणेनापि सौमिकेन व्रतेन वृत्तिसिद्धेर्न प्रायणीयादिष्वारण्याशनमिति । तदाह **सूत्रे**, **अन्यस्य** पयोव्रतस्य **विधानात् आरण्यभोजनं न स्यात् । उभयं वृत्त्यर्थं हि ।** ततो दृष्टार्थत्वादेकेनापि व्रतसिद्धेरिति ।

**अत्राहुः, अङ्गगुणविरोधे च तादर्थ्यात्** इत्युत्तरपादे वक्ष्यमाणन्यायेन गतार्थत्वान्नेदमारम्भणीयमिति । **अन्ये तु**, प्रधानगुणानुरोधेनापि प्रयोगो भवतीति ज्ञापनायैतदारम्भ इति समादधुः ।

**इति चतुर्दशमैष्टिकेष्वारण्यभोजनाभावाधिकरणम् (सूत्रं २९)**

## अथ पञ्चदशमैष्टिकेषु शेषभक्षस्य संस्कारार्थतया कर्तव्यात्वाधिकरणम् (सूत्रं ३०)

### शेषभक्षास्तथेति चेन्नान्यार्थत्वात् ॥ ३० ॥

पूर्वन्यायेन शङ्कनात्सङ्गतिः । प्रकृतौ शेषभक्षा यजमानकर्तृका इडाभक्षणादयस्तेऽपि किं सोमाङ्गप्रायणीयादिषु चोदकप्राप्ताः कार्या, उत नेति **सन्देहे**, सौमिकेन व्रतेनाऽरण्याशनस्येवेडाभक्षणस्यापि निवृत्तिः स्यात् । इडाभक्षणस्यापि वृत्त्यर्थत्वात् । वृत्तेश्च सौमिकेनैव व्रतेन सिद्धेरिति **प्राप्ते सिद्धान्तः**, यदीडाभक्षणादिकं वृत्त्यर्थं स्यात्तदा निवृत्तिस्स्यात् । न चैवम् । किन्तु ''यजमानपञ्चमा इडां भक्षयन्ति'' इतीडाया द्वितीयानिर्देशेन प्रतिपत्त्यर्थत्वाद्भक्षणस्य । अतश्चोदकप्राप्तं तदपि कर्तव्यम् । अन्यथा प्रतिपत्तिलोपापत्तेरिति । तदाह **सूत्रे, शेषभक्षाश्च तथा** आरण्याशनवन्न कर्तव्या **इति चेत् । न अन्यार्थत्वात्**, प्रतिपत्त्यर्थत्वात् । तद्वद्वृत्त्यर्थत्वाभावादिति ।

अत्र यद्यपि षष्ठचतुर्थपादे **होमाभिषवभक्षणं च तद्वत्** इति सप्तमनये, शेषभक्षो द्रव्यप्रतिपत्त्यर्थः । न कर्तृसंस्कारार्थ इत्युक्तत्वान्न पूर्वपक्षादयस्तथापि कर्तृसंस्कारार्थत्वेपि तदनादृष्टसंस्कारार्थत्वम् । किन्तु कर्तृगतकर्मौपयिकबलजनकतृप्तिरूपदृष्टसंस्कारकृत्त्वमेव । तथा च तृप्त्यर्थत्वे तस्य सौमिकव्रतेनैव सिद्धेः शेषभक्षणस्य निवृत्तिः । प्रतिपत्त्यर्थत्वे तु न निवृत्तिरिति तस्यैवाधिकरणस्य फलोक्तिपरमात्रमेतत्प्रसङ्गात्मकत्वादत्रोक्तमित्याहुः ।

**इति पञ्चदशमैष्टिकेषु शेषभक्षस्य संस्कारार्थतया कर्तव्यत्वाधिकरणम् (सूत्रं ३०)**



## अथ षोडशमैष्टिकेष्वन्वाहार्यदानाभावादिकरणम् (सूत्रं ३१)

### भूतत्वाच्चापरिक्रयः ॥ ३१ ॥

पूर्वन्यायेन शङ्कनात्सङ्गतिः । प्रकृतावन्वाहार्यदक्षिणा श्रुता । सेह सोमाङ्गदीक्षणीयादिषु चोदकप्राप्ता । सा किं दातव्या, न वेति सन्देहे, पूर्वत्र शेषभक्षणमिवान्वाहार्यशब्दितचरुदक्षिणाऽपि दातव्या । न च सौमिकेन द्वादशशतेनैव तत्सिद्धिः । तस्य **दीक्षादक्षिणं तु वचनात्प्रधानस्य** इति तृतीयसप्तमपादे प्रधानमात्रार्थत्वोक्त्याऽङ्गेषु स्वार्थदक्षिणा दातव्येति **प्राप्ते सिद्धान्तः**, दक्षिणा हि ऋत्विजां भृत्यर्था । सा सौमिकद्वादशशतदक्षिणया प्रधानार्था सत्यप्युपक्रमादारभ्याऽसमाप्तेरनुवृत्तेति तन्मध्यवर्तिनस्तामेवोपजीवन्तो दीक्षणीयादिविधयश्चोदकप्राप्तामपि स्वार्थामानतिं न प्रयुञ्जत सति न कार्यमन्वाहार्यदानमिति प्रसङ्गसिद्धिः । तदाह **सूत्रे**, प्रधानदक्षिणयैव ऋत्विजां **भृतत्वात्पु**नरन्वाहार्येण न **परिक्रय** इति ।

**इति षोडशमैष्टिकेष्वन्वाहार्यदानाभावाधिकरणम् (सूत्रं ३१)**

## अथ सप्तदशमैष्टिकेषु शेषभक्षस्य संस्कारार्थतया कर्तव्यत्वाधिकरणम् (सूत्रे ३२-३३)

### शेषभक्षास्तथेति चेत् ॥ ३२ ॥

### (न कर्मसंयोगात् ॥ ३३ ॥)

पूर्वन्यायेन शङ्कनात्सङ्गतिः । प्रकृतौ ''शेषान् भक्षयेत्'' इति विहितम् । तदृत्विजां शेषभक्षणं दीक्षणीयादिषु चोदकप्राप्तं कार्यं, उत न कार्यमिति **सन्देहे**, तदृत्विजामानत्यर्थं, न प्रतिपत्त्यर्थम् । उपयुक्तसंस्कारार्थत्वकल्पनादप्यपेक्षिताऽनत्यर्थत्वस्यौचित्यात् । अतः प्रधानदक्षिणयैवाऽनतेः कृतत्वान्न तद्भक्षणं चोदकप्राप्तमपि कार्यमिति **प्राप्ते सिद्धान्तः**, ''यजमानपञ्चमा इडां भक्षयन्ति'' इति यजमानभक्षविधाविवात्रापि ''शेषान् भक्षयेत्'' इति द्वितीयाश्रवणात्प्रतिपत्त्यर्थतैव युक्तेति तदपि भक्षणं कार्यम् । अन्यथा प्रतिपत्तिलोपापत्तेरिति । तदाह **सूत्रे, शेषभक्षाश्च तथा** अन्वाहार्यदानवत् न कर्तव्या इति **चेन्न कर्मसंयोगात्** । ऋत्विजां बहुतरकर्मणि विनियोगेन तावत्करणार्थानतिसम्पादनासमर्थत्वादिति ।

पूर्वत्र शेषभक्षा इत्यत्र यजमानभक्षविचारः । अत्र ऋत्विग्भक्षविचारः । यजमानस्यापरिक्रयत्वेन तत्कर्तृकभक्षणे परिक्रयार्थत्वशङ्कानुदयादित्यपौनरुक्त्यम् । तथा **शेषभक्षाश्च तद्वत्** इति दशमद्वितीयपादीयनवमाऽधिकरणे, भक्षणं शेषप्रतिपत्त्यर्थमेव न त्वानत्यर्थमिति निर्णीतमिति नेह पूर्वपक्षोदयः ।

तथापि भक्षणस्यानत्यर्थत्वे सोमाङ्गदीक्षणीयादिषु न कर्तव्यम् । प्रतिपत्त्यर्थत्वे तु कर्तव्यमिति दाशमिकपूर्वोत्तरपक्षचिन्तयोः फलोक्तिमात्रपरं प्रसङ्गरूपत्वादत्र निवेशितमित्याहुः ।

इति सप्तदशमैष्टिकेषु शेषभक्षस्य संस्कारार्थतया कर्तव्यत्वाधिकरणम् (सूत्रे ३२-३३)

**अथाष्टादशमैष्टिकेषु होतुर्वरणसद्भावाधिकरणम् (सूत्राणि ३४-४०)**

**प्रवृत्तवरणत्वात्प्रतितन्त्रं वरणं होतुः क्रियेत ॥ ३४ ॥**

**(ब्रह्मापीति चेत् ॥ ३४ ॥ न प्राङ्नियमात्तदर्थं हि ॥ ३६ ॥ निर्दिष्टस्येति चेत् ॥ ३७ ॥ नाश्रुतित्वात् ॥ ३८ ॥ होतुस्तथेति चेत् ॥ ३९ ॥ न कर्मसंयोगात् ॥ ४० ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । प्रकृतौ होतुर्वरणं श्रुतम् ''अग्निर्देवो होता देवानयक्षत्'' इति । तच्च सोमाङ्गदीक्षणीयादीष्टिषु चोदकप्राप्तं कर्तव्यं, न वेति **सन्देहे**, पूर्वोक्तदिशा शेषभक्षणस्य कर्तव्यत्वेऽपि न होतृवरणस्य कर्तव्यता । तस्य होत्रानित्यर्थत्वात् । तदातनैश्च ''अग्निर्होता । स मे होता । होतस्त्वं होतासि इति होतारं वृणीते'' इत्युक्तसौमिकहोतृवरणेनैव प्रसङ्गात्सिद्धेर्न प्राकृतं होतृवरणं कार्यमिति **प्राप्ते सिद्धान्तः**, कर्मणि प्रवृत्ते होतरि क्रियमाणमिदं वरणं न दृष्टार्थं, किन्त्वदृष्टार्थम् । अतो दीक्षणीयादिष्वपीदं होतृवरणं कार्यमिति । तदाह **सूत्रे**, **होतृवरणमदृष्टार्थम्** । **प्रवृत्तवरणत्वात्** कर्मणि प्रवृत्ते होतरि वरणत्वात् । अतः **प्रतितन्त्रं** प्रतीष्टिकर्म **क्रियेते**ति ।

इत्यष्टादशमैष्टिकेषु होतृर्वरणसद्भावाधिकरणम् (सूत्राणि ३४-४०)

**अथैकोनविंशमातिथ्यायां बर्हिषः प्रतिकर्म प्रोक्षणाभावाधिकरणम् (सूत्रे ४१-४२)**

**यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोगभेदात्प्रतितन्त्रं क्रियेत ॥ ४१ ॥**

**(न वा कृतत्वात्तदुपदेशो हि ॥ ४२ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । चतुर्थस्य द्वितीयपादान्ते **विधेः कर्मापवर्गित्वात्** इत्यत्र ''यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य'' इति बर्हिरुपादानं त्रितयार्थमित्युक्तम् । एवं त्रितयार्थेनोपात्ते बर्हिषि प्रोक्षणमग्राणामपपातनं मध्यानामुपयाजनं मूलानामवसेचनमित्येवमुक्ताः प्रोक्षणादयो धर्माः किमुपसदग्नीषोमीययोरर्थे भेदेन बर्हिषि कार्याः, उताऽतिथ्यार्थे कृता एवोप-



सदग्नीषोमीययोरर्थेऽपि प्रसज्यन्त इति **सन्देहे**, त्रयाणां भिन्नभिन्नप्रयोगत्वेनैकप्रयोगमध्यपाताभावान्न प्रसङ्गादन्ययोर्धर्मसिद्धिः । न च प्रयाजादीनामेव तन्त्रत्वम् । प्रयाजादीनाम गृह्यमाणविशेषत्वेन तन्त्रत्वेऽपि प्रकृते त्वातिथ्येष्टिसन्निधानेन तदर्थमेते धर्मा इति गृह्यमाणविशेषत्वाद्धोतृवरणवद्बर्हिर्धर्मा अपि प्रत्येकं **कार्या इति प्राप्तम्** । तदाह **सूत्रे**, **यज्ञोत्पत्त्युपदेशे** आतिथ्यादिसर्वयज्ञार्थत्वोपदेशेऽपि **निष्ठितस्य** सर्वयज्ञार्थमुपात्तस्य बर्हिषः **यत्कर्म** प्रोक्षणादि, **तत्प्रतितन्त्रं क्रियेत** । **प्रयोगभेदेन** गृह्यमाणविशेषत्वादिति । **सिद्धान्तस्तु**, प्रयोगभेदेनैकतन्त्रमध्येऽन्ययोः पाताभावेऽपि बर्हिर्द्वारकलवनादिसंस्काराय यदर्थं बर्हिरुपादीयते तदुपकारका भवन्ति । प्रकृते च बर्हिस्सर्वार्थमुपादीयत इति सर्वोपकारका भवन्तीति सकृदेव कर्तव्या इति ।

इत्येकोनविंशमातिथ्यायां बर्हिषः प्रतिकर्म प्रोक्षणाभावाधिकरणम् (सूत्रे ४१-४२)

**अथ विंशमातिथ्यायां स्तरणमन्त्रस्यावृत्त्यधिकरणम् (सूत्रं ४३)**

**देशपृथक्त्वान्मन्त्रोऽभ्यावर्तते ॥ ४३ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । पूर्वोक्तमातिथ्यात्रितयसाधारणं बर्हिरातिथ्यार्थं त्रितये प्रसज्यते, किं वाग्नीषोमीयार्थेनावर्तनीया इति **सन्देहे**, पूर्वत्र प्रोक्षाणादिवत् स्तरणमन्त्रोऽपि सकृदेव प्रयोज्यः । नावर्तनीयः । सर्वार्थत्वाद्बर्हिष इति **प्राप्ते सिद्धान्तः**, स्यादेवं यदि प्रोक्षणादिवत्स्तरणं बर्हिरर्थे स्यात् । तदा तदङ्गमन्त्रोऽपि तदर्थः सन्नावर्तेत । न चैवम् । किन्तु ''बर्हिषा वेदिं स्तृणाति'' इति द्वितीयानिर्देशात् ''वेद्यां हविरासादयति'' इत्युक्तहविरासादनरूपप्रयोजनवत्त्वाच्च वेदिप्रदेशसंस्कारार्थं स्तरणं च भिन्नमिति तदङ्गमन्त्रोऽप्यावर्तनीय इति नात्र प्रसङ्गः । तदाह **सूत्रे**, **देशे**त्यादि । व्यक्तोऽर्थः ।

इति विंशमातिथ्यायां स्तरणमन्त्रस्यावृत्त्यधिकरणम् (सूत्रं ४३)

**अथैकविंशं बर्हिषो देशान्तरनयने सन्नहनहरणमन्त्रयोरप्रयोगाधिकरणम् (सूत्रे ४४-४५)**

**सन्नहनहरणे तथेति चेत् ॥ ४४ ॥**

**(नान्यार्थत्वात् ॥ ४५ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । सर्वार्थं बर्हिरिव प्राग्वंशे स्तीर्णम् । पुनस्सन्नह्य हृत्वोत्तरवेदिसमीपेऽग्नीषोमीयपशुहविरासादनार्थं स्तीर्यते । प्रकृतश्च सन्नहनमन्त्रः ''पूषा ते ग्रन्थिं ग्रथ्नातु'' इति ।

तथा ''बृहस्पतेर्मूर्ध्ना हरामि'' इति हरणमन्त्रः । तौ किं सन्नहने हरणे च पुनर्वक्तव्यौ, उतातिथ्यार्थ सन्नहनहरणकाले सकृदेव प्रयोज्याविति **सन्देहे,** सन्नहनहरणयोरावृत्तत्वात्त दङ्गमन्त्रावप्यावर्तनीयाविति **प्राप्तम्** । तदाह **सूत्रे, सन्नहनहरणमन्त्रौ तथा,** स्तरणमन्त्र इव भेदेन प्रयोज्या**विति चेदिति** । **सिद्धान्तस्तु,** दर्शपूर्णमासरूपप्रकृतौ हि लूनस्य बर्हिषो लवनदेशाद्यज्ञदेशं नेतुं यत्सन्नहनं यच्च हरणं तदर्थवितौ मन्त्रौ । न तु यज्ञदेशं प्रापितस्य बर्हिषो वेदिप्रापणार्थम् । एते च सन्नहनहरणे प्राग्वंशे स्तीर्णस्य बर्हिषोऽन्यत्र स्तरणार्थे । अतो न प्राकृतसन्नहनहरणस्थानापन्ने । भिन्नकार्यत्वात् । प्राकृतकार्यार्थौ मन्त्रावप्राकृतकार्यार्थयोस्सन्नहनहरणयोर्न प्राप्नुत इत्यमन्त्रके एवैते सन्नहनहरणे यथा प्राकृतादेव गार्हपत्यादाहवनीयं नीयमाने बर्हिषि न मन्त्रः । यथा वा प्रकृतावेव प्रमादाद्ग्रन्थिशैथिल्ये सति पुनस्सन्नह्यमाने बर्हिषि न मन्त्रस्तथेति । तदाह **सूत्रे, नान्यार्थत्वादिति** । न मन्त्रावेतत्सन्नहनहरणयोः प्रयोज्यौ । कार्यन्तरप्रयुक्तत्वादिति ।

इत्येकविंशं बर्हिषो देशान्तरनयने सन्नहनहरणमन्त्रयोरप्रयोगाधिकरणम् (सूत्रे ४४-४५)

**इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-श्रीराघवेन्द्रतीर्थगुरुसार्वभौमकृते द्वादशाध्यायस्य प्रथमः पादः**

अस्मिन् पादे अधिकरणानि २१ सूत्राणि ४५
आदितः अधिकरणानि ८६५ सूत्राणि २६४१

## अथ द्वादशाध्याये द्वितीयः पादः

पूर्वपादे प्रधानार्थानां धर्माणां तदङ्गेषूपकारकत्वानुपकारकत्वे चिन्तिते । अत्र तु पादे अप्रधानार्था अप्यन्यत्रोपकुर्वन्ति, उत नेति चिन्त्यते ।

### अथ प्रथमं विहाराग्नेर्वैदिककर्ममात्रार्थताधिकरणम् (सूत्राणि १-७)

**विहारो लौकिकानामर्थं साधयेत्प्रभुत्वात् ॥ १ ॥**

**(मांसपाकप्रतिषेधश्च तद्वत् ॥ २ ॥ निर्देशाद्वा वैदिकानां स्यात् ॥ ३ ॥ सति चौपासनस्य दर्शनात् ॥ ४ ॥ अभावदर्शनाच्च ॥ ५ ॥ मांसपाको विहितप्रतिषेधः स्यादाहुतिसंयोगात् ॥ ६ ॥ वाक्यशेषो वा दक्षिणेऽस्मिन्ननारभ्यविधानस्य ॥ ७ ॥)**



पूर्वन्याये बर्हिस्संस्काराणां साधारण्यासाधारण्यचिन्तनात्तत्प्रसङ्गेनात्र नयेऽग्नीनां साधारण्ये, चिन्त्येते । अत एवास्य पादस्य पूर्वपादानन्तरतेत्याहुः । गार्हपत्यादिकम् । किं पार्वणस्थालीपाकपचनप्रकाशनादीनां वैदिकानां च पुरोडाशहोमहविःश्रवणादीनां सर्वेषामग्नि कार्याणां साधकं सत्सर्वाङ्गम्, उत वैदिकानामेव कर्मणामिति **सन्देहे,** आधानार्जितानामग्नीनां प्रयोजनाकांक्षायां सामर्थ्याख्यलिङ्गरूपप्रमाणेन यद्यल्लौकिकं वैदिकं वाऽग्निना शक्यते कर्तुं, तत्सर्वमेभिः कार्यमित्यवगमात्सर्वार्थं गार्हपत्यादिकमिति **प्राप्तम्** । तथा च सूत्रं, **विहार** इत्यादि । विह्रियत इति **विहारो** गार्हपत्यादिरग्निः **लौकिकानामग्नीनां** कार्यमोदनपाकादिकं **साधयेत्, प्रभुत्वात्** सामर्थ्यवत्त्वादिति । **सिद्धान्तस्तु,** आधानेनार्जितानामग्नीनां प्रयोजनाकांक्षायां ''गार्हपत्ये हवींषि श्रपयन्ति'' ''दक्षिणाग्रावन्वाहार्यं पचति,'' ''यदाहवनीये जुहोति'' इति प्रत्यक्षवचननिर्दिष्टैरेव कार्यैराकांक्षाशान्तेर्न सामर्थ्यरूपलिङ्गमात्रेण सर्वार्थता कल्पयितुं युक्ता । न च ''तस्मिन्नग्नौ मांसं पचेयुः'' इति प्रतिषेधप्रसक्तौ सत्यां भवति वैदिकमांसपाकस्य शामित्र एव विधानान्न तस्य प्रसक्तिः । लौकिकमांसप्रसक्तावेव प्रतिषेधो युक्त इति तदन्यथानुपपत्त्या सर्वार्थो गार्हपत्यादिरिति शङ्क्यम् । वैदिकमांसपाकस्य शामित्रेऽग्नौ विधानेऽपि वपाश्रपणस्य ''गार्हपत्ये हवींषि श्रपयन्ति'' इति सामान्यवचनाद्गार्हपत्यप्रसक्तौ तत्प्रतिषेधपरत्वेन तद्वाक्यस्योपपत्तेरिति ।

**अत्रैके चोदयन्ति,** सप्तमस्य तृतीयपादे **विशये लौकिकः स्यात् सर्वार्थत्वात्** इति **न वैदिकमर्थनिर्देशात्** इति सूत्राभ्यां वैदिकाग्नेः प्रत्यक्षं होमादिकार्यान्तरनिर्देशान्नान्यत्र विनियोग इत्युक्तेर्नात्र पूर्वपक्षोदय इतीदमधिकरणमयुक्तमिति । **यत्त्वत्र** लिङ्गेन प्राप्तसर्वार्थत्वनिरासे सति ''तत्राग्निमुपसमाधाय स्तुवीत'' इति सामान्यविनियागेन वैदिकाग्निग्रहणनिरासाय साप्तमिकमधिकरणमिति । **तन्न** । प्रबललिङ्गप्राप्तसर्वार्थत्वनिरासे सति सामान्यवचने लौकिकपरत्वस्य स्वत एव सिध्द्या तद्वैयर्थ्यानिरासादिति ।

इति प्रथमं विहाराग्नेर्वैदिककर्ममात्रार्थताधिकरणम् (सूत्राणि १-७)

### अथ द्वितीयं सवनीयपशौ पशुपुरोडाशस्य कर्तव्यताधिकरणम् (सूत्राणि ८-१०)

**सवनीये छिद्रापिधानार्थत्वात्पशुपुराडाशो न स्यादन्येषान्तदर्थत्वात् ॥ ८ ॥**

**(क्रिया वा देवतार्थत्वात् ॥ ९ ॥ लिङ्गदर्शनाच्च ॥ १० ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ज्योतिष्टोमे अग्नीषोमीयपशोश्चोदकप्राप्तः पशुपुरोडाशः सवनीये पशौ

कर्तव्यः, न वेति **सन्देहे**, पूर्वत्र गार्हपत्यादयो लौकिकपाक इव पशुपुरोडाशोऽपि न सवनीयपशौ कर्तव्य इति **प्राप्तम्** । कुतः? पशुपुरोडाशस्य सवनीयपशुपुरोडाशानां चार्थवादरूपवाक्यविशेषवशेन छिद्रापिधानरूपैकार्थ्यात् । श्रूयते हि ''सुषिरो ह वैतर्हि पशुर्यर्हि वपामुत्खिदति यद्वीहिमयः पुरोडाशो भवत्यपिहित्या अच्छिद्रतायै'' इति वाक्यशेषः । तथा सवनीये च ''अनुसवनं सवनीयाः पुरोडाशा निरूप्यन्ते । अपिहित्या अच्छिद्रतायै'' इति । तस्मात्सवनीयपश्वङ्गपुरोडाशैः कार्यत्वादिति **निवर्तते पशुपुरोडाश** इति । तदाह **सूत्रे, सवनीयपशौ छिद्रापिधानार्थत्वात् पशुपुरोडाशो न स्यात्** । **अन्येषां** पशुपुरोडाशानां **तदर्थत्वात्** छिद्रापिधानार्थत्वादिति । **सिद्धान्तस्तु,** छिद्रापिधानवचनं छिद्रापिधानार्थं चेत्तदा सवनीयपुरोडाशैः कृतकार्यत्वात् पशुपुरोडाशो न प्रवर्तेत । तद्धि वचनं न तत्परम् । पुरोडाशयागेन छिद्रापिधानादर्शनेन प्रत्यक्षविरोधात् । किन्तु पुरोडाशयाजिस्तावकतयाऽर्थवादमात्रपरम् । न चैवं पुरोडाशयागो व्यर्थ इति शङ्क्यम् । **पशावपीति चेन्न तद्भूतवचनादिति** दशमाद्यपादीये नवमेऽधिकरणेऽभिहितरीत्या प्रधानदेवतास्मरणरूपसंस्कारार्थत्वेनार्थवत्वात् । तस्य च संस्कारस्य सवनीयपुरोडाशैरजन्यत्वात् । तत्राप्ययं पशुपुरोडाशो देवतासंस्कारार्थः कार्य इति । न चैवं दाशमिकेनैवेदं गतार्थमिति वाच्यम् । देवतास्मृत्यर्थत्वेऽपि अपिहित्या अच्छिद्रताया इति चतुर्थीश्रुत्या पिधानार्थतामपि पुरोडाशयजेराशङ्क्यात्र प्रत्यक्षविरोधेन निरासादित्यगतार्थत्वमाहुः ।

इति द्वितीयं सवनीयपशौ पशुपुरोडाशस्य कर्तव्यताधिकरणम् (सूत्राणि ८-१०)

## अथ तृतीयं सवनीये पुरोडाशे हविष्कृदाह्वानस्याभावाधिकरणम् (सूत्रं ११)

**हविष्कृत्सवनीयेषु न स्यात्प्रकृतौ यदि सर्वार्था पशुं प्रत्याहूता सा कुर्याद्विद्यमानत्वात् ॥ ११ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । प्रकृतौ दर्शपूर्णमासयोः पात्रप्रोक्षणानन्तरं आह्वानकालः । ''हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति'' इति मन्त्रो नावघाताङ्गम् । ''अव रक्षो दिवस्सपत्नं वध्यासम्'' इति मन्त्रस्यैव तदङ्गत्वात् । किन्तु ''अवघ्नन्'' इति कालोपलक्षणार्थम् । हविष्कृच्छब्दितपत्न्याः त्रिरभ्यासगुणकं ''हविष्कृदेहि'' इति मन्त्रकरणकमाह्वानं कुर्यादिति तद्वाक्यार्थः । तथैव तार्तीये द्वितीयपादे **तथाऽऽह्वानमपीति चेत्** इत्यत्रोक्तेः । तत्राऽऽह्वानमौषधार्थम् । न सान्नाय्यार्थमिति वक्ष्यमाणमप्याज्यौषधसान्नाय्यानामपि साधारणमङ्गमिति कृत्वाऽत्र चिन्त्यते । अत एव **सूत्रे, यदिशब्दः** । तदाह **भाष्ये** ''कृत्वा चिन्तेयम्'' इति । सवनीयपुरोडाशे हविष्कृदाह्वानमस्ति, उत नेति **सन्देहे,** पशाववघातकालाभावेन तत्राह्वानप्रसक्तेरभावेन तत्प्रसङ्गसिद्धत्वाभावाच्चोदकप्राप्तमाह्वानं



कार्यमेवेति **प्राप्ते सिद्धान्तः,** सान्नाय्यविकारत्वात्तदङ्गमाह्वानमपि पशौ प्राप्नोति । पशाववघातकालाभावेऽपि तदुपलक्षितस्य पात्रप्रोक्षणानन्तरकालस्यानपायात् । तस्मिन् काले तदाह्वानसम्भवेऽपि न पश्वर्थतया तदीयपात्रप्रोक्षणानन्तरमाहूता हविष्कृत्तत्प्रयोगमध्यपातिनां सवनीयपुरोडाशादीनां प्रसङ्गसिद्धेर्न पृथगाह्वातव्येति । तदाह सूत्रे, यदि **हविष्कृत्सर्वार्था** आज्यौषधसान्नाय्यार्था तदा **पशुं प्रत्याहुता सा विद्यमानत्वात्** सवनीयपुरोडाशार्थावहननमपि **कुर्यादिति** सवनीयेषु हविष्कृन्न स्यादिति ।

इति तृतीयं सवनीये पुरोडाशे हविष्कृदाह्वानस्याभावाधिकरणम् (सूत्रं ११)

## अथ चतुर्थं तृतीये सवने हविष्कृदाह्वानस्यापुनरावृत्त्यधिकरणम् (सूत्रे १२-१३)

**पशौ तु संभृते विधानात्तार्तीयसवनिकेषु स्यात्सौम्याश्विनयोश्चापवृक्तत्वात् ॥ १२ ॥**

**(योगाद्वा यज्ञाय तद्विमोके विसर्गस्स्यात् ॥ १३ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । सोमे तृतीयसवने ''सौम्यश्चरुराश्विनश्च द्विकपालः'' इत्यादिना सवनीयपुरोडाशाः श्रुताः । ते च सवनीयपश्ववयवपाकानन्तरं क्रियन्ते । तेषु किं हविष्कृदाह्वानं कार्यम्, उत **नेति सन्देहे,** पूर्वत्र पश्वर्थाह्वानस्य प्रातस्सवनिकपुरोडाशोपकारकत्वेऽपि न तार्तीयसवनीयपुरोडाशोपकारकत्वम् । हविष्कृदिति समाख्यया पत्न्याः हविष्करणमेव कार्यम् । अतः पशौ पक्वे सति कृतकार्यत्वान्निवर्तेत । ततः परेषु पुरोडाशेषु पुनस्तस्याः सहायार्थमाह्वानं कार्यमिति । तदाह सूत्रे, **पशौ संभृते** पक्वे सति **विधानात्तार्तीयसवनिकपुरोडाशानां** विहितत्वात्तार्तीय- **सवनिकेषु पुरोडाशेषु सौम्यचर्वाश्विनपुरोडाशेषु** च हविष्कृतः पुनराह्वानं **स्यात्** । तस्या **अपवृक्तत्वान्निवृत्तत्वादिति** । **सिद्धान्तस्तु,** ''हविष्कृदेहीति त्रिरवघ्नन्'' इत्यादिवचनबलत्सहायार्थमपेक्षितत्वाच्चावघातकाले समाहूतापि सा नावघातार्था । किन्तु हविष्कृदिति समाख्यावशाद्धविष्करणमात्रार्थेति कल्प्यते । तथा समाख्यातो बलवत्सामर्थ्यरूपलिङ्गाद्यज्ञे यत्र यत्र तथा सा शक्यते तत्तत्सर्वार्थेति कल्प्यते । न हविष्करणमात्रार्था । हविष्कृदिति संज्ञा तु हविष्करणस्य प्राथम्यनिमित्ता । एवञ्चावघातार्थं समाहूता सती उत्थानविधानात्प्राङ्नोत्थातुमर्हति । प्रकृतौ च पत्नीसंयाजेभ्यः पश्चात्पत्न्या उत्थानं विहितमिति सवनीयेऽपि पशौ पत्नीसंयोजपर्यन्तं सन्निहितेति तत्कालवर्तिनां सवनीयादीनां न भेदेनाह्वानं कार्यमिति ।

इति चतुर्थं तृतीये सवने हविष्कृदाह्वानस्यापुनरावृत्त्यधिकरणम् (सूत्रे १२-१३)

**अथ पञ्चमं निशि यज्ञे अमावास्यातन्त्रप्रयोगाधिकरणम् (सूत्रे १४-१७)**

**निशि यज्ञे प्राकृतस्याप्रवृत्तिस्स्यात्प्रत्यक्षशिष्टत्वात् ॥ १४ ॥**

**(कालवाक्यभेदाच्च तन्त्रभेदस्स्यात् ॥ १५ ॥ वैद्युद्धननव्रतं विप्रतिषेधात्तदेव स्यात् ॥ १६ ॥ तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत् ॥ १७ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । काम्येष्टिकाण्डे "अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यो रक्षोभ्यो बिभीयात्" इति विधाय श्रूयते "अमावास्यायां निशि यजेत" इति । तत्र निशि यज्ञे पृथक्तन्त्रं कर्तव्यम्, उत दार्शिकमेवाङ्गतन्त्रं प्रसज्यत इति **सन्देहे**, "अमावास्यायां निशि" इत्यत्र अमावास्याशब्दो न दर्शाख्यकर्मवाची । येन दर्शे प्रवृत्ते निशीष्टेर्विधानात्तत्तन्त्रोपजीवितया न भेदेन प्रयोगस्स्यात् । किन्तु "अमावास्याया अपराह्णे पिंडपितृयज्ञेन चरन्ति" इत्यत्रापराह्णसामानाधिकरण्यमिवेह निशिपदसामानाधिकरण्यात्कालवाची । किञ्च काले मुख्यः । कर्मणि तत्सम्बन्धहेतुको लाक्षणिकः । अतस्तेन दर्शकर्मणोऽनुपस्थितेः काम्येष्टिकाण्डपठितत्वेन भिन्नप्रकरणस्थत्वेन प्रकरणेनाप्यनुपस्थितेस्तत्तन्त्रोपजीवनाभावात्स्वाङ्गयुक्तैव । निशि विधानेन सवनीयपुरोडाशेषु हविष्कृतः प्रसक्तावपीह प्रसङ्गाभावाद्भेदेनाङ्गप्रयोगः कार्य इति **प्राप्तम्** । तदाह **सूत्रे, निशि यज्ञे प्राकृतस्य** दार्शिकतन्त्रस्याप्रवृत्तिः । तस्मात्तन्त्रमध्यं विना प्रकारान्तरेण **प्रत्यक्षत**स्स्वाङ्गयुक्तत्वेनैव **शिष्टत्वादिति** । **सिद्धान्तस्तु,** अमावास्याशब्दस्य कालवाचित्वेऽपि वाक्येन प्रकरणेन वा कर्मोपस्थितेरभावेऽपि दर्शप्रयोगप्रवृत्तिमत्येव काले विधीयमाना निशीष्टिः फलतस्तत्तन्त्रमध्यविधिलाभाद्दार्शिककर्मैव तन्त्रमुपजीव्य निराकांक्षा सती न स्वकीयमङ्गतन्त्रं प्रयोक्तुमीष्टे । प्रयोजनाभावात् । न च दार्शिककर्मणोऽनुपस्थितेरुक्तत्वात्कथं तदुपजीवनेनास्य विधानमिति शङ्क्यम् । कालवाचिनाप्यमावास्यापदेन तत्सम्बन्धिनः कर्मण उपस्थितिसम्भवात् । अन्यथाऽग्निप्रणयनव्रतोपायनादेरपि पृथग्विधिप्रसङ्गात् । न चेष्टपत्तिः । प्रणीतानामग्नीनां पुनः प्रणयनायोगात् । उपेतस्य व्रतस्यात्त्यक्तस्य पुनरुपादानायोगात् । तस्मात्तन्त्रमालोच्यैव विधीयमानेष्टिस्तदुपजीविन्येवेति तदङ्गैरेव प्रसङ्गादुपकारसिद्धेर्न पृथङ्निशीष्टावङ्गप्रयोग उपजीवयितुं शक्यः । इध्मबर्हिरादिकं तु भेदेन कार्यम् । सौर्यादीष्ट्यन्तरं तु दार्शिकात्प्रागप्यारब्धुं शक्यमिति न तत्र तत्तन्त्रप्रसङ्ग इति ।

**इति पञ्चमं निशि यज्ञे अमावास्यातन्त्रप्रयोगाधिकरणम् (सूत्राणि १४-१७)**



**अथ षष्ठं इध्मबर्हिरधिकरणम् (सूत्रं १८)**

**वैगुण्यादिध्मबर्हिर्न साधयेदग्न्यन्वाधानं च यदि देवतार्थम् ॥ १८ ॥**

अत्राह । किमेष एवोत्सर्गः । सर्वममावास्यातन्त्रनिशीष्ट्यर्थं साधयतीति । न खल्विध्मबर्हिर्न साधयेत् । कुतः? वैगुण्यात् । इध्मो नामाग्निसमिन्धनार्थः । स च प्रतिपद्याहितः । अभावास्यायां निशि वर्तमानस्य निशियज्ञस्याग्निसमिन्धनं साधयेत् । बर्हिरपि वेदिस्तरणार्थम् । ते यदि प्रसज्येतांविगुणो निशि यज्ञः स्यात् । तस्माद्भेदेन ते कर्तव्ये ।

इति षष्ठमिध्मबर्हिरधिकरणम् (सूत्रम् १८)

**अथ सप्तमं विकृतिष्वारम्भणीयानुष्ठानाधिकरणम् (सूत्राणि १९-२१)**

**आरम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वात्कृता हि पुनस्तदर्थेन ॥ १९ ॥**

**(स्याद्वा कालस्याशेषभूतत्वात् ॥ २० ॥ आरम्भविभागाच्च ॥ २१ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । सौर्यादिविकृतिषु दार्शपौर्णमासिकी अन्वारम्भणीयेष्टिः कार्या, न वेति **सन्देहे**, सौर्यादिविकृतीष्टिषु इष्टिरन्वारम्भणीया न कार्या । कुतः? प्रकृतौ हि सकृदेवेयमिष्टिः कार्या । न प्रतिप्रयोगमावर्तनीयेति नवमाद्यपादे **'इष्ट्यावृत्तौ प्रयाजवदावर्तेताऽऽरम्भणीया'** इत्यत्रोक्तदिशा "आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः" इति शानजन्तेनारम्भकतुः संस्कारकत्वादारम्भणीयायास्संस्कारस्य यावज्जीवमनुवर्तमानत्वात्प्रकृत्यर्थं सकृत्कृतस्य संस्कारस्य विकृतिष्वपि प्रसङ्गसम्भवादिति **प्राप्तम्** । तदाह **सूत्रे, आरम्भणीया विकृतौ न स्यात्** । **विकृतीनां** सौर्यादीनां प्राकृतकालदर्शादिमध्यपातित्वात्सा **तदर्थेन** प्रकृत्यर्थतया **कृता** हीति । **सिद्धान्तस्तु,** प्रकृतावारम्भणीयया कृतः संस्कारः कर्तरि यावज्जीवमनुवर्तत इति नावृत्त्यभावः । किन्तु आद्या प्रवृत्तिरारम्भः । सा चैकस्य कर्मण एकैव । प्रतिपर्व दर्शपूर्णमासयोः प्रयोगस्यैव पुनः पुनरारम्भः । न कर्मणः । कर्मणस्तु सकृदेवारम्भः । अतस्सकृदेवारम्भणीयायाः कर्माङ्गत्वात्तस्यास्तत्कर्मापवर्गे तदर्थस्संस्कारोऽपि निवृत्त एव । कार्यनाश्यत्वाद्धर्मस्य । विकृतिषु त्वारम्भभेदाच्चोदकप्राप्ताऽऽरम्भणीया कार्यैवेति न प्रसङ्गः ।

**इति सप्तमं विकृतिष्वारम्भणीयानुष्ठानाधिकरणम् (सूत्राणि १९-२१)**

## अथाष्टमं प्रधानानां धर्मविरोधे बहूनां धर्माणामनुष्ठानाधिकरणम् (सूत्रं २२)

**विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम् ॥ २२ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । पञ्चदशरात्रे प्रथममहः एकाहाग्निष्टुन्नामकम् । ततः पराणि त्रीण्यहानि "ज्योतिर्गौरायुः" इत्येतन्नामकानि । परिशिष्टान्येकादशाहानि द्वादशाहिकानि । तत्र प्रथमेऽहन्यग्निष्टुन्नामनिमित्ताऽऽग्नेयी सुब्रह्मण्या प्राप्ता । ज्योतिरादिनामभिश्चैकाहानां ज्योतिरादिनामकयागानां धर्मभूतैन्द्री सुब्रह्मण्या प्राप्ता । परिशिष्टेष्वहस्सु द्वादशाहधर्मभूतैन्द्री चोदकप्राप्ता । तत्र **सुब्रह्मण्या तु तन्त्रं स्यादन्यकालत्वाद्दीक्षावदिति** पूर्वाध्यायतृतीयपादीयदशमा- धिकरणे सुब्रह्मण्या उपसत्कालीनेति तन्त्रमित्युक्तत्वादैन्द्राग्नेययोर्मध्ये उपसत्काले सकृदन्यतरोक्त्यैव प्रसङ्गात्सर्वेष्वहस्सूपकारसिद्धेरेकैव सकृदुपसत्काले वाच्या । सा किमाग्नेयी ऐन्द्री वेत्यनियमः, उत ऐन्द्र्यैवेति नियम इति **सन्देहे**, नियामकाभावादाग्नेय्या ग्रहणे द्वितीयाद्यहानां धर्मवैगुण्यम् । ऐन्द्र्या ग्रहणे प्रथमाहस्य वैगुण्यमिति वैगुण्याविशेषादनियम इति वा, प्राथमिकत्वादग्निष्टुद्धर्मभूताग्नेय्येवोपादेयेति वा । एवञ्च पूर्वत्रारम्भणीयाया विकृतिष्वप्रसङ्गेऽपि मुख्यधर्माणां पश्चात्तनेषु प्रसङ्गः स्यादेवेति **प्राप्ते सिद्धान्तः**, प्रयोगापरपर्यायभावनाविधिर्हि सर्वाण्यङ्गान्युपसङ्गृह्णन्नवश्यंभाविनि कस्यचिद्वैगुण्ये "त्यजेदेकं कुलस्यार्थे" इति न्यायेन भूयसां साद्गुण्यायाल्पस्य प्रथमाहर्मात्रस्यैव वैगुण्यमङ्गीकरोति । न भूयसामित्यैन्द्र्यैव स्यान्न त्वाग्नेयी इति । तदाह सूत्रे, **विप्रतिषिद्धधर्माणां विरुद्धधर्माणामनेकेषां समवाये** सहप्रयोगे प्राप्ते **भूयसां सधर्मत्वं** साद्गुण्यं स्यादिति ।

(वार्तिककारोक्तं वर्णकान्तरम्)

अत्र सुब्रह्मण्योदाहरणं **भाष्योक्तमयुक्तम्** । यत्रान्यार्थेनान्यस्योपकारसिद्धिस्तत्र प्रसङ्गः । देवतास्मरणरूपसंस्कारार्थो हि सुब्रह्मण्यारूपो निगदः । तत्राग्नेय्या नेन्द्रः संस्कृतः । नैन्द्र्याऽग्निर्वा । अत उभये अपि सुब्रह्मण्ये भेदेन वाच्ये इति दूषयित्वाऽन्यदुदाहृत्य चिन्तितवान् **वार्तिककारादिः** ।

तथा हि, काम्येष्टिकाण्डे श्रूयते "अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं दधि मधु घृतमापो धानास्तत्सृष्टं प्राजापत्यं पशुकामः" इत्याग्नेयैन्द्रे प्राजापत्यानि पञ्चेति सप्त हर्वींषि । तत्राग्नेयस्य प्राजापत्यधानानां चैकदैवत्यत्वसामान्यदाग्नेयविकृतित्वेनाऽग्नेयस्य च दर्शे पौर्णमासे च सत्वादन्यतरधर्मप्राप्तावप्यविरोधः । ऐन्द्रपुरोडाशप्राजापत्यदध्नोश्च क्रमादैन्द्राग्नसान्नाय्यविकारत्वाद्दर्शधर्मप्राप्तिः । मधुघृतयोर्वर्णसामान्यादुपांशुयाजाज्यविकारत्वात्पौर्णमासिकाज्यधर्मप्राप्तिः । मधूदकयोस्तु **मधूदके द्रव्यसामान्यात्पयोविकारः स्यात्** इत्यष्टमाद्यपादीयान्त्यनये **आज्यं**



**वा वर्णसामान्यात्** इति सूत्रेणाज्यविकारत्वोक्तेस्तद्धर्मप्राप्तिः । घृतस्याज्यविकारत्वं तूक्तमेव । तथा चैतेषु सप्तसु यागेषु सह प्रक्रान्तेषु पौर्णमासीविकाराणां मधुघृतोदकानां "वार्त्रघ्नी पौर्णमास्यामनूच्येते" इति वचनाद्वार्त्रघ्नावाज्यभागमन्त्रौ प्राप्तौ । ऐन्द्रपुरोडाशप्राजापत्यदध्योर्द्वयोर्दर्शविकारयोः "वृधन्वती अमावास्यायाम्" इति वचनेन वृधन्वत्यौ मन्त्रवाज्यभागस्य प्राप्तौ । तत्र किममावास्यामन्त्राभ्यामाज्यभागौ कार्यौ ? किं वा पौर्णमासिकमन्त्राभ्याम् ? इति **सन्देहे**, पूर्ववदनियमः । प्राथमिकत्वादैन्द्रदध्नोः दर्शमन्त्रेणाज्यभागाविति **प्राप्ते सिद्धान्तः**, भूयसां मधुघृतोदकानामनुग्रहाय पौर्णमासिकौ वार्त्रघ्न्यावेव मन्त्रौ गृहीत्वाऽऽज्यभागौ कार्यौ । ताभ्यामेव च प्रसङ्गसिद्धकार्यत्वाद्दार्शिकौ मन्त्रौ निवर्तेते । न चोभयानुग्रहायाऽऽज्यभागयोरावृत्त्याऽनुष्ठानमस्त्विति शङ्क्यम् । गुणानुरोधेन प्रधानावृत्तेरयोगादिति । अस्मिन् पक्षे **सूत्रार्थो** व्यक्तः ।

इत्यष्टमं प्रधानानां धर्मविरोधे बहूनां धर्माणामनुष्ठानाधिकरणम् (सूत्रं २२)

## अथ नवमं तुल्यसङ्ख्याकानां धर्मविरोधे प्रथमस्यैव धर्मानुष्ठानाधिकरणम् (सूत्रे २३-२४)

**मुख्यं वा पूर्वचोदनाल्लोकवत् ॥ २३ ॥**

**(तथा चान्यार्थदर्शनम् ॥ २४ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । अध्वरकल्पेष्टौ "आग्नावैष्णवमेकादशकपालं निर्वपेदपराह्णे" "सरस्वतीमाज्यस्य यजेत" इति श्रूयते । तत्राग्नावैष्णवस्यौषधद्रव्यकत्वद्विदैवत्यत्वद्वादशकपालत्वरूपधर्मत्रयसामान्यादैन्द्राग्नविकारत्वेन दार्शिकधर्मप्राप्तिः । आज्यस्य तूपांशुयाजविकारत्वात्पौर्णमासिक धर्मा भवन्ति । तत्र किमाज्यभागौ दार्शिकाभ्यां वृधन्वत्त्वाभ्यां द्वाभ्यां मन्त्राभ्यां कार्यौ, उत पौर्णमासिकाभ्यां वार्त्रघ्नीभ्यां कार्याविति **सन्देहे**, पूर्वत्र भूयस्त्वेनैन्द्री सुब्रह्मण्येति नियमेऽपीह द्वयोरपि तुल्यत्वेनैकभूयस्त्वाभावादनियम इति **प्राप्ते**, मुख्यशब्दितप्रथमस्यैन्द्राग्नस्य स्वधर्मता । जघन्यस्य सारस्वताज्यस्य तु तद्धर्मोपजीविता । मुख्यस्यासञ्जातविरोधित्वेन प्रथममवगतस्य स्वधर्मत्वस्य त्यागे पूर्वोक्तभूयस्त्वस्य वक्ष्यमाणप्रधानत्वस्य च हेतोरभावाद्वृधन्वन्मन्त्राभ्यामेवाऽऽज्यभागौ कार्याविति **सिद्धान्तः** । तदाह सूत्रे, **मुख्यं** प्राथमिकमनुग्राह्यम् । तस्य **पूर्वं चोदितत्वात्** । यथा **लोके** सन्निहितं हित्वा नासन्निहितोऽनुगृह्यते । तद्वदिति ।

इति नवमं तुल्यसङ्ख्याकानां धर्मविरोधे प्रथमस्यैव धर्मानुष्ठानाधिकरणम् (सूत्रे २३-२४)

### अथ नवममङ्गगुणविरोधे प्रधानगुणस्यैव प्राबल्याधिकरणम् (सूत्रं २५)

**अङ्गगुणविरोधे च तादर्थ्यात् ॥ २५ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । दीक्षणीयेष्टेः सोमस्य च ''य इष्ट्या पशुना सोमेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां च वा'' इति वचनेन पर्वकालता प्राप्ता । तत्र ''द्वादशदीक्षास्तिस्र उपसदः षोडशीं प्रसूते'' इति पक्षे सोमस्य षोडशदिनसाध्यत्वेनामावास्यायां दीक्षामुपक्रम्यैकादश्यां समाप्य तिस्र उपसदः कृत्वा ततः षोडशे दिने पौर्णमास्यां सुत्या । क्रतौ द्वयोः पर्वकालतासम्भवे ''एका दीक्षा । तिस्र उपसदः । पञ्चमी प्रसूते'' इति पञ्चाहस्साध्यत्वपक्षे द्वयोः पर्वकालता सम्भवति । तत्पक्षे दीक्षायाः पर्वकालताऽनुग्रहेण सोमस्य पर्वकालता त्याज्या, किं वा विपरीतमिति **सन्देहे,** विशेषाग्रहादनियम इति वा, पूर्वन्यायेन मुख्यत्वाद्दीक्षणीयेष्टेः पर्वकालतामुपादाय सोमस्य पर्वकालता त्याज्येति **प्राप्ते सिद्धान्तः,** प्रधानसोमयागविधिर्हि साक्षात्प्रधानं प्रयुङ्क्ते । पश्चात्तदुपकारकम् । तत्सिद्धये च पश्चात्तज्जनकमिष्टिपर्वकालाद्यङ्गं प्रयुङ्क्ते । तदनन्तरमिष्ट्यादिरूपाङ्गाङ्गं कालादि प्रयुङ्क्ते । अतः प्रधानस्याङ्गे दर्शादिकाले स्वात्मना सोमस्य प्रयुक्ते सति तद्विरुद्धदीक्षणीयाद्यङ्गाङ्गं पर्वकालं पश्चात्प्रयुक्तं न क्षमत इति प्रधानसुत्याकालमेवानुगृह्य दीक्षणीयाप्रायणीयादीष्टेरग्नीषोमीयपशोश्च वाचनिकोऽपि पर्वकालो बाध्यत इतीयं बाधाबाधचिन्तारूपाऽपि विप्रतिषिद्धधर्मसमवायप्रसङ्गादिह चिन्तिता । तदाह **सूत्रे, अङ्गगुणस्य** कालादेः प्रधानगुणेन कालादिना **विरोधे** सति अङ्गानां प्रधानार्थत्वात्प्रधानगुणानुग्रह एव न्याय्य इति । फलन्त्वपर्वणि सुत्याया अनुष्ठानमिति ।

इति नवममङ्गगुणविरोधे प्रधानगुणस्यैव प्राबल्याधिकरणम् (सूत्रं २५)

### अथ दशमं परिधौ परिधियूपोभयधर्मानुष्ठानाधिकरणम् (सूत्रम् २६)

**परिधेर्व्द्यर्थत्वादुभयधर्मा स्यात् ॥ २६ ॥**

चातुर्मास्येषु ''परिधौ पशुं नियुञ्जीत'' इति श्रुतपरिधेर्व्द्यर्थत्वात्परिधियूपयोर्द्वयोः कामार्थत्वादाहनीयाग्निपरिधानरूपं परिधिकार्यं, पशुनियोजनरूपयूपकार्यं च कुर्वन्नुभयधर्मा सम्मार्जनादिपरिधिधर्मवान्, परिव्याणादियूपधर्मवांश्च स्यादितीदं सूत्रं प्रधानधर्मानुग्रहवद्यूपधर्मानुग्रहः स्यादित्युत्तराधिकरणमुत्थापयितुम् 'तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात्स्यात्' इति नवमद्वितीयपादोक्तमेवेह स्मारयितुं प्रवृत्तमिति प्राप्तिसूत्रमात्रमेतदित्याहुः ।

इति दशमं परिधौ परिधियूपोभयधर्मानुष्ठानाधिकरणम् (सूत्रं २६)



### अथैकादशं परिधौ विरोधियूपधर्माननुष्ठानाधिकरणम् (सूत्राणि २७-२९)

**यौप्यास्तु विरोधे स्यान्मुख्यानन्तर्यात् ॥ २७ ॥**

**(इतरो वा तस्य तत्र विधानात् ॥ २८ ॥ उभयोश्चाङ्गसंयोगः ॥ २९ ॥)**

एवं पूर्वसूत्रेण परिधेरुभयधर्मवत्त्वे स्मारिते सत्यविरुद्धोभयधर्मानुष्ठाने विवादाभावे च विरुद्धधर्मेषु किं यूपधर्माः कार्याः, परिधिधर्मा वेति **सन्देहे,** यूपस्य यागसाधनपशुसम्बन्धाद्यूपधर्माणामन्तरङ्गता । यागसाधहविस्सम्बन्ध्यग्निसम्बन्धात्परिधेस्तद्धर्माणां च बहिरङ्गता । तस्मात्प्रधानप्रत्यासत्त्या यूपधर्माः कार्या इति **प्राप्तम्** । तदाह सूत्रे, **विरोधे यौप्याः** यूपधर्मा एव स्युः । तेषां मुख्यं प्रधानं प्रत्यानन्तर्यात् अव्यवधानादिति । **सिद्धान्तस्तु,** चातुर्मास्येषु चोदकेन परिधानरूपत्वकार्यद्वारा प्राप्त एव परिधिर्नियोजतरूपकार्ये ''परिधौ पशुं नियुञ्जीत'' इति विधीयते । स च प्राप्नुवन् स्वकार्यविशिष्ट एव प्राप्नोति । तादृशे च परिधौ वाचनिकेनापि नियोजनरूपकार्येण परिधिधर्माविरुद्धा एव धर्माः प्राप्नुवन्ति । अन्यथा विधेयस्य परिधेरन्यथाभावात्परिधौ पशोर्नियोजनं न कृतं स्यात् । अन्तरङ्गत्वबहिरङ्गत्वकृतविशेषसत्वेऽप्युभयोरङ्गत्वाविशेषेणाङ्गगुणविरोधन्यायानवतारात् । अतो विरोधे परिधिधर्मा इति ।

इत्येकादशं परिधौ विरोधियूपधर्माननुष्ठानाधिकरणम् (सूत्राणि २७-२९)

### अथ द्वादशं सवनीयपुरोडाशयोः पशोरेव तन्त्रिताधिकरणम् (सूत्राणि ३०-३२)

**पशुसवनीयेषु विकल्पस्स्याद्वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ॥ ३० ॥**

**(पाशुकं वा तस्य वैरोषिकाम्नानात्तदनर्थकं विकल्पे स्यात् ॥ ३१ ॥ पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ॥ ३२ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । सोमयागे सवनीय इति समाख्यया सवनत्रयार्थतया क्रियमाणः पशुः प्रातस्सवने प्रारभ्य तृतीयसवने समाप्यते । ''वपया प्रातस्सवने चरन्ति । पुरोडाशेन माध्यन्दिने । अङ्गैस्तृतीयसवने'' इति वचनात् । ''अनुसवनं सवनीयाः पुरोडाशा निरूप्यन्ते'' इति प्रतिसवनं सवनीयपुरोडाशा विहिताः । तत्र माध्यन्दिनीयानां तृतीयसवनगतानां च पुरोडाशानां माध्यान्दिनतृतीयसवनयोरेव प्रक्रमात्परिसमाप्तेश्च पशुतन्त्रमध्यपातेन प्रसङ्गित्वं सिद्धमेवेति प्रातस्सवनिकपुरोडाशानां पशोश्च मिथश्चिन्ता । तेषां पशुतन्त्रमध्ये विध्यनिर्णयात् । तत्र किं पुरोडाशास्तन्त्रिणः साङ्गप्रयोगवन्त इति यावत् । पशुस्तु प्रसङ्गी, किं वा पशुरेव तन्त्रवान् । पुरोडाशास्तु प्रसङ्गिण इति

**सन्देहे,** यस्य कर्मण उपक्रमावसानयोर्मध्येऽन्यदुपनिपतति स तत्तन्त्रि । मध्यपाति च प्रसङ्गि । प्रकृते च प्रत्यनुवाककाले द्वयोस्समकालमुपक्रमात्कस्योपक्रमसमाप्त्योर्मध्ये कस्य पात इति नावगम्यते । न च प्रातस्सवनिकपुरोडाशानां तत्रैव समाप्तिः । पशोस्तु तृतीयसवन इति समाप्तौ विशेषसत्त्वात्पशुरेव दीर्घकालत्वात्तन्त्रीति शङ्क्यम् । ''अग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति'' इति पौरोडाशिकानुयाजोत्कर्ष विधानेन तेषामपि दीर्घकालत्वात् । एवञ्च पूर्वत्र परिधियूपधर्मयोर्विरोधे यूपधर्माणां बाधोक्तावपीह पशोः प्रातस्सवनिकपुरोडाशानां च ये धर्मास्तेषां विरोधे तन्त्रित्वप्रसङ्गित्वयोर्विशेषाग्रहादुभयधर्माणां विकल्पेनानुष्ठानमिति **प्राप्तम्** । तदाह **सूत्रे, सवनीयपशौ** सवनीयपुरोडाशेषु च तन्त्रित्वस्य **विकल्पस्स्यात्** । न च पशोरेव तन्त्रितेति वाच्यम् । **वैकृतश्चेदित्यत्र** चेदिति समुच्चये । पशुर्वैकृतः । पुरोडाशाश्च वैकृताः विकृतिसम्बन्धिनः । **उभयोरप्यश्रुतिभूतत्वात्** प्रत्यक्षशिष्टतन्त्रत्वाभावात् । यदि कस्यचिदपि तन्त्रत्वं प्रत्यक्षशिष्टंस्यात्तदा स तन्त्रीति निश्चीयेत । न चेह तथेति । **सिद्धान्तस्तु,** पशुरेव तन्त्री । पुरोडाशास्तु तन्मध्यपातात्प्रसङ्गिणः । कुतः? तस्य वैशेषिकाम्नानात् । ''इषिता दैव्या होतारः'' इत्ययं प्राकृतः सूक्तवाकोऽग्नीषोमीयपशौ चोदकात्प्राप्तः । ''अग्निमध्ये होतारमवृणीत'' इत्येवं मैत्रावरुणकर्तृकोऽविकृतः पठितः । पुनश्चाग्नीषोमीयात्सवनीयपशुरतिदेशतः प्राप्त । ''अग्निमध्ये होतारमवृणीत अयं स्तुतासुती यजमानः'' इति विकृतः प्रत्यक्षेण पठ्यते । स च पाठस्सवनीयपशोः प्रसङ्गित्वे तस्य सूक्तवाकानपेक्षित्वेनानर्थकस्स्यात् । मैत्रावरुणकर्तृकस्यास्य सूक्तवाकस्य पुरोडाशानां तन्त्रित्वेनानन्वयश्च स्यात् । तत्र मैत्रावरुणाभावात् । विकल्पपक्षे च नित्यवच्छ्रवणविरोधात् । तस्माद्वैशेषिकाङ्गाम्नानात्पशुरेव दीर्घकालस्तन्त्री । तन्मध्यपातित्वात्प्रातस्सवनिकाः पुरोडाशाः प्रसङ्गिणः । अनूयाजानामुत्कर्षस्तु पाशुकानामेव । ''अङ्गैस्तृतीये सवने'' इति पाशुकाङ्गप्रचारोत्कर्षादेव तेषामप्युत्कर्षे प्राप्ते लाघवेनाग्निमारुतादूर्ध्वदेशमात्रं विधीयत इति न पुरोडाशानां दीर्घकालत्वमिति प्रसङ्गित्वमेवेति ।

इति द्वादशं सवनीयपशुपुरोडाशयोः पशोरेव तन्त्रताधिकरणम् (सूत्राणि ३०-३२)

## अथ त्रयोदशं समानतन्त्रयोः प्रकृतिविकृत्योर्विकृतितन्त्रताधिकरणम् (सूत्रं ३३)

**अपूर्वं च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात् ॥ ३३ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ''यावज्जीवं दर्शपूर्णमासाभ्यां यजेत । पौर्णमास्यां पौर्णमास्या यजेत । अमावास्यायाममावास्यया यजेत'' इत्यादिवचनैः प्रकृतिर्यावज्जीवं पर्वणि पर्वणि प्रयुज्यते । काम्यनक्षत्रेष्टिभिन्ना, अग्निसंसर्गनिमित्तकेष्टिभिन्नाश्च काम्यनैमित्तिकविकृतीष्टयोऽपि ''य इष्ट्या,



पशुना'' इत्यादिवचनेन पर्वण्येव पतंति । तत्र प्रकृतिविकृत्योरेकस्मिन्नेव पर्वणि सहप्रयोगे कस्य तन्त्रिता, कस्य प्रसङ्गित्वमिति **सन्देहे,** प्रकृतेर्नित्यतयाऽवश्यकर्तव्यत्वात्सा पूर्वमुपतिष्ठते । पश्चात्कामेन वा निमित्तेन वा विकृतीष्टिरापतन्तीतस्तन्त्रोपजीविनीति, पूर्वत्र सवनीयपशोरिव प्रकृतेस्तन्त्रिता । विकृतेस्तु प्रसङ्गितेति प्राप्ते सिद्धान्तः । प्रकृतेः पूर्वमुपस्थितत्वेनावश्यकर्तव्यत्वेऽपि सर्वदा प्राकृतधर्मप्रवृत्तौ वैकृतविशेषविधीनामननुष्ठापकत्वरूपाप्रामाण्यप्रसङ्गादतो वैकृतास्सप्तदशसामिधेन्यादिप्राकृतधर्मान् बाधन्त इति विकृतीनां तन्त्रिता । प्रकृतेः प्रसङ्गिता । न च द्वयोस्तन्त्रितायां विकल्पस्स्यादिति वाच्यम् । यावज्जीवप्रयोगस्यैकत्वे हि प्रकृतिः पूर्वप्रवृत्तेति कदाचितन्त्रिणी स्यात् । वैकृतविशेषविध्यानर्थक्यप्रसङ्गाद्विकृतिरपि कदाचित्तन्त्रिणीति विकल्पस्स्यात् । न चैवं पर्वणि पर्वणि भिन्ना एव प्रयोगाः प्रक्रम्यन्ते समाप्यन्ते इति द्वितीयान्त्यपादे यावज्जीविकोऽभ्यासः इत्यत्र निर्णयात् । कामेन निमित्तेन वा पतन्ती वैकृतेष्टिर्नित्यामपि प्रकृतिं बाधित्वा स्वयं पूर्वं निविशत इति सैव तन्त्रिणीति । तदाह **सूत्रे, पूर्वं** वैकृततन्त्रं **प्रकृतिषु** प्रसज्यते । प्रकृत्या विकृतिः **समानतन्त्रा चेत्,** सहप्रयोजवती चेत्तदेत्यर्थः । कुतः ? कामादिप्रयुक्ताया विकृतेरनित्यत्वात्कादाचित्कत्वेन नित्यधर्मबाधकत्वाश्यम्भावात् । अन्यथा वैकृतविशेषविधान**मनर्थकं स्यादिति** । यद्यपि **विकृतेः प्रकृतिकालत्वात्सद्यस्कालोत्तरेति** पञ्चमान्त्यपादीयाधिकरणे प्रकृतेर्व्यहकालता, विकृतेस्सद्यस्कालतेत्युक्त्या नास्ति समानतन्त्रता तथापि कृत्वा चिन्तेयम् । अत एव **सूत्रे, समानतन्त्रा** चेत्युक्तिः । तदाह **भाष्ये,** कृत्वा चिन्तेयमिति ।

इति त्रयोदशं समानतन्त्रयोः प्रकृतिविकृत्योर्विकृतितन्त्रताधिकरणम् (सूत्रं ३३)

## अथ चतुर्दशमाग्रयणे प्रसूनबर्हिषामेव ग्रहणाधिकरणम् (सूत्रं ३४)

**अधिकश्च गुणस्साधारणेऽविरोधात्कांस्यभोजिवदमुख्येऽपि ॥ ३४ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । आग्रयणेष्टौ ऐन्द्राग्नवैश्वदेवद्यावापृथिव्यानि त्रीणि बर्हिषि । तत्र द्यावापृथिव्यस्य वैश्वदैविकद्यावापृथिव्यविकारत्वात्प्रसूनं बर्हिः प्राप्तम् । **पुष्पितकाशमयं बर्हिरित्यर्थः** । उत्तरयोस्तु प्रसूनमप्रसूनं वा बर्हिर्मात्रम् । तत्र समानतन्त्रेषु किं प्रसूनमप्रसूनं वोपादेयम्, उत प्रसूनमेवेति **सन्देहे,** ऐन्द्राग्नवैश्वदेवयोर्मुख्यत्वादनेकत्वात्तदीयबर्हिषि प्रसूनमप्रसूनं वेत्यनियमरूपो गुणस्स्यात् । द्यावापृथिव्यस्य तु जघन्यत्वादेकत्वाच्च न तदीयः प्रसूनमेवेति नियमरूपो गुणः । एवं पूर्वत्र प्रकृतिरिव द्यावापृथिव्यैककपालोऽपि प्रसङ्गीति **प्राप्ते सिद्धान्तः,** यद्विहितं तदेवाङ्गम् । ऐन्द्राग्नवैश्वदेवयोस्तु बर्हिर्मात्रमेव विहितम् । अतस्तदेवाङ्गम् । अनियमस्त्वविहितत्वादनङ्गम् । अतो न

तदनुग्राह्यमिति प्रसूनमेवोपादेयम् । तदुपादाने हि द्यावापृथिव्यस्यैन्द्राग्नादेश्च त्रयाणामप्यवैगुण्यम् । मुख्यानुनोधेनानियमे तु द्यावापृथिव्यस्य वैगुण्यं स्यात् । तस्मात्प्रसूनमेव ग्राह्यमिति । तदाह **सूत्रे, अधिकः** प्रसूनतारूपो **गुणः साधारणे मुख्यसाधारण्ये सत्यविरोधान्**मुख्यविरोधाभावादमुख्येऽपि **स्यात्** । यथा शिष्यस्य कांस्यभोजित्वनियमः । गुरोस्तदनियमः । तन्त्रतयोर्यद्येकस्मिन् पात्रे भोजनं प्रसक्तं चेत्तदा गुरुधर्मलोपेन शिष्यस्यामुख्यस्यापि धर्मोऽनुगृह्यते तद्वदिति ।

इति चतुर्दशमाग्रयणे प्रसूनबर्हिषामेव ग्रहणाधिकरणम् (सूत्रं ३४)

**अथ पञ्चदशं द्यावापृथिव्यादीनां सर्वेषामेव तन्त्रित्वाधिकरणम् (सूत्राणि ३५-३७)**

**तत्प्रवृत्त्या तु तन्त्रस्य नियमस्स्याद्यथा पाशुकं सूक्तवाकेन ॥ ३५ ॥**

**(न वाऽविरोधात् ॥ ३६ ॥ अशास्त्रलक्षणत्वाच्च ॥ ३७ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । यदि द्यावापृथिव्यधर्मस्य प्रसूनस्याश्रयेण प्रवृत्तिस्तथा तेनैव द्यावापृथिव्यं तन्त्रं प्रवर्तेत । यथा पाशुकसूक्तवाकप्रैषप्रवृत्तावन्यदपि पाशुकमेव तन्त्रं प्रवर्तते । पुरोडाशास्तु प्रसङ्गिणः । एवमैन्द्राग्नेस्तत्तन्त्रोपजीवित्वात्प्रसङ्गितेति वक्तव्यम् । तत्र चैन्द्राग्नादि विरुद्धा ये धर्मास्तेऽपि द्यावापृथिव्यवत्प्रसज्यन्ते, न वेति सन्देहे, द्यावापृथिव्यधर्मप्रसूनवद्विरुद्धधर्माअपि प्रसज्येरन् प्रसङ्गत्वे चैन्द्राग्नवैश्वदेवयोरिति **प्राप्तम्** । तदाह **सूत्रे, तत्प्रवृत्त्या** प्रसूनबर्हिःप्रवृत्त्या द्यावापृथिव्यकतन्त्रनियमस्स्यात् । **यथा सूक्तवाकेन** पाशुकतन्त्रत्वं नियम्यते तद्वदिति । तथा च सवनीयपुरोडाशे तद्विरुद्धसवनीयपशुधर्मप्रसक्तिवत्तद्विरुद्धधर्मा अपि भवेयुरिति । **सिद्धान्तस्तु,** सूक्तवाकाद्युपदेशानर्थक्यभिया पाशुकसूक्तवाकादिप्रवृत्तिरेवेत्यन्यस्यापि पाशुकतन्त्रस्य प्रवृत्तावसाधारणं लिङ्गम् । प्रसूनबर्हिस्तु ऐन्द्रग्नादिसाधारणत्वान्न द्यावापृथिव्यतन्त्रप्रसिद्धावसाधारणं लिङ्गम् । नियमेन प्रसूनोपादानं तु साधारणतया मुख्याविरुद्धत्वात् । न चैतवता द्यावापृथिव्यतन्त्रप्रवृत्तिरनुमातुं शक्या । अतः सर्वेऽपि तन्त्रिण इति मुख्याविरुद्धधर्मेषु मुख्यस्यैवानुग्रहः । न जघन्यस्य द्यावापृथिव्यैवेति ।

इति पञ्चदशं द्यावापृथिव्यादीनां सर्वेषामेव तन्त्रित्वाधिकरणम् (सूत्राणि ३५-३७)

**इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते द्वादशाध्यायस्य द्वितीयः पादः**

अस्मिन् पादे अधिकरणानि १५ सूत्राणि ३७

आदितः अधिकरणानि ८८० सूत्राणि २६७८



## अथ द्वादशाध्यायस्य तृतीयः पादः

पूर्वपादे प्रतिपादितस्य भूयोऽनुग्रहन्यायो मुख्यत्वात् । बाधक इत्यस्यापवादोत्र पादे प्राधान्येन चिन्त्यत इति तदानन्तर्यं पादभेदश्च ।

**अथ प्रथमं विश्वजिति वत्सत्वगहतवाससोः समुच्चयाधिकरणम् (सूत्रे १-२)**

**विश्वजिति वत्सत्वङ् नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् ॥ १ ॥**

**(अविरोधो वा उपरिवासो हि वत्सत्वक् ॥ २ ॥)**

विश्वजिदभिजितावग्निष्टोमादभितो भवतः । उभयतो ज्योतिष्टोमं मध्येऽभिप्लवष्षडहः ''पशुकामो ह्येतेन यजेत'' इति विहितेऽष्टरात्रेऽहीने प्रथममहः विश्वजिन्नामकम् । ततोऽभिप्लवष्षडहः । तदनन्तरमहः अभिजित् । तत्राद्येऽह्नि विश्वजिन्नाम्न्येकाहे प्रकृतेर्नाम्ना च विश्वजिद्यागे ''अवभृथादुपेत्य वत्सत्वचं परिधत्ते'' इति विहितवत्सत्वक् प्राप्नोति । इतरेषु षट्स्वहस्सु प्रकृतेर्ज्योतिष्टोमात् ''अहतं वासः परिधत्ते'' इति विहिताहतवासः नाम्ना प्राप्नोति । ततोऽभिजिदष्टमः । तत्र किमहतवासहसो ग्रहः, उत वत्सत्वचः ? इति **सन्देहे,** पञ्चदशरात्रे भूयोऽनुग्रहायैन्द्रीवदिहापि भूयोऽनुग्रहाय चोदकप्राप्ताहतवाससो ग्रहणम् । न चान्तर्बहिराच्छादनरूपकार्यभेदात्समुच्चयोऽस्त्विति शङ्क्यम् । ''परिधत्ते'' इति त्वगहतवाससोर्द्वयोरपि परिधानरूपैकार्थत्वश्रवणात् । न च दशमचतुर्थपादे **आच्छादने त्वैकार्थ्यात्** इत्यधिकरणोक्तदिशा तार्प्याहतवाससोरिव समुच्चयोऽस्त्विति शङ्क्यम् । तत्र ''वासांसि विभ्रंशते'' इति वासोबहुत्वश्रवणवदिह वासोबहुत्वाश्रवणात् । अतोऽहतवासस एवोपादानमिति **प्राप्तम्** । तदाह **सूत्रे, विश्वजिति** नाम्ना **वत्सत्वग्**भवति । अन्येषु चोदकाद**हतं स्यात् तन्त्रिणां भूयस्त्वात्** अहतवास एवोपादेयं स्यात् इति । **सिद्धान्तस्तु,** वासोबहुत्वस्यात्राश्रवणेऽपि गुह्याच्छादने वत्सत्वचोऽयोग्यत्वादुपरिवासःकार्ये सा विधीयते इति ''कम्बळं परिधत्ते'' इत्यादौ ''उपरितनं वासः परिदधाति'' इति प्रयोगाच्चोदकप्राप्तमहतं वासः परिदधातीति शब्दस्य गुह्याच्छादनयोग्यत्वात्तत्कार्ये विधीयत इति त्वगहतवाससोर्द्वयोर्भिन्नकार्यत्वात्समुच्चय इति ।

इति प्रथमं विश्वजिति वत्सत्वगहतवाससोः समुच्चयाधिकरणम् (सूत्रे १-२)

**अथ द्वितीयमनुनिर्वाप्यपुरोडाशानां पुरोडाशस्यैव तन्त्रित्वाधिकरणम् (सूत्राणि ३-८)**

**अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमस्स्याच्छिष्टकृद्दर्शनाच्च ॥ ३ ॥**

**(आगन्तुकत्वाद्वा स्वधर्मा स्याच्छ्रुतिविशेषादितरस्य च मुख्यत्वात् ॥ ४ ॥ स्वस्थानत्वाच्च ॥ ५ ॥ स्विष्टकृच्छ्रवणान्नेति चेत् ॥ ६ ॥ विकारः पवमानवत् ॥ ७ ॥ अविकारो वा प्रकृतिवच्चोदनां प्रति भावाच्च ॥ ८ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''अग्नीषोमीयस्य पशुपुरोडाशमनु देवसुवां हवींषि निर्वपति'' इत्यग्निप्रकरणे श्रुतम् । तत्रानुनिर्वाप्याणामष्टानां हविषां किं तन्त्रिता पुरोडाशस्य प्रसङ्गित्वम्, उत विपरीतमिति **सन्देहे,** पूर्वत्र समुच्चयसम्भवेन मुख्यविश्वजिद्धर्मवत्सत्वगबाधेऽपीहानुनिर्वाप्याणामष्टानां हविषां भूयस्त्वेन तेषां तन्त्रित्वस्य न्याय्यतया मुख्यपुरोडाशस्य प्रसङ्गित्वौचित्याद्धर्मस्य बाध इति **प्राप्तम्** । तदाह **सूत्रे, अनुनिर्वाप्येष्वित्यादि** । व्यक्तोऽर्थः । **सिद्धान्तस्तु,** यत्र सर्वे तन्त्रिणस्तत्रैव भूयोऽनुग्रहन्यायः । यत्र त्वेकस्तन्त्री, उत्तरे प्रसङ्गिणः । न तत्रायं न्यायः । तथा चात्र हविषां पशुपुरोडाशेन सह प्रयोगचोदनैक्ययोरभावेनैकोपक्रमावसानाभावात्पशुपुरोडाशवन्न तन्त्रित्वमिति नात्र भूयोनुग्रहन्यायः । अपि तु पशुपुरोडाशतन्त्रमध्ये विधानादनुनिर्वाप्यास्तन्त्रोपजीविनः भूयांसोऽपि न स्वकीयं धर्मं प्रयुञ्जते । किन्तु तन्त्रिभूतपुरोडाशाङ्गजन्योपकारमेव स्वीकृत्य निराकांक्षा इति तेषामेव प्रसङ्गित्वमिति । **फलं तु पूर्वपक्षे** अष्टसु हविष्षु पशुपुरोडाशोपकारैः पश्वर्थैरेकादशप्रयाजादिभिरुपकार सिद्धेः पृथक्पृथक्पश्च प्रयाजादयः कार्याः । **सिद्धान्ते तु** नेति ।

इति द्वितीयमनुनिर्वाप्यपुरोडाशानां पुरोडाशस्यैव तन्त्रिताधिकरणम् (सूत्राणि ८)

## अथ तृतीयं भिन्नोपकारकाणां गुणानां समुच्चयाधिकरणम् (सूत्रं ९)

**एककर्मणि शिष्टत्वाद्गुणानां सर्वकर्म स्यात् ॥ ९ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोराघारौ प्रकृत्य श्रूयते ''ऋजुमाघारयति । ऊर्ध्वमाघारयति । सन्ततमाघारयति'' इत्यादि । तत्रोर्ध्वतादीनां विकल्पः, समुच्चयो वेति **सन्देहे,** पूर्वत्र यथा पशुपुरोडाशधर्मैः कार्यसिद्धेर्देविकाहविर्धर्माणां निवृत्तिस्तथा सन्ततादीनामाघारणरूपैकक्रियार्थत्वेनान्यतमेनाप्याघारणरूपकार्यसिद्धेरन्यतमस्य निवृत्तेर्विकल्प इति **प्राप्ते सिद्धान्तः,** जुहूमूर्ध्वमुद्धृत्याविच्छिन्नतया ऋजुतया आघारणस्य शक्यतयोर्ध्वतादीनां सह सम्भवात्सहोपसंहारिप्रयोगवचनानुग्रहाच्च समुच्चय इति । तदाह **सूत्रे, एकस्मिन्नाघारकर्मणि शिष्टानां** चोदितानामूर्ध्वतादीनां **गुणानां सर्वेषां च कर्म** क्रियानुष्ठानं स्यादिति ।

इति तृतीयं भिन्नोपकारकाणां गुणानां समुच्चयाधिकरणम् (सूत्रं ९)



## अथ चतुर्थं प्रयोजनैक्ये गुणानां विकल्पाधिकरणम् (सूत्राणि १०-१५)

**एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात्प्रधानस्य ॥ १० ॥**

**(अभ्यस्येतार्थवत्त्वादिति चेत् ॥ ११ ॥ नाश्रुतित्वात् ॥ १२ ॥ सति चाभ्यासशास्त्रत्वात् ॥ १३ ॥ विकल्पवच्च दर्शयति ॥ १४ ॥ कालान्तरेऽर्थवत्त्वं स्यात् ॥ १५ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''व्रीहिभिर्यजेत'' ''यवैर्यजेत'' इत्यादिषु किं विकल्पः, उत समुच्चय इति **सन्देहे,** पूर्वत्राघारणक्रियैक्येनोर्ध्वतादीनां समुच्चय इवात्रापि यागरूपकार्यैक्यात्सर्वोपसंहारिप्रयोगवचनानुग्रहाच्च समुच्चयः । न चैवं गुणानुरोधेनायुक्ता प्रधानावृत्तिः प्रसज्यत इति शङ्क्यम् । ज्योतिष्टोमे ''ऐन्द्रवायवं गृह्णाति'' ''मैत्रावरुणं गृह्णाति'' इत्यादिना विहितानां ग्रहाणां युगपदभ्यासमाश्रित्य समुच्चयसम्पादनवददोषत्वाद्व्रीहियवमेलनेन यागकृतिसम्भवाच्चेति **प्राप्ते सिद्धान्तः,** ज्योतिष्टोमे हि ''ऐन्द्रवायवं गृह्णाति'' इत्यादिभिर्वाक्यैर्ग्रहणेनैन्द्रवायवादिदेवतासम्बन्धं कुर्यादिति द्रव्यदेवतासंयोगा विधीयन्ते । ते च प्रयाजादिवदट्टार्था इत्यपर्यायग्राहिणा प्रकरणेन युगपद्गृह्यन्ते । यागश्च विना देवतासम्बन्धं ग्रहणमात्रेण न शक्यते सम्पादयितुमिति युक्तम् । तत्र बलात्प्रधानाभ्यासेन सर्वेषां देवतासम्बन्धानां सम्पादनम् । व्रीहियवौ तु न यागार्थतया विधीयेते । येनैन्द्रवायवादिवत्प्रकरणेन युगपद्ग्रहणं स्यात् । किन्तु यदाग्नेयादिवाक्यान्तरविहितयागानुवादेनोत्पत्तिशिष्टपुरोडाशप्रकृतिद्रव्यतया द्वाभ्यां वाक्याभ्यां विधीयेते । अत एकद्रव्येण कार्यसिद्धेर्द्रव्यान्तरस्य निवृत्तिः । प्रयोगवचनमपि पुरोडाशप्रकृतिद्रव्यतया व्रीहियवौ गृह्णदेकैकमेव पर्यायेण गृह्णाति । न तु युगपदुभयम् । अन्योन्यनिरपेक्षवाक्यद्वयेन विधानात् । अत एव न मिश्रत्वमपि । तस्माद्विकल्पः । तदाह **सूत्रे, समुच्चये गुणानुरोधेन प्रधानस्यावृत्तिः स्यात्** । अत **एकार्था** व्रीहयो **विकल्पेरन्निति** ।

यद्यप्यत्र विकल्पस्थलेऽन्योपकारार्थं कृतेनान्यस्योपकारसिद्धिरूपप्रसङ्गो नास्ति । तथाप्यन्येन कार्यसिद्धेरन्यस्य निवृत्तिरित्येतावतैव साम्येनात्र निवेश इत्याहुः ।

इति चतुर्थं प्रयोजनैक्ये गुणानां विकल्पाधिकरणम् (सूत्राणि १०-१५)

## अथ पञ्चमं वैगुण्यसमाधानार्थानां प्रायश्चित्तानां विकल्पाधिकरणम् (सूत्रं १६)

**प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात्सर्वस्य निर्घातः ॥ १६ ॥**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''यद्दक्तो यज्ञ आर्तिमियात् भूःस्वाहेति गार्हपत्ये जुहुयात् । अथ

यदि यजुष्टो दक्षिणाग्नौ भुवः स्वाहेति, यदि सामतः सुवः स्वाहेत्याहवनीये जुहुयात्'' इत्यादिना ऋग्वेदादिविहितानामङ्गानामननुष्ठानात्तद्वेदनिषिद्धानामनुष्ठानाच्च प्राप्तयज्ञवैगुण्यनिमित्तानि प्रयश्चित्तानि। तथा दर्शपूर्णमासयोरतिपातनिमित्तकवैगुण्यनिमित्तानि'' योऽमावास्यां पौर्णमासीं वाऽतिपातयेदग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्। योऽमावास्यां पौर्णमासीं वाऽतिपातयेत् ''वैश्वानरं द्वादशकपालं निर्वपेत्'' इत्यादिना वैगुण्यसमाधानार्थतया श्रुतानि किं विकल्प्यन्ते, किं वा समुच्चीयन्त इति **सन्देहे,** क्रतुवैगुण्यसमाधानरूपस्य प्रायश्चित्तकार्यस्यैकत्वेऽप्यदृष्टार्थत्वाद्व्रीहियववद्दृष्टार्थत्वाभावात् **अङ्गानां तु शब्दभेदादिति** पूर्वाध्यायाद्यपादोक्तदिशा प्रयाजादीनां करणानुग्रहरूपकार्यैक्येप्यदृष्टार्थत्वात्समुच्चय इव पथिकृद्वैश्वानरादीनां समुच्चय इति **प्राप्ते सिद्धान्तः,** प्रयाजादयो हि प्रथममनिर्जातकार्या एव पर्यायग्राहिणा प्रकरणेन युगपद्ग्रहणात्तद्वशेन च सर्वैरेव प्रयाजादिभिर्मिलितैः स्वस्वावान्तरापूर्वद्वारा करणानुग्रहरूपकार्यसिद्धिरिति कल्पनाद्युक्तस्तत्र समुच्चयः। प्रकृते तु क्रतुवैगुण्यमेकं निमित्तीकृत्यान्योन्यनिरपेक्षैर्वाक्यैर्विधीयमानानि कर्माणि प्रत्येकमेव तत्समाधानार्थानीति विज्ञायमानानि सन्ति व्रीहियववद्विकल्प्यन्त इति। न च ऋक्तो यज्ञार्थिता भिन्नेति निमित्तभेदाद्भिन्नार्थता तेषामिति शङ्क्यम्। हविरुभयत्ववद्दक्त इत्यादेरविवक्षितत्वेन यज्ञार्थत्वमात्रस्यैव विवक्षितत्वादिति। तदाह **सूत्रे, निष्पन्नेन** क्रतुवैगुण्यरूपनिमित्तेन **सर्वेषामभिसंयोगो** यस्मात् **सर्वस्य** वैगुण्यस्यैकेनैव **निर्घातः स्यादिति।** तस्मादेकार्थत्वात् प्रायश्चित्तेषु विकल्पस्स्यादिति।

इति पञ्चमं वैगुण्यसमाधानार्थानां प्रायश्चित्तानां विकल्पाधिकरणम् (सूत्रं १६)

### अथ षष्ठं नैमित्तिकप्रायश्चित्तानां समुच्चयाधिकरणम् (सूत्रम् १७)

**समुच्चयस्त्वदोषनिर्घातेषु ॥ १७ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः। यानि यज्ञपात्रभेदनहविर्द्रव्यस्कन्दनादिनिमित्तानि ''भिन्ने जुहोति'' इत्यादिवाक्योक्तानि प्रायश्चित्तानि षष्ठचतुर्थपादे 'अर्थसमवायात्प्रायश्चित्तमेकदेशेऽपि' इत्यत्रोक्तदिशा कर्माङ्गानि किं विकल्प्यन्ते, समुच्चीयन्ते वेति **सन्देहे,** पूर्ववद्विकल्प इति **प्राप्ते सिद्धान्तः** अदोषनिर्घातिषु दोषनिवर्तकत्वेनाश्रुतेषु ''भिन्ने जुहोति'' इत्यादिषु समुच्चय इति पूर्वोक्तस्य प्रत्युदाहरणोक्तिमात्रपरमेतत्सूत्रं नैमित्तिकानां प्रयाजादिवदपर्यायग्राहिणा प्रकरणेन युगपद्ग्रहणात्समुच्चयस्य सिद्धत्वादित्याहुः।

इति षष्ठं नैमित्तिकप्रायश्चित्तानां समुच्चयाधिकरणम् (सूत्रं १७)



### अथ सप्तमं कर्मकालेऽनध्यायेऽपि मन्त्राणां प्रयोगाधिकरणम् (सूत्रे १८-१९)

**मन्त्राणां कर्मसंयोगात्स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात् ॥ १८ ॥**

**(विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात्कर्मार्थत्वात्प्रयोगस्य ॥ १९ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः। ''पर्वणि नाध्येतव्यं स्तनयित्नौ नाध्येतव्यम्'' इत्येवमादयो धर्मास्ते किं कर्मकालेऽपि भवेयुः, उताध्ययनकालीना मन्त्रा एव तत्रापि प्रसज्यन्त इति **सन्देहे,** पर्वण्यनध्ययनादयो धर्माः मन्त्रप्रयोगार्थाः। तथा च ग्रहणकाल इव कर्मप्रयोगकाले च मन्त्रप्रयोगास्सन्तीति तदापि ते धर्माः प्राप्नुवन्ति। न च पर्वणि साङ्गस्य कर्मणो विधानात्पर्वणि कर्मकाले मन्त्रोक्तिः प्राप्तैवेति शङ्क्यम्। एवं हि विहितप्रतिषिद्धत्वाद्विकल्पः स्यात्। तथा च पूर्वत्र भेदनहोमानां क्रतौ समुच्चयेऽपि स न मन्त्रप्रयोगाणामिति **प्राप्तम्।** तदाह सूत्रे, **मन्त्राणां** कर्मण्यमध्येयतादिना **स्वधर्मेण प्रयोगस्स्यात्। धर्मस्य मन्त्रप्रयोगार्थत्वादिति। सिद्धान्तस्तु।** श्रुत्या हि क्रतौ पर्वणि मन्त्रप्रयोगः प्राप्यते। ''पर्वणि नाध्येतव्यम्'' इत्यादिस्मृत्या च तन्निषेधः। स्मृतिश्च श्रुतितो दुर्बला। किञ्चैते धर्माः प्रकरणात्स्वाध्यायविधिप्राप्तस्य ग्रहणाध्ययनस्याप्यविघ्नसमाप्त्युपकारेणाङ्गभूता इति न कर्मणि मन्त्रप्रयोगे प्राप्नुयुरिति क्रतौ पर्वण्यपि मन्त्राः प्रयोज्या इत्यध्ययनकालीनैरेव धर्मैरुपकारलिङ्गैर्न वैगुण्यमिति।

इति सप्तमं कर्मकालेऽनध्यायेऽपि मन्त्राणां प्रयोगाधिकरणम् (सूत्रे १८-१९)

### अथाष्टमं कर्मणि प्रावचनस्वरेणैव मन्त्रोच्चरणाधिकरणम् (सूत्राणि २०-२२)

**भाषास्वरोपदेशादैरवत्प्रावचनप्रतिषेधः स्यात् ॥ २० ॥**

**(मन्त्रोपदेशो वा न भाषिकस्य, प्रायोपपत्तेर्भाषिकश्रुतिः ॥ २१ ॥ विकारः कारणाग्रहणे ॥ २२ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः। ''इमामगृभ्णन् रशनामृतस्य'' इत्येव मन्त्रास्समाम्नाये स्वरान्तरेण पठिताः। ''इमामगृभ्णान्रशनामृतस्येत्यश्वाभिधानीमादत्ते'' इत्यादिब्राह्मणे स्वरान्तरेणोपात्ताः। ते समाम्नायसिद्धस्वरेण क्रतौ प्रयोज्याः, उत ब्रह्मणस्वरेणेति **सन्देहे,** 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यादिब्राह्मणेन मन्त्रः रशनादाने विनियुक्तः। मन्त्रलिङ्गेनैव विनियोगात्। नापि परिसङ्ख्यार्थः। रशनादानकरणत्वेन स्वरस्य विधायकत्वरूपार्थवत्त्वगतिसम्भवे त्रिदोषदुष्टपरिसङ्ख्यार्थत्वायोगात्। अतः ब्राह्मणे स्वकीयभाषिकस्वरविधानायैव मन्त्र उपादीयते। न च स्वरस्य

रशनादानादौ करणत्वायोगः । ऋगक्षराभिव्यक्तिद्वारा साम्नः स्तोत्र इव स्वरस्यापि मन्त्राक्षराभिव्यञ्जकतया तत्र करणतोपपत्तेः । अतो ब्राह्मणस्वरस्य वाचनिकत्वात्तेनैव स्वरेण मन्त्राणां क्रतौ प्रयोग इति पूर्वत्रानध्ययनादेः कर्मकालीनमन्त्रप्रयोगेष्वेव समाम्नानसिद्धस्वरस्य निवृत्तिरिति **प्राप्तम्** । तदाह **सूत्रे, भाषास्वरोपदेशेषु** ब्राह्मणोपात्तस्वरयुक्तेषु मन्त्रेषु **प्रवचनसिद्धस्य** समाम्नायसिद्धस्य **प्रतिषेधः, निवृत्तिस्स्यात्** । कथम् ? **इरापदोपदेशेन गिरापदस्येवेति** । **सिद्धान्तस्तु,** ब्राह्मणं न स्वरविधायकम् । तथात्वे हि प्रवचनसिद्धस्वरस्यादृष्टार्थतापत्तेः । गर्दभरशनायामपि लिङ्गान्मन्त्रप्रवृत्त्यापत्तेश्च । अतः ''इत्यश्वाभिधानीयमादत्ते'' इत्यादेर्ब्राह्मणस्य परिसङ्ख्यार्थत्वं, ''चतुर्भिरभ्रिमादत्ते'' इत्यादेश्चतुस्सङ्ख्यारूपगुणार्थत्वं ''उरु प्रथस्वेति पुरोडाशं प्रथयति'' इत्यादेर्यजमानमानप्रथनाद्यर्थत्वमित्येवोपेयमिति समाम्नायसिद्धत्रैस्वर्येणैव क्रतौ मन्त्राः प्रयोज्याः । न चैवं ब्राह्मणे स्वरान्तरेण मन्त्रोपादानमनर्थकं स्यादिति शङ्क्यम् । ब्राह्मणे स्वरान्तरस्य प्रवृत्त्या तत्स्वरसन्तानाविच्छेदार्थत्वात् । ब्राह्मणस्वरो हि उच्चनीचस्वरः । स एव भाषास्वर इत्युच्यते । छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः । उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते'' इति भाष्योक्तेः । तादृशब्राह्मणस्वरमध्ये समाम्नायसिद्धत्रैस्वर्येण मन्त्राणां पाठस्वरविच्छेदः स्यात् । तदविच्छेदार्थं भाषास्वरेणैवोपादानादिति ।

**इत्यष्टमं कर्मणि प्रावचनस्वरेणैव मन्त्रोच्चारणाधिकरणम् (सूत्राणि २०-२२)**

## अथ नवमं ब्राह्मणोत्पन्नमन्त्रस्य भाषिकस्वरेणैवोच्चारणाधिकरणम् (सूत्रे २३-२४)

**तन्न्यायत्वाददृष्टेऽप्येवम् ॥ २३ ॥**

**(तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् ॥ २४ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ये पुनर्मन्त्रास्समाम्नाये नाधीताः ब्राह्मण एवोत्पन्नाः ''तं प्रोहेद्वानस्पत्योसि'' इति इत्येवमादयः, ते किं ब्राह्मणस्वरेणोच्चार्याः, न वेति **सन्देहे,** ब्राह्मणस्य मन्त्रस्वरूपविनियोगपरत्वेन स्वरविधिपरत्वाभावात्पूर्वत्रेव न भाषास्वरेणोच्चारणं, किन्तु स्वरान्तरेणेति **प्राप्तम्** । तदाह **सूत्रे, तन्न्यायत्वात् 'मन्त्रोपदेशो वा न भाषिकस्य'** इति पूर्वाधिकरणगुणसूत्रन्यायत्वान्मन्त्रोपदेशपरत्वेन स्वरविधिपरत्वाभावादिति यावत् । मन्त्रसमाम्नायेष्वदृष्टेऽपि मन्त्रे एवं ब्राह्मणस्वरो न प्रयोज्य इति । **सिद्धान्तस्तु,** ब्राह्मणेन विनियुक्तस्य यथाविज्ञातस्वरस्यैव प्रयोगावश्यंभावाद्भाषास्वरातिरेकेण स्वरान्तरानवगमाद्भाषास्वरेणेव प्रयोज्या एवमादयो मन्त्रा इति ।

**इति नवमं ब्राह्मणोत्पन्नमन्त्रस्य भाषिकस्वरेणैवोच्चारणाधिकरणम् (सूत्रे २३-२४)**



## अथ दशमं मन्त्राणां पाठानन्तरमेव पदार्थानुष्ठानाधिकरणम् (सूत्रं २५)

**मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसन्निपातः
स्यात्सर्वस्य वचनार्थत्वात् ॥ २५ ॥**

पूर्वत्र मन्त्रप्रसक्तेरत्र प्रासङ्गिकी सङ्गतिः । कर्मसमवेतार्थप्रकाशकतया करणत्वेन विनियुक्तेषु मन्त्रेषु ''इषे त्वेति च्छिनत्ति'' ''देवस्य त्वा सवितुः'' इत्यादिषु किं मन्त्रान्ते वा मन्त्रान्तेप्यनन्तरमेव वा किञ्चिद्विलम्ब्य वा समवेतार्थपदार्थोच्चारणानन्तरं वा कर्मप्रयोगः कार्य इत्यनेकधा **सन्देहे,** नियामकाभावादनियम इति **प्राप्ते सिद्धान्तः,** सर्वस्यापि मन्त्रस्य श्रुत्यादिना विनियोगात्सकलमन्त्रसम्पादितस्मरणमेव कर्माङ्गमिति सर्वमन्त्रसमाप्तौ तज्जनितस्मरणं यावदविनष्टमास्ते तदैव कर्मप्रयोगः कार्य इति । तदाह **सूत्रे, मन्त्रान्तेन कर्मादेः संयोगः स्यात्** । **मन्त्राणामनुष्ठेयार्थस्मारकतया करणत्वात्** । न च समवेतार्थाभिधायिपदस्यैव कर्मानुष्ठापकत्वमिति वाच्यम् । **सर्वस्य** मन्त्रस्य विनियोजक**वचनार्थत्वात्** सर्वमन्त्रान्तस्य कर्मण आदिभागस्य च संयोगादिति ।

**इति दशमं कर्मसु मन्त्रकरणकप्रयोगाधिकरणम् (सूत्रे २५)**

## अथैकादशं वसुधाराधिकरणम् (सूत्रे २६-२७)

**सन्ततवचनाद्धारायामादिसंयोगः ॥ २६ ॥**

**(कर्मसन्तानो वा नानाकर्मत्वादितरस्याशक्यत्वात् ॥ २७ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ''सन्ततां वसोर्धारां जुहोति'' इत्यग्नौ श्रूयते । तत्र किं वसोर्धारा मन्त्रादौ कार्या, अथ मन्त्रान्त इति **सन्देहे,** सन्ततामित्यस्य हि सहितामित्यर्थः । स च मन्त्रहोमयोस्सहोपक्रम एव युक्तो नान्यथेति पूर्वमन्त्रान्ते कर्मप्रयोगोक्तावप्ययं होमो मन्त्रादौ स्यादिति **प्राप्तम्** । तदाह **सूत्रे, सन्ततेत्यदि** । व्यक्तोऽर्थः । **सिद्धान्तस्तु,** नात्र सन्ततशब्देन साहित्यमुच्यते । किन्त्वविच्छिन्नत्वम् । धाराहोमा हि ''द्वादश द्वादशानि जुहोति'' इति वचनाद्भिन्नाः । तान् जुहोतिनाऽनूद्य सन्ततामित्यविच्छिन्नत्वं विधीयते । न चैवं जुहोतीति यत्तत्सन्ततामित्यापत्त्यैकवचनानुपपत्तिरिति शङ्क्यम् । अनेकेष्टिपशुसोमात्मकत्वेऽपि राजसूयेनेत्येकवचनान्तपदेन निर्देशवदेकवचननिर्देशस्योपपत्तेः । अतो धाराहोमा अपि मन्त्रान्त एव कार्या इति ।

**इत्येकादशं वसुधाराधिकरणम् (सूत्रे २६-२७)**

### अथ द्वादशमाघाराधिकरणम् (सूत्रं २८)

**आघारे च दीर्घधारत्वात् ॥ २८ ॥**

दर्शपूर्णमासयोराघारं प्रकृत्य श्रूयते ''सन्ततमाघारयति'' इति । तत्राघारकर्मण एकत्वात्पूर्वत्रैव कर्मणामविच्छिन्नार्थत्वायोगेन साहित्यार्थत्वान्मन्त्रेण सन्ततं सहितमिति वाच्यत्वान्मन्त्रादावाघारण-मिति **सङ्गतिपूर्वपक्षौ** । **सिद्धान्तस्तु,** अत्रापि सन्ततशब्दो न साहित्यवाची । किन्तु दीर्घधारत्वा-दाघार्यमाणद्रव्यस्याविच्छेदपरः । सन्ततं द्रव्यं क्षारयतीति क्षणिकस्य कर्मणो दीर्घेण ''ऊर्ध्वोऽध्वर'' इत्यादिमन्त्रेण साहित्यायोगात् । अतोऽत्रापि मन्त्रान्तकर्माद्योस्सन्निपात इति । तदाह सूत्रे, **आघारे च दीर्घधारत्वात्** आघार्यमाणद्रव्यस्याविच्छेदपरः सन्ततशब्द इति ।

इति द्वादशमाधाराधिकरणम् (सूत्रं २८)

### अथ त्रयोदशं मन्त्रसन्निपाते विकल्पाधिकरणम् (सूत्रं २९)

**मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पस्स्यात् ॥ २९ ॥**

**प्रसङ्गिकी सङ्गतिः** । पुरोडाशविभागे त्रयो मन्त्राः ''पूषा वां विभजतु । भगो वां विभजतु । अर्यमा वां विभजतु'' इति । तेषामर्थप्रकाशनार्थतया सन्निपातित्वाद्विभागप्रकाशनरूपैकार्थानां व्रीहियवन्यायेनेव विकल्पस्स्यादिति **प्राप्ते** सूत्रमिदमुत्तरविवक्षया कृतम् । **एकार्थास्तु विकल्पेरन्** इति पूर्वोक्तदिशा विकल्पस्य सिद्धेः ।

इति त्रयोदशं मन्त्रसन्निपाते विकल्पाधिकरणम् (सूत्रं २९)

### अथ चतुर्दशं सङ्ख्याविहितमन्त्राणां समुच्चयाधिकरणम् (सूत्रं ३०)

**सङ्ख्याविहितेषु समुच्चयः सन्निपातित्वात् ॥ ३० ॥**

ये तु सङ्ख्यायुक्ता मन्त्राः ''चतुर्भिरभ्रिमादत्ते । द्वाभ्यां खनति । षड्भिर्हरति'' इत्येव-मादयोऽग्निप्रकरणगतास्तेषां किमभ्र्यादानादौ विकल्पः, समुच्चयो वेति सन्देहे, पूर्वत्र पुरोडाश-विभागमन्त्रेष्विवाभ्र्यादानादिरूपैकार्थ्याद्विकल्प इति **सङ्गतिपूर्वपक्षौ** । न चैवं ''चतुर्भिरभ्रिमादत्ते'' इति श्रुतचतुःसङ्ख्यायाः कर्माङ्गता बाध्येतेति शङ्क्यम् । मन्त्राणामेवात्र विधानेन सङ्ख्याया विध्यभावादिति । **सिद्धान्तस्तु,** ''अभ्रिरसि'' इत्यादिमन्त्राणां लिङ्गेनैवाभ्र्यादाने विनियोगान्न तत्र



मन्त्रा विधेयाः । किन्तु चतुष्ट्वादिसङ्ख्यैव विधेयेति सङ्ख्याङ्गकत्ववशात्समुच्चयो मन्त्राणाम् । न चैवं चरमस्यैव मन्त्रस्य करणत्वं स्यात् । पूर्वमन्त्रत्रयजन्यस्मृतीनां चरममन्त्रजन्यस्मृत्याव्यवधानादिति वाच्यम् । पूर्वपूर्वमन्त्राणां स्वस्वार्थानुभवजन्यसंस्कारद्वारेण करणत्वम् । चरमस्य तु स्मृतिद्वारेत्युप-पत्तेरित्येके । **अन्ये तु** वाक्यचतुष्टयेनानुभवे जाते तावदनुभवजन्यसंस्कारैरेका स्मृतिः सर्वमन्त्रार्थगोचरा जायते इति तादृशस्मृतिद्वारा सर्वेषां करणत्वोपपत्तेरित्याहुः । तदाह **सूत्रे सङ्ख्यायुक्ततया विहितेषु मन्त्रेषु समुच्चयः** । उक्तदिशा सर्वमन्त्राणां अभ्र्यादानादिकर्म सन्निपातित्वात्सान्निध्यादिति ।

इति चतुर्दशं सङ्ख्याविहितमन्त्राणां समुच्चयाधिकरणम् (सूत्रं ३०)

### अथ पञ्चदशं ब्राह्मणविहितमन्त्राणां विकल्पाधिकरणम् (सूत्राणि ३१-३५)

**ब्राह्मणविहितेषु च सङ्ख्यावत्सर्वेषामुपदिष्टत्वात् ॥ ३१ ॥**

**(याज्यावषट्कारयोश्च समुच्चयस्य दर्शनं तद्वत् ॥ ३२ ॥ विकल्पो वा समुच्चय-स्याश्रुतित्वात् ॥ ३३ ॥ गुणार्थत्वादुपदेशस्य ॥ ३४ ॥ वषट्कारे नानार्थत्वा-त्समुच्चयः ॥ ३५ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । ये ब्राह्मणविहिता मन्त्राः ''उरु प्रथस्वेति पुरोडाशं प्रथयति । उरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयति'' इत्यादयस्तेषां किं प्रधानादौ कर्मणि विकल्पः, समुच्चयो वेति **सन्देहे, सर्वेषामुपदिष्टत्वाद्वचनेनैव** ''उरु प्रथस्व'' इत्यादेर्विनियोगादिति यावत् । विकल्पे च पाक्षिकबाधप्रसङ्गात् । पूर्वत्र सङ्ख्यायुक्तमन्त्राणामिव समुच्चय इति **प्राप्तम्** । न चैवं गुणानुरोधात् प्रधानावृत्तिप्रसङ्ग इति शङ्क्यम् । ''अभ्रिरसि'' इत्यादिमन्त्राणामिव मिलितानामेव करणत्वोपपत्ते-रिति । तदाह सूत्रे, **ब्राह्मणे विहितेषु सर्वेषां** मन्त्राणामुपदिष्टत्वासङ्ख्याविहितवत्समुच्चय इति । **सिद्धान्तस्तु,** वचनेनैषां मन्त्राणां निरपेक्षसाधनत्वावगमान्न समुच्चय इति व्रीहियववद्विकल्प इति **भाष्यकारीयं** मतमयुक्तम् । वाचनिकविनियोगाङ्गीकारे व्रीहियववन्निरपेक्षसाधनत्वविधानात्समुच्चयेन पूर्वपक्षानुदय इति मत्वा **वार्तिककारो** लिङ्गेनैव मन्त्राणां विनियोगसिद्धेर्न विनियोगार्थं वचनम् । किन्तु समुच्चयार्थमिति पूर्वपक्षयित्वा वचनेन निरपेक्षसाधनत्वावगमान्न समुच्चय इति सिद्धान्तितवान् ।

इति पञ्चदशं ब्राह्मणविहितमन्त्राणां विकल्पाधिकरणम् (सूत्राणि ३१-३५)

**अथ षोडशं हौत्राणां मन्त्राणां समुच्चयाधिकरणम् (सूत्राणि ३६-३८)**

**हौत्रास्तु विकल्पेरन्ननेकार्थत्वात् ॥ ३६ ॥**

**(समुच्चयो वा क्रियमाणानुवादित्वात् ॥ ३७ ॥ समुच्चयं च दर्शयति ॥ ३८ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । यूपोच्छ्रयणार्थमध्वर्युणा ''उद्दिवं स्तभानान्तरिक्षं पृण'' इति करणमन्त्रः पठ्यते । होत्रा च ''यूपायोच्छ्रीयमाणायानुब्रूहि'' इति प्रेषितेन ''उच्छ्रयस्व वनस्पते वर्ष्मन् पृथिव्या अधि'' इत्यादयश्चत्वारो मन्त्रा अध्वर्युणा क्रियमाणानुवादिनः । सर्वे चैते यूपोच्छ्रयणप्रकाशनार्थाः । तेष्वाध्वर्यवस्य हौत्राणां च सर्वेषां किं विकल्पः, उत समुच्चय इति **सन्देहे**, तेषां मन्त्राणां यूपोच्छ्रयणस्मरणरूपैकार्थ्यात्करणमन्त्राणामिव विकल्प इति **प्राप्तम्** । तदाह सूत्रे, **हौत्रास्त्वित्यादि** । व्यक्तोऽर्थः । **सिद्धान्तस्तु**, किमत्राध्वर्युणोक्तकरणमन्त्रस्य, हौत्रमन्त्राणां च विकल्प उच्यते । किं वा हौत्रमन्त्राणामेव मिथः । नाद्यः । अध्वर्युणोच्यमानकरणमन्त्रस्य क्रियमाणानुवादिनां च यूपोच्छ्रयणस्मृतिरूपकार्यैक्येऽपि करणमन्त्राः ''करोमि'' इत्येवं स्मारयन्ति । क्रियमाणानुवादिनस्तु ''हे अध्वर्यो त्वयेदं कर्तव्यम्'' इति स्मारयन्तीति स्मृतिप्रकारभेदेन कार्यैक्याभावात् ।

न द्वितीयः । ''पूषा वां विभजतु'' इत्यादिकरणमन्त्रा हि कर्मानुष्ठानकरणभूतां स्मृतिं पूर्वक्षणवर्तिनीं कुर्वन्ति । तत्र त्वेकेन तत्सिद्ध्या उतरस्य निवृत्तेः करणमन्त्राणामेकार्थानामित्यत्र तेषां विकल्पोक्तावपि क्रियमाणानुवादिनां हौत्रमन्त्राणामध्वर्युणा क्रियमाणानुवादित्वात्तेन क्रियमाणकर्मणः स्मृत्यविच्छेदाय तत्कर्मसमाप्तिपर्यन्तमपेक्षितत्वत्सर्वेषां समुच्चयं विना तदयोगात्समुच्चयो न विकल्प इति । तदाह सूत्रकारः, **समुच्चयो वा क्रियमाणानुवादित्वादिति** । इति षोडशं हौत्राणां मन्त्राणां समुच्चयाधिकरणम् (सूत्राणि ३६-३८)

**इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते द्वादशाध्यायस्य तृतीयः पादः**

अस्मिन् पादे अधिकरणानि १६ सूत्राणि ३८

आदितः अधिकरणानि ८९६ सूत्राणि २७१५



## अथ द्वादशाध्यायस्य चतुर्थः पादः

पूर्वपादे अर्थविवक्षावतां मन्त्राणां विकल्पसमुच्चयौ चिन्तितौ । अत्र पादे अर्थविवक्षाहीनमन्त्राणामन्येषां च विकल्पसमुच्चयौ प्राधान्येन चिन्त्येते ।

**अथ प्रथमं जपस्तुत्याशीरभिधानानां समुच्चयाधिकरणम् (सूत्रे १-२)**

**जपाश्चाकर्मसंयुक्ताः स्तुत्याशीरभिधानाश्च**
**याजमानेषु समुच्चयः स्यादाशीः पृथक्त्वात् ॥ १ ॥**

**(समुच्चयं च दर्शयति ॥ २ ॥)**

दीक्षितस्य वाङ्नियमात्पूर्वं ''इदं विष्णुर्विचक्रमे'' इत्यादयो मन्त्रा अदृष्टार्थतया जपाय ''आग्नावैष्णवीमनूच्य वाग्यन्तव्या'' ''सारस्वतीमनूच्य वाग्यन्तव्या'' इति विधीयन्ते । तेषु मन्त्रेषु प्रतीयमानोऽप्यर्थः ''जप व्यक्तायां वाचि'' इति धातुपाठाज्जपतिचोदितेषु मन्त्रेषूच्चारणमात्रस्यैव चोदितत्वादविवक्षित इत्यविवक्षितार्थस्य ''इदं विष्णुः'' इत्यादेरनुवचनरूपो जपः, ''अग्निर्मूर्धा दिवः ककुत्'', इत्यादिना गुणकीर्तनं स्तुतिः, ''आयुर्दा अग्नेऽस्यायुर्मे देहि'' इत्यादिना स्वेष्टप्रार्थनमाशीः, ''एषोसि त्वेषोसि'' इत्यादिनाऽदृष्टार्थं गुणविशिष्टगुणिप्रकाशनमभिधानम्, तत्र जपादिमन्त्रेषु जाप्यमन्त्राणां स्तावकमन्त्राणां अशीर्मन्त्राणां, अभिधानमन्त्राणां च विकल्पः, समुच्चयो वेति **सन्देहे**, ''उरु प्रथस्वेति प्रथयति'' इत्यादिब्राह्मणोक्तयोर्मन्त्रयोः पुरोडाशप्रथनरूपैकार्थ्याद्विकल्पः । जपमन्त्रेषु स्मृतिरूपैकार्थ्यात्, तथा स्तावकयन्त्रेषु स्तुतिरूपैकार्थ्यात्, तथाऽऽशीर्मन्त्रेषु आशसनरूपैकार्थ्यात्, अभिधानमन्त्रेष्वप्यभिधानरूपैकार्थ्याद्विकल्प इति **प्राप्ते**, जपाद्यर्थमन्त्राणां जपादिरूपैकार्थ्येऽप्यदृष्टार्थत्वादेकेन मन्त्रेण जातमदृष्टमन्येन जायत इत्यत्र मानाभावेन तत्तन्मन्त्रजन्यादृष्टानां भिन्नतया कार्यभेदात्समुच्चय इति **सिद्धान्तः**, तदाह सूत्रे, **अकर्मसंयुक्ताः** कर्मण्यकरणभूता ये **जपाः** जप्या मन्त्राश्च यानि च स्तुत्याशीरभिधानानि तन्मन्त्रा इति यावत् । तेष्विति शेषः । तेषु **याजमानेषु**, यजमानसम्बन्धिषु । यजमानपदं प्रायिकत्वाभिपायम् । समुच्चयस्स्यात् । कुतः? **आशीःपृथक्त्वात्** । अशीरादिमन्त्रकार्याणामदृष्टानां भिन्नत्वादिति ।

**इति प्रथमं जपस्तुत्याशीरभिधानानां समुच्चयाधिकरणम् (सूत्रे १-२)**

अथ द्वितीयं बार्हस्पत्ये द्विविधयाज्यानुवाक्ययोर्विकल्पाधिकरणम् (सूत्रे ३-४)

**याज्यनुवाक्यासु तु विकल्पस्स्यादेवतोपलक्षणार्थत्वात् ॥ ३ ॥**

**(लिङ्गदर्शनाच्च ॥ ४ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । ऐन्द्राबार्हस्पत्ये कर्मणि याज्यानुवाक्यायुगलं पठ्यते ''इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती'' इति, 'अयं वां परिषिच्यते सोम इन्द्राबृहस्पती' इति चैकयाज्यानुवाक्या-युगलम् । तथा ''अस्मै इन्द्राबृहस्पती'' इति ''बृहस्पतिर्नः परिपातु पश्चात्'' इति चापरं युगलम् । तत्र तयोर्युगलयोः समुच्चयः, विकल्पो वेति **सन्देहे**, पुरःपूर्वं अनूच्यत इति व्युत्पत्त्या पुरोऽनुवाक्येति समाख्या पश्चाद्भाविया ज्यया विना न सम्भवतीति समाख्यावशात्, ''पुरोऽनुवाक्यामनूच्य याज्यया यजति'' इति प्रत्यक्षवचनेन पुरोऽनुवाक्यायाज्ययोः क्रमादेवतोपलक्षणार्थत्वे हविप्रदानार्थत्वरूपकार्य-भेदोक्तिपूर्वं साहित्यविधानाच्च याज्यापुरोनुवाक्ययोर्यथा समुच्चयस्तथा तद्युगलयोरपि समुच्चयः पूर्वत्र जपादिमन्त्राणामिवेति **प्राप्ते**, दृष्टप्रयोजनस्य देवतावःबोधनरूपस्यैकत्वादेकेन तत्सिध्धाऽन्यस्य कृत्यं नेति विकल्प इति **सिद्धान्तः** । तदाह **सूत्रे**, याज्येति । देवतोपलक्षणार्थत्वाद्देवतावबोधार्थत्वादित्यर्थः ।

इति द्वितीयं बार्हस्पत्ये द्विविधयाज्यानुवाक्यायोर्विकल्पाधिकरणम् (सूत्रे ३-४)

अथ तृतीयं सोमक्रयसाधनानामजादीनां समुच्चयाधिकरणम् (सूत्राणि ५-७)

**क्रयणेषु तु विकल्पस्स्यादेकार्थत्वात् ॥ ५ ॥**

**(समुच्चयो वा प्रयोगे द्रव्यसमवायात् ॥ ६ ॥ समुच्चयं च दर्शयति ॥ ७ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । सोमक्रयणार्थं द्रव्याणि श्रूयन्ते ''अजया क्रीणाति'' ''हिरण्येन क्रीणाति'' ''एकहायन्या क्रीणाति'' ''वाससा क्रीणाति'' इत्यादीनि दशक्रयद्रव्याणि । तत्रैकहाय-न्यादिगुणभेदेन तत्तद्गुणविशिष्टक्रयाणां भिन्नत्वादशगुणविशिष्टतयोत्पन्ना दशापि क्रयाः किं सोमप्राप्तौ विकल्प्यन्ते, उत समुच्चीयन्त इति **सन्देहे**, सर्वक्रयाणां सोमप्राप्तिरूपैकार्थ्यान्पूर्वत्र याज्यानुवाक्या-युगलवद्विकल्प इति **प्राप्तम्** । तदाह, **क्रयणेषु** त्वित्यादि । व्यक्तोऽर्थः । **सिद्धान्तस्तु**, ''व्रीहिभि-र्यजेत'' इत्यादौ ''व्रीहिभिरेव यजेत'', ''यवैरेव यजेत'' इति द्रव्यनियम इव, नात्र ''वाससैव क्रीणाति'' इति ''एकहायन्यैव क्रीणाति'' इति द्रव्यनियमः । तथात्वे ''अश्वशफेन क्रीणाति'' इति वचनादश्वशफमात्रस्यैव क्रयसाधनत्वापत्तेः । न चेष्टापत्तिः । विक्रेतुरल्पेनाऽत्यसम्भवात् । अतो वाससा



क्रीणातीवेति वाक्यार्थ इति व्रीहियवादिवैषम्येण न तत्रेव विकल्पः । किन्तु समुच्चयः । किञ्च क्रयाणां विक्रेत्रानति प्रयोजनकत्वादानतेश्च बहुभिस्सुकरत्वादानतिरूपकार्यसौकर्याय समुच्चयाश्रयणम् । वस्तुतस्तु तत्तद्गुणविशिष्टक्रयसाध्याऽऽनतीनां भेदेन कार्यैक्याभावात्समुच्चय इति ज्ञेयम् । तदाह **सूत्रे**, **समुच्चयो वा प्रयोगे द्रव्यसमवायादिति** ।

इति तृतीयं सोमक्रयसाधनानामजादीनां समुच्चयाधिकरणम् (सूत्राणि ५-७)

अथ चतुर्थं गुदोपयजनादिप्रतिपत्तिकर्मणां समुच्चयाधिकरणम् (सूत्रं ८)

**संस्कारे च तदर्थत्वात् ॥ ८ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । अग्नीषोमीयपशौ ''गुदेनोपयजति'' इति श्रुतं गुदोपयजनं पशुगणे चोदकप्राप्तम् । तत्रानेकगुदसन्निपाते गुदानां विकल्पः, समुच्चयो वेति **सन्देहे**, ''गुदेन'' इति तृतीयाश्रुत्या गुदानां साधनत्वप्रतीतिबलेनोपयागस्यार्थकर्मत्वावगमात्तस्य चैकेन गुदेन सिध्धाऽन्यस्य कृत्याभावाद्विकल्प एव । पूर्वत्रैव न समुच्चय इति **प्राप्ते सिद्धान्तः**, अग्नीषोमीययागार्थमुत्पन्नपशुयागे हृदयादिभिर्निर्वृत्ते, तच्छेषः प्रतिपत्तिमपेक्षत इत्यपेक्षितविधानाय प्रतिपत्तिविधिरेवायम् । तृतीया च ''प्रयाजशेषेण सर्वाणि हवींष्यभि'' इत्यत्रेव द्वितीयार्थे । तथा च द्रव्यसंस्काररूपार्थप्रतिपत्तिर्यस्य च पशोर्गुदस्य न क्रियते तस्य पशोस्तेन संस्कारेण हानिः स्यात् । अतः सर्वेषां समुच्चय इति । तदाह **सूत्रे**, संस्कारे उपयागरूपे **तदर्थत्वात्** गुदार्थत्वात् गुदानां समुच्चय इति ।

एतच्च ''**उत्पत्तौ येन संयुक्तं तदर्थं तत्, श्रुतिसंयोगात्तस्यार्थान्तरगमने शेषत्वात्प्रतिपत्तिः स्यात्**'' इति चतुर्थाध्यायद्वितीयपादीयसप्तमाधिकरणसूत्रे ''उत्पत्तावुत्पत्तिवाक्ये येन संयुक्तं यच्चदर्थ-तया श्रुतं तत्तदर्थम् । श्रुतिसंयोगात् तस्यान्यार्थमुत्पन्नस्यार्थान्तरगमने अर्थान्तरेण सम्बन्धेऽर्थान्तरस्य शेषत्वात्शेषकार्यरूपत्वात् प्रतिपत्तिः स्यात्'' इत्युक्तेन न्यायेनाग्नीषोमीयार्थतयोत्पन्नपशुशेषस्योपयोग-रूपार्थान्तरगमनेन तस्यार्थान्तरस्योपयोगस्य प्रतिपत्तित्वं सिद्धमेवेति नेह तस्य प्रतिपत्तित्वव्युत्पादन-परमिदं सूत्रम् । किन्तु चतुर्थाध्यायसूत्रसिद्धस्य प्रतिपत्तित्वस्य समुच्चयरूपप्रयोजनोक्तिपरमित्याहुः ।

इति चतुर्थं गुदोपयजनसमुच्चयाधिकरणम् (सूत्रं ८)

अथ पञ्चममाधाने दक्षिणासङ्ख्याविकल्पाधिकरणम् (सूत्रं ९)

**सङ्ख्यासु तु विकल्पस्स्याच्छ्रुतिविप्रतिषेधात् ॥ ९ ॥**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । आधाने ''एका देया । षड्देयाः । दश देयाः'' इत्यादिना श्रुतानामेकादिदक्षिणानां किं विकल्पः, उत समुच्चय इति **सन्देहे,** ''वाससा क्रीणाति'' इत्यादौ विक्रेतुरानतेर्बहुभिः सुकरत्वाद्वा वासःप्रभृतिद्रव्यसाध्यक्रयजन्यानतीनां भेदेन कार्यभेदाद्वा क्रयाणां यथा समुच्चयस्तथाऽत्रापीति ऋत्विजामानतेरनेकाभिस्सुकरत्वाद्वा एकदक्षिणाजन्यानतितः षडादिदक्षिणा-जन्यानतीनां भेदेन कार्यभेदाद्वा समुच्चयो दक्षिणानां पूर्वत्र गुदानामिवेति **प्राप्ते सिद्धान्तः,** सङ्ख्या हि साधनं परिच्छिन्दन्ती कर्माङ्गम् । तत्र यद्येकया षड्भिश्च समुच्चयेन ऋत्विजः परिक्रीणीत तदा सप्तसङ्ख्या स्यात् । न त्वेका सङ्ख्या षट्सङ्ख्या वा । तथा च श्रुताया एकादिकाया अङ्गत्वं न स्यात् । अतः सङ्ख्याश्रुतिविरोधादानतिभेदेऽप्यानतिसौकर्येऽपि वा विकल्प एव युक्तः । न समुच्चय इति । तदाह **सूत्रे, सङ्ख्यासु** त्वित्यादि । **श्रुतिविप्रतिषेधादे**कादिसङ्ख्याश्रुतिविरोधादित्यर्थः ।

इति पञ्चममाधाने दक्षिणासङ्ख्याविकल्पाधिकरणम् (सूत्रं ९)

## अथ षष्ठं जाघनीविकल्पाधिकरणम् (सूत्राणि १०-१६)

**द्रव्यविकारात्तु पूर्ववदर्थकर्म स्यात्तथा विकल्पे नियमः प्रधानत्वात् ॥ १० ॥**

**(द्रव्यत्वेऽपि समुच्चयो द्रव्यस्य कर्मनिष्पत्तेः प्रतिपशु कर्मभेदादेवं सति यथा प्रकृति ॥ ११ ॥ कपालेऽपि तथेति चेत् ॥ १२ ॥ न कर्मणः परार्थत्वात् ॥ १३ ॥ प्रतिपत्तिस्तु शेषत्वात् ॥ १४ ॥ शृतेऽपि पूर्ववत्त्वात्स्यात् ॥ १५ ॥ विकल्पे त्वर्थ-कर्म नियमप्रधानत्वाच्छेषे च कर्मकार्यसमवायात्तस्मात्तेनार्थकर्म स्यात् ॥ १६ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । दर्शपूर्णमासयोः पत्नीसंयाजेष्वाज्येन सह विकल्प्यमाना जाघनी विहिता ''जाघन्या पत्नीस्संयाजयति'' इति । सा जाघनी चोदकेनाग्नीषोमीयपशौ प्राप्ता । तत्रापि ''जाघन्या पत्नीस्संयाजयति'' इति । ततश्चोदकेन पशुगणे प्राप्नोति । तत्र बह्वीनां जाघनीनां विकल्पः, समुच्चयो वेति **सन्देहे,** दर्शपूर्णमासयोः श्रुता जाघनी तृतीयाश्रुत्या तत्र हविरन्तराभावेन चाशेषभूता सती पत्नसंयाजान् प्रति गुणभूताऽपि दैक्षपशौ न गुणभूता । हृदयादिहविरर्थलब्धपशुनिष्पन्ना जाघनी प्रतिपत्तिमपेक्षत इति चोदकेन गुणभूतत्वेन प्राप्तौ हृदयादिहविर्भिरिव यागनिष्पत्तेरनुनिष्पन्नाया जाघन्या प्रतिपत्तित्वेन विधानार्थं पशौ पुनर्वचनम् । तृतीया द्वितीयार्थे ''पत्नीसंयाजैः जाघनीं प्रतिपादयेत्'' इति । एवञ्च प्रतिपत्तिरूपदृष्टार्थत्वात्पूर्वत्र दक्षिणानां पशुगणे प्रतिपाद्यत्वेनैव चोदकप्राप्तेर्जाघनीनां समुच्चय इति **प्राप्ते सिद्धान्तः,** यदि पशौ पुनर्वचनेन जाघनीप्रतिपत्त्यर्थतया पत्नीसंयाजा विधीयेरंस्तदा



स्यादेवं पशुगणे समुच्चयः । न चैवम् । किन्तु चोदकेन यथाप्रकृत्याज्येन विकल्पिततया प्राप्तौ ''जाघन्यैव पत्नीस्संयाजयन्ति'' इति नियमार्थं पुनर्वचनम् । एवमर्थकर्मत्वेन प्रतिपत्तिकर्मत्वा-भावात्पशुगणे न विकल्पो जाघनीनाम् । तदाह **सूत्रे, द्रव्यविकारात्तु** जाघनीद्रव्यसाधनत्वेन विधानात्पत्नीसंयाजाख्यं कर्म **अर्थकर्म स्यात्** । न प्रतिपत्तिः । प्रकृतित एव जाघन्याः प्राप्तत्वात् । न द्रव्यविध्यर्थं वचनमिति च वाच्यम् । प्रकृतिवदाज्येन सह विकल्पे प्राप्ते जाघनीनियमार्थत्वाद्वचनस्येति ।

इति षष्ठं जाघनीविकल्पाधिकरणम् (सूत्राणि १०-१६)

## अथ सप्तममुखाग्निविकल्पाधिकरणम् (सूत्राणि १७-२३)

**उखायां काम्यनित्ययोः समुच्चयो नियोगे कामदर्शनात् ॥ १७ ॥**

**(असति चासंस्कृतेषु कर्म स्यात् ॥ १८ ॥ तस्य च देवतार्थत्वात् ॥ १९ ॥ विकारो वा नित्यस्याग्नेः काम्येन तदुक्तहेतुः ॥ २० ॥ वचनादसंस्कृतेषु कर्म स्यात् ॥ २१ ॥ संसर्गे चापि दोषः स्यात् ॥ २२ ॥ वचनादिति चेदथेतरस्मिन्नुत्सर्गा-परिग्रहः कर्मणः कृतत्वात् ॥ २३ ॥)**

पूर्ववैषम्येण शङ्कनात्सङ्गतिः । अग्निप्रकरणे आहवनीयाग्निना सन्तापेनोखाख्यपात्रविशेषे जनितोऽग्निराहवनीयस्थानीय उखाग्निरित्युच्यते । स च नित्यः । तं प्रकृत्य ''वृक्षाग्राज्ज्वलतो ब्रह्मवर्चस कामस्याऽहृत्यावदध्यात् भ्राष्टादन्नाद्यकामस्य'' इति काम्योग्निश्च श्रूयते । तत्रोखायां नित्यस्य वृक्षाग्रजादिकाम्याग्नेश्च समुच्चयः, अथ काम्येन नित्यस्य बाध इति **सन्देहे,** पूर्वत्र जाघनीनाम-समुच्चयेऽपीह नित्यकाम्ययोस्समुच्चयः । काम्याग्नेराधानमात्रश्रवणेनाग्निहोत्रादिहोमार्थत्वाश्रवणात् ब्रह्म-वर्चसादिकामाय वाक्यार्थाद्यग्नेः प्रकृताग्न्याधानादाधानान्तरस्य होमार्थं नित्यस्य चाधातव्यत्वादिति **प्राप्तम्** । तदाह **सूत्रे, उखायां काम्यनित्ययोः समुच्चयः** । कुतः? **नियोगे** निधाने **कामदर्शनात्** होमार्थं नित्यस्योपादानादिति । **सिद्धान्तस्तु,** ''आहवनीये जुहोति'' इत्यावहनीये होमश्रवणेनाहवनीय-स्थानापन्ने उख्याग्नावाधानाश्रवणेऽप्यनाधाय होमासम्भवाद्धोमार्थाहवनीयस्थानापन्ने उख्येऽर्थप्राप्त-माधानं प्राप्तमेवेति तदेवाधानमाश्रित्य काम्यवाक्ये काम्यवाक्यादग्न्यन्तरं फलाय विधीयते । न त्वपूर्व-माधानान्तरम् । एवञ्च यथा प्राकृतप्रणयनमाश्रित्य ''गोदोहेन पशुकामस्यापः प्रणयेत्'' इति फलाय विहितेन गोदोहनेन नित्यस्य बाधः एवमिहापि काम्येन नित्यस्य बाधस्तथैव पादोक्तेः । एवमिहापि

काम्येन नित्यस्य बाध इति विकल्पसमुच्चयविचारे समाप्ते समुच्चय एव अस्ति नास्तीत्येवं चिन्तारूपत्वाद्बाधचिन्तारूपस्याप्यत्र निवेश इत्याहुः ।

इति सप्तममुखाग्निविकल्पाधिकरणम् (सूत्राणि १७-२३)

**अथाष्टमं काम्याग्नेराहवनीयधर्माभावाधिकरणम् (सूत्रं २४-२५)**

**स आहवनीयस्स्यादाहुतिसंयोगात् ॥ २४ ॥**

**(अन्यो वोद्धृत्याहरणात् ॥ २५ ॥)**

प्रासङ्गिकी **सङ्गतिः** । सोऽयं काम्योऽग्निराहवनीयधर्मप्राप्तिमान्, न वेति **सन्देहे,** आगत्य हूयतेऽस्मिन् हविरिति व्युत्पत्त्या काम्येऽप्यग्नावाहवनीयशब्दवाच्यता स्यात् । तथा च तद्धर्मप्राप्तिमानिति **प्राप्तम्** । तदाह **सूत्रे, आहवनीय** इत्यादि । काम्याग्निरिति शेषः । **शिष्टं** व्यक्तम् । **सिद्धान्तस्तु,** नायमाहवनीयशब्दो यौगिकः । येन काम्याग्निरपि तच्छब्दार्थस्स्यात् । यौगिकत्वे हि ''यदाहवनीये जुहोति'' इत्याहवनीयस्य सतो होमविधिः । होमाधारतया चाहवनीयविधिरित्यन्योन्याश्रयापत्तेः । होमाधारे पदादावपि प्रयोगापत्तेश्च । किन्त्वञ्जनसाधने शकलविशेषे खरुशब्दवदाधानाजन्यसंस्कार-विशेषयुक्ते रूढ एव । अतोऽत्र तादृशाधानहीने काम्येग्नौ नाहवनीयशब्दवृत्तिरिति न तत्तद्धर्मप्राप्तिरिति ।

इत्यष्टमं काम्याग्नेराहवनीयधर्माभावाधिकरणम् (सूत्रं २४-२५)

**अथ नवमं काम्याग्नेरसंस्कृतताधिकरणम् (सूत्रे २६-२७)**

**तस्मिन् संस्कारकर्म शिष्टत्वात् ॥ २६ ॥**

**(स्थानाद्वा परिलुप्येरन् ॥ २७ ॥)**

पूर्वाक्षेपेण शङ्कनात्सङ्गतिः । काम्योऽग्निराधानादिसंस्कारभाक्, उत नेति **सन्देहे,** काम्याग्नेर्होम-साधनत्वात्संस्काराणां च होमार्थत्वादाधानादिसंस्कारोपेतः कार्यः काम्योऽग्निरिति संस्काराभावान्न तत्राहवनीयशब्दप्रवृत्तिरिति पूर्वोक्तमयुक्तमिति **प्राप्तम्** । तदाह **सूत्रे, तस्मिन्** काम्येऽग्नावाधान **संस्कारक्रिया** स्यात् । आधानस्य सर्वहोमार्थतया **शिष्टत्वात्** इति । **सिद्धान्तस्तु,** काम्याग्नेर्होम-साधनत्वेऽप्यसंस्कृत एवायं संत्कृतस्थानापन्न इति नात्र संस्काराः कार्या इति । किञ्चाधानं ह्यग्निद्वयस्योत्पादकम् । अत्र च गार्हपत्यः सिद्ध एवास्त इति कथमाधानस्यात्र प्रसक्तिरिति ।

इति नवमं काम्याग्नेरसंस्कृतताधिकरणम् (सूत्रे २६-२७)



**अथ दशममुख्याग्नेर्धारणाभावाधिकरणम् (सूत्रे २८-२९)**

**नित्यधारणे विकल्पो न ह्यकस्मात्प्रतिषेधः स्यात् ॥ २८ ॥**

**(नित्यधारणाद्वा प्रतिषेधो गतश्रियः ॥ २९ ॥)**

अत्रापि प्रासङिगकी **सङ्गतिः** । तस्मिन्नेवोख्याग्नौ नित्यं धार्यो, न वेति विकल्पः उत न धार्य एवेति नियम इति **सन्देहे,** ''न प्रतिसन्दध्यात्'' इति धारणप्रतिषेधः सत्यां प्राप्तौ युक्तः सन् प्रापकं विधिमनुष्ठापयतीति तेन चानुमितेन विधिना प्रापितं प्रतिषेधकेन च प्रतिषिद्धं धारणं विकल्पयतीति **प्राप्तम्** । तदाह **सूत्रे, नित्यस्योख्यस्य धारणे विकल्पः** । **यतोऽकस्मात्** प्रसक्तिं विना **प्रतिषेधो न** हि भवतीति । **सिद्धान्तस्तु,** यदि कयापि प्रत्यक्षश्रुत्या प्रसक्तिर्न स्यात्तदा प्रसञ्जको विधिरनुमीयेत । अस्ति चात्र ''नित्यधृत आहवनीयो गतश्रियः'' इति । आहवनीयस्थानापन्नश्चोख्य इति तत्र नित्यधारणे प्रसक्ते ''न प्रतिसन्दध्यात्'' इति पर्युदासः क्रियते ''उख्यादन्य एवाहवनीयो धार्य'' इति । तथा चोख्यो न धार्य एकेति नियम इति ।

इति दशममुख्याग्नेर्धारणाभावाधिकरणम् (सूत्रे २८-२९)

**अथैकादशं शुक्रस्पर्शादीनामेकयजमानकर्तृकताधिकरणम् (सूत्रम् ३०)**

**परार्थान्ये कोयजमानगणे ॥ ३० ॥**

प्रासङ्गिकं नित्यकाम्याग्निविचारं समाप्य प्रस्तुतप्रसङ्गचिन्तैवात्र पुनः क्रियत इति **सङ्गतिः** । अत्र चाहीनेऽनेकयजमानके यानि **परार्थानि** यजमानसंस्कारार्थानीति यावत् । तानि किमेको यजमानः कुर्यात्, उत सर्वेऽपीति **सन्देहे,** पूर्वत्रेव विशेषाभावादनियम इति **प्राप्ते सिद्धान्तः,** ''शुक्रं यजमानोऽ-न्वारभते'' ''यजमानसम्मितौदुम्बरी भवति'' इत्यादीन्येक एव कुर्यात् । न सर्वेऽपि । यदि तानि शुक्रान्वारम्भणादीनि यजमानसंस्कारः स्यात्तदा स्वस्वसंस्काराविलोपाय सर्वेपि यजमानाः कुर्युः । न चैवम् । तेषामतथात्वात् । एकेन कृतत्वेऽपि यजमानकृतत्वसिद्धेरिति । तदाह सूत्रे, **परार्थानीत्यादि** । व्यक्तोऽर्थः । ''शुक्रं यजमानोऽन्वारभते'' इत्यादावुपादेययजमानगतैकत्वसङ्ख्यावशेनैक एव कुर्यादिति सिद्धेर्नात्र चिन्तावकाश इत्युत्तरचिन्तार्थं प्राप्तिसूत्रमेतदित्याहुः ।

इत्येकादशं सत्रे शुक्रस्पर्शादीनामेकस्यैव यजमानस्य कर्तृत्वाधिकरणम् (सूत्रं ३०)

**अथ द्वादशमहीने शुक्रस्पर्शादावेकस्यैव यजमानस्य कर्तृत्वाधिकरणम् (सूत्रं ३१)**

**अनियमोऽविशेषात् ॥ ३१ ॥**

पूर्वत्रैक एव यजमानः कुर्यादित्युक्ते स कः? इति विचारे अविशेषादहीने यः कश्चिदित्यनयम इति येन केनचित्कृतमन्ये उपजीवन्तीति सत्रेष्वपवादं वक्तुं प्राप्तिसूत्रमेतदपीत्याहुः ।

**इति द्वादशमहीने शुक्रस्पर्शादावेकस्यैव यजमानस्य कर्तृत्वाधिकरणम् (सूत्रं ३१)**

**अथ त्रयोदशं सत्रे शुक्रस्पर्शादौ गृहपतेरेव कर्तृत्वाधिकरणम् (सूत्रं ३२)**

**मुख्यो वाऽविप्रतिषेधात् ॥ ३२ ॥**

अत्रापि किमनियमः, उत गृहपतिरेव कुर्यादिति नियम इति **सन्देहे**, पूर्वत्रेव विशेषाभावादनियम इति **सङ्गतिपूर्वपक्षौ । सिद्धान्तस्तु,** अन्येषामार्त्विज्यकरणे व्यापृतत्वेनान्वारम्भणादिकार्यकरण-विरोधाद्गृहपतेस्त्वार्त्विज्याभावेनाव्यापृतत्वात्क्रत्वर्थकार्यकरणेनार्थवत्वसिद्धेश्च गृहपतिरेव सत्रे कुर्यादिति नियम इति । तदाह **सूत्रे, मुख्यो** गृहपतिरेव कुर्यादिति नियम इति । **अविप्रतिषेधात्**कार्यान्तराभावेन विरोधाभावादिति ।

**इति त्रयोदशं सत्रे शुक्रस्पर्शादौ गृहपतेरेव कर्तृत्वाधिकरणम् (सूत्रम् ३२)**

**अथ चतुर्दशं सत्रेऽञ्जनादिसंस्काराणां सर्वगामित्वाधिकरणम् (सूत्राणि ३४-३७)**

**सत्रे गृहपतिरसंयोगाद्धौत्रवत् ॥ ३४ ॥ आम्नायवचनाच्च ॥ ३५ ॥**

**(सर्वे वा तदर्थत्वात् ॥ ३६ ॥ गृहपतिरिति च समाख्यासामान्यात् ॥ ३७ ॥)**

पूर्वन्यायेन शङ्कनात्सङ्गतिः । यानि पुनस्सत्रे यजमानसंस्कारार्थानि ''अभ्यङ्क्ते । वाससा परिधत्ते'' इत्यञ्जनादीनि कर्माणि तान्यपि सत्रे गृहपतिरेव कुर्यात्, उत सर्वेऽपीति **सन्देहे**, पूर्वत्र शुक्रान्वारम्भणा-दीनीवाऽञ्जनाभ्यञ्जनादिसंस्कारानपि गृहपतिः कुर्यात् । न सर्वेऽपि । गृहपतिशब्दो ह्यत्र कर्मफल-भागित्वरूपकर्मस्वामित्ववाची । न तु शालापतित्ववाची । तस्य सर्वसाधारण्यात् । गृहशब्दस्यात्र कर्मवाचित्वात् । सर्वेषां च कर्मफलभागित्वरूपगृहपतित्वसाम्येऽप्यस्यैव गृहपतिसमाख्या फलभूयस्त्व-निमित्तेति वाच्यम् । तच्च फलभूयस्त्वं संस्काराधिक्यनिमित्तमेवेति भेदेनैव ते संस्काराः कार्या इति



**प्राप्तम्** । तदाह **सूत्रे, सत्रे गृहपतिरर्थसंयोगात्**, गृहस्य कर्मणः पतिरित्यवयवार्थसंयोगात् अञ्जनादि संस्कारान् कुर्यात् । यथा **हौत्र**समाख्यया होता सामिधेन्युच्चारणं करोति तद्वदिति । **सिद्धान्तस्तु,** सत्रे सर्वेषां फलित्वात्फलसंस्काराभावे फलस्यैवाभावप्रसङ्गात्फलसंस्कारवत्त्वे संस्कारहेतुकफलभूयस्त्व-निमित्तकगृहपतिसमाख्या प्रागुक्ता बाध्येतेति शङ्क्यम् । ऋत्विजां करणत्ववदस्य तथार्त्विज्यदूव-कत्वाभावेन केवलं यजमानमात्रकरणान्निमित्तात्स्वामिवाचिगृहपतिशब्दवाचितोपपत्तेः । फलभूयस्त्व-निमित्तकत्वेऽपि समाख्याया न संस्काराधिकत्वप्रयोज्यत्वं फलभूयस्त्वस्य । किन्तु ''यो वै सत्रे बहूनां यजमानानां सत्रस्य प्रणेता स हि भूयिष्ठामृद्धिमाप्नोति'' इति वचनबलादेवेति सर्वेऽपि संस्कारभाज इति ।

**इति चतुर्दशं सत्रेऽञ्जनादिसंस्काराणां सर्वगामित्वाधिकरणम् (सूत्राणि ३४-३७)**

**अथ पञ्चदशं सत्रे याजमानार्त्विज्यकर्मणोर्विरोधे**
**ऋत्विक्कर्मण एव बलवत्त्वाधिकरणम् (सूत्राणि ३८-४०)**

**विप्रतिषेधे परम् ॥ ३८ ॥**

**(हौत्रे परार्थत्वात् ॥ ३९ ॥ वचनं परम् ॥ ४० ॥)**

पूर्वत्र सर्वे संस्काराःकार्या इत्युक्तेऽत्र विरोधिसंस्कारविषये विशेषचिन्तनात्सङ्गतिः । ऋत्विजां ये फलार्थसंस्कारास्तेषां क्रत्वङ्गैर्विरोधे सति किमनुष्ठेयं, किं त्याज्यमिति **सन्देहे**, क्रत्वङ्गविरोधेऽपि फलसंस्कारा एव कर्तव्याः । न क्रत्वङ्गानि । यजमानकर्मणस्साद्गुण्याय स्वगुणहानेच्छायोगादिइति **प्राप्ते सिद्धान्तः,** स्वगुणसंस्कारहानेनापि क्रत्वङ्गान्येवानुष्ठाय क्रतुसाद्गुण्यमेव सम्पाद्यम् । कुतः? कर्मणः प्राधान्यात् । कर्तॄणाञ्च कर्म प्रति गुणभूतत्वात् । प्रधानक्रतुगुणसंस्कारस्य तदङ्गकर्तृगुणसंस्काराणाञ्च विरोधे सति ''**अङ्गगुणविरोधे च तादर्थ्यात्** इति द्वितीयपादोक्तन्यायेन गुणभूतानामृत्विजां गुणहा-नावपि प्रधानभूतस्य क्रतोः साद्गुण्याय क्रत्वङ्गान्येवानुष्ठेयानि ''ये यजमानास्ते ऋत्विजः'' इत्यार्त्विज्यस्य प्रत्यक्षविधानात्फलसंस्काररूपयाजमानधर्माणां चोदकप्राप्ततया दुर्बलत्वाच्चार्त्विज्यमेव कार्यम् । न याजमानाः संस्कारा इति । तदाह **सूत्रे, विप्रतिषेधे** याजमानार्त्विज्ययोर्विरोधे **परम्**आर्त्विज्यं क्रत्वङ्गमेव कुर्युरिति ।

**इति पञ्चदशं सत्रे यजमानार्त्विज्यकर्मणोर्विरोधे ऋत्विक्कर्मण**
**एव कर्तव्यताधिकरणम् (सूत्राणि ३८-४०)**

अथ षोडशमार्त्विज्ये ब्राह्मणस्यैवाधिकाराधिकरणम् (सूत्राणि ४१-४४)

प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ३९ ॥

(स्मृतेर्वा स्याद्ब्राह्मणानाम् ॥ ४० ॥ फलचमसविधानाच्चेतरेषाम् ॥ ४१ ॥ सान्नाय्येऽप्येवं प्रतिषेधोऽसोमपीथहेतुत्वात् ॥ ४२ ॥ चतुर्धा करणे च निर्देशात् ॥ ४३ ॥ अन्वाहार्ये च दर्शनात् ॥ ४४ ॥)

पूर्वत्र प्रसक्तार्त्विज्ये कर्तृचिन्तनात्सङ्गतिः । यजमानेन त्रिभिरपि ब्राह्मणादिभिरार्त्विज्यं कारयितव्यम्, उत ब्राह्मणैरेवेति सन्देहे, त्रिभिरार्त्विज्यं कारयितव्यम्, त्रयाणामपि द्विजत्वात् विद्वत्त्वाच्छक्तत्वाच्च । न च ब्राह्मणस्य याजनाध्यापनप्रतिग्रहैः क्षत्रियस्य जयादिना वैश्यस्य कृष्यादिना धनार्जननियमस्मरणान्नास्ति तयोर्याजनेन धनार्जनमिति शङ्क्यम् । धनार्जननियमस्य पुरुषार्थत्वेन क्षत्रियवैश्ययोरार्त्विज्यं कुर्वतोः स्वधर्मव्यतिक्रमेऽपि क्रतोर्गुण्यादिति प्राप्तम् । तदाह सूत्रे, प्रभुत्वादित्यादि । प्रभुत्वात् शक्तत्वादित्यर्थः । सिद्धान्तस्तु, ब्राह्मणा एवाऽऽर्त्विज्याधिकरिणः । न क्षत्रियवैश्यावपि । यज्ञसूत्रकारैः ''यज्ञं व्याख्यास्यामः'' इत्युपक्रम्य ब्राह्मणानामेवार्त्विज्यमिति स्मरतां क्रत्वर्थत्वेनापि स्मरणात् । तदाह सूत्रकारः 'स्मृतेर्वा ब्रह्मणानां स्यात्' इति 'फलचमसविधानाचेतरेषां' 'सान्नाय्ये च विप्रतिषेधोऽसोमपीथहेतुत्वात्' 'चतुर्धा करणे च निर्देशात्' 'अन्वाहार्ये च दर्शनात्' इति सूत्रचतुष्टयेन चानेकलिङ्गान्यपि भाष्ये दर्शितानि । तस्माद्ब्राह्मणानामेवार्त्विज्यमिति ।

इति षोडाशमार्त्विज्ये ब्राह्मणस्यैवाधिकाराधिकरणम् (सूत्राणि ४१-४४)

यदाराधनरूपाणि कर्माणि निखिलान्यपि ।
तद्ब्रह्म मे प्रसन्नं स्यादनया कर्मचिन्तया ॥
भाष्यवार्तिकटीकादिनानाग्रन्थावमर्शिना ।
राघवेन्द्रेण यतिना कृतोऽयं भाट्टसङ्ग्रहः ॥

इति श्रीभाट्टसङ्ग्रहे सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रतीर्थगुरुपादशिष्य-श्रीराघवेन्द्रतीर्थयतिसार्वभौमकृते द्वादशाध्यायस्य चतुर्थः पादः

अस्मिन् पादे अधिकरणानि १६ सूत्राणि ४४
आदितः अधिकरणानि ८९६ सूत्राणि २७२१

*समाप्तोऽयं ग्रन्थः*



# भाट्टसंग्रहे उत्तरार्धप्रारम्भः

## Chapter-VII

### सप्तमाध्याये प्रथमः पादः

In the earlier six chapters, Upadeśa was discussed. In the next six chapters, Atideśa will be discussed. The nature of Atideśa is described as the adoption of the auxiliaries into vikṛti from prakṛti.

प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु ।
धर्मप्रदेशो येन स्यात्सोऽतिदेश इति स्मृतः ॥

The Atideśa is of three types. Adoption by the direct statement. Adoption on the basis of the name. Adoption by the inference.

स च अतिदेशः प्रत्यक्षवचनेन नाम्नाऽऽनुमानिकेन चोदकवाक्येन चेति त्रिविधः ।

प्रयाजादिधर्माणामपूर्वप्रयुक्तताधिकराणम् (7-1-1)

This Adhikaraṇa is a prelude for the discussion of Atideśa.

The connection of Sunnipatya type auxiliaries with apūrva will be discussed in the ninth chapter. Here, the connection of Arādupārakā type of auxiliaries such as prayājā etc treated in the context of Darśapurṇamāsā, and Dikṣaṇiyā etc stated in the context of jyotiṣṭoma with the Apūrva will be discussed.

Here the question is raised whether these will be connected with all sacrifices or with the particular sacrifice in the context of which these are stated.

वक्ष्यमाणसर्वातिदेशचिन्तोपोद्धातत्वेनेदमारभ्यते । सन्निपाताङ्गानामपूर्वार्थत्वस्य नवमाद्ये यज्ञकर्मेत्यत्र विचारयिष्यमाणत्वादिहाऽऽरादुपकारक दर्शपूर्णमास प्रकरणपठिताः प्रयाजादयो ज्योतिष्टोमप्रकरणपठिताः दीक्षणीयादयश्चोदाहरणम् ते किं सर्वयागार्थतयोपदिश्यन्ते ? किं वा यथाप्रकरणं व्यवतिष्ठन्त इति सन्देहः ।

Pūrvapakṣa : argues that if both yaga and its prayāja etc. auxiliaries are connected with Apūrva, their relation as the main and the subordinate will be broken. Therefore these have to be connected with yaga only. The expression yaga conveys the yagas in general. Hence prayāja. etc get connected with all the yāgas and therefore the question of adopting these in vikrati yāgas does not arise.

यजेत स्वर्गकामः इत्यत्र यागं कुर्यात् इत्येका भावना। यागेनापूर्वं कुर्यात् इत्यपरा। एवञ्च प्रयाजादीनां यागाङ्गानां करणभूतयागेन सह प्रयाजादिभिरपूर्वं भावयेत् इत्यपूर्वभावनान्वये करणेतिकर्तव्यतयो-रपूर्वनिष्पादकत्वाविशेषेण तुल्यतापत्त्या अङ्गाङ्गिभावभङ्गः स्यात्। अतो यागभावनयाऽन्वयः। याजि-धातुश्च दर्शपूर्णमासज्योतिष्टोमसौर्यश्येनादीन्सर्वयागविशेषन् ब्रूत इति सर्वत्र धर्मप्राप्तावतिदेशविचारो नारभ्य इति।

Siddhānta : By the connection with the Apūrva with both yāga and the prayāja etc auxiliaries, their relation as main and subordinate will not be broken. Yāga is subordinate to the result but it is main for the prayāja etc auxiliaries. Yāga leads to the result as Karaṇa and prayāja etc also lead to the result as auxiliaries of yāga. Consequently both get connected with Apūrva. Hence, this does not lead to the breakdown of main and the subordinate relation. In view of this, prayāja etc auxiliaries are connected with particular yāgas only. Hence, the adoption of these in vikṛti yāga is necessary.

सिद्धान्तस्तु अपूर्वभावनान्वयमात्रेणाङ्गाङ्गिभावभङ्गे उक्तदिशा यज्यन्वयः स्यात्। न चैवम्। यागोपि करणात्मना सम्बद्धः फलं प्रति गुणत्वं, प्रयाजादीतिकर्तव्यतां प्रति प्राधान्यं लभत एव। तदुभयं फलभावनान्वयेप्यक्षतमेव। अतोऽपूर्वभावनयैवान्वयः करणेतिकर्तव्यतयोरपूर्वभावनान्वये सत्येव पश्चात्करणेतिकर्तव्यतयोरन्योन्यमार्थिकोऽन्वय इति, यथाप्रकरणमेव धर्माणां व्यवस्थेति, न सर्वत्रोपदेशतो धर्मप्राप्तिरित्यारभ्य एवातिदेशविचार इति।

### इषौ समानमितरच्छ्येनेनेति श्रुत्या श्येनीयविशेषधर्मातिदेशाधिकरणम् (7-1-2)

The two sacrifices namely Iṣu and śyena of one day performance which are vikṛti yāgas of jyotiśtoma are stated.



At these the auxiliaries of jyotiśtoma are to be employed by the very injunction. For the Iṣu sacrifice, spreading the kuśagras and the recitation of saptāhasāma are stated. Then it is stated that the rest is like that of śyena. Here the question is raised whether the expression 'rest' refers to the auxiliaries of śyenasamāna or the auxiliaries specially stated for the śyena sacrifice.

इषुणाऽभिचरन् यजेत इति श्येनेनाभिचरन् यजेत इति च वाक्यद्वयविहितौ इषुनामकश्येनामकौ द्वावेकाहौ यागौ ज्योतिष्टोमविकारौ। तयोर्द्वयोर्ज्योतिष्टोमधर्माश्चोदकेन प्राप्ताः। तत्रेषुनामके "इषु-र्विष्टुतिः सप्ताहं भवति" इति वाक्येन विष्टुतिशब्दितमौदुम्बरशङ्कुरूपेण कुशास्तरणं सप्ताहपदेन सप्ताहाख्यं साम च स्तोत्रसाधनं भवतीति प्राकृतस्तोत्राणां विकारतया सप्ताहसाम च विधाय "समानमितरत् श्येनेन" इति श्रूयते। तत्र किमितरांशे श्येनसमानस्यानुवादः ? किं वा श्येनगत वैशेषिकधर्माणामतिदेश इति सन्देहः।

Pūrvapakṣa : argues that the auxiliaries of jyotiśtoma have proximity while the special attributes of śyena sacrifice such as लोहितोष्णीष etc have no proximity. Hence, by the expression श्येनेन समान, the similarity of the auxiliaries adopted in śyena and those adopted in Iṣu yāga from jyotiśtoma is only restated. The employment of the special auxiliaries of śyena is not stated here.

चोदकप्राप्तसौमिकधर्माणां सन्निहितत्वाच्छ्येन वैशेषिकादीनां लोहितोष्णीषादीनामसन्निहितत्वा-च्चोदकप्राप्तं सौमिकधर्मजातमिषोः श्येनेन समानमिति चोदकप्राप्तसौमिकधर्मप्रयुक्तश्येनसादृश्यानुवाद इति प्राप्तम्।

Siddhānta : points out that though the expression इतरत् refers to proximity, mere proximity is not intended here. It refers to सदृशेतरत् that is to say, the similar others. The special auxiliaries of śyena, though do not have proximity, these are similar, hence, not taking into account mere proximity, the special auxiliaries लोहितोष्णीष etc of śyena sacrifice have to be adopted at Iṣu sacrifice also.

सिद्धान्तस्तु इतरदित्यस्य सन्निहितपरत्वेऽपि न तन्मात्रवाचित्वम्। किन्तु पूर्वोक्तसदृशेतर-

परत्वम् । श्येनवैशेषिकाणामसन्निधानेऽपि पूर्वोक्तसप्ताहादिवैशेषिकसादृश्यम् अस्त्येव । सन्निहितत्व त्यागेनाप्राप्तलोहितोष्णीषादिश्येनवैशेषिकधर्मातिदेशप्रापकमिदं वचनमिति ।

### एतद्ब्राह्मणानीत्यादीनां पञ्चहविषु सार्थवादविध्यतिदेशाधिकरणम् (7-1-3)

At Chaturmāsya there are four parvans viz. वैश्वदेव, वरुणप्रधास, साकमेध and सुनासीरीय. Among these for वैश्वदेव, eight types of हविस i.e. sacrificial offerings are stated. The अर्थवाद connected with it is stated. The auxilleries are also stated.

In respect of वरुणप्रधास, stating आग्नेय etc five offerings, it is stated that एतद्ब्राह्मणानि एव पञ्चहवींषि etc. Hence, the question is raised whether, there is अतिदेश of अर्थवाद only or both अर्थवाद and the auxiliaries.

चातुर्मास्येषु चत्वारि पर्वाणि वैश्वदेववरुणप्रधाससाकमेधशुनासीरीयनामकानि । तत्र वैश्वदेवे अष्टौ हवींष्युक्तानि । तेषामर्थवादश्चाम्नातः "वार्त्रघ्नानि वा एतानि पञ्च हवींषि" इति ।

अङ्गविधयोऽपि तत्राम्नाताः "एवं स्थिते वरुणप्रधासेषु पूर्वोक्तान्याग्नेयादीनि पञ्च हवींषि विधाय श्रूयते" एतद् ब्राह्मणान्येव पञ्च हवींषि यद्ब्राह्मणानीतराणि हवींषि इति । तत्र सन्देहः किमर्थवादमात्रस्यातिदेशः सैवेषां प्रशंसेति, उतार्थवादस्याङ्गविधीनाञ्चेति ।

Pūrvapakṣa : argues that in the statement of अतिदेश, it is stated that the five types of हविस् at वरुणप्रधास are the same as those of five offerings of वैश्वदेव. This means that pradhāna offerings are only enjoined but not the auxiliaries. In the case of अर्थवाद, it gets connected with the injunctions of offerings. Hence there is अतिदेश of अर्थवाद only, but not the auxiliaries.

आतिदेशिकवचने हि वैश्वदेविकानि हवींषि यदृशब्राह्मणवन्ति तादृशब्राह्मणवन्ति वारुणप्रधासिकान्यपि पञ्च हवींषित्युच्यते । ब्राह्मणञ्च नाम विधायकं वाक्यम् । एवञ्च यानि वैश्वदेविक हविर्विधायकवाक्यानि तद्वन्ति वारुणप्रधासिकहविंषीत्यर्थः स्यात् । एवञ्च सत्यङ्गविधीनामङ्गविधायकत्वेपि न प्रधानहविर्विधायकत्वमिति नाङ्गविधीनामतिदेशः । अर्थवादस्य तु स्वयमविधायकत्वेऽपि हविर्विधायकवाक्यत्वेन ब्राह्मणपदवाच्यता आपद्यत इति नाङ्गविधीनामतिदेशः। अपि त्वर्थवादमात्रस्य ।

Siddhānta : Though the injunction of auxiliaries, do not directly enjoin offerings, these assist the auxiliaries. Hence, these are conected



with the main injunctions through the offerings. Therefore there has to be अतिदेश of the auxiliaries also along with that of अर्थवाद.

सिद्धान्तस्तु अङ्गविधीनां साक्षाद्धविरविधायकत्वेऽपि हविरुपकारकतया तत्सम्बन्ध्यङ्गविधायकत्वेन परम्परया हविस्सम्बन्धित्वात्प्रधान वाक्यानामङ्गवाक्यैकवाक्यतामापन्नानामेव अङ्गप्रधानयुक्तभावनाविधायकत्वेन विध्येकवाक्यत्वाच्चार्थवादस्येव हवि सम्बधाविशेषादस्ति ब्राह्मणपदवाच्यत्वमित्यङ्गविधीनामप्यतिदेश इति ।

### एतद्ब्राह्मण इत्यनेनैककपालैन्द्राग्नयोः सार्थवादविध्यतिदेशाधिकरणम् (7-1-4)

This अधिकरण gives the information that is useful for the following Adhikaraṇas. At वैश्वदेव stating द्यावा पृथिव्यः एककपालः and at वरुणप्रधास stating कायः एककपालः. It is stated "एतद् ब्राह्मणः ऐन्द्राग्नः, एतद् ब्राह्मणः एककपालः etc. Here the question is raised whether there is Atideśa of only अर्थवाद or the auxiliaries also.This is answered by applying the ruling given in previous Adhikaraṇa that there is Atideśa.

उत्तरनयचिन्तोपयुक्ततयेदमारभ्यते । वैश्वदेवे द्यावापृथिव्य एवकपालः, वरुणप्रधासेषु काय एककपालः, इति विधाय श्रूयते "एतद्ब्राह्मण ऐन्द्राग्नः, एतद्ब्राह्मण एककपालः एतद्ब्राह्मण इतरश्चेतरश्च" इति । तत्र किमर्थवादस्यैवातिदेशः, उताङ्गविधीनामपीति सन्देहे, पूर्वन्यायेन सर्वस्यापीत्युक्तम् ।

### साकमेधे वारुणप्रधासिकैककपालातिदेशाधिकरणम् (7-1-5)

In this Adhikaraṇa, whether the statement एतद्ब्राह्मणः etc. occuring at साकमेध conveys the अतिदेश of वैश्वदेविक or वरुणप्रधासिक is raised.

साकमेधे श्रुतेन "एतद्ब्राह्मणः" इति अनेन वैश्वदेविकस्यातिदेशः, उत वारुणप्रधासिकस्येति सन्देहे,

Pūrvapakṣa : argues that वैश्वदेवपर्व is prakṛti. At this many auxiliaries are stated. वरुणप्रधास is vikṛti. At this, only a few auxiliaries are stated. Hence in order to get many auxiliaries, the atideśa of वैश्वदेविकब्राह्मण has to be made.

वैश्वदेवपर्वणः प्रकृतित्वात्तत्र बहूनां धर्माणामुपदेशाद्वरुणप्रधासस्य विकृतित्वेन तत्र "शमीमयो हिरण्यमयो वा स्रुवो भवति" इत्यादयोऽल्पा एव विशेषा विहिताः अतो बहुधर्मलाभाय वैश्वदेविकैककपालब्राह्मणातिदेश इति प्राप्ते,

Siddhānta : points out that in the statement एतद्ब्राह्मणः the word एतद् indicates that the reference is made here to that which has proximity. वरुणप्रधासिक has proximity but not वैश्वदेविक. Hence the atideśa of वारुणप्रधासिक has to be made.

सिद्धान्तः "एतद्ब्राह्मणः" इति अत्रेतच्छब्दस्य सन्निहितपरामर्शित्वाद्वैश्वदेविकस्य च व्यवहितत्वात् । सन्निहितवारुणप्रधासिकस्यैककपालस्यैव ब्राह्मणस्यातिदेश इति ।

इति सप्तमाध्यायस्य प्रथमः पादः

## अथ सप्तमाध्यायस्य द्वितीयः पादः

### प्रथमं रथन्तरादिशब्दानां गानविशेषार्थताधिकरणम् (VII-2-1)

In the earlier section शब्दातिदेश was discussed. In this section, अर्थातिदेश will be discussed. It is stated that "कवतीषु रथंतरम् गायति" 'कयानश्चित्र आभुवत्' etc three hymns are कवती hymns. For these वामदेव्यसाम is employed at the time of study. As a substitute for it. The nature of रथंतर साम is discussed here. The question whether the hymn अभित्वा शूर etc is रथंतर or the साम song with which it is recited is रथंतर raised.

कवतीषु रथतरं गायति इति श्रूयते । "कया नश्चित्र आभुवत् " इत्यादयः स्तिस्र ऋचः कवत्यः । तासु वामदेव्यं सामाध्ययनतः प्राप्तम् । तद्बाधितुं रथंतरं सामातिदिश्यते । तत्राति-देश्यस्य स्वरूपं निश्चेतुं रथंतरशब्दार्थश्चिन्त्यते । गानविशिष्टा "अभि त्वा शूर नो नुमः इतीयमृग्रथन्तरशब्दार्थः गीतिमात्रमिति सन्देहे ।

Pūrvapakṣa : states that according to the teacher's tradition, the hymn with the song is the meaning of the word रथंतर.

अध्यायकप्रसिद्धिवशाद्गानविशिष्टा ऋगेव तच्छब्दार्थ इति प्राप्तम्

Siddhānta : points out that when it is stated the hymn with the song is the meaning, the song which is an adjective of the hymn has to be taken as the meaning. When that is taken as the meaning, it follows that the hymn is also included in the meaning. Therefore,



there is no need to take the hymn separately as the meaning. Hence the word रथंतर means the song in the रथंतर साम only.

सिद्धान्तस्तु विशिष्टवाचित्वे नागृहीतविशेषणन्यायेन विशेषणीभूतगीत्यभिधानस्य आवश्यकत्वात् तदभिधाने च तदविनाभूतायामृचि प्रतिपत्तिसिद्ध्या शक्त्यकल्पनाल्लाघवेन गीतिमात्रमेव रथन्तरशब्दार्थ इति ।

इति सप्तमाध्यायस्य द्वितीयः पादः

## अथ सप्तमाध्यायस्य तृतीयः पादः

### सप्तमे सामान्येन अतिदेशाध्याये तृतीयः नाम्ना धर्मातिदेश पादः

In the first and second sections शब्दातिदेश and अर्थातिदेश were discussed. In this third section, अतिदेश based on the name will be discussed.

पूर्वयोः पादयोः क्रमात्साक्षादतिदेशपरवाचनिकशब्दातिदेशशब्दार्थातिदेशौ चिन्तितौ । इह पादे नाम्नाऽतिदेशश्चिन्त्यते ।

### अग्निहोत्रादिनाम्नां धर्मातिदेशाधिकरणम् (7-3-1)

The statement मासमग्निहोत्रम् जहोति occurs at कुण्डपाडिनमयन. This Agnihotra is distinct from नित्याग्निहोत्र. Here the question is raised whether the auxiliaries of नित्याग्निहोत्र come here by Atideśa or not.

सन्देहः - कुण्डपायिनामयने श्रूयते "मासमग्निहोत्रं जुहोति" इति । तदग्निहोत्रं नैयमिकाग्नि-होत्रात्कर्मान्तरमिति द्वितीयस्य तृतीयपादे "प्रकरणान्तरे" इति नये स्थापितम् । तत्र किमयमग्निहोत्रशब्दो नित्याग्निहोत्रधर्माणामतिदेशकः, उत नेति सन्देहः

Pūrvapakṣa : states that the word Agnihotra is used in its primary sense at both these places. Therefore the auxiliaries of one can not be adopted by Atideśa in the other.

नित्याग्निहोत्रे मासाग्निहोत्रे च जुहोतिधात्वर्थसामनाधिकरण्याविशेषादुभयत्राप्यग्निहोत्रपदस्य मुख्यत्वान्न धर्मातिदेशकमिदमग्निहोत्र नामेति प्राप्ते,

Siddhānta : points out that taking this word in both the places in the primary sense leads to the अनेकार्थत्वदोष. Hence it has to be taken in the primary sense in नित्याग्निहोत्र and in the secondary sense at मासाग्निहोत्र. Moreover at नित्याग्निहोत्र there is अग्निदेवता while मासाग्निहोत्र, अग्निदेवता is not directly stated. In view of this, both are not equal. Hence the auxiliaries of नित्याग्निहोत्र could be adopted at मासाग्निहोत्र.

सिद्धान्तः- उभयत्र मुख्यत्वेऽनेकार्थत्वदोषापत्तेरेकत्र मुख्यत्वेऽन्यत्र गौण्या वृत्त्यापि व्यवहार-सम्भवात् ।

नित्याग्निहोत्रे देवतायाः सत्त्वेन 'अग्नये होत्रं हविरस्मिन् इति" व्युत्पत्त्या नित्याग्निहोत्रे मुख्यस्याग्नि-होत्रपदस्य अग्निसम्बन्धहीने मासाग्निहोत्रे गौणवृत्तित्वेन तत्सादृश्यविवक्षयोपपत्तेः धर्मातिदेशकमिदं मासाग्निहोत्रगतमग्निहोत्रपदमिति ।

## प्रायणीयनाम्नां धर्मातिदेशाधिकरणम् (7-3-2)

At द्वादशाह sacrifice, the first day is named as प्रायणीय, at गवामयन also the first day is called प्रायणीय here the question is raised whether the auxiliaries of द्वादशाह are to be adopted at गवामयन on the basis of the common name.

द्वादशाहे प्रथमस्याह्नः 'प्रायणीयम्' इति नाम । गवामयनेपि प्रथमेऽहनि 'वैश्वानरे ज्योतिष्टोमः प्रायणीयमहर्भवति' इति प्रायणीयशब्दः हि प्रयुज्यते । स किं द्वादशाहिकप्रायणीयधर्माननतिदिशत्युत नेति सन्देह ।

Pūrvapakṣa : As per the ruling given in respect of the name अग्निहोत्र in the earlier adhikarana the auxiliaries of द्वादशाह have to be adopted in गवामयन.

पूर्वन्यायेनाग्निहोत्रपदमिवातिदिशतीति प्राप्ते ।

Siddhānta : The word प्रयणीय is used here in the sense of the first day of द्वादशाह by the etymological explaination of the word प्रारभ्य आयन्ति गच्छन्ति प्रवर्तते अन्येन इति. This is the primary sense of this word, ignoring this primary sense, this word cannot be taken as a name, hence, the auxiliaries of द्वादशाह should not be adopted at गवामयन.



प्रारभ्यायन्ति गच्छन्ति प्रवर्तन्ते अनेन" इति व्युत्पत्त्या प्रायणीयशब्दः प्राथम्य निमित्तकः सन् द्वादशाहप्रथमेऽहनि यथा प्रवर्तते तथा गावामयनिकप्रथमेऽहन्यप्युक्तयोगेन मुख्यत्वसम्भवे गौणार्थस्या कल्पतया । अग्निहोत्रपदवैषम्यान्नातिदेशकं प्रायणीयपदमिति सिद्धान्तः ।

## सर्वपृष्टशब्देन षट्पृष्ठानामतिदेशाधिकरणं (7-3-3)

The statement "विश्वजित् सर्वपृष्ठो भवति" occurs. Here whether the word सर्वपृष्ठ is an अनुवाद of माहेन्द्र etc four स्तोत्रs or it is an injunction of बृहत्पृष्ठ and रथन्तर पृष्ठ सामन्s together or it is an adoption of रथन्तर बृहत वैरुप etc.

'विश्वजित्सर्वपृष्ठो भवति' इति श्रूयते ।

1. तत्र किं सर्वपृष्ठशब्दः ज्योतिष्टोमाच्चोदकतः प्राप्तानां पृष्ठशब्दितानां माहेन्द्रादीनां चतुर्णां स्तोत्राणामनुवादः ।

2. किं वा 'बृहत्पृष्ठं भवति' 'रथन्तरं पृष्ठं भवति' इति ज्योतिष्टोमीयमाहेन्द्राख्यपृष्ठस्तोत्र साधनत्वेनोक्तयोर्बृहद्रथन्तरयोः साम्नोरिह चोदकतो विकल्पेन प्राप्तयोः समुच्चयविधिः ।

3. अथ द्वादशाहे षडहे गायत्रं प्रकृत्य 'सर्वाणि पृष्ठानि कार्याणि' इति विहितानां पृष्ठस्तोत्र साधनानां रथन्तरबृहद्वैरुपवैराजशाक्वररैवतानामिहातिदेश इति त्रेधा सन्देहः ।

Pūrvapakṣa : states that (1) the expression सर्वपृष्ठ does not convey अतिदेश but it is अनुवाद of माहेन्द्र etc four स्तोत्रs.

अत्र सर्वपृष्ठशब्दो नातिदेशकः । किं तु ज्योतिष्टोमे माध्यन्दिनपवमानान्तरभाविनां माहेन्द्रादिस्तोत्राणां चतुर्णामिह चोदकप्रप्तानामनुवादकः ।

(2) In माहेन्द्र स्तोत्र, बृहतपृष्ठ alone is stated. However, other three are also called पृष्ठ. Hence, there is अनुवाद of all the four by the word सर्वपृष्ठ.

न च ज्योतिष्टोमे माहेन्द्रादिस्तोत्रेष्वेकस्यैव पृष्ठस्तोत्रत्वेन चतुर्णां सर्वपृष्ठपदेन नानुवाद इति शङ्क्यम् । 'सप्तदशानि पृष्ठानि भवन्ति' इति पृष्ठानुवादेन सप्तदशस्तोमविध्यनन्तरं अभित्वा शूर नां नुमः' इत्यादीनां चतुर्णां स्तोत्राणां पाठेन तेषां सर्वेषामपि पृष्ठत्वप्राप्तेरित्येकः ।

(3) माहेन्द्रस्तोत्र which is to be recited with बृहति and रथन्तरसामन् is called पृष्ठ. Hence, the समुच्चय of these two has to be taken as सर्वपृष्ठ and be observed at विकृति.

बृहत्साधनकं रन्तरसाधनकं वैकमेव तत्र माहेन्द्रस्तोत्रं 'बृहत्पृष्ठं भवति' इत्यादिना पृष्ठ-शब्दितम्। अन्यानि तु त्रीणि छत्रिन्यायेन लक्षाणया पृष्ठशब्दितानीति न सर्वपृष्ठशब्देनानुवादो युक्तः। अपि तु चोदकेन विकल्पेन प्राप्तयोर्बृहद्रथन्तर पृष्ठयोः सर्वपृष्ठ इति समुच्चयविधिरित्यन्यः।

Siddhānta : रथन्तर etc six are to be taken by adoption on the basis of the express statement of सर्वपृष्ठ.

सिद्धान्तस्तु सर्वशब्दस्य बहुषु स्वारस्येनद्वयोरस्वारस्यान्न वैकल्पिकयोः समुच्चयविधिः। किन्तु षडहे प्रत्यहमेकैकं पृष्ठं विहितम्। तानि षड्रथन्तरादीनिज्योतिष्टोमविकृतौ षडहविकृतावपि सर्वपृष्ठ इति वचनबलादतिदिश्यन्त इत्यातिदेशिकोयं सर्वपृष्ठशब्द इति।

## अवभृथनाम्ना सौमिकधर्मातिदेशादिकरणम् (7-3-4)

At वरुणप्रघासपर्व of चातुर्मास्य it is stated that वारुण्याः निष्कासेन तुषैश्च अवभृथम् यन्ति, the word वारुणी means the आमिक्षा of वरुणप्रघास, and the word निष्कास refers to स्थालीलग्न आमिक्षा, i.e. the आमिक्षा stuck to the vessel. अवभृथ should be performed with this and with व्रीहितुष i.e. husk of paddy used for पुरोडाश. Here the question is raised whether आमिक्षानिष्कास and व्रीहितुष are enjoined as auxiliaries of अवभृथ of दर्शपूर्णमास or a separate sacrifice with आमिक्षानिष्कास and व्रीहितुष as द्रव्य is enjoined.

चातुर्मास्येषु वरुणप्रघासाख्ये पर्वणि श्रूयते 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति इति। तस्यार्थः वारुण्या वरुणप्रघासविहिताया आमिक्षाया निष्कासेन स्थालीलग्नेन लेपेन चरुपुरोडाशार्थ-व्रीहितुषैश्चावभृथं कुर्यरिति। तत्र संदेहः किमवभृवथशब्देन दार्शपौर्णमासिकमपां व्युत्सेकं चोदक-प्राप्तमनूद्य तत्राऽमिक्षानिष्कासादिरुपो गुणो विधीयते किं वा सौमिकावभृथधर्मकं कर्मान्तरं निष्कासादिद्रव्यकं विधियते इति।

Pūrvapakṣa : states that the word अवभृथ refers to दर्शपूर्णमास अवभृथ only, hence, the two द्रव्यs namely आमिक्षा निष्कास and व्रीहितुष are enjoined as auxiliaries of दर्शपूर्णमास अवभ्रथ only.

'एष वै दर्शपूर्णमासयोरवभृथः' इति वाक्ये दार्शपौर्णमासिके प्रणयनचमसस्थानामपामन्तर्वेदि निनयनशब्दिते जलोत्सेकेऽवभृथशब्दप्रयोगात् तदनुवादेन निष्कासतुषरूपगुणद्वयसाहित्यसम्भवाद्-गुणद्वयविधिपरमिदं वाक्यमिति।



Siddhānta : At सोमयाग a separate ritual called अवभृथ is enjoined, the primary meaning of the word अवभृथ is that ritual only. The meaning i.e. sprinkling water, is only secondary meaning, hence this statement is meant for the अतिदेश of the auxiliaries of अवभृथ at सोम sacrifice only.

1. सिद्धान्तस्तु, 'वारुणेनैककपालेनावभृथं यन्तीति सधर्मकमवभृथाख्यं कर्म सोमयागे विहितम्। तत्रावभृथशब्दो मुख्यः। जलोत्सेके तु स्तुत्यर्थतया गौणः।

2. तुषैश्चावभृथं यन्ति कुर्वन्तीत्यनेन कर्मान्तरविधौ प्रत्यक्षेण सिद्धे तत्र श्रुतोऽवभृथशब्दः सौमिकमुख्यावभृथधर्मातिदेशार्थमिहाग्निहोत्रशब्द इव प्रयुक्त इति सौमिकावभृथधर्मातिदेशकोऽयं शब्द इति।

## वरुणप्रघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् (7-3-5)

In the earlier अधिकरण a different ritual that has the same auxiliaries as that of सौमिकावभृथ is stated. Here the question is raised whether पुरोडाश is द्रव्य at this ritual or व्रीहितुष and आमिक्षा निष्कास.

यदिदं सौमिकावभृथसमानधर्मकं कर्मान्तरमित्युक्तम्। तत्किं पुरोडाशद्रव्यकमुत तुषनिष्कासद्रव्यकमिति सन्देहे,

Pūrvapakṣa : states that पुरोडाश which is द्रव्य for सौमिकावभृथ is the द्रव्य here on the basis of the comman name.

नामातिदेशेन सौमिकावभृथद्रव्यस्य पुरोडाशस्यैवात्र प्राप्तेः पुरोडाशद्रव्यकमेवैतत्कर्मान्तरमिति प्राप्ते।

Siddhānta : व्रीहितुष and अमिक्षानिष्कास are expressly stated here as द्रव्य for this ritual. Hence, this ritual is enjoined with two द्रव्यs, consequently, this does not result in वाक्यभेद.

सिद्धान्तः प्रत्यक्षवचनादातिदेशिकस्य बाधसम्भवात् श्रुततुषादिद्रव्यकमेवेदं कर्मान्तरम् द्रव्यद्वयविशिष्टकर्मविधानाच्च न वाक्यभेदः।

## षष्ठं राजसूये श्रुताद्वैष्णवशब्दादातिथ्यधर्मानतिदेशाधिकरणम् (7-3-6)

At आतिथ्येष्टि the statement वैष्णवो नवकपालः occurs. With reference to that

अश्ववाल etc auxiliaries are enjoined At राजसूय the statement वैष्णवः त्रिकपलः occurs Here, the question is raised whether on the basis of the word वैष्णव the auxiliaries of आतिथ्येष्टि should be adopted by अतिदेशः or not.

अतिथ्येष्टौ 'वैष्णवो नवकपालः' इति श्रूयते । तत्राश्ववालादयः केचिद्धर्मा विहिताः । राजसूये च वैष्णवस्त्रिकपालः' इति श्रुतो वैष्णवशब्दः किमातिथ्येष्टिधर्माननतिदिशत्युत नेति सन्देहे,

Pūrvapakṣa : argues that as per the ruling given in respect of अग्निहोत्र, here also अतिदेश of the auxiliaries of आतिथ्येष्टि has to be made.

अग्निहोत्रन्यायेन पूर्वत्रावभृथशब्द इवातिदिशतीति प्राप्ते

Siddhānta : points out that the word वैष्णव has तद्धित suffix indicating that this word refers to देवता.

In view of this it has to be envisaged that the auxilliary of विष्णुरूप-देवता is enjoined here.

'विष्णुर्देवता अस्य' इति देवतार्ये विहिततद्धितप्रत्ययान्तवैष्णवशब्दस्य विष्णुरूपगुणविधायकतया श्रुत्यर्थसम्भवे गौणत्वमाश्रित्य धर्मातिदेशकताङ्गीकारो न युक्त इति गुणविधिरयमिति सिद्धान्तः ।

## सप्तमं निर्मन्थ्यादिशब्दैः धर्मानतिदेशाधिकरणम् (7-3-7)

At अग्निषोमीयपशु निर्मन्थ्य अग्नि with the auxiliaries is stated. This word निर्मन्थ्य is employed for coocking इष्टका s at अग्निचयन by the statement निर्मन्थेन इष्टकाः पचन्ति. In the same way at दर्शपूर्णमास वर्हिराज्य with auxiliaries is stated. The words वर्हि and आज्य are employed at पशुयाग by the statements वर्हिषा यूपावटमास्तृणाति इति 'आज्येन यूपमनक्ति' इति.

Here, the question is raised whether the निर्मन्थ्य etc words bring by अतिदेश the auxiliaries of निर्मन्थ्य etc stated in प्रकृति or not.

आग्नीषोमीयपशौ धर्मवान्निर्मन्थ्योऽग्निराम्नातः । स च निर्मन्थ्यशब्दोऽग्निचयन इष्टकापाके प्रयुक्तः 'निर्मन्थ्येनेष्टकाः पचन्ति' इति । तथा दर्शपूर्णमासयोः सधर्मकं वर्हिराज्यं चाम्नातम् । तौ वर्हिराज्यशब्दौ पशौ प्रयुक्तौ 'वर्हिषा यूपावटमास्तृणाति' इति 'आज्येन यूपमनक्ति' इति । ते किं निर्मन्थ्यादिशब्दाः प्रकृतिगतनिर्मन्थ्यादिधर्मान् अतिदिशन्त्युत नेति सन्देहे,



Pūrvapakṣa : states that if by the words निर्मन्थ्य etc auxiliaries are not brought by अतिदेश, the injunctions निर्मन्थ्यन इष्टकाः पचन्ति etc will remain सांकाक्ष since these auxiliaries are not provided in any other way. hence, these have to be brought by अतिदेश.

निर्मन्थ्यादिशब्दानां धर्मानतिदेशकत्वेऽन्यतो धर्माप्राप्तेः 'निर्मन्थ्यनेष्टकाः पचन्ति' इत्यादिविधयः साकांक्षाः स्युः । अतोऽतिदेशका इति प्राप्ते ।

Siddhānta : मथन, लवन, विलापन etc the auxiliaries of निर्मन्थ्य, वर्हि and आज्य are provided by worldly practises, hence, there is no कथम्भावाकांक्षा to seek these. Hence, there is no need of bringing them by अतिदेश. Further, the words निर्मन्थ्य etc can be taken in their primary sense but not in the secondary sense. This means that the auxiliaries of these are not to be brought by अतिदेश.

सिद्धान्तः मथनलवनविलापनादीनां निर्मन्थ्यवर्हिराज्यधर्माणां लोकतोप्यवगतिसम्भवेन निर्मन्थ्यादिशब्दानां धर्मानतिदेशकत्वेपि कथम्भावाकांक्षानुदयाद् वैष्णवशब्दस्येव निर्मन्थ्यादिशब्दानां मुख्यवृत्तिसम्भवे सादृश्यविवक्षया गौणत्वाङ्गीकारायोगादनतिदेशका एते शब्दा इति ।

## प्रणयनशब्देन सौमिकधर्मानतिदेशाधिकरणम् (7-3-8)

At chaturmasya there are four पर्वन्s i.e. वैश्वदेव, वरुणप्रधास, साकमेध, and शुनासीरीय. With reference to these the statement प्रणयन्ति occurs. Here the question is raised whether this प्रणयन is the same as सौमिकप्रणयन or this is an अनुवाद of प्रणयन from दर्शपूर्णमासप्रकृति.

चातुर्मास्येषु चत्वारि पर्वाणि वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानि । तत्र श्रूयते 'द्वयोः प्रणयन्ति, तस्माद्द्वाभ्यां यन्ति' इति । तत्र किं सौमिकप्रणयनसमानधर्मकमिदं प्रणयनमुत दर्शपूर्णमासरूपप्रकृतितः प्राप्तमनूद्यत इति सन्देहे,

Pūrvapakṣa : Here, there is अतिदेश of सौमिक अग्नीप्रणयन that has the auxiliaries of वैसर्जनहोम उत्तरवेदि etc.

प्राकृतस्य चोदकप्राप्तत्वेन प्रणयन्तीति पुनर्वचनस्याऽनर्थक्यान्निर्मन्थ्यशब्दस्येवानतिदेशकत्वेऽपि प्रणयतिशब्दस्य प्राङ्नयनरूपार्थे यौगिकस्यापि सौमिकातिदेशकत्वे सार्थक्यसम्भवाद्वैसर्जनहोमोत्तर-वेद्यादिधर्मोपेतं सौमिकं यदग्निप्रणयनं तदिहाप्राप्तं वचनादतिदिश्यत इति प्राप्तम् ।

Siddhānta : सौमिक प्रणयन cannot be brought here since the word प्रणयन्ति is not a nominative and hence not a name. Therefore, it is an अनुवाद of प्रणयन which is चोदकप्राप्त. The purpose of this अनुवाद is two.

(1) To affirm that there are only two प्रणयनs and to exclude taking it as four प्रणयनs.

(2) To enjoin the auxiliary उत्तरवेदि.

(3) To connect it with the अर्थवाद that states that by observing two प्रणयनs only the sacrifice would be complete.

सिद्धान्तस्तु प्रणयन्तीत्यस्यासुबन्तत्वेन क्रियासामानाधिकरण्याभावेन चानामतया सौमिक-प्रणय-नानुपस्थापकत्वात्प्राकृतस्यैव चोदकप्राप्तस्य प्रणयनस्यायमनुवादः । स च 'द्वयोः प्रणयन्ति, न चतुर्षु' इति परिसङ्ख्यार्थो वा, 'उत्तरवेद्यामग्निं निदधाति' इत्युत्तरवेदिरूपगुणविध्यर्थो वा, 'यस्माद्द्वयोः प्रणय-नमस्ति तस्माद्द्वाभ्यां यज्ञसमाप्तिं गच्छन्ति' इत्युत्तरवाक्यश्रुतार्थवादसम्बन्धार्थो वेति नानर्थक इति ज्ञेयम् ।

## द्वयोः प्रणयन्तीत्यनेन मध्यमयोर्द्वयोरेव प्रणयनाधिकरणम् (7-3-9)

In the earlier अधिकरण it was stated that प्रणयन has to be observed for two only. Here, the question is raised whether these two are the first and the last or the middle two or any two.

द्वयोरिति ययोः कयोश्चिदित्यनियमः, उताद्यन्तयोः पर्वणोरथ मध्यमपर्वणोरिति संदेहे,

Pūrvapakṣa : (i) As there is no special ground to choose particular two, प्रणयन may be observed for any two.

(ii) The statement 'वैश्वदेवे उत्तरवेदिम् उपवपन्ति न शुनासीरिये' prohibits उत्तरवेदि for the first and the last. No prohibition can be made for that which has no claim. This means there was a possibility of उत्तरवेदि here. This उत्तरवेदि is an auxiliary of अग्निप्रणयन hence, अग्निप्रणयन has to be observed for the first and the last.

विशेषाश्रवणादनियम इत्येकः पूर्वपक्षः न वैश्वदेव उत्तरवेदिमुपवपन्ति । न शुनासीरीये



इत्युत्तरवेदिप्रतिषेधः आद्यन्तपर्वणोः श्रुयमाणस्तयोरुत्तरवेदिं प्रसञ्जयति । अप्रसक्तनिषेधायोगात् । उत्तरवेदिश्चाग्निप्रणयनाङ्गम् । तस्मादुत्तरवेदिप्रसक्तिद्वारा आद्यन्तयोरिदमग्निप्रणयनमिति द्वितीयः.

Siddhānta : states that अग्नीप्रण्न is to be observed for the middle two only. The middle two पर्वन्s are stated to be the means for the movement. As these are described as thighs of the sacrifice.

(i) मध्यमयोः पर्वणोरिदं प्रणयनम् । न प्रथमोत्तमयोः । तस्माद्द्वाभ्यां यन्ति इति गत्यर्थवादवाक्यशेषाद्गतिसाधनभूतयोरिदं प्रणयनम् । गतिसाधनत्वञ्च मध्यमपर्वणोरेव । 'उरू वा एतौ यज्ञस्य, यद्वरुणप्रधासः साकमेधश्च' इति तयोरूरुत्वेन संस्तवात्' ।

## स्वरसामादिशब्देन धर्मातिदेशाधिकरणम् (7-3-10)

i) At गवामयन which is to be performed for one full year, between two six months, there is one day याग called विषुवत्. This is also called दिवाकीर्ति. Before and after this, there are three अहन्s with स्वरसंज्ञकसाम. For these उकथ्यसंस्थाकत्व, सप्तदश सोमकत्व etc धर्मs are prescribed.

At अष्टरात्र, two स्वरसामन्s are stated.

(ii) At वैश्वदेवपर्व, वैश्वदेवी आमिक्षा is stated. मैत्रावरुणी आमिक्षा is also stated elsewhere.

Here, the question is raised whether अष्टरात्राहगतस्वरसामाह and वारुणैककपालामिक्षा are a विकार of गावाभयनिकस्वरसामाह वैश्वदेविककपालामिक्षा or not.

Pūrvapakṣa : states that at गवामयन and अष्टरात्राह the गुणs are prescribed in the same way. Similarly, आमिक्षा is also prescribed in the same way at वैश्वदेव and वारुण. This means there is no धर्मातिदेश. Hence, one is not विकार of the other.

Siddhānta : points out the there is clear indication in the भाष्य to consider these two as विकार. भाट्टसङ्ग्रह gives the details of the indication.

## "वासो ददाति" इत्यादै वास आदिशब्दानामाकृतिनिमित्तता अधिकरणम् (7-3-11)

At a certain sacrifice the statements वासो ददाति and अनो ददाति occur.

Here, the question is raised whether the words वासः and अनः are employed on the basis of the action of the weaver and the carpenter and therefore bring the action of the weaver and the carpenter by अतिदेश or not.

कर्मविशेषे श्रूयेत 'वासो ददाति इति । किं वासोनःशब्दौ तन्तुवानतक्षणक्रियानिमित्तकौ संतौ दातुः कुविन्दतक्षगतवानतक्षणक्रियातिदेशकौ, उत नेति सन्देहे,

Pūrvapakṣa : argues that the words वासः and अनः bring the action of the weaver and the carpenter, Hence, यजमान who has to give these should get duly prepared by the weaver and the carpenter and give them.

वासोनः शब्दयोरपि कुविन्दवर्धकिकर्तृकतन्तुवान तक्षणक्रियानिमित्तकत्वाद्वासोनःब्दयोरपि तत्क्रियातिदेशकत्वाद्वासोर्दात्रा तन्तुवानतक्षणक्रियाभ्यां ते सम्पाद्य दातव्ये इति प्राप्तम् ।

Siddhānta : points out that these words do not convey the action of the weaver and the potter but convey the very objects वास and अनः. Therefore, by these words action is not to be brought by अतिदेश. Hence the very objects वासः and अनस् already prepared be given.

सिन्द्धान्तस्तु, जात्यन्वयतिरेकानुविधानेन गवाश्वादिशबद्धज्जातिनिमितकावेतौ । न क्रियाहेतुकौ । जातेः क्रियाभि व्यङ्ग्यत्वात्तदुत्तरकालं शब्दप्रयोगः । न तावता क्रियावाचित्वं शब्दयोः । अतः क्रियानतिदेशकावेतौ शब्दाविति सिद्धमेव वासः प्रभृति देयमिति ।

## द्वादशं गर्गत्रिरात्रे लौकिकेऽग्नावुपनिधानाधिकरणम् (7-3-12)

At गर्गत्रिरात्र ritual with reference to आज्य, दोह, and साम it is stated अग्नीमुपनिधाय स्तुवीत । Here, the question is raised whether the अग्नि refered to here is आधानसंकृत आहवनीय etc or लौकिक अग्नि that is not संस्कृत.

गर्गत्रिरात्रे आज्यदोहसामानि प्रकृत्य श्रूयते 'अग्निमुपनिधाय स्तुवीत' इति । तत्रोपनिधेयाग्निः किमाधानसंस्कृत आहवनीयादिरुतासंस्कृतो लौकिकोऽग्निरिति सन्देहे,

Pūrvapakṣa : states that here the word अग्नि refers to आधान संस्कृत वैदिक अग्नि only.



The संस्कृत अग्नि is an auxilliary of all वैदिक activities. The expression स्तुवित refers to वैदिक स्तोत्र hence, the संस्कृत अग्नि is an auxilliary of स्तोत्र also. Therefore, here the आधान संस्कार has to be brought by अतिदेश as an auxiliary of उपनिधान.

अग्नि शब्दस्यात्राऽधानसंस्कृतवैदिकाग्निवाचित्वमेव युक्तम् संस्कृताग्नेः प्रयोजनाकांक्षितया सर्ववैदिककर्मशेषत्वेन 'स्तुवीत' इत्युक्तस्तोत्ररुपकर्मशेषत्वस्याप्युचितत्वादाधानसंस्कारं स्तोत्रसम्बन्धि न्युपनिधानेऽङ्गत्वेनातिदिशतीति प्राप्ते,

Siddhānta : points out that here the word अग्नि is used in the general sense but not in the special sense of संस्कृताग्नि, since, the purpose of संस्कृताग्नि is served in respect of आहवनीय etc there is no प्रयोजनापेक्षा here, Hence, the उपधान of लौकिक अग्नि only is stated here.

'अग्निमुपनिधाय' इति विधिबलात्संस्कृताग्नेरुपनिधानमुत संस्कृतस्य प्रयोजनाकांक्षाबलात् । नाद्यः । अग्निशब्दस्य सामान्यवचनत्वेन संस्कृतानभिधानात् । नान्त्यः । 'यदाहवनीये जुहोति' 'गार्हपत्ये हवींषि श्रपयति' इत्यादिभिराहत्य प्रयोजननिर्देशान्न प्रयोजनान्तरापेक्षेति लौकिक एवाग्निरुपधेय इति ।

## ''उपशयो यूपो भवति'' इत्यादौ यूपशब्दस्य संस्काराप्रयोजकताधिकरणम् (7-3-13)

In connection with placing eleven यूप it is stated that उपशय is also a यूप, After placing ten यूपs from north to south the pole placed as eleventh is उपशय Here, the question is raised whether परिव्याण etc auxiliaries of यूप be brought by अतिदेश for this उपशय or not.

यूपैकादशिन्यां श्रूयते 'उपशयो यूपो भवति' इति । एकादशानां यूपानां समूह एकादशिनी । तत्रोत्तरदक्षिणतया दश यूपान्स्थापयित्वा तदनन्तरं सर्वयूपान्ते दक्षिणभागे स्थाप्य एकादशः काष्ठविशेष उपशयाख्यः । यद्दक्षिणत उपशयः ' इति वचनात् । तत्रोपशये श्रुतो यूपशब्दः परियाणादियूपसंस्कारातिदेशकः उत नेति सन्देहे,

Pūrvapakṣa : states that the name यूप is given to उपशय on the basis of संस्कार, hence, the auxiliaries of यूप have to be brought here by अतिदेश.

यूपशब्दस्य संस्कारनिमित्तकत्वादुपशये प्रयुक्तस्तद्धर्माननितिदिशेदेव यूपशब्द इति प्राप्तम् ।

Siddhānta : points out that यूपत्व is not enjoined for उपशय. Cutting etc certain auxiliaries only are observed, because of expressed statement. Keeping this in mind the word यूप is used for उपशय in a secondary sense as in the case of यजमानो यूपः.

(i) सिद्धान्तस्तु, स्यादेवं यदि मासाग्निहोत्रादौ अग्निहोत्रत्वादिकमिवोपशये यूपत्वं विधीयते ।

(ii) न ह्यत्र विधिरस्ति । भवतीति वर्तमाननिर्देशात् । वचनवशेन छेदनादियूपधर्माणामुपशयेऽनुष्ठानेन गौण्या वृत्त्या यूपशब्दोऽयमनुवादः । अतो 'यजमानो यूपो भवति' इत्यत्रेवोपशयस्तुत्यर्थो यूपशब्दो न धर्मातिदेशक इति ।

## ''पृष्ठैरुपतिष्ठते'' इत्यादौ पृष्ठशब्दस्य ऋग्वेदवाचित्वाधिकरणम् (7-3-14)

At अग्नीचयन the statement पृष्ठैरुपतिष्ठते occurs. The word पृष्ठ is the name of the स्तोत्रs to be recited at माध्यन्दिनसवन of ज्योतीष्टोम. The word पृष्ठ when employed for the उपस्थानकर्म of अग्निचयन, whether brings the auxiliaries of पृष्ठ at ज्योतीष्टोम by अतिदेश or it only conveys the hymn recited in रथन्तर साम that conveys अग्नि is raised.

(i) अग्निचयने श्रूयते 'पृष्ठैरुपतिष्ठते' इति । पृष्ठशब्दो ज्योतिष्टोमे माध्यन्दिनसवनगतस्य स्तोत्राख्यकर्मणो नामधेयमिति नामधेयपदे निर्णीतम् ।

(ii) स पृष्ठशब्दोऽग्निचयनगतोपस्थानकर्मणि प्रयुज्यमानो ज्योतिष्टोमगतपृष्ठधर्मानतिदिशत्युत पृष्ठसाधनीभूतरथन्तराद्याधारमन्त्रेषु लक्षणया वर्तमानस्तैरग्नेरभिधानविधिपर इति सन्देहे,

Pūrvapakṣa : The word पृष्ठ is विध्युदेश. Hence, it brings the auxiliaries concerned by अतिदेश because by the expression उपतिष्ठते अपूर्वकर्म is enjoined here.

विध्युद्देशस्य पृष्ठशब्दस्याग्निहोत्रशब्दस्येवातिदेशकत्वमेव ।

Siddhānta : points out that the statement पृष्ठैरुपतिष्ठते means पृष्ठसदृशैः कर्मभिः अभिदध्यात् । Hence, by the word पृष्ठ the hymns to be recited in the रथन्तरसाम should be taken. The recitation of this is enjoined here.



सिद्धान्तस्तु पृष्ठैरुपतिष्ठते इत्यस्य पृष्ठसदृशैः कर्मभिः अभिदध्यादिति रथन्तरादिसामोपेतान् मंत्रान् लक्षयित्वा तैरभिदानमंत्रश्चोद्यते । नातिदेशकत्वमत्र पृष्ठशब्दस्येति ।

इति सप्तमाध्यायस्य तृतीयः पादः

# अथ सप्तमाध्यायस्य चतुर्थः पादः

## सप्तमे सामान्येनातिदेशाध्याये चतुर्थो लङ्गातिदेशपादः

## सौर्ये चरौ इतिकर्तव्यताधिकरणम् (7-4-1)

In the earlier section अतिदेश was stated by expressed statement. Here in this पाद अतिदेश will be described by the infered statement.

विधिवाक्ये प्रत्यक्षश्रुतनाम्ना अतिदेशः पूर्वपादे उक्तः । अत्र तु आनुमानिक वचनेन अतिदेशः उच्यते ।

The statement सौर्यम् चरुं निर्वपेत् states a sacrifice without the mention of auxiliaries. Here the question is raised whether the auxiliaries be brought by अतिदेश from other sources or not.

"सौर्यं चरुं निर्वपेत्" इत्यादिकम् अनिष्टधर्मकं कर्म उदाहृत्य चिन्त्यते । किमत्र यतः कुतश्चित् धर्माः अतिदिश्यन्ते उत नेति सन्देहे,

Pūrvapakṣa : argues that since there are no प्रमाणs to provide the auxiliaries by अतिदेश no अतिदेश is necessary here.

प्रापक प्रमाणाभावान्नातिदिश्यन्ते इति प्राप्ते,

Siddhānta : The injunction सौर्यम् चरुम् निर्वपेत् is in need of इतिकर्तव्यता such इतिकर्तव्यता is not provided by expressed statement. Therefore, it has to be brought from other sources, otherwise the very injunction will be incomplete. The form of the inference may be put as सौर्यादियागः अन्यतो धर्मप्राप्तिमान् अनिर्दिष्टधर्मकत्वे सति तदाकांक्षावत्वात.

प्रत्यक्षोपदेशे इति कर्तव्यतायाः असमर्पणात् अन्य त एव तस्याः प्राप्ति ।

## सौर्ये चरौ वैदिकेतिकर्तव्यतावत्त्वाधिकरणम् (7-4-2)

In this अधिकरण the question whether the इतिकर्तव्यता of स्थालीपाक etc is लौकिकी or वैदिकी is raised.

Pūrvapakṣa : states that वैदिकी इतिकर्तव्यता is fixed for दर्शपूर्णमास etc by the express statement. Hence, these cannot be taken to the other places while लौकिकी can be employed for others also.

वैदिक्याः प्रत्यक्षशास्त्रेण दर्शपूर्णमासादिप्रकरणेषु नियमितत्वेन अन्यत्र नयनायोगात् लौकिक्याश्च तथात्वात् सैव अत्र सम्बद्ध्यते ।

Siddhānta : points out that in the case of वैदिक rituals वैदिकी इति कर्तव्यता presents itself earlier. Hence, लौकिकी इतिकर्तव्यता cannot be taken ignoring the वैदिकी इतिकर्तव्यता.

वैदिके कर्मणि वैदिक्याः एव इति कर्तव्यतायाः शीघ्रं उपस्थितेः तदतिक्रमेण अनुपस्थित लौकिकग्रहणायोगात् वैदिकी एव ग्राह्या ।

## गवामयने ऐकाहिकेतिकर्तव्यतानुष्ठानधिकरणम् (7-4-3)

In this अधिकरण the प्रावल्य, दौर्बल्य between the अतिदेश based on नामधेय and आनुमानिकवचन is discussed.

At गवामयन the rituals of the names of ज्योतिः, गौः, आयुः etc are prescribed These belong to अहर्गण group of rituals. As per the statement, 'गणेषु द्वादशाहस्य' द्वादशाह auxiliaries are to be observed. Since, these have ज्योति etc names, on the basis of नामधेय the auxiliaries of एकाहयागः are to be observed. Here the question is raised i) whether such auxiliaries of both which do not conflict with each other are to be observed ii) In the case of the auxiliaries that conflict whether the auxiliaries of द्वादशाहिक be observed or those of एकाहिक be observed.

पूर्वपादे नामधेयस्य पूर्वत्र चानुमानिकवचनस्य चातिदेशकत्वे सिद्धेऽत्र तयोः प्राबल्यदौर्बल्य-चिन्तनात्सङ्गतिः ।



गवामयने ज्योतिः, गौः, आयुः, इत्यादिसञ्ज्ञायुक्ता यागा विहिताः । तेषामहर्गणान्तःपातित्वात् **'गणेषु द्वादशाहस्य'** इति वक्ष्यमाणदिशा गणेषु द्वादशाहविध्यन्तः प्राप्तः । नामकैकाहयागविध्यन्तः प्राप्तः । तत्राविरुद्धा उभयधर्मा अनुष्ठीयन्ते । विरुद्धेषु किं 'द्वादशाहिकाः नामधेयाच्च ज्योतिरादि-कार्याः, उतैकाहिका इति सन्देहे,

Pūrvapakṣa : In the statement 'प्रजाकामाः गवामयनमुपेयुः फलसंबंध' is stated. इतिकर्तव्यताकंक्षा will arise only after that. In the statement that conveys फलसंबंध the name is not mentioned. Therefore, on the basis of the name the auxiliaries cannot be observed. Hence, the auxiliaries of द्वादशाह provided by the injunction should be observed in the rituals ज्योतिः गौः etc.

'प्रजाकामा गवामयनमुपेयुः' इति वाक्येन 'गवामयनेन प्रजा भावयेत्' इति भावनायाः फलसम्बन्धोत्तरकालमेव 'कथं भावयेत्' इतीतिकर्तव्यताकांक्षोदयात्फलसम्बन्धबोधकवाक्ये च नाम्नोऽश्रवणेन तेन धर्माप्राप्तेरनुमितचादकवाक्येन धर्मप्राप्तिमुपेत्येति कर्तव्यताकांक्षाशान्तेरङ्गीकार्यत्वा-न्नामधेयादपि प्रबलचोदकप्राप्ता द्वादशाहिका एव धर्मा ज्योतिरादियागेषु कार्या इति प्राप्तम् ।

The based on the name of the अतिदेश is indicated earlier. Therefore the auxiliaries of ज्योतिः etc. यागs only be brought by अतिदेश.

**सिद्धान्तस्तु,** प्रयोगवाक्ये फलसम्बन्धबोधानन्तरं कथम्भावाकांक्षोदयेपि प्रयोगवाक्यमुत्पत्ति-वाक्यावगतरूपाणि कर्माण्यालोच्यैव फले विनियुङ्क्ते । तानि च सञ्ज्ञाविशिष्टान्येवालोच्यत इति प्रत्यक्षश्रुतनामनिमित्तातिदेशः शीघ्रं प्रवर्तते । बोदकाधीनस्तु विलम्बित इति ततोपि प्रबल-नामधेयनिमित्तैकाहिकज्योतिरादिविध्यन्तं एव । न द्वादशाहिक इति ।

इति सप्तमाध्यायस्य चतुर्थः पादः

इति सप्तमाध्यायः

# Chapter-VIII

## अष्टमाध्यायस्य प्रथमः पादः

### अथाष्टमे विशेषेणातिदेशाध्याये प्रथमः स्पष्टालिङ्गेनातिदेशपादः (8-1-1)

In the first अधिकरण of the last section of the previous chapter it is stated that in सौर्ययाग etc sacrifices wherein इतिकर्तव्यता is not expressly stated the वैदिकी इतिकर्तव्यता should be brought by अतिदेश from other sources. Here in this chapter it is discussed as to which sacrifices such वैदिक अतिदेश is to be made.

इतिकर्तव्यताविधेरिति पूर्वपादीयाद्यनये । सौर्यादिष्वश्रुतेतिकर्तव्याकेष्वानुमानिकचोदक वाक्ये-नान्यतो प्राप्तः वैदिको विध्यन्तः? क्व प्रवर्तते? इति विशेषश्चिन्त्यत इति पूर्वनन्तर्यमस्याध्यायस्य ।

### अथ विशेषविलक्षणम्

Here the question whether the special discussion stated above is to be undertaken or not is raised.

विशेषलक्षणमारभ्यं न वेति सन्देहे,

Pūrvapakṣa : argues that there is no ground for a special discussion. अतिदेश of the auxilliaries could be made into सौर्य etc sacrifices from दर्शपूर्णमास, ज्योतीष्टोम etc all sacrifices alternately. Hence, there is no need of any special discussion.

नियामकविशेषाभावेन सौर्यादावेकैकस्मिन् दशपूर्णमासज्योतिष्टोमादिसर्वकर्मधर्माणामेव । विकल्पेनाति देशसम्भावान्नात्र विशेषलक्षणमिति प्राप्ते ।

Siddhānta :The programme of the sacrifices has to be organised in an orderly way. Therefore, auxiliaries should be brought by अतिदेश from the respective sacrifices only, but not from all sacrifices in a disorderly way. This needs the special discussion as to from which sacrifice the auxilliaries are to be brought to which other sacrifice by अतिदेश.



शास्त्रार्थस्य व्यवस्थाया आवश्यकत्वात्तदन्यथानुपपत्या नियतादेकस्मादेव कर्मणो धर्माणामतिदेशो नाव्यवस्थया सर्वधर्मातिदेशः । अतः कस्य धर्मः? क्व प्रवर्तते? इति विशेषलक्षणमारभ्यमिति सिद्धान्तः

### विशेषकर्मणो धर्मातिदेशाधिकरणम् (8-1-2)

In the earlier अधिकरण it is stated that in सौर्य etc sacrifices auxilliaries be brought by अतिदेश from one sacrifice only but not from many sacrifices alternately. Here, the question from which sacrifice the auxilliaries be brought to सौर्य etc sacrifices is answered by the सूत्र यस्य लिङ्गम् etc. This sutra states that from that sacrifice in which the लिङ्ग i.e. indication of द्रव्य or देवता is found the auxilliaries be brought by अतिदेश.

i) पूर्वत्रैकस्मादेव कर्मणो धर्माणामतिदेशः सौर्यादौ । न तु विकल्पेनानेककर्मभ्य इति स्थिते अत्र कस्य कर्मणा विध्यन्तः सौर्यादौ? इति जिज्ञासायां प्रकृतिविकृतिभावे चिन्हमिह सूत्रे कथ्यते ।

ii) सौर्यवाक्ये "द्रव्यदेवतासम्बन्धाक्षिप्तेन यागेन ब्रह्वर्चसं भावयेत्" इति निर्वपेदित्यत्राख्य-तेनोक्ते, कथमित्याकांक्षायां समीपे विध्यन्तस्यानाम्नानात्सौर्यवाक्यं स्वसदृशं वाक्यमुपस्थापयति
In the case of सौर्ययाग, आग्नेय वाक्य has the indication of देवता and द्रव्य. Hence, the auxilliaries of आग्नेय, प्रयाज etc be adopted in सौर्ययाग. The same procedure be followed in respect of अग्नेषोमीय, ऐन्द्राग्न उपाशुंयाज etc.

iii) सदृशश्च वाक्यं निर्वपतेस्तद्धितेन देवतादिनिर्देशस्यैकदेवताकत्वस्यौषधद्रव्यकत्वस्य च साम्या-दाग्नेयवाक्यमेव

iii) आग्नेयवाक्य is similar to सौर्यवाक्य as both have एकदेवता and औषधिद्रव्य.

iv) तच्च वाक्यमंशत्रययुक्तां भावनां स्वार्थभूतां बोधयति । तत्र च फलकरणांशयोः सौर्येऽ-नपेक्षत्वेनानन्वयेपि कथम्भावाकांक्षाशंस्त्वपेक्षितत्वादन्वेति ।

iv) सौर्यवाक्य is in need of इति कर्तव्यता

v) तथा च यथा प्रयाजाद्यान्वधानादिभिरदृष्टदृष्टोपकारसम्पादनेनाऽग्नेयेन स्वर्गो भावितस्तथा सौर्येण ब्रह्मवर्चसं भावयेत् इति सौरवाक्यार्थः पर्यवस्यतीति ।

v) Just as by the observation of प्रयाज etc स्वर्ग is to be obtained by आग्नेय. ब्रह्म वर्चस has to be obtained by सौर्य.

एवमनेकदेवताकेष्वप्यश्रुतविध्यन्तेष्वग्नीषोमीयैन्द्राग्नविध्यन्तः आज्यद्रव्यकेषूपांशुयाजस्य इत्यादि ध्येयम् ।

### **सोमे एष्टिकधर्मातिदेशऽधिकरणम्** (8-1-3)

In this adhikarana the question whether there is दर्शपौर्णमासिकधर्मातिदेश at सोमयाग or not is raised.

सोमयागे दार्शपौर्णमासिकधर्माणामतिदेशः अस्ति नवा इति सन्देहः ।

Pūrvapakṣa : argues that there is दर्शपूर्णमास विध्यन्तातिदेश in the इष्टिs starting from दीक्षणीया upto अवभृथ and in पशुयागs. The सोमयाग is inbetween. Therefore दर्शपूर्णमासविध्यन्तातिदेश has to be made in सोमयाग also.

दीक्षणीयादिष्ववभृथपर्यन्तास्विष्टिषु पशुषु च दर्शपूर्णमासविध्यन्तोऽतिदेशतः प्राप्यमाणस्तन्मध्यपतितसोमयागेऽपि तदन्वयः स्यादेवेत्यस्ति तत्रापि तदतिदेशः ।

Siddhānta : points out that at सोमयाग there are many auxiliaries such as अभिषव which are सन्निपत्योपकारक. Hence, there is no need of दार्शिकविध्यन्तातिदेश.

**सिद्धान्तस्तु,** सन्निपत्योपकारकाभिषवाद्यङ्गकलापपौष्कल्येन निराकांक्षे सोमे दार्शिकविध्यन्तस्यानाकांक्षितत्वान्न तत्र तस्य प्रवृत्तिः ।

### **ऐन्द्राग्नादौ ऐष्टिकधर्मातिदेशाधिकरणम्** (8-1-4)

In this adhikaraṇa the guideline 'विकृतिषु सदृशादेव कर्मणो धर्मप्राप्तिः' is explained. In सौर्येष्टि, दर्शपूर्णमासविध्यन्त is to be adopted on the basis of similarity of चोदनालिङ्ग i.e. निर्वपति.

**सौर्यादीष्टिषु दर्शपूर्णमासयोर्विध्यन्तस्य निर्वपत्यादिचोदनालिङ्गसाम्यात्प्रवृत्तिः स्यादिति** । सौर्यादिचोदनाया व्यक्तदेवतादित्वेन **'अव्यक्तासु तु सोमस्य'** इति वक्ष्यमाणसौमिकविध्यन्तप्राप्तिशङ्कानुदयेनैष्टिकस्यैव प्राप्त्या पूर्वपक्षप्रापकस्याभावान्नातीवाऽत्र पूर्वपक्षादि । किन्तु स्पष्टकथनमात्रम् ।

### **अग्नीपोमीयपशौ दार्शपौर्णमासिकधर्मातिदेशाधिकरणम्** (8-1-5)

At अग्नीपोमीयपशु, देवता is stated by तद्धितान्त. As per the statement



'शकटद्वयस्यूतदण्डमालभेत्' आलम्भन is stated. On the basis of the सादृश्य in these two respects ऐष्टिकधर्मातिदेश has to be made in अग्नीषोमीय पशुयाग also.

अग्नीषोमीयपशौ तद्धितेन देवतानिर्देशरूपं, तथा 'ईषामालभेत' इति 'शकटद्वयस्यूतदण्डमालभेत' इति दर्शपूर्णमासयोः श्रवणेनालभतिरूपश्च सादृश्यं विद्यत इत्यस्ति पशावप्यैष्टिकधर्मातिदेशः ।

### **सवनीयादि पशौ अग्नीषोमीय धर्मातिदेशाधिकरणम्** (8-1-6)

In this adhikaraṇa, it is pointed out that at सवनीयपशु, the अग्नीषोमीय विध्यन्त has to be adopted by अतिदेश as there is विशेषसादृश्य of प्राणिद्रव्यकत्व and विशसन etc पशुद्रव्यसंस्कार. ऐष्टिक विध्यन्त is not to be adopted on the basis of देवता निर्देशसादृश by तद्धित.

यथा हि पूर्वत्राग्नीषोमीयपशौ तद्धितनिर्देशादिसारूप्यादैष्टिकविध्यन्तातिदेश एवं ''आग्नेयं सवनीयं पशुम्'' इति तद्धितेन देवतानिर्देशसादृश्यात्सवनीयादिपशुष्वप्यैष्टिक एव विध्यन्त इति **प्राप्ते,**

प्राणिद्रव्यकत्वरूपविशेषसादृश्याद्विशसनादिपशुद्रव्यसंस्कारलाभाच्चाग्नीषोमीयपशोर्विध्यन्तः सवनीयादि पशुष्विति **सिद्धान्तः** ।

### **एकादशिने पशौ सवनीय धर्मताधिकरणम्** (8-1-7)

In this अधिकरण the question whether at एकादशिनी, दैक्षपशुविध्यन्त is to be adopted or सवनीयपशुविध्यन्त is raised.

ऐकादशिनाः पशव एवमाम्नायन्ते, ''आग्नेयः कृष्णग्रीवः । सारस्वती मेषी । बभ्रुः सौम्यः । पौष्णः श्यामः । शितिपृष्ठो बार्हस्पत्यः । शिल्पो वैश्वदेवः । ऐन्द्रोऽरुणः । मारुतः । कल्माषः । ऐन्द्राग्नः संहितः । अधोरामः सावित्रः । वारुणः कृष्णः । एकशितिपात्पेत्वः'' इति । तेषु पशुषु किं दैक्षपशोर्विध्यन्तः, उत सवनीयपशोरिति सन्देहे,

Pūrvapakṣa : argues that as per the statement इतरेषु दैक्षस्य, दैक्षविध्यन्त has to be adopted at एकादशिनी.

'इतरेषु दैक्षस्य' इत्युक्तत्वात्सवनीयपशाविवैकादशिनेष्वपि दैक्षस्यैव विध्यन्त इति ।

Siddhānta : points out that on the basis of सुत्याकालीनत्वरूप लिङ्ग, सवनीय विध्यन्त only has to adopted at एकादशिनी। 'आग्नेयः कृष्णग्रीयः' 'सारस्वती मेषी' etc. elevan constitute एकादशिनी.

शब्दगतचोदनालिङ्गविशेषाभावेऽपि सुत्याकालीनत्वरूपार्थगतलिङ्गविशेषस्य सवनीयपशु-साधारणस्य सत्वात्सवनीयपशुविध्यन्त एवैकादशिनेषु।

### पशुगणेषु एकादशिनधर्मानिदेशाधिकरणम् (8-1-8)

In this adhikaraṇa, the question whether at सौत्रामणीपशुगण and काम्यपशु-काण्डपशुगण, दैक्षपशुविध्यन्त be adopted or एकादशिनविध्यन्त is raised.

सौत्रामण्यां पशुगणः श्रूयते। तथा काम्यपशुकाण्डे पशुगणः श्रूयते। 'वसन्ते ललामांस्त्रीन् वृषभानालभेत' 'मैत्रं श्वेतं कृष्णम्' इत्यादिना। तत्र किं दैक्षपशो र्विध्यन्तः, उतैकादशिनानामिति **सन्देहे,**

Pūrvapakṣa : argues that दैक्षपशु is सर्वप्रकृति. There is no विशेषलिङ्ग to adopt सवनीयविध्यन्त. Hence, दैक्षपशुविध्यन्त only has to be adopted.

ऐकादशिनेषु सुत्याकालत्वसाम्यात्सवनीयविध्यन्तप्राप्तावपि सौत्रमण्यादिपशुगणेषु रशना-द्वयादिविशेषलिङ्गाभावात्सर्वप्रकृतिभूतस्य दैक्षपशोर्विध्यन्त इति **प्राप्ते,**

Siddhānta : points out that on the common ground of पशुगणान्तःपातित्व, एकादशिन पशुगणान्तःपाति पशुविध्यन्त has to be adopted.

पशुगणान्तः पातित्वरूपधर्मसामान्यादैकादशिनपशुगणान्तःपातिपशुविध्यन्त एव। न दैक्षस्येति **सिद्धान्तः।**

### अव्यक्तयजतौ सोमिकधर्मातिदेशाधिकरणम् (8-1-9)

In the earlier adhikaraṇa इष्टिविकृतिs are considered. Here, सोमविकृति will be considered.

At the एकाह sacrifices such as विश्वजित्, अभिजित् and at द्वादशाह, the question whether दर्शपूर्णमासिकविध्यन्त be adopted or सोमिक is raised. Pūrvapakṣin argues



that there is no special reason to select one of them. Siddhāntin points out that not mentioning any particular deity is the common ground for विश्वजित् and सोम. Hence, सोमिक विध्यन्त be adopted.

एवमियता ग्रन्थेनेष्टिविकृतिपरम्परा चिन्तिता। इतः परं सोमविकृतिपरम्परा चिन्त्यते।

'विश्वजिता यजेत' 'अभिजिता यजेत' इत्याद्येकाहेषु 'द्वादशाहेन यजेत' इत्युक्तद्वादशाहे च किं दार्शपौर्णमासिको विध्यन्तः, उत सौमिक इति **सन्देहे,**

विशेषाभावादिनियम इति **प्राप्ते**

**सिद्धान्तः,** उत्पत्तिवाक्ये तद्धितादिना येन केनचिद्देवतानभिव्यक्तिरूपाव्यक्तत्वस्य विश्वजिदादौ सोमे च साम्यादेवंरूपविशेषेण सौमिक एव विध्यन्तो विश्वजिदादिष्विति।

### अहर्गणेषु द्वादशाहिक धर्मातिदेशाधिकरणम् (8-1-10)

In this adhikaraṇa the question whether at द्विरात्रादि अहर्गण सौमिकविध्यन्त be adopted or द्वादशाहिक is discussed. It is concluded that द्वादशाह विध्यन्त be adopted at द्विरात्र etc. अहर्गण on the basis of the common ground of अव्यक्तत्व and गणत्व.

द्विरात्रादिष्वहर्गणेषु किं सौमिको विध्यन्तः, उत द्वादशाहिक इति **सन्देहे,**

प्रागुक्ताव्यक्तत्वसाम्यात्पूर्वत्रेव सौमिक इति **प्राप्ते,**

अव्यक्तत्वस्य गणत्वस्य चाधिकस्य साम्यस्य सत्वाद् द्वादशाहविध्यन्तो द्विरात्राद्यहर्गणेष्विति **सिद्धान्तः।**

### संवत्सर सत्रेषु गावामयनिक धर्मातिदेशाधिकरणम् (8-1-11)

In this adhikaraṇa the question whether at आदित्यानामयन तपस्विनामयन etc. द्वादशाहविध्यन्त be adopted or गवामयन विध्यन्त is discussed. It is concluded that गवामयनविध्यन्त be adopted on the basis of संवत्सरसत्रत्वसाम्य.

'आदित्यानामयनं, तपस्विनामयनम्' इत्यादिष्वहर्गणत्वसाम्यात्पूर्वत्रेव द्वादशाहस्य विध्यन्त इति **प्राप्ते,**

संवत्सरसत्रत्वरूपविशेषसादृश्यात् संवत्सरनियमलाभार्थं गवामयनविध्यन्त इति **सिद्धान्तः** ।

**निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम्** (8-1-12)

A group of यागs stated by the statement सहस्रं साद्यस्काः are designated as निकायs as these occur in a group. The word निकाय means a group. Among these the auxiliaries are stated for the first only. Hence, the question arises whether the auxiliaries stated for the first be adopted for all others also or सौमिकधर्मs be adopted for them. It is concluded that on the basis of a common name and being a member of a group the auxiliaries stated for the first be adopted for all.

''सहस्रम्'' साद्यस्काः'' इत्येकनाम्नाऽपक्रम्य पश्चात्क्रमेण विहिता यागा **निकायिनः** । निकायः सङ्घः । तन्मध्यवर्तित्वान्निकायिन इत्युच्यन्ते । तेषु प्रथमो यागः सधर्मकः । उत्तरे धर्महीनाः । तत्र किं प्रथमयागधर्मा उत्तरेषु प्रवर्तन्ते, अथ सौमिकधर्मा इति **सन्देहे,**

आदित्यानामयनादिष्विवोत्तरेषु निकायिषु चोदनासामान्याभावादव्यक्तत्वसाम्यात्सौमिकधर्मा इति **प्राप्ते,**

एकनामत्वैकसङ्घात वर्तित्वाभ्यां विशेषलिङ्गाभ्यां पूर्वविध्यन्त एवोत्तरेषु । न सौमिक इति **सिद्धान्तः** ।

**फलादीनामनतिदेशाधिकरणम्** (8-1-13)

In this adhikaraṇa the question whether there is अतिदेश of फल, नियम, कर्ता and समुदाय is raised and it is concluded that there is no अतिदेश of these four.

**फलं** स्वर्गादिः । 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिनोक्तो यावज्जीविको होमाभ्यासरूपो **नियमः** । **कर्ता** स्वर्गादिकामः । आख्यातोपात्तस्य कर्तृतावस्थापन्नस्य क्रियानिर्वर्तकत्वेन गुणभूततया तदतिदेशो विवादाभावात् । **समुदायो** नामाऽग्नेयादीनां षण्णां साहित्यम् । त एते चत्वारो धर्माः प्रकृतिगता विकृतिषु सौर्यादिष्वतिदिश्यन्ते, उत नेति **सन्देहे,**

The आकाङ्क्षा in respect of फल and करण is satisfied by ब्रह्मवर्चस रूपफल and by the very सौर्यादिविकृतियाग.



Therefore, there is no need of the अतिदेश of फल. नियम and फल are पुरुषार्थ. कर्ता is not कर्मार्थ but कर्म is कर्त्रर्थ. Hence, no अतिदेश of these in विकृतियाग. प्रयाज etc. अङ्गs only have to be brought by way of अतिदेश. आग्नेय etc are प्रधानकर्म. Hence, these are also not विकृत्युपकारक.

**सिद्धान्तः**, यद्यपि सौर्यादिविकृतियागभावना किं? केन? कथं? इत्यंशत्रयापेक्षिणी तथापि ब्रह्मवर्चसादिश्रुतफलयागाभ्यां फलकरणाकांक्षापूरणात्कथम्भावाकांक्षामात्रं पूरणीयम् । यदेव प्रकृतावित्थम्भावेन गृह्णाति, तदेवेह प्रयाजादिकमन्वेतुं योग्यमित्यतिदिश्यते । न त्वन्यत् । न हि फलादिकं तथा । फलनियमयोः पुमर्थत्वस्य क्रमाच्चतुर्थाद्यपादे द्वितीयस्य चतुर्थपादे च व्यवस्थापितत्वात् । स्वर्गकामोऽपि न कर्मार्थः । कर्मैव तदर्थमिति षष्ठाद्येऽभिधानात् । आग्नेयादीनां फलवत्वेन प्रधानतया तेषां सौर्यादिविकृत्युपकारकतयाऽतिदेशाभावेन तद्धर्मस्य साहित्यस्याप्यनतिदेश इति, न चतुर्णामप्यतिदेश इति ।

**गुणकामानां गोदोहनादीनामनतिदेशाधिकरणम्** (8-1-14)

In this adhikaraṇa the question whether गोदोहनपात्र prescribed at दर्शपूर्णमास for अप:प्रणयन is to be brought by अतिदेश at सौर्यादि विकृतियाग or not is discussed.

दर्शपूर्णमासयोः ''चमसेनापः प्रणयेत् । गोदोहेन पशुकामस्य'' इति श्रुतम् । तद्गोदोहनादि विकृतौ सौर्यादावतिदिश्यते, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that प्रणयन is the अङ्ग of इष्टि. Therefore, गोदोहनपात्र which is a साधन for प्रणयन has to be brought at vikṛti by way of अतिदेश.

पूर्वत्र विकृतिष्वाग्नेयादेरप्रवृत्त्या तत्सम्बद्धफलाद्यप्रवृत्तावपीह प्रणयनस्येष्टयङ्गतया विकृतावतिदेशेन **प्राप्तौ,** तत्साधनभूतो गोदोहनाख्यपात्रविशेषोऽनङ्गमपि साधनत्वात्प्रवर्तते । तत्प्रवृत्तौ च तत्साध्यं फलमपि प्रवर्तत इत्यस्ति गोदोहनतत्फलयोरप्यतिदेश इति **प्राप्तम्** ।

Siddhānta : points out that only that which is अङ्ग at प्रकृति is to be brought as अङ्ग at विकृति. In the present case अप् प्रणयन is अङ्ग at प्रकृति. चमसपात्र is साधन for that. Therefore अप्प्रणयन and चमसपात्र are to be brought by अतिदेश.

गोदोहनपात्र is prescribed for अप्प्रणयन by पशुकामनारूपफल. There, it is पुरुषार्थ. Hence, there is no अतिदेश of गोदोहनपात्र.

सिद्धान्तस्तु, वैकृतभावनया कथम्भावाकांक्षया गृहीतमेव प्राकृतमङ्गजातं विकृतावन्वेति, नान्यदिति प्रागुक्तम्। वैकृतभावना च प्राकृतभावनया यत्कथम्भावाकांक्षया गृहीतमङ्गजातं तदेव स्वाङ्गतया गृह्णाति। तच्चाप्प्रणयनम्। तत्साधनतयाऽवगतं चमसपात्रम्। न तु पुमर्थतया प्राप्तं गोदोहनमपि। तत्तु कामनाप्रयुक्तमिति न गोदोहनतत्फलयोरतिदेशः।

## सौर्यचरौ अभिमर्शनद्वयस्य विकल्पाधिकरणम् (8-1-15)

सौर्ययाग is a विकृति of आग्नेय. The आग्नेय to be performed at पौर्णमासी and अमावास्या are two distinct आग्नेयs. अभिमर्शन of हविस् to be offered at these has to be made with the recitation of चतुहोत्रा and पञ्चहोत्रा hymns respectively. The recitation of these hymns has to be made at सौर्य.

Here, the question arises whether these hymns are to be recited as per the order in which these were recited for the आग्नेयहविरभिमर्शन at पौर्णमासी and अमावास्या or without any order.

सौर्ययाग आग्नेयविकार इत्युत्तरनये वक्ष्यते। आग्नेयश्च पौर्णमास्याममावास्यायाश्चोत्पन्नो द्विविधस्तत्सञ्ज्ञः। तत्र "चतुर्होत्रा पौर्णमासीमभिमृशेत्। पञ्चहोत्राऽमावास्याम्" इति चतुर्होतृ-पञ्चहोतृसञ्ज्ञकाभ्यां 'पृथिवी होता' इत्यादि 'अग्निर्होता' इत्यादि मन्त्राभ्यां क्रमात्पौर्णमास्यमावास्या-शब्दितत्रिकद्वयसम्बन्धिहविस्त्रयसमुदायाभिमर्शनद्वाराऽऽग्नेयद्वयसम्बन्धिहविर्द्वयस्य स्पर्शनाख्यमभि-मर्शनं श्रुतम्। तच्च मन्त्रद्वयं सौर्ये चोदकप्राप्तम्। तत्किं पौर्णमास्यमावास्याकालयोः सौर्यस्यानुष्ठाने यथाप्रकृति व्यवस्थया प्रयोक्तव्यं, उताव्यवस्थयेति सन्देहे,

Pūrvapakṣa : states that since, the recitation of these is brought by अतिदेश, it has to be made in the same order in which it was made at प्रकृति.

पूर्वत्र प्रकृतौ दृष्टानां गोदोहनादीनां विकृतावप्रवृत्तावपीह प्रकृतौ व्यवस्थया दृष्टमन्त्रद्वयस्य विकृतावपि चोदकेन व्यवस्थयैव प्रापणात्तथैव प्रयोक्तव्यमिति प्राप्ते

Siddhānta : points out that the proceedure expressly stated in the प्रकृति



only has to be followed in विकृति. In the present case the order followed is आर्थिक. Hence, following particular order is optional.

सिद्धान्तः, प्रकृतौ हविस्समुदायद्वारैवाऽऽग्नेयहविर्द्वयस्याभिमर्शनं प्राप्तमिति तत्र व्यवस्थाऽऽग्नेय-हविर्द्वयस्यार्थिकी। प्रकृतौ यच्छाब्दं तदेव विकृतावतिदिश्यते। न त्वार्थिकम्। अतो मन्त्रयोरेकार्थ-योर्द्वयोरिह प्राप्तौ विकल्प एवेति।

## सौर्यचरौ आग्नेयधर्मातिदेशाधिकरणम् (8-1-16)

The सूत्र 'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात्' states that दर्शपूर्णमास is प्रकृति for इष्टिs. Here, the question arises, out of आग्नेय etc. six प्रकृतियागs, which विध्यन्त is to be adopted by अतिदेश in सौर्य etc. यागs. Pūrvapakṣin states that from the statement 'प्रयाजे प्रयाजे कृष्णलं जुहोति' it is clear that प्रयाजदर्शनरूपलिङ्ग is common to all. Hence, the विध्यन्तs of आग्नेय etc. six should be optionally adopted.

इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् इति सूत्रे दर्शपूर्णमासप्रकृतिकत्वमिष्टीनामुक्तम्। तत्र कस्य विध्यन्तः क्व प्रवर्तते ? इति सन्देहे, विशेषनियामकाभावादनियमेन षण्णामपि विध्यन्तो विकल्पेन स्यात्। एवञ्च पूर्वत्राऽऽग्नेयविकारत्वमुपेत्य चतुर्होत्रादिमन्त्रयोः सौर्ये विकल्पोक्तिरयुक्तेति प्राप्तम्। तदाह सूत्रे, "प्रयाजे प्रयाजे कृष्णलं जुहोति" इति प्रयाजदर्शनरूपलिङ्गस्य आग्नेयादिषट्कसाधारण्या-दाग्नेयादिविध्यन्तानां सौर्यादिषु विकल्पेन स्यादिति।

Siddhāntin points out that on the basis of एकदेवतारूपसादृश्य आग्नेयविध्यन्त has to be adopted in सौर्य, while in अनेकदैवत्यप्रकृतियाग, अग्नीषोमीयविध्यन्त has to be adopted.

सिद्धान्तस्तु, तद्धितेन देवतानिर्देशेनैकदैवत्यत्वादिरूपविशेषसादृश्यात्सौर्यादावाग्नेयस्य विध्यन्तः। अनेकदैवत्ये त्वग्नीषोमीयादिविध्यन्त इत्यादि।

## हविर्देवतयोः सन्निपाते हविः सामान्यस्य बलीयस्त्वाधिकरणम् (8-1-17)

In this adhikaraṇa the question 'between द्रव्यसाम्य and देवतासाम्य which is preferable' is discussed. For instance in respect of ऐन्द्रमेकादशकपालं निर्वपेत् on the basis देवतासम्य सान्नायधर्म has to be observed. On the basis of हविस्सामान्य,

पुरोडाशधर्म has to be observed. Similarly in respect of आग्नेयं पयः on the basis of द्रव्यसाम्य, सान्नाय्यधर्म has to be observed while on the basis of देवतासाम्य आग्नेय धर्म has to be observed.

द्रव्यदेवतासाम्यरूपलिङ्गविशेषेण विशेषातिदेशे चिन्तिते प्रसङ्गाद्द्रव्यसाम्यदेवतासाम्ययोर्मध्ये किं बलीय इति चिन्तनात्प्रासङ्गिकी **सङ्गतिः** । किं ''ऐन्द्रमेकादशकपालं निर्वपेत्'' इत्यत्र देवतासामान्येन सान्नाय्यधर्मः कार्यः, उत हविःसामान्येन पुरोडाशधर्मः । एवं ''आग्नेयं पयः'' इत्यत्र किं द्रव्यसामान्येन सान्नाय्यधर्मः कार्यः, उत देवतासामान्येन आग्नेयधर्मः कार्य इति **सन्देहे**,

Pūrvapakṣa : argues that देवता is conveyed by प्रातिपदिक while द्रव्य is conveyed by तद्धितप्रत्यय. प्रातिपादिकार्थ has to be preferred to प्रत्ययार्थ. Hence, विध्यन्त has to be adopted on the basis of देवतासाम्य.

विशेषाभावादनियम इति वा, ''ऐन्द्रम्'' ''आग्नेयम्'' इति इन्द्राग्न्यादिदेवतायाः प्रातिपदिकार्थत्वात्तद्द्रव्यस्य तद्धितप्रत्ययवाच्यत्वात्प्रातिपदिकप्रत्ययार्थयोः प्रातिपदिकार्थस्य मुख्यत्वात् ''तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति'' इति कर्मफलदातृत्वेन श्रुतप्रधानत्वाच्च देवतायास्तत्साम्यस्य बलवत्वाद्देवतासाम्यनिमित्त एव विध्यन्त इति वा **प्राप्ते**,

Siddhānta : points out that 'देवतोद्देशेन हविस्त्यागः यागः.' हविस् is the object of त्याग. Hence, हविस is closer to याग while देवता is बहिरङ्ग. Therefore, विध्यन्त has to be adopted on the basis of द्रव्यसाम्य.

**सिद्धान्तः**, देवतोद्देशेन द्रव्यत्यागो हि यागः । तत्र प्रधानभूतत्यागविषयतया हविः कर्मणः प्रत्यासन्नम् । देवता तूद्देशविषयतया त्यागकर्मणो बहिरङ्गतया न प्रत्यासन्ना । तथा च प्रत्यासन्नेन हविषोपस्थापितं विध्यन्तमासाद्य निराकांक्षं कर्म न बहिरङ्गभूतदेवतोपस्थापितमपेक्षते । किञ्चैन्द्रे पुरोडाशविध्यन्ते सत्यवघातादिभूयोधर्मलाभः । यत्तु देवताया मुख्यत्वं तत्तु शब्दोपाधिकम् । न हविष इव स्वाभाविकम् । प्राधान्यं तु नवमाद्यपादे **देवता वा प्रयोजयेत्** इति नये निरसिष्यते । तस्माद्द्रव्यसामान्यमेव बलवदिति ।

### शतकृष्णलाख्यहिरण्ये औषधधर्मातिदेशाधिकरणम् (8-1-18)

The statement 'प्राजापत्ये चरुं निर्वपेत् कृष्णलमायुष्कामः' prescribes कृष्णलचरु.



Here, the question is raised whether for चरु, उपांशुयाजाज्यधर्मs be observed or औषधधर्मs be observed.

''प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्कामः'' इति श्रुतकृष्णलचरौ किमुपांशुयाजद्रव्यस्याज्यस्य धर्मस्य, किं वौषधधर्मस्यातिदेश इति **सन्देहे**,

Pūrvapakṣa : argues that स्वर्णमाष and घृत are similar in respect of shining. Therefore, उपांशुयाजाज्यधर्मs be observed.

पूर्वत्र भूयोधर्मलाभायौषधधर्मातिदेशवदिहाप्यवेक्षणोत्पवनादिभूयोधर्मानुग्रहाय स्वर्णमाषरूपकृष्णलस्य घृतस्य चोज्वलतया तेजस्त्वसाम्यादुपांशुयाजधर्मातिदेश इति **प्राप्तम्** ।

Siddhānta : points out that the word चरु conveys औषधद्रव्य. Hence, औषधधर्म be observed.

**सिद्धान्तस्तु**, विशदत्वसाम्यात्, चरुमित्यौषधशब्दप्रयोगाच्चौषधधर्मातिदेश एवेति ।

### मधूदकयोः उपांशुयाजीयाज्यधर्मातिदेशाधिकरणम् (8-1-19)

At चित्रायाग, दधि, मधु, घृत, अप् etc. are prescribed. here, the question is raised whether for मधु and उदक, पयोधर्मs be observed or आज्यधर्मs.

चित्रायागे ''दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यम्'' इत्यत्र श्रुतमधूदकयोः किं सान्नाय्यगतपयसो धर्मातिदेशः, उतोपांशुयाजाज्यद्रव्यस्येति **सन्देहे**,

Pūrvapakṣa : states that on the basis of स्वाभाविकद्रवत्वधर्म, पयोधर्मs be observed.

पूर्वत्र कृष्णले हिरण्ये भूयोधर्मबाधेऽपि चरुशब्दसामान्यादौषधधर्मता तथा मधूदकयोर्दोहनाद्यनेकधर्मबाधेऽपि स्वाभाविकद्रवत्वसाम्यात्पयोधर्मातिदेश इति **प्राप्तम्** । तदाह **सूत्रे, मधूदके** इत्यादि । **स्पष्टोऽर्थः** ।

Siddhāntin : points out that दोहन etc पयोधर्मs are not possible for मधु and उदक. आज्य also will have द्रव्यत्वसाम्य when heated. Hence, आज्यधर्मs be observed.

**सिद्धान्तस्तु,** स्वाभाविकद्रवत्वाभावेऽप्यग्निसंयोगाद्राज्येऽपि द्रवत्वसम्भवाद्वर्णं साम्याधिक्यात्पयोधर्माणां दोहनादीनामसम्भवादुत्पवनादिसम्भवादाज्यस्यैव विध्यन्त इति । तदाह **सूत्रे, आज्यं वा** विकुर्यातामित्यादि ।

इति अष्टमाध्यायस्य प्रथमः पादः

## अष्टमाध्यायस्य द्वितीयः पादः

### अष्टमे विशेषेण अनिदेशाध्याये द्वितीयः अस्पष्टलिङ्गेन अतिदेशपादः

### ऐष्टिकसोत्रामण्योः ऐष्टिकधर्मातिदेशाधिकरणम् (8-2-1)

In this adhikaraṇa the question whether at वाजिनयाग and for the ग्रहs at सौत्रामणि, सौमिकविध्यन्त be observed or ऐष्टिकविध्यन्त is raised.

चातुर्मास्येषु ''वाजिभ्यो वाजिनम्'' इति श्रुते वाजिनयागे, तथा सौत्रामण्यां ''आश्विनं गृह्णाति'' इति, ''सारस्वतमैन्द्रं चरुम्'' इति श्रुतेषु ग्रहेषु च किं सौमिको विध्यन्तः, उतैष्टिक इति **सन्देहे,**

Pūrvapakṣa : The statement 'सोमो वैवाजिनम्' 'सुरा सोमः' use the word सोम in respect of वाजिन and सुराग्रह. This indicates that the सोमधर्मs are to be adopted.

''सोमो वै वाजिनम्'' ''सुरा सोमः'' इति वाजिने सुराग्रहेषु चासोमेषु सोमशब्दः श्रूयमाणो मासाग्निहोत्रे अग्निहोत्रशब्द इव सोमधर्मातिदेशक इति **प्राप्तम् ।**

Siddhānta : points out that the word used with reference to another in विधिवाक्य only indicates धर्मातिदेश. Here, the statements 'सोमो वै वाजिनम्' and सुरासोमः are अर्थवादs. Hence, these do not lead to अतिदेश.

**सिद्धान्तस्तु,** विधिवाक्य एवान्यशब्दोऽन्यत्र प्रयुक्तोऽनन्यप्रयोजनतया धर्मलक्षणार्थः । अत्र त्वर्थवादगततया प्रशंसार्थ एवायं शब्दो नातिदेशार्थः । तस्माद्धविःसामान्यादैष्टिको विध्यन्तो वाजिने सुराग्रहेषु च । हविःसामान्यत्वञ्च वाजिनस्य पयःपरिणतिजन्यत्वात्सुरायाश्च व्रीहिजनकत्वेनौषधपरिणामत्वाद्यथाक्रमं पयोधर्मा औषधधर्माश्चेति ज्ञेयम् ।

### पशौ सान्नाय्यधर्मानिदेशाधिकरणम् (8-2-2)

Earlier it was stated that at अग्निषोमीयपशु, दर्शपूर्णमासविध्यन्त has to be observed. Here the question is raised whether विध्यन्त of अग्निषोमीय पुरोडाश be observed or विध्यन्त of सान्नाय be observed.



पूर्वपादे **पशौ च लिङ्गदर्शनात्** इत्यत्राग्नीषोमीयपशौ दर्शपूर्णमासविध्यन्तप्राप्तिरित्युक्तम् । तत्र किमग्नीषोमीयपुरोडाशस्य विध्यन्तः स्यात्, उत सान्नाय्यस्येति **सन्देहे,**

Pūrvapakṣa : argues that on the basis of द्विदैवत्यरूपदेवतासामान्य, पुरोडाश विध्यन्त has to be observed.

वाजिनस्य सान्नाय्यविकारत्वेऽपि स्फुटतरसादृश्याभावात्पशोर्न तद्विकारता । किन्तु घनीभावेन हविःसामान्याद्द्विदैवत्यत्वरूपदेवतासामान्यात्पुरोडाशविध्यन्त इति **प्राप्तम् ।**

Siddhānta : points out that both पशु and सान्नाय्य are पशुप्रभव. Therefore सान्नाय्यविध्यन्त has to be observed.

**सिद्धान्तस्तु,** सान्नाय्यस्य पशुप्रभवत्वमिव पशोरपि पशुप्रभवत्वमस्तीति पशुसान्नाय्ययोः पशुप्रभवत्वरूपपशुसम्बन्धित्वेन हविःसामान्यात्सान्नाय्यविध्यन्तः पशाविति ।

### पशौ पयोधर्मातिदेशाधिकरणम् (8-2-3)

Here, the question whether सान्नय्यविध्यन्त stated earlier is of दधि or पयस् is raised. Pūrvapakṣin states that on the basis thickness विध्यन्त of दधि has to be observed. Siddhāntin points out पयस् is directly produced from the पशु. Both पशु and पयस् have the nature of moving. Hence विध्यन्त of पयस् be observed.

पूर्वत्र पशौ सान्नाय्यविध्यन्त इति सामान्येनोक्तस्यात्र विशेषचिन्तनात्सङ्गतिः । पशौ किं दध्नो विध्यन्तः, उत पयस इति **सन्देहे,**

घनत्वसाम्याद्दध्न इति **प्राप्तम् ।** तदाह **सूत्रे, दध्न** इत्यादि । व्यक्तोऽर्थः ।

**सिद्धान्तस्तु,** पयो हि साक्षात्पशुप्रभवं यथा तथा पशुरपि साक्षात्पशुप्रभवः । पयो हि द्रवत्वाद्गतिमत् । पशुरपि गतिमान् । अतः साक्षात्पशुप्रभवत्वगतिमत्वसामान्यात्पयसो विध्यन्तः पशौ । न दध्न इति ।

### आमिक्षायां पयोधर्मातिदेशाधिकरणम् (8-2-4)

The आमिक्षायाग is सान्नाय्यविकार. A mixer of दधि and पयस् is आमिक्षा. Here

the question is raised whether at आमिक्षायाग, विध्यन्त of both दधि and पयस is to be observed or one of them.

''तप्ते पयसि दध्यानयति । सा वैश्वदेव्यामिक्षा'' इति श्रुत आमिक्षायागः साद्दश्यात्सान्नाय्यविकार इत्यविवादम् । तत्र किं दधिपयसोरुभयोर्धर्माः, उत दध्नः, अथ पयस इति **सन्देहे,**

Pūrvapakṣin state that since the feature of both दधि and पयस are found in आमिक्षा. Hence, विध्यन्त of both be observed.

पयस् is stated in सप्तमीविभक्ति, hence it is subbordinate दधि is stated in द्वितीयाविभक्ति, hence, it is main. Therefore विध्यन्त of दधि has to be observed.

**पूर्वपक्षस्तु** पशोः पयोविकारत्वेऽपि नेह तथा । दधि क्षीरञ्च संसृष्टं द्वयमामिक्षेत्युच्यते । दधिपयसोराम्लत्वमाधुर्यरूपरसावप्यामिक्षायामुपलभ्येते इति विशेषाग्रहात्तदुभयविध्यन्त **इत्येकः** । तदाह **सूत्रे, आमिक्षा दधिपयउभयभाव्यत्वादुभयविकारः स्यादिति** ।

पयसः सप्तमीनिर्देशेन गुणत्वाद्दध्नो द्वितीयानिर्देशेन प्राधान्यावगमेन तस्यैव सेति परामर्शेन वैश्वदेवीति देवतासम्बन्धोक्त्या दध्न एव हविष्ट्वाद्धनत्वसामान्याच्च दध्नो विध्यन्त **इत्यन्यः** ।

Siddhāntin points out that आमिक्षा arises from पयस् only. दधि is सहकारी only. Hence, पयोधर्मs only have to be observed.

**सिद्धान्तस्तु, एकनिष्पत्तेः सर्वं समं स्यादित्यत्र** चतुर्थाद्यपादेऽभिहितरीत्या पयस्येवाऽमिक्षामुत्पादयितुं सहकारित्वेन दध्न आनयनेन पयस एव प्राधान्येन सेति परामर्शपूर्वं देवतासम्बन्धोक्त्या तस्यैव हविष्ट्वेन पयोधर्म एवाऽमिक्षायामिति ।

### द्वादशाहे सत्राहीनयोः व्यवस्थया धर्मातिदेशाधिकरणम् (8-2-5)

There are two types of sacrifices in the group of द्वादशाह viz. सत्र and अहीन. द्वादशाह is both सत्र and अहीन. Here, the question is raised whether द्वादशाह विध्यन्त is to be adopted in both सत्र and अहीन without any specification or विध्यन्त aspect of सत्र and विध्यन्त aspect of अहीन have to be adopted in सत्र and अहीन respectively.



पूर्वपादे **गणेषु द्वादशाहस्येत्युक्तम्** । तत्र गणा द्विविधाः सत्राण्यहीनाश्च । ''त्रयोदशरात्रमृद्धिकामा उपेयुः'' ''चतुर्दशरात्रं प्रतिष्ठाकामा आसीरन्'' इत्यासानोपेयचोदनावन्ति त्रयोदशरात्रादीनि **सत्राणि** । ''द्विरात्रेण यजते'' ''त्रिरात्रेण यजते'' इति यजतिचोदनावन्तो द्विरात्रप्रभृतय एवैकादशरात्रान्ता अहर्गणा **अहीनाः** ।

तत्र द्वादशाहस्तु ''द्वादशाहेन प्रजाकामं याजयेत्'' इति यजतिचोदनावत्वात् ''द्वादशाहमृद्धिकामा आसीरन्'' इत्यासनोपाधिकत्वाच्चाहीनात्मा सत्रात्मा च । तत्र किमुभयविधस्यापि द्वादशाहस्य विध्यन्तः सत्रेष्वहीनेषु चोभयत्राविशेषेण प्रवर्तते, किं वा व्यवस्थयेति **सन्देहे,**

Pūrvapakṣin argues that as there is no special ground to bifurcate both aspects have to be adopted in both.

पूर्वत्राऽमिक्षायां विशेषग्रहादुभयधर्माप्राप्तावपीह विशेषाग्रहात्सत्रेष्वहीनेषु च द्वादशाहस्य द्विविधस्यापि विध्यन्तोऽव्यवस्थया सर्वत्र विकृतिषु स्यादिति **प्राप्तम्** ।

Siddhāntin points out that विध्यन्त of सत्र aspect has to be adopted in सत्र and that of अहीन aspect has to be adopted in अहीन on the very basis of the similarity of names.

**सिद्धान्तस्तु,** सत्रत्वसाम्यात्सत्रेषु सत्रात्मकस्य द्वादशाहस्य विध्यन्तोऽहीनत्वसाम्याच्चाहीनेष्वहीनात्मकस्येति व्यवस्थयैव द्वादशाहस्य धर्मा विकृतिषु स्युर्नाव्यवस्थयेति ।

### पञ्चादशरात्रिषु सत्रधर्मातिदेशाधिकरणम् (8-2-6)

In this अधिकरण the question whether at पञ्चदशरात्र and कुण्डपायिनामयन the विध्यन्त of अहीनात्मकद्वादशाह be adopte or सत्रात्मद्वादशाह be adopted is raised.

''त्रिवृदग्निष्टुदग्निष्टोमस्त्रिरात्रो दशरात्र उदयनीयोऽतिरात्रः'' इति वाक्ये पञ्चदशरात्रो यागः श्रुतः । ''मासमग्निहोत्रं जुहोति'' इत्यारभ्य ''दशरात्रो महाव्रतमुदयनीयोऽतिरात्रः'' इत्यन्तेन वाक्येन कुण्डपायिनामयनं श्रुतम् । तत्रोभयत्र किमहीनात्मकस्य द्वादशाहस्य विध्यन्तः, उत सत्रात्मकस्येति **सन्देहः** ।

Pūrvapakṣa : argues that the statement 'यदन्यतरतो अतिरात्रः स अहीनः' informs that the याग that has अतिरात्र either at the begining or at the end is

अहीन. At the end of पञ्चदशरात्र and कुण्डपायिनामयन, अतिरात्र is found. Hence, the विध्यन्त of अहीन aspect of द्वादशाह has to be adopted at these two.

**पूर्वपक्षस्तु,** त्रयोदशरात्रादिषु सत्रात्मकस्य द्वादशाहस्य विध्यन्तप्रवृत्तावपि न पञ्चदशरात्रकुण्डपायिनामयनयोस्तत्प्रवृत्तिर्युक्ता । ''यदन्यतरतोऽतिरात्रः सोऽहीनः'' इति वचने ''यस्य यागस्यादावन्ते वाऽन्यतरत्रातिरात्रः श्रुतः सोऽहीनः'' इत्युक्तान्यतरत्रातिरात्रशब्दश्रवणरूपलिङ्गस्यानयोर्यागयोरन्ते अतिरात्र इत्युक्त्या दृष्टत्वेनानयोरहीनत्वात् । अतोऽहीनात्मकस्य द्वादशाहस्य विध्यन्तप्राप्तिः पञ्चदशरात्रकुण्डपायिनामयनयोरिति ।

Siddhānta : points out that as per the statements 'पञ्चदशरात्रमुपेयुः' 'कुण्डपायिनामयनमासीरन्' these have सत्रलिङ्ग of आसनोपायिचोदना. Hence सत्रात्मक-द्वादशाह विध्यन्त has to be adopted at these. सत्रलिङ्ग is in विधिवाक्य, hence, अहीनलिङ्ग has to be taken as प्रशंसा.

**सिद्धान्तस्तु,** सत्रे वै यज्ञे ''ये यं काममिच्छन्ति ते पञ्चदशरात्रमुपेयुः'' ''भूतिकामाः कुण्डपायिनामयनमासीरन्'' इत्यासनोपायिचोदनावत्वरूपसत्रलिङ्गश्रवणात्सत्रात्मकद्वादशाहस्य विध्यन्त एवानयोः । अस्य लिङ्गस्य विधिवाक्यगतत्वेन प्रबलतयाऽहीनलिङ्गं प्रशंसापरत्वेन नेयम् । इतराणि केवलसत्राण्येव । एतौ तु यागौ स्वरूपेण सत्ररूपावप्यहीनलिङ्गेनाहीनावित्यपि व्यवहारयोग्याविति प्रशंसा ज्ञेया ।

**इति अष्टमाध्यायस्य द्वितीयः पादः**

## अष्टमाध्यायस्य तृतीयः पादः

### शुचिदेवते आग्नेयस्य आग्नावैष्णवे च अग्नीषोमीयस्य धर्मातिदेशाधिकरणम् (8-3-1)

The statement 'आग्नावैष्णवमेकादशकपालं निर्वपेत्' 'सरस्वत्याज्याभागा स्यात्' 'बर्हिस्पत्यः चरुः' prescribe हविस्. Here, the question is raised whether आग्नेयविध्यन्त for the first and अग्नीषोमीयविध्यन्त for the third be adopted or अग्नीषोमीय for the first and आग्नेय for the third be adopted.

''आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्'' ''सरस्वत्याज्यभागा स्यात्'' ''बार्हस्पत्यश्चरुः'' इति हविर्गणः श्रुतः । तत्राऽद्यस्याऽऽग्नेयविध्यन्तः तृतीयस्य बार्हस्पत्यचरोरग्नीषोमीयविध्यन्तः, उत विपरीतमिति **सन्देहे,**



Pūrvapakṣa : At दर्शपूर्णमास आग्नेय is the first and अग्नीषोमीय is the third. Therefore, for आग्नावैष्णव आग्नेयविध्यन्त and for बार्हिस्पत्य, अग्नीषोमीय विध्यन्त have to be adopted.

प्रकृतौ दर्शपूर्णाख्ये कर्मण्याग्नेयः प्रथमोऽग्नीषोमीयस्तृतीयो दृष्टः । अतोऽत्र प्रथमस्याऽऽग्नावैष्णवस्य प्राथम्यरूपस्थानप्रमाणशब्दितदेशसामान्यादाग्नेयविध्यन्तः, अन्त्यस्य बार्हस्पत्य चरोरग्नीषोमीयस्य तृतीयस्य विध्यन्त इति **प्राप्तम्।**

Siddhānta : points that in the very उत्पत्तिवाक्य, द्विदेवत्य is conveyed. On this basis अग्नीषोमीय विध्यन्त has to be adopted for आग्नावैष्णव and आग्नेयविध्यन्त for बार्हस्पत्य.

**सिद्धान्तस्तु** विधिवाक्ये कर्मोत्पत्तिदशायामेव शीघ्रं द्विदैवत्यत्वरूपदेवतासामान्यमवगम्यमानमितरप्रतीतिसापेक्षप्रथमतृतीयभावरूपस्थानसामान्याद्विलम्बितप्रतीतिकान् बाधमर्हतीत्याग्नावैष्णवस्याग्नीषोमीयविध्यन्तो बार्हस्पत्यस्याऽऽग्नेयविध्यन्त इति ।

### जनकसप्तदशरात्रे त्रिवृत्सु अहस्सु द्वादशाह धर्मातिदेशाधिकरणम् (8-3-2)

At जनकसप्तदशयत्रयाग it is stated that 'चत्वारि त्रिवृन्ति अहानि अग्निष्टोममुखानि.' At द्वादशाह which is the प्रकृति of अहर्गण, six अहन्s with बृहद्रथन्तर etc स्तोत्रs are stated. Here, the question is raised whether the four अहन्s of द्वादशाह are to be observed in all four अहन्s of जनकसप्तदशरात्रीय or each of four अहन् of द्वादशाह has to be observed in each of four अहन्s of जनकसप्तदशरात्रीय.

जनकसप्तदशरात्राख्ये यागे श्रूयते ''चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानि'' इति । अहर्गणप्रकृतिभूते द्वादशाहे च क्रमात् त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशत्स्तोममुक्तानि बृहद्रथन्तरादिपृष्ठस्तोत्रवन्ति षडहानि पठितानि । तत्र किं द्वादशाहिकत्रिवृतोऽह्नो जनकसप्तदशरात्रीयेषु चतुर्ष्वहस्सु प्रवृत्तिरुत त्रिवृदादीनां चतुर्णामह्नां क्रमेण चतुर्ष्वपि प्रवृत्तिरिति **सन्देहे,**

Pūrvapakṣin argues that विध्यन्त of the first अहन् of द्वादशाह be repeated on the four अहन्s of जनकसप्तदशरात्रीय.

पूर्वत्र शब्दात्प्रथमप्रतीतदेवतासामान्यबलीयस्त्वस्येव शब्दात्प्रथमप्रतीतत्रिवृत्त्वसामान्यस्य बलीयस्त्वाद्द्वादशाहिकेषु पृष्ठ्यषडहेषु त्रिवृतः प्राथमिकस्याह्नो विध्यन्तश्चतुर्ष्वप्यहस्स्वावर्तनीय इति **प्राप्तम्** ।

Siddhāntin points out that if the विध्यन्त of first अहन् is observed on all four days. then, all will become अग्निष्टोम since, the first is stated as अग्निष्टोम. Therefore, the विध्यन्तs of first four days of द्वादशाह have to be observed on four days of जनकसप्तदशरात्र.

**सिद्धान्तस्तु,** त्रिवृदह्नो विध्यन्तस्य चतुर्ष्वहस्सु प्रवृत्तौ चतुर्णामह्नामग्निष्टोमत्वप्राप्त्या अग्निष्टोममुखानीति प्रथमाह्न एवाग्निष्टोमत्वोक्तिरयुक्ता स्यात् । प्रकृतौ द्वादशाहे त्रिवृदह्नः प्रथमस्याग्निष्टोमत्वात् । तस्माच्चत्वारीतिश्रुतसङ्ख्यातसामान्यवशेन त्रिवृदादीनां चतुर्णा मह्नां विध्यन्ताः क्रमाच्चतुर्ष्वहस्सु प्रवर्तन्त इति ।

### षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् (8-3-3)

At षट्त्रिंशद्रात्रयाग it is stated that 'षडहा भवन्ति' 'चत्वारो भवन्ति.' The word षडह refers to six सोमयाग. The word चत्वार् states that multipication by four. This results in twenty four सोमयागs. Here, the question is raised whether द्वादशाह विध्यन्त has to be observed at these twenty four यागs separately or a groups of six repeated four times.

षट्त्रिंशद्रात्रे सत्रे श्रूयते ''षडहा भवन्ति'' ''चत्वारो भवन्ति'' इति । तत्राहः सञ्ज्ञकानां सोमयागानां सङ्ख्याविशेषः षडहपदान्तर्गतेन षट्शब्देनोच्यते । सा च षट्सङ्ख्या पुनश्चतुःसङ्ख्यया विशिष्यमाणा चतुर्विंशतिसङ्ख्याकानामह्नां सङ्घे पर्यवस्यति । तत्र **सन्देहः,** किं चतुर्विंशताहस्सु द्वादशाहिको विध्यन्तः, उत षडहस्य चतुरावृत्तिरिति ।

Pūrvapakṣa : The multipication by four indicates that these are twentyfour यागs of अहर्गण type. द्वादशाह is प्रकृति for अहर्गण. Hence, द्वादशाह विध्यन्त has to be observed by repeating the same as many time as necessary.

**पूर्वपक्षस्तु,** ''चत्वारः षडहा भवन्ति'' इत्युक्त्याऽह्नां चतुर्विंशतित्वप्रतीत्याऽहर्गणत्वावगमात्, अहर्गणानां द्वादशाहप्रकृतिकत्वस्य **गणेषु** द्वादशाहस्येत्यत्रोक्तत्वात्पूर्ववदिहापि गणत्वसामान्याद्द्वादशाहिकविध्यन्तः । यदि तस्य सकृत्प्रवृत्त्या चतुर्विंशत्यह्नां न पूर्तिस्तर्हि यावता पूर्तिस्तावदभ्यस्यतामिति ।



Siddhānta : Twentyfour अहर्गणs are not directly enjoined here. By the statement of the repetition of six अहर्गणs four times twentyfour अहर्गणs are suggested. Here six अहर्गण is expressly stated. Hence, षडहविध्यन्त has to be observed four times.

**सिद्धान्तस्तु,** चतुर्विंशतिसङ्ख्याकोऽहर्गणोऽत्र यदि प्रत्यक्षस्तदा स्यादेवम् । न चैवम् । किन्तु चतुर्भिः षडहैः श्रुतैरनुमीयते । चतुःसङ्ख्याविशिष्टः षडहविधिस्तु प्रत्यक्षः । तस्मात्प्रथमप्रतीतषडहशब्दानुसारेण षडहचतुष्कविधौ षडहाख्यकर्मविशेषस्य विध्यन्तश्चतुर्विंशत्यहस्सु पूर्त्यर्थं चतुर्भिरभ्यस्यत इति ।

### संस्थागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् (8-3-4)

The statements 'शतोक्थ्यं भवति' 'शतातिरात्रं भवति' occur in the context of ज्योतिष्टोमसंस्थागण. Here the question is raised whether ज्योतिष्टोम विध्यन्त is to be repeated or द्वादशाह विध्यन्त.

''शतोक्थ्यं भवति'' ''शतातिरात्रं भवति'' इत्येवं श्रुते ज्योतिष्टोमसंस्थागणे किं ज्योतिष्टोमस्य विध्यन्तः शतकृत्वोऽभ्यसनीयः, उत द्वादशाहस्येति **सन्देहे,**

Pūrvapakṣa : argues that उक्थ्य which is of जोतिष्टोमसंस्थारूप is expressly stated here. Therefore, द्वादशाहविध्यन्त is not to be observed here.

पूर्वत्र यथा षडहश्रुत्या न द्वादशाहिकविध्यन्तस्य प्रवृत्तिरेवमत्राप्युक्थ्यश्रुत्यादिना न तस्य प्रवृत्तिः । उक्थ्यादेर्ज्योतिष्टोमसंस्थारूपत्वादिति **प्राप्तम्** ।

Siddhānta : points out that the word उक्थ is not the name of ज्योतिष्टोम. But it is the name of a स्तोत्र. Since, it is not stated here, with reference to any कर्म, it has to be taken as enjoining a hundred अहर्गण. As it is a गण, द्वादशाह विध्यन्त has to be adopted.

**सिद्धान्तस्तु,** उक्थ्यादिशब्दा हि न ज्योतिष्टोमस्य नामधेयम् । येन तदनुवादेन शतत्वाभ्यासो

विधीयेत। किन्तु स्तोत्रनामानि। तथा च यस्य कर्मण उक्थ्यादिस्तोत्रेण समाप्तिस्तस्मिन् कर्मणि तेन स्तोत्रेण कृतसमाप्तिं निमित्तीकृत्य वर्तन्ते। तथा च सन्निध्यभावेन प्रसिद्धकर्मप्रत्यभिज्ञानाभावाच्छतसङ्ख्याविशिष्टो गणो विधीयत इति गणत्वसामान्याद्द्वादशाहस्य विध्यन्तो भवति।

**शतोक्थ्यादौ ज्योतिष्टोमात् स्तोत्रोपजयाधिकरणम्** (8-3-5)

AT दशरात्र which is a part of द्वादशाह, there are two अग्निष्टोम at the begining and at the end, for this दशरात्र. These have to be increased with उक्थसङ्ख्या. Here, the question is raised whether these उक्थ्यs are द्वादशाहविकार or ज्योतिष्टोमविकार.

''शतोक्थ्यं भवति'' ''शतातिरात्रं भवति'' इत्यत्र द्वादशाहगतदशरात्र विध्यन्तो दशकृत्वः प्रवर्तत इत्युक्तं पूर्वत्र। तस्य च दशरात्रस्याद्यन्तौ द्वावग्निष्टोमौ। तयोश्च दशकृत्वोऽभ्यासे विंशतिः सम्पद्यन्ते। अतः शतोक्थ्ये द्वौ द्वावग्निष्टोमावुक्थ्यसङ्ख्यया वर्धयितव्यौ। अन्यथा तयोरुक्थ्यत्वाभावे विंशत्युक्थ्यन्यूनत्वेनाशीत्युक्थ्यतापत्त्या शतोक्थ्यता न स्यात्। तत्राऽगम्यमानान्युक्थ्यस्तोत्राणि किं द्वादशाहिकोक्थ्यस्तोत्रविकाराः, किं वा ज्योतिष्टोमोक्थ्यस्य विकारा इति **सन्देहे,**

Pūrvapakṣa : argues that शतोक्थ्यादिगण is द्वादशाहविकार. Therefore, these added उक्थ्यs also have to be द्वादशाहविकार.

**पूर्वपक्षस्तु,** शतोक्थ्यादिरूपगणस्य द्वादशाहिकविकारत्वात्पूर्वत्र यथा द्वादशाहिकानां धर्माणां प्रवृत्तिरित्युक्तं तथेहापि तदीयाहस्सु यान्युक्थ्यस्तोत्राणि तद्विकारत्वमेवात्राऽगन्तूनां स्तोत्राणामिति **प्राप्तम्।**

Siddhānta : उक्थ्यस्तोत्रs are originally prescribed at ज्योतिष्टोम. Therefore these have to be brought by अतिदेश from ज्योतिष्टोम only. Hence, ज्योतिष्टोम विध्यन्त have to be observed.

**सिद्धान्तस्तु,** उक्थ्यादिस्तोत्राणि ज्योतिष्टोमे उत्पन्नानि द्वादशाहेऽतिदेशतः प्राप्तानि। यत्र चोत्पन्नानि तत एवातिदेशो युक्तः। नातिदिष्टस्थलात्। 'न हि भिक्षुको भिक्षुकाद्याचितुमर्हति, सत्यन्यस्मिन्नभिक्षुके दातरि'' इति न्यायात्। अतो ज्यौतिष्टोमिकानामेवोक्थ्यानां विध्यन्तस्यात्र प्रवृत्तिरिति।



**गायत्रमेतदहर्भवति इत्यादौ उत्पत्तिगायत्रीणामागमाधिकरणम्** (8-3-6)

At एकाहबृहस्पतियागे from ज्योतिष्टोमेकाह which its प्रकृति, the गायत्र, त्रैष्टुभ, etc. many छन्दस् were to be brought. However, it is restricted to गायत्री only. Here, the question is raised whether गायत्रीछन्दस् has to be developed by reducing the number of letters of त्रिष्टुप् etc. enjoined here or गायत्री has to be brought from दाशतेयी.

''वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत'' इति श्रुतैकाहबृहस्पतिसवे ज्योतिष्टोमादेकाहात्प्रकृतिभूताद्गायत्रत्रिष्टुबादिनानाच्छन्दस्सु प्राप्तेषु छन्दोन्तराणि निरस्य ''गायत्रमेतदहर्भवति'' इति गायत्री नियमिता। तत्र किं त्रिष्टुबादिष्वेव चोदकप्राप्तेष्वक्षरादिलोपेन चतुर्विंशत्यक्षराणि परिशेष्य गायत्री सम्पाद्या, किं वा दाशतय्यामुत्पन्नाऽऽनेतव्येति **सन्देहे,**

Pūrvapakṣin argues that the word गायत्री has to be taken in the sense of twenty four letters. The त्रिष्टुप् etc छन्दस् prescribed here should be reduced to twenty four letters and गायत्री be developed. By this process three त्रिष्टुप् could be developed into four गायत्री.

गायत्रीशब्दस्य चतुर्विंशत्यक्षरविशिष्टास्वेवर्क्षु प्रयोगान्नागृहीतविशेषणन्यायेन चतुर्विंशतिसङ्ख्यैव गायत्रीपदवाच्येति चोदकाबाधाय चोदकप्राप्तत्रिष्टुभ्येवाक्षरलोपेन गायत्री सम्पाद्या। तथा च सति तिस्रोऽनुष्टुभश्चतस्रो गायत्र्य इत्युपपद्यत इति **प्राप्तम्।**

Siddhāntin point out that it is not proper to take the word merely in the sense of twenty four. This will lead to the employing of the word of any other object of twenty four numbers. Therefore the word गायत्री has to be taken in the sense of a metre that has three pāda of eight letters each. Such गायत्री metre has to be brought from दाशतयी only.

**सिद्धान्तस्तु,** सङ्ख्यामात्रवाचित्वे गायत्र्यादिशब्दस्य घटादौ चतुर्विंशतिसङ्ख्यायुक्ते वाक्यान्तरे च प्रयोगापातादष्टाक्षरपादत्रयादियुक्तविशेषस्यैव वाचको गायत्र्यादिशब्द इति दाशतय्यामुत्पन्नगायत्र्यां नेतव्या। न चैवं चोदकबाधः। उपदेशेनातिदेशस्य बाधादिति। ''तिस्रोऽनुष्टुभः'' इति तु गौणं नेयम्।

**इति अष्टमाध्यायस्य तृतीयः पादः**

## अष्टमाध्यायस्य चतुर्थः पादः

### दर्वीहोमशब्दस्य होमनामधेयताधिकरणम् (8-4-1)

*In this adhikaraṇa the question whether दर्वीहोमशब्द is गुणविधि or नामधेय is discussed.*

''यदेकया जुहुयाद्दर्वीहोमं कुर्यात्'' इत्यर्थवादगतो दर्वीहोमशब्दः किं गुणविधिर्नामधेयं वा, नामधेयत्वेपि लौकिकस्थालीपाकादिकर्मनामधेयमुत वैदिककर्मनामधेयमपि, तत्रापि किं यागनामोत होमनामेति **सन्देहः** ।

The statement 'यदेकया जुहुयात् दर्वीहोमं कुर्यात्' occurs in अर्थवाद section. In connection with the expression दर्वीहोम the following questions are raised.

*i)* Whether it is गुणविधि or नामधेय.

*ii)* If it is नामधेय, whether स्थालीपाक etc लौकिककर्मनामधेय or वैदिककर्म नामधेय ।

*iii)* Sometime सोमयाग is also called होम. Hence, दर्वीहोम is नामधेय of a याग.

**पूर्वपक्षस्तु,** ''दर्व्या होमः'' इति तृतीयासमासे ''दध्ना जुहोति'' इत्यादाविव होमानुवादेन गुणविधित्वसम्भवाद्दर्वीद्रव्यरूपो गुणो विधीयत **इत्येकः** । तदाह **सूत्रे, गुणविधानं स्याद्द्रव्योपदेशादिति** ।

दर्वीपदस्य होमपदसम्बन्धाद्धोमपदस्य च कर्मवचनत्वात् ''दर्व्याख्यो होमो दर्वीहोमः'' इति समासस्य होमप्रधानत्वाद्दर्वीहोमशब्दः कर्मनामधेयमिति **द्वितीयः** । तदाह **सूत्रे, दर्वीहोमो यज्ञाभिधानं** होमवाचकम् । दर्वी होम इति **होमसम्बन्धादिति** ।

''अम्बष्ठानां दार्विहोमिको ब्राह्मणः'' इति श्रुतौ स्थालीपाकादिस्मार्तहोमकर्तरि दार्विहोमिकपदप्रयोगाल्लौकिकनामधेयमिति **तृतीयः** । **तदाह, लौकिकानां स्यादिति** ।

''यदेकया जुहुयाद्दर्वीहोमं कुर्यात्'' ''पुरोनुवाक्यामनूच्य याज्यया जुहोति'' इति वैदिके वास्तुहोमेऽपि दर्वीहोमपदप्रयोगाद्वैदिकहोमानामपि होमत्वाविशेषाच्च वैदिकानामपि कर्मणां तन्नामधेयमिति **चतुर्थः** । तदाह **सूत्रे, सर्वेषां वा दर्शनाद्वास्तुहोमे** इति ।



''सोमेन यजेत'' इत्यादौ यागत्वेनोत्पन्नानां सोमयागादीनां ''यद्ग्रहान् जुहोति'' इति होमत्वेनानुवादान्न यागहोमयोर्भेद इति होमपदसंयोगेऽपि यागनामैतदिति **पञ्चमः** ।

Siddhānta : याग is not homa. याग leads to अपूर्व. While होम is प्रतिपत्ति संस्कार for द्रव्य. Therefore, दर्वी होम is होम नामधेय.

**सिद्धान्तस्तु, न** यागस्य होमत्वम् । यागो ह्यपूर्वार्थः । होमस्तु द्रव्यस्य प्रतिपत्तिरूपसंस्कार एवेति तृतीयस्य चतुर्थपादे **सर्वप्रदानं** हविषस्तदर्थत्वादित्यत्रोक्तेः । अतो जुहोत्युत्पत्तिनामैवेदं नामधयमिति । तदाह **सूत्रे, जुहोतिचोदनायां वा संयोगादिति** ।

### दर्वीहोमशब्दस्य अपूर्वताधिकरणम् (8-4-2)

दर्वीहोमs are enjoined by the statement 'भिन्ने जुहोति' 'स्कन्ने जुहोति' etc.

Here, the question is raised whether these are अपूर्वकर्म or विकृतिs.

''भिन्ने जुहोति'' ''स्कन्ने जुहोति''. इत्यादिवाक्यविहितदर्वीहोमशब्दिता होमाः किं पूर्ववन्तः, किं वा अपूर्ववन्त इति **सन्देहे,**

Pūrvapakṣa : states that in respect of these होम. इतिकर्तव्यता is not stated. Therefore विध्यन्त of some or other याग has to be adopted. देवता is also is not stated in उत्पत्तिवाक्य. As per the guideline 'अव्यक्तासु सोमस्य.' In the case of the याग for which देवता is not mentioned विध्यन्त of सोम has adopted.

ii) सोम is याग, दर्वीहोम is होम. Therefore there cannot be any प्रकृतिविकृतिभाव between these two. Therefore विध्यन्त of अग्निहोत्र, नादिष्ट etc have to be adopted.

अश्रुतेतिकर्तव्यताकत्वाद्यस्य कस्यचिद्विध्यन्तेऽवश्यापेक्षिते सत्युत्पत्तावश्रुतदेवताकत्वेनाव्यक्तचोदनाकतया **अव्यक्तासु तु सोमस्येत्युक्तदिशा** सौमिकविध्यन्त **इत्येकः पूर्वपक्षः** । तदाह **सूत्रे, तस्मिन् सोमः प्रवर्तेताव्यक्तत्वादिति** । **व्यक्तोऽर्थः** । सोमस्य यागत्वेन दर्वीहोमानाञ्च होमत्वेन विसदृशत्वान्न तयोः प्रकृतिविकृतिभावः सम्भवति । किन्त्वग्निहोत्रनारिष्टादीनां धर्मवतां विध्यन्तस्य प्रवृत्तिरिति **द्वितीयः** । तदाह **सूत्रे, शब्दान्तरत्वाच्चेति** । यजतिशब्दाज्जुहोतीतिहोमवाचिश्ब्दस्य भेदवत्वादित्यर्थः ।

Siddhānta : points out that if नारिष्ट होम is taken as प्रकृति for दर्वीहोम then, इध्माबर्हि etc have to be brought in. This is prohibitted by the statement 'नेध्मा बर्हिः सन्नह्यते.' Therefore दवीहोमs have to be considered as अपूर्वहोम. Hence, there is no अतिदेश of any विध्यन्त.

**सिद्धान्तस्तु,** नारिष्टहोमादिप्रकृतिकत्वे तदङ्गभूतानामिध्माबर्हिरादीनां दर्वीहोमशब्दितत्र्यम्बक-होमेषु प्राप्तिः स्यात्। न च सास्ति। ''नेध्माबर्हिः सन्नह्यते'' इति तदभावदर्शनात्। तस्मादपूर्वत्व-मेवैतेषामिति न कस्यापि विध्यन्तस्यातिदेश इति यावच्छ्रुतद्रव्यदेवताभ्यामेव तेषां होमानामनुष्ठानमिति।

**इति अष्टमाध्यायस्य चतुर्थः पादः**

**इति अष्टमाध्यायः समाप्तः**



# Chapter-IX

## नवमाध्यायस्य प्रथमः पादः

In this chapter ऊह is discussed. The nature of ऊह is explained as introducing suitable changes in the mantra etc., axiliaries of द्रव्य, देवता in the प्रकृतियाग when these are adopted in the विकृतियाग. The name of देवता etc are to be substituted. This process is known as ऊह.

ॐ। पूर्वत्रातिदेशश्चिन्तितः। अत्राध्याये ऊहश्चिन्त्यते। ऊहो नाम प्राकृतद्रव्यदेवतादिपदार्थ-कार्यार्थानां मन्त्रादीनां प्राकृतपदार्थस्थानापन्नवैकृतपदार्थकार्यार्थतया प्राप्तानां तदनुगुणतयाऽन्यथाभूतः प्रयोगः। तदुक्तम्,

**प्राकृतस्थानपतितपदार्थान्तरकार्यतः।**
**ऊहः प्रयोगो विकृत ऊह्यमानतयोदितः॥ इति॥**

**अग्निहोत्रादिषु उक्तानां धर्माणा मपूर्व प्रयुक्तत्वाधिकरणम् (9-1-1)**

In this अधिकरण the question whether अवघात etc., संस्कारs are द्रव्यदेवतास्वरूप प्रयुक्त or अपूर्वप्रयुक्त is raised.

''व्रीहीनवहन्ति'' इत्यवघातादयः संस्काराः, बृहदादिसामानि ''अग्नये जुष्टम्'' इत्यादि मन्त्राश्च किं व्रीह्यग्न्यादिस्वरूपप्रयुक्ताः, उतापूर्वप्रयुक्ता इति सन्देहे,

Pūrvapakṣa : Since the very expressions व्रीहि etc. convey व्राहिस्वरूप the अवघात etc. संस्कारs are द्रव्यादिस्वरूपप्रयुक्त but not अपूर्वप्रयुक्त.

श्रुतस्वरूपाविवक्षायां हेत्वभावाद्व्रीह्यादिस्वरूपप्रयुक्ता एवेति **प्राप्ते,**

Siddhānta : If these are व्रीह्यादिस्वरूपप्रयुक्त then, when नीवारs are taken there cannot be the ऊह of अवघात etc. संस्कारs. But if these are taken as अपूर्वप्रयुक्त then ऊह can be worked out in respect of नीवार etc. also.

**सिद्धान्तः,** व्रीह्यादिस्वरूपप्रयुक्तत्वे ''व्रीहिनवहन्ति'' इत्यादिवाक्यवैयर्थ्यापत्तेः, प्रकरणबलात् ''अपूर्वीयानवहन्ति'' इत्यपूर्वसाधनत्वप्रयुक्ता एवैत इति सप्तमाद्यसिद्धमिह स्मारितमित्याहुः।

### प्रोक्षणस्य अपूर्वप्रयुक्तत्वाधिकरणम् (9-1-2)

At दर्शपूर्णमास प्रोक्षण, i.e. sprinkling of water for the उलूखल and मुसल and for दृषत् and उपल is prescribed. Here the question is raised whether प्रोक्षण is meant for अवघात and प्रेषण or for अपूर्व.

दर्शपूर्णमासयोः श्रूयते ''प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति'' ''प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टि'' इति । तत्र प्रोक्षणं किं वाक्याद्धन्तिपिष्टचर्थमुत प्रकरणादपूर्वार्थमिति सन्देहः ।

Pūrvapakṣa : The expressions अवहन्ति, पिनष्टि convey the very स्वरूप of अवघात and पेषण, therefore the प्रोक्षणसंस्कार is meant for these only. But not for अपूर्व.

**पूर्वपक्षस्तु,** अवहन्तिपिनष्टीतिशब्दाभ्यां हन्तिपिष्टिस्वरूपं श्रुत्या प्रतीयते । नापूर्वीयक्रियात्वम् । हन्तिपिष्टिसाधनता च तृतीयाश्रुत्योलूखलादेः प्रतीयत इति प्रोक्षणं हन्तिपिष्टिसाधनत्वप्रयुक्तं सद्वाक्याद्धन्तिपिष्टचर्थमेव भवति । प्रकरणबलान्नापूर्वार्थम् ।

Siddhānta : अवघातादिस्वरूप is available without प्रोक्षण. Hence taking प्रोक्षण as for स्वरूपार्थ will result in वाक्यानर्थक्य. Therefore these have to be taken as meant for अपूर्व.

**सिद्धान्तस्तु,** अवघातादिस्वरूपमात्रस्य प्रोक्षणमन्तरेणापि सम्भवेन हन्तिपिष्टिस्वरूपमात्रार्थत्वे ''प्रोक्षिताभ्यामवहन्ति'' इति वाक्यानर्थक्यादपूर्वीयहन्तिपिष्टचोश्चोलूखलादिसंस्कारकप्रोक्षणेन विनाऽनुत्पत्तेस्तत्पक्षे वाक्यसार्थक्यात् ।

### उच्चावचध्वनेः परमापूर्व प्रयुक्तताधिकरणम् (9-1-2) (वर्णकान्तरम्)

At ज्योतिष्टोम at दीक्षणीय, कामस्वर is prescribed. At उपसत् उपांशुस्वर is prescribed. At अग्नीषोमीय उच्चैः स्वर is prescribed. Here the question is raised. Whether the कामस्वर is meant for दीक्षणीय अपूर्व or परमापूर्व is raised.

ज्योतिष्टोमे श्रूयते ''यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयात् । मन्द्रं प्रायणीयायाम् । उपांशूपसत्सु । उच्चैरग्नीषोमीये'' इति । तत्र दीक्षणीयेष्टौ श्रुतो यथाकामस्वरः किं दीक्षणीयापूर्वप्रयुक्तः, उत परमापूर्वप्रयुक्त इति सन्देहे,



Pūrvapakṣa : दीक्षणीयापूर्व has no result of its own. It is meant for परमापूर्व only. Hence it is परमापूर्व प्रयुक्त.

दीक्षणीयापूर्वस्य निष्फलत्वात्परमापूर्वस्य स्वर्गाख्यफलवत्वात्फलवच्छेषतैव युक्तेति प्राप्ते,

Siddhānta : फलवत्परमापूर्व is not stated here. It has to be conveyed by लक्षणा by दीक्षणीयापूर्व. Hence it is better to take it as दीक्षणीयाप्रयुक्त than परमापूर्वप्रयुक्त.

**सिद्धान्तः,** अत्र फलवत्परमापूर्वस्याश्रवणाद्दीक्षणीया शब्दः स्वजन्यापूर्वं लक्षयित्वा तद्वारा परमापूर्वं लक्षयित्वा परमापूर्वसाधनापूर्वकारणदीक्षणीयायामित्यर्थपरः स्यात् । तथा च लक्षितलक्षणादोषः । ततो वरा स्वापूर्वमात्रलक्षणेति तत्प्रयुक्त एव स्वरः ।

### फलदेवतासम्बद्धधर्माणामपूर्वप्रयुक्तताधिकरणम् (9-1-3)

At दर्शपूर्णमास there are two mantras viz., अगन्म सुवः सुवरगन्म and अग्नेरहं उज्जितिं अनुज्येषं. Here the question is raised whether these mantras are meant for स्वर्गस्वरूप and अग्निस्वरूप respectively or for the अपूर्वसाध्यत्व of स्वर्ग and अपूर्व साधनत्वरूपदेवतात्त्व.

दर्शपूर्णमासयोर्मन्त्रौ श्रुतौ ''अगन्म सुवः सुवरगन्म'' इत्येकः। ''अग्नेरहमुज्जितिमनूज्जेषम्'' इत्यपरः । किमेतौ मन्त्रौ स्वर्गस्वरूपाग्निस्वरूपप्रयुक्तौ, किं वा स्वर्गस्य यदपूर्वसाध्यत्वरूपमग्नेश्च अपूर्वसाधनत्वरूपदेवतात्वरूपं तत्प्रयुक्ताविति सन्देहे,

Pūrvapakṣa : The mantras mention सर्ग and अग्निस्वरूप only. Therefore these are meant for स्वर्ग स्वरूप and अग्निस्वरूप only.

मन्त्रलिङ्गपर्यालोचनया स्वर्गाग्निस्वरूपयोरेव प्रतीतेरितोऽन्याकारस्याप्रतीतेर्मन्त्रलिङ्गबलात्स्वर्गाग्नि स्वरूपप्रयुक्तावेतौ मन्त्रौ । न तूक्तरूपान्तरप्रयुक्तौ ।

By mere स्वर्गस्वरूपप्रकाशन the mantra will not lead to स्वर्गरूपफल. Therefore it has to be taken as meant for अपूर्व which will lead to स्वर्ग. Similarly mere अग्निस्वरूपप्रकाशन does not lead to any result. अग्नि has to be understood as क्रत्वङ्गदेवता and mantra has to be taken as meant for providing क्रत्वङ्गदेवतात्त्व to अग्नि.

**सिद्धान्तस्तु,** स्वर्गाख्यफलस्य सर्वस्मात्प्राधान्येऽपि तत्स्वरूपप्रकाशनेन फलासिध्या तन्मात्रप्रकाशनस्याऽनर्थक्यात् अतोऽस्य मन्त्रस्य स्वर्गार्थतावादिना प्रकरणेनापूर्वशेषत्वं स्वीकृत्य तद्द्वारेण तत्साध्यस्वर्गार्थता वाच्येति सुवरित्यादिस्वर्गवाचिपदेन प्राकरणिकापूर्वसाध्यत्वाकारं लक्षयित्वा तत्प्रयुक्त एव ''अगन्म सुवः'' इति मन्त्र इत्युपेयम् । एवमग्नेर्मन्त्रप्रशंसितस्य फलदायित्वेऽपि तत्प्रकाशनद्वारा फलार्थत्वेऽदृष्टार्थत्वप्रसङ्गात्तत्स्वरूपप्रकाशनमात्रेण फलाभावाच्चानर्थक्यप्रसङ्गात् क्रत्वङ्गदेवतात्वमग्निपदेन लक्षयित्वा तत्प्रयुक्त एवायं मन्त्र इत्यभ्युपेयम् ।

### धर्माणामदेवताप्रयुक्तत्वाधिकरणम् (9-1-4)

In this adhikaraṇa, the question whether अग्नेय etc. yagas lead to स्वर्ग etc., results through the appeasement of the deities or through the अपूर्व is raised.

आग्नेयादियागः किं देवताराधनार्थः सन् तत्प्रीतिद्वारा स्वर्गादिफलार्थः, उतापूर्वद्वारा स्वर्गादिफलार्थ इति **सन्देहः ।**

Pūrvapakṣa : argues that the words अग्नि, इन्द्र etc. are put in dative case suffix. Therefore, these are pradhāna. The Yāga which is of the nature of pūja is aṅga. Therefore yāga is performed to obtain the grace of devatas which leads to the result but not by producing अपूर्व. There is a supplimentary statement that तृप्तः एव एतमिन्द्रः प्रजया पशुभिः तर्पयति ।

**पूर्वपक्षस्तु,** अग्नीन्द्रादि देवताया यागे सम्प्रदानत्वेन प्राधान्यात्, यागस्य च ''यजि देवपूजासङ्गतिकरणदानेषु'' इत्युक्त्याऽतिथे भोजनादेरिव पूजारूपतया तदङ्गत्वादग्न्यादिदेवताराधनार्थः सन् देवताप्रसादद्वारा फलार्थो यागो देवताप्रयुक्तो नापूर्वप्रयुक्त,

Siddhānta : He points out that in the expression यजेत the भावना conveyed by the injunctive suffix needs a भाव्य i.e., result, and svarga is connected with it as a result. It also requires Karaṇa i.e. means. This is provided by yāga which is the meaning of the root यज्. This याग requires certain auxiliaries. द्रव्य and देवता are the auxilaries. From this it is clear that devatā is meant for याग. But not for the results. It is the अपूर्व generated by याग that leads to be result. Hence, the performance of आग्नेय etc. यागs is meant for obtaining the result through अपूर्व but not by देवताराधन.



**सिद्धान्तस्तु,** यजेतेतिप्रत्ययोपात्तभावना पुमर्थं भाव्यमपेक्षमाणा, पदश्रुत्यवगतमपि यागमयोग्यत्वादुपेक्ष्य पदान्तरोपात्तं स्वर्गादिफलं भाव्यत्वेन गृहीत्वा, तस्य साधनमाकाङ्क्षन्ती, एकपदोपात्तं यागं फलकरणत्वेनोपादाय, तस्य साध्यरूपत्वेन तन्निर्वर्तकसन्निपात्यङ्गाकाङ्क्षायां सिद्धरूपतया तन्निर्वर्तनक्षमे द्रव्यदेवते यागार्थतया गृह्णन्ती, देवतां यागार्थां करोतीति ततः प्राग्देवतायाः फलार्थत्वानवगमात्र देवताराधनाय यागविधिः । येन यागो देवताराधनार्थः संस्तत्प्रीतिद्वारा फलहेतुः स्यात् ।

### प्रोक्षणादीनामपूर्व प्रयुक्तताधिकरणम् (9-1-5)

At दर्शपूर्णमास, प्रोक्षण, मन्त्र, होम and अभिमर्शन are stated. Here the question is raised whether these are meant for द्रव्य, सङ्ख्या, हेतु and समुदाय or these are meant for अपूर्व.

दर्शपूर्णमासयोः श्रूयते ''व्रीहीन् प्रोक्षति'' इति **प्रोक्षणम्** । ''त्रीन् परिधीन्'' इति मन्त्रः । तथा चातुर्मास्येषु श्रूयते ''शूर्पेण जुहोति । तेन ह्यन्नं क्रियते'' इति **होमः** । तथा दर्शपूर्णमासयोरेव श्रूयते ''चतुर्होत्रा पौर्णमासीमभिमृशेत् । पञ्चहोत्राऽमावास्याम्'' इति । तत्र प्रोक्षणमन्त्रहोमाभिमर्शनानि चत्वारि किं द्रव्यसङ्ख्याहेतुसमुदायप्रयुक्तानि, उतापूर्वप्रयुक्तानीति **सन्देहः ।**

Pūrvapakṣa :

i) पूर्वपक्षिन् states that in the statement व्रीहीन् प्रोक्षति the expression व्रीहि is in acc. case. This indicates व्रीहि is प्रधान and प्रोक्षण is अङ्ग. Hence प्रोक्षण is meant for व्रीहि ।

ii) In the mantra त्रीन् परिधीन् etc. the expression त्रीन् conveys त्रित्व of परिधि. Therefore this mantra is intended to convey त्रित्वरूपसङ्ख्या.

iii) In the statement शूर्पेण जुहोति । तेन हि अन्नं करोति, the expression तेन conveys अन्नकरणत्वरूपहेतु. Hence the अन्नकरणसाधनs viz., शूर्प, दर्वी, पिठर etc., are meant for homa but not for अपूर्व.

iv) Similarly अभिमर्शन is an aṅga of पौर्णमासी अमावास्याहविस्समुदाय. Therefore it is meant for this समुदाय only, not for generating any अपूर्व.

**पूर्वपक्षस्तु** व्रीहीनिति द्वितीयाश्रुत्या तदुक्तवाक्येन च व्रीहीणां शेषित्वस्य प्रोक्षणादेः शेषत्वस्य

प्रतीतेस्तत्प्रयुक्तमेव प्रोक्षणम् । तथा त्रीनिति मन्त्रोऽपि लिङ्गबलात्परिधिगतत्रित्वसङ्ख्याप्रकाशनार्थः संस्त्रित्वसङ्ख्याप्रयुक्त एव ।

होमोऽपि ''तेन हि'' इति ''हि'' शब्दश्रुत्यवगतान्नकरणत्वरूपहेतुप्रयुक्तः सन् ''यद्यदन्नकरणं शूर्पदर्वीपिठरादितत्सर्वस्याङ्गम् । तथाऽभिमर्शनमपि द्वितीयाश्रुत्या समुदायस्यैव शेषित्वप्रतीत्या पौर्णमास्यममावास्याहविःसमुदायप्रयुक्तमेव ।

Siddhānta : If प्रोक्षण etc., are taken as for the व्रीह्यादि स्वरूप, since व्रीह्यादि स्वरूप is already there the प्रोक्षण becomes purposeless. Therefore the expression व्रीहि should be taken in the sense of अपूर्वसाधन हविस् and meant for अपूर्व.

Similarly मन्त्र, होम and अभिमर्शन should also be taken as for अपूर्व but not for सङ्ख्या, हेतु and समुदाय.

**सिद्धान्तस्तु,** प्रोक्षणादेर्व्रीह्यादिस्वरूपार्थत्वे तेन विनापि व्रीह्यादिस्वरूपसिध्या वाक्यानर्थक्य-प्रसङ्गात् श्रुतेः स्वतो बलीयस्त्वेऽप्यानर्थक्यप्रतिहतत्वेन दुर्बलतया प्रकरणेन श्रुत्यवगतमुख्यार्थ-बाधेनापूर्वसाधनहविर्व्रीहिपदेन लक्षयित्वा तत्प्रयुक्तमेव प्रोक्षणमित्युपेयम् । तथा मन्त्रोऽपि परिधिगत-त्रित्वत्यागेन तद्गतेयत्ताप्रकाशनद्वारा परिधिगतलक्षितापूर्वसाधनत्वप्रयुक्तः ।

### अग्निष्टोमे उपांशुत्वस्य दाक्षणीयाद्यपूर्वप्रयुक्तत्वाधिकरणम् (9-1-6)

Jyotiṣṭoma it is stated that यत्किञ्चित् प्राचीन मग्नीषोमीयात् तेन उपांशु चरन्ति । Here the question is raised whether उपांशुत्व is meant for ज्यौतिष्टोमिक अपूर्व or दीक्षणीयाद्यवान्तरापूर्व.

ज्योतिष्टोमे श्रूयते ''त्सरा वा एषा यज्ञस्य तस्माद्यत्किञ्चित् प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति'' इति । **अस्यार्थः,** **त्सरेति** छन्नगतिरुच्यते तस्मादग्नीषोमीयात् प्राचीनं यत्पदार्थजातं तेनोपांशु चरन्तीति यत् एषा यज्ञस्य त्सरा छन्नगतिः । कोऽर्थः ? यथा शकुनिं गृहीतुकामस्य प्रच्छन्ना गतिर्भवति शनैः पदन्यासो, दृष्टिप्रणिधानं, अशब्दकरणश्चेत्येवंरूपा तामनवबुद्धः शकुनिर्गृह्यते एवमिहाप्यनुष्ठातुरु-पांशुत्वानुष्ठानं छन्नगतिरूपं यज्ञसाध्यपरमापूर्वग्रहणायेत्यर्थो **भाष्योक्तः** । तत्र **सन्देहः,** किमुपांशुत्वं ज्यौतिष्टोमिकपरमापूर्वप्रयुक्तमुत दीक्षणीयाद्यवान्तरापूर्वप्रयुक्तमिति ।

Pūrvapakṣa : states that उपांशुत्व is an auxiliary of यज्ञभाग. Because it is to



be observed in the प्राचीन भाग of यज्ञ. As per the statement यत्किञ्चित् प्राचीन मग्नीषोमीयात् । तेन उपांशु चरन्ति. Since, उपांशुत्व is an auxiliary of सोमयाग प्राचीनभाग it is meant for सोमयागापूर्व but not for अवान्तरापूर्व.

**पूर्वपक्षस्तु,** यथा हि पूर्वत्र हविरभिमर्शनं समुदायापूर्वप्रयुक्तं तथोपांशुत्वमपि ग्रहहोमाभ्यास-समुदायात्मकसोमयागापूर्वप्रयुक्तम् । कुतः? यज्ञस्य प्राचीनं यत्किञ्चिदित्यवयवार्थषष्ठ्या यज्ञस्या-वयवभूतो यः प्राचीनभागस्तमुपांशु चरन्तीति यज्ञभागधर्मत्वश्रवणात् ।

Siddhānta : Siddhāntin points out that उपांशुत्व is an auxiliary of दीक्षणीय etc. that are to be observed before अग्नीषोमीय. Hence, this is meant for the अवान्तर अपूर्व of दीक्षणीय etc., only.

**सिद्धान्तस्तु,** यत्किञ्चित्प्राचीनमित्युद्देश्यसमर्पकस्य प्राचीनशब्दस्य साकाङ्क्षस्य यज्ञस्येति श्रुतेन तस्मादित्यनेन व्यवहिततयाऽन्वयायोग्येन नैराकाङ्क्ष्यकरणायोगात्सन्निहितेनाग्नीषोमीयपदेनान्वययोग्येन नैराकाङ्क्ष्यकरणसम्भवादग्नीषोमीयाद्ये प्राग्भाविनः पदार्था दीक्षणीयादयस्ते उपांशु कार्या इत्यग्नीषोमीय प्राग्भाविपदार्थधर्म एवोपांशुत्वम् । न सोमप्राग्भागस्य ।

### वाग्यमस्य अपरमापूर्वत्वाधिकरणम् (9-1-7)

At दर्शपूर्णमास it is stated that प्रणीता. प्रणेष्यन् वाचं यच्छति । Here the question is raised whether the वाग्यम stated here is meant for प्राकरणिक परमापूर्व or अवान्तरापूर्व.

दर्शपूर्णमासयोः श्रूयते तस्मात्प्रणीताः प्रणेष्यन् वाचं यच्छति'' इति । तत्र ''प्रणेष्यन् वाचं यच्छति'' इति श्रुतो वाग्यमः किं प्राकरणिकपरमापूर्वप्रयुक्तः, उतावान्तरापूर्वप्रयुक्त इति **सन्देहः** ।

Pūrvapakṣa : वाग्यम is an auxiliary of यज्ञ. Therefore it is meant for परमापूर्व only.

**पूर्वपक्षस्तु,** ''वाचं यच्छति'' इति वाग्यमस्य यज्ञमिति यज्ञशब्दान्वयेन यज्ञधर्मत्वप्रतीत्या वाग्यमस्य तदीयपरमापूर्वप्रयुक्तत्वावगमादिति ।

Siddhānta : The word प्रणेष्यन् indicates that वाग्यम is meant for the संस्कार for प्रणयनकर्ता. Hence it is meant for all the पदार्थs performed between प्रणीत, प्रणयन and हविष्कृदाह्वान and meant for the अपूर्वs of these only but not परमापूर्व ।

**सिद्धान्तस्तु,** प्रणेष्यन्निति शतृप्रत्ययाभिहितप्रणीताप्रणयनकर्त्रर्थतयोक्तस्य वाग्यमस्य ''हविष्कृता वाचं विसृजति'' इति हविष्कृदाह्वानकाले विसर्जनविधानात्तावत्पर्यन्तमनुवर्तमानस्य स्वसंस्कार्यपुरुष-कर्तृकतया प्रणीताप्रणयनहविष्कृदाह्वानमध्यवर्तिसर्वपदार्थार्थतया तदपूर्व प्रयुक्तत्वमेव । न परमा-पूर्वप्रयुक्तत्वमिति ।

### इष्टकासु सकृद्विकर्षणाद्यनुष्ठानाधिकरणम् (9-1-8)

By the statement 'इष्टकाभिः अग्निं चिनुते' अग्नि चयन is enjoined. In this context by the statements मण्डूकेन अग्निं विकर्षति, वेतसशाखया अग्निं विकर्षति, हिरण्यशकलसहस्रेण अग्निं प्रोक्षति, मधुमिश्रेण दध्ना अग्निं प्रोक्षति occur. Here the question is raised whether प्रोक्षण and विकर्षण is to be observed for each इष्टका separately or all इष्टकाs together once only.

''इष्टकाभिरग्निं चिनुते'' इति विधाय श्रूयते ''मण्डूकेनाग्निं विकर्षति । वेतसशाखयाऽवकाभिश्चाग्निं विकर्षति । हिरण्यशकलसहस्रेणाग्निं प्रोक्षति । दध्ना मधुमिश्रेणाग्निं प्रोक्षति'' इति । तत्र प्रोक्षणं विकर्षणञ्च किं सकृदेव कार्यमुत प्रतीष्टकं भेदेन कार्यमिति **सन्देहे,**

Pūrvapakṣa : Apart from each इष्टका there is no अवयवी consisting of इष्टकाs. अग्नि is placed in the इष्टकाs only connected with each other. These cannot be considered as one unit of अवयवी, because when one इष्टिका is drawn out the other इष्टिका does not move along with it. Hence, विकर्षण and प्रोक्षण have to be made separately in respect of each इष्टका.

प्रतीष्टकं कार्यमिति **प्राप्तम् ।** कुतः? इष्टकाव्यतिरिक्तावयविनः कस्यचिदभावादिष्टका एव संहता वह्निधारणार्थत्वेन स्थापिता अग्निशब्देनाभिधीयन्ते । एकावयवाकर्षणे यत्रावयवान्तराकर्षणं सन्धि-दर्शनञ्चास्ति तत्रैव देवदत्तादावयविता । न चेहैकेष्टकाकर्षणेऽन्यासां तदस्ति । एकत्वबुद्धिस्तु वनादाविव समुदायविषयेति ।

Siddhānta : When the इष्टिकाs are put joining with each other it is cognised as one unit. There is no देशभेद or कालभेद to consider them as separate. Therefore these form one unit. Hence प्रोक्षण and विकर्षण have to be performed once only.



**सिद्धान्तस्तु,** संहतास्विष्टकासु प्रत्यक्षतो जायमानैकत्वबुद्धेः, दूरस्थवनैकत्वबुद्धेः सन्निधान इव, जपाकुसुमसन्निधानकालीनस्फटिकलौहित्यबुद्धेस्तदसन्निधानकाल इव देशभेदेन कालभेदेन वा बाधा-भावात्तयाऽवयविन एकत्वस्य सिद्धेः सकृदेव प्रोक्षणमिति । एकावयवाकर्षणेनान्यावयवाकर्षणं तु नावयवितासाधकम् । वृक्षादावेकशाखाकर्षणेन शाखान्तराकर्षणाभावेऽप्यवयवित्वस्य सत्वात् । पटादौ सन्ध्यदर्शनेऽप्यवयविनः सत्वेन तदपि नावयवितासाधकमिति ।

### उत्तमान्यानामह्नां पत्नीसंयाजसंस्थाधिकरणम् (9-1-9)

At द्वादशाह sacrifice it is stated that पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते । The expression सन्तिष्ठन्ते means समाप्यन्ते । Here the question is raised whether the items upto पत्नीसंयाज only be performed on all days or these are to be performed on the days excepting the last day.

द्वादशाहे श्रूयते ''पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते । न बर्हिरनुप्रहरति, असंस्थितो हि यज्ञः'' इति । सन्तिष्ठन्ते समाप्यन्त इत्यर्थः । पत्नीसंयाजस्वरूपमुक्तं तृतीयाध्याये तृतीयपादे । तत्र किं सर्वेषामह्नां पत्नीसंयाजान्तत्वमुतान्त्यमहर्वर्जयित्वाऽन्येषामिति **संशयः ।**

Pūrvapakṣa : Since performance of items upto पत्नीसंयाज is stated for all days there is no scope to make an exception for the last day.

**पूर्वपक्षस्तु,** पत्नीसंयाजान्तान्यहानीत्यविशेषश्रवणात्सर्वेषामेव तदन्तत्वम् ।

Siddhānta : As per the statement द्वादशाहेन प्राजाकामं याजयेत्. The performance of यागs, on twelve days is one unit. Unless the items to be performed after पत्नीसंयाज are performed the याग is not complete. Hence the items after पत्नीसंयाज have to be performed atleast on the last day. These are not to be performed on other eleven days because of the express statement that the items only upto पत्नीसंयाज have to be performed.

**सिद्धान्तस्तु,** द्वादशाहस्सु कार्या यागाः ''द्वादशाहेन प्रजाकामं याजयेत्'' इति फलेन सह विहितत्वात्सह कर्तव्याः । सहप्रयोगश्चाद्येऽहन्युपक्रम्य सर्वाण्यहानि किञ्चित्पर्यन्तं कृत्वा शेषमवशेष्य चरमेऽहनि शेषसमापन एवोपपद्यते । नान्यथा ।

## प्रथमामन्वाहेत्यादिषु अभ्यासस्य स्थानधर्मताधिकरणम् (9-1-10)

At दर्शपूर्णमास by the statement पञ्चदशसमाधेनीरनुब्रूयात् the recitation of fifteen सामधेनीs is enjoined. In this context it is stated that त्रिः प्रथमां अन्वाह त्रिः उत्तमाम्, ताः पञ्चदश सम्पद्यन्ते । Here the question is raised whether the मन्त्र प्रवो वाचा etc. stated first in the context is to be recited or the hymn stated first without reference to particular context.

दर्शपूर्णमासयोः ''पञ्चदश सामिधेनीरनुब्रूयात्'' इति विधायैकादशर्चः पठित्वा ''त्रिः प्रथमामन्वाह त्रिरुत्तमां । ताः पञ्चदश सम्पद्यन्ते'' इति श्रूयते । तत्र त्रिरभ्यासः किं प्रथमाशब्दलक्षितायाः प्रकरणे प्रथमपठितायाः ''प्र वो वाचा अभिद्यवः'' इति ऋचो धर्मः, उत यत् प्रथमस्थानगतं तद्धर्म इति **सन्देहः** ।

Pūrvapakṣa : argues that the word प्रथमा is in the feminine gender. Hence, the मन्त्र प्रवो वाचा only has to be recited thrice.

स्त्रीलिङ्गनिर्देशात्प्रथमाशब्देन ''प्र वो वाचा'' इति ऋच एव ग्रहणात्तस्या एव त्रिरभ्यासरूपो धर्म इति **प्राप्ते,**

Siddhānta : points out that the प्रातिपदिक in the word प्रथमा conveys प्रथमस्थान. Therefore, on the basis of प्रातिपदिक the hymn that is in प्रथमस्थान has to be recited thrice. Such hymn may be प्रवो वाचा or any other that is stated in the first place.

प्रत्ययादपि प्रबलप्रतिपादिकेन वचनवृत्या प्रथमस्थानं प्रतीयते । ऋक्तु लक्षणया । न च प्रातिपदिकानुसारेण मुख्यार्थसम्भवे दुर्बलस्त्रीप्रत्ययानुरोधेन लक्षणा युक्ता । तस्मात्प्रथमस्थानधर्मः ''यत्प्रथमं तत्त्रिरभ्यसितव्यम्'' इति । तच्च प्राथम्यं ''ताः पञ्चदश'' इति वाक्यशेषबलेन ऋगाश्रयत्वेनैव भवतीति स्त्रीलिङ्गं नित्यानुवादः । तथा **चायमर्थः** ''या प्रथमस्थानपठिता ऋक्'' ''प्र वो वाचा इति वा, अन्या वा, या काचित्तां त्रिरभ्यसेत्'' इति ।

## आरम्भणीयेष्टेः पुरुषसंस्कारताधिकरणम् (9-1-11)

In the context of दर्शपूर्णमास by the statement आग्नावैष्णवम् एकादशकपालं निर्वपेत्



दर्शपूर्णमासावारप्स्यमानः, आरम्भणीया इष्टि is stated. Here the question is raised whether this इष्टि is to be performed at every प्रयोग of दर्शपूर्णमास or it is sufficient if it is performed at first प्रयोग only.

दर्शपूर्णमासप्रकरणे ''आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः । सरस्वत्यै चरुम् । सरस्वते चरुम्'' इति श्रुता आरम्भणीयेष्टिः किं ''यावज्जीवं दर्शपूर्णमासाभ्यां यजेत'' इति विधिबलाद्दर्शपूर्णमासावृत्तावावर्तते, अथ सकृदेव प्रथमप्रयोगवेलायामनुष्ठेयेति **सन्देहः** ।

Pūrvapakṣa : argues that on the basis of वाक्य and प्रकरण this इष्टि has to be considered as an अङ्ग of दर्शपूर्णमास. The अङ्गs have to be repeated at each performance of प्रधान. Hence it has to be observed for each प्रयोग separately.

**पूर्वपक्षस्तु,** दर्शपूर्णमासशब्दसमभिव्याहाररूपवाक्यात्प्रकरणाच्चेयमिष्टिर्दर्शपूर्णमासाङ्गम् । सा च प्रधानावृत्तावङ्गानामपि प्रयाजवदावृत्तिरावश्यिकीति प्रतिप्रयोगमावर्तनीया ।

Siddhānta : points out that this आरम्भणीया इष्टि is meant for आरम्भ only. It is not अङ्ग of दर्शपूर्णमास. Therefore performance of it once only before the first प्रयोग of दर्श. is sufficient. This is वृत्तिकार's view. However, भाष्यकार puts it in a different way.

**सिद्धान्तस्तु,** ''क्रियार्थायां क्रियायामुपपदे'' इति विहितेन लृट्प्रत्ययेनारम्भार्थत्वेनेयमिष्टिरवगम्यते । अतो न साक्षाद्दर्शपूर्णमासाङ्गम् । आरम्भश्च ''यावज्जीवं मया दर्शपूर्णमासौ कर्तव्यौ'' इत्यध्यवसायः । स चैक एव सर्वप्रयोगसाधारण इति सकृदेवानुष्ठेय इति । एतच्च **वृत्तिकारमतम्** ।

### भाष्यकारीयम् वर्णकम्

According to भाष्य, आरम्भ means either अग्न्याधनरूप first item or first undertaking which was not undertaken earlier- अप्रवृत्तस्य प्रथमप्रवर्तनम्. Hence the question raised here is whether आरम्भणीया इष्टि is an अङ्ग of अग्न्याधान or पुरुषसंस्कार for the person who undertakes दर्श.

**भाष्यकारीयन्तु मतम्** इयमिष्टिरारम्भार्थेति यदुक्तं तत्तथैव । आरम्भस्तु नोक्तरूपोऽध्यवसायः । किं त्वग्न्यवाधानरूपः प्रथमः पदार्थो वा । अप्रवृत्तस्य प्रथमप्रवर्तनं वा । तथा चाग्न्यन्वाधानरूपपदार्थस्याङ्गमुत दर्शपूर्णमासावारभमाणस्य पुरुषस्य संस्कारकतयाऽङ्गमिति संशये,

Pūrvapakṣa : If it is taken as पुरुषसंस्कार the contingency of envisaging a फल will arise. Therefore, it has to be considered as an अङ्ग of अग्न्याधान only. Hence it has to be repeated for every प्रयोग.

पुरुषार्थत्वे फलकल्पनाप्रसङ्गाद्दर्शपूर्णमासयोरारम्भरूपस्याग्न्यन्वाधानरूपाद्यपदार्थस्याङ्गभूतेयमिष्टिस्तदावृत्तावावर्तनीयैव । अग्न्यन्वाधानरूपेतिकर्तव्यतायाः प्रयोगप्रयुक्तत्वेन प्रतिप्रयोगमावर्तनीयत्वादिति **प्राप्ते**

Siddhānta : Here आरम्भ has to be taken in the sense of अप्रवृत्तस्य प्रथमप्रवृत्ति only. Hence this इष्टि is कर्तृसंस्कार. However since it is क्रत्वर्थ through कर्तृसंस्कार separate फल need not be envisaged. Since this इष्टि is an अङ्ग of the पुरुष its observance once only at प्रथमप्रवृत्ति is sufficient.

**सिद्धान्तः**, न प्रथमपदार्थ आरम्भशब्दार्थः । किं त्वप्रवृत्तस्य प्रथमप्रवर्तनमेव । तथा चारप्स्यमान इत्यनेन क्रत्वारम्भकर्तृभूतपुरुषोद्देशेन निर्वपेदिति विधीयमानाया इष्टेर्दीक्षणीयेष्टिवत् क्रतुकर्तृसंस्कारद्वारेण क्रत्वर्थतया क्रतुफलेनैव फलवत्वेन पृथक्फलकल्पनाऽप्रसक्तेः प्रथमं प्रवर्तमानस्य पुरुषस्याङ्गमियमिष्टिः । एकस्य एककर्मण एकैव प्रथमप्रवृत्तिः । न बहव इति सापीष्टिः सकृदेवानुष्ठेयेति ।

### निर्वापमन्त्रे सवित्रादिशब्दानामनूहाधिकरणम् (9-1-12)

At दर्शपूर्णमास the निर्वापमन्त्र, viz., देवस्य त्वा सवितुः प्रसवे अश्विनोः बाहुभ्यां पूष्णोः हस्ताभ्यां अग्नये जुष्टं occurs. Here the question is raised whether the words सविता etc., conveys कर्मसमवेतदेवताs or it is only a निर्वाप प्रशंसा through these देवताs who are not associated with कर्म.

दर्शपूर्णमासयोर्निर्वापमन्त्रः श्रूयते ''देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि'' इति । तत्र किमेते सवित्रादिशब्दाः कर्मसमवेतदेवताप्रकाशनार्थाः, उतासमवेतदेवताप्रकाशनद्वारा निर्वापप्रशंसनार्था इति **सन्देहः** ।

Pūrvapakṣa : If these are taken as for निर्वापप्रशंसा, अदृष्ट has to be envisaged. It is not proper to envisage अदृष्ट when दृष्टार्थत्व is possible. The word सविता etc. conveying देवता can be explained in two ways. These words



सविता etc. can be taken as conveying अग्नि who is कर्मसमवेत by गौणीवृत्ति or as conveying the very सविता etc देवताs as वैकल्पिककर्मदेवता that are कर्मसमवेत.

**पूर्वपक्षस्तु**, निर्वापप्रशंसार्थत्वे प्रशंसाया दृष्टफलत्वेऽपि तस्या न किञ्चिद्दृष्टमस्तीत्यदृष्टं कल्प्यम् । न च दृष्टे सम्भवति तद्युक्तम् । दृष्टार्थत्वञ्च सवित्रादिपदानां देवताप्रकाशनार्थत्वपक्षे द्वेधा सम्भवि । गौणवृत्त्या कर्मसमवेताग्निप्रकाशकत्वेन वा । अग्निना सह देवस्य त्वेति मन्त्रवर्णप्राप्तवैकल्पिक कर्मदेवतावाचित्वेन वा ।

Siddhānta : points out that when taking निर्वापप्रशंसा as प्रयोजन, एकवाक्यत्व is possible it is not proper to treat this मन्त्र as अनेकवाक्य. Moreover, these words are in different cases. Therefore गौणीवृत्ति is not possible. In view of this the first alternative given in the पूर्वपक्ष is not proper. Further by the statement 'आग्नेयो अष्टाकपालः' अग्नि is stated as देवता in the very injunctive statement. Therefore it is not proper to take the words सविता etc. as the respective deities and envisage the विकल्प. Therefore the निर्वापमन्त्र is for निर्वापप्रशंसा through conveying सविता etc. deities who are not कर्मसमवेत.

**सिद्धान्तस्तु**, निर्वापप्रशंसारूपैकप्रयोजनकत्वेनैकवाक्यत्वे सम्भवति जुष्टपदाद्यनुषङ्गेणानेकवाक्यभेदकल्पनायोगात् भिन्नभिन्नविभक्त्यन्तपदत्वेन ''सिंहश्चैत्रः'' इत्यादाविव सामानाधिकरण्याभावेन गौणवृत्तेरशक्यत्वाच्च नाद्यः पक्षः । द्वितीयोऽप्ययुक्तः । **गुणश्चापूर्वसंयोगादिति** गुणाधिकरणन्यायेन

**तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः ।**
**देवतासङ्गतिस्तत्र दुर्बलन्तूत्तरोतरम् ॥**

इत्युक्तन्यायेन च ''आग्नेयोऽष्टाकपालः'' इत्युत्पत्तिवाक्ये तद्धितोक्तेनाग्निना कर्मोत्पत्त्यनन्तरं मन्त्रवर्णोक्तेन सवित्रादिना विकल्पासम्भवात् । तस्मादसमवेतार्थप्रकाशनद्वारा निर्वापप्रशंसार्थत्वात् सवित्रादिपदानां निर्वपामीत्यन्त एको मन्त्र इति ।

### अग्नये जुष्टमिति मन्त्रे अग्निशब्दस्य विकृतावूहाधिकरणम् (9-1-13)

At दर्शपूर्णमास the मन्त्र देवस्य त्वा etc occurs. Here the question is raised whether the word अग्नि occuring in the clause अग्नये जुष्टं conveys दर्शपूर्णमास कर्मसमवेत अग्निदेवता or असमवेत देवता.

दर्शपूर्णमासगते देवस्य त्वेति मन्त्र एव **सन्देहः** । ''अग्नये जुष्टम्'' इत्यग्निशब्दः दर्शपूर्णमासकर्मासमवेतवचनः, उत समवेतदेवतावचन इति ।

Pūrvapakṣa : The word अग्नये which is in dative suffix has to be taken in the instrumental sense as there is no mention of दानकर्म in the context. When it is taken in the instrumental sense. The implication will be अग्निना जुष्टं. Thus it mentions something that belongs to the past consequently the word जुष्ट conveys कर्म असमवेत. The word अग्नि is an adjective of जुष्ट. Therefore अग्नि also has to be taken as कर्म असमवेत.

**पूर्वपक्षस्तु** 'अग्नये' इति चतुर्थ्या इह दानकर्मणोऽश्रवणेन सम्प्रदानत्वायोगेन तृतीयार्थे स्वीकर्तव्यत्वेनाग्निना जुष्टं सेवितमिति भूतार्थकनिष्ठाप्रत्ययान्तजुष्टशब्दस्य भूतार्थवाचित्वान्निर्वापवेलायां तादृशद्रव्यस्याभावेन जुष्टशब्दस्यासमवेतवाचितया तद्विशेषणाग्निशब्दस्यापि तथात्वावश्यम्भावात्

Siddhānta : states that by the statement 'यत् जुष्टं तन्निर्वपामि,' निर्वाप is enjoined. This can be put as निर्वपिन जुष्टं भावयेत् । This means यथा निरुक्तेन अग्निना जुष्टं भविष्यति तथा करोमि. In view of this both the words जुष्ट and its conjective अग्नि are कर्मसमवेत.

**सिद्धान्तस्तु**, ''यज्जुष्टं तन्निर्वपामि'' इति जुष्टानुवादेन निर्वापो विधीयते । निर्वपेदिति लिङ्गप्रत्ययोपात्तभावनां भाव्यतया जुष्टमित्येतदन्वेति ''निर्वपेण जुष्टं भावयेत्'' इति । किमुक्तं भवति ? ''यथा निरुक्तेनाग्निना जुष्टं भविष्यति, तथा करोमि'' इत्यर्थ इत्युक्तं भावति । तथा च जुष्टपदस्य तद्विशेषणाग्निपदस्य च समवेतवाचित्वमेवेति न सवित्रादिशब्दसाम्यमग्निपदस्य ।

### तण्डुलावाप मन्त्रे धान्यशब्दस्योहाधिकरणम् (वर्णकान्तरम्)

At दर्शपूर्णमास in the मन्त्र धान्यमसि धिनुहि देवान् the word धान्य occurs. Here the question is raised whether the word धान्य is कर्मसमवेत अर्थप्रकाशक or असमवेत अर्थप्रकाशक.

दर्शपूर्णमासयोः ''धान्यमसि धिनुहि देवान्'' इति दृषदि तण्डुलाधिवपनार्थमन्त्रे, तण्डुलेषु विनियुज्यमानो धान्यशब्दः किं समवेतप्रकाशनार्थः, उतासमवेतार्थक इति **सन्देहे,**



Pūrvapakṣa : argues that the word धान्य conveys सतुषद्रव्य (husk). Hence it is not able to convey तण्डुल of which the husk is removed. Therefore it is कर्म असमवेतार्थ.

धान्यशब्दस्य सतुषद्रव्यवाचितया वितुषीभूततण्डुलप्रकाशने शक्त्यभावात्सवित्रादिशब्दवद-समवेतार्थः सन्नदृष्टार्थोऽयं मन्त्र इति **प्राप्ते**

Siddhānta : points out that the words occurring in the मन्त्र have to be explained as दृष्टार्थ. Therefore though the word धान्य conveys the rice grains with the husk it has to be taken in the sense of तण्डुल i.e. rice grains without husk through लक्षणा. Such usage of this word is found in day to day dealings as शालयो भुज्यन्ते ।

**सिद्धान्तः**, मन्त्राधिकरणोक्तदिशा मन्त्रपदानां दृष्टार्थत्वादिह च धान्यपदस्य तण्डुलप्रकृतिभूतसतुषद्रव्यवाचिनोऽपि लक्षणया तद्विकृतिभूततण्डुलप्रकाशकत्वसम्भवात् ''शालयो भुज्यन्ते'' इति लोकेऽपि लाक्षणिकप्रयोगदर्शनात्समवेतार्थ एवार्थ धान्यशब्दो नादृष्टार्थ इति ।

### इडोपाह्वानमन्त्रे यज्ञपतिशब्दस्यानूहाधिकरणम् (9-1-14)

In the context of दर्शपूर्णमास the statement ''इडोपाहूताः,'' ''अध्वर्यवः उपहूताः'' etc., are found. In the middle य इमं यज्ञमवान् ये च यज्ञपतिमवर्धान् occurs. Here the question is raised whether this statement is intended to convey यज्ञपतिवृद्धि and consequently it is यज्ञसमवेतार्थक or it is merely इडास्तुति and hence it is असमवेतार्थक ।

दर्शपूर्णमासप्रकरणे, ''इडोपहूताः उपहूतेडा उपोस्मान्'' इत्यादीडोपाह्वाननिगदे ''दैव्या अध्वर्यव उपहूताः उपहूताः मनुष्याः, य इमं यज्ञमवान्, ये च यज्ञपतिं वर्धान्'' इति मध्ये श्रूयते । **अस्यार्थः**, ये अध्वर्यवो यज्ञमवान् अवन्ति, एव ये मनुष्या यज्ञपतिं यजमानं वर्धान् वर्धयन्ति, ते ऋत्विजो मनुष्याश्चोपहूता इति । तत्र मध्ये श्रुतमिदं वाक्यं यज्ञपतिवृद्धिप्रकाशनार्थं सत्समवेतार्थकमुतेडास्तुत्यर्थं सदसमेतार्थकमिति **सन्देहः** ।

Pūrvapakṣa : As this statement has एकवाक्यता with इडास्तुतिमन्त्र, it appears to be for इडास्तुति by वाक्यप्रमाण. But by लिङ्ग it is यज्ञपतिवृद्धिप्रकाशन. Though लिङ्ग

is superior to वाक्य if it is taken as स्तुतिरूप then it it will be अदृष्टार्थ. But if it is taken as for यजमान वृद्धिप्रमशन then as it will result in यजमानसंस्कार and will be दृष्टार्थ. Hence it has to be taken as यज्ञसमवेतार्थम्.

**पूर्वपक्षस्तु,** इडास्तुत्यर्थमन्त्रैक वाक्यतयेडास्तुत्यर्थत्वमस्य वाक्यस्य प्रतीयते । लिङ्गेन च यज्ञपतिवृद्धिप्रकाशनार्थता । वाक्याच्च लिङ्गं बलवत् । स्तुतिरूपत्वे अदृष्टार्थत्वम् । यजमानवृद्धिप्रकाशनार्थत्वे तु यजमानस्योत्साहजननेनोत्साहरूपयजमानसंस्कारहेतुत्वेन दृष्टार्थत्वं लभ्यते । अतः ''स्योनं ते'' इति मन्त्र इव लिङ्गबलाद्वाक्यबाधेन पूर्वत्र धान्यशब्दवत्समवेतार्थमिदं वाक्यमिति ।

Siddhānta : points out that though लिङ्ग is superior to वाक्य the statement इडोपहूत इति इडाम् आह्वयामि is प्रत्यक्षवचन. This is superior to लिङ्ग. The entire इडानिगद is meant for इडोपाह्वान. The statement ये यज्ञपतिं etc., occurs in the middle of it. Hence it is एकवाक्य and इडोपाह्वानशेष. Therefore it has to be taken as meant for इडास्तुति only.

**सिद्धान्तस्तु** सत्यं वाक्यात् लिङ्गं बलीय इति । तथापीह ''इडोपहूतेति'' ''इडामाह्वयामि'' इति प्रत्यक्षवचनेन लिङ्गादपि बलवता कृत्स्नस्य इडानिगदस्येडोपाह्वाने विनियोगात् ''ये यज्ञपतिम्'' इति वाक्यस्यापि तन्मध्यगतस्य तदेकवाक्यतयेडोपाह्वानशेषतया इडास्तुत्यर्थत्वमेव युक्तम् । इडाप्रकरणञ्चैवं सत्यनुगृहीतं भवति ।

### प्रहरणकरणसूक्तवाके यजमानशब्दस्य ऊहाधिकरणम् (9-1-15)

At दर्शपूर्णमास the मन्त्र, अयं यजमानोऽसौ आयुराशास्ते is a मन्त्र for प्रस्तर प्रहरण. Here the question is raised whether for the word यजमान, ऊह is to be made in the विकृति or not.

दशपूर्णमासयोः ''सूक्तवाकेन प्रस्तरं प्रहरति'' इति प्रस्तरप्रहरणकरणत्वेन विनियुक्तसूक्तवाकमन्त्रे श्रूयते ''अयं यजमानोसावायुराशास्ते'' इति । तत्र यजमानशब्दः किं विकृतावूहनीयो वा न वेति **सन्देहे,**

Pūrvapakṣka : This statement viz., यजमानः आयुराशास्ते occurs in the middle of सूक्तवाकमन्त्र. Therefore it is एकवाक्य with that. Hence it cannot have विनियोग



separately in respect of आयुराशासन. Therefore it is meant for stuti only. In the case of सत्र that has अनेकयजमानs if आयु etc., is solicited for one यजमान it applies to all यजमानs. Therefore there is no need of ऊह for the word यजमानः as यजमानाः ।

प्रस्तरप्रहरणाङ्गसूक्तवाकमन्त्रमध्यपतितस्य ''यजमानः आयुराशास्ते'' इत्येतस्य तदेकवाक्यतापन्नस्य पृथगायुराशासने विनियोगायोगाद्यज्ञपतिविशिष्टवृद्धिरिव यजमानसम्बद्धा आयुरादयः स्तुत्यर्थत्वेन वाच्या इत्यनेकयजमानके सत्रे एकस्मिन् यजमाने कीर्तिते तादृशायुरादिकीर्तनसिद्धेः ''यजमाना आयुराशासते'' इति नोहितव्यमिति **प्राप्ते**

Siddhānta : सूक्तवाक is an auxiliary by conveying सूक्तवाक्यसाध्य प्रहरणकर्तृफलप्रकाशन. Hence in अनेकयजमानकसत्र if such फलप्रकाशन is made with reference to only one यजमान then the मन्त्र will be an auxiliary only for him and not for others. Hence for realizing the फल for all ऊह has to be made as यजमानाः आयुराशास्ते ।

**सिद्धान्तः,** तृतीयाविभक्त्या सर्वोऽपि सूक्तवाकः प्रहरणाङ्गं विज्ञायमानः क्रियां तत्सम्बन्धिनश्च प्रकाशयन् क्रियाङ्गं भवतीति तन्मन्त्रे प्रकाश्या अग्न्यादयो यथा तत्क्रियासाधनीभूतदेवतात्वेन कल्प्यन्ते, तथा आयुरादिकमपि क्रियासाध्यफलत्वेन, कल्पनीयमेवेति सूक्तवाकस्य स्वसाध्यप्रहरणकर्तृफलप्रकाशनद्वारैव करणत्वमित्यनेकयजमानकसत्रे सूक्तवाकेन कस्यचित्सम्बन्धिनः फलस्य प्रकाशने तं प्रत्येव मन्त्रः करणं स्यात् । नान्यान् प्रतीत्यन्येषामपि फलसिद्धये ''यजमानाः आयुराशासते'' इत्यूहितव्यमिति ।

### सुब्रह्मण्याह्वाननिगमे हरिवच्छब्दस्य अनूहाधिकरणम् (9-1-16)

At ज्योतिष्टोम there is a निगद, इन्द्र आगच्छ, हरिव आगच्छ etc., for आह्वान of सुब्रह्मण्य. This निगद is brought to अग्निष्टुत् याग by अतिदेश. In that याग for the उपस्थान hymn in the statement आग्नेयी सुब्रह्मण्या the word इन्द्र is replaced by अग्नि as अग्ने आगच्छ. Here the question is raised whether the addressing words such as हरिव, मेष, गौरवास्कान्दिन् etc. which are the adjectives of इन्द्र should be substituted by the appropriate adjectives of Agni or not.

ज्योतिष्टोमे सुब्रह्मण्याह्वानार्थो निगदः ''इन्द्र आगच्छ । हरिव आगच्छ । मेधातिथेर्मेष । वृषणाश्वस्य मेने । गौरावस्कन्दिन् । अहल्यायै जार'' इति पठ्यते । सोऽयं निगदोऽग्निष्टुन्नामकयागे चोदकेनातिदिष्टः । तत्र ''आग्नेयी सुब्रह्मण्या'' इति वचनादिन्द्रोपस्थानेऽग्निपदं प्रक्षिप्यते ''अग्न आगच्छ'' इति । तस्मिन्निगदे हरिव इत्यादिसम्बुद्ध्यन्तेन्द्रविशेषणान्यप्यग्न्यनुगुणविशेषणतयोह-नीयान्युत नेति सन्देहे

Pūrvapakṣa : says that हरिव etc. adjectives are suitable adjectives for इन्द्र. Therefore इन्द्र is conveyed by the मन्त्र along with the adjectives. Therefore the adjectives are also समवेतार्थ. Hence in the विकृतियाग the appropriate adjectives of अग्नि have to be substituted.

''पूर्वपक्षापरपक्षौ वा हरी'' इत्यादिव्याख्यानबलात् हरिव इत्यादिविशेषणानामिन्द्रे सम्भवेन तद्द्वारेणैवेन्द्रः प्रकृतौ प्रकाश्य इति समवेतार्थकत्वाद्विशेषणानां पूर्वत्र यजमानपदमिव विकृतौ विशेषणान्यप्यग्न्यनुगुणतयोहनीयानीति प्राप्ते

Siddhānta : The गुणs conveyed by the adjectives are not actually present in इन्द्र. The हरिव आगच्छ etc., ब्राह्मणवाक्य is merely a स्तुति. As इन्द्र himself is praised with the गुणs actually not present in him अग्नि also may be conveyed with the same guṇas. Hence substitution by other appropriate गुणs is not necessary.

**सिद्धान्तः**, स्यादेवमिन्द्रे यद्येते गुणाः स्युः । न चैवम् । तत्सत्वे मानाभावात् । ''हरिव आगच्छ'' इति ''पूर्वपक्षापरपक्षौ वा हरी । ताभ्यां ह्येष सर्वं हरति'' इत्याद्येतन्निगदव्याख्यानपरं ब्राह्मणवाक्यं स्तुतिपरं सन्नार्थविवक्षां साधयितुमलमितीन्द्रोऽप्यविद्यमानगुण एव प्रकाश्य इत्यग्निरपि तैरेव गुणैः सम्बोद्ध्य इत्यनूह इति ।

## सोमक्रयसाधनकाण्डे 'तस्यै शृतम्' इत्याद्यनूह्याधिकरणम् (9-1-17) वर्णकान्तरम्

At Jyotiṣṭoma with reference to एकहायनी i.e. one year old calf, the mantra इयं गौः सोमक्रयणी तया ते क्रीणामि is stated. Further it is also stated that तस्यै शृतं, तस्यै पयः तस्यै दधि etc., This मन्त्र is brought to साधस्क याग by अतिदेश. At that याग another type of cow is prescribed by the statement त्रिवत्सः साण्डः सोमक्रयणः. Here in the



place of इयं गौः in the earlier mantra अयं गौः has to be substituted. Here the question is raised whether तस्यै शृतं तस्यै पयः etc. in the following statement the word तस्यै is substituted by तस्मै in masculine gender or not is raised.

ज्योतिष्टोमे एकहायन्यां मन्त्रः श्रूयते ''इयं गौः सोमक्रयणी । तया ते क्रीणामि'' इति । ''तस्यै शृतं, तस्यै पयः, तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चनम्'' इत्यादि । स च साद्यस्क्रनामके यागेऽतिदिष्टः । तत्र च ''त्रिवत्सः साण्डः सोमक्रयणः'' इत्यन्यो गौर्विहितः । तत्र ''इयं गौः सोमक्रयणी'' इति पदस्थाने ''अयं गौः सोमक्रयणः । तेन ते क्रीणामि'' इति पुल्लिङ्गतयोहे पूर्वभागस्य सिद्धे सति ''तस्यै शृतम्'' इत्याद्युत्तरभागेऽपि ''तस्मै शृतम्'' इति पुल्लिङ्गतयोहनीयम्, उत नेति सन्देहे,

Pūrvapakṣa : argues that the mantra conveys एकहायनी with the attributes शृत etc. Hence these are समवेतार्थ in the प्रकृतियाग. Hence at the साद्यस्कयाग also these are समवेतार्थ. Hence the मन्त्र be employed by observing व्यूह of तस्यै as तस्मै.

एकहायन्या सोमक्रयसमये शृतादेरभावेऽपि त्रिचतुरवर्षोत्तरकाले सम्भवद्भिः शृतादिगुणैरेक-हायन्याः प्रकाशने दृष्टार्थत्वलाभात्प्रकृतौ समवेतार्थत्वात्साण्डे कदाचिद्धेनूत्पादनसम्भवेन तद्द्वारा क्षीरादिनिमित्ततासम्भवाद्विकृतावपि समवेतार्थत्वादूहेनैव साद्यस्क्रेऽपि प्रयोगो मन्त्रस्येति प्राप्ते

Siddhānta : points out that शृत etc., गुणs are not समवेतार्थ at the प्रकृतियाग itself, since these are not present in एकहायनी at the time of सोमक्रय. Therefore these are only स्तुत्यर्थ but not समवेतार्थ in the प्रकृति itself. Hence in the विकृति also these are not समवेतार्थ. Therefore there is no need to make ऊह.

**सिद्धान्तः**, स्यादेवं, यदि प्रकृतौ समवेतार्थोऽग्रेतनभागः स्यात् । न चैवम् । क्रयवेलायां शृतादेरभावात् । कालान्तरे शृतादिभावोऽपि न निश्चेतुं शक्यते । मध्ये मृतेरपि सम्भवात् । अत एकहायन्यामपि स्तुत्यर्थत्वेनासमवेतार्थतया विकृतावप्यनूहेन यथाश्रुतस्यैव प्रयोग इति ।

## सारस्वत्यां मेष्यामध्रिगुवचनाभावाधिकरणम् (9-1-18)

At ज्योतिष्ठोम in different संस्थाs सवनीय पशुs are prescribed by the statements आग्नेयमजमग्निष्टोमे आलभते । ऐन्द्राग्न मुक्थे द्वितीयम् । ऐन्द्रं वृष्णिं षोडशिनि तृतीयम्,

सारस्वतींमेषीमतिरात्रे चतुर्थी. Here the question is raised whether this अध्रिगुप्रैष वचन which is prescribed for the first three has to be observed for the fourth also or not.

ज्योतिष्टोमे संस्थाभेदेन सवनीयाः पशवः पूर्वपूर्वसाहित्येनोत्तरोत्तरवृद्ध्या नाना श्रूयन्ते । ''आग्नेयमजमग्निष्टोम आलभते । ऐन्द्राग्नमुक्थ्ये द्वितीयम् । ऐन्द्रं वृष्णिं षोडशिनि तृतीयम् । सारस्वतीं मेषीं चतुर्थीमतिरात्रे'' इति । तत्र ''दैव्याः शमितारः आरभध्वम् । उत मनुष्याः । उपनयत मेध्यादुर आशासाना मेघपतिभ्यां मेघं । प्रास्मा अग्निं भरता'' इत्यध्रिगुशब्दितशमितॄन् प्रत्युच्यमानमध्रिगुप्रैष-वचनमिदमजादिषु त्रिषु प्रवर्तमानं मेष्यां चतुर्थ्यामपि प्रवर्तते, अथ नेति सन्देहे,

Pūrvapakṣa : argues that पशुधर्मs are common to all पशुs. The संस्थाs are also enjoined by similar injunction. Hence अध्रिगु प्रैष वचन applies to मेषी also. It is true that मेषी is not in masculine gender. However, the word पशु may be taken by अध्याहार.

कुतः? पशुधर्माणां सर्वपशुसाधारण्यात्संस्थानामपि समानविधानत्वात्सर्वनाम्नः सन्निहितपरत्वेन प्रकरणसन्निधापितमेषीपरत्वस्याप्यध्रिगुवचनान्तर्गतास्मैशब्दस्य न्याय्यत्वात् । न च पुल्लिङ्गविरोधः । पशुशब्दाध्याहारेण पूर्वत्र त्रिवत्से साण्डे ''तस्यै शृतम्'' इत्यादेरिव ''प्रास्मै पशवः'' इति मेष्या-मप्युक्त्यविरोधादिति ।

Siddhānta : points out that the word पशु does not occur here. The expression तस्मै applies to अज etc. three पशुs only which are actually present at the time of प्रयोग. Hence as the word मेषी is not in masculine gender अध्रिगु प्रैष वचन does not apply to it. There is no ground to bring the word पशु here by अध्याहार.

सिद्धान्तस्तु, स्यादेवं पशुशब्दश्रवणे मेष्यामपि प्रवृत्तिर्वचनस्य । न चात्र पशुशब्दोऽस्ति । प्रयोगवेलायां प्रत्यक्षसन्निहिताजादिपरत्वेन ''अस्मै'' इति शब्द उपपन्नः सन्न मेष्यां स्त्रियां लिङ्ग-विरोधात्प्रवर्तते । कल्पकाभावान्नाध्याहार इति ।

### यज्ञायज्ञीये गिरापदस्य स्थाने इराशब्दस्यैव कर्तव्यताधिकरणम् (9-1-19)

At ज्योतिष्टोम the statement यज्ञा यज्ञीयेन स्तुवीत occurs. The यज्ञायज्ञीय refer to



the साम that has to be employed for the hymn that contains the expression यज्ञायज्ञ. In this hymn the word गिरा occurs as यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे. Here it is also stated that न गिरे गिरो ति ब्रूयात् । ऐरं कृत्वा उद्गायेत् । The expression ऐरं means गकारलोपेन इराशब्दं कृत्वा गेयम्. Here the question is raised whether the substitution of the word गिरा by the word इरा is वैकल्पिक or not.

ज्योतिष्टोमे ''यज्ञायज्ञीयेन स्तुवीत'' इति श्रुतम् । यज्ञायज्ञीयं नाम यज्ञायज्ञशब्दोपेतायामृच्युत्पन्नं साम । तस्यामृचि गिराशब्दः पठ्यते ''यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे'' इति । तत्रेदं वचनं श्रूयते ''न गिरा गिरेति ब्रूयात् । ऐरं कृत्वोद्गायेत्'' इति । ऐरमिति प्रज्ञादित्वात्स्वार्थेऽण् प्रत्ययः । गकारलोपेन इराशब्दं कृत्वा गेयमिति । तत्र गिरापदस्थानापत्तिरिराशब्दस्य किं वैकल्पिकी, किं वा नित्येति **सन्देहः ।**

Pūrvapakṣa : argues that by the statement ऐरं कृत्वा it is only stated that in the place of गिरा the word इरा be substituted. But stotra सम्बन्ध or gāna सम्बन्ध is not stated. It has to be envisaged on the ground that the word गिरा is a part of यज्ञायज्ञीय सामाश्रयमन्त्र. Both the words गिरा and इरा are enjoined as part of स्तोत्र. Hence, the use of the words गिरा or इरा in the mantra is वैकल्पिक.

**पूर्वपक्षस्तु,** ''ऐरं कृत्वा'' इतीरापदस्यात्र गिरापदस्थानापत्तिमात्रं ''एरं कृत्वा'' इति ब्राह्मणेन विधीयते । न तु स्तुवीतेत्युक्तस्तोत्रसम्बन्धो गानसम्बन्धो वोच्यते । स्तुवीतेत्युक्तस्तोत्रप्रकरणात्तु स्तोत्राङ्गत्वमिरापदस्य वाच्यम् । यज्ञायज्ञीयगानसाध्यस्तोत्रं प्रत्यङ्गत्वस्य तादृशगानसम्बन्धं विना अनुपपत्त्याऽर्थात्प्राप्तस्तत्साधनभूतयज्ञायज्ञीयगानसम्बन्धः ''उद्गायेत्'' इत्यनूद्यते । गिरापदस्याग्निष्टोम स्तोत्रक्रमपठितयज्ञायज्ञीयसामाश्रयमन्त्रैकदेशतयाऽङ्गत्वं कल्प्यम् । न साक्षात्तद्द्वारा च गानसम्बन्धः । एवञ्च ''साङ्गप्रधानकेन यज्ञायज्ञीयेन स्तुवीत'' इति प्रत्यक्षप्रयोगवचनेन गिरेरापदयोर्द्वयोरपि स्तोत्राङ्गतया विधिः समान इति कदाचिद्गिरापदं कदाचिदिरापदमिति वैकल्पिकी स्थानापत्तिरिरापदस्येति ।

Siddhānta : points out that if the statement ऐरं कृत्वा is taken as conveying only the replacement of the word गिरा by इरा then the expression उद्गायेत् becomes purposeless. Hence the गानसम्बन्ध for the मन्त्र with the word इरा is enjoined here. In the case of the word गिरा there is no expressed statement

enjoining गानसम्बन्ध for it. It has to be envisaged by क्रमप्रमाण. Hence the expressions गिरा and इरा are not on par. Hence there is no विकल्प. The मन्त्र has to be sung by using the word इरा only.

**सिद्धान्तस्तु,** यदि ''ऐरं कृत्वा'' इति वाक्यमिरापदस्य गिरापदस्थानापत्तिविधिमात्रपरं तदा ''उद्गायेत्'' इत्यंशो व्यर्थः । ''ऐरं कुर्यात्'' इत्येव पूर्तेः । अतः श्रुत्योद्गानसम्बन्धविधिरेवायम् । प्रकरणाच्चोद्गानस्य स्तोत्रसाधनता । गिरापदस्य तु सामाश्रयमन्त्रैकवाक्यतया गानसम्बन्धः । स्तोत्रप्रकरणे पठ्यमानर्चां मध्ये यज्ञायज्ञीयसामाश्रयो मन्त्रोऽग्निष्टोमस्तोत्रक्रमे पठ्यत इति क्रमप्रमाणेन मन्त्रस्य स्तोत्राङ्गत्वात्तदेकदेशगिरापदस्यापि क्रमप्रमाणेन तदङ्गत्वमवसेयमिति क्रमापेक्षया श्रुति-प्रकरणयोर्बलवत्वाद्गिरापदस्याऽङ्गानमात्रत्वेन, विधेरभावादविहितस्याङ्गत्वायोगात् ''गिरेति ब्रूयात्'' इति विधिकल्पनाद्वाराऽङ्गत्वस्य कल्प्यत्वात् । इरेत्यस्य तु विधेः प्रत्यक्षत्वेनाङ्गत्वस्याकल्प्यतया लाघवाच्च तुल्यबलत्वाभावेन प्रयोगवेलायां गिरापदबाधेन तत्स्थाने नित्यतया इरापदमेवोक्त्वा गातव्यमिति ।

### इराशब्दस्य प्रगीतताधिकरणम् (9-1-20)

In the earlier adhikaraṇa, it was stated that the word गिरा is substituted by the word इरा. Here the question is raised whether this substituted word be recited as प्रगीत or अप्रगीत.

नियतमिरापदमिति स्थिते तत्किं प्रगीतमेव प्रयोक्तव्यम्, उताप्रगीतमिति **संशयः** ।

Pūrvapakṣa : argues that it has to be recited as अप्रगीत. Because the word ऐर is formed by adding तद्धित suffix to the word इरा. Without any reference to gīta. Therefore it has to be recited as अप्रगीत only.

**पूर्वपक्षस्तु,** अप्रगीतमेव प्रयोक्तव्यम् । ऐरमिति केवलादेवाप्रगीतादिराशब्दात्तद्धितस्योत्पत्ते-रवगमात् । अन्यथा प्रगीतात्तद्धितोऽयमित्यङ्गीकृतौ आयिरीयमिति निर्देशः श्रुतौ स्यात् । न चैवं श्रुतौ निर्देशोऽस्ति । एरमित्येव श्रवणात् । अतोऽप्रगीतमेवेरापदं प्रयोज्यमिति ।

Siddhānta : points out that the word इरा is placed in the place of the word गिरा. When something is placed in the place of some other thing, the



auxiliaries of that have to be applied to this also. Therefore, the word इरा has to be recited as प्रगीत only.

**सिद्धान्तस्तु,** गिरापदस्थाने हीदमिरापदं विधीयते । अन्यथा गिरापदस्येरापदेनानिवृत्त्या ''न गिरा गिरेति ब्रूयात्'' इति तत्प्रतिषेधानुवादोऽयुक्तः स्यात् । तथा च धर्मस्यार्थकृतत्वात् द्रव्यगुण-**विकारेत्यादौ** वक्ष्यमाणदिशा तत्स्थानापन्नस्य तद्धर्मलाभाद्गिरापदस्येव प्रगीतस्यैवेरापदस्य प्रयोगः ।

इति नवमाध्यायस्य प्रथमः पादः

## नवमाध्यायस्य द्वितीयः पादः

### गीतीनां सामनामताधिकरणम् (9-2-1)

In this adhikaraṇa, the question whether the मन्त्र sung is सामन् i.e. प्रगीतो मन्त्रः साम or the very singing tune is सामन् गीतिरेव साम is raised.

Pūrvapakṣa : states that those who are engaged in teaching and learning of vedas say that the मन्त्र sung is साम and the statement ऋचः सामानि यजूंषि clearly states मन्त्र itself is सामन्. Since the word साम is used on par with ऋक् and यजुस्.

Siddhānta : points out that the first adhikaraṇa of the second section of the seventh chapter it is already established that the very musical tone is साम. गीतिरेव सामेति सप्तमस्य द्वितीयपाद आद्यनये उक्तम् ।

### ऊहग्रन्थस्य पौरुषेयत्वाधिकरणम् (9-2-1) द्वितीयवर्णकम्

In respect of साम there are three works viz., (1) योनिग्रन्थ i.e. source work (2) ऊह ग्रन्थ (3) उत्तराग्रन्थ. That portion of the work in which ऋक्s that are sung in different सामन्s are compiled is designated as योनिग्रन्थ. It is also called छन्दस्. That portion of the work in which groups of three ऋक्s sung with separate सामन्s is designated as ऊहग्रन्थ. The portion in which sūktas

consisting of three ऋक्s are stated, is designated as उत्तराग्रन्थ. Here the question whether ऊहग्रन्थ is पौरुषेय or अपौरुषेय is raised.

सामगानामस्ति ग्रन्थत्रयं योनिग्रन्थः ऊहग्रन्थः उत्तराग्रन्थ इति । **योनिग्रन्थो** नाम नानाभूतानां साम्नां योनिभूता ऋचो यत्रोक्ताः स उच्यते । छन्द इत्यप्युच्यते स ग्रन्थः । **ऊहग्रन्थस्तु**, एकैकसाम्ना प्रगीतं त्र्यृचं त्र्यृचं यत्र ग्रन्थे स उच्यते । **उत्तराग्रन्थस्तु** त्र्यृचात्मकानि सूक्तानि यत्राम्नातानि स उच्यते । तत्राद्यछन्दोगतऋग्योनिरूहग्रन्थः किं पौरुषेयः, उतापौरुषेय इति सन्देहे,

Pūrvapakṣa : argues that this is also अपौरुषेय. He gives three reasons in support of it. (1) on अनध्ययन days these are not sung (2) no author is remembered. (3) Vedic teachers call it as Veda.

अनध्यायवर्जनेन, कर्तृरस्मरणेनाध्यापकानां वेदत्वप्रसिद्धया च वेदसमानयोनिग्रन्थ सदृशत्वादूहग्रन्थोऽप्यपौरुषेय एवेति **प्राप्ते**

Siddhānta : points out that in ऊह a word conveying one meaning is substituted by another word that conveys another meaning. This will not be possible if it is considered as अपौरुषेय. With reference to सामन्s अतिदेश is also enjoined. Therefore ऊहग्रन्थ is पौरुषेय. The author is not remembered because the making ऊहs started long ago. These are not sung of अनध्ययन day because these have to be sung with ऋक्s.

**सिद्धान्तः**, अर्थान्तरे कृतस्यार्थान्तरे कृतिरूपोहत्वप्रसिद्धेरपौरुषेयत्वेऽनुपपत्तेः ''यद्योन्यां तदुत्तरयोर्गायति'' इत्यतिदेशविद्धयनुपपत्तेश्च पौरुषेय एवोहग्रन्थः । कर्तुरस्मरणन्तु चिरकालत्वाद्वाऽनादराद्वोपपन्नम् । अनध्यायवर्जनादिनियमस्तु साम्नां तत्तदाधारभूतानामृचाञ्च वेदत्वाद्युक्त इति ।

**साम्नः ऋक् संस्कारकर्मताधिकरणम्** (9-2-2)

Here, the question is raised whether रथन्तर etc सामन्s are प्रधान कर्म or गुणकर्म since, these are meant for the संस्कार of manifesting the sylables of the ऋक्s.

रथन्तरादिसामानि किमृगपेक्षया प्रधानकर्माण्युत ऋगक्षराभिव्यक्तिरूपसंस्कारहेतुतया गुणभूतानीति सन्देहे,



Pūrvapakṣa : argues that if these are considered as गुणकर्म then these have to be sung at the time of sacrifice only. However these are sung outside the sacrifice also. Hence सामगान is प्रधानकर्म.

A प्रधानकर्म is required to have its own result. Hence, applying विश्वजित् न्याय a फल has to be envisaged for सामगान.

ऋगक्षराभिव्यञ्जकतया ऋक्संस्कारकत्वेन ऋचं प्रति गुणकर्मत्वे क्रतुमध्य एव प्रयोगापत्या क्रतोर्बहिरपि सामाध्ययनं न स्यात् । न चान्यदा कृतं साम कर्मकाले प्रयुज्यमानऋगक्षराभिव्यञ्जकम् । तदानीमेव तस्य नाशात् । तत्संस्कारकत्वे वा क्रतुमध्ये पुनः सामोक्तिर्व्यर्था स्यात् । संस्कृतस्य पुनः संस्कारायोगात् । अतो बहिर्गानस्य विश्वजिदादिवत्फलकल्पनात्प्रधानं कर्म सामगानम् । कर्ममध्ये गानन्तु प्रयाजादि वदारादुपकारकमिति **प्राप्तम्** ।

Siddhānta : The सामगान is गुणकर्म. Since it is employed to manifest the syllables of the ऋक्s. Since ऋक् अक्षरs are an auxiliary of ज्योतिष्टोम the फल of ज्योतिष्टोम itself is the फल for the सामगान.

The study of the सामन् outside the sacrifice is meant to practice it to employ the same at the sacrifice. It is not an independant programme. Such practice is found in the case of drawing a picture of a chariot before it is actually constructed. Another instance of such practice is performing a mock sacrifice (for the sake of practice) before the actual performance.

(1) यथा भूमिस्थितो भूमौ रथमालिख्य अभ्यासं करोति ।

(2) यथा वा शिष्यः शुष्केष्टया प्रयोगपाटवं सम्पादयति ।

**सिद्धान्तस्तु**, ''आज्यैः स्तुवते'' ''यज्ञायज्ञीयेन स्तुवीत'' इति फलवज्ज्योतिष्टोमाङ्गत्वेन श्रुतस्तोत्रसाधनीभूतऋगक्षराभिव्यक्तिरूपदृष्ट प्रयोजनसम्भवेनादृष्टकल्पनानुपपत्तेः ऋगक्षराभिव्यञ्जकतया ऋचं प्रति गुणकर्मैव गानम् । न प्रधानकर्म । बहिरध्ययनन्तु, अनभ्यस्तस्य कर्मकाले प्रयोगायोगाद्भूमिरथिकशुष्केष्टिन्यायेनाभ्यासार्थं भविष्यति । यथा भूमिरथिको भूमौ रथमालिख्याभ्यासं करोति । यथा वा शिष्यः शुष्केष्टया प्रयोगपाटवं सम्पादयति तथेति । फलं तु व्यक्तम् ।

### त्र्यचे प्रति ऋचं साम्नः समापनाधिकरणम् (9-2-3)

It is stated that एकं साम त्र्यचे क्रियते स्तोत्रियम्। साम is a kind of संस्कार for ऋक्s. Here a question is raised whether putting the साम on the unit of three ऋक्s the संस्कार is to be observed or the entire sāma has to be recited for each of the three ऋक्s.

''एकं साम त्र्यचे क्रियते स्तोत्रीयम्'' इति श्रूयते। साम च ऋचः संस्कारकमित्युक्तम्। तत्र किमेकं साम त्रेधा विभक्तं सदेकैकांशेनैकैकामृचं संस्करोति, किं वा प्रत्यृचं समस्तं साम परिसमाप्तं संस्कारकमिति सन्देहे,

Pūrvapakṣa : states that by the statement एकं साम क्रियते यत् तत् त्रिचा। त्रित्व is enjoined as an auxiliary of साम. If this त्रित्व of सामन् has to be observed for three ऋक्s as संस्कार naturally it has to be observed for the three units separately but not entire साम for each ऋक्.

''एकं साम क्रियते इति यत् तत् त्र्यृचे'' इति सामानुवादेन त्र्यृचगतं त्रित्वमङ्गतया विधीयते। तच्च त्रित्वस्याङ्गत्वमेकस्य साम्नस्तिसृभी ऋग्भिर्निष्पाद्यत्व एव निर्वहतीत्येकैकांशेनैव ऋक्त्रयसंस्कारकत्वम्। न त्वेकैकस्यामृचि सामस्त्येन। तथात्वे ''एकं साम त्र्यृचेऽभ्यस्यते'' इत्यर्थसम्पत्त्या क्रियत इत्यस्याभ्यासे लक्षणा स्यादिति प्राप्तम्।

Siddhānta : In the statement एकं साम, त्र्यचे क्रियते स्तोत्रियम् the साम that as an auxiliary of स्तोत्र is enjoined for three ऋक्s. The ऋक्s are the auxiliaries of स्तोत्र separately. Therefore सामगान has to be observed for each ऋक्.

**सिद्धान्तस्तु,** एकं सामेति वाक्ये स्तोत्रीयं स्तोत्रसाधनमेकं सामेति स्तोत्राङ्गसामानुवादेन तस्य त्र्यृचसम्बन्धो बोध्यते। स्तोत्राङ्गत्वञ्च साम्नो न साक्षात्। निराश्रयस्य तदयोगात्। किन्तु स्तोत्रसाधनऋगक्षरव्यक्तिद्वारा। ऋचां तु प्रत्येकमेव स्तोत्राङ्गत्वम्। न सङ्करः। एवञ्च क्रमप्रकरणसहितेन लिङ्गेन स्तोत्राङ्गतया विहितामृचमुद्दिश्यानेन वाक्येन विधीयमानं त्रित्वं स्तोत्रस्यैवाङ्गतया विधीयते। ऋगुद्देशेन त्रित्वविधानेन च ऋक्संस्कारकस्य साम्नः प्राप्तं तिसृषु प्रत्येकं गानमभ्यासरूपं ''क्रियते'' इत्यनेन लक्षणयाऽनूद्यते। अनुवादत्वादेव च लक्षणा न दोषः। तस्मात्प्रत्यृचं परिसमाप्य त्र्यृचे त्रिर्गेयमेकमेव सामेति।



### समास्वेव त्रिषु ऋक्षु गानाधिकरणम् (9-2-4)

In the earlier adhikaraṇa, it was stated that सामगान be made for three ऋक्s. Here the question is raised whether this should be made for the three ऋक्s that have the same metre or it can be made for the three ṛks that are in different metres.

पूर्वत्र ऋक्त्रये गानमित्युक्तम्। तत्र किं तिसृषु समछन्दस्कासु गानमुत विषमछन्दस्कास्वपीति **सन्देहे,**

Pūrvapakṣa : states that since it is not particularly stated that the three ṛks to be in the same metre there is no need to restrict the metres of the three ṛks.

समास्वेवेत्यत्र नियामकाभावादनियम इति प्राप्ते,

Siddhānta : points out that if three ṛks of different metre are taken there will be the drawback of शर i.e. himsā, and लेश i.e. shortage. This is explained as under. If the sāma is sung on a ṛk of a longer metre stated in the योनिग्रन्थ and if the other two ṛks are of shorter metre then the shorter ṛks will be manifested by a portion of the साम only and the remaining portion of साम will be without आश्रय. This is himsā. Similarly if the ṛk taken from योनिग्रन्थ is of a smaller metre and the later two ṛks are of longer metre then the सामन् will be short and will not be able to cover the remaining portion of the ṛk. Hence it is concluded that the three ṛks be of the same metre.

शरलेशपरिहारार्थं समछन्दस्कास्विति सिद्धान्तः। शरो हिंसा। लेशोऽल्पत्वम्। यद्यधिकछन्दस्कायां योनावुत्पन्नं साम न्यूनछन्दस्कयोरुत्तरयोगयित्तदा सामैकदेशेनैव तादृशऋगक्षरव्यक्तिपूर्तेरवशिष्टः साम्नो भाग आश्रयाभावेन हिंस्येत नश्येदित्यर्थः। यदि योनेरधिकछन्दस्कयोरुत्तरयोगयित्तदा साम्नोऽल्पत्वादवशिष्टऋग्भागः सामहीनः स्यात्। अतस्तद्दोषद्वयनिरासाय समास्वेव गानं कार्यमिति।

### उत्तरयोः गायति इत्यत्र उत्तराग्रन्थसमधीतयोः ऋचोर्ग्रहणाधिकरणम् (9-2-5)

In the योनिग्रन्थ i.e. छन्दोग्रन्थ and उत्तराग्रन्थ the ṛks which have to be sung

with sāman are stated. In छन्दोग्रन्थ the ṛks which are to be sung in रथन्तर, बृहत् etc., सामन् are stated. In उत्तराग्रन्थ after stating a ṛk that has to be sung with रथन्तर सामन् two ṛks without particularly mentioning any सामन् are stated. Similarly stating the ṛks that are to be sung with बृहत् etc., सामन्ऽ two ṛks without mentioning particular sāmans are stated. In this context the statement यद्योन्यां तदुत्तरयोर्गायति occurs. Here the question is raised whether the word उत्तरा refers to the two ṛks that occur in the योनिग्रन्थ only after the first ṛk or the two ṛks that are to be selected from उत्तराग्रन्थ.

सामगानां छन्दोनामके ग्रन्थे उत्तराग्रन्थे च सामाश्रयभूता ऋचः पठिताः। छन्दोग्रन्थे रथन्तर-बृहदादिसाम्नां योनिभूता ऋच एव पठिताः। उत्तराग्रन्थे तु रथन्तरयोनिं ''अभि त्वा शूर'' इत्यृचं पटित्वा साम्नः कस्यचिदप्ययोनिभूते ''न त्वा वाम्'' इत्यादिके द्वे ऋचौ पठिते। एवं बृहदादिसाम्नो योनिपाठानन्तरं द्वे द्वे ऋचावयोनिभूते पठिते। एवं स्थिते सति ''यद्योन्यां तदुत्तरयोर्गायति'' इत्यत्रोत्तराशब्दः किं योन्युत्तरपरः, उतोत्तराग्रन्थस्थपर इति **सन्देहे,**

Pūrvapakṣa : argues that since the word उत्तरा is a sambandhi शब्द the two ṛks that occur in the योनिग्रन्थ after the first ṛk i.e. to be sung with रथन्तर सामन् the two ṛks that are stated to be sung with बृहत् सामन् also have to be sung with रथन्तर सामन्. In the उत्तराग्रन्थ, after the ṛk which is to be sung with रथन्तर two ṛks 'नत्वा वां' etc. are stated without reference to any सामन्. This results sometimes in the recitation of ṛk that are to be sung in बृहत् सामन् in रथन्तर सामन् and sometimes with the two ṛks that are to be sung without any सामन्.

उत्तराशब्दस्य सम्बन्धिशब्दत्वेन पूर्वपठितयोन्युत्तरदेशपठितऋक्पर एवात्रोत्तराशब्दः। तथा च रथन्तरयोनेः परतो बृहदादियोनेः पाठात्तयोः ''त्वामिद्धि हवामहे'' इत्यादिकयोः रथन्तरसाम्नो गानम्। उत्तराग्रन्थे तु रथन्तरयोनेरुत्तरत्र ''न त्वा वाम्'' इत्यादिकयोः पाठात्तत्र गानमिति, कदाचिद्-बृहदादियोनिभूतयोः ऋचोः रथन्तरस्य गानं, कदाचित्तु ''न त्वा वाम्'' इत्याद्युत्तराग्रन्थस्थयो ऋचोर्गानमित्यनियमः। द्वयोरपि रथन्तरयोन्युत्तरत्वात्। एवं च पूर्वत्रोक्तं समास्वेव गानमित्ययुक्तम्। विषमछन्दस्कयोरपि योन्युत्तरयोर्गानस्यावर्जनीयत्वादिति **प्राप्ते**



Siddhānta : points out that though the word उत्तरा is सबन्धि शब्द, here it has to be taken as संज्ञाशब्द of उत्तराग्रन्थ. Hence the two ऋक्ऽs 'नत्वा वा' etc., occuring in उत्तराग्रन्थ only have to be with रथन्तरसामन् but not the two ṛks occuring in योनिग्रन्थ for which बृहत् सामन् is prescribed.

**सिद्धान्तः,** उत्तराशब्दस्य सम्बन्धिशब्दत्वेऽपीह न तस्य ग्रहणम्। उत्तराग्रन्थे सञ्ज्ञाशब्दत्वात्। तस्य निरपेक्षस्य सापेक्षसम्बन्धिशब्दादपि बलवत्वान्निरपेक्षस्यैव ग्रहणमत्रेत्युत्तराग्रन्थस्थयोः ''न त्वा वाम्'' इत्यादिकयोरेव गानमिति।

**अति जगत्यामभ्यस्यमानायां त्रिशोकगानाधिकरणम् (9-2-5) (द्वितीय वर्णकं)**

At द्वादशाह on the fourth day it is stated that त्रैशोकं नाम ब्रह्म साम अतिजगतीषु स्तुवते। This त्रैशोक साम has to be sung for the ऋक् that is in अतिजगती छन्दस् विश्वाः पृतनाः etc. After this two ṛks of बृहती छन्दस् occur. Here the question is raised whether ignoring the two ṛks that are in बृहती छन्दस् two other ṛks that are in अतिजगती छन्दस् be brought here for त्रैशोक सामगान or it could be sung on the ṛks of बृहती metre only though अतिजगती and बृहती are of equal number of syllables.

**द्वितीयवर्णकन्तु,** द्वादशाहे चतुर्थेऽहनि ''त्रैशोकं साम ब्रह्मसामातिजगतीषु स्तुवते'' इति श्रुतम्। तच्च त्रैशोकं नाम साम ''विश्वाः पृतनाः'' इत्यतिजगत्यामुत्पन्नम्। तदुत्तरे द्वे बृहतीछन्दस्के ''नेमिं नमन्ति चक्षसा'' इत्यादिके। तत्र त्यृचे गाने क्रियमाणे सति द्वे बृहत्यावुपेक्ष्य तत्स्थाने द्वे अतिजगत्यावानीय समासु गेयम्, उत बृहत्योरेव विषमछन्दस्कयोर्गेयमिति **सन्देहे,**

Pūrvapakṣa : argues that in the statement अतिजगतीषु स्तुवते the word अतिजगतीषु is in plural. Hence two ṛks that are in अतिजगती metre be brought here, and त्रैशोकसामगान be observed for the ṛks in अतिजगती metre.

''अतिजगतीषु स्तुवते'' इति श्रुतातिजगतीबहुत्वानुग्रहाय अतिजगत्यावन्ये समानीय समास्वेव प्रागुक्तदिशा गानं कार्यम्। अन्यथाऽधिकछन्दस्कायामुत्पन्नस्य त्रैशोकसाम्नोऽल्पाक्षरबृहत्योर्गाने सामैकदेशेनैव तादृशऋगक्षराभिव्यक्त्याऽवशिष्टसामभागस्याश्रयाभावेन हिंसापरपर्यायसंशरशब्दित-विनाशप्रसङ्गादिति **प्राप्ते**

Siddhānta : points out that the ṛks that are stated in उत्तरग्रन्थ and that are in बृहती metre are क्रत्वर्थ. Hence these cannot be ignored. The plural number can be managed by the आवर्तन of अतिजगती Therefore on the basis of the statement उत्तरयो: गायति the two ṛks of बृहती छन्दस् only be sung with त्रैशोक साम.

**सिद्धान्तः**, बृहत्योरुत्तराग्रन्थपठितयोः क्रत्वर्थत्वात्तत्त्यागे तयोरानर्थक्या पातात् । प्रथमाया अतिजगत्या उत्तरयोरिव सप्तकृत्व आवर्तनीयत्वेन तदपेक्षया बहुत्वस्योपपत्तेः "उत्तरयोर्गायति" इति वचनबलाद्विषमास्वेव बृहतीसहितासु गानम् । संशरस्तु वचनबलात्सह्य इति ।

**ब्रहतीपङ्क्तयोरेव प्रग्रथनेन रथन्तरसामगानाधिकरणम् (9-2-6) (प्रथम वर्णकम्)**

At ज्योतिष्टोम a ṛk in बृहती metre has to be sung रथन्तरसामन्. Next to this a ṛk in पङ्क्ति metre occurs. Similarly ṛk in बृहती metre is to be sung with बृहती सामन्. Next to it a ṛk in पङ्क्ति occurs.

In this context it is stated that बृहत् and रथन्तरसामन् are not for the recitation of one ऋक्. Among the three ऋक्s required for it the earlier is of बृहती छन्दस् and the later two are in ककुभ् metre. Here the question is raised whether ignoring the two ṛks in पङ्क्ति metre that occur, two ककुभ् metre ṛks are to be brought from outside or taking the fourth पाद of बृहती metre and joining the ṛk of the पङ्क्ति metre, a ṛk of ककुभ् has to be developed.

ज्योतिष्टोमे रथन्तराख्यं साम "अभि त्वा शूर" इति बृहत्यामुत्पन्नम् । तस्याश्चोत्तरा "न त्वा वाम्" इति पङ्क्तिरेकैव पठिता । तथा बृहदाख्यं साम "त्वामिद्धि हवामहे" इति बृहत्यामुत्पन्नम् । तस्याश्चोत्तरा "स त्वं नश्चित्र वज्रहस्त" इति पङ्क्तिरेकैव पठिता । तत्रैवं श्रूयते "न वै बृहद्रथन्तर-मेकछन्दो, यत्तयोः पूर्वा बृहती । ककुभावुत्तरे" इति । **अस्यार्थः**, द्वन्द्वैकवद्भावः । बृहद्रथन्तराख्यं सामद्वयं एकछन्दस्कं एकछन्दस्कऋगाधारकं न भवति । यस्मात्तयोः साम्नोराश्रयभूतास्वृक्षु पूर्वा बृहतीछन्दस्का । उत्तरे तु द्वे **ऋचौ** ककुप्छन्दस्काविति । तत्र किं पङ्क्तिद्वयं परित्यज्य द्वे द्वे ककुभा-वानेतव्ये, किं वा योनिभूतां बृहतीमुत्तरां पङ्क्तिश्च प्रग्रथ्य ककुभावुत्तरे ऋचावत्रैव सम्पाद्ये इति **सन्देहे,**

Pūrvapakṣa : The word ककुभ् conveys the ṛk of ककुभ् metre only as its primary meaning. When the primary meaning is available it is not proper to adopt the secondary meaning. Therefore two ṛks of ककुभ् metre have to be brought here ignoring the two ṛks in पङ्क्ति.

ककुप्छब्दस्य स्वभावसिद्धककुप्छन्दस्कायामेव मुख्यत्वात्प्रग्रथनसम्पादितककुभोऽमुख्यत्वात् "उत्तरे ककुभौ" इति मुख्यार्थवचनबलात्स्वतःसिद्धककुभावानीय त्यृचे गातव्यं रथन्तरादिसामेति, पूर्वत्रोत्तराग्रन्थपठितऋक्परिग्रहेऽपि नात्र तत्परिग्रह इति **प्राप्ते**



Siddhānta : In the statement पदात्पदं पुनरारभते it is clearly stated that उद्गाता recites the fourth पाद of the बृहती metre again to develop another ṛk. This means that the ककुभ् ṛk has to be developed by प्रग्रन्थन i.e. by joining the fourth pāda of the बृहती ऋक्. Therefore two ṛks of ककुभ् metre need not be brought from outside but the पङ्क्ति metre only that occurs after बृहती ऋक् has to be developed into a ṛk of ककुभ् metre by joining the fourth पाद of the बृहती.

**सिद्धान्तः**, ककुभन्तरानयने तूत्तरत्र पङ्क्तिपाठस्यानर्थक्यापत्तेः, "काकुभः प्रगाथः" इति **कल्पसूत्रकारैः** प्रगाथसञ्ज्ञाकरणात्, तस्याश्च "सोस्यादिरिति छन्दसि प्रगाथेषु" इति सूत्रे "प्रग्रथ्यत इति प्रगाथः" इति **मञ्जर्यामुक्त्या** प्रग्रथननिमित्तत्वात्, "पदात्पदं पुनरारभते" इति वाक्ये "पदं चतुर्थं पादमुद्गाता ऋगन्तरसम्पादनाय पुनरारभते आदत्ते" इति लिङ्गदर्शनाच्च, प्रग्रथनेनात्रैव ककुभौ सम्पाद्ये इति । तदाह **सूत्रे, प्रागाथिकं** प्रग्रथनप्राप्तककुप्सु गानं कार्यमिति ।

**बृहती विष्टारपङ्क्त्योः प्रग्रथनेन रौरवयौधाजय साम्नोः गानाधिकरणम् (9-2-6) (द्वितीय वर्णकम्)**

At माध्यन्दिनसवन three ऋक्s of बृहती छन्दस् be sung with रौरव and यौधाजय सामन्s. In these three ṛks the first is in बृहती metre the next two are in विष्टारपङ्क्ति metre. Here the question is raised ignoring the ṛks of विष्टारपङ्क्ति whether two ṛks of बृहती metre be brought for singing with रौरव and यौधाजय सामन् or by joining a portion of बृहती to ṛks of विष्टारपङ्क्ति, three ṛks of बृहती metre be developed.

माध्यन्दिने सवने "रौरवयौधाजये बार्हते त्र्यृचे भवतः" इति श्रूयते । रौरवाख्यं यौधाजयाख्यञ्च साम बार्हते बृहतीछन्दस्के त्र्यृचे भवत इति **तदर्थः** । तयोः पूर्वा बृहती । उत्तरा विष्टारपङ्क्ति । तत्रोत्तरां

विष्टारपंक्तिमुद्धृत्य स्वतः सिद्धे द्वे बृहत्यावानीय रौरावादी द्वे सामनी गातव्ये, किं वाऽत्रैव बृहती-विष्टारपङ्क्त्योः प्रग्रथनेन बृहतीत्रयं सम्पाद्यमिति **सन्देहे,**

Pūrvapakṣa : argues that as it is expressly stated three ṛks of बृहती metre be sung with these सामन्s it is clear that two ṛks of बृहती metre be brought here ignoring the two ṛks of विष्टारपङ्क्ति metre.

युक्तः पूर्वत्र प्रग्रथनेन ककुब्द्वयसम्पत्तेरनागमः । इह तु विशिष्य ''बार्हते त्र्यृचे भवतः'' इति त्र्यृचपदश्रवणादवश्यं मुख्ये बृहत्यावानेये इति **प्राप्ते**

Siddhānta : points out that this section has the समाख्या प्रगाथ. Therefore, on the ground of समाख्या प्रमाण two बृहती ṛks have to be developed by joining a portion of the ṛk in the बृहती. With the ṛks in विष्टारपङ्क्ति metre.

प्रगाथसमाख्यादिनात्रैव प्रग्रथनेन सम्पाद्ये बृहत्याविति **सिद्धान्तः ।**

**अनुष्टप् गायत्र्योः प्रग्रथनेन श्यावाश्वाधीनगवयोः गानाधिकरणम्** (9-2-6) **(तृतीयं वर्णकम्)**

At ज्योतिष्टोम in तृतीयसवन it is stated that with the two सामन्s viz., शावाश्व, अन्धीगव three ṛks of अनुष्टप् metre be recited. Here first ऋक् is in अनुष्टप् metre the next two are in गायत्री. Here the question is raised whether two अनुष्टप् are to be brought from outside ignoring the गायत्री or taking a portion of अनुष्टुप् three अनुष्टप्s be developed.

**तृतीयवर्णकन्तु,** ''श्यावाश्वान्धीगवे आनुष्टुभे त्र्यचे भवतः'' इति ज्योतिष्टोमे तृतीयसवने श्रूयते । श्यावाश्वाख्यश्चान्धीगवाख्यश्च सामद्वयमनुष्टुप्छन्दस्के त्र्यृचे भवत इति तदर्थः । तत्र किमुत्पत्ति-शिष्टावनुष्टुभावानेये, उतात्रैव प्रग्रथनेनानुष्टुप्त्रयं सम्पाद्यमिति **संशये,**

Pūrvapakṣa : argues that two ṛks in the अनुष्टुप् metre have to be brought from outside.

मुख्ये अनुष्टुभे आनेये इति **प्राप्ते**

Siddhānta : points out that the statement आनुष्टुभः प्रगाथः clearly shows that the अनुष्टुप्s required here have to be developed by प्रगाथ i.e. joining.



**सिद्धान्तः,** ''आनुष्टुभः प्रगाथः'' इति स्मरणात्प्रगाथसमाख्यानाद्गायत्र्योरुत्तरत्र पाठानर्थक्य-प्रसङ्गाच्चात्रैव प्रग्रथनेनानुष्टुप्त्रयं सम्पाद्यमिति ।

**पादप्रग्रन्थनेन ब्रह्ममामगानाधिकारणम्** (9-2-6) **(चतुर्थवर्णकम्)**

At गवामयन with reference to ब्रह्मसामस्तोत्र, चतुश्शतं ऐन्द्राः बार्हताः प्रगाथा i.e. the recitation of four hundred units of two ṛks each of बृहती metre and of Indradevata is stated. Here the question is raised whether for the two ṛks in one unit by joining one ṛk of the next unit and developing into three ṛks be recited with अभिवर्त साम or within the unit of two ṛks joining the portions of these two ṛks, a third be developed.

**चतुर्थवर्णकन्तु,** गवामयने ''अभिवर्तो ब्रह्मसाम भवति'' इति विहितं ब्रह्मसामस्तोत्रं प्रकृत्य श्रूयते ''चतुश्शतमैन्द्रा बार्हताः प्रगाथाः'' इति । चतुरुत्तरशतसङ्ख्याका इन्द्रदेवताका बृहतीछन्दस्काः प्रगाथसञ्ज्ञका ऋग्द्वयात्मकाः सूक्ता इति तदर्थः । तत्र किमृग्द्वयात्मकेषु प्रगाथसञ्ज्ञकेषु चतुश्शत सङ्ख्याकेषु सूक्तेषु मध्ये एकप्रगाथगते द्वे ऋचौ द्वितीयप्रगाथगतामेकामृचञ्च प्रग्रथ्य त्र्यृचं सम्पाद्याभिवर्तनामकं साम गातव्यम्, उत द्वयोर्द्वयोरेव प्रग्रथनेन सम्पादिते त्र्यृचे गातव्यमिति **सन्देहे,**

Pūrvapakṣa : It is clearly stated that एकं साम त्र्यचे क्रियते स्तोत्रियं This means that the two ṛks in one unit be developed into three ṛks by taking one ṛk from the next unit. Therefore three ṛks developed in this way only be sung with ब्रह्मसामस्तोत्र.

''एकं साम त्र्यृचे क्रियते स्तोत्रीयम्'' इति प्रकृतौ विहितस्येह चोदकेन प्राप्तस्य त्र्यृचे गानस्यावश्यकत्वात्पूर्वप्रगाथगतऋग्द्वयस्योत्तरप्रगाथगताद्यर्चा प्रग्रथनेन ऋक्त्रयं मुख्यमेव सम्पाद्य त्र्यृचे गातव्यम् । पुनस्तत्प्रगाथगताद्यर्चा प्रग्रथनेन सम्पादितमृग्द्वयं तदुत्तरप्रगाथगताद्यर्चा प्रग्रथ्य त्र्यृचं सम्पाद्य गेयमिति **प्राप्ते**

Siddhānta : points out that with in the four hundred units of ṛks by joining a portion of one ṛk into a portion of the other of the same unit a unit of three ṛks be developed. The ṛk from another unit should not be brought.

**सिद्धान्तः,** ब्रह्मसामाधिकृत्याऽम्नातेषु चतुश्शतप्रगाथेष्वेकं प्रगाथं पादप्रग्रथनेन त्र्यृचं कृत्वा

प्रग्रथनसम्पादितासु तिसृषु ऋक्षु गातव्यम् । अन्यथैतेषु प्रगाथसमाख्यानुपपत्तेः । ''अन्यान्या ऋचो भवन्ति'' इति विरोधेनैकस्यामृचि द्विर्गानायोगाच्चेति ।

### गीतिसम्पादकागमक्षरविकारादीनां विकल्पाधिकरणम् (9-2-7)

In सामवेद there are one thousand शाखाs. For the hymns of each शाखा for employing साम, विकार, विश्लोष, विकर्षण, अभ्यास, विराम, स्तोभ etc., are stated for the syllables. Since the employment of this is different in each शाखा there will be a thousand ways of employing these. Here the question is raised whether the employment of विकार, विश्लेष etc., that are different in each शाखा should be implemented for singing collectively or alternately is raised.

सामवेदे शाखानां सहस्रत्वात्प्रतिशाखं गीतिशब्दितसामनिष्पादकानामक्षराणां विकारः, विश्लेषः, विकर्षणम्, अभ्यासः, विरामः, स्तोभः इत्यादयो विलक्षणाः सन्तीति सहस्रशाखागत-निर्वर्तकभेदात्तन्निष्पाद्यगीतिरपि सहस्रप्रकारा भवति । तत्र किं सर्वेषां गीतिनिर्वर्तकानां विकार-विश्लेषादीनां प्रतिशाखं भिन्नानामेकस्यां गीतिव्यक्तौ समुच्चयोऽथ विकल्प इति **सन्देहे,**

Pūrvapakṣa : states that since all these are prescribed, these have to be implemented collectively.

सर्वेषामाम्नातत्वाविशेषात्प्रयोगवचनेन सामार्थानां सर्वेषां परिगृहीतत्वात्समुच्चय इति **प्राप्ते**

Siddhānta : The विकार, विश्लेष stated in different शाखाs cannot be implemented in one गीति for the manifestation of one song. Hence these have to be implemented optionally.

**सिद्धान्तः,** नानाशाखागतगीत्युपायानां सर्वेषामपि गीतिनिर्वृत्तिरूपैकप्रयोजनकत्वादेकशाखा-गताक्षरविकारविश्लेषादिभिर्गीतिनिर्वृत्तिसिद्धेर्गुणभूतोपायानुरोधेन गीतेरावृत्त्ययोगादेकस्यां व्यक्तौ नानाशाखागतोपायानां युगपदनुष्ठानासम्भवेन समुच्चयायोगाद्व्रीहियववद्विकल्प इति ।

### 'ऋचास्तुवते' 'साम्नास्तुवते' इति विधिना साम्नैव स्तवविधानाधिकरणम् (9-2-8)
### (प्रथमं वर्णकम्)

In the context of the recitation of the stotras in विकृति the statement ऋचा



स्तुवते, साम्ना स्तुवते यदृचा स्तुवते तदसुरा अन्ववायन्, यत्साम्ना स्तुवते तदसुरान अन्ववायन् occurs. Here the word साम refers to the ṛk for which साम is applied because mere साम is not स्तोत्र साधन. The word ṛk refers to ṛk only. Here the question is raised whether स्तोत्र by ṛk or सामन् be made alternately or स्तोत्र to be made by only सामन् i.e. ṛk in association with सामन्.

कचिद्विकृतिविशेषे तत्र साधकाकाङ्क्षायामप्राकृतस्तोत्रसन्निधाविदं श्रूयते ''ऋचा स्तुवते । साम्ना स्तुवते । यदृचा स्तुवते । तदसुरा अन्ववायन् । यत्साम्ना स्तुवते । तदसुरा नान्वायन् । य एवं विद्वान् साम्ना स्तुवीत'' इति । तत्र सामशब्दः सामारूढऋक्परः । केवलसाम्नः स्तोत्रासाधनत्वात् । ऋक्शब्दः केवलर्क्परः । तत्र किमृचा साम्ना वा स्तोतव्यमिति विकल्पः किं वा साम्नैव स्तोतव्यमिति **सन्देहे,**

Pūrvapakṣa : states that since both are expressly stated these have to be adopted alternately.

द्वयोर्वचनसिद्धत्वात्पूर्वत्र गीत्युपायानामिव विकल्प इति **प्राप्तम् ।**

Siddhānta : points out that recitation by mere ṛk without सामन् results in असुरागमन, while reciting ṛks with सामन् keeps them away. Therefore the recitation of the ṛk with सामन् has to be made.

**सिद्धान्तस्तु, ऋचा** स्तवनं घातुकासुरागमनहेतुतया निन्दित्वा तदनागमनहेतुत्वेन साम्नः प्रशंसितत्वेन तत्रैव प्रशंसारूपार्थवादबलेन सामवाक्य एव विधित्वागमात्साम्नैव स्तोत्रं कार्यम् । ऋङ्निन्दावचनमपि सामप्रशंसार्थमिति ।

### 'अयं सहस्रमानवः' इति ऋचा प्रगीतयैव आहवनीयोपस्थानाधिकरणम् (9-2-8)
### (द्वितीय वर्णकम्)

With reference to the tenth day of द्वादशाह it is stated that अहं सहस्रमानव इत्येतया आहवनीयम् उपतिष्ठते । In सामवेद in the संहिताग्रन्थ the ṛk अहं सहस्र etc., is stated to be recited without गान. While in गानग्रन्थ it is stated to be recited with गान. Here the question is raised whether this would be recited with gāna or without gāna without any restriction to one of them or it should be recited with gāna only.

**वर्णकान्तरन्तु,** द्वादशाहान्तर्गतदशममहरधिकृत्य सामवेदे श्रूयते ''अयं सहस्रमानव इत्येतयाऽहवनीयमुपतिष्ठते'' इति । सामवेदे संहिताग्रन्थे ''अयं सहस्र'' इति ऋगप्रगीता पठिता । गानग्रन्थे च प्रगीता पठिता । तत्र किं प्रगीतया अप्रगीतया वेत्यनियमः, उत प्रगीतयैवेति **सन्देहे,**

Pūrvapakṣa : states that since both the alternatives are stated in veda there is no restriction to recite it in one way or the other.

द्वयोरपि वेदे पाठे सन्निहितत्वाविशेषेणैतयेति सर्वनाम्ना परामर्शस्य ''अयंसहस्रमानवः'' इति प्रतीकग्रहणस्य वाऽविशेषादनियम इति **प्राप्ते,**

Siddhānta : points out that in संहिताग्रन्थ ṛk स्वरूप without gāna is stated to provide the base for the recitation of it with gāna in गानग्रन्थ. Therefore it has to be recited with गान only.

सत्यं, द्वयोरपि परामर्शसम्भव इति । तथापि ऋक्स्वरूपापरिज्ञाने गानस्य तत्र कर्तुमशक्यत्वात्, गानस्य सौकर्यार्थमृक्स्वरूपपरिज्ञानायाप्रगीतर्कपाठः संहिताग्रन्थे गानार्थः सन्निराकांक्षः । प्रगीता त्वनन्यार्थेति प्रयोजनमपेक्षमाणोपस्थाने विनियुज्यत इति प्रगीतयैवोपस्थानमिति **सिद्धान्तः ।**

**अग्निर्मूर्धा इत्यादियाज्यानुवाक्यादीनां तानेन प्रयोगाधिकरणम्** (9-2-8) (तृतीय वर्णकम्)

In सामवेद the recitation of याज्या पुरोनुवाक्य मन्त्रs is stated to be made with उदात्त, अनुदात्त and स्वरित accents in some शाखा and in another शाखा these are stated to be recited with four accents viz., उदात्त, अनुदात्त स्वरित and एकश्रुति. This एकश्रुति is called प्रचय. Here a question is raised whether these mantras that are to be recited at the time of the performance of the sacrifice, should be recited with the combination of both the three accents and the four accents or alternately with three or four accents or with only one accent.

**तृतीयं वर्णकन्तु,** ''अग्निर्मूर्धा'' इत्यादियाज्यापुरोनुवाक्यामन्त्राः सामवेदे कचिच्छाखाया मुदात्तानुदात्तस्वरितरूपस्वरत्रयविशिष्टतया पठ्यन्ते । ते शाखान्तरे चोदात्तानुदात्तस्वरितैकश्रुति-रूपस्वरचतुष्टय विशिष्टत्वेन । तत्रैकश्रुतिं प्रचय इत्याचक्षते । तत्र कर्मप्रयोगकाले मन्त्रेषु किं त्रैस्वर्यचातुस्स्वर्ययोः समुच्चयः उत विकल्पोऽथैकश्रुतिस्वर एवेति त्रेधा **सन्देहे,**



Pūrvapakṣa : argues that i) what ever is stated as to be done at the time of performance of the sacrifice all that has to be done. Hence recitation of the hymn with the combination of both accents has to be made.

ii) The purpose to be served by these two modes of recitation is one. Therefore these may be recited in these modes alternately.

प्रयोगवचनेनाऽम्नातसर्वपरिग्रहात्समुच्चयो वा अध्ययननिर्वृत्तिरूपप्रयोजनस्यैकत्वात्तस्य चान्यत-रेणापि सिद्धेर्विकल्पो वेति **प्राप्ते**

Siddhānta : points out that there is a Pāṇini sūtra यज्ञकर्मणि अजपन् न्यूङ्ख सामसु. In this सूत्र the word न्यूङ्ख means ॐ ॐ ॐ six pranavas. In the mantra to be recited by यजमान avoiding these the मन्त्रs be recited with एकश्रुति accents. The expression एकश्रुति means recitation of उदात्त, अनुदात्त and स्वरित without any gap. Therefore the यज्यापूर्ववाक्य मन्त्रs be recited with एकश्रुति only.

**सिद्धान्तः,** ''यज्ञकर्मण्यजपन्यूङ्खसामसु'' इत्याद्यद्वितीयपादीयपाणिनिसूत्रे ''अग्निं गृह्णामि-सुरथम्'' इत्यादियजमानजप्यमन्त्रं न्यूङ्खशब्दितान् ओम् ओम् ओम् इत्यादिषट्प्रणवान्, साम चेति त्रयं विना यज्ञकर्मणि प्रयोज्या मन्त्रा एकश्रुतिमन्तो भवन्तीत्युक्त्याऽनुमितेन ''तानो यज्ञकर्मणि'' इति वेद-वाक्येन पूर्वाचार्यसञ्ज्ञया तानशब्दितैकश्रुत्याख्यस्वरस्य मन्त्रेषु प्राप्तेरेकश्रुत्यैवोच्चार्या मन्त्रा इति । ऐकश्रुत्यं नामोदात्तादीनामविभागेन पठनम् ।

**रथन्तरमुत्तरयोर्गायति इत्यादौ उत्तरावर्णवशेन गानाधिकरणम्** (9-2-9)

In this adhikarana, सामोह is discussed. The statement यद् योन्यां गायति तदुत्तरयोः गायति' prescribes that the सामन् recited in योनि ऋक् be recited on उत्तरा ऋक्. Here the question is raised whether there is उह of सामन् of योनि in उत्तरा.

''आम्नातादन्यत्'' इत्यारभ्योपोद्धातः प्रासङ्गिकश्च विचारः कृतः । अथोऽवसरप्राप्तः सामोह-श्चिन्त्यते । ''यद्योन्यां तदुत्तरयोर्गायति । रथन्तरमुत्तरयोर्गायति'' इत्यादि श्रूयते । तत्र ''कया नश्चित्र आभुवदूती'' इतीयमृग्योनिः । ''कस्त्वा सत्यो मदानाम्'' इति ''अभीषुणः सखीनाम्'' इति द्वे ऋचावुत्तरे । तत्र योनौ पठितं सामोत्तरयोरूहेन गातव्यम्, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that in the योनि ऋक् there is इकार on the fourth letter. Hence, in उत्तरा ऋक् also by making उह of आइ the सामन् be recited.

योनिगानस्य योनिवर्णवशेनैव कृतत्वात्, योनौ ''कया नश्चित्र'' इत्यत्र चकारस्योपरिस्थिते-कारस्य ''वृद्धं तालव्यं प्रथमस्वरं भवति'' इति वचनेन वृद्धसञ्ज्ञायां, ''वृद्धं तालव्यमायि भवति'' इत्याइभावेन साम्नो गीतत्वात्, ''कस्त्वा सत्यो'' इत्युत्तरस्यामृच्यपि योनाविव चतुर्थवर्णस्य तकार-स्योपरिस्थितयकारोकारस्थाने आइभावं कृत्वा साम गातव्यम् । तथा तदुत्तरस्यामपि ''अभीषुण:'' इत्यत्र णकारस्योपरिस्थिताकारस्थाने आइभावं कृत्वा सामगानमिति **प्राप्तम्** ।

Siddhānta : points out that in the योनिऋक्, वृद्धि is not effected by dropping इकार and substituting ऐकार. But the very इकार is developed into ऐकार by वृद्धि. Since this ऐकार consists आ and इ, सामन् is recited as आई. However in the ṛks given in उत्तराग्रन्थ there is no इकार on the fourth letter. Therefore, only the इकार which is found later has to be recited with आ, इ.

**सिद्धान्तस्तु,** योनाविकारस्य लोपेन न वर्णान्तरस्यागम: । किन्तु विद्यमान एव चकारस्थेकारो ''वृद्धं तालव्यम्'' इति वचनेन वृद्ध: सन्नैकाररूपसन्ध्यक्षरभावं प्राप्त: । स चैकार आकार इकार-रूपाक्षरसन्धि रूपत्वेन प्रसिद्ध: । तस्य विश्लेषेणोच्चारणे सति आइ इति भावति । तथा चोत्तर-योश्चतुर्थाक्षरस्योपरि स्थाने नास्ति इकार इति कुतस्तस्य आइभाव: । अतो न योनिवर्णवशेन गानम् । किन्तूत्तरावर्णवशेनैव गानमिति ।

### उत्तरयो: स्तोभाति देशाधिकरणम् (9-2-10)

In this adhikaraṇa, the question whether there is अतिदेश of सामन् on स्तोभाक्षर or not is raised.

Pūrvapakṣa : states that स्तोभाक्षरs are different from ṛk अक्षरs. Therefore, there is no ground for अतिदेश of सामन्.

''यद्योन्यां तदुत्तरयोर्गायति'' इति साम्न एवातिदेशेन स्तोभाक्षराणां ''गीतिमात्रं साम'' इत्युक्तत्वेन ऋगक्षराणामिव साम्नो भिन्नत्वान्नातिदेश इति **प्राप्तम्** ।



Siddhānta : points out that साम is utilized to complete the singing. If अतिदेश is not made on सामन् then, the singing will be incomplete. Hence, there is अतिदेश of सामन् even in respect of स्तोभाक्षर.

**सिद्धान्तस्तु,** स्तोभाक्षराणां ऋगक्षरैरपरिपूर्णगीत्यंशपूरकत्वाद्गीत्यतिदेशेन तदनतिदेशे गीत्यंशस्य निराधारतया विनाशापत्ते: स्तोभानामप्यतिदेश इति ।

### स्तोभलक्षणाधिकरणम् (9-2-11)

In this adhikaraṇa, the definition of स्तोभाक्षर is given as the syllables that are extra to the syllables of the ṛk concerned and distinct in nature. अर्थाभिधानोपयुक्त ऋगक्षरेभ्योऽधिकम् ऋगक्षरापेक्षया विलक्षणं च तदक्षरं स्तोभं जैमिनि: मन्यते । The two clauses in the definition are justified by giving suitable examples. In the ṛk ''अग्न आयाहि वीतये'' at the time of सामगान अकार is substituted by ओकार. This is ऋगक्षरविलक्षण but not अधिक. Therefore this ओकार is not स्तोभ.

In the ṛk 'पिब सोमं इन्द्र दनुत्वा' the word दनुत्वा is recited thrice. This recitation thrice does not make it a स्तोभ. Since it is not विलक्षण from ऋगक्षर.

प्रसङ्गात्स्तोभलक्षणार्थमिदं सूत्रम् । यत् अर्थाभिधानोपयुक्तऋगक्षरेभ्योऽधिकं ऋगक्षरापेक्षया विलक्षणञ्च तदक्षरं स्तोभं **जैमिनिर्मन्यते** । लोके तादृशविदूषकादिवाक्यस्य **स्तोभशब्दत्व**-दर्शनादित्यर्थ: । ''अग्न आयाहि वीतये'' इत्यस्यामृचि गानसमये अकारस्थाने ओकारं प्रक्षिप्य ''ओग्नायी'' इति गीयते । तत्र ओकारस्य ऋगक्षरविलक्षणवर्णत्वमस्ति । न स्तोभत्वमिति तत्राति व्याप्तिनिरासायाधिकमिति विशेषणम् । ''पिबा सोममिन्द्र दनुत्वा'' इत्यस्यामृचि ''दनुत्वा'' इत्यक्षरत्रयं गानकाले त्रिरभ्यस्यते । स्तोभत्वञ्च तस्य नेति विवर्णमिति विशेषणम् ।

### प्रोक्षणावधातादि धर्मानुष्ठानाधिकरणम् (9-2-12)

So far the ऊह of साम was discussed, now ऊह of संस्कार will be discussed. At Vajapeya a statement बार्हस्पत्यं चरुं नैवारं द्वादशशरावं निर्वपति occurs. Here the question is raised whether the auxiliaries of व्रीहि viz., प्रोक्षण, अवघात etc., are to be performed for the नीवारs also or not.

सामोहं विचार्य संस्कारोहोऽत्र चिन्त्यत इति **सङ्गतिः** । वाजपेये ''बार्हस्पत्यं चरुं नैवारं द्वादशशरावं निर्वपति'' इति श्रुतनीवारेषु व्रीहिधर्माः प्रोक्षणावघातादयः कार्याः, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that the auxiliaries stated for the items in प्रकृतियाग apply only to such items in विकृति which are प्राकृतस्थानापन्न i.e. the items that are observed in the place of the corresponding items in प्रकृति. Here नीवारs are not प्राकृतव्रीहिस्थानापन्न. Hence, the auxiliaries of व्रीहि viz., प्रोक्षण, अवघात etc., need not be observed in the case of नीवार.

विकृतौ प्राकृतस्थानापन्नपदार्थे प्राकृतपदार्थकार्याणि प्रवर्तन्ते । न च नीवाराणां प्राकृतव्रीहि-स्थानापत्तौ प्रमाणम् । अतो न कार्या व्रीहिधर्मा इति न प्रागुक्तोहो युक्त इति **प्राप्ते**

Siddhānta : Just as the व्रीहिs help to obtain the rice through अवघात and provide पुरोडाश, the नीवारs also help to obtain चरु through अवघात. Hence चरुप्रकृतिकनीवारs are पुरोडाशप्रकृतिव्रीहिस्थानापन्न. Hence प्रोक्षण etc., auxiliaries have to be performed for नीवारs also.

यथा व्रीहयोऽवघातद्वारा तण्डुलनिर्वृत्तिसमर्था एवं नीवारा अपीति तण्डुलनिर्वृत्तिरूपसामर्थ्यस्य व्रीहीणामिव नीवाराणामपि प्रत्यक्षत्वात्सामर्थ्यानुसारेण च शब्दस्य प्रवृत्तेः ''नैवारः'' इति विकारार्थ-कतद्धितेन चरुप्रकृतित्वागमाच्चरोश्च देवतासंयोगेन पुरोडाशस्थानापन्नत्वावगमेन **द्रव्यसङ्ख्याहेतु-समुदायम्** इति पूर्वपादोक्तन्यायेन द्वारभूतापूर्वसाधन चरुप्रकृतिभूता नीवारा अपि पुरोडाशप्रकृतिभूत-व्रीहिस्थानापन्ना इति प्रोक्षणादयस्तत्रापि कार्या इति ।

भाट्टसङ्ग्रह gives some more instances of this type.

i) For the मध्वशन at द्वादशाह the auxiliaries of sixth day viz., व्रत, नियम etc., have to be performed.

ii) At Rājasūya the auxiliaries of उलूखल viz., प्रोक्षण etc have to be observed for नख also.

iii) At चातुर्मास्य पशुनियोजन which is prescribed for यूप in प्रकृतियाग has to be performed for परिधि in विकृतियाग.



iv) At Jyotishṭoma the auxiliaries अ, इ etc., stated for the word गिरा have to be observed for इरा.

तथा ''संस्थिते पृष्ठ्यषडहे मध्वाशयेद्घृतं वा'' इति द्वादशाहे श्रुतमध्वशने षडहधर्मो व्रतनिय-मादिः कार्यः । नैऋतश्चरुर्नखावपूतानाम्'' इति राजसूये श्रुतनखेषूलूखलधर्मः प्रोक्षणं कार्यम् । ''परिधौ पशुं नियुञ्जीत'' इति चातुर्मास्येषु श्रुतपरिधौ प्राकृतयूपकार्यपशुनियोजनं कार्यम् । अत्र पशुनियोजनस्य वाचनिकत्वेऽपि पश्वनतिक्रमातिशयार्थं प्राकृतस्यापि नियोजनस्य ग्राह्यत्वादस्यापि सूत्रे ग्रहणम् । ''ऐरं कृत्वोद्गेयम्'' इति ज्योतिष्टोमे श्रुतेरापदे गिरापदधर्मा आइभावादयः कार्या इति ।

**परिधौ यूपधर्मानुष्ठानाधिकरणम्** (9-2-13)

At चातुर्मास्य, पशुनियोजन which is to be done at यूप is stated to be done at परिधि. Here the question is raised whether the auxiliaries of यूप viz., छेदन, तक्षण etc., should be done for परिधि also or not.

चातुर्मास्येषु यूपकार्यं पशुनियोजनं स्थविष्ठे मध्यमे परिधावाम्नायते ''परिधौ पशुं नियुञ्जीत'' इति । तत्र परिधौ यूपधर्माश्छेदनतक्षणादयः कर्तव्याः, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that परिधि is enjoined for पशुनियोजनकार्य but not for यूपकार्य. Therefore the auxiliaries of यूप need not be performed for परिधि.

परिधिस्तु न पशुनियोजनादिकार्यार्थं विधीयते । किन्तु ''परिधीन् परिदधाति'' इति परिधानार्थं विहितः परिधिः ''परिधौ पशुं नियुञ्जीत'' इति वचनबलान्नियोजनार्थमुपादीयत इत्येव । न तु यूपकार्यार्थं विधीयते । अतः परिधौ यूपधर्मप्राप्त्युक्तिः पूर्वत्रोक्ता न युक्तेति **प्राप्तम्** ।

Siddhānta : points out that though परिधि is for पशुनियोजन it is also for यूपकार्यनियोजन. Hence यूपधर्मs have to be observed for परिधि also. However since छेदन, तक्षण etc., यूपधर्मs are not possible for परिधि, अञ्जन, परिव्याण etc., धर्मs should be observed.

**सिद्धान्तस्तु,** अन्यार्थमुत्पन्नस्यापि परिधेर्वचनबलादस्त्येव यूपकार्यनियोजनार्थतया तच्छेषत्वम् । यथा ''आग्नेयोऽष्टाकपालः'' इति पुरोडाशार्थतयोत्पन्नस्य कपालस्य ''पुरोडाशकपालेन तुषानुप-वपति'' इति तृतीयया अधिष्ठानलक्षणया तुषोपवापशेषत्वं तद्वत् । तथा च परिधावसम्भवतश्छेदन-तक्षणादेरयोगेऽप्यञ्जनपरिव्याणादयः सम्भवन्तो यूपधर्माः परिधौ कार्या इति ।

### शृतादौ प्रणीताधर्मानुष्ठानाधिकरणम् (9-2-14)

At अभ्युदयेष्टि for दधि and शृत the auxiliaries प्रणीत etc., stated at प्रकृति be performed or not is discussed.

अभ्युदयेष्ट्यां श्रुतयोर्दधिश्रतयोः प्रकृतिगतप्रणीताधर्माः कर्तव्या न वेति **सन्देहे,**

The expression प्रणीताः means the water on which उत्पवन etc., संस्कारs are effected and which are used for cooking the हविस्. दधि and पयस् are not meant for cooking the हविस्. These form the हविर्द्रव्य itself. These are not utilized for प्रणीताकार्य. Therefore उत्पवन etc., auxiliaries of प्रणीत need not be performed.

हविःश्रपणार्थमुत्पन्ना उत्पवनादिधर्मसंस्कृता आपः **प्रणीता** इत्युच्यन्ते । दधिपयसी तु श्रपणार्थं नोत्पन्ने । किन्तु प्रदेयद्रव्यतया हविष्ट्वेन ।

दधिपयसोः प्रणीताकार्ये विनियोगस्याप्यभावान्न प्रणीताकार्योत्पवनादिधर्मप्राप्तिरिति **प्राप्तम् ।**

Siddhānta : points out that the चरु, which is prepared with दधि and पयस् forms the हविस्. Hence these are also अपूर्व साधन. Therefore the auxiliaries of प्रणीत waters have to be performed for दधि and पयस् also.

**सिद्धान्तस्तु,** विनियोगाभावेऽपि दधिशृतयोः कृतचर्वोः प्रदेयत्वे, दधिशृतयोः सप्तमीनिर्दिष्ट-योरप्यर्थात्प्रदेयतया हविष्ट्वप्राप्तेरपूर्वसाधनत्वयोगात्तद्द्वारेण प्राप्तिरस्तीति दधिशृतयोरपि प्रणीताधर्मा उत्पवनादयः कार्या इति ।

### बृहद्रथन्तरयोः धर्मव्यवस्थाधिकरणम् (9-2-15)

At Jyotishṭoma, बृहत् and रथन्तर सामs are alternately prescribed for the recitation of पृष्ठस्तोत्र. Certain auxiliaries such as बृहतीं उच्चैः गेयम्, बलवद् गेयम् रथन्तरं नीचैर्गेयम् बलवद् गेयम् etc., Here the question is raised whether the auxiliaries of these two are to be observed for both or for the respective auxiliaries for respective साम only.

ज्योतिष्टोमे ''बृहत्पृष्ठं भवति'' ''रथन्तरं पृष्ठं भवति'' इति वैकल्पिके पृष्ठस्तोत्रसाधनत्वेन



बृहद्रथन्तरसामनी विहिते । तयोर्धर्माश्च विहिताः । ''बृहति स्तूयमाने समुद्रं मनसा ध्यायेत्'' ''बृहत्युच्चैर्गेयम् । बलवद्गेयम्'' इति । ''रथन्तरे स्तूयमाने सम्मीलयेत् । स्वर्देशं प्रतिवीक्षेत'' ''नीचै-र्गेयम् । न बलवद्गेयम्'' इति । तत्र किमुभयेऽपि धर्मा उभयत्र कार्याः, उत यथाश्रुति व्यवस्थयेति **सन्देहे,**

Pūrvapakṣa : argues that the auxiliaries for बृहती सामन् are prescribed as स्तोत्रसाधन and the auxiliaries of रथन्तर साम are also prescribed as स्तोत्रसाधन. Hence both the auxiliaries have to be observed for both the सामन्s.

बृहदुद्देशेन विहिता अपि धर्मा बृहद्गतस्तोत्रसाधनत्वप्रयुक्ताः सन्तः स्तोत्रसाधने रथन्तरेऽपि कार्याः । एवं रथन्तरधर्मा अपि बृहति । एवमुभयेऽप्युभयत्र कार्याः । स्तोत्ररूपैककार्यसाधनत्वाद्द्वयोः ।

Siddhānta : points out that the auxiliaries of बृहती and रथन्तर साम are stated by separate statement as बृहति स्तूयमाने and रथन्तरे स्तूयमाने. Further उच्चैः गान and नीचैः गान are opposite of each other and hence both cannot be observed in respect of बृहती साम and रथन्तर साम. Hence the respective auxiliaries have to be observed for the respective साम only.

**सिद्धान्तस्तु,** धर्मविधिपरवाक्ययोः ''बृहति स्तूयमाने'' ''रथन्तरे स्तूयमाने'' इति भेदेन बृह-द्रथन्तरयोर्निर्देशाद्धर्मसाङ्कर्ये भेदेन निर्देशायोगादुभयधर्माणामन्योन्यविरुद्धानामुच्चैर्गेयत्वनीचैर्गेयत्व-बलवद्गेयत्वाबलवद्गेयत्वानामेकत्र समावेशायोगाच्च व्यवस्थयैव धर्माः कार्याः ।

### कण्वरथन्तरे बृहद्रथन्तर धर्मसमुच्चयाधिकरणम् (9-2-16)

At वैश्वदेवस्तोम which is the विकृति of ज्योतिष्टोम, the statement कण्वरथन्तरं पृष्ठं भवति, prescribes the कण्वरथन्तर साम in the place of बृहती and रथन्तर. Here, the question is raised whether the auxiliaries of both बृहती and रथन्तर are to be observed alternately or together.

वैश्यस्तोमे ज्योतिष्टोमविकृतौ ''कण्वरथन्तर पृष्ठं भवति'' इति श्रूयते । तत्र बृहद्रथन्तरयोः स्थानापन्ने कण्वरथन्तराख्ये साम्नि किं तदुभयधर्मा विकल्पेन कार्याः, उत समुच्चयेनेति सन्देहे,

Pūrvapakṣa : argues that in the प्रकृतियाग these auxiliaries are observed alternately only. Hence here also these have to be observed alternately.

प्रकृतावसमुच्चिता निमीलनादयो धर्मा इहापि चोदकेन तथैव प्राप्ता इति पूर्वत्रेव विकल्पेनैव कदाचिद्बृहद्धर्माः कदाचिद्रथन्तरधर्मा अनुष्ठेयाः ।

Siddhānta : points out that in the प्रकृतियाग these auxiliaries are stated separately. However here, these auxiliaries are adopted with reference to the purpose to be served. Therefore the auxiliaries of both should be observed together.

**सिद्धान्तः**, प्रकृतौ भेदेन निर्देशबलाद्धर्माणां व्यवस्था यद्यप्यस्ति तथापि यदि चोदकेन केवलधर्माः प्राप्नुयुस्तदा यथाप्रकृति व्यतिष्ठेरन् । किन्त्विह कार्यापत्त्या धर्मप्राप्तिः । कण्वरथन्तरञ्च सामद्वयकार्ये पतितमित्युभधर्माः समुच्चयेनानुष्ठेया इति ।

### द्विसामके बृहद्रथन्तरधर्मयोः व्यवस्थाधिकरणम् (9-2-17)

At the ritual संसव for the recitation of पृष्टस्तोत्र the two सामन् viz., बृहत् and रथन्तर are prescribed. Here the question is raised whether these two सामन्s be recited sometimes with the auxiliaries of बृहती सामन् and sometimes with the auxiliaries of रथन्तर साम or बृहती only be recited with the auxiliaries of बृहती and रथन्तर only be recited with the auxiliaries of रथन्तर.

''संसव उभयं कुर्यात्'' इत्यादिना संसवादौ कर्मणि बृहद्रथन्तराख्य सामद्वयं समुच्चित्य पृष्ठस्तोत्रसाधनत्वेन विहितम् । तत्र किमुभयोः साम्नोः कदाचिद्बृहद्धर्मैरनुष्ठानं कदाचिद्रथन्तरधर्मैः, उत बृहति बृहद्धर्मैरनुष्ठानं रथन्तरे रथन्तरधर्मैः इति **सन्देहे**,

Pūrvapakṣa : states that both the सामन्s be recited with the auxiliaries of both alternately.

यथा कण्वरथन्तरस्य कदाचिद्बृहत्कार्ये कदाचिद्रथन्तरकार्ये च विधानाद्विकल्पेनोभयधर्मग्राहिता तथा बृहद्रथन्तरयोर्मिलितयोः कदाचिद्बृहत्कार्ये; विधानाद्बृहति रथन्तरे च बृहद्धर्माः स्युः । तथा तयोर्मिलितयोः कदाचिद्रथन्तरकार्ये विधानाद्रथन्तरे बृहति च रथन्तरधर्माः स्युरिति विकल्पेन द्वयोरप्युभयधर्मेणानुष्ठानमिति **प्राप्तम्** ।

Siddhānta : points out that if for the recitation of each of these two सामन्s



the auxiliaries were prescribed together then only the recitation of these alternately with the auxiliaries of both could have been accepted. However the recitation with these two सामन्s together with the respective auxiliaries is prescribed.

**सिद्धान्तस्तु**, यद्येकैकस्य साम्नः कार्ये द्वयोर्मिलितयोर्विधानं तदा स्यादेवम् । न चैवम् । किन्तु सामद्वयसाध्ययोः पृष्टस्तोत्रयोः स्वस्वधर्मयुक्तयोरेव विकल्पेन चोदकप्राप्तयोरिह समुच्चयो विधीयते । लाघवात् ।

### सौर्यादिषु पार्वणहोमाद्यननुष्ठानाधिकरणम् (9-2-18)

With reference to दर्शपूर्णमास it is stated that स्रुवेण पार्वणौ जुहोति । Here the question is raised whether the word पर्व refers to the time or the ritual.

दर्शपूर्णमासयोः श्रूयते ''स्रुवेण पार्वणौ जुहोति'' इति । तत्र वाक्ये पार्वणावित्यत्र तद्धितश्रुत्या पर्वदेवत्यौ द्वौ होमौ श्रुतौ । तत्र पर्वशब्दः किं कालपर अथ कर्मसमुदायपर इति **सन्देहे**,

Pūrvapakṣa : points out that the word पर्व is well known in the sense of a particular time. Therefore the two होमs prescribed here relate to the deities of पर्वकाल. Hence these are आरादुपकारकs for दर्श and पूर्णमास.

पर्वपदस्य तिथिविशेषरूपकाले सर्वजनप्रसिद्ध्या तत्र शब्दस्य मुख्यत्वात्पर्वरूपकालविशेषदेवताकाविमौ होमौ दर्शादिरारादुपकारकाविति **प्राप्ते**

Siddhānta : points out that the word पर्व refers to rituals also. Therefore these two होमs are a kind of संस्कार for the two groups of three यागs to be performed on दर्श and पूर्णमास. Hence these are संनिपत्योपकारक.

**सिद्धान्तः** । पृणातिधातुर्दानार्थः सन् ''दीयते हविरस्मिन् काले'' इत्यधिकरणव्युत्पत्त्या पर्वकाल इव भावव्युत्पत्त्या दानरूपकर्मण्यपि मुख्यः । तथा लोके प्रयोगवशेन पर्वकाले प्रसिद्ध इव ''पर्वेष्टिरद्य प्रवर्तते । इत्यभियुक्तप्रयोगबलेन दर्शपूर्णमासाख्यकर्मसमुदायेऽपि प्रसिद्ध एव । अतः काल इव कर्मण्यपि मुख्यत्वात् कर्मसमुदायद्वयस्मरणात्प्रकरणानुग्रहाच्च कर्मसमुदायद्वयपरोऽत्र पर्वशब्द इति समुदायद्वयसंस्कारकतया दर्शपूर्णमासाख्यकर्मसमुदायद्वयदेवताकौ सन्निपात्यङ्गमिमौ होमाविति ।

## दर्शपूर्णमासयोः होमद्वयस्य व्यवस्थाधिकरणम् (9-2-19)

Here the question whether the पार्वणहोमs mentioned in the earlier adhikaraṇa should be performed both on पौर्णमासी and अमावास्या or the होम that has the मन्त्र ऋषभं वाजिनं has to be performed on पौर्णमासी and the होम that has the मन्त्र अमावास्या सुभगा etc., has to be performed, on अमावास्या is raised.

इमौ प्रागुक्तवाक्योक्तौ पार्वणहोमौ किं पौर्णमास्याममावास्यायाश्च कर्तव्यावुत पौर्णमास्यां ''ऋषभं वाजिनम्'' इति मन्त्रकरणको होमोऽमावस्यायां तु ''अमावास्या सुभगा'' इति मन्त्रकरणको होम इति **सन्देहे,**

Pūrvapakṣa : argues that since प्रकरण is common for both these होमs both have to be observed on both the days.

प्रकरणाविशेषादुभावपि होमावुभयत्र कर्तव्याविति **प्राप्तम्।**

Siddhānta : Reciting the मन्त्र that relates to पौर्णमासी on अमावास्या is purposeless. Similarly the recitation of मन्त्र that relates to अमावास्या on पौर्णमासी is purposeless. Therefore each पार्वण होम has to be observed separately on the respective days only.

**सिद्धान्तस्तु,** पौर्णमासीलिङ्गकमन्त्रस्यामावास्यायामावास्या लिङ्गकमन्त्रस्य पौर्णमास्यां प्रयोजना भावेनादृष्टार्थतापत्तेः, दृष्टे सम्भवति तदयोगात्तत्तल्लिङ्गवशेन तत्तन्मन्त्रकरणकतत्तद्धोमस्य तत्तल्लिङ्ग-संस्कार्यभेदेन भेदाव्द्यवस्थयैव होमयोरनुष्ठानमिति।

## समिदादीनां यागनामताधिकरणम् (9-2-20)

In the context of दर्शपूर्णमास, समिधो यजति etc., five प्रयाजs are stated. Here the question whether these five rituals are meant for the समित्, तनूनपात् etc. five deities or these are आरादुपकारकs.

दर्शपूर्णमासप्रकरणे ''समिधो यजति'' इत्यादिना प्रयाजपञ्चकमाम्नातम्। तत्र किं दर्शपूर्णमास सम्बन्धिनः समित्तनूनपादादीन् देवतात्वेनोद्दिश्य तत्संस्कारार्थतया पञ्च याग विधीयन्ते, उताऽरा-दुपकारकाः प्रयाजा इति **सन्देहे,**



Pūrvapakṣa : argues that just as in the statement विष्णुं यजति the word विष्णु is taken to convey a deity though the word occurs in accusative suffix, the word समित्, तनूनपात् etc., that occur in accusative suffix, may also be taken in the sense of the deities. समित् etc., rituals may be taken as a संस्कार for these deities. Consequently these have to be taken as सन्निपत्योपकारक.

''विष्णुं यजति'' ''वरुणं यजति'' इत्यादौ द्वितीयानिर्दिष्टस्यापि देवतात्वदर्शनेनेहापि द्वितीया-निर्दिष्टानामपि समिदादीनां देवतात्वसम्भवेन तत्संस्कारकतया सन्निपातित्वे सम्भवति तद्विधित्वा-योगात्पार्वणहोमवद्देवतोद्देशेन तत्संस्कारविधय इति **प्राप्तम्।**

Siddhānta : points out that there is neither तद्धित suffix nor the dative case suffix. therefore the words समित् etc., cannot be taken as referring to the deities and the rituals as संस्कार for deities. Hence समिधो यजति etc., five प्रयाजs are आरादुपकारक only.

**सिद्धान्तस्तु,** देवतात्वलिङ्गस्य ''आग्नेयोऽष्टाकपालः'' इत्यादाविव तद्धितेन निर्देशस्य ''यदग्नये सायं जुहोति'' इत्यादाविव चतुर्थ्या वा निर्देशस्याभावेन न समिदादेरत्र देवतात्वम्। यागविधिरेवा-श्रयणीय इति ''समिधोऽग्न आज्यस्य वियन्तु'' इत्यादिमन्त्रवर्णप्राप्तसमिदादिदेवता निमित्तीकृत्य तत्प्रख्यन्यायेन नामधेयानीति तत्तन्नामकाः पञ्च यागाः प्रकरणबलेन दर्शपूर्णमासयोरारादुपकारकतया विधीयन्त इति।

**इति नवमाध्यायस्य द्वितीयः पादः**

## नवमाध्यायस्य तृतीयः पादः

In the earlier pāda, ऊह of साम and the ऊह of संस्कार were discussed. In this pāda ऊह of मन्त्र will be discussed. Even in earlier pāda ऊह of mantra was discussed in respect of प्रातिपदिक. But here it will be discussed in respect of प्रत्यय.

पूर्वत्र पादे सामोहः संस्कारोहश्च चिन्तितः। अत्र पादे मन्त्रोहश्चिन्त्यते। प्रथमपादे **अर्थाभिधान संयोगात्** इत्यारभ्य मन्त्रोहस्य विचारसत्वेऽपि तत्र प्रायेण प्रातिपदिकांशोहश्चिन्तितः। अत्र प्रत्ययभूत-

वचनांशोह इत्येके । अन्ये तु तत्रावान्तरसङ्गतिलाभेनाऽगतसामोहप्रस्तावेन प्रक्रान्तमन्त्रोहोऽन्तरितो न कात्स्न्येंन चिन्तितः । अत्र तु तथा चिन्त्यत इत्याहुः ।

### विकृतौ मन्त्रगतव्रीह्यादिशब्दानामूहाधिकरणम् (9-3-01)

At दर्शपूर्णमास the मन्त्र 'अग्नये जुष्टं निर्वपामि' occurs. Here the question is raised whether ऊह has to be made when this mantra is brought to सौर्य याग which is विकृति.

दर्शपूर्णमासयोः ''अग्नये जुष्टं निर्वपामि'' इति श्रुतो मन्त्रः ''सौर्यं चरुं निर्वपेत्'' इत्यादिविकृता वूहितव्यः, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that there is no necessity of ऊह. The recitation of mantra prescribed in प्रकृतियाग has to be brought to विकृति as it is. Though it appears the name अग्नि does not convey सूर्यदेवता required in विकृति याग, the word अग्नि itself can be interpreted as सूर्य on the basis of the attribute of shining which is common to both अग्नि and सूर्य.

नोहितव्य इति **प्राप्तम्** । प्रकृतौ पठितस्य यथाश्रुतमन्त्रस्वरूपस्य विकृतौ चोदकेन प्रापणात् ।

Siddhānta : points out that in the प्रकृतियाग, the word अग्नि, occurs in the sense of अग्निदेवता, but not as तेजोरूपगुण विशिष्ट. Hence in the विकृतियाग also it has to be taken as conveying देवता only. Since the देवता here is different the word अग्नि has to be substituted by the word सूर्य who is देवता here.

**सिद्धान्तस्तु,** प्रकृतौ यद्रूपं मन्त्राणां विवक्षितं तद्रूपमेव विकृतौ चोदकेन प्रापणीयम् । प्रकृतौ देवतावाचिपदत्वेनाग्निपदं विवक्षितमिति विकृतावपि तथैव भाव्यत्वात्तस्याग्निपदस्थाने सूर्यपदप्रक्षेपेण विनाऽनुपपत्तेरूहितव्यो मन्त्रः ।

### पौण्डरीकेषु बर्हिषु स्तरणमन्त्रस्योहाधिकरणम् (9-3-2)

The मन्त्र 'दर्भैः तृणाति हरितैः' occurs in the context of spreading दर्भ. In respect of this there is another statement पौण्डरीकाणि हर्वींषि भवन्ति. Hence the word दर्भ has to be substituted by पौण्डरीक. The पौण्डरीक kind of दर्भ has red



colour. Hence the question is raised whether the word harita be substituted by the word रक्त by ऊह or not.

''मौद्गं चरुं निर्वपेच्छ्रीकामः'' इत्यत्र ''पौण्डरीकाणि बर्हींषि भवन्ति'' इति श्रूयते । तत्र ''दर्भैः स्तृणाति हरितैः'' इति स्तरणमन्त्रे चोदकप्राप्ते दर्भपदस्थाने तृतीयान्ततया पुण्डरीकपदस्योहः पूर्वन्यायेन सिद्धः । हरितैरिति पदस्थाने रक्तैरिति विशेषणपदमूहितव्यमुत नेति **सन्देहे,**

Pūrvapakṣa : argues that दर्भास्तरण is conveyed by the word दर्भ. The adjective 'harita' conveys its meaning separately but not as a part of दर्भप्रकाशन. Therefore this word need not be substituted by the word रक्त.

प्रकृतौ स्तरणमन्त्रगतदर्भादिपदेनैव दर्भस्तरणप्रकाशनसिद्धेर्हरितपदमदृष्टार्थमिति विकृतावपि तथैव प्रयोक्तव्यम् । नोहितव्यमिति **प्राप्ते**

Siddhānta : points out that दर्भ is conveyed by स्तरण मन्त्र as qualified by हरित colour. Therefore this qualifying word has to be substituted by the qualifying word रक्त since पौण्डरीक type of दर्भ has red colour.

**सिद्धान्तः** मन्त्राणामुत्सर्गतो दृष्टार्थाभिधानपरत्वात्प्रकृतौ हरितत्वरूपगुणद्वारा स्तरणद्रव्यप्रकाशनेन दृष्टार्थत्वसम्भवेऽदृष्टार्थ त्वकल्पनायोगेन विकृतावपि दृष्टार्थत्वलाभाय रक्तैरित्यूहितव्यमिति ।

### अग्नीषोमीयपशौ लौकिकयूपस्पर्शप्रायश्चित्ताधिकरणम् (9-3-03)

At Jyotiṣṭoma, in Agniṣomīya a प्रायश्चित्त is prescribed for touching the yūpa. Here the question is raised whether this प्रायश्चित्त is meant for the touch of यूप for the purpose of उछ्रयण, अञ्जन etc., or लौकिक touch.

ज्योतिष्टोमे अग्नीषोमीयप्रकरणे यूपस्पर्शस्य प्रायश्चित्तं श्रूयते ''यद्येकं यूपमुपस्पृशते 'एष ते वायो' इति ब्रूयात्'' इति । किमिदं प्रायश्चित्तमुच्छ्रयणाञ्जनादिकालीनवैदिकस्पर्शे भवति, उत लौकिक इति **सन्देहे,**

Pūrvapakṣa : argues that from the context it is clear that this प्रायश्चित्त is meant for वैदिकस्पर्श only. If it is taken as for the लौकिकस्पर्श a result has to be envisaged. Hence, this is वैदिकस्पर्श only. Now if the प्रायश्चित्त is taken as for

वैदिकस्पर्श then the वैदिकस्पर्श at the time of उच्छ्रयण, अञ्जन etc., has to be given up to avoid प्रायश्चित्त. This contingency can be solved for taking स्पर्श and अस्पर्श as alternates. स्पर्श has to be made because of the very prescription and स्पर्श has not to be made to avoid प्रायश्चित्त. The result is these two modes have to be adopted alternately.

प्रकरणाल्लौकिके फलकल्पनापाताद्वैदिकस्पर्श एवेदं प्रायश्चित्तम् ।

न चैवमुच्छ्रयणादिविधिलभ्यस्पर्शबाध इत्युच्छ्रयणादिविधिवैयर्थ्यं स्यादिति वाच्यम् । षोडशीग्रहणाग्रहणवदगत्या स्पर्शास्पर्शयोर्विकल्पोपपत्तेरिति **प्राप्ते**

Siddhānta : points out that प्रायश्चित्त is always meant to remove some lapse. Lapse takes place only when something prohibited is done. Therefore the प्रायश्चित्त prescribed for touching यूप is रागप्राप्तलौकिकस्पर्श only. Since वैदिकस्पर्श is not निषिद्ध.

**सिद्धान्तः**, दोषनिरासार्थं हि प्रायश्चित्तम् । दोषश्च निषिद्धानुष्ठाने । निषेधश्च ''यूपो वै यज्ञस्य दुरिष्टमामुञ्चते । तस्माद्यूपो नोपस्पृश्यः'' इति वाक्ये ''यज्ञस्य दुरिष्टं पापं स्वस्मिन्नामुञ्चते बध्नाति यूपोऽतो नोपस्पृश्यः'' इत्युक्त्यनन्तरं ''यद्येकं यूपमुपस्पृशेत्'' इति श्रुतः पुरुषार्थतया रागप्राप्तलौकिकस्पर्शविषयत्वेनोपपन्नो न विहितोच्छ्रयणादिप्राप्तस्पर्शविकल्पनाक्षम इति लौकिकस्पर्श एवेदं प्रायश्चित्तम् ।

## द्विपशुयागे पाशमन्त्रयोः एकवचनान्त बहुवचनान्तपदयोः द्विवचनान्तत्वेन उहाधिकरणम् (9-3-4)

At Jyotiṣṭoma in respect of अग्निषोमीय पशु two पाश mantras are prescribed in two different शाखाs. In one शाखा as 'अदितिः पाशं प्रमुमोक्त्वा एतम्,' in another शाखा as 'अदितिः पाशान् प्रमुमोक्त्वा एतान्.' In one मन्त्र the word पाश is in singular. While in another the word is plural. These two mantras are brought to विकृतियाग that has two पशुs. Here the question is raised in four ways.

1. Whether the mantra that contains the plural be recited without modification of the number and the मन्त्र that contains the word पाश in singular not to be recited.



2. The मन्त्र that contains the word पाश in plural is not to be recited and the मन्त्र that contains the word in singular be recited by substituting एकवचन by द्विवचन.

3. The मन्त्र with the word पाश in singular be recited by changing the एकवचन into द्विवचन and the मन्त्र that contains the word पाश in plural be recited without change.

4. Both the मन्त्रs be recited by changing एकवचन and बहुवचन to द्विवचन.

ज्योतिष्टोमे अग्नीषोमीयपशावेकवचनान्तबहुवचनान्तौ द्वौ पाशमन्त्रौ शाखाभेदेनाम्नातौ ''अदितिः पाशं प्रमुमोक्त्वेतम्'' इत्येकस्यां शाखायाम् । ''अदितिः पाशान् प्रमुमोक्त्वेतान्'' इति शाखान्तरे । तौ च मन्त्रौ ''मैत्रं श्वेतमालभेत । वारुणं कृष्णम्'' इति विहिते द्विपशुके विकृतियागे चोदकेन प्राप्तौ । तत्र किं बहुवचनान्तस्याविकारेण प्रवृत्तिरेकवचनान्तस्य निवृत्तिः, उत बहुवचनान्तस्य निवृत्तिरेकवचनान्तस्योहेन प्रवृत्तिः, किं वा एकवचनान्तस्योहेनान्यस्यानूहेन द्वयोरपि प्रवृत्तिः, यद्वोभयोरप्यूहेन प्रवृत्तिः, इति चतुर्धा **सन्देहः** ।

Pūrvapakṣa : gives appropriate explanations for all the alternatives. Without particularly supporting any one of them.

**पूर्वपक्षस्तु,** एकेनैव चरितार्थत्वेन द्वयोरनतिदेशादविकारेणोपपत्तौ विकारायोगादनूहेन बहुवचनान्तस्य प्रवृत्तिः । अन्यस्य तु निवृत्तिरित्याद्यः ।

प्रकृत्यर्थपाशस्य प्रत्ययार्थस्य द्वित्वस्य चाभिधानसम्भवे पाशमात्राभिधानायोगादेकवचनान्तस्य द्विवचनान्ततयोहेन प्रवृत्तिः । केवलपाशमात्राभिधायिनो बहुवचनान्तस्य निवृत्तिरिति **द्वितीयः** ।

''छन्दसि सुपां सुपो भवन्ति'' इत्यनुशासनबलेन बहुवचनान्तस्यापि प्रकृतावेकत्वबोधन इव द्वित्वबोधनेऽपि शक्तत्वादिति ।

Siddhānta : takes the stand that in both the मन्त्रs the word पाश be changed to द्विवचन and both be recited.

**सिद्धान्तस्तु,** अनुशासनसत्वेऽपि तस्य प्रयोगानुसारित्वादेकस्मिन् बहुवचनस्य दृष्टचरत्वेऽपि द्वयोर्बहुवचनस्यादृष्टत्वात्तदपि द्विवचनान्ततयोहनीयमिति । फलं व्यक्तम् ।

**अग्नीषोमीयपशौ पाशैकत्वपाश बहुत्वाभिधायिमन्त्रयोः विकल्पाधिकरणम्** (9-3-5)

In the earlier adhikaraṇa, it is stated that with reference to अग्निषोमीय पशु two पाशमन्त्रs are stated. Here the question is raised whether the मन्त्र with the word पाश in बहुवचन be recited in the very ritual in which it is stated or be shifted to a ritual where there are many पशुs and many पाशs are available.

अग्नीषोमीयपशौ द्वौ पाशमन्त्रावित्युक्तम् । तत्र बहुवचनान्तो मन्त्रः किं प्रकरणे निविशते, किं वा बहुपाशके पशुगणे उत्कृष्यत इति **सन्देहे,**

Pūrvapakṣa : argues that since the मन्त्र with the word पाश in बहुवचन cannot be utilized when there is only one पशु it has to be shifted to a ritual where in there are many पशुs.

बहुवचनस्यैकस्मिन्नयोगाद्बहुवचनोक्तबहुत्वलिङ्गेन प्रकरणं बाधित्वोत्कृष्यत ।

Siddhānta : प्रातिपदिकार्थ and कर्मत्वरूपविभक्त्यर्थ are more important than वचन. Therefore merely on the ground of बहुवचन shifting the मन्त्र to another ritual is not proper. Hence in the same ritual the मन्त्रs with एकवचन and बहुवचन have to be alternately recited.

**सिद्धान्तः**, प्रधानभूतप्रातिपदिकार्थस्य पाशस्य विभक्त्यर्थस्य च कर्मत्वस्य प्रकरणे निवेश-सम्भवेन गुणभूतवचनोक्तबहुत्वानुरोधेनोत्कर्षस्यायुक्तत्वादवयवबहुत्वाभिप्रायेण बहुवचनमपि प्रकरण एव कथञ्चिन्निवेशनीयमिति नोत्कष्टव्यो मन्त्रः । एवञ्चैकवचनान्तबहुवचनान्तयोर्द्वयोरपि प्रकरण एव निवेशाद्विकल्प इति ।

**दर्शपूर्णमासयोः द्विपत्नीक प्रयोगे पत्नीं सन्नह्य इति मन्त्रस्य अनूहाधिकरणम्** (9-3-6)

At दर्शपूर्णमास the मन्त्र पत्नीं सन्नह्य etc., occurs. Here the question is raised whether when this मन्त्र is to be recited at a प्रयोग wherein two or more wives are present, by changing the एकवचन of the word पत्नी as पत्नीः or not.

दर्शपूर्णमासयोः ''पत्नीं सन्नह्य'' इति श्रुतो मन्त्रः किं द्विबहुपत्नीकर्तृकप्रयोगेष्वनूहेन प्रयोज्यः, उतोहेनेति **सन्देहे,**



Pūrvapakṣa : argues that एकपत्नीकयजमान कर्तृकत्व is a part of the ritual programme. Therefore where there are more than one wife, the case suffix has to be changed.

पूर्वत्र पाशानिति बहुवचनस्यागत्यौपचारिकत्वेऽपीहैकवचनस्यैकपत्नीकयजमानकर्तृकप्रयोगे समवेतार्थत्वसम्भवाद्द्विबहुपत्नीकयजमान कतृकप्रयोगेऽपि दृष्टार्थत्वलाभायोहितव्यो मन्त्र इति **प्राप्ते**

Siddhānta : points out that this hymn is not prescribed with particular reference to एकपत्नीकप्रयोग. But it is common to all प्रयोगs and एकवचन is अदृष्टार्थ. Therefore, this hymn has to be recited without the change from एकवचन to द्विवचन or बहुवचन.

**सिद्धान्तः** । स्यादेवं यद्येकपत्नीकप्रयोगाभिप्राय एतन्मन्त्रपाठः । न चैवम् । किन्तु सर्वप्रयोग-साधारण्येनैवाऽम्नातः । सर्वत्रोपदेशत एव मन्त्रस्य प्राप्तेः । अदृष्टार्थमेकवचनं सत्सर्वप्रयोगेष्वविकारेणैव प्रयोगं सम्पादयतीत्यनूहो मन्त्रस्येति ।

**द्विबहुपत्नीककर्तृक विकृतियागेपि पत्नीं संनह्य इति मन्त्रस्य अनूहाधिकरणम्** (9-3-7)

In this adhikaraṇa the question is raised when the मन्त्र 'पत्नीं सन्नह्य' is adopted in the विकृति याग of द्विबहुपत्नीक यजमानकर्तृक whether the ऊह has to be made or not.

''पत्नीं सन्नह्य'' इति मन्त्रो विकृतियागे द्विबहुपत्नीकयजमानकर्तृके किमूहितव्यः, उत नेति **सन्देहे,**

Pūrvapakṣa argues that in the प्रकृतियाग ऊह was not adopted because the मन्त्र was prescribed commonly for all the प्रयोगs. However in विकृतियाग there is no such common prescription. Therefore, the change from एकवचन to द्विवचन or बहुवचन as the case may be has to be made.

प्रकृतौ ह्यर्थानुसारणोहः प्राप्नुवन्नपि प्रयोगत्रयसाधारणाऽम्नानबलाद्बाधितः । विकृतौ त्वाम्नाना-भावेन बाधकाभावात्स्वायत्ते प्रयोगे अर्थानुसाराय साधुत्वार्थमेव युक्त ऊहः । अत एव ''पाशान्'' इति मन्त्रस्य द्विपाशिकायां विकृतावूह इत्युक्तम् । एवञ्च पूर्वत्र बाधकेनानूहोक्तावपीह विकृतौ तदभावादूह इति **प्राप्ते**

Siddhānta : points out that in the मन्त्र the word पत्नीं is stated in एकवचन simply because the word has to be stated in a वचन. The एकत्व is not particularly intended. In view of this by एकवचन प्रयोग, द्वित्व and बहुत्त्व also could be conveyed. Hence the मन्त्र has to be recited in विकृति without any change.

**सिद्धान्तः** । ''पत्नीम्'' इत्येकवचनस्य निर्देशमात्रार्थत्वेनैकत्वस्याविवक्षितत्वेनादृष्टमात्रार्थत्वेन वा ''सुपां सुपो भवन्ति'' इत्यनुशासनबलेनैकवचनस्यैकत्व इव द्विबहुत्वयोरप्यभिधानशक्तत्वेन वाऽ-विकृतस्य प्रयोगाद्यथाप्रकृति विकृतावपि चोदकेन मन्त्रस्य प्रापणान्नोहितव्यो मन्त्र इति ।

**सवनीय पशूनां अग्नीषोमीय समानविधानत्वे प्रास्यै अग्निं इति मन्त्रस्य अनूहाधिकरणम् (9-3-8)**

At अग्निष्टोम for सवनीय one पशु is prescribed. For उक्थ्य two पशुs are prescribed, for षोडशी and for अतिरात्र four पशुs are prescribed.

At this, the recitation of पैषमन्त्र viz., प्रास्म अग्निं भरता is prescribed. Here the question is raised whether the एकवचन in the मन्त्र be changed to द्विवचन or बहुवचन in the case of उक्थ्य and षोडशी etc., wherein more than one पशु is prescribed.

अग्निष्टोमे सवनीय एक एव पशुः, उक्थ्ये द्वौ, षोडशिनि त्रयः, अतिरात्रे चत्वारः । तत्र ''प्रास्मा अग्निं भरता'' इत्यध्रिगुप्रैषमन्त्रे ''प्रास्मा'' इत्येक वचनं पदमुक्थ्यादिष्वनेकपशुकेषु द्विवचन-बहुवचनान्ततयोहितव्यमुत नेति **सन्देहे,**

Pūrvapakṣa : The pūrvapakṣa's position is that the change has to be made. The सिद्धान्त position is that as in the case of पत्नीं no change has to me made. This point is already settled in the third chapter. Therefore it is not presented here with detailed Pūrvapakṣa and Siddhānta.

''अपूर्वे त्वविकारः'' इत्यत्र पूर्वपक्ष इवोहितव्यमिति **प्राप्ते** संस्थाः पशवश्च **समानविधानाश्चेत् सवनीयेषु** पशुषु **अध्रिगुवचनं तद्वत्** ''पत्नीम्'' इति पदवदविकारेण भवतीति सूत्रेण सिद्धान्तितम् । तेन चास्य गतार्थत्वादधिकाशङ्काभावात्तृतीयाध्यायोक्तपूर्वपक्षद्वयस्य प्रयोजनोक्तिमात्रपरे नात्र पूर्वोत्तरपक्षौ युक्ताविति वदन्ति ।



**नीवाराणां व्रीहिप्रतिनिधित्वे मन्त्रे व्रीहिशब्दस्य अनूहाधिकरणम् (9-3-9)**

When व्रीहि is not available नीवारs are taken as प्रतिनिधि of व्रीहि in the sacrifice. For the व्रीहि the mantra व्रीहीणां मेधाः etc., is prescribed. Here the question is raised whether the word व्रीहि be substituted by the word नीवार in the मन्त्र when this मन्त्र is to be recited for नीवार.

व्रीहीणामलाभदशायां कर्मणोऽवश्यकर्तव्यतया नीवारान् प्रतिनिधाय कर्म क्रियते । तत्र प्रति-निहितेषु नीवारेषु ''व्रीहीणां मेघ सुमनस्यमानः'' इति मन्त्रे व्रीहिशब्द ऊहितव्यः, उत **नेति सन्देहे,**

Pūrvapakṣa : argues that नीवारs are taken to serve the purpose of व्रीहिकार्य. Therefore the word व्रीहि has to be substituted by the word नीवार.

नीवारेषु व्रीहिपदस्यासामर्थ्यान्नीवारप्रयोगस्य व्रीहिप्रयोगविकृतित्वाभावेपि व्रीहिकार्यकरत्वं नीवाराणां प्रत्यक्षमिति तत्कार्यकरेषु नैवारचराविव कार्यप्रयुक्तैर्धर्मैर्भावर्व्यत्वादूहनीयो मन्त्र इति **प्राप्ते**

Siddhānta : points out that here नीवारs are not taken for व्रीहिकार्य directly, but as नीवारs contain व्रीहि अवयव to some extent and these are utilized in the place of व्रीहि as the व्रीहिs of full व्रीहि अवयवs were not available. This means that व्रीहि is only offered that is a part of नीवार but not नीवार. Hence there is no need to substitute the word व्रीहि by to word नीवार.

**सिद्धान्तः** । यदि नीवाराणां व्रीहिकार्यकरत्वं स्यात्तदा स्योदवम् । न त्वेवम् । किन्तु ''व्रीहिभि-र्यजेत'' इति शास्त्रार्थसिद्धये नीवारगता विकला अपि व्रीह्यवयवाः सकलाभावादुपादीयन्ते । अत एव साधनं नीवारद्रव्यम् । नीवारोपादानत्वमवर्जनीयतया नान्तरीयकम् । ततश्च नीवारगतव्रीह्यवयवा एव साधनत्वात्प्रकाशनीयाः । न नीवाराः । ते च व्रीहिगता इव व्रीहिशब्देन प्रकाशयितुं शक्या इति नोहितव्यो व्रीहिशब्द इति ।

**द्विपशुयागे सूर्यं चक्षुर्गमयतामिति मन्त्राणामनूहताधिकरणम् (9-3-10)**

In the अध्रिगु प्रैषमन्त्र चक्षु, प्राण, असु etc. संसर्गिपदार्थs are stated. Such objects which when joined do not retain their separateness are called संसर्गि पदार्थs. For examples आज्य, पयस्, तैल etc., are संसर्गि पदार्थs.

Here the question is raised whether in the प्रैष hymn 'सूर्यं चक्षुः गमयतात्,' 'वातं प्राणम् अन्वसृजतात्,' the word चक्षुः etc., be changed from singular to dual or plural in the rituals where in two or more पशुs are offered.

अध्रिगुप्रैषमन्त्रे संसर्गिशब्दिताश्चक्षुः प्राणासुप्रभृतयः पदार्थाः श्रुताः ''सूर्यं चक्षुर्गमयतात् । वातं प्राणमन्ववसृजतात् । अन्तरिक्षमसुर्दिशः श्रोत्रम्'' इति । ये घटादिवत्संयुक्ता अपि पृथङ्नावतिष्ठन्ते, संयुक्ता एकीभवन्ति, आज्यपयस्तैलतेजोवत्ते संसर्गिण इति वदन्ति । ते चक्षुरादयः संसर्गिपदार्था द्विबहुपशुकेषूहितव्या न वेति **सन्देहे,**

Pūrvapakṣa : states that the चक्षु relates to पशु. In एक पशु याग it's use in singular in quite in order, but in the case of द्विपशुयाग and बहुपशुयाग the word has to be changed to dual or plural as the case may be.

उक्तरूपाज्यादिसंसर्गिषु स्वतः सङ्ख्याव्यवहाराभावाद्धटद्रोणाद्युपाधिकृतो भेदव्यवहार इति चक्षुःशब्देनात्राभिमतस्य गोळकद्वयगततेजसोऽधिष्ठानौपाधिकभेदे सत्यपि स्वतो भेदाभावेनैकत्वस्य पशूपाधिकत्वादेकवचनान्त चक्षुः शब्दः प्रकृतौ समवेतार्थः । पशुरूपोपाधेरेकत्वात् । तथा च पूर्वत्र व्रीहिपदस्य नीवारेष्वपि सामर्थ्यादनूहेपि चक्षुःशब्दस्यैकवचनान्तस्यानेकपशुष्वसामर्थ्यात्पशुसङ्ख्या-वशादूहितव्याश्चक्षुरादयः शब्दा इति **प्राप्ते**

Siddhānta : points out that the word चक्षुः is not used here in singular with reference to पशु. But it is used in the sense of the तेजस् coming out of the eye. Just as the light coming from many lamps develops into one the तेजस् coming out of many eyes also develops into one. Hence there is no need to change the word चक्षुः from singular to plural.

**सिद्धान्तः** । स्यादेवं यदि पशूपाधिकं चक्षुरित्याद्येकवचनम् । न चैवम् । किन्तु निर्गतं तेजोऽनेक-प्रदीपप्रभावदेकीभवतीति तदभिप्रायमेकवचनं प्रकृतौ । तथा च विकृतौ बहूनां पशूनां निर्गतानि चाक्षुषाणि तेजांस्यनेकप्रदीपप्रभावदेकीभवन्तीति तदभिप्रायेणैकवचनं युक्तमित्यनेकपशुकेपि नोहितव्याश्चक्षुरादयः शब्दा इति ।

## द्विपशुयागे अध्रिगुप्रैषे एकधेत्यस्य शब्दस्य अध्यासाधिकरणम् (9-3-11)

In the अध्रिगु प्रैषवचन it is stated that the skin of the पशु be cut by effort once



only. एकधा अस्य त्वचं अर्चतात् । It should not be cut into many pieces. Here the question is raised in the याग wherein there are many पशुs the word एकधा should be repeated as एकधा and एकधा or not.

तस्मिन्नेवाध्रिगुप्रैषवचने ''एकधाऽस्य त्वचमाछ्र्ंतात्'' इति श्रूयते । **अस्य पशोः त्वचं** एकधा एकयत्नेन छिन्धि । न त्ववयवश इत्यर्थः । तत्रैकधाशब्दः पशुगणे किमनूहेन प्रयोज्यः, उतैक-धैकधेत्यभ्यासेनोहितव्य इति **सन्देहे,**

Pūrvapakṣa : argues that in the याग wherein there are many पशुs it is not possible to cut the skin of all paśus by one effort. Hence the word एकधा should be taken in the sense of युगपत् i.e. simultaneously and many persons can cut the skin of many paśus simultaneously. Therefore there is no need for अभ्यास of the word एकधा.

यद्यपि प्रकृतौ ''एकधाऽस्य त्वचमाछ्र्ंतात्'' इति त्वक्छेदनस्यैकप्रयत्नसाध्यत्वमेवोच्यते । त्वच एकत्वात् । न तु ''युगपदाछ्र्ंतात्'' इति यौगपद्यम् । तथापि बहुपशुगणे त्वचां बहुत्वादेकेनैव प्रयत्नेन त्वचां छेदनस्य कर्तुमशक्यत्वादेकप्रयत्नसाध्यत्वं तत्र नैकधाशब्दार्थः । किन्तु यौगपद्यमर्थः । ''एकधा गाः पाययति'' इत्यादाविव । एवञ्चैकस्मिन् काले बहुभिः कर्तृभिरनेकत्वचां छेदनसम्भवेन समवेतार्थ-त्वात्पूर्वत्र चक्षुरादिशब्दवदेवैकधाशब्दस्यापि विकृतावनूह इति **प्राप्ते**

Siddhānta : points out that the मन्त्रs are adopted in the विकृति from the प्रकृति in the same sense in which these are used in the प्रकृति. In the प्रकृति the word एकधा in the मन्त्र conveys the sense of one effort. Therefore in the विकृति also it should be taken in the sense of one effort for each पशु.

**सिद्धान्तः** । एकार्थद्वारा हि विकृतौ मन्त्रा अतिदिश्यन्ते । न स्वरूपेण । ततश्च तेषां प्राकृतं कार्यं निर्वर्तयितुं प्रकृतौ क्लृप्त एवार्थो विकृतौ ग्राह्यः । नार्थान्तरम् । अप्राकृतकार्यापत्तेः । प्रकृतौ च छेदनस्य सकृत्प्रयत्नसाध्यत्वप्रकाशनं क्लृप्तमिति तदेव पशुगणेष्वपि ग्राह्यम् । न यौगपद्यमिति समवेतार्थत्वसिद्धये प्रतिपश्वेकधैकधेत्यूहितव्यो मन्त्र इति ।

## द्विपश्वादि पशुविकृतौ मेधपति शब्दस्य देवतानुसारेण ऊहाधिकरणम् (9-3-12)

In the अधिगुप्रैष निगद in one शाखा it is stated as मेधपतिभ्यां मेधं; in another

शाखा it is stated as मेधपतये मेधं. Whether these two मन्त्रs in the अग्नीषोमीय याग of ज्योतिष्टोम relate to both (i) देवता and यजमान or (ii) the मन्त्र i.e. in एकवचन relates to यजमान and that is in द्विवचन relates to देवता or (iii) both relate to यजमान or (iv) both relate to देवता is raised.

अध्रिगुप्रैषनिगदे ''उपनयत मेध्या उर आशासाना मेधपतिभ्यां मेधम् ''इति, शाखान्तरे ''मेधपतये मेधम्'' इति च श्रूयते ।

तत्र मन्त्रद्वयं ज्योतिष्टामे प्रकृतावग्नीषोमीये देवतायजमानरूपोभयपरम् । उतैकवचनान्तो यजमानपरो द्विवचनान्तो देवतापरः, किं वोभयं यजमानपरं, यद्वोभयं देवतापरमिति चतुर्धा **सन्देहः** ।

Pūrvapakṣa : explains the ground for the first three alternatives and does not particularly support any.

**पूर्वपक्षस्तु,** द्विदैवत्ये एकयजमानके अग्निषोमीयपशौ देवताभूतावग्नीषोमौ द्वौ । यजमान एकः । त्रयोपि मेधपतिप्रातिपदिकार्थः । यजमानस्य पशुस्वामित्वात् । तेन च देवतायै दीयमानत्वाच्च । तथा च तेषु त्रिष्वर्थेष्वेकवन्निगदस्य द्विवन्निगदस्य च प्रकृतावसमवेतार्थकत्वात्पूर्वत्रैकधेत्यस्य विकृतावूहेपीह विकृतिभूते पशुगणे बहुयजमानके च तयोरुभयोरपि मन्त्रयोः प्रकृताविवानूहेनैव प्रयोग **इत्याद्यः** ।

प्रकृतौ समवेतार्थत्वसम्भवे अन्याय्यनिगदत्वायोगादेकवन्निगदो यजमानपरो द्विवन्निगदोऽग्नीषोमाख्यदेवताद्वयपर इति **द्वितीयः** ।

एक एवायं मन्त्रः शाखाभेदेन किञ्चिद्भिन्नः । अत एकवन्निगदवद्द्विवन्निगदोपि यजमानपरः सन् पत्न्यभिप्रायेणोपपन्न एकवन्निगदवत्समवेतार्थ एव । **लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायन** इति षष्ठस्याद्यपादे दम्पत्योरधिकारोक्तेरिति **तृतीयः** ।

Siddhānta : points out that it relates to देवता only. Though देवताs are two देवतात्त्व is commonly present in them. Hence the use of the word मेधपतये in singular is in order. For this देवतात्व the अधिष्ठानs are two देवताs. Hence, the word in द्विवचन viz., मेधपतिभ्यां is also in order. In view of this both these relate to देवता only.

**सिद्धान्तस्तु,** द्वयमपि देवतापरमेव । द्वयोर्देवताकारकमेकं व्यासज्यवृत्तीति तदभिप्रायेण मेधपतये



अग्नीषोमाख्यदेवतायै इत्येकवन्निगदस्य, देवताकारकाधिष्ठानयोर्द्वित्वात्तदभिप्रायेण अग्नीषोमाभ्यां मेधपतिभ्यामिति द्विवन्निगदस्य चार्थवत्वेन समवेतार्थत्वमस्तीति देवतापरावेव मन्त्राविति ।

**बहुदैवत्ये पशावपि एकवचनान्तमेघपतिशब्दस्य विकल्पाधिकरणम्** (9-3-13)

By the statement ''वैश्वेदवं धूम्रमालभेत' the Vaiśvadeva sacrifice of many deities is enjoined. Here, it is clear that the word 'मेधपतिभ्याम्' has to be substituted by the word मेधपतिभ्यः. Since देवतात्व is found in many deities. But the question whether the word मेधपतये which is in singular also be substituted by plural or not arises.

''वैश्वदेवं धूम्रमालभेत'' इति विहिते बहुदैवत्ये पशौ द्विवन्निगदस्य देवतात्वाधिष्ठानसङ्ख्यावशेनोह्यत्वाद्वैश्वदेवादिषु देवतात्वाधिष्ठानानां बहुत्वात्तदनुरोधेन ''मेधपतिभ्यः'' इत्यूह इत्यविवादम् । ''मेधपतये'' इत्येकवन्निगदस्तु तत्र चोदकप्राप्तः किं बहुवचनान्ततयोहितव्यः, उताविकारेण प्रयोज्य इति **सन्देहे,**

Pūrvapakṣa : argues that since, the singular number cannot be related with many deities, here also the singular word be substituted by plural word.

बहुष्वेकवचनस्यासामर्थ्यात्सोपि मन्त्रः पूर्वोक्तरीत्योहितव्य इति **प्राप्ते,**

Siddhānta : points out that देवताकारक is one in all deities. Hence, there is no need to substitute the singular by plural by way of ऊह.

प्रकृताविव सर्वेषु देवताकारकस्यैक्येन समवेतार्थत्वसम्भवादनूहेनैवैकवन्निगदः प्रयोज्य इति ।

**एकादशिन्यामेकवचनमेघपतिशब्दस्योहाधिकरणम्** (9-3-14)

At पश्वेकादशी sacrifice, many पशुs are enjoined by the statements 'आग्नेयी कृष्णग्रीवः' 'सरस्वती मेषी' 'बभ्रुः सौम्यः' 'पौष्णः श्यामः' with reference to different deities. Here, the question is raised whether the word मेघपतये in the hymn to be recited be changed to plural or not is raised.

''आग्नेयः कृष्णग्रीवः । सारस्वती मेषी । बभ्रुसौम्यः । पौष्णः श्यामः'' इत्यादिना श्रुतबहुदैवत्यपशुगणयुक्तपश्वेकादशिन्यां चोदकप्राप्तो ''मेधपतये'' इत्येकवन्निगद ऊहितव्यो न वेति **सन्देहे,**

Pūrvapakṣin argues that as the देवतात्व is found in all these, there is no need to change the word to the plural.

पूर्वत्रेव गणस्यैव देवतात्वादनूह इति प्राप्ते,

Siddhāntin points out that in the case of वैश्वदेव sacrifice, many deities formed one group. Here, the तद्धित suffix is separately affixed in the case of each deity. Consequently these do not form a group. Hence, the word मेधपतये has to be substituted by the word मेधपतिभ्यः in plural.

पूर्वत्र वैश्वदेवादिषु गणस्य देवतात्वादेवतारूपैक्यादनूह उक्तः । अत्र तु प्रत्येकं तद्धितनिर्देशेन प्रत्येकं देवतात्वावगमेन देवतानां गणत्वमिति देवतारूपभेदात्तावद्देवताभिधानार्थं बहुवचनान्ततयोहनीयो मन्त्र इति । तथा च द्विवन्निगदैकवन्निगदयो र्द्वयोरप्येकार्थत्वाद्विकल्प इति ।

इति नवमाध्यायस्य तृतीयः पादः

## नवमाध्यायस्य चतुर्थः पादः

### षड्विंशतिरस्य वंक्रयः इत्यादौ समस्योहाधिकरणम् (9-4-1)

In अध्रिगुप्रैष निगद it is stated that 'षड्विंशतिरस्य वंक्रयः । ताः अनुष्ठ्य उच्च्यावतात्.' The word वंक्रि means the bones on the two sides of the body of पशु. On each side there are thirteen bones. Counting these twenty six bones, these should be taken out from the body of the पशु while taking the पशु for killing. This hymn has also to be recited at the विकृतियाग of two and many पशु's also. Here, the question is raised whether this hymn is to be recited as it is at विकृतियागs also or the words षड्विंशतिरस्य be substituted by 'द्विपञ्चाशदनयोः वंक्रयः' and अष्टसप्ततिरेषां वंक्रयः' at द्विपशुक and बहुपशुक यागs respectively.

अध्रिगुप्रैषनिगदे श्रूयते ''षड्विंशतिरस्य वङ्क्रयः । ता अनुष्ठ्योऽच्च्यावतात्'' इति । वङ्क्रयो वक्राणि पार्श्वास्थीनि । तान्यस्य पशोः षड्विंशतिसङ्ख्यानि । एकैकस्मिन् पार्श्वे त्रयोदशानाम-वस्थितत्वात् । अनुष्ठ्य अनुष्ठाय । अनुक्रमेण गणयित्वेति यावत् । उच्च्यावतात् उद्धरतादित्यर्थः । अयं



मन्त्रो वङ्क्रीणामुद्धरणे न विनियुक्तः । किन्तु सञ्ज्ञपनाय प्राकृतपशौ नीयमाने होत्रा प्रयुज्यते । स च मन्त्रः पशुगणे चोदकप्राप्तः । स किं तत्र ''षड्विंशतिरस्य'' इत्युभयपदाभ्यासेन प्रयोज्यः, किंवा प्रकृताविव ''षड्विंशतिरस्य'' इत्यविकारेण प्रयोज्यः, उत षड्विंशतिशब्दोऽस्येतिशब्दश्च द्वावपि द्विवचनबहुवचनान्ततयोऽहितव्यौ, यद्वा षड्विंशतिरस्येत्यत्रास्येतिपदस्यैवाभ्यासः, अथ वा यत्र पशुगणे यावत्यो वङ्क्रयस्तत्र तावतीनां समस्य प्रयोगः । अस्येत्यस्य तु अनयोरिति वा एषामिति वा द्विवचनादिना पशुसङ्ख्यानुरोधेनोह इति पञ्चधा **सन्देहः** ।

अत्राद्यः पक्षः सङ्ख्यापशुसम्बन्धप्राधान्याभिप्रायः । द्वितीयस्त्वदृष्टार्थताभिप्रायः । **तृतीयः** सङ्ख्याप्रधान्याभिप्रायः । **चतुर्थः** पशुप्राधान्याभिप्रायः अन्त्यस्तु वंक्रिप्राधान्याभिप्रायः इत्याहुः ।

Pūrvapakṣin suggests five alternatives based on i) संख्यापशुसम्बन्धप्राधान्य (ii) अदृष्टार्थत्व (iii) संख्याप्राधान्य (iv) पशुप्राधान्य (v) वंक्रिप्राधान्य. Stating the ground for the respective alternative.

**पूर्वपक्षस्तु,** षड्विंशतिसङ्ख्याया अस्येत्युक्तपशोश्च यः सम्बन्धस्तत्प्रधानकत्वादस्य वाक्यस्य द्विबहुपशुगणे प्रतिपशु सङ्ख्यासम्बन्धं प्रकाशयितुं षड्विंशतिपदस्यास्येति पदस्य च पशुसङ्ख्यानुरोधे-नाभ्यासः कार्य **इत्याद्यः** ।

Siddhāntin points out that here, पशु is not offered as it is killed. वंक्रिs are offered. Therefore, this statement is वंक्रिप्राधान्य statement. Hence, the respective number of वंक्रिs be substituted by उह in the hymn.

**सिद्धान्तस्तु,** उत्पत्तौ पशुर्यद्यपि चोदितस्तथापि न तस्य साक्षात्साधनत्वं सम्भवति । विशसनादि श्रवणेन तस्य नाशात् । किन्तु हृदयादिद्वारेणैवेति दशमे वक्ष्यमाणत्वेन हृदयादेरेव हविष्ट्वेन पशोस्तद-भावात्षष्ठ्योपसर्जनतया निर्देशाच्च शब्दतोऽर्थतश्चाप्राधान्यम् । वङ्क्रीणान्तु प्रथमानिर्देशेन विशेष्यतया हविष्ट्वेन च शब्दतोऽर्थतश्च प्राधान्यमस्तीति वंङ्क्रिप्रधानमिदं वाक्यं प्राधान्येन वङ्क्रीः प्रकाशयितुं द्विबहु-पश्वनुरोधेन सर्वा वङ्क्रीः समस्य 'द्विपञ्चाशदनयोवङ्क्रयः' 'अष्टसप्ततिरेषां वङ्क्रयः' इत्यूहितव्यमिति ।

### चतुस्त्रिंशद्वाजिनः इत्यनेन अश्वमेधिक सवनीयाश्वस्य चतुस्त्रिंशद् वंक्रिरूपविशेषवचन-विकल्पाधिकरणम् (9-4-2)

At अश्वमेध on the second सौत्य day three सवनीय पशुs viz. अश्व, तूपर and गोमृग

are prescribed. Among these अश्व has thirty four वंक्रिs. The other two have twenty six वंक्रि each. There is a special statement that 'चतुस्त्रिंशत् वाजिनः देवबन्धोः.' There is also a statement that 'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्.' Here, the question is raised whether the special statement चतुस्त्रिंशत् is not to be implimented as it is prohibited by the statement 'न चतुस्त्रिंशदिति ब्रूयात्' or it is to be implimented optionally.

अश्वमेधे द्वितीये सौत्येऽहनि सवनीयाः पशवोऽश्वस्तूपरो गोमृगश्चेति त्रयः श्रुताः । तत्राश्वस्य चतुस्त्रिंशद्वङ्क्रयः । अन्ययोस्तु प्रत्येकं षड्विंशतिः । तत्र वैशेषिको मन्त्रः ''चतुस्त्रिंशद्वाजिनो देवबन्धो-वङ्क्रीरश्वस्य स्वधितिः समेति'' इति । तत्रान्यदपि वचनं ''न चतुस्त्रिंशदिति ब्रूयात् । षड्विंशतिरित्येव ब्रूयात्'' इति । स्वाधितिश्छेदनहेतुभूतायुधविशेषो वङ्क्रीश्छेत्तुं समेतीत्यर्थः । शिष्टः स्पष्टः । तत्र ''न चतुस्त्रिंशत्'' इत्यनेन निषिद्धं ''चतुस्त्रिंशत्'' इति वैशेषिकंवचनं सर्वथा किं निवर्तते, किं वा पक्षे प्रवर्तते इति **सन्देहे,**

Pūrvapakṣa : argues that just as in the case 'न गिरा गिरा इति ब्रूयात्' ऐरं कृत्वा उद्गायेत्.' The word इरा setting aside the word गिरा is adopted without making it optional. Here also the hymn containing the word षड्विंशति sets asides the hymn containing the word चतुस्त्रिंशत् and does not allow it as optional.

यथा ''न गिरा गिरेति ब्रूयात् । ऐरं कृत्वोद्गायेत्'' इति पाठप्राप्तं गिरापदं निषिध्य प्रत्यक्षवाक्य-विहितमिरापदं निषिद्धं गिरापदं नित्यवद्बाधित्वा सर्वदाशब्दप्रयोज्यमित्युक्तमाद्यपादे **आम्नातादन्य-दधिकारे** इत्युपान्त्यनये । तथात्रापि पाठप्राप्तं चतुस्त्रिंशत्पदयुक्तं मन्त्रमत्र निषिद्य विहितः षड्विंशति-पदयुक्तोऽध्रिगुमन्त्रो निषिद्धं तु चतुस्त्रिंशत्पदयुक्तं मन्त्रं नित्यं बाधित्वा सदा प्रयोक्तव्यः । अन्यथा गिरापदमपि वैशेषिकमन्त्रवत्पक्षे स्यादिति **प्राप्ते**

Siddhānta : points out that there is important difference between the statements न गिरा गिरा इति ब्रूयात् । ऐरं कृत्वा उद्गायेत्' and the statement 'चतुस्त्रिंशत् वाजिनः' 'न चतुस्त्रिंशदिति ब्रूयात्' 'षड्विंशतिरित्येव ब्रूयात्'. Here, the statement षड्विंशतिरित्येव ब्रूयात् is not विधायक as its विधिशक्ति is prevented by एवकार. However, चतुस्त्रिंशत् part of this statement is a prohibition. This prohibition requires the envisaging of its enjoining. Thus न चतुस्त्रिंशत् statement results in



विहितप्रतिषिद्ध. This results in making it optional as in the instance of षोडशी ग्रहण and अग्रहण.

**सिद्धान्तः** । ''ऐरं कृत्वा'' इति प्रत्यक्षवचनेनेरापदं गिरापदस्थाने विहितं पाठप्राप्तं गिरापदं बाधत इति युज्यते । तेनैव निवृत्तस्य गिरापदस्य ''न गिरा गिरा'' इति निषेधोऽनुवादः । न विधिः । इह तु यदि ''षड्विंशतिरित्येव ब्रूयात्'' इति वाक्यं षड्विंशतिविधायकं स्यात्तदा हि तेनैवान्य-निषेधप्राप्तेः ''न चतुस्त्रिंशत्'' इति निषेधोऽनुवादः सन्न निषेध्यस्य प्राप्तिमपेक्षेतेति स्यात् । षड्विंशति वाक्यमेवकारेण प्रतिहतविधिशक्तिकतया न विधायकम् । किन्तु ''न चतुत्रिंशत्'' इति निषेधवाक्यमेव निषेधं विधत्ते । तस्यैव च स्तुत्यर्थश्चोदकप्राप्तषड्विंशत्यनुवादी ''षड्विंशतिरित्येव'' इति मन्त्रः । निषेधश्च प्राप्तिपूर्वक इति वैशेषिकवचनस्य प्रकरणपाठबलेन ''चतुस्त्रिंशदिति ब्रूयात्'' इत्यनुमितवाक्येन प्राप्तिमपेक्ष्य निषेधतीति वाच्यम् । एवञ्च विहितप्रतिषिद्धत्वाच्छोडशीग्रहणवद्विकल्पेन पक्षे प्रवर्तते वैशेषिकमन्त्रः ।

### आश्वमेधिक सवनीयाश्वस्य 'न चतुस्त्रिंशदिति ब्रूयात्' इत्यनेन समस्तायाः ऋचो निषेधाधिकरणम् (9-4-3)

In the earlier adhikaraṇa, it was stated that the विशेषवचन viz. चतुस्त्रिंशत् वाजिनः देवबन्धोः etc stated in respect of सवनीयाश्व has to be optionally employed and the statement containing the word षड्विंशति has to be employed as alternative. Here, the question is raised whether, the alternative provision is in respect of the entire hymn or the word चतुस्त्रिंशत् only be substituted by the word षड्विंशति in the same hymn.

पूर्वत्राश्वे वैशेषिकवचनं पक्षे प्रवर्तते । पक्षान्तरे तु प्राकृतमित्युक्तम् । तत्र किं ''न चतुस्त्रिंशत्'' इति वाक्यं वैशेषिकं वचनमेव निवर्त्य तस्य स्थाने प्राकृतं षड्विंशतिपदयुक्ताध्रिगुप्रैषवाक्यमेव विदधाति, किं वा वैशेषिकमन्त्रमनिवर्त्यैव तद्गतचतुस्त्रिंशत्पदमात्रं निवर्त्य तस्य स्थाने षड्विंशतिपदं विदधाति इति **सन्देहे,**

Pūrvapakṣa : argues that here in the same hymn the substitution of the word चतुस्त्रिंशत् by the word षड्विंशति is enjoined but not the setting aside of the entire hymn and the recitation of the hymn containing the word षड्विंशति.

तथाऽत्रापि ''चतुस्त्रिंशद्वाजिनो देवबन्धोः'' इति पठित एव मन्त्रे पाठप्राप्तं चतुस्त्रिंशत्पदं निषिध्य तत्स्थाने षड्विंशतिपदमेव विधीयते। न तु ''चतुस्त्रिंशत्'' इति प्रतीकमुखेन पठितमेव मन्त्रं निषिध्य तत्स्थाने षड्विंशतिपदयुक्तः प्राकृतो मन्त्रः प्रतिप्रसूयते। तथा च ''षड्विंशतिर्वाजिनो देवबन्धोः'' इति किञ्चिद्विकारेण वैशेषिक एव मन्त्रो नियमेन वक्तव्य इति पूर्वत्र पाक्षिकाध्रिगुप्रैष प्राप्त्युक्तिरयुक्तेति प्राप्ते

Siddhānta : In the earlier adhikaraṇa it is stated that by the statement 'न चतुस्त्रिंशत्' the prohibition of चतुस्त्रिंशत् is enjoined and the statement 'षड्विंशतिरेव' is अनुवाद. This can be justified only by taking the position that the entire hymn containing word चतुस्त्रिंशत् is to be substituted by the hymn containing the word षड्विंशति but not by the substitution of the word चतुस्त्रिंशत् by the word षड्विंशति.

**सिद्धान्तः** पूर्वत्रहि ''षड्विंशतिरित्येव, इति वाक्यं न विधिः। एवकारोपहतविधिशक्तिकत्वात्। किन्तु ''न चतुस्त्रिंशत्'' इत्येष निषेधविधिः। षड्विंशतिरितित्वनुवाद इत्युक्तम्। स यदि निषेधः कृत्स्नवैशेषिकमन्त्रस्य स्यात्तदा चोदकेन षड्विंशतिपदोपेतप्राकृताध्रिगुप्रैषवाक्यस्य चोदकतः प्राप्तिसम्भवात् ''षड्विंशतिरित्येव'' इति वाक्यस्यानुवादता प्रागुक्ता युज्यते। वैशेषिकमन्त्रगतपदमात्रस्य निवृत्तौ तत्राश्वे वैशेषिकमन्त्रस्यैव वक्तव्यत्वेन चोदकतः प्राकृताध्रिगुवचनस्याप्राप्तेरनुवादता न स्यात्। तस्मान्मन्त्रस्यैव प्रतीकमुखेन निषेध इति पूर्वोक्तदिशा प्राकृतस्यापि पक्षे प्राप्तिरिति।

Here, another question is raised. In the alternative that the hymn containing the word षड्विंशति be recited in respect of सवनीयाश्व, whether taking into account the other two पशुs viz तूबर and गोमृग 'the statement 'षडशीतिरेषां वंक्रयः' be adopted or in respect of तूबर and गोमृग the statement 'द्विपञ्चाशदनयोः वंक्रयः' and in respect of अश्व the statement षड्विंशतिरस्य वंक्रयः be adopted separately.

It is ruled that the statement 'षडशीतिरेषां वंक्रयः' be adopted.

यदा तु प्राकृतमध्रिगुप्रैषवचनं पक्षे प्रवर्तते तदा स किमश्वतूबरगोमृगाणां त्रयाणां ''षडशीतिरेषां वङ्क्रयः'' इति समस्य प्रयोज्यम्, उत तूबरगोमृगयोरेव ''द्विपञ्चाशदनयोः वङ्क्रयः'' इति समस्य वचनं प्रयोज्यं, अश्वे तु ''षड्विंशतिरस्य वङ्क्रयः'' इति प्रयोज्यमिति **सन्देहे**, ''षड्विंशतिरित्येव ब्रूयात्''



इति वचनादेवमेव प्रयोगो अश्वे, अन्ययोस्तु समस्येति प्राप्ते, ''इत्येव ब्रूयात्'' इति वचनस्याविधित्वेन निषेधस्यैव विधितयोक्तत्वेन प्राकृतमध्रिगुवचनं समस्यैव ''षडशीतिरेषां वङ्क्रयः'' इति सर्वेषां समासेनैव प्रयोज्यमिति सिद्धान्त इति।

### अग्नीषोमीयपशौ उरूकपदेन वपाभिधानाधिकरणम् (9-4-4)

In अध्रिगु वचन a statement is found 'वनिष्टु यस्य मा राविष्टोरूकं मन्यमानाः.' Here, the word वनिष्टु refers to an item in the body of the पशु close by वपा. With reference to this it is stated that 'do not cut it mistaking to be वपा. Here, the question is raised whether the word उरूक refers to वपा or उलूक bird.

अध्रिगुवचन एव श्रूयते ''वनिष्टुमस्य मा राविष्टोरूकं मन्यमानाः'' इति। वनिष्टुर्नाम वपासमीपवर्ती पश्वङ्गविशेषः। तमुरूकं मन्यमानाः। उरूकं बुद्ध्वेति यावत्। मा राविष्ट तस्य लवनं छेदनं मा कुरुतेत्यर्थः। तत्र किमुरूकशब्दः काकविरोधिन उलूकशब्दितपक्षिविशेषस्य वाचकः, उत वपावाचक इति **सन्देहे**,

Pūrvapakṣa : argues that in Sanskrit words र and ल are interchageable. Hence, this word refers उलूक bird.

रोमसु लोमपदप्रयोगदृष्ट्या ऌलयोरभेदानुमानादुरूकशब्दस्योलूकपरत्वेन वपोद्धरणकाले वनिष्टुमुलूकसदृशं मत्वा मा राविष्टेति मन्त्रार्थः।

Siddhānta : No purpose will be served in this context by taking this word in the sense of उलूक. Hence, this word be taken in the sense of वपा as explained in the bhāṣya. Since, वनिष्टु is close by वपा it is stated in the above statement that do not cut it mistaking it to be वपा.

**सिद्धान्तः**, किमत्र वनिष्टोर्लवनं निषिध्यते। किं वा तत्रोलूकसादृश्यबुद्धिः। नाद्यः। ''वनिष्टुमग्नीधे षडवत्तम्'' इति विधानेनावश्यलवितव्यस्य निषेधायोगात्। न द्वितीयः। सादृश्यबुद्धिनिषेधस्य दृष्टासम्भवेनादृष्टार्थत्वापातात्। तस्मादुरुर्विस्तीर्णश्रीरूको मेदो यत्रेति भाष्योक्तव्युत्पत्त्योरूकशब्दो वपावचनः। अवयवशक्तेः रूढितो दौर्बल्येपि दृष्टार्थत्वानुरोधेन सैव ग्राह्येति वपोद्धरणकाले सन्निधानाद्वपाभ्रान्त्या वनिष्टोर्लवनं प्रसक्तमाशङ्क्य निरसितुमिदं ''वनिष्टुमस्य'' इति वचनमिति।

### अध्रिगौ 'प्रशसा बाहू' इत्यत्र प्रशसा शब्दस्य प्रशंसापरत्वाधिकरणम् (9-4-5)

In अध्रिगु प्रैष the statement 'प्रशसा बाहू कृणुतात्' occurs. Here, the question is raised whether the word प्रशसा is instrumental case and conveys the meaning असिना or it is in occusative case and conveys the meaning प्रशस्तम्.

अध्रिगुप्रैष एव श्रूयते ''प्रशसा बाहू कृणुतात्'' इति । तत्र प्रशसेति पदं तृतीयान्तं सदसि-नेत्यर्थकम्, उत द्वितीयान्तं सत्प्रशस्तरूपार्थकमिति **सन्देहे,**

Pūrvapakṣa : argues that the word प्रशसा should be taken in the sense of असिना i.e. sword. The sentence should be interpreted a 'असिना बाहू छेत्तव्यौ' the two arms be cut by the sword. This will make it दृष्टार्थ. On the other hand if the word is taken in the sense of प्रशस्त it will be अदृष्टार्थ. When दृष्टार्थत्व is possible it is not proper to adopt अदृष्टार्थत्व.

प्रपूर्वात् ''शसु हिंसायाम्'' इत्यतः करणे क्विप्प्रत्यये प्रशस् इति स्थिते प्रशसेति सकारान्त-तृतीयान्तं पदम् । प्रशसा असिना पशोर्बाहू छेत्तव्यावित्यर्थः । एवञ्च यथा पूर्वत्रादृष्टार्थत्वदोषा-दुरूकशब्दस्य न पक्षिविशेषपरत्वं तथा प्रशसेति पदस्यादृष्टार्थत्वदोषप्रसङ्गान्न प्रशस्तार्थकत्वं वाच्यमिति **प्राप्तम्** ।

Siddhānta : points out that by the 'स्वधितिना पशुं विशास्ति' स्वधिति i.e. an instrument to cut is already enjoined. Therefore, another instrument viz. असि cannot be employed for the same purpose. Hence, the word प्रशसा be taken in the sense of प्रशस्त and the sentence be interpreted as 'प्रशस्तौ बाहू कृणुतात्' i.e. the arms be cut without mutilation.

**सिद्धान्तस्तु,** ''स्वधितिना पशुं विशास्ति'' इति विहितस्वधितिसाधनके छेदने करणत्वमसेः प्रतिपादयितुमशक्यमित्यगत्याऽदृष्टार्थतापातेऽपि प्रपूर्वस्य ''शंसु स्तुतौ'' इत्यस्य कर्मणि निष्पन्नस्य द्वितीयाद्विवचनान्तस्य ''सुपां सुलक्'' इत्यादिना द्वितीयाविभक्तेरौकारलोपे आकारादेशे मकारलोपे च प्रशसेति सिध्द्या ''प्रशस्तौ बाहू कृणुतात्कुरुतात्'' इत्यर्थतया प्रशस्तार्थकोऽयं शब्दः । बाह्वोः प्रशस्तत्वञ्चाविकलत्वमिति कात्स्न्र्येन बाह्वोरुद्धरणरूपदृष्टार्थत्वान्नादृष्टार्थत्वमपीति ज्ञेयम् ।



### अध्रिगौ श्येनमस्य वक्षः इत्यादौ श्येनादिशब्दानां कात्स्न्र्य वचनाधिकरणम् (9-4-6)

In अध्रिगुप्रैष by the statements 'श्येनमस्य वक्षः कृणुतात्' etc. cutting of various limbs of पशु viz. वक्षः i.e. chest, भुजौ i.e. arms अंसौ i.e. shoulders, ऊरू i.e. thighs. जानू i.e. knees is stated. The words conveying these are used with the words conveying श्येन, कच्छन, शलाका, कपार etc.

Here, the question is raised whether the words श्येन, शलाका etc used here convey the meaning the श्येनसदृश, शलाकासदृश etc or the respective limbs be taken out without mutilation.

अध्रिगुप्रैष एव श्रूयते ''श्येनमस्य वक्षः कुणुतात् । शला दोषिणी । कश्यपेवांसौ । कवषोरू । स्रेकपर्णा ष्ठीवन्ता'' इति । अस्यार्थः । श्येनसदृशं वक्षः । शलाका सदृशौ दोषिणी भुजौ । कश्यपः कच्छपस्तत्सदृशांवसौ । कवषः कवाटस्तत्सदृशावूरू । स्रेकपर्णः करवीरपत्रं तदाकारावष्ठीवन्ता अष्ठीवन्तौ जान्वोरधोभागौ । कुणुतात् कुरुतादिति सर्वत्रान्वयः । किमत्र श्येनादिसादृश्यमेव वक्षःप्रभृतिषु विवक्षितम्, उत वक्षःप्रभृतेः कात्स्न्र्येनोद्धरणमभिप्रेतमिति **सन्देहे,**

Pūrvapakṣa : argues that since, the words श्येन etc occur, these should be taken in the sense of श्येनसदृश etc. only.

प्रसिद्धश्येनादिशब्दसन्निधानात्तत्सादृश्यमेवात्राभिप्रेतम् । ''पिष्टपिण्डाः सिंहाः क्रियन्ताम्'' इत्यादौ प्रसिद्धसिंहशब्दसन्निधौ श्रुतानां पिष्टपिण्डानां तदाकारतया करणावगमात् ।

Siddhānta : points out tht if the limbs are cut into the shape of श्येन etc it results in the mutilation of वक्षः etc limbs. Consequently these will cease to be हविर्द्रव्य. Hence, these statements only mean that these limbs be carefully taken out.

**सिद्धान्तस्तु,** नात्र श्येनादिशब्देन तत्सादृश्यमभिमतम् । तथात्वे अदृष्टार्थताप्रसङ्गात् । कर्तने सति वक्षःप्रभृत्याकारवैकल्येन हविर्नाशप्रसङ्गात् । एवञ्च पशोरविकलेषु वक्षःप्रभृत्यवयवेषु सत्सु स्वत एव तेषु श्येनादिसादृश्यमस्तीति यथा तन्न नश्यति तथोद्धरणीयमिति विवक्षया श्येनादिशब्दोऽत्र वक्षः प्रभृतिषु प्रयुक्तो न श्येनादिसारूप्याभिप्रायेण । तथा च श्रुतिः ''गात्रं गात्रमस्यानूनं कुणुतात्'' इति ।

## दर्शार्थोद्धृताग्निलोपे प्रायश्चित्तरूप ज्योतिष्मत्या अननुष्ठगनाधिकरणम् (9-4-7)

For performing अग्निहोत्र in the morning and evening, the fire is taken from gārhapatya and placed in āhavanīya. If this fire extinguishes before performing agnihotra, performing jyotiṣmati iṣti is prescribed as prayaschitta. On the darśa day the fire is brought for performing darśa. Here, the question is raised whether the jyotiṣtomeṣti be performed if this fire extinguishes before the performance of agnihotra or not.

''संसर्गिषु'' इत्यारभ्यैतावत्पर्यन्तमेकादशनयैरध्रिगुप्रैषगतपदानामवान्तरकार्यनिरूपणमूहसिध्यर्थं प्रस्तुतम्। तत्प्रसङ्गाज्ज्योतिष्मतीष्टेः कार्यविशेषोऽत्र चिन्त्यत इति **सङ्गतिर्ध्येया**। अग्निहोत्रप्रकरणे श्रूयते ''अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत्'' इति। **अस्यार्थः**, सायं प्रातश्चाग्निहोत्रार्थं गार्हपत्यादुद्धृत्याहवनीयेऽग्निः प्रणीयते। सोऽयं प्रणीतोऽग्निर्यदि कदाचिदकृतेऽग्निहोत्रे नश्येत्तदेयमिष्टिः कार्येति। तत्र पर्वणि दर्शार्थमुद्धृतेऽग्नावग्निहोत्रप्रवृत्तेः पूर्वमुद्वाते सतीयमिष्टिः कार्या न वेति **सन्देहे,**

Pūrvapakṣa : This Iṣti is ārādupakāraka for darśa like prayāja. Hence, this Iṣti has to be performed even when the fire brought for the darśa extinguishes.

प्रयाजादिवत्फलापूर्वसहकारितया आरादुपकारकमेवेदम्। न तु प्रोक्षणादिवद्द्रव्यगतातिशय-हेतुतया सामवायिकमिति दर्शार्थोद्धृताग्नेरुद्वानेऽपीयमिष्टिः कार्येति **प्राप्ते**

Siddhānta : points out that this Iṣṭi is an auxiliary of agnihotra only, but not of any other. Hence, it need not be performed when the fir brought for darśa extinguises.

**सिद्धान्तः**, ततश्चोद्वाताग्न्युत्पादनद्वारा अग्निहोत्राङ्गत्वात्सामवायिकैवेयमिष्टिः। तथा चाग्निहोत्रार्थ-मुद्धृताग्नेरुद्वानेऽस्योत्पादनरूपं संस्कारं कुर्वन्तीयमिष्टिरग्निहोत्राङ्गं स्यात्। नान्यार्था स्यात्। अतो दर्शार्थोद्धृताग्नेरुद्वाने सति नैतत्प्रायश्चित्तरूपेष्टिः कार्येति।

## धार्योद्वाने प्रायश्चित्तरूप ज्योतिष्मत्यननुष्ठानाधिकरणम् (9-4-8)

The statement 'धार्यो गतश्रियः आहवनीयः' occurs without reference to any



particular sacrifice. Three persons viz. शुश्रुवान्, ग्रामणी and राजन्य are known as गतश्रियः. The expression गतश्रियः means धनाढ्याः. In respect of these the question is raised. If the fire placed by these from garhapatya into āhavaniya extinguishes at the time of agnihotra, the jyotiṣtomeṣti be performed or not.

''धार्यो गतश्रिय आहवनीयः'' इत्यनारभ्य श्रूयते। गतश्रियस्तु ''त्रयो वै गतश्रियः शुश्रुवान् ग्रामणीः राजन्यः'' इति श्रुतिप्रसिद्धा धनाढ्याः। तत्र यदि ध्रियमाणोऽग्निरग्निहोत्रकाले उद्वायति तदा किमियमिष्टिः कार्या, न वेति सन्देहे,

Pūrvapakṣa : argues that the fire placed by these is meant for all rituals including agnihotra. Hence, this iṣti has to be performed if the fire extinguishes at the time of agnihotra.

पूर्वत्राग्नि होत्रार्थोद्धृताग्नेरुद्वाने हीयमिष्टिः कार्येत्युक्तम्। गतश्रीत्वेन च निमित्तेन गार्हपत्यादु-द्धृत्याहवनीये धार्यमाणोऽग्निस्तत्र करिष्यमाणसर्वकर्मार्थो न पुरुषार्थः। तथात्वे फलकल्पनाप्रसङ्गात्। अतो भवत्ययमग्निहोत्रार्थोऽपि। न च सर्वकर्मसमुदायार्थोऽग्निर्न समुदायिनामङ्गमिति वाच्यम्। समुदायस्याफलत्वेन फलवतां समुदायिनामेव प्रत्येकमङ्गत्वस्य वाच्यत्वात्तस्मिन्नुद्वाते निमित्त-सत्त्वात्कार्यैव प्रायश्चित्तरूपेष्टिरिति प्राप्ते

Siddhānta : points out that when the fire brought for the purpose of agnihotra extinguishes before the commencement of agnihotra, then only this Iṣti has to be performed but not in respect of such fire which is brought for the purpose of some other ritual and extinguishes when agnihotra is on.

सिद्धान्तः, यद्यप्ययं धार्योऽग्निरग्निहोत्रार्थो भवति तथाप्यग्निहोत्रकाले तदुद्वानं नेष्टेर्निमित्तम्। किन्तु योग्निरग्निहोत्रोद्देशेनोद्धृत उद्वातः स एव। ''यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्रे'' इत्यादिश्रुतेः। अयञ्चाग्नि-रन्यार्थमेवोद्धृतो गतश्रीत्वेन निमित्तेन धार्यत इत्यर्थादग्निहोत्रस्याप्युपकरोतीति न तस्मिन्नुद्वाते प्रायश्चित्तेष्टिरियं कार्येति।

## दर्शार्थकस्योद्धरणस्यामन्त्रकत्वाधिकरणम् (9-4-9)

In this adhikaraṇa the question is raised whether the मन्त्र 'वाचा त्वाहोत्रा' etc which is an auxiliary of अग्निहोत्र प्रणयन be recited when the fire is brought for darśa is raised.

दर्शार्थेनाग्न्युद्धरणकाले अग्निहोत्रप्रणयनाङ्गभूतो ''वाचा त्वा होत्रा, प्राणेनोद्गात्रा'' इत्यादिमन्त्रः प्रयोक्तव्यो न वेति **सन्देहे,**

Pūrvapakṣa : argues that agnihotra is performed in the very fire which is brought for darśa. Hence, the mantra concerned has to be recited at the time of bringing the fire for darśa.

दर्शार्थमप्युद्धृतेऽग्नावग्निहोत्रस्य क्रियमाणत्वेनान्यार्थोद्धरणत्वेऽप्यस्याप्यग्नि होत्रसाधनत्वात्साधन-निवेशिनो धर्मा इति तदङ्गमन्त्रस्तदा प्रयोक्तव्यः। दर्शार्थाग्न्युद्धरणस्याग्निहोत्राङ्गत्वं वाऽभ्युपेत्य तन्मन्त्र प्रयोगोऽङ्गीकार्यः। अन्यथाऽग्निहोत्रस्य प्रणयनाभावेन वैगुण्यप्राप्तेरिति **प्राप्ते**

Siddhānta : points out that bringing fire for darśa is enjoined after the performance of morning agnihotra. Time is an important factor. Therefore, the Mantra concerned is not to be recited while bringing the fire for darśa.

**सिद्धान्तः,** दर्शार्थमुद्धरणं प्रातरग्निहोत्रे हुते पश्चाद्विहितम्। अग्निहोत्रार्थं तूद्धरणं सायमधिवृक्षे सूर्ये प्रातराविः सूर्ये च काले विहितम्। कालस्य च गुणत्वेऽप्यनुपादेयतयाऽङ्गान्तरवत्त्यागायोगात्तस्मिन् काले सति तत्कालजीविनं पुरुषमधिकृत्य साङ्गं कर्म विधीयते इति तत्काल एव कर्म कार्यमिति **अभ्यासो वा कर्मशेषत्वात्** इति षष्ठस्य द्वितीयपादीयसप्तमाधिकरणेऽभिधानाद्विहितकालात्प्राक्पश्चाद्वा कर्मणि पुरुषस्य नाधिकारः। अनधिकारिणा कृतश्च न फलाय भवतीत्यकाले नास्ति समन्त्रकमुद्धरण-मिति तदा न प्रयोज्यो मन्त्र इति।

## प्रायणीय चरौ प्रदान धर्माणामननुष्ठानाधिकरणम् (9-4-10)

At Jyotiṣṭom the statement 'आदित्यः प्रायणीयः पयसि चरुः' occurs.

Here, the question is raised whether in respect of पयस्, वत्सापकरण etc सान्नाय धर्मs are to be observed or उत्पवन etc प्रणीतधर्मs be observed.

ज्योतिष्टोमे ''आदित्यः प्रायणीयः पयसि चरुः'' इति श्रूयते। तत्र किं पयसि सान्नाय्यधर्मा वत्सापाकरणादयः कार्याः, उत प्रणीताधर्मा उत्पवनादयः कार्या इति **सन्देहे,**

Pūrvapakṣa : argues that in प्रायणीयेष्टि both चरु and पयस् are enjoined as offerings. Hence, वत्सापकरण etc सान्नायधर्मs should be observed.



चरुपयसी द्वे अपीह प्रदेयतया देवतासम्बन्धित्वेन विधीयेते। अन्यथा ''चरुरादित्यः'' इति द्रव्यदेवतयोस्सम्बन्धः ''स च चरुः पयसि'' इति चरुपयसोः सम्बन्धश्च विधेय इति वाक्यभेद-स्युरेवेति **प्राप्तम्।** प्रसङ्गात्। एवञ्च पूर्वत्र दर्शार्थोद्धरणेऽग्निहोत्राङ्गमन्त्रस्याप्रवृत्तावपीह प्रायणीयेष्टौ पयसि प्रदेयधर्माः

Siddhānta : points out that here, offering of चरु mixed with पयस् to आदित्य देवता is enjoined. पयस् is not separatly offering here. It is utilised for प्रणयनकार्य. Hence, उत्पवन etc प्रणीतधर्मs should be observed for पयस्.

**सिद्धान्तस्तु,** आधारभूतेन पयसा विशिष्टस्य चरोरादित्य इति देवतासम्बन्धविधावेकार्थविधानेन वाक्यभेदाप्रसङ्गात्प्रथमानिर्दिष्टश्चरुरेव हविः। सप्तमीनिर्दिष्टपयस्त्वाधारत्वेन सम्बध्यत इत्येवमवाक्यभेदे सति सप्तमीनिर्देशस्याविवक्षोपगमेन चरुतुल्यकक्ष्यत्वमयुक्तम्। तस्मात्प्रदेयत्वाभावात्पयसि प्रदेय-सान्नाय्यधर्मा न कार्याः। किन्तु प्रणीताकार्यार्थं त्वात्प्रणीताधर्मा उत्पवनादय एव कार्या इति।

## आयुदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम् (9-4-11)

At अभ्युदयेष्टि the statements 'ये स्थविष्ठाः तानिन्द्राय प्रदात्रे दधंश्चरुम्' 'ये अणिष्ठाः तान् विष्णवे शिपिविष्टाय शृते चरुम्' occur. Here, the question is raised whether for the दधि and शृत the सान्नायधर्माः be observed or प्रणीताधर्माः be observed.

अभ्युदयेष्टौ श्रूयते ''ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम् येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्'' इति। तत्र दधिशृतयोः किं प्रदेयसान्नाय्यधर्मा कार्याः, उत प्रणीताधर्मा इति **सन्देहे,**

Pūrvapakṣa : argues that since the word दधन् is in the locative case suffix, it is not प्रदेय i.e. the हविस् to be offered. Hence, प्रणीताधर्मs only should be observed but not सान्नायधर्मs which are to be observed for प्रदेय.

पूर्वत्रोक्तदिशा ''दधन् शृते'' इति सप्तमीनिर्देशेन श्रपणार्थत्वप्रतीत्या प्रदेयत्वाप्रतीतेः प्रणीताधर्मा उत्पवनादय एव कार्या इति **प्राप्ते**

Siddhānta : points out that by the statements 'ये स्थविष्ठाः तानिन्द्राय etc., for the हविर्द्रव्य i.e. स्थविष्ठतण्डुल, इन्द्ररूपदेवतान्तर सम्बन्ध is enjoined withdrawing it

from earlier देवतासम्बन्ध on the ground that it was not offered at the prescribed time. Hence, प्रदेयधर्मs i.e. सान्नायधर्मs have to be observed.

**सिद्धान्तः** प्रवृत्त एव दर्शकर्मणि कालापराधनिमित्ते सति पूर्वदेवताभ्योऽपनीतानां हविषां देवतान्तरसम्बन्धोऽपेक्षितो विधीयते स्थविष्ठानां तण्डुलानां दध्नश्च प्रदातृत्वगुणविशिष्टेन्द्रो देवतेत्यादिना। न तु तण्डुलानां देवतासम्बन्धो दधिशृतयोः प्रणीताकार्यकरत्वञ्च विधीयते। प्राप्ते कर्मण्यनेकार्थविधौ वाक्यभेदप्रसङ्गात्। तस्माद्दधिशृतयोः प्रदेयधर्मा एव कार्या इति।

### पशुकामेष्टौ दधिशृतयोः प्रदेयधर्माननुष्ठानाधिकरणम् (9-4-12)

पशुकामेष्टि is enjoined by the statement 'यः पशुकामः सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्'.

In respect of this इष्टि it is stated that 'ये मध्यमाः तान् विष्णवे शिपिविष्टाय शृते चरुम्' 'ये स्थविष्ठाः तानिन्द्राय दात्रे दधनि चरुम्.'

Here, the question is raised whether for दधि and पयस् प्रदेयधर्मs are to be observed or प्रणीताधर्मs.

''यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्'' इति ''ये मध्यमास्तान्विष्णवे शिपिविष्टाय शृते चरुम्। ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधनि चरुम्'' इति च श्रुतम्। तत्र किं दधिपयसोः प्रदेयधर्माः, उत प्रणीताधर्मा इति **सन्देहे,**

Pūrvapakṣa : argues that the statements here are the same as in अभ्युदयेष्टि, hence, pradeya dharmas have to be observed for दधि and शृत.

अभ्युदयेष्ट्या समानश्रुतित्वात्तेनैव न्यायेन दधिशृतयोः प्रदेयधर्मा इति **प्राप्ते,**

Siddhānta : points out that there is a difference between अभ्युदयेष्टि and पशुकामेष्टि. The आधारत्व conveyed by the locative case suffix in the word is not taken into account in the case of अभ्युदयेष्टि on the ground that many auxiliaries cannot be prescribed for a ritual that is already enjoined. However, in the case of पशुकामेष्टि, it is an अपूर्वकर्म i.e. newly enjoined कर्म. Hence, the आधारत्व



the meaning of the locative suffix in the word दधनि and पयसि has to be taken into account. Hence, प्रदेयधर्मs are not to be observed for these but प्रणीताधर्मं have to be observed.

अभ्युदयेष्टौ प्राप्ते कर्मण्येनेकगुणविधानायोगेन सप्तम्यर्थस्याधारत्वस्याविवक्षायामप्यत्रापूर्वकर्मत्वविधानात्पयसि चरुरित्यत्रेव सप्तम्यर्थाविवक्षा न युक्तेत्यप्राप्तविधानयोर्दधिपयसोस्सप्तम्या श्रपणार्थत्वावगमादित्यर्थः। ''आदित्यः प्रायणीयः पयसि चरुः'' इत्यत्र चरुपयोवत्प्रणीताकार्य एव विधानान्न कार्याः प्रदेयधर्माः। किन्तु प्रणीताधर्मा एवेति।

### ज्योतिष्टोमे श्रयणानां प्रदेयधर्माननुष्ठानाधिकरणम् (9-4-13)

At ज्योतिष्टोम by the statements 'पयस्त मैत्रावरुणं शृणाति' 'सक्तुभिः मन्थिनम्' 'धानाभिः हारियोजनम्' etc. mixing of पयस् etc. with सोमरस kept in ग्रह types vessels is prescribed.

Here the question is raised whether the प्रदेयधर्मs are to be observed for पयस् etc that are mixed with सोम or not.

ज्योतिष्टोमे ''पयसा मैत्रावरुणं शृणाति। सक्तुभिर्मन्थिनम्। धानाभिर्हार्योजनम्। हिरण्येन शुक्रम्। आज्येन पात्नीवतम्'' इत्यादिना पयःप्रभृतिभिर्द्रव्यैर्ग्रहपात्रगत सोमरसस्य शृणातीति मिश्रणं श्रूयते। तत्र किं श्रयणार्थेषु पयःप्रभृतिषु सोम इव प्रदेयधर्माः क्रयादयो भवन्ति, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that सोम mixed with पयः etc is offered as हविस्. Hence, पयस् etc. are also हविस्. Otherwise mixing with पयस् etc becomes purposeless. In view of this पयस् etc are also प्रदेयs i.e. offerings. Therefore, प्रदेयधर्मs क्रय etc have to be observed for पयस् etc also.

पयःप्रभृतिभिर्मिश्रिते सोमे हूयमाने पयोऽपि होमेन सम्बध्यत इति पयःप्रभृत्यपि प्रदेयमेव। अन्यथा पयःप्रभृतिभिर्मिश्रणस्य व्यर्थतापत्तेः। सोमरससंस्कारकत्वेनादृष्टं वा कल्प्यं स्यात्। एवञ्च पूर्वत्र दधिपयसोरन्यथापि दृष्टार्थत्वलाभेन प्रदेयत्वाभावेऽपि पयःप्रभृतीनां दृष्टार्थत्वाय प्रदेयत्वमेवेति प्रदेयधर्माः क्रयादयः कार्या इति **प्राप्ते**

Siddhānta : points out that the connection of पयस् etc either with याग or

with देवता is not conveyed by any pramāṇa. Hence, पयस् etc mixed with सोम are सोमसंस्कारकs. This is also indicated by the instrumental case suffix in the words पयसा etc.

**सिद्धान्तः**, मानान्तरसिद्धेऽर्थे दृष्टादृष्टविचारः । न ह्यत्र पयःप्रभृतेर्देवतासम्बन्धो यागसम्बन्धो वा मानान्तरावगतः । येन पयःप्रभृतेर्होमसम्बन्धाद्यागनिर्वृत्तिरूपं दृष्टं फलं कल्प्येत । सोमसंस्कारकत्वं तु पयसेत्यादितृतीयया सोमस्य संस्कार्यत्वञ्च मैत्रावरुणमित्यादि द्वितीययाऽवगम्यते । तस्मात्पयःप्रभृति सोमसंस्कारकम् । न प्रदेयमिति न तत्र प्रदेयधर्माः कार्या इति ।

### 'ईशानाय परस्वतः' इत्यनेन यागान्तरविधानाधिकरणम् (9-4-14)

At अश्वमेध the statement 'ईशानाय परस्वतः आलभेत' occurs. The word परस्वतः means अरण्यपशवः. Near this statement the statement पर्यग्निकृतानारण्यानुत्सृजति occurs.

Here, the question is raised whether by the statement 'ईशानाय परस्वत आलभते' mere touching of पशु is enjoined and by the statement 'पर्यग्निकृता नारण्यान् विसृजति' letting off the पशु is enjoined or ईशानवाक्य enjoins a yāga for ईशानदेवता with the offering of अरण्यपशु, and पर्यग्निवाक्य enjoins the आलब्धपशु-द्रव्यत्याग.

अश्वमेधे ''ईशानाय परस्वत आलभते'' इति श्रूयते । तत्सन्निधाविदं पठ्यते ''पर्याग्निकृता-नारण्यानुत्सृजति'' इति । **परस्वत** इत्यस्याऽरण्यमृगविशेषानित्यर्थः । तत्र किं ''ईशानाय परस्वत आलभते'' इत्यत्र परस्वतां ''आलभते'' इति स्पर्शमात्रं विधीयते । तेषाञ्च पर्यग्निवाक्येन पर्यग्नि-करणविशिष्ट उत्सर्गस्त्यागो विधीयते, किं वा ''ईशानाय'' इति वाक्ये परस्वत्पशुद्रव्यक ईशानदेवताको यागो विधीयते । पर्यग्निवाक्येन त्वालब्धपशुद्रव्यत्यागो विधीयत इति **सन्देहे,**

Pūrvapakṣa : argues that if yāga is enjoined by ईशानवाक्य, उत्सर्गरूपत्याग is automatically conveyed. This makes उत्सर्गवाक्य purposeless. Therefore, ईशानवाक्य should be taken as prescribing the पशुसंस्कार of the nature of touching the पशु.



देवतासम्बन्ध stated in this statement should not be taken into account. By the पर्यग्निवाक्य the उत्सर्ग i.e. letting off the पशु after पर्यग्निकरण is enjoined.

ईशानवाक्ये यागविधौ ह्युत्सर्गरूपत्यागस्य प्राप्तत्वादुत्सर्गवाक्यमनुवादकं सदनर्थकं स्यात् । पर्यग्निकरणस्य वा उत्सर्गस्य तदुत्तरकालत्वं वा न विधेयम् । चोदकप्राप्तत्वात् पर्यग्निकरणा-व्यवहितोत्तरत्वस्य चेहाप्रतीत्या तस्याप्यविधेयत्वात् । पदश्रुत्योत्सर्गस्य विधिसम्भवे वाक्यप्रमाणकस्य तस्य विध्ययोगाच्च । तस्मादीशानवाक्ये देवतासम्बन्धे सत्यपि यागविधिमनादृत्य पूर्वत्र श्रयणमिव पशुसंस्काररूपालम्भनशब्दितस्पर्शमात्रविधिमभ्युपेत्यालब्धास्ते परस्वन्तः पशवः पर्यग्निवाक्येन पर्यग्निकरणानन्तरमुत्स्रष्टव्या इत्युत्सर्गविधिरेवोपेयः ।

Siddhānta : points out that ईशानवाक्य mentions both देवता and द्रव्य. Hence, it clearly enjoins a याग. पर्यग्निकरणवाक्य enjoins the उत्सर्ग of पशु after the observation of auxiliaries upto पर्यग्निकरण.

**सिद्धान्तस्तु,** ईशानवाक्ये द्रव्यदेवतासम्बन्धश्रवणेन ''सौर्यं चरुं निर्वपेत्'' इत्यत्रेव यागविधेः स्पष्टत्वादगत्या वाक्य प्रमाणकोऽपि क्लृप्तोपकारप्राकृतपर्यग्निकरणान्ताङ्गकलाप एवोत्सर्गवाक्ये ईशान-वाक्यविहितं यागमुत्सृजतिधातुनाऽनूद्य प्रत्ययेन विधीयत इति प्रत्यक्षविहितेनाङ्गकलापेन निराकांक्ष ईशानप्रयोगवचनो न चोदकमपेक्षत इति चोदकनिवृत्तिरिति ।

### आज्येन शेषं संस्थापयति इत्यनेन कर्मान्तरविधानाधिकरणम् (9-4-15)

At यूपैकादशिनी by the statement 'त्वाष्ट्रं पात्नीवतमालभेत' पात्नीवतपशु is prescribed. With reference to this पशु it is further stated that 'पर्यग्निकृतमुत्सृजति' it is to be let off after पर्यग्निकरण. Then, it is stated that 'आज्येन शेषं संस्थापयति.' The verb संस्थापयति means समापयति. Here, the question is raised whether आज्य is enjoined here as a प्रतिनिधि for the पशु that is let off or a separate ritual with आज्य as हविस् is enjoined.

यूपैकादशिन्यां ''त्वाष्ट्रं पात्नीवतमालभेत'' इति विहितं त्वाष्ट्रं पात्नीवतं पशुं प्रकृत्य ''पर्यग्निकृतं पात्नीवतमुत्सृजति'' इत्युत्सर्गं विधाय श्रूयते ''आज्येन शेषं संस्थापयति'' इति । संस्थापयति समापयतीत्यर्थः । तत्र किं पूर्वस्मिन् पात्नीवतयागे पर्यग्निवाक्योक्तोत्सृष्टपशोः स्थाने प्रतिनिधिभूतमाज्यं विधीयते, किं वाऽऽज्यद्रव्यकं कर्मान्तरमिति **सन्देहे,**

Pūrvapakṣa : argues that पात्नीवतयाग is undertaken with पशु as द्रव्य. The auxiliaries of पशुयागs are required to be observed. After the observation of auxiliaries upto पर्यग्निकरण, when the पशु is let off, adopting a प्रतिनिधिद्रव्य in the place of पशु is necessary for the completion of याग. The आज्येन शेषं संस्थपियति provides आज्य as प्रतिनिधि there is no need for envisaging a separate ritual. In case a separate ritual envisaged, the word शेष and संस्थापयति will loose their firce.

पात्नीवतपशुयागस्य पशुनोपक्रान्तस्य चोदकप्राप्तदैक्षपशुयागाङ्गेष्वनुष्ठीयमानेषूत्सर्गवाक्येन विहिते पर्यग्निकरणान्ताङ्गानुष्ठानेन पशोरुत्सर्गे कृते सति प्रक्रान्तस्य पात्नीवतयागस्य समाप्त्यर्थं द्रव्यापेक्षायां ''आज्येन शेषं संस्थापयति'' इति विधीयमानमाज्यं प्रतिनिधिरेव भवति । न त्वत्र कर्मान्तरविधिः । देवताऽश्रवणात् ।

Siddhānta : points out that by पर्यग्निवाक्य, the auxiliarily upto पर्यग्निकरण are enjoined. The observation of these completes the yāga. Hence, the statement आज्येन शेषं संस्थापयति enjoins a separate ritual.

**सिद्धान्तस्तु**, पर्यग्निवाक्ये तदन्ताङ्गरीतिरेव विधेयेति प्रत्यक्षविहिततदन्ताङ्गकलापेन निराकांक्षस्य पूर्वकर्मणस्समाप्तत्वान्न शेषभागोऽस्ति य आज्यभागेन समाप्यः । तस्मात्कर्मान्तरविधिरेवायम् ।

**इति नवमाध्यायस्य चतुर्थः पादः**

**इति नवमाध्यायः**



# Chapter-X

## दशमाध्याये प्रथमः पादः

### विकृतौ लुप्तार्थानां प्राकृतानां बाधाधिकरणम् (10-1-1)

In this chapter बाध i.e. non-implimentation of certain items in विकृतियाग which were implimented in प्रकृतियाग is discussed.

In the earlier chapter ऊह was discussed. In the course of उह, certain items of प्रकृतियाग were adopted in विकृतियाग with necessary substitution and modification. In the course of बाध certain items will be deleted. Both उह and बाध are concerned with the items to be adopted at विकृति from प्रकृति. However, in the process of उह the item concerned is only modified while in the processes of बाध the item concerned is withdrawn. Hence, ऊह is discussed in the ninth chapter and बाध will be discussed in the tenth chapter.

ॐ ऊहश्चिन्तितः । अत्राध्याये बाधश्चिन्त्यते । ऊहबाधयोर्विकृतिष्वतिदिष्टपदार्थविषयकत्वेन सप्तमाष्टमानन्तर्येऽविशिष्टेऽपि विकृतिष्वतिदेशतः प्राप्यमाणाः पदार्थाः किमविकारेणैव प्राप्यन्ते किं वा किञ्चिद्विकारेणेति प्राप्यमाणपदार्थगतविशेषचिन्तारूपत्वादूहः पूर्वं निवेशितः । एवं सविशेषायां प्राप्तौ चिन्तितायामवसरप्राप्तप्राप्त्यपवादरूपबाधविचारः पश्चात्प्रवर्त्यत इति ध्येयम् । **बाधो** नाम चोदकप्रापित प्राकृताङ्गानुष्ठानबुद्धेर्भ्रान्तित्वनिश्चय इत्याहुः ।

The first adhikaraṇa discusses an instance of बाध rejecting the possibility of ऊह of the item concerned.

At राजसूय certain offerings that are of the nature of दर्शपूर्णमासविकृति are enjoined. Among these, in respect of मैत्रबार्हस्पत्य हविस् it is stated 'स्वयं दितं बर्हिः भवति' 'स्वयं कृतः इध्मः' The expression स्वयंदितं बर्हिः means the दर्भ grass dropped by itself but not cut. स्वयमेव लूनं दर्भजातम्. Here, the question is raised whether the लवन i.e. cutting, enjoined in प्रकृति by the statement बर्हिः लुनाति be observed in विकृति also or not.

पूर्वोक्तोहाक्षेपकतया बाधचिन्तोपोद्घाततया चेदमधिकरणमारभ्यते । राजसूये दर्शपूर्णमास-विकृतिभूतानि कानिचिद्धवींषि विहितानि । तत्र मैत्रबार्हस्पत्ये हविषि श्रूयते "स्वयं दितं बर्हिर्भवति । स्वयं कृत इध्मः" इति । दितं खण्डितम् । दो अवखण्डने । लवनेन विना स्वयमेव लूनं दर्भजातं बर्हिर्भवतीत्यर्थः । एवं स्वयं कृत इत्यादावपि ध्येयम् । तत्र "बर्हिर्लुनाति" इति प्रकृतौ विहितं बर्हिर्धर्मभूतं लवनं स्वयं दिते बर्हिषि कर्तव्यं न वेति **संशयः** ।

Pūrvapakṣa : argues that the position taken in connection with ऊह that मन्त्र, साम and संस्कार are to be modified to serve their purpose of देवताप्रकाशन etc. in विकृति is not correct. These items are to be implimented by their very svarūpa by the respective statements as in प्रकृति. But not through the अवान्तरकार्य i.e. देवताप्रकाशन etc. consequently all the items stated in प्रकृति have to be observed in विकृति also. In the event of certain items not serving the purpose served in the प्रकृति it has to be taken as अदृष्टार्थ.

In the present instance, the स्वयंदित बर्हि i.e. the दर्भ grass dropped by itself does not need cutting. However, cutting has to be made for अदृष्टार्थ as it is enjoined.

**पूर्वपक्षस्तु,** पूर्वत्र मन्त्राः सामानि प्रोक्षणादिसंस्काराश्च देवताप्रकाशनादिरूपावान्तरस्वस्व-कार्यद्वारा विकृतावतिदिश्यमानाः कार्यानुरोधेन विकृतावूहनीया इत्युक्तमयुक्तम् । पदार्थाः प्रकृतावुपदेशेनेव विकृतावपि चोदकेन स्वरूपाण्येव प्राप्यन्ते । न त्ववान्तरकार्यद्वारा । तथा च चोदकेन प्रापितेषु पदार्थेषु प्राकृतोपकारासम्भवे अदृष्टं कल्पनीयम् । चोदकवचनप्रामाण्यात्प्राकृतमङ्गजातं सर्वं विकृतौ कर्तव्यमेवेति स्वयं दिते बर्हिषि प्रकृतौ क्लृप्तप्रयोजनस्याभावेन लुप्तप्रयोजनमपि लवनमदृष्टार्थं कर्तव्यमिति नास्ति बाध इति ।

Siddhānta : points out that the items are brought to विकृति from प्रकृति as serving certain purpose. It is already observed that these serve certain purposes to accomplish the sacrifice. Naturally these are to be adopted to serve the purpose in विकृति also. When there is no scope or the need to serve that purpose. These items are withdrawn. This is technically designated as बाध. In the present instance there is बाध of लवन in the case दितबर्हि.



**सिद्धान्तस्तु,** स्यादेवं यदि पदार्थाः स्वरूपेणातिदिश्येरन् । न चैवम् । किन्तूपकार विशिष्टा एव । प्रकृतौ पदार्थानां यथायोग्यं दृष्टादृष्टोपकारजननद्वारा यागस्य फलसाधनतासामर्थ्यसम्पादनस्य दृष्टत्वेन प्रकृतिवदिदं कुर्यादिति चोदकमपि यथाप्रकृति क्लृप्तोपकारविशिष्टानेव पदार्थानतिदिशति । न स्वरूपमात्रेण । तथात्वे प्रकृतिवत्कुर्यादिति वचनमनृतं स्यात् । विकृतियागस्य फलनिष्पादन-सामर्थ्याभावापाताच्च । एवञ्च स्वस्वकार्यद्वारेणैव विकृतौ धर्माणां प्राप्तेर्लुप्त प्रयोजनकस्य विकृतावप्राप्तेः स्वयं दितादौ लवनादेरननुष्ठानमिति ।

### कृष्णले अवहन्ति बाधाधिकरणम् (10-1-1) (वर्णकान्तरम्)

At काम्येष्टिकाण्ड which are विकृति the statement 'प्राजापत्ये घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः' occurs. The word शतकृष्णल refers to सुवर्णमाष. Here, the question is raised whether the अवघात i.e. pounding etc auxiliaries of व्रीहि be observed. For कृष्णलs also or not.

**वर्णकान्तरन्तु,** विकृतिभूतानां काम्येष्टीनां काण्डे पठ्यते "प्राजापत्यं धृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः" इति । तत्र शतकृष्णलशब्दितस्वर्णमाषेषु व्रीहिधर्मोऽवघातादिः कर्तव्यो न वेति **सन्देहे,**

Pūrvapakṣa : The word चरु is used in कृष्णल in the secondary sense. Just as in the case of मासाग्निहोत्र the name of which is secondarily used, the auxiliaries of अग्निहोत्र are adopted, the auxiliaries of चरु have to be adopted. Though the दृष्टप्रयोजन i.e. तुषविमोचन is not possible, अवघात has to be made for अदृष्टार्थ.

वैशद्ययुक्तादनीयद्रव्यवचनश्चरुशब्दो न कृष्णलेष्वनदनीयेषु मुख्यः । तेन यथा मासाग्निहोत्रे अग्निहोत्र शब्दो नित्याग्निहोत्रधर्मातिदेशार्थस्तथाऽत्र चरावपि कृष्णले प्रयुज्यमानश्चरुशब्दस्तद्धर्माति-देशार्थः । तथा च तुषविमोचनरूपदृष्टप्रयोजनहीनतया निवर्तमाना अपि व्रीहिधर्मा आतिदेशिकचरु-शब्दप्रयोगबलेन प्रतिप्रसवाददृष्टार्थाः कर्तव्या इति प्राप्तम् ।

Siddhānta : points out that the word चरु is not used in कृष्णल for the purpose of धर्मातिदेश. It is used to indicate चरुसादृश्य in respect of putting in cooking vessel. In the case of मासाग्निहोत्र as no separate auxiliaries are stated for it, the auxiliaries of अग्निहोत्र are adopted by अतिदेश.

**सिद्धान्तस्तु**, स्यादेवं, यदि मासाग्निहोत्रे अग्निहोत्रशब्द इव चरुशब्दोऽत्र धर्मातिदेशार्थः । न चैवम् । स्थाल्यां पाकेन वैशद्येन च सिद्धेन चरुसादृश्येन कृष्णलेषूपपन्नः संश्चरुशब्दो नावघातादि-धर्मविधौ शक्तः ।

### वैश्वदेवे चरौ विष्णोरावाहनबाधाधिकरणम् (10-1-1) (तृतीयं वर्णकम्)

At काम्येष्टि the statement वैश्वदेवं चरुं निर्वपेत् भ्रातृव्यवान् occurs. It means that शत्रुवधकामो विश्वदेवदेवताकेन चरुद्रव्येण यागं भावयेत्. At this sacrifice after इडाभक्षण, the चरु has to be cut into four pieces to give it to 'ब्रह्मा etc four priests. It should be cut by the instrument शम्या or स्फय. While cutting by स्फय a little of चरु drops down and sticks to the स्फय, then the pieces of चरु have to be offered to उरुक्रमगुणक विष्णु by observing a याग.

Here, the question is raised whether at the time of वैश्वदेविकदेवतावाहन, the आवाहन of विष्णु also be made or not.

काम्येष्टिष्वेव श्रूयते ''वैश्वदेवं चरुं निर्वपेद्भ्रातृव्यवान् । तं बर्हिषदं कृत्वा शम्यया स्फयेन व्यूहेदि-दमहममुश्चामुश्च व्यूहामीति । यं द्विष्यात्तं ध्यायेत् । यदधोऽवमृज्यते यच्च स्फय आश्लिष्यते तद्विष्णव उरुक्रमायावद्यति'' इति । तत्र किं वैश्वदेविकदेवतावाहनकाले विष्णोरप्यावाहनं कार्यं न वेति **संशये,**

Pūrvapakṣa : argues that विष्णुयाग is one of the वैश्वदेवकयाग. Hence, āghāra, prayāja etc. auxiliaries performed वैश्वदेविक also help विष्णुयाग. However, आवाहन of विश्वदेव and विष्णु have to be separately made. The आवाहन of the latter has to be made separately at the time of the आवाहन of the former.

वैश्वदेविकाङ्गान्याधारप्रयाजादीनि सर्वाण्यपि प्रसङ्गाद्वैष्णवयागे उपकुर्वन्तीति न तानि पृथक् क्रियन्ते । आवाहनन्तु वैश्वदेविककर्मणि ''विश्वदेवानावह'' इति । वैष्णवयागे तु ''उरुक्रमं विष्णु-मावह'' इति । प्रयोगभेदाद्विश्वदेवावाहनेन विष्णोरावाहनं न सिध्यतीति सामिधेनीप्रयाजयोर्मध्यकाले वैश्वदेविकदेवतावाहनकाले पृथग्विष्णुमुद्दिश्य कार्यम् । अन्यथा तत्क्रतोर्वैगुण्यापातादिति **प्राप्ते**

Siddhānta : points out that विष्णुयाग is a नैमित्तिकयाग. It has to be performed only when निमित्त occurs. Dropping of the चरु from the स्फय may not



necessarily take place in each प्रयोग of वैश्वदेविकयाग. In such case आवाहन of विष्णु has no निमित्त. Hence, आवाहन of विष्णु along with विश्वेदेव is not necessary.

**सिद्धान्तः**, निमित्तनिश्चये सति नैमित्तिकविधिःप्रधाननैमित्तिककर्मचिकीर्षाद्वाराऽङ्गान्यनुष्ठाप-यति । प्रकृते च स्फ्याश्लेषादेर्निमित्तस्यावश्यम्भावाभावेन वैश्वदेविकदेवताह्वानकाले निमित्तानिश्चयेन तन्निमित्तकवैष्णवयागानिश्चयान्न प्रधानचिकीर्षेति न वैष्णवयागविधिरावाहनं प्रयोजयितुमलमिति कदा-चित्स्फ्याश्लेषाभावेन यागाननुष्ठाने प्रागावाहिता देवता कुप्येदिति नावाहनं कार्यमिति । **फलन्त्वा-वाहनबाधः** ।

### दीक्षणीयादिषु आरम्भणीयाबाधाधिकरणम् (10-1-2)

While undertaking दर्शपूर्णमास performming of आरम्भणीयेष्टि is prescribed by the statement आग्नावैष्णवमेकादश कपालं निर्वपेत् दर्शपूर्णात्रारप्स्यमानः.

Here the question is raised whether this आरम्भणीयेष्टि be performed before दीक्षणीया इष्टि which is अङ्ग of सोमयाग and विकृति of दर्शपूर्णमासेष्टि.

'आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः' इति दर्शपूर्णमासयोरारम्भणीयेष्टि-र्विहिता । सा च विकृतिषु प्रवर्तत इति द्वादशस्य द्वितीये पादे **अन्वारम्भणीया विकृतौ** इत्यत्र वक्ष्यते । तथा च सेयमिष्टिः सोमयागाङ्गभूतदीक्षणीयादीष्टिषु दर्शपूर्णमासेष्टिविकृतिषु कर्तव्या न वेति **सन्देहे,**

Pūrvapakṣa : argues that आरम्भ is निमित्त for performing the आरम्भणीयेष्टि. Since the आरम्भ of दीक्षणीया has to be made this इष्टि which is नैमित्तिक has to be performed.

पूर्वत्र देवतावाहनकाले निमित्तानिश्चयेनाऽवाहनबाधेऽपीह दीक्षणीयादीनामनारब्धानामनुष्ठातु-मशक्यतयाऽऽरम्भावश्यम्भावादारम्भरूपनिमित्ते सति तन्निमित्तकारम्भणीयेष्टिश्चोदकप्राप्ता दीक्षणीया-दिषु कर्तव्येति **प्राप्ते**

Siddhānta : The expression आरप्स्यमानः contains शानच् suffix. This refers to the person who initiates. Hence, आरम्भणीयेष्टि is पुरुषसंस्कार. It is not an auxiliary of sacrifice. It is not कृत्वङ्ग. Hence, it need not be observed at दीक्षणीया etc. अङ्गयागs.

Further सोमयाग is अपूर्वयाग. It is not a विकार of दर्शादीष्टि.

**सिद्धान्तः**, आरप्स्यमान इति शानच्प्रत्ययेनारम्भकर्तृपुरुषोऽभिधीयते । तत्समभिव्याहृताऽऽरम्भणीया च वाक्येनारम्भकर्तृपुरुषसंस्कारार्थाऽवगम्यते । न साक्षात्प्रयाजादिवत्क्रत्वङ्गम् । येन प्रयाजादिवच्चोदकतोऽङ्गभूतेष्विष्टिष्वपि स्यात् । किन्त्वारम्भरूपद्वारेणैव । तथा च साङ्गप्रधानविषयेणाऽद्यप्रवृत्तिरूपारम्भेणैव प्रसङ्गादङ्गानामप्यनुष्ठानसिद्धेर्दीक्षणीयाद्यङ्गानां पृथगारम्भाभावेनारम्भरूपद्वाराभावान्न कर्तव्या तत्रारम्भणीयेष्टिरिति ।

## अनुयज्ञादिषु आरम्भणीयाबाधाधिकरणम् (10-1-3)

By the statement 'राजसूयेन स्वाराज्यकामो यजेत' राजसूययाग is enjoined. At the राजसूय, अनुमतीष्टि etc. इष्टिs and पशुसोमदर्वीहोम etc other rituals are prescribed. Here, the question is raised whether आरम्भणीयेष्टि be performed for अनुमतीष्टि etc or not.

''राजसूयेन स्वाराज्यकामो यजेत'' इति श्रुते राजसूये अनुमत्यादीन्यैष्टिककर्माणि पशुसोमदर्वीहोमादीन्यन्यान्यपि कर्माण्येकफलसाधनत्वेन श्रूयन्ते । तत्र दर्शपूर्णमासविकृतिभूतास्वनुमत्यादीष्टिष्वारम्भणीयेष्टिः कर्तव्या न वेति **सन्देहे,**

Pūrvapakṣa : अनुमतीष्टि etc prescribed in the राजसूय context are प्रधानकर्मs. Hence, they have their आरम्भ. Therefore, आरम्भणीयेष्टि has to be performed.

युक्तं पूर्वत्र साङ्गप्रधान विषयेणैवारम्भेणानुष्ठानसिद्धेरङ्गानां पृथगारम्भाभावात्तन्निमित्तकारम्भणीयेष्टयप्रवृत्तिर्वैकृताङ्गभूतेष्विति । अत्र तु राजसूयेऽनुमत्यादीष्टीनामपि प्रधानत्वेन पृथगारम्भसम्भवाल्लुप्तद्वारत्वाभावेनारम्भणीया कर्तव्येति **प्राप्ते**

Siddhānta : points out that आरम्भणीयेष्टि is prescribed only at the commencement of इष्टि type of rituals. Here, इष्टि, पशु, सोम constitute one प्रयोग and commence as one unit. Therefore आरम्भणीयेष्टि has no scope here.

**सिद्धान्तः**, प्रकृतौ हीष्टिमात्रविषयारम्भो द्वारमारम्भणीयेष्टेरवगतम् । अत्र त्विष्टिपशुसोमानामेकप्रयोगभाजामेक एव व्यासक्तारम्भो न पृथक्पृथगारम्भः । तथा च प्रकृतौ क्लृप्तस्य केवलेष्टिविषयकस्यारम्भस्य द्वारभूतस्येह विकृतावनुमत्यादावभावेन द्वारलोपान्न कर्तव्येष्टिरिति ।



## आरम्भणीयायाम् आरम्भणीया बाधाधिकरणम् (10-1-4)

In this adhikaraṇa the question whether आरम्भणीयेष्टि has to be performed for the very आरम्भणीयेष्टि or not is raised.

आरम्भणीयायामारम्भणीया कर्तव्या न वेति **सन्देहे,**

Pūrvapakṣa : argues that this is also इष्टि and दर्शपूर्णमासविकृति. Hence, आरम्भणीयेष्टि has to be performed before commencing आरम्भणीयेष्टि itself.

अस्या अपीष्टित्वेन दर्शपूर्णमासविकृतित्वेन चोदकतस्तदङ्गभास्त्वात्तत्रापि सा कर्तव्येति **प्राप्तम् ।**

Siddhānta : points out that though आरम्भणीयेष्टि is अङ्ग of दर्शपूर्णमासेष्टि, this fact is not known as it is performed earlier to it. Hence, it does not attract another आरम्भणीयेष्टि before it.

**सिद्धान्तस्तु**, यद्यपीयमिष्टिरिष्टित्वेन दर्शपूर्णमासविकृतित्वात्तदङ्गान्यतिदेशतो भजते । तथाऽप्यारम्भणीयां दर्शपूर्णमासाङ्गभूतामपि न भजते । किन्तु तदन्यप्रयाजादीन्येव । कुतः? स्वविधिवेलायां स्वस्य दर्शपूर्णमासाङ्गत्वेनानिर्ज्ञातत्वात् । निर्ज्ञाताङ्गान्येव हीतिकर्तव्यतात्वेन विधिर्गृह्णाति । न ह्येतदेवाऽग्नावैष्णवमिति वाक्यं कर्तृसंस्कारद्वारा दर्शाङ्गत्वेनेष्टिं विदधत्तद्विकृतित्वेन तदङ्गभूतामेतामेवेष्टिमतिदेशेनैतदङ्गतया गृहीतुं शक्नोति । तस्मात्तत्र सा न कर्तव्येति ।

## खलेवाल्यां यूपाहुति बाधाधिकरणम् (10-1-5)

At साद्यस्कयाग errecting खलेवाली is prescribed by the statement खलेवालीयूपो भवति. The place of pounding the grains is known as खल. At this place a pole is errected to tie the bull which is made to remove the husk by its feet. This pole is called खलेवाली.

In the प्रकृतियाग i.e. अग्नीषोमीय पशुयाग, the person who proceeds to obtain यूप is required to perform यूपाहुति. Here, the question is raised whether this यूपाहुति is to be performed for खलेवाली also or not.

साद्यस्कनामके यागे ''खलेवाली यूपो भवति'' इति श्रूयते । धान्यानां प्रहरणस्थलं खलम् ।

तस्मिन् खले पादघातैः पलालेभ्यो धान्यमोचनाय बलीवर्दबन्धनार्थं स्थापितो मेढिः **खलेवाली**-त्युच्यते। प्रकृतावग्नीषोमीयपशौ यूपमाप्तुं गमिष्यतः पुरुषस्य यूपाहुतिर्विहिता ''यूपमच्छैष्यता होतव्यम्'' इति। सा किं खलेवाल्यां कर्तव्या न वेति **संशये,**

Pūrvapakṣa : argues that from अग्निषोमीय, the यूपधर्मs have to be brought to खलेवाली also by अतिदेश and यूपाहुति has to be performed.

**पूर्वत्रा**रम्भणीयेष्टावारम्भणीयानतिदेशोऽपीह खलेवाल्यामग्नीषोमीयप्रकृतितो यूपधर्माणामतिदेश-सम्भवेन चोदकतो यूपाहुतेरपि प्राप्तत्वात् कर्तव्येति **प्राप्ते**

Siddhānta : points out that for यूप, शास्त्रीयछेदनसंस्कार has to be made. To enable oneself to effect छेदनसंस्कार for यूप, यूपाहुति is prescribed. In the case of खलेवाली it is already choped and errected. Hence, there is no need of यूपाहुति.

**सिद्धान्तः,** यूपमच्छैष्यतेति होमविधिवाक्यस्य खादिरादिकाष्ठविशेषं शास्त्रीयछेदनादिसंस्कारैर्यूपं कर्तुं गमिष्यता तस्य काष्ठस्य शास्त्रीयछेदनयोग्यतायै तत्सन्निधौ मथिताग्नौ होमः कार्य इत्यर्थकत्वाच्छेदनार्थो होमोऽवगम्यते। न चेह खलेवाल्यां छेदनमस्ति। प्रागेव कृषीवलेन छित्वा स्थापितत्वात्। तस्माच्छेदनरूपद्वाराभावेनानतिदेशान्न कर्तव्या यूपाहुतिरिति।

### सायस्के खलेवाल्यां स्थाण्वाहुति बाधाधिकरणम् (10-1-6)

At अग्नीषोमीयपशु which is प्रकृतियाग, by the statement 'स्थाण्वाहुतिं जुहोति' स्थाण्वाहुति is prescribed. The word स्थाणु means the left out portion of the tree in the ground after taking the wood for यूप. The आहुति offered for it is called स्थाण्वाहुति. Here, the question is raised whether this आहुति be offered for खलेवाली also or not.

प्रकृतावग्नीषोमीयपशौ ''स्थाण्वाहुतिं जुहोति'' इति स्थाण्वाहुतिर्विहिता। च्छिन्नाद्यूपार्थ-वृक्षादवशिष्टं भूमौ रूढमूलं **स्थाणुरु**च्यते। तत्र क्रियमाणाऽऽहुतिः **स्थाण्वाहुतिः**। सा किं खलेवाल्यां कर्तव्या न वेति **सन्देहे,**

Pūrvapakṣa : argues that the statement 'बृहस्पते शतवल्शो विरोह' इत्यावृश्चने-जुहोति' contains the word 'आवृश्चन' which refers to स्थाणु in general. Hence, स्थाणुहोम need not necessarily be made for the स्थाणु from which यूप is cut.



As it could be done near any स्थाणु in प्रकृतियाग it could be done near खलेवाली in विकृति.

पूर्वत्र यूपाहुतेर्यूपस्य शास्त्रीयछेदनयोग्यतायै सन्निपात्यङ्गत्वेन खलेवाल्यां च्छेदनरूपद्वारा-भावेनाकर्तव्यत्वेऽपीह ''बृहस्पते शतवल्शो विरोहेत्यावृश्चने जुहोति'' इति वाक्ये ''आवृश्च्यते छिद्यते यूपोऽत्र'' इति व्युत्पत्त्या आव्रश्चनशब्दोक्तस्थाणुसामान्य एव होमविधानेन यूपच्छेदनाधिकरण-स्थाणावेव होम इत्यत्र प्रमाणाभावाद्यूपार्थं छिन्नवृक्षाद्वियोजिते स्थाणौ कृतहोमस्य यूपसंस्कार-कत्वायोगेनाऽऽरादुपकारकत्वावश्यम्भावाद्यस्मिन् कस्मिन्नपि स्थाणौ कर्तव्येति विकृतावपि खलेवाल्यां यत्र कचित्कृतत्वमात्रेण तदुपकारकत्वसम्भवात्कर्तव्यैव खलेवाल्यां स्थाण्वाहुतिरिति **प्राप्तम्।**

Siddhānta : points out that though in the statement that enjoins स्थाण्वाहुति, the स्थाणु is mentioned in a general way by अवान्तरप्रकरण it relates to the स्थाणु from which wood is cut for यूप. Consequently स्थाण्वाहुति has to be taken as यूपसंस्कार. Hence, it cannot be performed for खलेवाली.

**सिद्धान्तस्तु,** स्थाण्वाहुतिविधिवाक्यस्योक्तरीत्या स्थाणुसामान्यपरत्वप्रतीतावप्यवान्तरप्रकरणेन यूपव्रश्चनस्थाणोरेवात्र ग्रहणं युक्तम्। तथा च यथा यूपसम्बन्धिनि मथिताग्नौ क्रियमाणाया अपि यूपाहुतेर्यूपसन्निधिमात्रेण यूपसंस्कारकतया सन्निपत्यङ्गत्वं तथा स्थाण्वाहुतेरपि यूपार्थच्छिन्नदारु-वियोजनावधिभूतस्थाणौ क्रियमाणाया अपि यूपार्थदारुसन्निधानाद्यूपसंस्कारकत्वेन सन्निपात्यङ्गत्व-सम्भवे आरादुपकारकाङ्गत्व कल्पनायोगात्। तादृशस्य च स्थाणोः खलेवाल्यामभावान्न कर्तव्या तत्र स्थाण्वाहुतिरिति।

### उत्तमप्रयाजस्य संस्कार कर्मताधिकरणम् (10-1-7)

At darśapūrṇamāsa by the statement स्वाहाकारं यजति. Fifth प्रयाज is stated. Here, the question is raised whether this प्रयाज is आरादुपकारक for darśapūrṇamāsa as in the case of समिधो यजति' or by the संस्कार of reminding the अग्नि etc अज्यभागदेवताs it is सामयिक.

दर्शपूर्णमासयोः ''स्वाहाकारं यजति'' इति पञ्चमः प्रयाजः श्रुतः। स किं समिदादिवद्दर्शपूर्ण-मासयोरारादुपकारकः, उत यक्ष्यमाणाग्न्यादिरूपाज्यभागादिदेवतानामव्यवधानेन स्मरणरूपसंस्कार-द्वारा सामवायिक इति **सन्देहे,**

Pūrvapakṣa : argues that the verb यजति indicates that it is यागविधि. The word स्वाहाकार provides देवता. It is from that अग्नि etc देवताप्रकाशन is mad by मन्त्र and if स्वाहाकार is taken as देवता in the विधिवाक्य there appears to be वैयधिकरण्य, however, this difficulty can be solved by taking the word स्वाहाकार in the sense of अग्नि by appropriate etymological explanation. The net result is this पञ्चमप्रयाज is आरादुपकारक like समिधो यजति.

यजतीति तावद्यागविधिः । तत्र च जौहवाद्याज्यस्य द्रव्यस्य लाभेऽपि देवताकांक्षायामपेक्षिता देवता स्वाहाकारपदेन विधीयते । न चेदं स्वाहाकारपदं ''स्वाहाऽग्निं, स्वाहा सोमं, स्वाहा प्रजापतिं, स्वाहाऽग्नीषोमौ, स्वाहेऽन्द्रम्'' इत्यादिमन्त्रवर्णप्राप्तदेवताप्राप्त्या नामधेयमिति शङ्क्यम् । वचनेनैव झटिति देवताप्राप्त्यैवाकांक्षाशान्तौ प्रकरणविनियोज्यमन्त्रान्वयानुपपत्तिवशेन मान्त्रवर्णिकदेवताकल्पनस्यानुचितत्वात् ।

Siddhānta : There is no indication of तद्धित or चतुर्थी to take the word स्वाहाकार as देवता. Therefore, it has to be taken as यागनामधेय. पञ्चमप्रयाज of this name is meant for the संस्कार of the nature of reminding the अग्नि etc आज्यभागदेवता.

**सिद्धान्तः**, ''तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः । देवतासङ्गतिः'' इत्युक्तदिशाऽत्र देवताबोधकतद्धितादेरभावा द्यागविधावुपक्षीणस्य विधेर्देवताविधावप्यशक्तत्वाद्विशिष्टविधेश्च केवलयाग विधिनैवोपपत्त्या गौरवपराहतत्वात् । तस्मात्प्रकरणविनियुक्त मन्त्रवर्णसम्बन्धनिमित्तं ''स्वाहेति कृतिः करणं यस्मिन् कर्मणि'' इति व्युत्पत्त्या नामधेयमेव यागस्य स्वाहाकारपदमिति ।

### अग्नियागस्य आरादुपकारकताधिकरणम् (10-1-8)

At darśapūrṇamāsa two आज्यभागs are prescribed by the statement आज्यभागौ यजति. It is further stated अग्नीषोमाभ्यां यजति. Among these आग्नेय is first, सौम्य is second. Here, the question is raised whether this आग्नेययाग is आरादुपकारक for दर्श or प्रधानयागदेवतायाः अग्नेः प्रकाशनरूपसंस्कारक.

दर्शपूर्णमासयोः ''आज्यभागौ यजति'' इति विहिताावाज्यभागौ प्रकृत्य श्रूयते ''अग्नीषोमाभ्यां यजति'' इति । तत्र तयोः प्रथम आग्नेयः । द्वितीयः सौम्यः । तत्र सौम्ये नास्ति सन्देहः । प्रधानकर्मणि



केवलसोमदेवताया अभावात् । तत्र य आग्नेययागः स किमारादुपकारको दर्शादीष्टेः, उत प्रधानाग्नेययागदेवताया अग्नेः प्रकाशनरूपसंस्कारक इति सन्देहे,

Pūrvapakṣa : argues that when दृष्टार्थत्व is possible it is not proper to go by अदृष्टार्थत्व. In the present instance, अग्निदेवतास्मरणेन तत्संस्कारकत्वरूपदृष्ट प्रयोजन possible. Hence, envisaging आरादुपकारकत्व is not proper.

दृष्टे सम्भवत्यदृष्टकल्पनाऽयोगादिति पूर्वोक्तन्यायेन यक्ष्यमाणाग्निदेवतास्मरणेन तत्संस्कारकत्वरूपदृष्टप्रयोजने सम्भवति नादृष्टहेतुतयाऽऽरादुपकारकत्वकल्पना युक्तेति **प्राप्ते**

Siddhānta : points out that in the आवाहनमन्त्र 'अग्ने अग्निमावह । सोममावह । अग्निमावह' अग्नि is mentioned twice. From this it is clear that प्रधानयागदेवता अग्नि and आज्यभागदेवता अग्नि are different. Hence, आज्यभाग–आग्नेययाग is not प्रधानयागाग्निस्मरणरूपसंस्कारक but it is आरादुपकारक ritual.

**सिद्धान्तः**, आवाहनमन्त्रस्वाहाकारमन्त्रस्विष्टकृन्निगदसूक्तवाकेषु मन्त्रेषु ''अग्ने अग्निमावह । सोममावह । अग्निमावह'' इत्यादिरूपेण ''हे होमाधारभूताग्ने अग्निः सोमः अग्निः इति त्रीन् इहेष्टावावह'' इत्यादिरूपेण द्विरग्निश्रवणेन सोमात्परतः श्रुतप्रधानाग्नेययागदेवतातोऽग्नेः सोमात्पूर्वं श्रुतोऽग्निराज्यभागदेवता पृथगित्यवगम्यते । अन्यथा द्विरुक्तेर्वैयर्थ्यापत्तेः । तथा ''अग्नीषोमाभ्यां यजति'' इति वाक्ये सोमस्येवाग्नेरपि चतुर्थ्या यागं प्रति देवतात्वेन गुणत्वं स्पष्टमेव प्रतीयते । तस्मान्न प्रधानदेवताया अग्नेः संस्कारकः । किन्त्विष्टेरारादुपकारक एवेति ।

### पशुपुरोडाशयागस्य देवता संस्कारकताधिकरणम् (10-1-9)

At ज्योतिष्टोम with reference to अग्नीषोमीयपशु the statement 'अग्नीषोमीयं पशुपरोडाशमेकादशकपालं निर्वपति' occurs. Here, the question is raised whether this is आरादुपकारक or पशुदेवताभूताग्नीषोमसंस्कारक.

ज्योतिष्टोमे अग्नीषोमीयपशौ पुरोडाशः श्रूयते ''अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति'' इति । स किं पशोरारादुपकारकः, उत पशुदेवताभूताग्नीषोमसंस्कारक इति **सन्देहः** ।

Pūrvapakṣa : argues that the two statements viz., i) यो दीक्षितो अग्नीषोमीयं

पशुमालभेत' and ii) अग्नीषोमीयं पशुपरोडाशं निर्वपति relate to two different deities. Therefore, one cannot be संस्कारक for the other.

In the वाक्यशेष viz. आसोमं वहन्ति अग्निना प्रतितिष्ठति. लतारूपसोम and अग्नि are stated as देवता for पशुयाग. The same are not देवता for पशुपुरोडाश. Hence, पशुपुरोडाश is not a संस्कार for the देवता of पशुयाग.

**पूर्वपक्षस्तु,** ''यो दीक्षितोऽग्नीषोमीयं पशुमालभेत'' इति ''अग्नीषोमीयं पशुपुरोडाशं निर्वपति'' इत्युभयत्रापि तद्धितनिर्देशेनोभयत्रापि देवताया गुणत्वेन भिन्नभिन्नदेवतात्वेनैवावगमान्नान्यदन्य-देवतासंस्कारकम्। किञ्च ''आसोमं वहन्त्यग्निना प्रतितिष्ठति'' इति वाक्यशेषाल्लतारूपस्सोमः प्रणीय-मानोऽग्निश्च पशुयागे देवते। न हि तावेव पशुपुरोडाशे देवते इत्यत्र मानमस्ति। अतस्तद्देवतातोऽपि भिन्नैव पुरोडाशे देवतेति न तद्देवतासंस्कारः पशुपुरोडाशः। किन्तु पूर्वत्र प्रथमाग्नेयाज्यभाग वदारादुपकारक एवेति।

Siddhānta : points out that when देवतास्मरणरूपदृष्टप्रयोजन is possible it is not proper to envisage. आरादुपकारकत्व of अदृष्टार्थ.

**सिद्धान्तस्तु,** दृष्टे देवतास्मरणरूपे संस्कारे सम्भवत्यदृष्टहेत्वारादुपकारकत्वकल्पनायोगात्पशु-यागस्य ज्योतिष्टोमप्रकरणपाठेन तदङ्गत्वेन निर्णीतस्य पुरोडाशदेवतासंस्कारकत्वस्यानाशङ्क्यत्वा-त्पशुपुरोडाशस्याप्युभयतः पठितपशुधर्ममध्ये पठितत्वेन पशुदेवताया एव तद्धितान्ताग्नीषोमीयपदेन स्मारणसम्भवात्संस्कारक एव पशुपुरोडाशो नारादुपकारक इति।

### सौर्यं चरुं निर्वपेत् इत्यत्र चरुशब्दस्य ओदनवाचित्वाधिकरणम् (10-1-10)

In the statement सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः the word चरु occurs. Here, the question is raised whether this word refers to स्थाली or ओदन cooked in the स्थाली. When it is taken as referring to स्थाली a further question is raised whether it is पुरोडाशरूपहविर्विकार or कपालविकार.

''सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः'' इत्यत्र चरुशब्दः किं स्थालीवचनः, उतौदनवाची। यदा स्थालीवचनस्तदापि किं पुरोडाशरूपहविर्विकारः, किं वा कपालविकार इति **सन्देहः**।

Pūrvapakṣa : i) Pūrvapakṣin argues that the word चरु means स्थाली.



However, the priests use the word चरु to convey the rice cooked in स्थाली only but not in any other vessel. Hence, the word चरु is taken to convey cooked rice also secondarily. Though स्थाली cannot be used as हविस् as it cannot be eaten, it is given the status of चरु in the sense that it is a means of cooking. Since the स्थाली is prescribed here by the mention of the word चरु in the statement सौर्यं चरुं निर्वपेत्, कपाल is not be used.

ii) Pūrvapakṣin puts the pūrvapaksa in another way also.

The word सौर्य contains तद्धित suffix. Hence, enjoing of a याग for देवता has to be envisaged. Though स्थाली cannot be eaten it has to be taken as havis to be offered to देवता. It can be considered as havis as in the case of कृष्णल i.e. सुवर्णभाष. It is a substitute for पुरोडाश. Hence, पुरोडाश is not to be offered.

**पूर्वपक्षस्तु,** चरुशब्दस्य स्थाल्यां प्रयोगात्स्थालीवचनः। याज्ञिकानामोदने चरुशब्दप्रयोगस्तु स्थाल्यां पक्व एवौदने चरुपदप्रयोगेण केवलौदने प्रयोगाभावात्स्थालीसम्बन्धनिमित्तको लाक्षणिक इति स्थालीवचनः सन्ननदनीयतया हविष्ट्वायोग्योऽपि चरुः श्रपणसाधनयोग्यतया कपालविकारः। सौर्यमिति तद्धितनिर्देशस्तु स्थाल्याः सूर्यसम्बन्धभावेन तस्येदमिति सम्बन्धमात्रार्थः। एवञ्च पूर्वत्र यथा देवतान्तरयुक्तविकृतिष्वग्नीषोमयोर्बाधस्तथा सौर्यचरावप्याग्नेयरूपप्रकृतितश्चोदकप्राप्तकपालानां बाध **इत्येकः**। सौर्यमिति तद्धितप्रत्ययः ''साऽस्य देवता'' इति देवतार्थे विहितो न सम्बन्धमात्रार्थ उपेयः। प्रत्यक्षयज्यश्रवणेन द्रव्यदेवतासम्बन्धेनैवात्र यागस्यानुमेयत्वेन सम्बन्धमात्रार्थत्वे याग एवात्र न सिध्येत्। तथा च देवतासंयोगादनदनीयापि चरुशब्दितस्थाली वचनबलात्कृष्णलवद्धविरेवेति पुरोडाश विकारस्सन् पुरोडाशनिवर्तक इति **द्वितीयः**।

Siddhānta : points out that the word चरु should be taken in the sense of cooked rice only. The याज्ञिकs use it in this sense only. The vedic usage is also in the same sense. This चरु is a substitute for पुरोडाश.

**सिद्धान्तस्तु, शास्त्रस्था वा तन्निमित्तत्वात्** इति स्मृतिपादीयाधिकरणे बलवत्वेन निर्णीतया अनिस्सारितयवागूके अन्ने चरुशब्दस्य याज्ञिकप्रसिध्या ''आदित्यः प्रायणीयश्चरुः'' इति विधिशेषे ''अदितिमोदनेन'' इत्यनुवादेन वैदिकप्रसिद्ध्या चरुशब्दस्यौदनार्थत्वमेव ग्राह्यम्। न चामरप्रसिध्या स्थालीपरत्वमिति, प्राकृतपुरोडाशविकारश्चरुशब्दित ओदन इति पुरोडाशनिवृत्तिरिति।

**सौर्यचरोः स्थाल्यामेव पाकाधिकरणम्** (10-1-11)

In this adhikaraṇa the question is raised whether चरु be cooked in कपाल or स्थाली or any other vessel.

सौर्यवाक्यश्रुतश्चरुशब्दित ओदनः किं यत्र क्वचन पक्तव्यः, उत कपाले, किं वा स्थाल्यामिति **सन्देहः** ।

Pūrvapakṣa : i) Pūrvapakṣin argues that the कपाल stated in प्रकृतियाग i.e. आग्नेय is available at विकृतियाग i.e. सौर्ययाग also. In आग्नेय अष्टकपालs are stated. However, अष्टसङ्ख्या is not be taken into account. पुरोडाश stated in प्रकृति has to be substituted by चरु. कपाल continues to be cooking vessel.

ii) Pūrvapakṣin puts pūrvapakṣa in another way also.

चरु is not cooked by the heat generated in कपाल but it is cooked by the heat of the water. The vessel is not important. Hence, चरु may be cooked in any other vessel.

**पूर्वपक्षस्तु**, प्रकृतियागादाग्नेयाच्चोदकतः कपालप्राप्तेस्तत्रैव चरुः श्रपयितव्यः । यद्यप्यष्टाकपाल इत्येकपदम् । विशिष्टे सङ्ख्याकपाले द्वे अपि युगपच्चोदकेन प्राप्नुत इति पुरोडाशस्येव चरोरनेककपालेषु पाको न सम्भवति तथाप्यष्टत्वसङ्ख्याया । असम्भवात्तन्मात्रमेव निवर्तते, न कपाल इति,

सौर्यचरौ पुरोडाशस्य बाधेऽपि न कपालस्य बाध इति महत्येकस्मिन् कपाले चरुः पक्तव्यः **इत्येकः** ।

किन्तूदकगतोष्मणैव चरुः पक्तव्यः । तत्रोदकधारणार्थमुपादीयमानं कपालमप्राकृतकार्यं स्यादिति न चोदकतः कपालप्राप्तिरिति यत्र क्वचित्पक्तव्यश्चरुरिति **द्वितीयः** ।

Siddhānta : points out that the word चरु is used by याज्ञिकs for the rice cooked in स्थाली only. Hence, it has to be cooked in स्थाली only.

**सिद्धान्तस्तु**, अनिस्सारितस्थालीगतोदकोष्मपक्व एवौदने याज्ञिकानां चरुशब्दप्रयोगात्स्थाल्यामेव चरोः पाको न यत्र क्वचिदिति ।



**सौर्यचरौ पेषणबाधाधिकरणम्** (10-1-12)

The statement 'सौर्यं चरुं निर्वपेत्' enjoins सौर्ययाग. At this याग, हविस् has to be made by the cooked rice. Here, the question is raised whether पेषण i.e. चूर्णन i.e., breaking of the rice grains be made or not. It is ruled that the breaking is necessary when the cakes are to be made. But for preparing cooked rice breaking is not necessary.

''सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः'' इति सौर्यश्चरुर्विहितः । ओदनेन हविर्हि क्रियते इति समधिगतम् । पेषणं चूर्णनम् । चरौ पेषणं कर्तव्यं न वेति **सन्देहः** । तण्डुलेषु हि पेषणं कर्तुं शक्यते । अतः कर्तव्यमिति **प्राप्तम्** । **सिद्धान्तस्तु**, यद्यपि शक्यते कर्तुम् । तथापि न क्रियते । अपूपः पेषणेन विना न निर्वर्तते । ओदनस्तु विनैव पेषणेन भवति । कामं पेषणेन व्याहन्यते । पिष्टकं यवागूर्वा स्यात्खलिर्वा । तस्माच्चरोः पेषणं निवर्तते ।

**सौर्यचरौ संयवनव्याधाधिकरणम्** (10-1-13)

The statement 'प्रणीताभिः इर्वींषि संयौति' occurs in प्रकृतियाग. संयवन means पिष्टस्य उदकमिश्रणम् i.e. mixing the rice floor with water. Here, the question is raised whether संयवन be made for सौर्यचरु.

It is ruled that water is mixed to prepare rice ball. Preparing rice ball is required to prepare cakes but not for चरु. Hence, संयवन is not necessary for चरु.

प्रकृतौ श्रूयते ''प्रणीताभिर्हवींषि संयौति'' इति । पिष्टस्योदकमिश्रणं **संयवनम्** । तत्संयवनमिह सौर्यचरौ कर्तव्यं न वेति **सन्देहः** । शक्यते हि कर्तुं संयवनम् । अतः कर्तव्यमिति

**सौर्यचरौ संवपनबाधाधिकरणम्** (10-1-14)

At प्रकृतियाग संवपन is prescribed. Putting the rice floor in a vessel to mix it with water is संवपन. Whether संवपन be made for सौर्यचरु or not.

It is ruled that संवपन is made for संयवन, in प्रकृतियाग. In विकृति there is no संयवन. Hence, the संवपन need not be made.

प्रकृतौ श्रूयते ''सवितृप्रसूत इत्येवैनं देवताभिः संवपति'' इति । उदकमिश्रणाय पिष्टस्य पात्रे निक्षेपः **संवपनम्** । सौर्यचरौ संवपनं कर्तव्यं न वेति **सन्देहः** । शक्यत्वाचोदकवाक्यानुग्रहाय च कर्तव्यमिति **प्राप्तम्** । **सिद्धान्तस्तु,** संयवितुं हि प्रकृतौ क्रियते । न चरोः संवपनव्येन प्रयोजनमस्ति । अतो न कर्तव्यमिति ।

**सौर्यचरौसंतापनबाधाधिकरणम्** (10-1-15)

At प्रकृतियाग, संतापन is prescribed. सन्तापन means heating the कपालs. Here, the question is raised whether सन्तापन be made for चरु.

It is ruled that सन्तापन is made below the कपालs for cooking. चरु is prepared above these. Hence, संतापन is not necessary for चरु.

प्रकृतौ श्रूयते ''वसूनां रुद्राणामादित्यानां भृगूणामङ्गिरसां धर्मस्य तपसा तप्यध्वम्'' इति । कपालानामङ्गारैः प्रतापनं **सन्तापनम्** । सौर्यचरौ सन्तापनं कर्तव्यं न वेति **सन्देहः** । प्रकृतिवद्वचनात्कर्तव्यमिति **प्राप्तम्** । **सिद्धान्तस्तु,** कपालादधः पाकार्थं हि सन्तापनं क्रियते । तस्मादुपरि सन्तप्तव्ये चरौ चोदकं न प्रापयति । तस्मान्न कर्तव्यमिति ।

**सौर्यचरौ उपधानबाधाधिकरणम्** (10-1-16)

For सौर्यचरु, उपधान is not necessary. उपधान means placing the कपालs on the burning coal. This is not necessary for चरु.

सौर्यचरावेवोपधानं कर्तव्यं न वेति **सन्देहः** । अङ्गारेषु कपालस्थापनमुपधानम् । प्रकृतिवद्वचनात्कर्तव्यमिति **प्राप्तम्** । **सिद्धान्तस्तु,** अधःपाकार्थत्वान्न कर्तव्यमिति ।

**सौर्यचरौ पृथुश्लक्ष्णबाधाधिकरणम्** (10-1-17)

At प्रकृतियाग, पृथुभाव and श्लक्ष्णीभाव of पुरोडाश are prescribed. पृथुभाव means spreading पुरोडाश placed in कपालs pressing it by hand. श्लक्ष्णीभाव sprinkling water on it. These two are required only for पुरोडाश but not for चरु.

प्रकृतौ श्रूयते ''उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति । सं ते तन्वा तनूः सृज्यतामिति त्रिभिः परिमार्ष्टि'' इति । कपालेष्ववस्थापितस्य पुरोडाशस्य हस्तसङ्घट्टनेन सर्वेषु कपालेषु प्रसारणं



पृथुभावः । मार्जनं श्लक्ष्णीभावकरणम् । सौर्ये चरौ पृथुभावः श्लक्ष्णभावश्च कर्तव्यौ न वेति **सन्देहः** । चोदकानुग्रहाय कर्तव्याविति **प्राप्तम्** । सिद्धान्तस्त्वनपूपत्वान्न कर्तव्याविति ।

**सौर्यचरौ अभ्यूहबाधाधिकरणम्** (10-1-18)

At प्रकृति, अभ्यूह is prescribed. अभ्यूह means placing burning coal on the top. This is necessary for पुरोडाश but not for चरु.

प्रकृतौ श्रूयते ''वेदेन भस्मनाऽङ्गारानभ्यूहति'' इति । भस्मना अङ्गारैश्चोपर्याच्छादनमभ्यूहः । स च सौर्यचरौ कर्तव्यो न वेति **सन्देहः** । प्रकृतिवद्वचनात्कर्तव्य इति **प्राप्तम्** । **सिद्धान्तस्तु,** पुरोडाशस्योपरि पाकार्थो ह्यभ्यूहः क्रियते । न चरोः परिपाकोऽपेक्षितः । अतो न कर्तव्य इति ।

**सौर्य चरौ अवज्वलनबाधाधिकरणम्** (10-1-19)

At दर्शपूर्णमास, अवज्वलन is prescribed by the statement 'दर्भपिञ्जुलैः अवज्वलति.' अवज्वलन means enkindling. This is required for directly cooking. Hence, it is not necessary for सौर्यचरु.

दर्शपूर्णमासयोः श्रूयते ''दर्भपिञ्जूलैरवज्वलयति'' इति । दर्भपिञ्जूलैः प्रज्वालनमवज्वलनम् । तत्किं सौर्यचरौ कर्तव्यं न वेति **सन्देहः** । प्रकृतिवद्वचनात्कर्तव्यमिति **प्राप्तम्** । **सिद्धान्तस्तु,** उपरि पाकार्थत्वान्न कर्तव्यमिति ।

**सौर्यचरौ उद्धृत्यासादनबाधाधिकरणम्** (10-1-20)

At प्रकृतियाग the statement 'अन्तर्वेद्यां हवींषि आसादयति' occurs. The word आसादन means placing the पुरोडाश on अन्तर्वेदि taking it from कपाल. Here, the question is raised whether this आसादन be made at विकृति. It is ruled that as it is not expressly prescribed at प्रकृति, it need not be observed at विकृति.

प्रकृतौ श्रूयते ''अन्तर्वेद्यां हवींष्यासादयति'' इति । कपालेभ्यः पुरोडाशं पृथक्कृत्यान्तर्वेद्यामवस्थापनं **व्युद्धृत्यासादनम्** । तच्च सौर्ये चरौ कर्तव्यं न वेति **सन्देहः** । प्रकृताविव कर्तव्यमिति **प्राप्तम्** । **सिद्धान्तस्तु,** तदिदं व्युद्धृत्यासादनं प्रकृतौ न श्रूयते । कपित्थवत्परिशोष्यकरणे कपालभेदः स्यात् । अर्थात्पूर्वमेव क्रियते । तस्य चोद्धरणस्यार्थिकत्वात् न कर्तव्यत्वमिति ।

**इति दशमाध्याये प्रथमः पादः**

## दशमाध्याये द्वितीयः पादः

### कृष्णले चरौ पाकानुष्ठानाधिकरणम् (10-2-1)

The statement 'प्राजापत्यं धृते निर्वपेत् कृष्णलमायुष्कामः' enjoins the offering of कृष्णल i.e. सुवर्णमाष. Here, the question is raised whether the कृष्णलs be cooked or not.

प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः'' इति श्रुतकृष्णलशब्दितस्वर्णमाषेषु पाकः कार्यो न वेति **सन्देहे,**

Pūrvapakṣa : argues that cooking involves baking of the grains to change of its colour, taste etc. These are not possible in the case of कृष्णल, hence, cooking is not to be observed for कृष्णल.

पाको हि नाम रूपरसादीनां पूर्वेषां तिरोधानेनापूर्वाणां प्रादुर्भावरूपविक्लित्तिः । एवंरूपपाकस्य कृष्णलेष्वसम्भवान्न कर्तव्यः पाक इति **प्राप्तम्** ।

Siddhānta : points out that cooking is not possible in the primary sense as described above. However, it can be observed in the secondary sense of heating. This is necessitated by the statement घृते श्रपयति.

**सिद्धान्तस्तु,** मुख्यस्य विक्लित्तिरूपपाकस्यायोगेऽपि ''घृते श्रपयति'' इति वचनबलाद-मुख्यस्याप्युष्णीकरणमात्ररूपपाकस्य सम्भवात्कर्तव्यः पाकः । उष्णीकरणमेव पाकशब्दार्थ इति पक्षे तु मुख्य एव पाक इति ।

### कृष्णले उपस्तरणाभिघारणयोः बाधाधिकरणम् (10-2-2)

In this adhikaraṇa the question is raised whether उपस्तरण and अभिघारण be made for कृष्णलs or not.

कृष्णलचरावेव किमुपस्तरणाभिघारणे कार्ये न वेति **सन्देहे,**

Pūrvapakṣa : states that these also have to be performed as is done in the case of पाक.

चोदकतस्तयोः प्राप्तत्वात्कर्तव्ये पाकवत्ते अपीति **प्राप्ते**



Siddhānta : points out उवस्तरण and अभिधारण are meant to make the offering relishing. This is stated as 'यदुपस्तृणाति यदभिघारयति अमृताहुतिमेवैनां करोति'. This cannot be effected in the case of कृष्णलs. Hence, उपस्तरण and अभिधारण need not be observed for कृष्णल.

**सिद्धान्तः,** ''यदुपस्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोति'' इति वचने अमृताहुतिसाधनत्व-मवगम्यते । तच्च हविषः स्वादिमसम्पादनं विना न युक्तमिति कृष्णलेष्वनदनीयेषु स्वादिमा न सम्भवतीत्यर्थलोपान्न स्वाद्वर्थोपस्तरणाभिघारणे कार्ये इति ।

Siddhāntin gives another explanation. उपस्तरण is meant to make the स्रुक् oily, so that हविस् does not slip from it. अभिघारण is meant to hold the हविस् together. These requirements are not necessary for कृष्णल.

यदि च **क्रियेत वाऽर्थवादत्वादिति** सूत्रोक्तदिशा ''अङ्गेषु फलश्रुतिरर्थवादः'' इति न्यायेनामृता-हुतिवचनस्य केवलं स्तुत्यर्थत्वान्न स्वादिमार्थमुपस्तरणादि तर्हि हविरवयवानां स्रुचि संसर्गसम्भवेन यथा स्रुच्यसंसक्तं कृत्स्नं हविराहवनीये पतेदित्येवमर्थमुपस्तरणेन स्रुक् स्निग्धा क्रियते, अभिघारणेन च विशरणपरिहाराय हविः स्निग्धं क्रियते इत्युपस्तरणाभिघारणयोर्दृष्टार्थत्वात्कृष्णलानां स्रुचि संसर्ग-प्रसक्त्यभावाद्विशरणप्रसक्त्यभावाच्च न तत्परिहारार्थं कर्तव्ये ।

### कृष्णले चरौ भक्षसद्भावाधिकरणम् (10-2-3)

It is already decided in the last adhikaraṇa of the fourth section of third chapter that there is हविश्शेषभक्षण of कृष्णलचरु as प्रतिपत्तिकर्म. In this section later हविश्शेषभक्षण is affirmed. However by of कृत्वाचिन्ता here. the question is raised that the शेषभक्षण is stated for पुरुषप्रीति in the प्रकृति but not as प्रतिपत्तिकर्म, hence whether it is to be observed in respect of कृष्णलचरु or not.

''प्राजापत्यं चरुं निर्वपेद्धृते शतकृष्णलम्'' इति कृष्णलचरौ प्रकृतितश्चोदकप्राप्तहविश्शेषभक्षणं शेषस्य प्रतिपत्तिरूपमिति तृतीयस्य चतुर्थपादान्त्यनये, तथा **शेषभक्षाश्च तद्वत्** इत्यत्रैव च पादेऽग्रे सिद्धत्वात्कर्तव्यमेव । अथापि प्रकृतौ भक्षणं पुरुषप्रीत्यर्थमेव । न प्रतिपत्तिरिति कृत्वाचिन्तया कृष्णलचरौ कर्तव्यं न वेति **सन्देहे,**

Pūrvapakṣa : argues that कृष्णलs cannot be eaten. Hence, शेषभक्षण of these cannot generate प्रीति. Therefore, शेषभक्षण of कृष्णल चरु need not be made.

कृष्णलानामनदनीयत्वेन तद्भक्षणे पुरुषप्रीतेरजननेन लुप्तार्थत्वादुपस्तरणाभिघारणवन्न कर्तव्यमिति प्राप्तम् ।

Siddhānta : points out that in the statement 'प्राजापत्यं चरुं निर्वपेत् घृते' कृष्णल is stated as प्रधान and घृत as चरुगुण. Hence, even though कृष्णल cannot be eaten it should be licked as in the case of sugar cane. This serves the purpose of शेषभक्षण.

**सिद्धान्तस्तु**, ''प्राजापत्यं चरुं निर्वपेद्धृते'' इति वाक्ये कृष्णलानां प्राधान्येन घृतस्य चरुगुणत्वेन निर्देशात्प्रधानानामेव फलवाक्ये अन्वयस्यौचित्यात्तेषाञ्चानदनीयानामपि वचनबलाद्भक्षणमुपपन्नमिति चुच्छूषाकारविशिष्टभक्षणं कृष्णलानां विधीयत इति कार्यमेव तदिति ।

**कृष्णलचरौ 'एकधा ब्रह्मण उपहरति' इत्यनेन सपरिवारविधानाधिकरणम्** (10-2-4)

With reference कृष्णचरु it is stated 'एकधा ब्रह्मण उपहरति.' Here, the question is raised whether by the word एकधा, इडाप्राशित्र चतुर्धाकरण । शंयुवाककालभक्षाणां सकृत्त्वं i.e. performing once or सहत्वम् i.e. performing together is enjoined without any specification or सहत्व i.e. performing together is specifically enjoined.

कृष्णलचरावेव श्रूयते ''एकधा ब्रह्मण उपहरति'' इति । तत्रैकधाशब्दः किमिडाप्राशित्र-चतुर्धाकरणशंयुवाककालभक्षाणामेकधापदेन सकृत्वं सहत्वं वा विधीयत इत्यनियमः, उत सहत्वमेवेति नियम इति **सन्देहे**,

Pūrvapakṣka : argues that the word एकधा is used in both the senses viz. सकृत् i.e. once, as in the statement 'यः सकृत् गायति' and सह i.e. together, as in the statement 'यश्च सह गायति.' Therefore the word एकधा may be taken in any one of the two senses here.

यः सकृद्गायति यश्च सह गायति तत्रोभयत्राप्येकधा गायतीति लोके प्रयोगात्सकृत्वं, सहत्वं वोभयमपि शब्दार्थ इत्यविशेषाद्यत्किञ्चिद्विधीयत इति **प्राप्ते**



Siddhānta : points out that though the word एकधा means both सकृत्व and सहत्व, here, it, should be taken in the sense of सहत्व only. If it is taken in the sense सहत्व, then, the उपहार of इडाप्राशित्रचतुर्धाकरण etc. could be made at one time only. On the other hand if the word एकधा is taken in the sense of सकृत्, only one भक्ष has to be made, the other भक्षs will have to be given up. This will result in giving up many items. In the case it is taken in the sense together, only observing these at different times i.e. नानाकाल has to be ignored. It is not proper to give up many for the sake of one.

**सिद्धान्तः** । एकधाशब्दस्योक्तदिशोभयार्थत्वेऽपि सहत्वमेव विधेयम् । न सकृत्वम् । तथात्वे हि प्रकृतितश्चोदकप्राप्तानामिडाप्राशित्रचतुर्धाकरणशंयुवाककालभक्षाणां चतुर्णामप्येककाले उपहारः सिध्यति । सकृत्वविधानेत्वेक एवास्य भक्ष उपसंहर्तव्यो भक्षान्तराणि निवर्तेरन्नित्यनेकबाधः स्यात् । न च सहत्वविधावपि चोदकप्राप्तनानाकालबाधोऽस्तीति वाच्यम् । प्रधानभक्षबाधापेक्षया गुणभूतकाल बाधस्य न्याय्यत्वादिति ।

**कृष्णले चरौ बह्मणे सर्वभक्षभागार्पणाधिकरणम्** (10-2-5)

With reference to कृष्णलचरु it is stated 'सर्वं ब्रह्मणे परिहरति' the word परिहरति means समर्पयति. Here, the question is raised whether the word सर्वम् conveys the entire portion meant for the ब्रह्मा or the entire चरु meant for ब्रह्मा, अध्वर्यु etc. all priests.

पूर्वन्यायेन शङ्कनात्सङ्गतिः । कृष्णलचरावेव श्रूयते ''सर्वं ब्रह्मणे परिहरति'' इति । परिहरति समर्पयतीत्यर्थः । ब्रह्मसहितानामृत्विजामेकैकस्येडाभक्षणादि । चतुर्षु कालेषु चत्वारो भक्षभागा-श्चोदकतः प्राप्ताः । तत्र सर्वत्वं ब्रह्मसम्बन्धिचतुर्थभागमात्रविषयं विधीयते, किं वाऽध्वर्य्वादि-पुरुषान्तरभागविषयमपीति **सन्देहः** ।

Pūrvapakṣa : argues the word सर्वं should be taken in the sense the entire portion meant for ब्रह्मन् but not the entire चरु including the portion meant for अध्वर्यु etc others. In the प्रकृति याग the share of others is given to them. It is not proper to deny it in the विकृतियाग.

**पूर्वपक्षस्तु,** ''यद्ब्रह्मणे परिहरति तत्सर्वमिति वा, यद्ब्रह्मणे सर्वं तत्परिहरति'' इति वा वचनव्यक्तिमाश्रित्य ब्रह्मभागस्य परिहर्तव्यस्य सर्वत्वं सर्वस्य ब्रह्मसम्बन्धिनो भागस्य परिहर्तव्यत्वं वोभयथापि ब्रह्मसम्बन्धिन एव भागचतुष्टयस्य सर्वत्वं विधीयते । तथा च यथा पूर्वत्र चोदकप्राप्तभक्षान्तराबाधायैकधापदेन सहत्वविधिरेवमत्रापि चोदकप्राप्ताध्वर्य्वादिपुरुषान्तरसम्बन्धिभक्षाबाधाय सर्वब्रह्मभागपरिहारविधिः । अन्यथा ''यत्परिहरति तत्सर्वं ब्रह्मणे, नाध्वर्य्वादिभ्यः'' इति व्यत्त्याश्रयेण परिहार्यस्य सर्वस्य ब्रह्मसम्बन्धिताविधौ पुरुषान्तरस्य भक्षबाधः स्यात् ।

Siddhānta : points out that if only the portion of the चरु meant for ब्रह्मा is taken as the meaning of सर्वम्, then, the very statement becomes unnessary, since, the entire portion meant for him is given to him in the normal course. Hence, the entire चरु including the portion meant for others has to be given to ब्रह्मा only.

**सिद्धान्तस्तु,** यद्यत्र ब्रह्मसम्बन्धिभागानां सर्वत्वविधिपरमिदं वाक्यं स्यात्तदा वाक्यमेतदनर्थकं स्यात् । सर्वस्यापि तदीयभागस्य चोदकत एव ब्रह्मणः प्राप्तत्वात् । अतः परिहरतीत्यविशेषात्प्राकृतसर्वपरिहारमनूद्य ब्रह्मसम्बन्ध एव विधेय इति प्राप्ताम्नानादन्येषामृत्विजां भक्षो बाध्यत एवेति ।

### भक्षभागानां स्वस्वकाले ब्रह्मणा भक्षणाधिकरणम् (10-2-6)

It was stated in the earlier adhikaraṇa that the भक्षs to be given to अध्वर्यु etc be given to ब्रह्मा only. In this connection the statement 'एकधा ब्रह्मणे उपहरति' occurs. This means that भक्ष meant for अध्युर्यु etc be given to ब्रह्मा simultaneously. Here, the question is raised whether the भक्षण also be made in one stretch or at different times.

अध्वर्युप्रभृतीनां भक्षाः सर्वे ब्रह्मण उपहार्याः । ते च ''एकधा ब्रह्मण उपहरति'' इति सहत्वविधानादेकस्मिन्नेव काले उपहार्या इत्यधिकरणद्वयेन स्थिते सति किं युगपदुपहृतानां तेषां युगपदेव भक्षणं, उत कालभेदेनेति **सन्देहे,**

Pūrvapakṣa : argues that since, भक्ष is brought simulteneously भक्षण also be made in the same way.



उपहारस्य यौगपद्याद्भक्षणमपि युगपदेव । विलम्बे हेत्वभावात् । एवञ्च पूर्वत्र भक्षाणां पुरुषान्तरसम्बन्धस्येव प्राकृतनानाकालस्यापि बाध इति **प्राप्ते**

Siddhānta : points out that even though भक्ष is brought simultaneously, there is no reason to eat it simultaneously. Hence, भक्षण is to be made as per the timings in प्रकृतियाग.

**सिद्धान्तः,** उपहरणस्य यौगपद्येऽपि तदैव भक्षणीयमित्यत्र हेत्वभावाच्चोदकप्राप्तप्राकृततत्तत्कालाबाधाय स्वस्वकाल एव भक्षणम् ।

### ब्रह्मभक्षे चतुर्धाकरणादीनामभावाधिकरणम् (10-2-7)

In the प्रकृतियाग i.e. आग्नेय, making four portion of पुरोडाश is prescribed. It is also specified that this is for brahmā, this is for adhvaryu etc. Here, the question is raised whether चतुर्धाकरण and व्यादेश i.e. mention of names of the priest, be observed for कृष्णल चारु also not.

प्रकृतावाग्नेये पुरोडाशचतुर्धाकरणं विधाय ''इदं ब्रह्मणः । इदं होतुः । इदमध्वर्योः । इदमग्नीधः'' इति व्यादेशशब्दितो निर्देशो विहितः । तौ किं चतुर्धाकरणव्यादेशौ कृष्णलेषु कर्तव्यौ न वेति **सन्देहे,**

Pūrvapakṣa : argues that just as it is concluded in the earlier adhikaraṇa भक्षण be made at different times, here also चतुर्धाकरण and व्यादेश be made though only one priest i.e. ब्रह्मा undertakes भक्षण.

चोदकतः कृष्णलेष्वपि तयोः प्राप्तेः पूर्वत्र भक्षकालानामबाधो यथा तथाऽत्रापि चतुर्धाकरणव्यादेशयोरपि न बाध इति **प्राप्ते**

Siddhānta : Siddhāntin points out that in प्रकृतियाग, भक्षण was to be made by four priests hence, चतुर्धाकरण and व्यादेश were prescribed. Here, since, the भक्षण of entire चरु is prescribed for one priest i.e. ब्रह्मा. There is no need of चतुर्धाकरण and व्यादेश.

**सिद्धान्तः,** प्रकृतौ चतुर्धाकरणं ब्रह्मादीनां चतुर्णामृत्विजां भक्षणार्थम् । नादृष्टार्थम् । सर्वर्त्विक्सम्बन्धिनोऽपि भक्षभागस्य ''सर्वं ब्रह्मणे परिहरति'' इति वचनेन ब्रह्मसम्बन्धिताकरणे भक्षणरूपार्थलोपान्न चतुर्धाकरणव्यादेशौ कर्तव्याविति ।

## ज्योतिष्टोमे ऋत्विग् दानस्य आनन्त्यर्थताधिकरणम् (10-2-8)

At ज्यातिष्टोम by the statement 'गौश्च अश्वश्च' etc. दक्षिणा is stated. It is also stated 'ऋत्विग्भ्यो दक्षिणां दाति.'

Here, the question is raised whether दक्षिणादान is अदृष्टार्थ or आनन्त्यर्थ i.e. to persuad the priests to assist in the sacrifice.

ज्योतिष्टोमे ''गौरश्वश्च'' इत्यादिना ''तस्य द्वादशशतं दक्षिणा'' इत्यन्तेन गवादिदक्षिणां विधाय तत्सन्निधौ ''ऋत्विग्भ्यो दक्षिणां ददाति'' इति श्रुतं दक्षिणादानं किमदृष्टार्थम्, उत ऋत्विगानत्यर्थमिति **सन्देहे,**

Pūrvapakṣa : argues that if दक्षिणा is meant to secure the services of the priests, it should be commenserate with the work entrusted. However, it is found that for त्रैधातवीय sacrifice which is easier one thousand दक्षिणा is prescribed while for the ऋतपेय sacrifice which involves labourious programme औदुम्बरसोमचमस is prescribed.

Further, the दक्षिणा fixed by यजमान may not be acceptable to the priests. Therefore, दक्षिणा has to be taken as अदृष्टार्थ but not for आनन्त्यर्थ.

''दद्यात्'' इत्याख्यातोपात्तभावनाया भाव्याकांक्षायामेकपदोपात्तं दानमेवैकपदश्रुत्या भाव्यत्वेनान्वेति। न तु वाक्यप्रमाणकं पदान्तरोपात्तमृत्विगानमनम्। श्रुतितो वाक्यस्य दुर्बलत्वात्। वशीकरण रूपानत्यर्थत्वे च कर्मानुरूपेण द्रव्यं देयम्। वैरूप्यश्चात्र दृश्यते। स्वल्पकर्मणि त्रैधातवीये ''सहस्रं देयम्'' इति, बह्वायाससाध्ये ऋतपेयाख्ये कर्मणि ''औदुम्बरः सोमचमसो दक्षिणा'' इति। तथा द्वादशशतादिपरिमाणनियमो मन्त्रवत्वनियमश्चानत्यर्थत्वेऽनुपपन्नः। न हि यजमानाऽभिमतद्रव्यपरिमाणेन कर्मकरा आनमेयुः। किन्तु स्वाभिमतेनैव। तस्माच्चतुर्धाकरणव्यादेशयोर्दृष्टार्थत्वेऽप्यदृष्टार्थं दक्षिणादानमिति **प्राप्तम्।**

Siddhānta : points out that there is a clear statement 'दीक्षितमदीक्षिताः दक्षिणापरिक्रीताः याजयेयुः.' This means दक्षिणा is for आनति i.e. persuading the priests to assist in the sacrifice. It should be noted here that fixing certain amount as दक्षिणा is अदृष्टार्थ while giving it to the priests is आनन्त्यर्थ.



**सिद्धान्तस्तु,** द्रव्यपरिमाणादिनियमस्यादृष्टार्थत्वेऽपि कर्मकरेभ्यो दीयमानस्यापेक्षिताऽनतिद्वारा दृष्टार्थत्वसम्भवेऽदृष्टार्थत्वायोगात् ''दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयेयुः'' इति स्पष्टवचनाच्चाऽनत्यर्थमेव दक्षिणादानमिति।

## ज्योतिष्टोमे भक्षस्य प्रतिपत्त्यर्थताधिकरणम् (10-2-9)

At इष्टि there are भक्षs related with इडाप्राशित्र चतुर्धाकरणशंयुवाककाल.

At सोम there are भक्षs related with वषट्कार and होमाभिषव.

In respect of these the question is raised whether these are for आनति or प्रतिपत्ति.

सन्तीष्टाविडाप्राशित्रचतुर्धाकरणशंयुवाककालभक्षाः सोमे च होतृचमस इत्यादिसमाख्यानिमित्तकवषट्कारनिमित्तकहोमाभिषवनिमित्तकाश्च भक्षाः। ते किमृत्विगानत्यर्था, उत प्रतिपत्त्यर्था इति **सन्देहे,**

Pūrvapakṣa : argues that शेषभक्षण pleases the priests, therefore, these are for आनति i.e. persuading the priests to assist in the sacrifice, but not for प्रतिपत्ति.

पूर्वत्र ऋत्विग्भ्यो दक्षिणादानस्येव शेषभक्षणस्य ऋत्विक्प्रीतिद्वारा तदानतेः प्रत्यक्षतोऽवगति सम्भवेन परिक्रयार्था भक्षा इति **प्राप्तम्।**

Siddhānta : points out the हविर्द्रव्य is offered to देवता. Hence, यजमान cannot utilise it for the आनति of priests.

Further, the statement यजमान पञ्चमाः इडां भक्षयन्ति indicates that यजमान also makes शेषभक्षण. From this it is clear that शेषभक्षण is not for आनति but it is प्रतिपत्तिकर्म.

**सिद्धान्तस्तु,** यद्यपि प्रत्यक्षा प्रीतिस्तथापि ''कृतकार्यं द्रव्यं प्रतिपत्तिमपेक्षते'' इत्यपेक्षितविधिलाभाद्दृष्टार्थत्वाविशेषाद्देवतायै सङ्कल्पितद्रव्यशेषेण परिक्रयणस्य यजमानेन कर्तुमशक्यत्वात् ''यजमानपञ्चमाः सम्भूयेडां भक्षयन्ति'' इत्यक्रीतस्यापि यजमानस्य श्रुतभक्षसहभावाच्च प्रतिपत्त्यर्थाः शेषभक्षा इति।

### सत्रे ऋत्विग् वरणाभावाधिकरणम् (10-2-10)

At सोम sacrifice by the hymns 'अग्निर्होता' 'समे होता' ऋत्विग् वरण i.e. प्रार्थना of ऋत्विक्s to assist in the sacrifice, is prescribed. Here, the question is raised whether at सत्रयाग ऋत्विग् वरण be made or not.

सोमे ''अग्निर्होता'' ''समे होता'' इत्यादिमन्त्रै ऋत्विजां वरणमाम्नातम् । वरणं नाम ''अग्निर्होता'' इत्यादिमन्त्रेण प्रार्थनम् । तत्सत्रे कर्तव्यं न वेति **सन्देहे,**

Pūrvapakṣa : argues that by the statement 'ये यजमानाः ते ऋत्विजः' ऋत्विक्त्व is stated for यजमानs. Hence, वरण has to be made.

प्रकृतौ वरणस्य ऋत्विक्त्वार्थत्वात्सत्रे च ''ये यजमानास्ते ऋत्विजः'' इति वचनेन यजमाने-ष्वार्त्विज्यमाधातव्यमिति भक्षणवदलुप्तार्थत्वात् कर्तव्यमेव वरणमिति **प्राप्ते,**

Siddhānta : points out that वरण is meant for the आनति of priests. Since, in सत्र the very यजमानs play the role of ऋत्विक्, their आनति is not necessary.

**सिद्धान्तः,** प्रकृतौ वरणस्याऽनत्यर्थत्वात्सत्रे च यजमानानामेव ऋत्विक्त्वेन यजमानैरात्मनो वरणेनाऽनतिकरणासम्भवादानतिरूपार्थलोपान्न कर्तव्यं वरणम् ।

### सत्रे परिक्रयाभावाधिकरणम् (10-2-11)

In this adhikaraṇa the question whether there is परिक्रयण at सत्रयाग or not is raised.

दक्षिणादानं परिक्रयार्थं नादृष्टार्थमित्युक्तम् । परिक्रय एव सत्रेऽस्ति न वेति **सन्देहे,**

Pūrvapakṣa : By the statement गौः न दीयते' गोदान is prohibited. This means that अश्वदान etc is permitted. Hence, there is परिक्रयण at सत्र also.

''नात्र गौर्दीयते'' इति सत्रे गोदानप्रतिषेधस्य दानप्रसक्त्यभावेऽनुपपत्तेर्वरणस्याकरणेऽपि गोव्यतिरिक्तानामश्वादीनां दानं न बाध्यम् । किन्तु कार्यमिति **विशेषशङ्कायां**

Siddhānta : points out that the statement गौः न दीयते occurs after the statement 'अदक्षिणानि सत्राणि आहुः.' Therefore, it is only अनुवाद of general



prohibition. Hence, this does not lead to the implication that अश्व etc. may be given. Hence, there is no परिक्रय at सत्र.

गोदाननिषेधवाक्यस्य ''अदक्षिणानि सत्राण्याहुः'' इत्युपक्रम्य ''न ह्यत्र गौर्दीयते, न वासो, न हिरण्यम्'' इति पठितत्वेन ''अदक्षिणानि'' इति विध्यान्तरशेषत्वेन ततः प्राप्तगोदानाभावानुवादक-तयोपपत्त्या न गवादिव्यतिरिक्ताश्वादिदानप्रापकत्वमस्तीत्यानतिरूपार्थाभावाद्वरणस्येव परिक्रयस्यापि बाध इति **सिद्धान्तः** ।

### उदवसानीयस्य सत्रानङ्गतया तत्र दानस्य परिक्रियार्थत्वाधिकरणम् (10-2-12)

The statement 'सत्रादुदवसाय पृष्ठशमनीयेन सहस्रदक्षिणेन यजेत' enjoins पृष्ठशमनीय याग. Here, the question is raised whether this याग is अङ्ग of सत्रयाग or not.

अस्ति सोमविकृतिः पृष्ठशमनीयो नाम यागः, ''सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्'' इति श्रवणात् । ज्योतिष्टोमविकारः पृष्ठशमनीययागः किं सत्राङ्गमुत नेति **सन्देहः** ।

Pūrvapakṣa : argues that the expression. उदवासाय indicates that this याग has to be performed after the completion सत्रयाग by the same यजमान. Hence, it is अङ्ग of सत्र just as बृहस्पतियाग is अङ्ग of वाजपेय on the basis of the statement 'वाजपेयेन इष्ट्वा बृहस्पतिसवेन यजेत.'

As it is अङ्ग of सत्र. दक्षिणा stated for this has to be as अदृष्टार्थ, but not आनत्यर्थ since, यजमान himself plays the role of ऋत्विक् in the सत्र.

**पूर्वपक्षस्तु,** उदवसायेति क्त्वादेशल्यप्प्रत्ययेन सत्रसमाप्तेः पूर्वकालत्वस्य पृष्ठशमनीयस्योत्तर-कालत्वस्य तयोस्समानकर्तृकत्वस्य चावगमात् ''अग्निं चित्वा सौत्रामण्या यजेत'' ''वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत'' इत्यादौ सौत्रामणिबृहस्पतिसवादेरग्निचयनवाजपेयाद्यङ्गत्वमिव फलवत्सत्रोत्तर-कालश्रुतोऽप्ययं पृष्ठशमनीयः सत्राङ्गम् । अन्यथा कालार्थसम्बन्धपक्षे उदवसायेत्यस्य समाप्त्यनन्तरकाल इति काललक्षणा, पृष्ठशमनीये फलकल्पनाप्रसङ्गश्च । अङ्गत्वपक्षे तु सत्रफलेनैव फलवत्वम् । तथा चायमर्थः, यथोक्ताङ्गसहितं सत्रं समाप्य न तावता कृती । किन्चिदमपरमप्यङ्गं कार्यमिति । तथा च ये सत्रकर्तारो यजमानास्त एव पृष्ठशमनीयेऽपि कर्तार इति तत्र श्रुतदक्षिणादानमदृष्टार्थम् ।

Siddhānta : points out that the expression उदवसाय does not mean after the completion, it only means after. Hence, पृष्ठशमनीय is not अङ्ग of सत्र. समाप्ति i.e. completion is a state of activity just as आरम्भ and अवस्थान are the states of activity.

In the statement 'वाजपेयेन इष्ट्वा बृहस्पति सवेन यजेत.' It is clearly stated that the बृहस्पति be performed after the completion of वाजपेय. The completion of the earlier and the commencement of later could have अङ्ग and अङ्गि relation. However, the statement सत्रादुदवसाय does not mean after the completion of सत्र. An item that is undertaken after some other will not be its अङ्ग. Hence, दक्षिणा offered at this याग is not अदृष्टार्थ but it is आनत्यर्थ.

**सिद्धान्तस्तु,** उत्पूर्वो ह्यवस्यतिशब्दस्त्यागवचनः । त्यागश्च निश्शेषं समाप्तस्यैव भवति । त्यक्तस्य न पुनरङ्गविधिः सम्भवति । "वाजपेयेनेष्ट्वा" इत्यादौ तु वाजपेयकरणिकाया भावनायाः पूर्वकालतावगमाद्वाजपेयप्रयोगसमाप्तिरेवावगम्यते । न तु त्यागः । समाप्तिश्च क्रियाया अवस्थाविशेषो न त्यागः । क्रियाया अवस्थाविशेषा ह्येते प्रारम्भानुष्ठानपरिसमाप्तयः" इति **तन्त्ररत्नोक्तेः** । ततश्च यथोक्तं वाजपेयप्रयोगं समाप्येदमपरमङ्गं कर्तव्यमिति युज्यते विधिः । नात्र तथा । कर्मण एव त्यागश्रवणात् । तस्मादनङ्गं पृष्ठशमनीययाग इति ।

**उदवसानीये सत्रिभ्यो अन्येषां ऋत्विक्त्वाधिकरणम्** (10-2-13)

It is stated earlier that पृष्ठशमनीय be performed by the very person who performed सत्र. Here, the question is raised whether this याग be performed by all यजमानs of सत्र or by each one separately.

पृष्ठशमनीय उदवसानकर्तृभिरेव कार्य इति ल्यप्प्रत्ययेन समानकर्तृकत्वार्थकत्त्वादेशभूतेन सिद्धे सति किं तैः सर्वैर्मिलित्वा कार्यः, उतैकैकश्येनेति **सन्देहे,**

Pūrvapakṣa : argues that just as सत्र was performed by many jointly, this याग also be performed by many.

यथा "ऋद्धिकामाः सत्रमासीरन्" इत्यत्राख्यातोपात्तस्य बहुत्वस्योपादेयकर्तृगामित्वेन विवक्षित-तया बहुभिः संहत्य सत्रं क्रियते तथा "सत्रादुदवसाय" इत्यादिवाक्ये यजेरन्नित्याख्यातोपात्तस्य बहुत्वस्य विवक्षितत्वात्संहत्यैव सर्वैः कर्तव्य इति **प्राप्तम्** ।



The Siddhānta of this Pūrvapakṣa will be presented later under the सूत्र, एकशस्त्वविप्रतिषेधात् etc.

In the meanwhile by way of कृत्वा चिन्ता another pūrvapakṣa is presented as follows :

अस्य पूर्वपक्षस्य एकशास्त्वविप्रतिषेधात्प्रकृतेश्चैकसंयोगात् इति सूत्रेण सिद्धान्तं चिकीर्षुर्मध्ये **तत्रान्यानृत्विजो वृणीरन्** इति सूत्रेण चिन्तान्तरं कृतवान् ।

In this याग which is to be performed jointly by many, the question arises whether it should be performed by many याजमानs jointly or by many ऋत्विक्s jointly.

संहत्य कर्तव्यः पृष्ठशमनीय इति **स्थिते** सति, किं यजमानैरेव मिलित्वा कर्तव्यः, उत **ऋत्विग्भिरिति सन्देहे,**

Pūrvapakṣin argues that यजमानs perform उदवसानीय jointly. The same have to perform पृष्टशयनीय also jointly.

उदवसाने यजमानानामेव कर्तृत्वात्तत्समानकर्तृकत्वस्यत्त्वादेशल्यपा प्रतीतेर्यजमाना एव संहत्य कुर्युरिति **प्राप्ते**

Siddhānta : points out that समानकर्तृकत्व relates to only यजमान. He can hire the service of ऋत्विक् as in प्रकृतियाग and perform this sacrifice.

**सिद्धान्तः,** यजेरन्नित्याख्यातेन यो व्यापारो विधीयते तस्यैवोदवसानकर्तृसमानकर्तृकता त्त्वादेश-ल्यप्प्रत्ययेनोच्यते । यजिना यागक्रियैव यजमानव्यापारोऽभिधीयत इति यजमानव्यापारस्यैव ल्यपोद-वसानसमानकर्तृकत्वावगतेश्चोदकाबाधेन प्रकृताविव ऋत्विजो वरणीया इति ।

**उदवसानीयस्य ऋत्विजामे कैकेन अनुष्ठानाधिकरणम्** (10-2-14)

In this adhikaraṇa, Siddhānta for the pūrvapakṣa stated in the earlier adhikaraṇa before कृत्वाचिन्ता will be stated. In that pūrvapakṣa it was claimed that in the statement सत्रादुदवसाय बहुत्व has to be taken into account. This claim is rejected here.

In the statement 'सत्रादुदवसाय यजेरन्' बहुत्व is not enjoined.

In the सत्र there are many कर्ता s. Since उदवसान is associated with सत्र, here also there are man कर्ता s. Those who observe उदवसान have to perform पृष्ठशमनीय. Hence, बहुत्व of कर्ता is available at this याग also. Hence, बहुत्व is not enjoined.

As बहुत्व is not enjoined the question of performing उदवसानीय by many does not arise.

यदि ''यजेरन्'' इत्यत्र बहुवचनार्थस्य बहुत्वस्य विधिः स्यात्, स्यात्तदा संहत्य प्रयोगः । न चैवम् । सत्रसमभिव्याहारेण सत्रकर्तॄणामेव बहूनामुदवसानेऽपि कर्तृत्वेन पृष्ठशमनीयेऽपि समान-कर्तृकताबोधकत्त्वादेशल्यप्प्रत्ययेनोदवसानकर्तारं एव कर्तार इत्यवगत्या बहुत्वस्य प्राप्तत्वेनाविधानाद-विहितस्यानङ्गत्वात्तदभावे कुतो वैगुण्यम् ।

Further, उदवसान is of the nature of leaving the सत्र. This is not done jointly. Each one separately leaves. There has to be पृष्टशमनीय. Hence, the पृष्ठशमनीय also has to be performed by each ऋत्विक् separately.

किञ्चोदवसानशब्दिते च त्यागेऽन्योन्यनिरपेक्षा एव कर्तारो न संहत्येति तत्समानकर्तृकत्वा-दन्योन्यानपेक्षाः सन्त एव पृष्ठशमनीयेऽपि कर्तारः प्राप्ता इत्येकैकशः प्रयुञ्जीरन्न संहत्येति **सिद्धान्तः** ।

### कामेष्टौ दानस्यादृष्टार्थत्वाधिकरणम् (10-2-15)

At सारस्वत सत्र, काम्येष्टि is prescribed by the statement 'अग्नये कामाय अष्टाकपालं निर्वपति' at this काम्येष्टि, by the statement 'अश्वां पुरुषीं धेनुके दद्युः' अश्वादिदान is prescribed. Here, the question is raised whether this दान is परिक्रयार्थ or अदृष्टार्थ.

सारस्वते सत्रे ''प्लाक्षं प्रस्रवणमासाद्य अग्नये कामायाष्टाकपालं निर्वपति'' इति तदङ्गतया विहितायां कामेष्टौ ''अश्वां पुरुषीं धेनुके च दद्युः'' इत्यश्वादीनां श्रुतं दानं किं परिक्रयार्थम्, उता-दृष्टार्थमिति **संशयः** ।

*Pūrvapakṣa* : argues that it is not expressly stated that सारस्वतसत्र with its अङ्ग s be performed by यजमान only. But it has to be brought by अतिदेश from



द्वादशाह सत्र through its कार्य. Such अतिदेश is permitted only for प्राकृतस्थानापन्नकार्य. काम्येष्टि is not प्राकृतकार्यस्थानापन्न. Hence, there is no यजमानैककर्तृकत्व for this काम्येष्टि. Therefore अश्वादिदान is meant for परिक्रय.

**पूर्वपक्षस्तु,** साङ्गस्य सारस्वतस्य यजमानकर्तृकता न प्रत्यक्षवचनसिद्धा । किन्तु सत्रात्मकद्वादशाह एव ''ये यजमानास्ते ऋत्विजः'' इति श्रवणेनेहातिदेशेनैव कार्यद्वारेण प्राप्तायास्तस्याः प्राकृत-कार्यस्थानापन्नेष्वङ्गेष्वेव प्राप्तिः । काम्येष्टिस्त्वपूर्वत्वान्न प्राकृतकार्यस्थानापन्नेति यूपावटास्तरणबर्हिषि बर्हिर्धर्माणां लवनादीनामिव न तत्र यजमानैककर्तृकतायाश्चोदकतः प्राप्तिरित्यन्ये ऋत्विजः सम्पाद्या इति पृष्ठशमनीय इव परिक्रयार्थमश्वादिदानमिति ।

Siddhānta : points out that there is no word दक्षिणा in the statement अश्वां पुरुषीं etc.

Further, the कर्ता has to perform साङ्गप्रधान प्रयोग. While performing साङ्गप्रधानयाग he is to perform the अङ्ग that is stated in the middle even though it is अपूर्व. Hence, this काम्येष्टि has to be performed by यजमान only. Hence, this दान is अदृष्टार्थ.

**सिद्धान्तस्तु,** यद्यपि यजमानैककर्तृकता कामेष्टौ वचनाद्वा चोदकाद्वा न प्राप्नोति तथापि पूर्वत्र पृष्ठशमनीय इव न दक्षिणापदश्रवणमत्रास्ति । येन परिक्रयार्थता विज्ञायेत । किञ्च कर्तॄणां साङ्ग-प्रधानविषयकप्रयोगाङ्गत्वात्तैश्च साङ्गप्रधानप्रयोगे क्रियमाणे सति तन्मध्ये प्राप्तस्यापूर्वस्याप्यङ्गस्य तैरेव यजमानैरनुष्ठानं प्रसङ्गात्सिध्यतीति कर्त्राकांक्षाविरहान्न ऋत्विजां प्राप्तिरित्यदृष्टार्थं दानम् ।

### दर्शपूर्णमासयोः द्वेष्याय दानस्य अदृष्टार्थताधिकरणम् (10-2-16)

At दर्शपूर्णमास a नैमित्तक ritual is prescribed by the statement 'यदि पत्नीः संयाजयन् कपालमभिजुहुयात् वैश्वानरं द्वादशकपालं निर्वपेत्.' It is further stated that 'तस्य एकहायनी गौः दक्षिणा । तां सद्वेष्याय दद्यात्.' Here, the question is raised whether this दक्षिणा is अदृष्टार्थ or परिक्रयार्थ.

दर्शपूर्णमासयोः श्रूयते ''यदि पत्नीः संयाजयन् कपालमभिजुहुयाद्वैश्वानरं द्वादशकपालं निर्वपेत् । तस्यैकहायनी गौर्दक्षिणा । तां स द्वेष्याय दद्यात्'' इति । किमिदं दक्षिणादानं परिक्रयार्थम्, उतादृष्टार्थमिति **सन्देहे,**

Pūrvapakṣa : argues that this ritual is इष्टि and नैमित्तिकाङ्ग of दर्शपूर्णमास. Therefore the दक्षिणा prescribed for दर्शपूर्णमास covers this इष्टि also. However, as separate दक्षिणा is prescribed for it that has to be given. This is for परिक्रिय only.

दर्शपूर्णमासयोर्नैमित्तिकाङ्गभूता तत्तन्त्रमध्ये अनुष्ठेयापीयमिष्टिस्तद्दक्षिणयैव दक्षिणावत्यपि ''गौ-र्दक्षिणा'' इति वचनबलात्पृथग्दक्षिणा तस्या युक्तेति, दक्षिणापदाश्रवणेन कामेष्टौ दानस्यापरिक्रयार्थ-त्वेऽपीह दक्षिणापदश्रवणात्परिक्रयार्थमेव दानमिति **प्राप्ते**

Siddhānta : points out that this is to be given to a द्वेष्य person. The द्वेष्य person is not ऋत्विक्. Hence, this दान is अदृष्टार्थ but not परिक्रयार्थ.

**सिद्धान्तः** । स्यादेवं यदि द्वेष्योपि ऋत्विक्स्यात्तदा कर्मकरायेदं दानं परिक्रयार्थं स्यात् । न च द्वेष्यो ऋत्विग्भवति । ''नातिचरितव्यावृत्विगाचार्यौ'' इति स्मृतिविरोधात् । तस्मादकर्मकरायेदं दानमदृष्टार्थमिति ।

### जीवतामेव अस्थियज्ञाधिकरणम् (10-2-17)

At सत्रयाग while याग is on if यजमान dies, he should be burnt and and his bones be deposited in कृष्णाजिन. After one year the bones be made to perform a ritual ततः संवत्सरे अस्थीनि याजयेयुः ।

Here, the question is raised whether the wrod अस्थि should be taken in the sense of the dead person or a living person keeping the अस्थि by his side.

इदं श्रूयते ''सत्राय सन्दीक्षितानां यजमानः प्रमीयेत तं दग्ध्वा तस्य कृष्णाजिनेऽस्थीन्युपनह्य योऽस्य नेदिष्ठः स्यात्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् । ततः संवत्सरेऽस्थीनि याजयेयुः'' इति । अत्र योऽयं संवत्सरान्तेऽस्थियागः श्रुतः स किमस्थिपदेन लक्षितमृतपुरुषाधिकारकः, उतास्थि-पदलक्षितास्थिसहायेतरजीवद्यजमाधिकारक इति **सन्देहे,**

Pūrvapakṣa : argues that the word याजयेयुः is in causal form. The word अस्थि should be taken in the sense of dead person and he has to be made to perform this yāga. That is to say, he has to be taken as performer and in his name other living यजमान should carry out the ritual. Consequently the result



of this याग goes to him only. It is found that the result of सर्वस्वार ritual goes to yajamāna who is dead.

याजयेयुरिति प्रयोजककर्तृवाचिणिच्प्रत्ययेन परस्मैपदेन च परार्थकर्मप्रवृत्त्यवगमादस्थिपदेन लक्षणया अस्थिमच्छरीरकमृतपुरुषग्रहणेन तदधिकारकोऽयं सत्रमध्ये मृतिनिमित्तको यागः । फलमपि तस्यैव । सर्वस्वारे मृतस्यापि यजमानस्य फलस्वाम्यदर्शनात् । जीवतां सत्रिणां तत्कर्मकर्तृत्वमात्रमिति **प्राप्ते**

Siddhānta : points out that there is a difference between सर्वस्वारयाग and अस्थीष्टि. In सर्वस्वार, यजमान performs upto माध्यंदिनसवन and requests the priests as 'ब्राह्मणाः समापयत मे यज्ञम्.' Then, he jumps into the fire. In this way he has कर्तृत्व upto माध्यंदिन सवन and पैषद्वारा कर्तृत्व later. But in the case of अस्थीष्टि no such कर्तृत्व is present on the part of the dead person. Therefore, the word अस्थि should be taken in the sense अस्थिसहायजीवत्सत्रिणः and they should perform this याग.

**सिद्धान्तः**, सर्वस्वारे हि माध्यन्दिनसवनात्प्राक्तनेषु याजमानेषु यजमानस्य साक्षादेव कर्तृत्वम् । तदुपरितनेषु च ''ब्राह्मणाः समापयत मे यज्ञम्'' इत्युक्त्वा अग्नौ शरीरप्रक्षेपात्प्रैषद्वारेणास्ति कर्तृत्वम् । इह तु न द्वेधापि दैवान्मृतस्यास्ति कर्तृत्वमिति कथं तस्य फलस्वाम्यलक्षणाधिकारो भवेत् । फलस्य कर्तृगामित्वात् । अतोऽस्थिशब्देनास्थिसहायान् जीवतः सत्रिणो लक्षयित्वा तेषामेवायं यागविधिः ।

### अस्थियज्ञे अस्थ्नां जपाद्यननुष्ठानाधिकरणम् (10-2-18)

From this adhikaraṇa, onwords five adhikaraṇas are presented by way of कृत्वा चिन्ता.

When अस्थियाग is to be performed by the dead person, the question is raised whether all the अङ्गs are to be observed or some only are to be observed.

कृत्वाचिन्तयेदमारभ्याधिकरणपञ्चकमारभ्यते । यदा त्वस्थियागो मृताधिकारस्तदा किं चोदक-प्राप्ताङ्गजातमध्ये किञ्चित्याज्यमुत सर्वं कार्यमिति **सन्देहे,**

Pūrvapakṣa : states that at प्रकृतियाग, मन्त्रजप, केशश्मश्रुवपन etc यजमानधर्मs and दीक्षणीयेष्टि are prescribed. All these have to be observed at मृतयाग also.

प्रकृतौ मन्त्रजपकेशश्मश्रुवपनादयो याजमानधर्माः श्रुताः । दीक्षणीयेष्टिश्च । ते सर्वे चोदकप्राप्ता मृते कर्तव्या इति **प्राप्ते**

Siddhānta : मन्त्रजप etc यजमानधर्मs are prescribed at प्रकृति in connection with दीक्षा. There is no दीक्षा for मृतपुरुष. Hence, these यजमानधर्मs are not to be observed at मृतपुरुषयाग.

Further, केशश्मश्रुवपन cannot be observed for मृतपुरुष.

दीक्षार्थत्वात्सर्वधर्माणां, मृते दीक्षाऽसम्भावान्न कर्तव्याः । केशश्मश्रुवपनादेरशक्यत्वाच्चेति **सिद्धान्तः ।**

**औदुम्बरीमानशुक्रस्पर्शानुष्ठानाधिकरणम्** (10-2-19)

In this adhikaraṇa the question whether at the अस्थियाग to be performed by मृतयजमान. शुक्रग्रहस्पर्श etc are to be observed or not.

मृताधिकारकोऽस्थियाग इति पक्षे ''शुक्रं यजमानोऽन्वारभेत'' इत्यादिवाक्योक्तशुक्रग्रहस्पर्शादिकमस्थिरूपयजमानेन कर्तव्यं न वेति **सन्देहे,**

Pūrvapakṣa : argues that by the statement 'शुक्रं यजमानोन्वारभेत' शुक्रग्रहस्पर्श is enjoined. Here the verb आरभेत conveys कर्तृत्व of the nature of व्यापारानुकूल कृतिमत्व. Such कर्तृत्व is not possible for अस्थि which is अचेतन. Hence, शुक्रान्वारम्भण etc. is not to be observed.

अन्वारभेतेत्याख्यातोपात्तव्यापारानुकूलकृतिमत्त्वलक्षणकर्तृत्वस्याचेतनानामस्थ्नामसम्भवादीक्षादिवच्छुक्रान्वारम्भणादिकमपि न कार्यमिति **प्राप्ते**

Siddhānta : points out आख्यातोपात्त व्यापारानुकूलकृतिमत्व is not कर्तृत्व. It is only तादृशव्यापारयोगित्व. Such कर्तृत्व is possible for अस्थि also. Hence, शुक्रग्रहस्पर्श etc अङ्गs have to be performed.



**सिद्धान्तः,** आख्यातोपात्तव्यापारानुकूलकृतिमत्त्वं न कर्तृत्वम् । ''रथो गच्छति'' इत्यादावभावात् । गौरवाच्च । किन्तु तादृशव्यापारयोगित्वमेव कर्तृत्वम् । लाघवात् । सार्वत्रिकत्वाच्च । अतोऽचेतनानामप्यस्थ्नां शुक्रान्वारम्भणकर्तृत्वसम्भवात्कर्तव्यमेव शुक्रग्रहस्पर्शनाद्यङ्गमिति ।

**अस्थियज्ञे अस्थ्नां काम्यकर्माद्यननुष्ठानाधिकरणम्** (10-2-20)

In this adhikaraṇa the question is raised whether गुणकाम items are to be observed at अस्थियाग or not.

In the first section of eigth chapter, it is already decided that there is no गुणकामप्रवृत्ति in विकृति. However, this question is raised here by कृत्वा चिन्ता.

अस्थियागो मृताधिकारक इति पक्ष एव चिन्त्यते ''यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुयात्'' इत्यादयो गुणकामा अस्थियागे प्रवर्तन्ते न वेति **सन्देहः ।** यद्यप्यष्टमाद्यपादे **गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात्** इत्यत्र विकृतिषु गुणकामप्रवृत्तिर्नेति सिद्धत्वान्न चिन्तावकाशस्तथापि विकृतिष्वस्ति प्रवृत्तिरित्यपि कृत्वाचन्तेयमिति ध्येयम् ।

Pūrvapakṣa : states these have to be observed at अस्थियाग.

चोदकवशात्प्रवर्तत इति **प्राप्ते**

Siddhānta : states that the अस्थिs cannot have वर्षादिकामना. Hence, these are not be observed at अस्थियाग.

**सिद्धान्तः,** कामयेतेत्यादिवाक्योक्ता गुणकामा अपि यजमानस्य । **न ऋत्विजामिति** तृतीयान्त्यपादे **तथा कामोऽर्थसंयोगात्** इति नये निर्णीतत्वान्मृतस्य च वर्षादिकामस्याज्ञानाद्गुणकामानामस्थियागे निवृत्तिरिति ।

**अस्थियज्ञे अस्थ्नां सूक्तवाकगताशासनाननुष्ठानाधिकरणम्** (10-2-21)

At अस्थियज्ञ, प्रायणीय etc इष्टिs have to be observed. At these the recitation of सूक्तवाक has to be made. In the सूक्तवाक hymn the statement आशास्ते अयं यजमानः असौ आयुराशास्ते occurs. Here, the question is raised whether this portion be recited or not.

अस्थियज्ञे हि दर्शपूर्णमासप्रकृतिकाः प्रायणीयाद्या इष्टयश्चोदकप्राप्ताः । तत्र ''इदं द्यावापृथिवी भद्रमभूत्'' इत्यादिसूक्तवाको होत्रा पठ्यमानश्चोदकेन प्राप्तः । तत्रैवं श्रूयते ''आशास्तेऽयं यजमानोऽसावायुराशास्ते सुप्रजात्वमाशास्ते'' इत्यादि । तत्र सूक्तवाकस्थानि ''आयुराशास्ते'' इत्यादीनि फलपदानि प्रवर्तन्ते न वेति **सन्देहे,**

Pūrvapakṣa : argues that सूक्तवाकs are नित्यवत् प्रहरणाङ्ग. The statement 'आशास्ते यजमानः' etc is a part of it. Hence, this portion of सूक्तवाक also has to be recited.

नीचैस्त्वादिगुणानां काम्यत्वेन विधानाद्यजमानगतकामनाऽपरिज्ञानेन गुणकामानां मृताधिकारेऽस्थियागे निवृत्तावपि सूक्तवाकस्य नित्यवत्प्रहरणप्रयोगाङ्गतया प्राप्तत्वात्तत्संयुक्तानामायुरादिशब्दानां तदेकवाक्यत्वान्नित्यं प्रवृत्तिः स्यादेवेति होत्रा सोऽपि सूक्तवाकांशः पठनीय इति **प्राप्ते**

Siddhānta : points out that the portion आयुराशास्ते etc. contains आशासन i.e. the desire for आयुस् etc. This is not possible on the part of a dead person hence. This portion is need not be recited.

**सिद्धान्तः,** ''सूक्तवाकेन प्रस्तरं प्रहरति'' इति श्रुत्या सर्वोऽपि सूक्तवाकः प्रस्तरप्रहरणे करणत्वेन विनियुज्यमानः क्रियान्तरसम्बन्धि फलञ्च प्रकाशयन्नेव तत्करणतां भजत इत्यायुरादेः फलत्वं कल्प्यते । फलत्वकल्पनञ्च यजमानाशास्यतया निर्देशात्तथाभूतानामेव भवति । न मृतस्याऽऽशासनमस्तीत्यस्थियज्ञे तेषामपाठ इति ।

### अस्थियज्ञे होतृकामाभावाधिकरणम् (10-2-22)

At प्रकृतियाग, उच्चैस्त्व etc certain auxiliaries are prescribed. These are called होतृकामs.

Here the question is raised whether these be observed at अस्थियाग or not.

होतृकामनामकाः केचन काम्यफलहेतुभूताः पदार्थाः प्रकृतौ श्रूयन्ते ''यं कामयेत वसीयान् स्यादिति उच्चैस्तरां तस्य याज्याया वषट्कुर्यात्'' इत्यादिनोच्चैस्त्वादयः । ते किं मृताधिकारेऽस्थियज्ञे प्रवर्तन्ते न वेति **सन्देहे,**



Pūrvapakṣa : These are for the result desired by होता. होता can desire for these even when यजमान is dead. Hence, these must be observed.

पूर्वत्र यजमानेनाशास्यानामेवायुरादीनां फलत्वकल्पनान्मृताधिकारे कर्मणि यजमानाशासनापरिज्ञानात्तेषां फलत्वाभावेन तत्प्रतिपादकशब्दानां निवृत्तावपि वसीयस्त्वादीनां होत्रा कामयमानानामेव फलत्वनिश्चयान्मृतेऽपि यजमाने तद्गतं पशुमत्त्वादिकं होता कामयेतेत्युच्चैस्तरत्वादयो न निवर्तेरन् । अपि तु प्रवर्तेरन्नेवेति **प्राप्तम् ।**

Siddhānta : points out that as per the statement 'यां वै काञ्चन यज्ञे ऋत्विर्गाशिषमाशास्ते यजमानस्यैव सा' whatever होता desires that is for यजमान only. The entire यज्ञफल has to go to यजमान only. Hence, होता has to desire whatever, यजमान desires. The desire of मृतयजमान cannot be ascertained. Therefore उच्चैस्त्व etc होतृकामs are not to be observed.

The above five adhikaraṇa are formulated by way of कृत्वा चिन्ता, that is to say, by assuming that मृतयजमान can perform अस्थियाग being represented by अस्थि.

**सिद्धान्तस्तु,** आधानवाक्यगतेनात्मनेपदेन ''यां वै काञ्चन यज्ञे ऋत्विगाशिषमाशास्ते यजमानस्यैव सा'' इति वचनेन च यज्ञसम्बन्धि सकलमपि फलं यजमानस्यैव । यद्यदिच्छाविषयस्तदेव तस्य फलं भवति । न त्वनिच्छाविषयः । तस्माद्यजमानेच्छानुसारी यो होतुः कामः स एवात्र निर्दिश्यते ''यं कामयेत'' इति । न तु निरपेक्षः । मृतस्य च वर्सीयस्त्वादिविषयकेच्छानवगमादुच्चैस्त्वादीनामपि निवृत्तिरिति । एतदधिकरणपञ्चकं जीवतामेवायं याग इति सिद्धान्तविरुद्धमिति मृताधिकार इति कृत्वाचिन्तया प्रवृत्तम् ।

### यजमानस्य दिष्टगतावपि सर्वस्वारस्य समापनाधिकरणम् (10-2-23)

By the statement 'शुनः कर्णस्तोमः अग्निष्टोमः मरणकामोहि एतेन यजेत' one day sacrifice called सर्वस्वार is enjoined. At this याग when तृतीयसवन is started यजमान requests the other priests to complete the याग and enters into the fire. Here, the question is raised whether remaining portion of the sacrifice be completed or not.

''शुनः कर्णस्तोमोऽग्निष्टोमः मरणकामो ह्येतेन यजेत'' इति वाक्येन सर्वस्वारो नामैकाहः क्रतुर्विहितः। तत्र तृतीये सवने आर्भवस्तोत्रे प्रस्तूयमाने ''औदुम्बरीं दक्षिणेन देशेनाहतेन वाससा परिवेष्ट्य ब्राह्मणाः समापयत मे यज्ञमिति सम्प्रेष्याग्निं संविशति'' इति वचनेन ऋत्विग्भ्यः प्रैषं प्रदाय यजमानो म्रियत इत्युच्यते। तस्मिन्मृते कर्मशेषः समाप्यो न वेति **सन्देहे,**

Pūrvapakṣa : raises a further question whether it is to be completed to get the result for the dead यजमान or for the priests who complet it.

The first alternative is not possible, because, the result of a कर्म has to go only to a person who performs it. The dead यजमान has not performed the remaining portion of याग. Hence, he cannot get its result.

The second alternative is also not possible. ऋत्विक्s services are hired by यजमान. Hence, they have to do the कर्म to get the result for यजमान but not for themselves. In view of this the remaining portion of the सर्वस्वार sacrifices need not be completed by other priests.

यजमानस्य फलसिध्द्यर्थमृत्विग्भिः समाप्यं कर्म, उतात्मफलार्थम्। नाद्यः। शास्त्रफलं प्रयोक्तरीति न्यायेन कर्मफलस्य कर्तृगामित्वाद्यजमानस्य च मृतास्याकर्तृत्वान्न तस्य फलम्। न द्वितीयः। यजमानपरिक्रीतै ऋत्विग्भिर्यजमानस्य यत्फलसाधनं तदेव कर्तव्यम्। न स्वफलसाधनम्। न हीदं समापनमकर्तुर्यजमानस्य फलसाधनम्। अतो न समानपीयम्।

Siddhānta : points out that the यजमान has कर्तृत्व for the entire sacrifice. He has employed the ऋत्विक्s when he was alive. His कर्तृत्व is of the nature of making the ऋत्विक्s to discharg the various duties. This direction continues even after his death. Hence, he is eligible for the results. Therefore the ऋत्विक्s have to complete the sacrifice, to enable him to get the result.

सिद्धान्तस्तु स्यादेवं यदि मृतस्य सर्वात्मना कर्तृत्वं न स्यात्। मृतस्यापि जीवदवस्थायामेव वरणभृतिप्रैषैः ऋत्विक्प्रयोजकतया सम्भवति च कर्तृत्वम्। जीवद्दशायामपि वरणादिना ऋत्विक्प्रयोजकत्वस्यैव कर्तृत्वसम्पादकत्वात्। अतो मृतस्यासमाप्ते ऋत्विक्प्रवर्तकतया कर्तृत्वात्प्रैषस्य दृष्टार्थत्वे सम्भवत्यदृष्टार्थत्वायोगाच्च मृतस्य कामितस्वर्गफलप्राप्त्यर्थं समापनीयमेव ऋत्विग्भिः कर्मेति।



**यजमानस्य दिष्टगतौ सर्वस्वारस्य शुक्रस्पशादियोग्याङ्गानुष्ठानाधिकरणम्** (10-2-24)

In the earlier adhikaraṇa it was stated that after यजमान enters into the fire the remaing portion of सर्वस्वार sacrifice be completed by priests. Here it is stated शुक्रन्वारम्भण etc. क्रत्वर्थ items be performed and मन्त्रजप etc need not be performed.

गते यजमाने कर्मशेषो ऋत्विग्भिः समापनीय इत्युक्तम्। तत्र समापनीये कर्मशेषे चोदकप्राप्ताङ्गमध्ये किं बाध्यं किं नेति प्रश्नस्योत्तरार्थमिदं सूत्रम्। **गते** यजमाने शिष्टं **कर्मास्थियज्ञवत्कर्तव्यमिति**। यथा शुक्रान्वारम्भणाकं क्रत्वर्थं योग्यत्वात्कार्यं जीवद्यजमानकर्तृकं मन्त्रजपादिकमायोग्यत्वाद्बाध्यमित्युक्तं तथेहापि योग्यं क्रत्वर्थं कार्यमयोग्यं यजमानकर्तृकं बाध्यमिति भावः सूत्रकारस्य।

**सर्वस्वारे यजमानस्य दिष्टगतावपि आयुराशंसनाधिकरणम्** (10-2-25)

In this adhikaraṇa the question whether 'आयुराशास्ते' portion of सूक्तवाक be recited or not at सर्वस्वार before the यजमान enters into the fire is raised.

सूक्तवाके श्रुतः ''आयुराशास्ते'' इत्याद्यंशः सर्वस्वारे जीवदवस्थायां वक्तव्यः, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that it should not be recited as it is contradicted by the impending death.

अस्थियज्ञवन्न वक्तव्यः। अभिप्रेतमरणविरोधादिति **प्राप्तम्।**

Siddhānta : points out that the यजमान volunteers to die only at the तृतीयसवन. He has to be protected till that time. Hence, 'आयुराशास्ते' etc. portion of सूक्तवाक has to be recited.

**सिद्धान्तस्तु,** तृतीयसवने आर्भवस्तोत्रकाले मुमूर्षोर्यजमानस्य ततः प्रागपि सम्भावितमरणस्य प्राप्तौ क्रतुवैगुण्यापत्तेस्तावत्कालं जीवितार्थं ''आयुराशास्ते'' इत्ययमंशो होत्रा पठितव्य इति।

**द्वादशाहे ऋतुयाज्याद्यनुष्ठानाधिकरणम्** (10-2-26)

It is stated earlier that at सत्रयाग, परिक्रय, दक्षिणादान is not to be done as all

are यजमान. However, this applies to ऋत्विगानत्यर्थदक्षिणा only. अदृष्टार्थदक्षिणा stated by the statement 'आत्रेयाय दक्षिणां ददाति' has to be given. This applies ऋतुयाज्या etc other अदृष्टार्थ items also.

यत्प्रकृतावानत्यर्थमृत्विजां वरणं दक्षिणादानञ्च तद्द्वयं **वरणमृत्विजामानत्यर्थत्वात्सत्रे न स्यादिति, परिक्रयश्च तादर्थ्यादिति** सूत्राभ्यां सूत्रे नास्तीत्युक्तम् । यत्वदृष्टार्थं ''आत्रेयाय दक्षिणां ददाति'' इत्युक्तदक्षिणादानादि तत्तु सूत्रे कर्तव्यमिति प्रत्युदाहणार्थमिदं सूत्रम् ।

**पवमानेष्टौ निर्वापानुष्ठानाधिकरणम्** (10-2-27)

At दर्शपूर्णमास by the statement 'अग्निहोत्रहवण्यां निर्वपति,' निर्वाप by अग्निहोत्रहवणी is prescribed. Here, the question is raised whether the निर्वाप stated by the statements 'अग्नय पवमानाय अष्टाकपालं निर्वपेत्' 'अग्नये पावकाय, अग्नये शुचये' for पवमानेष्टि to be performed at the time of अग्न्याधान be observed or not.

दर्शपूर्णमासयोः ''अग्निहोत्रहवण्यां हवींषि निर्वपति'' इति श्रुतो निर्वापः ''अग्नये पवमानायाष्टाकपालं निर्वपेत् । अग्नये पावकायाग्नये शुचये'' इत्याधानप्रकरणे श्रुतपवमानेष्टिषु चोदकप्राप्तः कर्तव्यो न वेति **सन्देहे,**

Pūrvapakṣa : argues that the statement 'अग्निहोत्र हवण्या हवींषि निर्वपति' enjoins निर्वाप by अग्नहोत्रहवणी. It does not enjoin mere निर्वाप. At पवमानेष्टि there is no अग्निहोत्रहवणी. The expression अग्निहोत्रहवणी is explained as अग्निहोत्रं यया हुतं सा अग्निहोत्रहवणी. At the time of आधान there is no अग्निहोत्र. Hence, निर्वाप should not be observed at पवमानेष्टि.

''अग्निहोत्रहवण्यां हवींषि निर्वपति'' इति शास्त्रस्य ह्यग्निहोत्रहवीगुणको निर्वापोऽर्थो न केवलनिर्वापः । पवमानेष्टिषु चाग्निहोत्रहवण्यभावात्तद्गुणको निर्वापोऽपि नास्त्येव । अशास्त्रार्थे केवलनिर्वापे कृते नियमादृष्टानुबद्धहविः संस्काररूपफलासिद्धेः । अग्निहोत्रं यया हुतं सा ह्यग्निहोत्रहवणी । न चाधानवेलायामग्निहोत्रमस्ति । अतः सत्रे वरणदानयोरदृष्टार्थत्वेनाबाधेऽपि पवमानेष्टिषु वैगुण्यान्नियमादृष्टाख्यादृष्टाभावादग्निहोत्रहवणीरूपगुणासम्भवान्निर्वापो लुप्यत इति **प्राप्ते**

Siddhānta : points out that the items from प्रकृति are brought to विकृति to



impliment its कार्य. हविसंस्कार is the कार्य of निर्वाप. Therefore, निर्वाप has to be observed at पवमानेष्टि.

**सिद्धान्तः,** चोदको हि प्रकृतितः पदार्थान् विकृतौ प्रापयत् कार्यमुखेन प्रापयति । हविःसंस्काररूपनिर्वापस्यास्तीति तन्मात्रमेव प्रापयति । अग्निहोत्रहवणीन्त्वसम्भवान्न प्रापयति । कार्यञ्च चाप्राप्तस्याङ्गत्वम् । किञ्च गुणभूताग्निहोत्रहवण्यभावेन प्रधानलोपो न युक्त इति तदभावेऽप्यविगुणत्वान्निर्वापमात्रं कार्यमिति ।

**वाजपेये मुष्टिलोपाधिकरणम्** (10-2-28)

At बार्हस्पत्य वाजपेय by the statement 'नैवारः सप्तदशशरावः क्षीरे चरुः भवति' सप्तदशशराव चरु is prescribed. In the प्रकृतियाग by the statement चतुरो मुष्टीः निर्वपति offering of four handful of चरु is stated.

Here, the question is raised in five ways i) whether both these statements be implimented ii) both be not implimented iii) one of them only be implimented iv) In case one of them is to be implimented, then, any one of them or v) संख्या be not impliment the quantity handful only be implimented or vi) संख्या be implimented and the quantity not implimented.

वाजपेये बार्हस्पत्ये ''नैवारः सप्तदशशरावः क्षीरे चरुर्भवति'' इति चरुः श्रुतः । प्रकृतौ तु ''चतुरो मुष्टीन्निर्वपति'' इति चतुःसङ्ख्यामुष्टी श्रुते । तदुभयमिह चोदकेन प्राप्तम् । तत्र किमुभयमप्यनुग्राह्यम्, अथोभयं बाध्यम्, उतान्यतरत्, तत्रापि किमनियमः, उत मुष्ट्यनुग्रहः सङ्ख्याया बाधः, किं वा सङ्ख्यानुग्रहो मुष्टेर्बाध इति षोढा **सन्देहः**

Pūrvapakṣa : states the grounds for the five attentatives and does not particularly support anyone of them.

**पूर्वपक्षस्तु,** चोदकप्राप्तत्वादुभयमप्यनुग्राह्यमित्याद्यः । उभयं बाध्यमिति **द्वितीयः** । नोभयं बाधनीयमिति **तृतीयः** । अन्यतरबाधपक्षेऽपि द्वयोरपि चोदकप्राप्तत्वाविशेषाद्विनिगमकाभावादनियम इति **चतुर्थः** । प्रधानमलोपयित्वा गुणभूतचतुष्ट्वसङ्ख्यैव लोपनीयेति **पञ्चमः** ।

Siddhānta : points out that in the statement 'चतुरो मुष्टीः निर्वपति' the word

चतुरः is not to be connected with मुष्टीः as it is in accusative case suffix. It has to be connected with निर्वपति. Hence, the implication of this statement is that 'चतुरः निर्वपति' and 'मुष्टीः निर्वपति.' Both are the auxiliaries of निर्वाप. Between these सङ्ख्या is द्वितीयाविभक्तिरूपश्रुतिप्राप्त while मुष्टि is वाक्यप्राप्त. Hence, सङ्ख्या has to be preferred. The net result is चतुर्भिः कुडवैः सह । दशशरावः चरुःकार्यः ।

**सिद्धान्तस्तु,** स्यादेवं, चतुष्ट्वस्य मुष्ट्यङ्गतया तद्गुणत्वं स्यात् । न चैवम् । चतुर इति द्वितीयाविभक्त्या चतुष्ट्वं कारकत्वेनावगम्यते । कारकश्च क्रिययैव साक्षादन्वेति । न मुष्टिद्रव्येण । द्वयोर्मिथोऽन्वयायोगात् । अतो वाक्यप्रमाणकयोः मुष्टिचतुष्ट्वयोः सम्बन्धः । तद्बाधेन कारकविभक्तिश्रुत्या ''चतुरो निर्वपति'' ''मुष्टीन्निर्वपति'' इति चतुःसङ्ख्यागुणको मुष्टिगुणकश्च निर्वापो विधीयते । श्रुतेर्वाक्याद्बालीयस्त्वात् । एवञ्चोभयोः क्रियाङ्गत्वे समाने सति मुख्यत्वात्सङ्ख्यानुग्रहेण जघन्यत्वान्मुष्टेर्लोप इति चतुर्भिः कुडवैः सप्तदशशरावश्चरुः कार्य इति ।

**धेनुमालभेत इत्यादिश्रुतौ धेन्वादिशब्दानां गवादिवाचिताधिकरणम्** (10-2-29)

At पशुविकृतियाग, आलम्भन of धेनु, वत्स and ऋषभ is stated. These words convey the असाधारण धर्मs of these.

Here, the question is raised whether these असाधारण धर्मs be taken with reference to other पशुs अजा etc.

पशुविकृतिषु श्रूयते ''द्यावापृथिव्यां धेनुमालभेत । वायव्यं वत्सम् । ऐन्द्रमृषभम्'' इति धेनुवत्सवृषभशब्दा गोव्यक्तिगतधानक्रियावयोविशेषमांसलतास्वेव प्रयोगप्राचुर्याद्गोद्रव्यगतासाधरणधर्मवचनाः । तेषां चोदकप्राप्ताजादिपशुषु प्रवृत्तिरस्त्युत नेति **सन्देहे,**

Pūrvapakṣa : argues that the words गौः etc convey the असाधारणधर्मs only by आकृत्यधिकरणन्याय but not गोव्यक्ति. Here, गोव्यक्ति is not available either by उपदेश or अतिदेश. However, अजा etc are available by चोदक. Hence, the words धेनु etc be taken to convey अजा etc. by लक्षणा. Consequently at विकृति also अजा etc be taken for आलम्भन.

धेन्वादिशब्दतो गोव्यक्तिप्रतीतावपि धेन्वादिशब्दा न धानक्रियादिविशिष्टगोवाचकाः । किन्त्वा-



कृत्यधिकरणन्यायेन गोगतधानक्रियादिमात्रवाचका एव । तथा चात्र धेन्वादिपदोक्तधानादिधर्माणामाधारभूतव्यक्त्यपेक्षायां गोव्यक्तेरुपदेशेनातिदेशेन वा प्राप्त्यभावादजव्यक्तेश्च चोदकतः प्राप्तेस्तत्रैव धेन्वादिशब्दा लक्षणया वर्तेरन्नित्यस्ति विकृतिष्वप्यजादिप्राप्तिरिति, पूर्वत्र चोदकप्राप्तद्रव्यबाधेऽपि नात्र तद्बाध इति **प्राप्ते**

Siddhānta : points out that असाधारणधर्मs of गो etc are comprehended before अजा etc. are presented by चोदक. Hence, गोव्यक्ति comes to the mind earlier. Hence, there is no need to take अजा by adopting लक्षणा.

**सिद्धान्तः,** अवगते ह्यौपदेशिकशास्त्रार्थे पश्चाच्चोदकस्य प्रवृत्तिरिति प्रथममेव धेन्वादिपदैर्गोगतासाधारणधर्मावगमात्तदनुरोधेन गोव्यक्तिमेवोपादाय पश्चात्प्रवर्तमानश्चोदकबाध एव युक्तः । न तु तदनुरोधेनौपदेशिकशास्त्रार्थमुपादाय श्रुतधेन्वादिपदानां लक्षणाश्रयणं युक्तमिति, न चोदकतोऽजस्य प्राप्तिरिति ।

**'वायव्यं श्वेतमालभेत' इत्यनेन अजस्यैव आलम्भनाधिकरणम्** (10-2-30)

In the earlier अधिकरण it was stated that since, the असाधारण धर्म of धेनु etc conveyed by the words धेनु. अजा etc चोदकप्राप्त are not to be taken. Here, the श्वैत्यगुण is साधारणगुण. Therefore, चोदकप्राप्त अजादि can be taken.

''वायव्यं श्वेतमालभेत'' इत्यादौ श्वैत्यादिसाधारणधर्मश्रवणस्थले चोदकप्राप्ताजादिद्रव्यप्रवृत्तिरस्त्युत नेति **सन्देहे,** पूर्वत्र गोगतासाधरणधर्मवाचित्वाद्धेन्वादिशब्दानां तैः श्रुतासाधारणगुणविरोधेन चोदकप्राप्तद्रव्यबाधेऽपि श्वैत्यगुणस्य साधारणत्वेन चोदकप्राप्ताजादिद्रव्येऽपि सम्भवान्न तस्य निवृत्तिरिति पूर्वोक्तस्य प्रत्युदाहणार्थमिदम् ।

**साद्यस्क्रे चित्रायां च खलेवाल्याः तण्डुलस्य च**
**यथाक्रमं खादिरत्व नियमाधिकरणम्** (10-2-30)

At साद्यस्क the statement खलेवाली यूपो भवति occurs. Here, the question is raised whether taking खादिर wood, cutting it and preparing यूप it is to be used as खलेवाली or without cutting, the खलेवाली itself is to be taken as यूप.

साद्यस्के श्रूयते ''खलेवाली यूपो भवति'' इति । खलेवाली शब्दस्यार्थ उक्तः पूर्वपादे **कर्म च द्रव्यसंयोगार्थम्** इत्यत्र । तत्र किं चोदकप्राप्तं खादिरादिकं छेदनादिभिर्यूपं कृत्वा खलेवाली कर्तव्या, किं वा यथावत्तया पूर्वं स्थितैव खलेवाली यूपः कार्येति **सन्देहः** ।

Pūrvapakṣa : If खलेवाली itself is taken as यूप. Then, the word यूप will be in the secondary sense as खलेवाली यूपकार्य कारिणी.

Hence the word यूप taken in the sense of खादिर wood with the संस्कार of cutting has to be taken as खलेवाली.

**पूर्वपक्षस्तु** ''या खलेवाली सा यूपः'' इति खलेवाल्यनुवादेन यूपत्वविधावयूपे खलेवाल्यां यूपशब्दो वर्तमानः कार्यपरः सन्नमुख्यः स्यात् ''खलेवाली यूपकार्यकारिणी'' इति । अतो ''यो यूपश्छेदनादिना निष्पन्नः खादिरादिः स खलेवाली भवति'' इति वचनव्यक्तिमाश्रित्य यूपानुवादेन खलेवालीत्वमेव विधेयम् । एवञ्च पूर्वत्र चोदकप्राप्ताजादिद्रव्यबाध इवात्रापि चोदकाबाधाय तत्प्रापित-खादिरं यूपच्छेदनादितत्संस्कारांश्च संपाद्य यूपं कृत्वा स एव खलेवालीत्वेन स्थाप्यः । अन्यथा खादिरतत्संस्कारछेदनादिबहुबाधः स्यादिति ।

Siddhānta : points out that if खलेवालीत्व is enjoined for यूप it does not serve any दृष्ट or अदृष्ट purpose. On the other hand if यूपत्व is enjoined for खलेवाली it will serve दृष्ट purpose of पशुबन्ध.

**सिद्धान्तस्तु,** यूपानुवादेन तस्य खलेवालीत्वविधौ तस्य न किञ्चिद्दृष्टमित्यदृष्टार्थं तद्विधानं स्यात् । खलेवाल्यनुवादेन यूपत्वविधौ तु यूपकार्यं पशुनियोजनं दृष्टमेव लभ्यते । न च दृष्टे सम्भवत्यदृष्टकल्पनं युक्तम् । अदृष्टार्थत्वे च फलान्तरकल्पना प्रकरणादुत्कर्षश्च स्यात् । तस्मात्खादर्यामखादर्यां वा खलेवाल्यां यूपकार्यार्थं यूपताविधानमिति ।

### खलेवाल्यां तक्षणाद्यननुष्ठानाधिकरणम् (10-2-32)

In this adhikaraṇa, the question is raised whether for खलेवालेवाली तक्षण, छेदन be observed or not.

पूर्वत्र खलेवाली पूर्वसिद्धैव ग्राह्येत्युक्तम् । तत्र चोदकप्राप्तखादिरत्वगुणस्य बाधेऽपि छेदनतक्षण-निखननोच्छ्रयणादयोऽपि धर्माः कर्तव्या उत नेति **सन्देहे,**



Pūrvapakṣa : states as these are चोदकप्राप्त, these have to be observed.

चोदकानुग्रहाय कर्तव्या इति **प्राप्ते**

Siddhānta : points out as the wood of this is already cut and polished there is no need to chop it again.

प्रागेव छित्वा श्लक्ष्णीकृत्योच्छ्रितत्वेन निखातितत्वात्पुनश्छेदनादेः फलाभावान्न कर्तव्या इति **सिद्धान्तः** ।

### खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानाधिकरणम् (10-2-33)

At प्रकृति certain दृष्टार्थयूपधर्मs such as पर्यूहण i.e. putting the mud around the यूप, परिबृंहण i.e. arranging the mud properly, परिषेचन i.e. putting the water on it are prescribed. Certain अदृष्टार्थधर्मs such as अञ्जन, प्रोक्षण etc prescribed.

Here, the question is raised whether these are to be observed for खलेवाली also or not.

प्रकृतौ यूपधर्माः केचन दृष्टार्थाः । यथा यूपस्याभितः पांसुप्रक्षेपणरूपं **पर्यूहणं**, प्रक्षिप्तानां पांसूनां मैत्रावरुणदण्डेन समीकरणाख्यं **परिबृंहणं**, समीकृतपांसुषु जलप्रक्षेपणरूप**परिषेचनमित्येवंरूपाः** । केचनाञ्जनप्रोक्षणादयोऽदृष्टार्थाः । ते चोभयविधाः खलेवाल्यां चोदकतः प्राप्ताः कर्तव्या न वेति **सन्देहे,**

Pūrvapakṣa : argues that these are the auxiliaries of यूप. खलवाली which is not यूप, but it is utilised for यूपकार्य. Hence, पर्यूहण etc. यूपसंस्कारs need not be observed.

तेषां धर्माणां यूपार्थत्वाद्यूपस्यैव बलिवर्दैन चङ्क्रमणाय खले स्थापितस्य काष्टस्य यूपकार्ये विनियोगान्न तत्र पूर्वत्र छेदनादिरिव यूपसंस्काराः पर्यूहणपरिबृंहणाभिषेचनादयः कार्या इति **प्राप्ते**

Siddhānta : points out that यूपसंस्कार are not for यूप but for पशुनियोजन. Hence, these have to be observed for खलेवाली also. However, when खलेवाली is weakened by the movement of the bulls, then only पर्यूहण etc are necessary. When स्थलेवाली is intact, these are not necessary.

**सिद्धान्तः** । यूपशब्दो हि छेदनतक्षणादिसंस्कारनिमित्तको न जातिनिमित्तकः । तथा च यूपशब्दाभिधेयाः संस्कारा न यूपार्थाः । किन्तु पशुनियोजनाङ्गभूताः खलेवाल्यामपि चोदकतः प्राप्यमाणाः । यदि खलेवाली बलीवर्दैश्चालिता तदा तद्दृढीकरणार्थं पर्यूहणादयः कार्याः । यदि तु प्रागेव दृढास्तदा तु लुप्तार्थत्वान्न कार्याः । अदृष्टार्थास्तु कार्या एवेति ।

### महापितृयज्ञे भाष्यमतेन धानासु अवघातानुष्ठानधिकरणम् (10-2-34)

At महापितृयज्ञ offering of धाना is prescribed by the statement 'पितृभ्यो धानाः.' The word धाना means scorched rice or scorched paddy. Here, the question is raised whether अवघात i.e. pounding, be observed or not for धाना.

महापितृयज्ञे श्रूयते ''सोमाय पितृमते पुरोडाशमष्टाकपालं निर्वपति । पितृभ्यो बर्हिषद्भ्यो धानाः । पितृभ्योऽग्निष्वात्तेभ्यो दुग्धे मन्थः'' इति । **धाना** भर्जितास्तण्डुला **इत्येके** । भर्जिता व्रीहय **इत्यन्ये** । तत्र चोदकप्राप्तोऽवघातः किं धानासु कर्तव्यो न वेति **सन्देहे,**

Pūrvapakṣa : argues that if धानs are pounded, these will become rice pouder and cease to be धाना. This will result in something else being offered than धाना. Hence, अवघात should not be observed for धाना.

पूर्वत्र खलेवालीत्वाविघातकतया पर्यूहणादेश्चोदकप्राप्तस्याबाधेऽपीह धानास्ववघाते कृते सति सक्तुभावापत्या धानारूपत्वभङ्गेन श्रुतद्रव्यकत्वाविघाताय न कर्तव्योऽवघात इति **प्राप्ते**

Siddhānta : points out that अवघात may be made for the rice or paddy before scorching. This will not result in धाना becoming pouder.

**सिद्धान्तः** भर्जनानन्तरं कृतेऽवघाते हि धानात्वहानिः स्यात् । भर्जनात्प्रागेवावघाते सति तदभावात्पूर्वमवघातेन तण्डुलान् सम्पाद्य पश्चाद्भर्जनमित्यस्त्यवघातः । परन्तु धानात्वदशायां प्राप्तोऽवघातो धानात्वदशातः पूर्वं कार्य इति प्राकृतक्रमबाधमात्रम् । तावता नावघातरूपपदार्थबाधः ।

### वार्तिककारमतेन प्रेषणस्य प्राकृततासमर्थनाधिकरणम् (10-2-34)

वार्तिककार formulates पूर्वपक्ष and सिद्धान्तः differently, taking the statement 'पितृभ्यो अभिवान्यायै दुग्धेमन्थं' as a subject of discussion. The word अभिवान्या



means मृतवत्सा गौः. The word मन्थ means the सक्तु put in the milk. Here, the question whether this मन्थन i.e. पेषण is प्राकृत or अप्राकृत.

**वार्तिककारः** ''पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्'' इति वाक्यमुदाहृत्य व्यचारयत् । अभिवान्यायै **अभिवान्याया** मृतवत्साया गोर्दुग्धे क्षीरे प्रक्षिप्य मथितास्सक्तवो **मन्थशब्दार्थः** । तत्र सक्तूनां मन्थशब्दितं पेषणं किं प्राकृतमुताप्राकृतमिति **संशये,**

Pūrvapakṣa : argues that this पेषण is not प्राकृत. The प्राकृत पेषण in connection with the preparation of पुरोडाश is done before पाक and the पाक is made. In the case of the preparation of मन्थ here, पाक is to be done earlier, then पेषण. Therefore, this पेषण is not the same as प्राकृत but it is a different पेषण.

अप्राकृतमेवेदं पेषणम् । न तु प्राकृतम् । इदं हि पेषणं पाकोत्तरकालमर्थाद्भवति । कथं ? भर्जितास्तण्डुलास्तु धानाः । ताश्चूर्णीकृताः सक्तवः । ते च पयसि प्रक्षिप्य मथिता मन्थ इति पाकोत्तरकालं भवति । प्राकृतन्तु पेषणं प्रथमतः कार्यम् । पश्चात्तु पाकः । पूर्वं पेषणाभावे पुरोडाशनिर्वर्तकपाकस्याशक्यत्वात् । अतः क्रमव्यत्यासात्प्रकृतौ पेषणस्य पाकार्थत्वादिह च पेषणानन्तरं पाकरूपद्वाराभावेन प्राकृतस्य पेषणस्य निवृत्तत्वात्प्राकृतधर्महीनमिदमपूर्वं पेषणमिति **प्राप्ते**

Siddhānta : points out that in प्रकृति, पेषण is not for पाक but both पेषण and पाक are for हविस्. Since, without पेषण, पुरोडाश cannot be prepared, पेषण is done earlier to श्रपण while in विकृति, preparation मन्थ has to be done after पाक. Both serve the purpose of preparation of हविस्. Hence, पेषण is प्राकृत only. There is a difference only in the sequence.

**सिद्धान्तः**, स्यादेवं यदि प्रकृतौ पेषणं पाकार्थं स्यात्तदा लुप्तपाकत्वान्न प्राकृतपेषणस्यात्र प्रवृत्तिः। न चैवम् । ''तण्डुलान् पिनष्टि । कपालेषु श्रपयति'' इति द्वितीया श्रुत्या पेषणश्रपणयोर्द्वयोरपि द्विरवत्तरूपहविरर्थत्वात्कपालेष्वित्यत्र किमित्याकांक्षायां प्राकृतपुरोडाशस्यैव द्वितीयान्ततयाऽन्वयात् । एवञ्च प्रकृतौ पेषणं विना पिष्टसाध्यपुरोडाशानिष्पत्तेरर्थात्पेषणं श्रपणात्पूर्वं क्रियते। इह तु प्रागुक्तदिशा अर्थादेव पश्चात्क्रियते इति क्रमव्यत्ययमात्रम् । न तावता पेषणरूपपदार्थभेदः । **गुणलोपेऽपि मुख्यस्य क्रिया स्यादिति** पूर्वोक्तन्यायेन प्राकृतक्रमलोपेऽपि मुख्यपेषणरूपपदार्थलोपायोगात् । तस्मात्प्राकृतमेव पेषणमिति ।

**इति दशमाध्याये द्वितीयः पादः**

## दशमाध्यायस्य तृतीयः पादः

### पश्चादौ सामधेन्यादि प्राकृतेतिकर्तव्यतानुष्ठानम् (10-3-1)

At अग्नीषोमीयपशुयाग, it is stated that 'एकादशप्रयाजान् यजति.' Here, the question is raised whether it is सङ्ख्यारूपगुणविशिष्ट प्रयाजविधि or प्रयाजानुवादेन सङ्ख्यामात्र विधि.

अग्नीषोमीयपशौ श्रूयते ''एकादश प्रयाजान्यजति'' इति । तत्र किं सङ्ख्यारूपगुणविशिष्टप्रयाजविधिः, उत चोदकप्राप्तप्रयाजानुवादेन सङ्ख्यामात्रविधिरिति सन्देहे,

Pūrvapakṣa : argues that विकृतिभावना elicits only उपकाररूपप्रकार as केन प्रकारेण इष्टंभावयेत् but not प्रयाजादिपदार्थ. Hence, there is no scope for सङ्ख्याविधान by bringing प्रयाज at विकृति. Further, when enjoining याग by यजति is possible, taking as सङ्ख्याविधान is not proper. Therefore, the statement एकादशप्रयाजान् has to be taken as enjoining a different याग viz. एकादश सङ्ख्यारूपगुणविशिष्टप्रयाजनामकयाग.

विकृतिभावनायाः ''केन प्रकारेणेष्टं भावयेत्'' इत्युपकाररूपप्रकारमात्रस्याकांक्षित्वेन तन्मात्रस्यैव चोदकेन प्राप्त्या स्वरूपेण प्रयाजादिपदार्थानामप्राप्तेस्तदनुवादेन न सङ्ख्यारूपगुणविधिः सम्भवति । किञ्च सन्निहितधात्वर्थविधिसम्भवे न पदान्तरोक्तसङ्ख्याविधानं युक्तम् । तस्माद्गुणविशिष्टप्रयाजनामकयागविधिरेवायमिति **प्राप्तम् ।**

Siddhānta : points out that विकृतिभावना not only elicits उपकार but also the items that provide उपकार. Hence, प्रयाज is available at विकृति by अतिदेश. Therefore एकादशसङ्ख्या only is enjoined here.

**सिद्धान्तस्तु,** विकृतिभावनाया उपकाराकाङ्क्षित्वेन तन्मात्रातिदेशेऽप्युपकारावच्छेदकतया पश्चादार्थिकः पदार्थानामप्यतिदेशोऽप्यस्तीति चोदकप्राप्तपदार्थानुवादेन गुणमात्रविधिसम्भवेन विशिष्टप्रयाजविधिकल्पनं न युक्तम् । गौरवात् । वाक्यार्थविधिशेषस्तु विशिष्टविधिपक्षेऽपि विशेषणीभूतसङ्ख्यायाः पदान्तरोपात्तत्वात्तुल्य एव । तस्माच्चोदकप्राप्तानुवादेन सङ्ख्यामात्रा विधिः ।

### वायव्यपशौ 'हिरण्यगर्भः' इत्यादिमन्त्रस्य उत्तरस्मिन्नाधारे गुणत्वाधिकरणम् (10-3-2)

At प्रकृतियाग there are two आधारs. First is without मन्त्र the second with मन्त्र



'ऊर्ध्वो अध्वरः' etc. Both these आधारs have to be observed at वायव्यपशु. By the statement 'हिरण्यगर्भः समवर्तताग्रे' इति आघारमाघारयति मन्त्र is enjoined for आधार.

Here the question is raised whether this हिरण्यगर्भ etc मन्त्र is enjoined for अमन्त्रक आधार or for समन्त्रक आधार.

प्रकृतौ हि द्वावाघारौ स्तः । आद्यः प्राजापत्योऽमन्त्रकः । ''प्रजापतिं मनसा ध्यायन्नाघारयति'' इति ध्यानमात्रोक्तेः । उत्तरश्चैन्द्रः ''ऊर्ध्वोऽध्वरः'' इत्यादिमन्त्रोपेतः । द्वावप्याघारौ वायव्ये पशौ चोदकप्राप्तौ । तत्र किं प्राकृताद्याघारानुवादेन ''हिरण्यगर्भः'' इति मन्त्ररूपगुणविधिः, उत उत्तरसमन्त्रकाघारानुवादेन तन्मन्त्रविधिरिति **सन्देहे,**

Pūrvapakṣa : argues that in the वाक्यशेष viz. 'प्रजापतिर्वै हिरण्यगर्भः' हिरण्यगर्भ is stated as प्रजापति. मन्त्र refers to प्रजापति. The अमन्त्रक आधार is प्राजापत्य. Therefore, this मन्त्र has to be employed for अमन्त्रक आधार.

''प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय'' इति मन्त्रविधिवाक्यशेषे हिरण्यगर्भस्यैव प्रजापतित्वश्रवणेन मन्त्रस्य प्रजापतिलिङ्गोपेततया प्राजापत्येऽप्यमन्त्रके पूर्वाघार एव मन्त्रविधिरिति **प्राप्तम्** । तदाह **सूत्रे, हिरण्यगर्भे;** हिरण्यगर्भवति वाक्ये **मन्त्रलिङ्गात् पूर्वस्याघारस्य** मन्त्रविधिरिति ।

Siddhānta : At प्रकृतियाग for अनुष्ठेयार्थस्मृति, मन्त्र is enjoined for second आधार envisaging नियमादृष्ट as there are other ways of अनुष्ठेयार्थस्मृति. For the first आधार नियमादृष्ट is not envisaged as there is no मन्त्र. Hence, it has to be observed in the same way without मन्त्र. If मन्त्र is employed, then, नियमादृष्ट will have to be envisaged. This is गौरव. For the second आधार, नियमादृष्ट is already envisaged. Hence, recitation of हिरण्यगर्भ etc मन्त्र does not require any further नियमादृष्ट. This is लाघव. The words हिरण्यगर्भ and प्रजापति may also be explained as conveying इन्द्र when the second आधार is to be offered.

**सिद्धान्तस्तु,** प्रकृतौ ह्यनुष्ठेयार्थस्मृतौ कर्तव्यायां तद्धेतुतया मन्त्रब्राह्मणोपद्रष्टृवचनकल्पसूत्रेष्वनेकेषु प्राप्तेषूत्तराघारे ''ऊर्ध्वोऽध्वरो दिविस्पृशम्'' इति मन्त्रविधानान्नियमादृष्टं कल्पितम् । पूर्वाघारे तु मन्त्रविध्यभावान्न नियमादृष्टकल्पनमिति विकृतावपि तथैव प्राप्तेरिह पूर्वाघारे मन्त्रमात्रविधौ प्रकृतावक्लृप्तं नियमादृष्टं कल्प्यम् स्यात् । उत्तरस्मिंस्तु न तत्कल्प्यम् । प्रकृतौ क्लृप्तत्वात् । अतो

hymns at प्रकृतियाग together with the six hymns stated at विकृति a unit of twelve hymns be formed and these be recited while offering twelve आहुतिs.

**सिद्धान्तस्तु**, विकृतावग्नौ हि ''द्वादश जुहोति'' इति दीक्षार्थहोमानामभ्यासः श्रूयते। तदभ्यासे तदङ्गमन्त्राणामपि द्वादशत्वेन भाव्यम्। तत्र वैकृतानामेव षण्णामावृत्या द्वादशत्वं सम्पाद्यमुत प्राकृतैः षड्भिः समुच्चयो वेति विचारे यदि साक्षादेव होमाङ्गता वैकृतमन्त्राणां श्रूयते तदा मन्त्रान्तराणां बाधाद्धोमावृत्तिप्रयुक्ताऽवृत्तिस्तेषां स्यात्। न चैवम्। किन्तु ''षड्भिर्दीक्षयति'' इति दीक्षाङ्गत्वनिर्वाहाय स्वाहाकारलिङ्गवशेन तेषां होमार्थता कल्प्यते। श्रुतश्च दीक्षार्थत्वमनावृत्त्यैव सकृत्प्रयुक्तैस्तैः कृतेषु षट्सु होमेषूपपन्नमिति नावृत्तौ प्रमाणमस्ति। अतो द्वादशत्वसिद्धये प्राकृतैः षड्भिर्मन्त्रैर्वैकृतानां षण्णां मन्त्राणां समुच्चय एव। न बाध इति।

### पुनराधाने अग्न्याधानदक्षिणानां निवृत्यधिकरणम् (10-3-5)

The statement, एका देया, षड्देयाः, द्वादश देयाः Etc., prescribe दक्षिणा for आधान. For obtaining certain special result पुनराधान as a विकृति of आधान is stated by the statement भाग्ययशः श्रीकामानां पुनरादधीत. At this पुनराधान another set of दक्षिणा is prescribed by the statement 'पुनर्निकृतोरथो दक्षिणा' 'पुनरुत्स्यूतं वासो दक्षिणा. The word पुनःनिकृतः रथः means a chariot that is broken and rebuilt. 'पुनरुत्स्यूतं वासः' a cloth that is torn and restiched.

Here, the question is raised whether the दक्षिणा broken chariot etc., prescribed at विकृति i.e., पुनराधान, sets aside the दक्षिणा एका देया etc., prescribed at प्रकृति or both are to be given.

आधाने ''एका देया। षड्देयाः। द्वादश देयाः'' इत्यदिना वैकल्पिकगवादिद्रव्यदक्षिणा बहवः श्रुताः। तस्याधानस्य विकृतिरूपं नैमित्तिकं पुनराधानं श्रूयते। तत्र पुनराधाने ''पुनर्निकृतो रथो दक्षिणा। पुनरुत्स्यूतं वासो दक्षिणा'' इत्यादिना दक्षिणान्तरञ्च श्रुतम्। भग्नः सन् पुनः समाहितो रथः **पुनर्निकृतः**। पातितं वासः पुनः समाहितं पुनरुत्स्यूतमुच्यते। तत्र किं पुनर्निकृतरथादिरूपदक्षिणया प्राकृतैकादिदक्षिणानां बाधः, उत समुच्चय इति **सन्देहे**,

Pūrvapakṣa : states that by the statement 'उभयीः ददाति' giving both दक्षिणs is stated.



ऋत्विगानतिरूपैककार्यत्वे समानेऽपि ''उभयीर्ददाति'' इति वाक्ये अग्न्याधायिकीः पौनराधायिकीश्चेत्युभयीर्दक्षिणा ददातीति श्रवणात्पूर्वत्रैव समुच्चय इति **प्राप्तम्**।

Siddhānta : points out that पुनराधान is performed immediately after आधान. Since, the purpose of दक्षिणादान is common, by giving the दक्षिणा prescribed at विकृति the purpose is served. Hence, प्राकृतदक्षिणा need not be given. The Statement उभयीः ददाति only states that प्राकृतदक्षिणा and वैकृत दक्षिणा are given one after the other at the respective याग.

**सिद्धान्तस्तु**, ददातीति वर्तमानापदेशेन विध्यश्रवणात् ''पुनर्निकृतो रथो दक्षिणा'' इति दक्षिणान्तरविधिशेषत्वादाधानानन्तरमेव नैमित्तिकपुनराधानानुष्ठानेन पूर्वमाधानकाले एकादिदक्षिणादानस्य पुनराधानकाले पुनर्निकृतरथादिदक्षिणादानस्य चावश्यकतया पौर्वापर्येणोभयदानस्य प्राप्त्या तदनुवादकतया ''उभयीर्ददाति'' इत्यस्योपपत्तेरेककार्यकरत्वेन वैकृतदक्षिणाभिः प्राकृतीनां बाध इति।

### आग्रायणे वासोवत्साभ्यां अन्वाहार्यस्य निवृत्यधिकरणम् (10-3-6)

At आग्रायणेष्टि by the statements 'वासो दक्षिणा' 'वत्सःप्रथमजो दक्षिणा' दक्षिणा is prescribed. By these अन्वाहार्यरूपदक्षिणा prescribed at प्रकृति is set aside, since, both serve the same purpose viz., ऋत्विगानति.

आग्रयणेष्टौ ''वासो दक्षिणा। वत्सः प्रथमजो दक्षिणा'' इति श्रुतं वासोवत्सञ्च प्रकृतितश्चोदकप्राप्तस्यान्वाहार्यरूपदक्षिणादानस्य बाधकमुत नेति **सन्देहे**, समुच्चायकप्रमाणानामभावात्पूर्वत्रेव प्राकृतस्य बाधकमिति सिद्धावप्युत्तरविवक्षयेदं सूत्रमारभ्यते।

### आग्रायणे वासोवत्सयोः अन्वाहार्य धर्मानुष्ठानाधिकरणम् (10-3-7)

It is stated in the earlier अधिकरण that the दक्षिणा, वासः and वत्स set aside the दक्षिणा अन्वाहार्य. Here, the question is raised whether the auxiliaries of अन्वाहार्य are also not to be observed. It is ruled that since these serve the purpose served by अन्वाहार्य, the auxiliaries of अन्याहार्य are to be observed for these also.

वासोवत्सञ्च प्राकृतान्वाहार्यनिवर्तकमित्युक्तम्। तत्र किमन्वाहार्यधर्मा आसादनादयो वासोवत्से कार्याः न वेति **सन्देहे**,

कर्तव्या इत्यत्र कस्यचिन्नियामकस्याभावान्न कर्तव्या इति **प्राप्ते,**
अन्वाहार्यकार्याऽनतिकरत्वेन तत्स्थानापन्नत्वाद्वासोवत्सेपि तद्धर्माः कार्याः इति **सिद्धान्तः ।**

### आग्रायणे वत्से पाकाभावाधिकरणम् (10-3-8)

In the earlier adhikaraṇa it was stated that अन्वाहार्यधर्म s are to be observed for वास and वत्स also. पाक i.e., cooking is one of the अन्वाहार्यधर्म. Therefore, the question arises whether पाक be observed for वत्स or not.

वासोवत्सं प्राकृतान्वाहार्यधर्मकमिति पूर्वत्रोक्तप्रमेयेऽत्र विशषचिन्तनात्सङ्गतिः । अन्वहार्यधर्मः पाको वत्से कर्तव्यो न वेति **सन्देहे,**

Pūrvapakṣa : aruges that just as other अन्वाहार्य धर्मs are observed पाक has also to be observed. The calf may be cooked and its meat may be given as दक्षिणा.

पूर्वन्यायेन चोदकानुग्रहायेतरप्राकृतधर्मवत्पाकोपि कर्तव्य इति पक्त्वा तदीयमांसमेव दक्षिणात्वेन देयमिति **प्राप्ते**

Siddhānta : points out that it is वत्स i.e., calf, that is prescribed as दक्षिणा but not its meat. Cooking वत्स amounts to destroying the very होमद्रव्य. Hence, पाक is not to be observed for वत्स.

**सिद्धान्तः,** ''प्रथमजो वत्सो दक्षिणा'' इति श्रुतदक्षिणाशब्दो हि कर्मकरेभ्यो यद्भृतित्वेन दीयते तस्य वाचकः । तेन दक्षिणाशब्दसंयोगाद्वत्सद्रव्यमेव देयत्वेन श्रुतम् । न मांसम् । वत्सस्य पाके च वत्स-द्रव्यमेव नश्येत् । न च प्रकृतावदनीयेनान्वाहार्येणाऽनतेः कृतत्वादिहाप्यदनीयेनैव मांसेनाऽनतिः कार्येति वत्सस्यादनीयत्वसिद्ध्ये पाकः कार्य इति वाच्यम् । पुरुषाणां बलपुष्ट्यादिद्वारा क्रत्वनुष्ठानशक्तिं जनयितुं वत्सस्याश्रवणादक्षिणाश्रुतिसंयोगेनाऽनत्यर्थत्वादानतिश्चानदनीयेनापि वत्सेन भवतीति न पाकः कर्तव्य इति ।

### आग्रायणे वाससि पाकाभावाधिकरणम् (10-3-9)

In this adhikaraṇa the question is raised whether there is पाक for वास which is prescribed as दक्षिणा.



आग्रयणे दक्षिणात्वेन श्रुते वाससि पाकोऽस्ति न वेति **सन्देहे,**

Pūrvapakṣa : there will be no स्वरूपनाश of वास by putting it in hot water as in the case of वत्स i.e., calf. Therefore पाक has to be observed.

पूर्वत्र वत्सस्य विनाशापत्त्या पाकायोगेप्युष्णोदकभाण्डे वाससो निक्षेपेण पाके स्वरूपनाश-रूपविरोधाभावात्पाकः कार्यो वाससीति **प्राप्ते**

Siddhānta : points out that the पाक is not अदृष्टार्थ but अन्वाहार्यस्वरूपनिष्पत्यर्थ. However in the case of वास, पाक is not required for its स्वरूप निष्पत्ति. Hence, it need be observed for वास.

**सिद्धान्तः,** यदि प्रकृतौ पाकोऽदृष्टार्थः स्यात्तदा स्यादेवम् । न च तथा । अन्वाहार्य-रूपदक्षिणाद्रव्यनिष्पत्तिरूपदृष्टार्थत्वात् । प्रकृते च दक्षिणाद्रव्यस्य वाससः पाकं विनापि सिद्धेः प्रयोजनाभावान्न वाससि पाक इति ।

### अग्रायणे वासोवत्सयोः अभिधारणाभावाधिकरणम् (10-3-10)

At प्रकृतियाग, अभिधारण is made for अन्वाहार्य. Here the question is raised whether this should be done for वास and वत्स at विकृतियाग or not.

अभिघारणमन्वाहार्यधर्मः प्रकृतौ दृष्टः । स किं वासोवत्सयोः कार्यः, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that अन्वाहार्य means अन्न. This can be obtained without अभिघार. This means it is अदृष्टार्थ. Hence, it has to be observed for वास and वत्स also at विकृति.

प्रकृतावभिघारणेन विनाप्यन्वाहार्यशब्दितान्नं निर्वर्तत इत्यदृष्टार्थमभिघारणमिति वासोवत्सयोरपि दृष्टार्थपाकस्यासम्भवेन बाधेऽप्यदृष्टार्थमभिघारणं सम्भवतीति कार्यमेव । न बाधनीयमिति **प्राप्ते**

Siddhānta : Siddhantin points out that at प्रकृतियाग it is not अदृष्टार्थ. It is meant to provide taste for अन्वाहार्य. Hence, it is दृष्टार्थ. वास and वत्स are not eatables. Hence, there is no need of अभिधारण.

**सिद्धान्तः**, दृष्टे सम्भवत्यदृष्टकल्पनायोगात्प्रकृतौ स्वादिमार्थमभिघारणम् । स्वादिमा चाऽनतिविशेष उपयुज्यते । यथा हि स्वादुना द्रव्येणाऽनमन्ते, न तथेरतरेणेति लोके सिद्धत्वात् । अनदनीययोर्वासोवत्सयोश्च न स्वादिम्ना कृत्यमस्तीति पाकस्येवाभिघारणस्यापि बाध इति ।

## ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणम् (10-3-11)

At ज्योतिष्टोम by the statement 'गौश्च अश्वश्च अश्वतरश्च गर्दभश्च अजाश्च आवयश्च व्रीहयश्च यवाश्चतिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा. twelve hundred दक्षिणा is prescribed. Here, the question is raised whether by this statement.

i) twelve hundred of each item listed here is prescribed as दक्षिणा.
ii) or of only one of them.
iii) or of माष s
iv) or twelve hundred of all put together.
v) or of one of the same class
vi) or of animals only.
vii) or twelve hundred of cows only.

ज्योतिष्टोमे श्रूयते ''गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा'' इति । तत्र किमेकैकस्य गवादेर्द्वादशशतसङ्ख्या विधीयते, किं वा कस्यचिदेकस्य, उत माषाणां, अथ सर्वेषां सहितानां, अथानियमेनैकजातीयस्य, यद्वा नियमेन पशूनामेव, अथ गवामेवेति सप्तधा सन्देहः ।

Pūrvapakṣa : produces suitable argument in favour of each alternative as under.

i) by the word तस्य all items listed are referred to, hence, twelve hundred of all items be given as दक्षिणा.
ii) by the word तस्य all cannot be taken. Hence, any one of them be taken as referred to by the word तस्य and twelve hundred of that be given as दक्षिणा.
iii) It is not proper to take an any one by the word तस्य, hence immediately preceding word of तस्य viz माषाणां be taken as referred to by तस्य. Though



the word माषाणां is in plural, by taking it as a group the word तस्य is used in singular.

iv) The particle च after the माषाः indicates that the word तस्य refers to माषाs alongwith others in the list. Hence, twelve hundred of all put together are referred to by तस्य.
v) The word तस्य is in singular therefore all cannot be taken. Taking them as one unit is not warrented as the unit is not prescribed as दक्षिणा. all are prescribed as दक्षिणा. individually. Therefore, any one of them that is stated in singular or a group of similar objects may be taken as referred to by तस्य.
vi) In the case of व्रीहि, माष etc., grains, we do not deal with them as five grains, hundred grains etc. Therefore animals listed here only have to be taken as referred by the word तस्य.

**पूर्वपक्षस्तु**, तस्येति षष्ठ्यन्तेन पूर्वप्रकृतगवादीन् प्राधान्येनोद्दिश्य तद्गुणतया विधीयमाना संख्या प्रतिप्रधानमन्वेतीति प्रत्येकमेव द्वादशशतसङ्ख्या सम्पाद्येत्याद्यः । तदाह सूत्रे, **गवादिद्रव्यविधिसन्निधौ** श्रूयमाणा **सङ्ख्या तेषां** द्रव्यादीनां **गुणत्वात्प्रत्येकं** स्यादिति ।

तस्येत्येकवचनेन गवादिसर्वपरामर्शायोगाद्गवादिसर्वद्रव्योद्देशेन सङ्ख्यासम्बन्धे दक्षिणासम्बन्धे च विधीयमाने वाक्यभेदप्रसङ्गात्प्रकृतगवादिद्रव्येष्वनियमेन तस्येति यत्किञ्चित्परामृश्य तादृशैकद्रव्येण सङ्ख्यया च विशिष्टा दक्षिणा विधीयत इति प्रकृतयत्किञ्चिद्द्रव्यस्यैकस्येयं सङ्ख्येति **द्वितीयः** ।

सत्यमेकस्यैव सङ्ख्याविधिरिति । अनियमस्त्वयुक्तः । माषाणामव्यवधानेन प्रकृततया बुद्धौ सन्निहितत्वेन तेषामेव समुदायविवक्षया तस्येति परामर्शेन सङ्ख्याविधिरिति **तृतीयः** ।

सत्यं माषाः सन्निहिता इति तथापि माषाश्चेति श्रुतचशब्दबलेन माषाणामन्यसाहित्यावगमाद्गवादिसहितानामेव माषाणां बुद्धिस्थत्वात्समुदायविवक्षया तस्येति प्रकृतसर्वपरामर्शेन सङ्ख्याविधिरयमिति मिलितसर्वसम्पाद्या सङ्ख्येति **चतुर्थः** ।

तस्येत्यस्यैकवचनान्तत्वेन गवादिसर्वद्रव्यपरामर्शायोगात्तेषां समाहारस्याशाब्दत्वेनाप्रकृततया

परामर्शायोगाद्गवादिष्वनियमेन यस्य कस्यचिदेकवचनान्तनिर्दिष्टस्य बहुवचनान्तनिर्दिष्टस्य वा एकजातीयस्य तस्येति परामर्शेन सङ्ख्याविधिरिति **पञ्चमः ।**

गवादिपशूनामेवैकवचननिर्दिष्टानाञ्च बहुवचननिर्दिष्टानाञ्च तस्येति परामर्शेन व्रीह्यादीनां तेषामाढकादिपरिमाणापेक्षया सङ्ख्याव्यवहारो न पशूनामिव स्वरूपतः सङ्ख्याव्यवहारोऽस्तिलोके व्रीहीणां माषाणां वा पञ्चभिर्द्वादशशतेन वा अयं पदार्थः क्रीत इति व्यवहारा भावात् । अतः स्वरूपतः सङ्ख्यापरिमाणयोगिनां पशूनामेव । तत्र च विशेषानवगमात् यत्किञ्चित्पशूनां तस्येति परामर्शेन सङ्ख्याविधिरयमिति **षष्ठः ।**

Siddhānta : points out that the word तस्य is in singular. Therefore, अजा etc., animals that are stated in plural are not to be taken by तस्य. Cow only has to be taken by it. Cows are helpful by providing milk, curd etc., Hence giving gift of them is useful here and the other world. In view of this the gift of twelve hundred cows is enjoined here.

**सिद्धान्तस्तु,** तस्येत्येकवचनान्तेन बहुवचनान्तनिर्दिष्टानामजादीनां परामर्शायोगादेकवचनान्तनिर्दिष्टगवादिपशुपरामर्श इति परिशिष्यते । तेषु च दधिपयःप्रभृतिभिरिह दानेन, परत्र च गवां महोपकारित्वात् ''न केसरिणो ददाति'' इत्यश्वदानस्येव गोदानस्यानिषिद्धत्वात् ''गौश्चाश्वश्च'' इत्यादिवाक्ये निर्दिष्टेषु मुख्यत्वाच्च गोद्रव्यस्यैव तस्येति परामर्शेन द्वादशशतरूपसङ्ख्याविधिरिति ।

## विभज्यगोदक्षिणायाः दानाधिकरणम् (10-2-12)

In the earlier adhikaraṇa it was stated that the दक्षिणा of twelve hundred cows be given. Here, the question is raised whether this दक्षिणा be given by dividing cows in four groups or without dividing or without any fixed arrangements.

ज्योतिष्टोमे गवां द्वादशशतं दक्षिणेति स्थितम् । तत्र किमियं दक्षिणा ऋत्विग्भ्यो विभज्याविभज्य वा देयेत्यनियमः, उताविभज्यैव, अथ विभज्यैवेति त्रेधा **सन्देहे,**

Pūrvapakṣa : states that as there is no specific instruction these may be given in any manner.



Pūrvapakṣin suggests another way also. The word ऋत्विग्भ्यः is in the dative case suffix. It is in plural. Taking into account the plural number, the cows be given to all priests together without dividing.

**विशेषाश्रवणादनियम इत्याद्यः पूर्वपक्षः ।** ''ऋत्विग्भ्यो दक्षिणां ददाति'' इति वाक्ये चतुर्थ्या ऋत्विजां सम्प्रदानकारकत्वोक्तेः कारकस्य दानक्रियां प्रति गुणभूतत्वात्कारकीभूतर्त्विजां गुणभूततया तद्विशेषणीभूतं बहुत्वमुपादेयगतत्वेन विवक्षित्वा तेभ्यः सहितेभ्योऽविभज्यैव देयेति **द्वितीयः ।**

Siddhānta : points out that the dative suffix indicates the प्राधान्य of the ऋत्विक्. As per the guideline प्रतिप्रधानं गुणावृत्तिः the दक्षिणा has to be divided and given to each priest separately.

**सिद्धान्तस्तु,** ऋत्विग्भ्यो दक्षिणादानं हि तेषां परिक्रयार्थम् । नादृष्टार्थमिति पूर्वपादे **ऋत्विग्दानं धर्ममात्रं स्याद्ददाति सामर्थ्यात्** इत्यत्रोक्तम् । यद्यत्र दानक्रियायामृत्विजां गुणत्वं स्यात्तर्हि तेभ्यो दानमदृष्टार्थं स्यात् । अतो दक्षिणादानेन न ऋत्विजः परिक्रीणीयादित्यर्थतया ऋत्विजो दानक्रियां प्रति चतुर्थ्यापि प्राधान्यमेवोच्यत इति बहुत्वस्योपादेयगतत्वाभावेनाविवक्षितत्वात् प्रतिप्रधानं गुणावृत्तिरिति विभज्य चैकैकस्मै दक्षिणादानमिति ।

## ज्योतिष्टोमे समाख्यानु सारेण दक्षिणा विभागाधिकरणम् (10-3-13)

In the earlier adhikaraṇa it was stated that दक्षिणा be given dividing it. Here, the question is raised whether it should be given dividing equally or as per the responsibility entrusted to each priest. or as per their designation.

पूर्वत्र सामान्यतो विभज्य दानमिति स्थितम् । तत्र विशेषचिन्तनात्सङ्गतिः । विभागः किं साम्येन, किं वा प्रयासानुसारेण, उत समाख्यानुरोधेनेति त्रेधा **सन्देहे,**

Pūrvapakṣa : states that there is no particular instruction, दक्षिणा may be equally divided and given. Pūrvapakṣin makes another suggestion that it may be divided as per the responsibility entrusted to each priest and given.

विशेषस्याश्रुतत्वात्समं स्यादिति सूत्रोक्तदिशा साम्येन विभाग **इत्येकः पूर्वपक्षः ।** लोक इवाऽयासानुसारेण विभाग **इत्यन्यः ।**

Siddhānta : The दक्षिणा be divided as per the designations of the priest. For this purpose the priests are designated as

i) अर्धिनः i.e., those who are entitled for half of the दक्षिणा. that was given to ब्रह्मा, उद्गाता and होता.

ii) तृतीयिनः those who are entitled for one third of that was given to ब्रह्मा etc.,

iii) पादिनः those who are entitled for one fourth of that was given to ब्रह्मा etc.,

Those who come under the catagory of अर्धिनः, तृतीयिनः and पादिन are the assistants of ब्रह्मा, उद्गाता and होता.

**सिद्धान्तस्तु,** समाख्यानुगुण एव विभाग इति । तत्र यदि प्रकृतौ ब्राह्मणाच्छंस्यादीनां ब्रह्मादिभागापेक्षया अर्धं दीयेत तदाऽर्धिन इति समाख्या युक्ता । यद्याग्नीध्रादीनां ब्रह्मादिभागापेक्षया तृतीयो भागस्तदा तृतीयिन इति समाख्या, तथा यदि पोत्रादीनां ब्रह्मादिभागापेक्षया तुरीयो भागस्तदा पादिन इति समाख्या च युक्तेति सत्रात्मकद्वादशाहगतसमाख्योक्तानुरोधेनैव प्रकृतौ विभागः कार्य इत्यध्यवसानात्समाख्यानुगुणो विभाग इति ।

## भूनामैकाहे धेनुदानेन कृत्स्नक्रतुदक्षिणा बाधाधिकरणम् (10-3-14)

There is a ज्योतिष्टोम विकृतियाग called भूः, at this धेनु is prescribed as दक्षिणा by the statement तस्य धेनुः दक्षिणा. Here, the question is raised whether this धेनु दक्षिणा sets aside all दक्षिणाs stated in प्रकृतियाग or only गोरूपदक्षिणा.

अस्ति भूर्नामक एकाहो ज्योतिष्टोमविकारः । ''अथैष भूर्वैश्वदेवः । तस्य धेनुर्दक्षिणा'' इति । तत्रेयं धेनुश्चोदकप्राप्तप्राकृतगवामेव निवर्तिका, अथ गवादिसर्वद्रव्यस्येति **सन्देहे,**

Pūrvapakṣa : argues that गो etc., are separately दक्षिणा. दक्षिणात्व is present in them individually. Hence धेनुरूपादक्षिणा in विकृति sets aside only गोरूप दक्षिणा at प्रकृति.

**पूर्वपक्षस्तु** दक्षिणाशब्दो हि गवादिद्रव्येषु वर्तमानः ''दक्षयति कर्मणि शक्तं करोति'' इति व्युत्पत्त्या भृतित्वरूपगुणं निमित्तीकृत्य वर्तत इति गुणवचनः । गवादिशब्दस्तु गोत्वादिजाति-



निमित्तकत्वाज्जातिवचनः । तथा च गुणं प्रति जात्याश्रयस्य गवादेर्विशेष्यतया प्राधान्याद्दक्षिणायाश्च गुणत्वात्प्रतिप्रधानं गुणावृत्तिरिति न्यायेन प्रतिगवादिप्रधानं दक्षिणारूपगुणसम्बन्धात्प्रत्येकमेव दक्षिणात्वम् । गवादयो दक्षिणारूपाः कार्या इत्येवं बह्वीषु दक्षिणासु यस्याः कस्याश्चित्स्थाने निविशमाना धेनुर्दक्षिणात्वं प्रतिपद्यत इति धेनुत्वस्य गोलिङ्गत्वाद्गवामेव निवर्तिका धेनुरिति ।

Siddhānta : points out that at प्रकृति. गवादिसर्वद्रव्यविशिष्टदक्षिणा is one. दक्षिणात्व present in गवादिसर्वद्रव्य is one. Hence all the items of दक्षिणा at प्रकृतियाग are set aside at विकृति. धेनु only has to be offered as दक्षिणा.

**सिद्धान्तस्तु,** गवादयो दक्षिणाः कार्या इत्यस्य भृतिरूपदक्षिणया गवादीन् संस्कुर्यादित्यर्थतया गवादिकं प्रत्येकमुद्दिश्य दक्षिणारूपसंस्कारविधौ संस्कृतानां तेषां विनियोगाभावेनादृष्टार्था दक्षिणा स्यात् ॥ गवादिविशिष्टदक्षिणाविधौ तु ''ऋत्विग्भ्यो दक्षिणां ददाति'' इति ऋत्विगानत्यर्थतया तस्य विनियोगाद्दृष्टार्थतेति गवादिसर्वद्रव्यविशिष्टैकैव दक्षिणा प्रकृतौ विधेया । गवादिसर्वद्रव्येष्वेकमेव दक्षिणात्वमिति तत्सर्वविकारा धेनुरिति ।

## 'एकां गाम्' इत्यनेन गोगतसाङ्ख्या बाधाधिकरणम् (10-3-15)

At the one day sacrifice designated as 'भूः' it is stated that यदि सोममपहरेयुः एकां गां दक्षिणां दद्यात्' 'अभिदग्धे सोमे पञ्चागावः' If सोम is lost one cow be offered as दक्षिणा. If सोम is burnt five cows be offered as दक्षिणा. Here the question is raised whether this एकगौरूपदक्षिणा sets aside any one द्रव्य of दक्षिणा or गोरूपदक्षिणा only stated at प्रकृति.

भूनामकैकाह एव ''यदि सोममुपहरेयुरेकां गां दक्षिणां दद्यात् । अभिदग्धे सोमे पञ्च गाः'' इति श्रूयते। तत्रैकामिति पञ्चेति सङ्ख्याद्वययुक्ततया श्रुता गोरूपदक्षिणा किं क्रतुगतगवादिसर्वद्रव्येष्वेकैकद्रव्यस्य निवर्तिका, उत गोरूपद्रव्यमात्रस्येति **सन्देहे,**

Pūrvapakṣa : argues that by the statement 'एकां गां दक्षिणां दद्यात्' एकत्वसङ्ख्याविशिष्ट गौ is enjoined. The word गौः is उपलक्षण, अश्व etc., stated as दक्षिणा in the प्रकृतियाग are also to be taken. with this explanation this statement conveys that गवाद्यन्यतमेषु यत्किञ्चिदेकं सोमापहारे दद्यात्. In view of this गवादिसर्वद्रव्य stated in प्रकृतियाग has to be set aside and one गो or अश्व has to be offered as दक्षिणा when there is सोमापहार.

एकत्वादिसङ्ख्यायुक्तद्रव्यस्यैवात्र विधानात् । स्त्रीलिङ्गन्तु दक्षिणापदसामानाधिकरण्यादनूद्यते । गोपदश्चाश्वाद्यन्यतमद्रव्योपलक्षणम् । कदाचिद्गोरपि प्राप्तत्वात्पाक्षिकानुवादो वा । तथा च गवाद्यन्यतमेषु यत्किञ्चिदेकं सोमोपहारे दद्यात्, सोमाभिदाहे तु पञ्च दद्यादित्यर्थसम्पत्तेर्गवादिसर्वद्रव्यदानस्य पूर्वत्रेव धेन्वैकत्वादिसङ्ख्ययापि निवृत्तिरिति **प्राप्तम्** ॥

Siddhānta : points out that here. एकत्वसङ्ख्या only is enjoined but not एकत्वसङ्ख्याविशिष्टद्रव्य. This एकत्वसङ्ख्या sets aside the द्वादशशतसङ्ख्या stated in प्रकृतियाग.

**सिद्धान्तस्तु,** उक्तदिशैकादिपदस्य ददातिनान्वये किमित्याकांक्षायां गामितिपदं चोदकप्राप्तगवाद्यन्यतमोपलक्षकं स्यात् । न च तद्युक्तम् । अतो वाक्यप्रमाणकोऽपि सन्निहितगोपदार्थसम्बन्धएवैकत्वादिसङ्ख्यया विधेयः । ''चोदकप्राप्तगवादिषु गां दक्षिणां दद्यादिति यत्सा एका, न तु द्वादशशतम्'' इति गोगतसङ्ख्यैव निवर्तते । न त्वश्वादिकमिति न प्राकृतसर्वद्रव्यनिवर्तिका सङ्ख्येति ।

### सायस्केत्रिवत्सेन सोमक्रयमात्र बाधाधिकरणम् (10-3-16)

At साद्यस्क the statement 'त्रिवत्सः साण्डः सोमक्रयणः i.e. सोमक्रयहेतुः, त्रिवत्सः means त्रिवर्षकः

Here, the question is raised whether त्रिवत्स is enjoined for साण्ड or त्रिवत्स is enjoined for सोम क्रयण.

साद्यस्क्रे श्रूयते ''त्रिवत्सः साण्डः सोमक्रयणः'' इति । सोमक्रयणः सोमक्रयहेतुः । त्रिवत्सस्त्रिवर्षक इत्यर्थः । तत्र साण्डानुवादेन त्रिवत्सविधिः ''यः साण्डः स त्रिवत्स'' इति, किं वा सोमक्रयणानुवादेन त्रिवत्सविधिः ''यः सोमक्रयणः स त्रिवत्सः'' इति **सन्देहे,**

Pūrvapakṣa : argues that as the word साण्ड occurs near by त्रिवत्स. Hence, त्रिवत्स is enjoined for साण्ड. Consequently साण्ड i.e., वृषभ. Which is enjoined for सोमक्रयण in प्रकृतियाग is to be set aside. This does not set aside the other सोम क्रयसाधनः stated by the statement 'एकहायन्या क्रीणाति' अजया क्रीणाति.

यथा पूर्वत्र ''एकां गाम्'' इत्यत्र सन्निहितगवानुवादेनैकत्वविधिरेवमत्राप्यव्यवहितसाण्डानुवादेन त्रिवत्सविधिः । तथा च ''वृषभेण क्रीणाति'' इति प्रकृतौ क्रयार्थत्वेन विहितवृषभस्यैवेह त्रिवत्सेन निवृत्तिः । न तु ''एकहायन्या क्रीणाति'' ''अजया क्रीणाति'' इत्युक्तसाधनान्तरस्येति **प्राप्ते**



Siddhānta : points out that if त्रिवत्स is enjoined for साण्ड then, since अग्नीषोमीय पशु is also साण्ड the contingency of that also becoming त्रिवत्स will arise. This results in enjoining the त्रिवत्सत्व for सोमक्रयणपशु and also असोमक्रयणपशु which is not proper. In view of this it is better to take it as enjoining त्रिवत्स for सोम क्रयण.

**सिद्धान्तः,** साण्डानुवादेन त्रिवत्सत्वविधावग्नीषोमीयपशोरपि साण्डत्वात्त्रिवत्सत्वप्रसङ्गः । न चेष्टापत्तिः । सोमक्रयणासोमक्रयणरूपोभयविधपशोरपि साण्ड इत्यनूद्य त्रिवत्सत्वविधौ सोमक्रयणपदमवयुत्याऽनुवादः स्यात् । तस्मात्सोमक्रयणानुवादेन त्रिवत्सविधिः ।

### अश्वमेधे प्राकाशौ इत्यनेन अध्वर्युभाग बाधाधिकरणम् (10-3-17)

At अश्वमेध the statement 'हिरण्मयौ प्राकाशौ अध्वर्यवे ददाति' प्राकाशौ means दीपस्तम्भौ or दर्पणौ.

Here, the question is raised whether these set aside all दक्षिणाद्रव्य of प्रकृति or only that which was to be given to अध्वर्यु.

अश्वमेधे श्रूयते ''हिरण्मयौ प्राकाशावध्वर्यवे ददाति'' इति । **प्राकाशौ** दीपस्तम्भावित्येके । दर्पणावित्यन्ये । तौ किं प्राकृतस्य दक्षिणाद्रव्यस्य कृत्स्नस्य निवर्तकौ, उताध्वर्युभागस्यैवेति **सन्देहे,**

Pūrvapakṣa : argues that the implication of the statement 'प्राकाशौ आध्वर्यवे ददाति' is that ऋत्विभ्यो ददाति इति यत् तौ प्राकाशौ that which is to be given to ऋत्विक्s is प्राकाशौ i.e., two lamps. The word अध्वर्यु in that statement has to be taken in the sense of in ऋत्विक्. in general. As per this explanation प्राकाशs are enjoined for दान, hence all items stated for दान at the प्राकृतयाग are to be set aside and lamps only to be given at विकृतियाग.

अध्वर्युपदश्च ''अध्वरं युंक्ते'' इति व्युत्पत्या ऋत्विङ्मात्रपरम् । एवञ्च ''ऋत्विग्भ्यो ददाति इति यत् तौ प्राकाशौ'' इति दानमात्रे प्राकाशविधानात्प्राकृतकृत्स्नद्रव्यनिवृत्तिरिति **प्राप्तम्** ।

Siddhānta : points out that if प्राकाशौ is enjoined for दान the word अध्वर्यवे in the statement becomes purposeless. Therefore giving the gift of प्राकाश to अध्वर्यु is enjoined here.

**सिद्धान्तस्तु,** उक्तदिशा प्राकाशयोर्ददातिनाऽन्वये प्राकाशौ ददाति'' इत्येतावता वाक्यपूर्तेरध्वर्यव इति व्यर्थम् । अतो वाक्यप्रमाणकोऽध्वर्युप्राकाशसम्बन्ध एव विधेयः । प्राकाशाध्वर्युविशिष्टमपूर्वं दानान्तरं वा विधेयमित्यध्वर्युभागस्यैव चोदकप्राप्तस्य प्राकाशद्रव्येण निवृत्तिः । न प्राकृतद्रव्यमात्रस्येति ।

**उपहव्ये कृत्स्नक्रतुदाक्षिण्यस्य बाधाधिकरणम्** (10-3-18)

There is a one day sacrifice called उपहव्य. At this offering of श्यावाश्व as दक्षिणा to ब्रह्मा is prescribed. Here, the question is raised whether this sets aside the दक्षिणा prescribed for ब्रह्मा only at प्रकृतियाग or the entire दक्षिणा.

''उपहव्योऽनिरुक्तस्तेनाभिनानश्यमानं याजयेत्'' इत्युहव्यसंज्ञकमेकाहं विधाय श्रूयते ''अश्वः श्यावो रुग्मललाटो दक्षिणा । स निरुक्तः । स ब्रह्मणे देयः'' इति । **श्यावः** पीतलोहित इत्येके । हरितवर्ण इत्यन्ये । तत्र किमयमश्वश्चोदकप्राप्तब्रह्मभागस्यैव निवर्तकः, उत कृत्स्नप्राकृतद्रव्यमात्रस्येति **सन्देहः ।**

Pūrvapakṣa : argues that श्यावाश्व is not to be connected with दक्षिणा as श्यावाश्वरूपदक्षिणा but has to be connected with ब्रह्मा as दक्षिणा to be given to ब्रह्मा. Hence, only that दक्षिणा which is prescribed for ब्रह्मा at प्रकृतियाग is to be set aside at विकृतियाग. But not the entire दक्षिणा.

**पूर्वपक्षस्तु,** अश्वस्य धेनुवद्दक्षिणासम्बन्धश्रवणेऽपि न तथाऽन्वयः । तथात्वे हि प्राकृतकृत्स्नद्रव्यनिवृत्तिः स्यात् । किन्त्वनन्तरवाक्ये ''ब्रह्मणे देयः'' इति तस्य ब्रह्मसम्बन्धमात्रश्रवणात्पूर्ववाक्यस्थदक्षिणाशब्दो ब्रह्मदक्षिणाविशेषपर इति, ब्रह्मभागमात्रस्य चोदकप्राप्तस्य निवृत्तिः । न कृत्स्नस्येति । ऋत्विगन्तराणां चोदकप्राप्तदक्षिणाद्रव्यं दातव्यमेवेति ।

Siddhānta : points out that श्यावाश्वः दक्षिणा and 'ब्रह्मणे देयः' are two different sentences. The first sentence prescribes श्यावाश्व as दक्षिणा for याग at विकृतियाग. Consequently it sets the entire दक्षिणा prescribed at प्रकृतियाग. The second sentence. ब्रह्मणे देयः prescribes that this वैकृतदक्षिणा be given to ब्रह्मा. As a result of this the other ऋत्विक् loose both प्राकृत दक्षिणा and वैकृतदक्षिणा. Their participation in the विकृतियाग has to be managed by persuation in the light of the restriction of श्यावाश्वदक्षिणा to ब्रह्मा only.



**सिद्धान्तस्तु,** यद्यत्र ''प्राकाशावध्वर्यवे ददाति'' इतिवत् ''अश्वः श्यावो ब्रह्मणे देयः'' इत्येकं वाक्यं स्यात्तदाऽध्वर्युभागमात्रस्यैव ब्रह्मभागमात्रस्य निवृत्तिः स्यात् । न चैवम् । द्वे ह्येते वाक्ये । तत्र ''अश्वः श्यावः'' इति पूर्ववाक्येन श्यावाश्वविशिष्टं दक्षिणान्तरं क्रतौ विधीयत इति तेनैव दृष्टार्थत्वादृत्विजामानतिसिद्धेः कृत्स्नं दक्षिणाद्रव्यं निवर्तते । क्रतौ भृतित्वेन विहितश्यावाश्वः सर्वर्त्विग्भ्यो देयतया प्राप्तः सन्नप्युत्तरवाक्येन पुरुषान्तरेभ्योऽपनीय ब्रह्मणे दीयत इत्यन्यर्त्विजां विनैव दक्षिणया ''त्वमत्राध्वर्युर्भव'' ''त्वं होता भव'' इत्यादिप्रार्थनादिरूपवरणेन लौकिकद्रव्यादिदानरूपेण प्रकारान्तरेणाऽनतेः कर्तव्यत्वात् श्यावाश्वेन प्राकृतसर्वदक्षिणाद्रव्यनिवृत्तिरिति ।

**सोमचमसेन कृत्स्न क्रतु दक्षिणा बाधाधिकरणम्** (10-3-19)

At ऋतुपेय, औदुम्बर सोमचमस is prescribed as दक्षिणा by the statement औदुम्बरः सोमचमसो दक्षिणा' It is further prescribed that the दक्षिणा has to be given to ब्रह्मा by the statement सगोत्राय ब्रह्मणे देया. As these two are separate sentences, as per the ruling given in the earlier adhikaraṇa, The entire प्राकृतदक्षिणा has to be set aside and औदुम्बरसोम चमसदक्षिणा has to be given to ब्रह्मा only. The other ऋत्विक् s have be be persuaded to participate in the sacrifice.

ऋतपेये श्रूयते ''औदुम्बरः सोमचमसो दक्षिणा'' ''स प्रियाय सगोत्राय ब्रह्मणे देयः'' इति । तत्र सोमचमसरूपा दक्षिणा प्राकृतकृत्स्नद्रव्यनिवर्तिका, उत ब्रह्मभागमात्रस्येति **सन्देहे,**

The earlier ruling is repeated here to meet on additional objection.

At ऋतुपेय sacrifice, apart from prescribing सोमचमस as दक्षिणा, giving पशु as दक्षिणा is prohibited. The prohibition is possible only if पशुद्रव्य is to be brought from प्रकृति. Hence, the entire प्राकृतदक्षिणाद्रव्य cannot be set aside. This objection is cleared by pointing out that पशुनिषेधवाक्य is अर्थवाद.

पूर्वत्रेवेहापि ''ब्रह्मणे देयः'' इति श्रवणाद्ब्रह्मभागमात्रस्यैव निवृत्तिरिति **प्राप्ते** अत्रापि ''सोमचमसो दक्षिणा'' इति ''स ब्रह्मणे देयः'' इति च पूर्वत्रेव वाक्यद्वयश्रवणात्पूर्वन्यायेन प्राकृतकृत्स्नद्रव्यनिवृत्त्या ब्रह्मण औदुम्बरसोमचमसेनाऽनतिः । अन्यर्त्विजान्तूक्तदिशा प्रकारान्तरेणाऽनतिः । न दक्षिणयेति सिद्धान्तस्य पूर्वाधिकरणेनैव सिद्धावपीह ऋतपेये ''ऋतं सोमः । अनृतं पशवः । यत्पशून् दद्यात्सोऽनृतं कुर्यात् । औदुम्बरः सोमचमसो दक्षिणा'' इति पशुदानप्रतिषेधः श्रूयमाणः प्रकृतितः

पशुद्रव्यस्याप्राप्तौ न युज्यत इति न कृत्स्ननिवृत्तिरिति विशेषाशङ्कां **तथा च सोमचमसः** प्राकाशवदेकर्त्विग्भागमात्रनिवर्तको, न कृत्स्नस्येति सूत्रेण कृत्वा पशुदाननिषेधवाक्यस्य सोमचमसस्तुत्यर्थतयाऽर्थवादत्वेन प्रतिषेधाविधायकत्वात्प्राकृतकृत्स्नद्रव्यनिवृत्तिरिति सिद्धान्तयितुमिदमधिकरणमित्याहुः ।

**सोमचमसेन कृत्स्नक्रतुदक्षिणा पुरुषान्तरयोः बाधाधिकरणम्** (10-3-20)

*In the earlier* अधिकरण, *taking the statements* 'सोमचमसो दक्षिणा' *and* 'ब्रह्मणे देयः' *as two separate statements the ruling was given. Here, by way of* कृत्वा चिन्ता *taking it as one sentence pūrvapakṣa and Siddhānta are formulated. Here, the question is raised if we take it as one sentence,* सोमचमस *prescribed as* दक्षिणा *in* विकृति *sets aside* गवादिसर्वद्रव्यविशिष्टदक्षिणा *prescribed at* प्रकृति *or* ब्रह्मभाग *only.*

पूर्वत्र ''औदुम्बरः'' इत्यादिकं वाक्यद्वयमित्युपेत्य निर्णयः कृतः । अत्र त्वेकं वाक्यं ''ब्रह्मणे देयः'' इत्यन्तमिति **कृत्वाचिन्तयेदमारभ्यते** । यदैकं वाक्यं तदा किं सोमचमसः प्राकृतसर्वद्रव्यनिवर्तकः, उत ब्रह्मभागमात्रस्येति **सन्देहे,**

Pūrvapakṣa : argues that at प्रकृति, सर्वद्रव्यविशिष्टदक्षिणा is one unit hence, by the सोमचमस prescribed at विकृति the entire दक्षिणा prescribed at प्रकृति is set aside.

दक्षिणासंयोगात्प्राकृतसर्वद्रव्यनिवृत्तिः । प्रकृतौ गवादिसर्वद्रव्यविशिष्टदक्षिणाया एकत्वादिह सोमचमसदक्षिणा देयेत्युक्त्या चोदकप्राप्तदक्षिणाया निवृत्तेरौचित्यात् । ''स च ब्रह्मणः'' इति ब्रह्मसंयोगात्पुरुषान्तरेभ्योऽपनय इति **प्राप्ते**

Siddhānta : points out that, though the word दक्षिणा refers to the entire दक्षिणा it should be taken in the sense of ब्रह्मभागदक्षिणा only by लक्षणा. Consequently प्राकृतब्रह्मभागदक्षिणा only is set aside. The others दक्षिणा has to be given to respective other priests.

**सिद्धान्तः,** यदीदमेकं वाक्यं स्यात्तदा सोमचमसः क्रतोर्दक्षिणेति स च ब्रह्मणे देय इत्यर्थद्वयं न विधातुं शक्नुयात् । तदुभयविधानेन च नाभिमतसिद्धिः । अतो दक्षिणाशब्दः सर्वपुरुषसम्बन्धिदक्षिणापरोऽपीह लक्षणया ब्रह्मभागरूपदक्षिणापर इत्यङ्गीकृत्य ''यो ब्रह्मणे देयो दक्षिणांशः स औदुम्बरः



सोमचमसः'' इत्यङ्गीकार्यमित्येकवाक्यत्वपक्षे ब्रह्मभागमात्रस्य निवृत्तिः । न कृत्स्नस्येति ब्रह्मभागदक्षिणादीनां प्राकृतं सर्वं द्रव्यमन्येभ्यो ऋत्विभ्यो देयमिति ।

**वाजपेये रथस्य भागनियामकताधिकरणम्** (10-3-21)

At वाजपेय, the statements 'सप्तदशरथाः सप्तदशनिष्काः' etc., prescribe, a number of दक्षिणा. Then the statement यजुर्युक्तं रथमध्वर्यवे ददाति occurs. Among the सप्तदशरथ s the रथ prepared for यजमान by reciting the यजुर्वेद hymns is यजुर्युक्तरथ.

Here, the question is raised whether this यजुर्युक्तरथदक्षिणा sets asides the दक्षिणा prescribed at प्रकृतियाग or not.

वाजपेये ''सप्तदशरथाः सप्तदश निष्काः'' इत्यनेकदक्षिणां विधाय श्रूयते ''यजुर्युक्तं रथमध्वर्यवे ददाति'' इति । तत्र यजुर्युक्तो रथोऽध्वर्युभागनिवर्तको न वेति **सन्देहे,**

Pūrvapakṣa : argues that just as in the case of प्राकाशौ अध्वर्यवे ददाति' अध्वर्युभाग of प्रकृति is set aside by प्राकाश similarly अध्वर्युभाग of प्रकृति has to be set aside by यजुर्युक्तरथ at विकृति.

मुख्यस्य यजुर्युक्तरथस्य ''यदध्वर्यवे ददाति तद्यजुर्युक्तरथम्'' इति विधेयत्वमेवेति पूर्वत्र सोमचमसेन ब्रह्मभागस्येवाध्वर्युभागस्य निवर्तको यजुर्युक्तरथ इति **प्राप्तम्** ।

Siddhānta : points out that enjoining प्राकाश was अपूर्वविधि. Hence प्राकृतदक्षिणा was set aside by it. However यजुर्युक्तरथविधि is नियमविधि among the दक्षिणा listed as सप्तदशरथाः etc., यजुर्युक्तरथ is already included. It is only specified as to be given to अध्वर्यु only by this statement. This does not restrict the दक्षिणा of other items.

**सिद्धान्तस्तु,** प्राकाशयोरप्राप्ततयाऽपूर्वत्वेन विधानोपगमेऽपीह सप्तदशरथादिद्रव्यान्तराणां दक्षिणात्वेन विहिततया यजुर्युक्तरथदानस्यापि प्राप्तत्वेन यस्मै कस्मैचिद्दाने प्राप्ते ''यजुर्युक्तं रथं ददाति इति यत्तदध्वर्यवे'' इति नियमविधानमेव । लाघवात् । न त्वपूर्वविधिरिति न देयान्तरस्य निवृत्तिरिति ।

**इति दशमाध्याये तृतीयः पादः**

## दशमाध्याये चतुर्थः पादः

### अग्न्यादौ नारिष्टहोमादिभिः नक्षत्रेष्टयादीनां समुच्चयाधिकरणम् (10-4-1)

पूर्वं त्रिपाद्यां बाधाबाधचिन्ताद्वारेण विकृतिषु पदार्थानामियत्ता चिन्तिता । अत्र तु प्राकृतधर्मातिरिक्तधर्मवतीषु प्राकृतधर्मसमुच्चयचिन्ताद्वारा पदार्थेयत्तैव चिन्त्यते । समुच्चयस्य बाधापवादत्वात्तदनन्तरताऽस्येति ज्ञेयम् ।

At नक्षत्रेष्टि by the statement सोऽत्र जुहोति' उपहोम s are prescribed.

At प्रकृतियाग after प्रधानहोम, नारिष्टहोमs, are prescribed by the statement नारिष्टान् होमान् जुहोति. Here, the question is raised whether by the उपहोम at विकृति the नारिष्टहोम of प्रकृति are set aside or there is समुच्चय of both.

प्रकृतौ च प्रधानहोमादूर्ध्वं नारिष्टहोमा विहिताः ''नारिष्टान् होमान् जुहोति'' इत्युक्तत्वात् । तत्र किं वैकृतैरुपहोमैः प्राकृता नारिष्टहोमा बाध्यन्ते, किं वा समुच्चीयन्त इति **सन्देहे,**

Pūrvapakṣa : argues that उपहोमs are prescribed to serve the purpose of नारिष्टहोम. Hence नारिष्टहोम need not be performed at विकृति.

''सोऽत्र जुहोति'' इति विहितोपहोमानां होमत्वसाम्यात्प्राकृतनारिष्टहोमकार्ये विकृतावुपस्थिते सति तत्कार्य एवैते होमा विधीयन्त इति प्रत्यक्षश्रुतोपहोमैरेव तत्कार्ये निष्पन्ने सति तत्कार्यकराः प्राकृता निवर्तन्ते शरैरिव कुशा इति **प्राप्तम् ।**

Siddhānta : points out that उपहोमs are not prescribed for the same purpose for which नारिष्टहोमs were prescribed. नारिष्ट होमs are दृष्टार्थ and उपहोम are अदृष्टार्थ. Since these two serve different purposes both have to be observed at विकृति.

**सिद्धान्तस्तु,** स्यादेवं यदि नारिष्टप्राकृतहोमकार्ये उपहोमाः स्युः । न चैवम् । सन्निपातिनो दृष्टार्थाः । उपहोमास्त्वदृष्टार्थाः । न कार्यकांक्षिणः । अतः सत्यपि होमत्वसामान्ये नारिष्टहोमकार्यं नोपस्थापयितुं शक्ता ।



### शरमयबर्हिषा कौशेय बर्हि बाधाधिकरणम् (10-4-2) (प्रथमं वर्णकम्)

At the ritual enjoined by the statement 'सोमारौद्रं चरुं निर्वपेत्' शरमय बर्हि is prescribed. Here, the question is raised whether this has to be employed together with कुशबर्हि prescribed at प्रकृतियाग or not.

तत्र ''शरमयं बर्हिर्भवति'' इति श्रुतम् । तदिदं प्राकृतेन कुशबर्हिषा समुच्चीयते, न वेति **सन्देहे**

Pūrvapakṣa : argues that the word शरमय contains the मयट् suffix which means शरप्रचुर. This implies that a few कुश also have to be taken for आस्तरण. Hence, by उपदेश, कुश are prescribed and by अतिदेशं शर are prescribed. The समुच्चय of these two is implied here.

शरप्रचुरं बर्हिरिति बर्हिषि शरप्रचुरता विधीयमानाऽल्पकुशानां योग एव सम्भवति । नान्यथेति कुशशरयोरुभयोरप्यतिदेशोपदेशप्रमाणाभ्यामवगतत्वात्पूर्वत्रेवेहापि समुच्चय इति

Siddhānta : points out that the word शरमय is not used here in the sense of शरप्राचुर्य but it is used in the sense of विकार. This means शर only have to be utilised for आस्तरण at विकृति. In view of this कुश prescribed at प्रकृति are not to be used for आस्तरण at विकृति.

**सिद्धान्तस्तु,** नात्र मयट् प्राचुर्यार्थः । येन बर्हिषि कुशयोगोऽपि स्यात् । किन्तु ''नित्यं वृद्धशरादिभ्यः'' (पा । ४ । ३ । १४३) इति प्रतिपदोक्तविकरार्थः । प्रकृतौ कुशानां यत्कार्यं लवनादि संस्कृतावस्थापन्न बर्हीरूपोपस्तरणसाधनद्रव्यसम्पादनरूपं तदेव शराणामपि । अतः प्राकृतकार्यकरत्वाच्छरैः कुशानां निवृत्तिरिति न समुच्चयः ।

### वाजपेये रथघोषदुन्दुभि घोषाभ्यां दर्भमन्त्रयोः उभयोः बाधधिकरणम् (10-4-2) (द्वितीयं वर्णकम्)

At वाजपेय, the statement रथघोषेण माहेन्द्रस्तोत्रमुपाकरोति' occurs. The word उपाकरोति means encourages the priest to recite the स्तोत्र.

At प्रकृतियाग it is stated that उपावर्तध्वमिति मन्त्राभ्यामुपाकरोति i.e., encourages

the priest by two दर्भ to recited the hymn उपावर्तध्वम् etc., here, the question is raised whether taking the word रथघोष as द्वन्द्व compound word, by रथ, दर्भ is to be set aside and by घोष the hymn is to be aside or taking the word रथघोष as षष्ठीतत्पुरुष, By रथघोष both दर्भ and मन्त्र are to be set aside.

वाजपेये श्रूयते ''रथघोषेण माहेन्द्रस्तोत्रमुपाकरोति'' इति । माहेन्द्रस्तोत्रं कर्तुं स्तोतॄन् प्रेरयतीत्यर्थः । प्रकृतौ हि ''उपावर्तध्वमिति दर्भाभ्यां स्तोत्रमुपाकरोति'' इति वाक्ये उपावर्तध्वमिति मन्त्रेण दर्भाभ्यां स्तोत्रं कर्तुं स्तोतॄणां प्रेरणरूपमुपाकरणं विहितम् । तदिह चोदकप्राप्तम् । तत्र ''रथघोषेण'' इत्यत्र द्वन्द्वाश्रयेण रथघोषाभ्यां क्रमाद्दर्भयोर्मन्त्रस्य च निवृत्तिः, उत षष्ठीतत्पुरुषाश्रयेण रथस्य घोषो दर्भमन्त्रयोरुभयोर्निर्वर्तकः इति **संशयः ।**

Pūrvapakṣa : states that taking रथघोष as षष्ठीतत्पुरुष will result in the लक्षणा of the word रथ in the genetive case suffix. Hence the word रथघोष be taken as द्वन्द्व compound. Consequently रथ and घोष will be उपाकारण साधन. These set aside दर्भ and मन्त्र respectively.

**पूर्वपक्षस्तु,** षष्ठीतत्पुरुषपक्षे षष्ठ्या अश्रवणेन रथपदे षष्ठ्यर्थलक्षणा स्यात् ।अतो द्वन्द्वाश्रयेण रथो घोषश्चोपाकरणसाधनः सन् द्रव्यत्वसामान्याद्रथो दर्भयोर्निर्वर्तको घोषश्च शब्दत्वसामान्यान्मन्त्रस्य निवर्तक इति **प्राप्ते**

Siddhānta : points out that the word रक्षघोष cannot be taken as इतरेतरयोग द्वन्द्व as it is singular. If it is taken as समाहारद्वन्द्व it will involve the लक्षणा of both words in समाहार. Therefore, it is better to take it as षषीतत्पुरुष which involve लक्षणा in one word only. Consequently रथघोष has to be considered as उपाकरण साधन in विकृति and it will set aside both दर्भ and मन्त्र.

**सिद्धान्तः,** द्वन्द्व इति किमितरेतरयोगद्वन्द्वः, उत समाहारद्वन्द्वः । नाद्यः । तथात्वे ''धवखदिरौ'' इतिवद्द्विवचनान्ततापत्तिः । न द्वितीयः । तथात्वे द्वे अपि पदे समाहारलक्षके स्याताम् । अतः पूर्वपदमात्रस्य लक्षणाश्रयणेन षष्ठीतत्पुरुषमाश्रित्य रथस्य घोष उपाकरणसाधनमित्युपेयमिति रथघोष एव मन्त्रस्य दर्भयोश्च निवर्तक इति ।



### बृहस्पति सवादौ बार्हस्पत्यग्रहादिभिः प्राकृतैन्द्रवायवादिग्रहाणां समुच्चयधिकरणम् (10-4-3)

At बृहस्पतिसव which is सोमविकृतियाग, the statement बार्हस्पत्यं गृहं गृह्णाति occurs. Here the question s raised whether बार्हस्पत्यग्रह at विकृति sets aside एन्द्रवायवादिग्रह of प्रकृति or not.

बृहस्पतिसवे सोमविकृतियागे श्रूयते ''बार्हस्पत्यं ग्रहं गृह्णाति'' इति । तत्र किं वैकृतो बार्हस्पत्यग्रहः प्राकृतानामैन्द्रवायवादीनां निवर्तको न वेति **सन्देहे,**

Pūrvapakṣa : argues that वैकृतग्रह also accomplishes याग. Hence either प्राकृत ग्रह 's are to be set aside or it has to be taken as an alternate.

प्राकृतग्रहाणामिव वैकृतग्रहस्यापि यागनिर्वर्तकत्वेन कार्यैक्यात्प्राकृतग्रहनिवर्तको वा तैर्वैकल्पिको वा वैकृतग्रह इति **प्राप्ते**

Siddhānta : points out that here वैकृतग्रहs are not enjoined for प्राकृतग्रहकार्य nor both are enjoined for the same कार्य. Hence there is no scope for बाध or विकल्प. These are यागसाधन without depending upon each other. Therefore these have to be employed together.

**सिद्धान्तः,** यदि यूपकार्ये परिधिरिव प्राकृतग्रहकार्ये यागनिर्वृत्तिरूपे वैकृता विधीयेरन्, यदि वा व्रीहियववदेककार्ये प्राकृता वैकृताश्च विधीयेरंस्तदा प्राकृतानां प्ररिधिना यूपस्येव बाधो व्रीहीणामिव यवैर्विकल्पो वा स्यात् । न चैवमस्ति । विकृतावप्युपदेशतः सन्निहितानां चोदकतस्सन्निहितानां चाविशेषात्प्रयोगवचनेन युगपद्यागसाधनतया ग्रहणात्समुच्चय इति ।

### वाजपेये प्राजापत्यपशुभिः क्रतुपशूनां समुचायाधिकरणम् (10-4-4)

At वाजपेय by the statement सप्तदश प्राजापत्यान् पशूनालभेत' seventeen पशु are prescribed. By the statements आग्नेयमग्रीषोभीयमालभेत' 'एन्द्राग्रमुक्थे द्वितीयम्' etc., आग्नेय etc., क्रतुपशु are prescribed. Here, the question is raised whether these are set aside by प्राजापत्यपशु or both have to be offered by way of समुच्चय.

वाजपेये ''सप्तदश प्राजापत्यान् पशूनालभते'' इति श्रुताः पशवः ''आग्नेयमग्निष्टोम आलभते । ऐन्द्राग्रमुक्थ्ये द्वितीयम् । ऐन्द्रं षोडशिनि तृतीयम् । सारस्वतीं मेषीं चतुर्थीमतिरात्रे'' इति श्रुतक्रतुपशूंश्चोदकप्राप्तानाग्नेयादीन बाधन्ते, उत तैस्समुच्चीयन्त इति **सन्देहे,**

Pūrvapakṣa : argues that here with reference to प्राकृतपशु, प्रजापतिदेवता could be enjoined. Hence, प्राकृतपशु need not be set aside. Pūrvapakṣa is put in another way also. By the word पशून् प्राकृतसवनीयपशुकार्य may be taken as referred. प्राजापत्यपशुs are enjoined for the same purpose. Hence, these set aside प्राकृतसवनीयपशु.

''पशून्'' इति श्रुतपशुपदेन प्राकृतपश्वनुवादेन प्रजापतिदेवताविधिसम्भवेनापूर्वपशुविध्यभावान्न प्राकृतनिवृत्तिः । यद्वा ''पशून्'' इति श्रुतपशुपदेन पशुत्वसामान्यात्प्राकृतसवनीयपशुकार्योपस्थितौ तत्र विधीयमानाः प्राजापत्यपशवः कार्यैक्यात्तन्निवर्तका इति प्राप्ते

Siddhānta : points out that here प्राजापत्यदेवता could not be enjoined for प्राकृतपशु. Therefore सङ्ख्यादेवताविशिष्ट कर्मान्तर is enjoined. In respect of second pūrvapakṣa also siddhāntin points out that here the word पशु does not convey सवनीयपशु only. It refers to अग्नीषोमीय etc., others पशु also. Hence, प्राजापत्याशु cannot be taken as enjoined for सवनीयपुशुकार्य. Therefore, there is समुच्चय of सर्वनीयपशु and प्राजापत्यपशु.

**सिद्धान्तः**, मुख्यसङ्ख्यापदस्य लक्षणया प्राकृतपशुसङ्ख्यानुवादकत्वायोगात्प्रवृत्तिविशेषकरत्वाच्च सङ्ख्याविधेरभ्युपेयत्वात्तस्या देवतायाश्च विधौ वाक्यभेदप्रसङ्गान्न प्राकृतपश्वनुवादेन देवताविधिः । किन्तु सङ्ख्यया देवतया विशिष्टपशुद्रव्यककर्मान्तराणां विधिः । यदपि यद्वेत्यादि तदपि न । यदि पशुपदमत्र सवनीयपशुष्वेव वर्तेत, तदा पशुपदेन तत्कार्योपस्थितिः स्यात् । पशुपदस्याग्नीषोमीयादि-सर्वपशुसाधारण्यात् । अतो न पशुपदोपस्थापितसवनीयपशुकार्ये विध्यसम्भवेन तैराग्नेयादि-सवनीयक्रतुपशुभिः समुच्चयः प्राजापत्यपशूनामिति ।

### साङ्ग्रहणीष्टौ आमनहोमैः अनुयाजानां समुच्चयाधिकरणम् (10-4-5)

By the statement वैश्वदेवीं साङ्ग्रहणीं निर्वपेत् ग्रामकामः' साङ्ग्रहिणी ritual is prescribed. At this ritual three आमनहोम are prescribed. Here, the question is raised whether by these three homas the three अनुयाजा are set aside or there is समुच्चाय of these two.



''वैश्वदेवीं साङ्ग्रहणीं निर्वपेद्ग्रामकामः'' इति श्रुतायां साङ्ग्रहणीष्टौ श्रूयते ''आमनमस्यामनस्य देवा ये सजाता इति तिस्र आहुतीर्जुहोति'' इति । तत्रैताभिस्तिसृभिराहुतिभिः प्राकृतानुयाजत्रयस्य किं बाधः, उत समुच्चय इति सन्देहे,

Pūrvapakṣa : states that by the word तिस्रः quoting the कार्य of three अनुयाजाs three आहुतिs with the मन्त्र आमनस्य आमनस्य देवाः are enjoined here. Since the अनुयाजाकार्य is served by these, the अनुयाजाs are to be set aside. If विशिष्टविधि of आहुति and मन्त्र is not considered proper then, quoting three अनुयाजहोम the मन्त्र 'आमनमसि' may be enjoined. In this case प्राकृतानुयाजमन्त्र only is to be set aside.

''तिस्रः'' इति श्रुतत्रित्वस्य प्राकृतानुयाजलिङ्गत्वात् ''तिस्रः'' इति पदेनानुयाजत्रयकार्यं लक्ष-यित्वा तत्र मन्त्रविशिष्टा आहुतयो विधातुं शक्यन्त इति ताभिः प्रत्यक्षश्रुताभिराहुतिभिरानुमानिक-चोदकप्राप्तानामनुयाजानां निवृत्तिः । यदि गौरवाद्विशिष्टविधिं न रोचयसे तर्हि ''तिस्र आहुतीर्जुहोतीति यत्'' इति प्राकृतानुयाजहोमानुवादेन ''आमनमसि,'' इत्यादिमन्त्रविधिरस्तु । न त्वपूर्वहोमविधिः ।

Siddhānta : points out that if by the statement तिस्रः आहुतीः' quoting both त्रित्व and होम मन्त्र is enjoined it will result in वाक्यभेद. Hence it has to be taken as मन्त्रविशिष्टापूर्वहोमविधि. This विधि is not for अनुयाजाकार्य. Hence, that is not set aside. Therefore there is समुच्चय of आमनहोम and अनुयाजा.

**सिद्धान्तः** ''तिस्र आहुतीः'' इति त्रित्वस्य होमानाश्चानुवादेन मन्त्रविधौ वाक्यभेदापत्ते-र्मन्त्रविशिष्टापूर्वहोमविधिरेव । तत्र च त्रित्वस्य गार्हपत्याद्यग्निष्वपि सत्वेन पशुत्वस्येव साधारण्या-न्नैकान्ततोऽनुयाजकार्योपस्थापकत्वमिति तत्कार्ये विध्यभावात्समुच्चय इति ।

### महाव्रते ऋत्विगुपगानस्य पत्न्युपगानेन समुच्चयाधिकरणम् (10-4-6)

At गवामयनसत्रे there is one day ritual desingnated as महाव्रत. At this दुन्दुभिनाद, पत्नीभिः उपगान, वीणागान etc., are prescribed. Here, the question is raised whether the पत्न्युपगान sets aside the ऋत्विगुपगान of प्रकृतियाग or not.

गवामयनाख्यसत्रे महाव्रतं नामैकाहः । तत्र हि ''दिक्षु दुन्दुभयो नदन्ति । पत्न्यश्चोपगायन्ति ।

काण्डवीणाभिरुपगायन्ति'' इत्यादिविधयः श्रूयन्ते । ताः किञ्चोदकतः प्राप्तानामुपगातृभूतऋत्विजां निवर्तिकाः, उत नेति **सन्देहे,**

Pūrvapakṣa : states that the word गान means vocal music. उपगान means supporting it. पत्न्यः उपगायन्ति states that the wives support the सामगान by वीणा etc., instruments. Hence, this sets aside the supporting vocal music of ऋत्विक् while सामगान is going on.

गानस्योपचयात्मकमुपगानम् । गानशब्दश्च शारीर्यां गीतौ प्रसिद्धः । तथा च पूर्वत्रोपहोमानामनुयाजानिवर्तकत्वेऽपीह काण्डवीणाभिर्गानं कुर्वन्त्यः पत्न्यः प्रकृतितः प्राप्तस्योद्गात्रादिकर्तृकस्य शारीरसम्बन्धिनः सामगानस्योपचयात्मकं कुर्वन्त्यस्सत्यस्तदुपगातॄणामृत्विजां निवर्तिका इति प्राप्तम् ।

Siddhānta : points out that उपगान offered by the wives with वीणा is of the nature of incrasing the impact of दुन्दुभिगान. While उपगान of ऋत्विक् is of the nature of increasing the impact of सामगान. Hence the area of the two is different. Therefore one does not set aside the other. Both have to be observed.

**सिद्धान्तस्तु** गानस्योपचयरूपमुपगानमिति नार्थः । येनोक्तदिशा प्राकृतोपगातुर्निवृत्तिः स्यात् । किन्तूपचयरूपं गानमुपगानमित्येव । सामानाधिकरण्यलाभात् । तथा च दुन्दुभ्यादिध्वनेरुपचयं कुर्वन्त्य उपगायकाः पत्न्यः भिन्नविषयत्वान्न सामगानोपगातृनिवर्तिकाः ।

**अञ्जनाभ्यञ्जने नवनीताभ्यञ्जनस्य गौग्गुलवाभ्यञ्जनादिभिः समुच्चायाधिकरणम्** (10-4-7)

There is सत्र of forty nine days called अञ्जनाभ्यञ्जन. At this अञ्जन by गौग्गुल in the प्रातःसवन, by वैतुश्रवण in मार्ध्यंदिन सवन by सौगन्धिक in तृतीय सवन are prescribed. Here, the question is raised whether these set aside नवनीताभ्यञ्जन or not.

अञ्जनाभ्यञ्जननामके एकोनपञ्चाशद्रात्रके सत्रविशेषे श्रूयते ''गौग्गुलवेन प्रातस्सवनेऽभ्यञ्जते । वैतुश्रवेण माध्यन्दिने सवने । सौगन्धिकेन तृतीये सवने'' इति । गौग्गुलवेन गुग्गुलुकषायेणेत्यर्थः । तत्किं गौग्गुलवाद्यभ्यञ्जनं नवनीताभ्यञ्जनस्य बाधकम्, उत नेति **सन्देहे,**



Pūrvapakṣa : argues that अञ्जनाभ्यञ्जन are meant for easy movement of the body at the time of the sacrifice and are दृष्टार्थ. Since, this purpose is served by the अञ्जन of गौग्गुल at विकृतियाग the नवनीताञ्जत prescribed at प्रकृतियाग need not be brought here.

अञ्जनाभ्यञ्जनयोः सुखेन कर्मप्रचारानुकूलाङ्गमार्दवसम्पादनक्षमस्नेहनरूपदृष्टार्थत्वेनैकार्थ्यात्पूर्वत्र ऋत्विजां पत्नीभिरबाधेऽपीह वैकृतेन गुग्गुलुकषायाभ्यञ्जनेन प्राकृतस्य नवनीताभ्यञ्जनस्य बाध इति **प्राप्ते**

Siddhānta : points outr that नवनीताञ्जन is for smoothening the body while गौग्गुलाभ्यञ्जन for preventing the dryness. Hence, the purpose served by these two is different.

Further, नवनीताञ्जन is to be made at the time of दीक्षा while गौग्गुलाञ्जन is to be made at the time of सुत्या. As these are made for different purposes and at different times both have to be observed.

**सिद्धान्तः**, नावनीताभ्यञ्जनस्य स्नेहनार्थत्वेन गौग्गुलवकषायाभ्यञ्जनस्य चन्दनलेपवदरूक्षार्थत्वेन न तयोरैकार्थ्यम् । गौग्गुलवकषायाभ्यञ्जनेन स्नेहनसम्भवेऽपि वा नावनीताभ्यञ्जनं दीक्षाकालीनं दीक्षाकालीनकर्मानुष्ठानसौकर्याय भवति । गौग्गुलवकषायाभ्यञ्जनन्तु सुत्याकालीनमिति तत्कालीनकर्मप्रचाराय भवतीति भिन्नकालीनत्वान्न तयोर्बाध्यबाधकभावः । अतस्समुच्चयः ।

**महाव्रते अहतवाससः तार्प्यादिभिः समुच्चयाधिकरणम्** (10-4-8)

At महाव्रत sacrifice of one day परिधान by तार्प्य for यजमान and परिधान by दर्भमय garment for पत्नी are prescribed. The word तार्प्य means a woollen peice dipped in ghee. Here the question is raised whether these set aside अहतवास i.e., newly purchased cloth prescribed at प्रकृतियाग or not.

गावामयनिके महाव्रताख्यैकाहे श्रूयते ''तार्प्यं यजमानः परिधत्ते । दर्भमयं पत्नी'' इति । घृताक्तं कम्बलं तार्प्यमुच्यते । तत्र किं ताभ्यां तार्प्यदर्भमयाभ्यां चोदकप्राप्ताहतवाससो दम्पत्योर्निवृत्तिः, किं वा समुच्चय इति **सन्देहे,**

Pūrvapakṣa : argues that अहतवास i.e., a newly purchased piece of cloth prescribed at प्रकृतियाग is meant for covering the private part of the body. तार्प्य and दर्भमय may also be used for the same purpose. Hence, अहतवास need not be used in विकृतियाग.

पूर्वत्र कार्यभेदाद्गौग्गुलवेन नावनीतस्यानिवृत्तावपीह प्रकृतावहतवाससो गुह्यावयवाच्छादनार्थत्वेन विकृतावपि तार्प्यदर्भमयाभ्यां प्रत्यक्षश्रुताभ्यां तत्कार्ये कृते सति तत्कार्यार्थस्य प्राकृतस्य निवृत्तिः । एककार्यत्वादिति **प्राप्तम् ।**

Siddhānta : points out that तार्प्य i.e., woollen piece dipped in ghee and दर्भमय grament cannot be used to cover the private part of the body.

More over these two are prescribed for wearing on the body. As अहतवास and these two serve different purposes both should be utilised for the respective purposes.

**सिद्धान्तस्तु** स्यादेवं यदि कार्यैक्यम् । न त्वेतदस्ति । अहतवासश्शब्दितेन सद्यः क्रीतानुपभुक्त वाससा गुह्यावयवाच्छादनसम्भवेऽपि तार्प्यदर्भमयाभ्यां तदाच्छादनस्याशक्यत्वान्न तत्कार्यकरत्वम् । अस्तु वा कथञ्चित्तार्प्यदर्भमययोस्तदाच्छादनक्षमत्वं तथापि न गुह्याच्छादनरूपे तत्कार्ये तयोर्विधानं किन्तु ''परितः सर्वतो धत्ते'' इति व्युत्पत्त्या परिधानशब्दस्य यौगिकतयोपरिवासस्यपि प्रयोगदृष्ट्या ''परिधत्ते'' इत्यस्य ''उपरि धत्ते'' इत्यर्थतयाऽबाधेनोपपत्तौ बाधायोगान्न ताभ्यामहतस्य निवृत्तिरिति समुच्चय इति ।

### महाव्रते रथन्तरादिसाम्नां श्लोकादिसामभिः समुच्चयाधिकरणम् (10-4-9)

At महाव्रत श्लोक and अनुश्लोक सामन् are prescribed. Here, the question is raised whether these set aside गायत्र etc., सामन् prescribed at प्रकृतियाग.

महाव्रते श्रूयते ''श्लोकेन पुरस्तात् सदसि स्तुवीत । अनुश्लोकेन पश्चात्'' इति । तत्र श्लोकानुश्लोकादिनामकैस्सामभिः प्राकृतानां गायत्रादिसाम्नां निवृत्तिरस्ति, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that श्लोक and अनुश्लोक are prescribed by the statement 'सदसिस्तुवति' hence the purpose of स्तवन is served by these. गायत्र etc., सामन्



are also meant for the same. Since this purpose is served by श्लोक and अनुश्लोक, गायत्र etc., सामन् need not be brought here by अतिदेश.

प्राकृतकार्यस्य प्रत्यक्षश्रुतश्लोकादिनैव सिद्धेस्तत्कार्यकराणां प्राकृतानां निवृत्तिरिति **प्राप्ते**

Siddhānta : points out that by the words पुरस्तात् and पश्चात्, सदसि देशविशिष्टस्तुति is enjoined here. Therefore, this is different from the प्राकृतस्तुति. Hence both the गायत्र etc., सामन् and श्लोक-अनुश्लोक have to be recited here.

**सिद्धान्तः,** प्राकृतस्तुत्यनुवादेन सामान्तरविधौ पुरस्तात्त्वरूपदेशस्यापि विधानाद्वाक्यभेदः स्यात् । अतो गुणद्वयविशिष्टा स्तुतिरेवादृष्टार्था विधीयत इति कार्यभेदान्न प्राकृतानां निवृत्तिरिति समुच्चय इति ।

### विकृति विशेषे प्राकृतसाम्नां कौत्सादिभिः बाधाधिकरणम् (10-4-10)

At a प्रकृतियाग, the statement 'कौत्सं भवति' 'काण्वं भवति' etc., occur. Here, the question is raised whether these कौत्स etc., सामन् set aside the गायत्र etc., सामन् prescribed at प्रकृति or not.

विकृतिविशेषे श्रूयते ''कौत्सं भवति'' ''काण्वं भवति'' ''वसिष्ठस्य जनित्रौ भवतः'' ''शुद्धाशुद्धीये भवतः'' ''क्रौञ्चानि भवन्ति'' इत्यादि । तत्र किं कौत्सादीनि सामानि प्राकृतगायत्रादिसामनिवर्तकानि, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that the सामन् stated here are not expressly stated as meant for स्तवन. Hence, these cannot set aside प्राकृतस्तावन गायत्र etc.,

साममात्रस्यैवात्र श्रवणेन प्राकृतसामकार्यस्तुत्यर्थत्वाश्रवणात्पूर्वत्रेवेहापि न प्राकृतनिवृत्तिरिति **प्राप्ते**

Siddhānta : points out that, though it is not expressly stated that कौत्स etc., meant for स्तवन the context of याग indicates that these are meant for स्तवन. Hence, प्राकृतसामन् गायत्र etc., need not be brought here for the same purpose.

**सिद्धान्तः,** कौत्सादीनां प्रत्यक्षतः स्तुत्यर्थत्वाश्रवणेऽपि प्रकरणात्क्रतुसामान्यसम्बन्धेऽवगते सामर्थ्यवशाद्गुणाभिधानशक्तऋगक्षराभिव्यक्तिद्वारा स्तुतिनिर्वर्तकत्वेन दृष्टार्थत्वे सम्भवति नादृष्टार्थता युक्तेति लिङ्गप्रकरणाभ्यां चोदकप्राप्तऋगक्षराभिव्यक्तिद्वारा स्तुतिनिर्वर्तकत्वमवगम्यत इति स्तुतिसाधनानां प्राकृतानां साम्नां निवृत्तिरिति ।

## कौत्सादिभिः व्यवस्थया एकादिबाधाधिकरणम् (10-4-11)

कौत्स etc., सामन् stated in earlier adhikaraṇa are in singular, duel and plural. These are stated to set aside the प्राकृतसामन् Here, the question is raised whether कौत्स etc., stated in singular sets aside all प्राकृतसामन्. or the सामन् stated in singular set asides one, the सामन् stated in duel sets aside two, the सामन् stated in plural sets aside many.

पूर्वोक्तान्येकवचनद्विवचनबहुवचनान्तशब्दनिर्दिष्टानि कौत्सादिसामान्येव विषयः । कौत्सादीनि प्राकृतसामनिवर्तकानीत्युक्तं पूर्वत्र । तानि किमेकैकमेव कौत्सदिकं प्राकृतसर्वनिवर्तकम्, उतैकवचनान्तशब्दनिर्दिष्टमेकस्य, द्विवचनान्तनिर्दिष्टं द्वयोर्बहुवचनान्तनिर्दिष्टं बहूनामिति **सन्देहे,**

Pūrvapakṣa : argues that कौत्स etc., सामन् are prescribed for स्तोत्र in general but not for the स्तोत्र of particular सामन्. Hence, the सामन् that is in singular will set aside all प्राकृतसामन्. Though the सामन् stated in singular is one it can set aside all by repetition.

कौत्सादीनामृगक्षराभिव्यक्तिद्वारा स्तुतिमात्रसाधनताऽवगता । न तु सामविशेषसाध्यस्तुतिसाधनता । अतः कार्यविशेषानिर्देशात्सर्वप्राकृतसामसाध्यस्तुत्यर्थमेव वैकृतसाम्नामुपदेश इत्यवगमादेकैकस्यैव प्राकृतसर्वसामनिर्वर्त्यस्तुतिरूपकार्यनिर्वर्तकत्वम् । एकेन साम्नाऽनेकप्राकृतसामकार्यनिर्वृत्त्ययोगेऽप्यभ्यासेन तदुपपत्तेरेकैकेनैव प्राकृतसर्वनिवृत्तिरिति **प्राप्तम् ।**

Siddhānta : points out that though these are not prescribed in place of particular प्राकृतसामन्, these are stated in certain order. This indicates that the सामन्. that is stated first in विकृति should set aside the सामन्. that is stated first in प्रकृति and so on.

Hence, the सामन् stated in singular sets aside one, the सामन् stated in duel sets aside two and the सामन् stated in plural sets aside many.

**सिद्धान्तस्तु,** यद्यपि न कार्यविशेषस्तथापि **आनुपूर्व्यवताम्** इत्युत्तरपादीयाद्यनये वक्ष्यमाणदिशा आद्यस्याद्यमिति न्यायेनैकवचनान्तनिर्दिष्टमेकस्य द्विवचनान्तोक्तं द्वयोर्बहुवचनान्तोक्तं बहूनामित्येतावताप्युपदेशस्यार्थवत्वोपपत्त्याऽभ्यासकल्पनायोगादेकैकेनैवैकैकस्य निवृत्तिः । न त्वेकैकेन सर्वस्येति ।



## विवृद्धाविवृद्धस्तोमकक्रतुपु यथा क्रमं प्राकृतसामबाधाबाधाधिकरणम् (10-4-12)

At the विकृतियाग known as अभिषेचनीय, increasing the स्तोम to twenty two is stated. By the statement नवराजसामानि nine, सामन् are prescribed.

Here, the question is raised whether the expressly state nine राजसामन् set aside the प्राकृतसामन् or प्राकृतसामन् also should be taken to complete the number twenty two.

''द्वात्रिंशत्पवमाना अभिषेचनीये'' इत्यभिषेचनीयाख्यविकृतियागे स्तोमविवृद्धिः श्रुता । ''नव राजसामानि'' इति राजाख्यसामानि च श्रुतानि । अत्र प्रत्यक्षश्रुतैः राजसामभिः प्राकृत साम्नां बाधः उत समुच्चयः इति **सन्देहे,**

Pūrvapakṣa : argues that it is stated in the first adhikarana of next section that when the स्तोम are to be increased these have to be brought from the सामवेद and the number should be completed. Hence, the nine राज सामन् prescribed in विकृति will replace nine सामन् of प्रकृति only.

अत्र **स्तोमविवृद्धौ प्राकृतानामभ्यासेने**त्युत्तरपादीयनये सामागमेनैव सङ्ख्यापूरणमिति वक्ष्यमाणत्वात् । तथा चानीतैः सामवेदगतसामभिरेव सङ्ख्यापूरणे सति । तैः प्राकृततावत्सङ्ख्याकसामनिवृत्तिरिति **प्राप्ते**

Siddhānta : points out that here, increased number can be managed by प्रत्यक्षश्रुत nine राजसामन् and others brought by अतिदेश from प्रकृतियाग. Hence there is no need to bring them from सामवेद.

**सिद्धान्तः** स्यादेवं, यदि सामागमेन सङ्ख्यापूरणमितीह वचनं स्यात् । न हि तदस्ति । किन्तु सङ्ख्यापूरणान्यथानुपपत्त्या सामागमकल्पना । अत्र च प्रत्यक्षश्रुतैर्वैकृतैरतिदिष्टैश्च समुच्चित्य सङ्ख्यापूरणं सम्भवतीत्यन्यथाऽनुपपत्त्यभावान्न सामागमकल्पनावकाशः ।

## पवमाने विवृद्धानिवृद्धस्तोमक्रतूनां सामावापोद्वापाधिकरणम् (10-4-13)

In the earlier two adhikaraṇas at the विकृतियाग of अविवृद्धस्तोमक setting aside of प्राकृतसामन् is stated. This is of the nature of उद्वाप i.e., taking out. At

विवृद्धस्तोमक कविकृति the use of राजसामन् together with प्राकृतसामन् is stated. This is of the nature of आवाप i.e., putting in. Here, the question is raised whether this उद्वाप and आवाप be made in respect of पवमानस्तोत्र hymns only or any hymn and any stotra.

प्रपूर्वाधिकरणे अविवृद्धस्तोमकविकृतिविशेषे कौत्सादिसामभिस्तावत्सङ्ख्याकप्राकृतसाम्नां स्तोत्रसाधनऋग्भ्यो निवृत्तिशब्दितोद्वाप उक्तः । पूर्वतनाधिकरणे तु विवृद्धिस्तोमकविकृतौ प्रत्यक्षश्रुतराजसामादीनां प्राकृतसामसमुच्चितानां स्तोत्रसाधन ऋक्षु आवाप उक्तः । तत्र यस्मिन् कस्मिंश्चित्स्तोत्रे यतः कुतश्चिदृग्भ्य उद्वापो यत्किञ्चिदृक्षु आवापः, उत पवमानस्तोत्रेष्वेव । तत्रापि गायत्रीबृहत्यनुष्टुप्च्छन्दस्कास्वेव ऋक्षु आवापोद्वापाविति सन्देहः ।

Pūrvapakṣa : argues that there is no mention of any particular स्तोत्र and particular hymn. The statement गायत्री, बृहती, अनुष्टुप् are central to the sacrifice and आवाप, उद्वाप be made from this only is अर्थवाद. It is not विधि. The mention of आवाप and उद्वाप with reference to पवमान स्तोत्र is not परिसङ्ख्याविधि. It does not exclude other स्तोत्र. Hence, आवाप and उद्वाप can be effected for any स्तोत्र and any hymn.

**पूर्वपक्षस्तु,** विशेषाश्रवणात् ''त्रीणि ह वै यज्ञस्योदराणि यद्गायत्री बृहत्यनुष्टुप् च । अत्र ह्येवावपन्ति । अत एवोद्वपन्ति'' इति वचनस्य ''हि'' शब्दोपबन्धवर्तमाननिर्देशाभ्यामर्थवादतयाऽविधित्वेना निर्णायकत्वात्, निर्णायकत्वे वा पवमानस्तोत्रविषयोद्वापादेर्देशविधिमात्रपरत्वेन त्रिदोषदुष्टस्तोत्रान्तरपरिसङ्ख्यापरत्वाभावाद्यत्किञ्चित्स्तोत्रे यत्र क्वचिदृक्ष्वावापः, तत उद्वाप इति ।

Siddhānta : points out that the statement that states that आवाप and उद्वाप be made from गायत्री, बृहती and अनुष्टुप् is विधि as it states something that is not known earlier. It is not अर्थवाद. More over एव in the statement अत्रैव आवपन्ति' अतएवोद्वपन्ति excludes others. Hence, अवाप and उद्वाप have to be made for the hymns of पवमान स्तोत्र only.

**सिद्धान्तस्तु,** 'हि'शब्दादियोगेऽप्यपूर्वार्थत्वात् ''त्रीणि'' इति वाक्यं विधायकमेव । नार्थवादः । अनन्यशेषत्वात् । न चोक्तदिशा पवमानविषययोरेवोद्वापावापयोर्देशनियमार्थमिदं वचनमिति शङ्क्यम् ।



''अत्र ह्येवावपन्ति'' ''अत एवोद्वपन्ति'' इत्येवकाराभ्यामन्यपरिवर्जनस्य स्पष्टं प्रतीतेः । अतः पवमानस्तोत्र एव गायत्रीबृहत्यनुष्टुप्छन्दस्कास्वेव ऋक्षु आवापः । तत एव प्राकृतादुद्वापः ।

**यागादौ विधिशब्देनैव देवताभिधानाधिकरणम् (10-4-14)**

At दर्शपूर्णमास by the statement 'आग्नेय अष्टकपालः' offering havis is prescribed. This offering is made by stating अग्नये इदं न मम. This निगम statement is not a vedic statement. This statement is made by यजमान. Here, the question is raised whether the word अग्नये could be replaced by any other word such as पावकाय which also conveys अग्नि.

दर्शपूर्णमासयोः ''आग्नेयोऽष्टाकपालः'' इति श्रुतम् । तत्र ''अग्नय इदं न मम'' इत्यादिचतुर्थ्यन्तोद्देशेन हविस्त्यागपरलौकिकपौरुषेयवाक्यरूपे निगमे किमग्निशब्द एव चतुर्थ्यन्ततया प्रयोज्यः, किं वाऽग्निशब्दपर्यायशुचिपावकजातवेदःप्रभृतिशब्देष्वन्यतमोऽपीति सन्देहे,

Pūrvapakṣa : argues that in the injunctive statement आग्नेयो अष्टकपालः the word आग्नेय conveys the देवतात्व of अग्नि. It is not concerned with अग्निशब्दस्वरूप. At the time of offering the अग्निदेवता can be brought to the mind by any other word that conveys अग्निदेवता. Hence, any other word may be used at the time offering.

आग्नेयशब्दो हि विधिवाक्यार्थज्ञानदशायामग्निशब्दार्थस्य देवतात्वं तद्धितेन प्रतिपादयति । तदाऽग्निशब्दस्य सन्निधानेऽपि न तदा शब्दस्वरूपाकाङ्क्षा । यदा हविस्त्यागदशायामग्निपदार्थस्य देवतात्वसम्पत्यर्थमग्निवाचकपदाकाङ्क्षा तदा विधिगतस्याग्निशब्दस्य व्यवहितत्वान्न बुद्धौ विपरिवृत्तिः । किन्तु देवतारूपोऽर्थ एव तदा बुद्धिस्थः स्ववाचकपदं स्मारयन्नविशेषात्सर्वानपि पर्यायान् स्मारयतीत्यन्यतमोऽपि प्रयोज्य

Siddhānta : The injunction 'आग्नेयो अष्टाकपालः' not only conveys देवतात्व of अग्नि but also conveys that at the time of offering देवता be address by the same name. Hence, other words cannot be used.

Further, the word अग्नि itself is देवता. There is no other form of देवता. Therefore, this cannot be replaced by other words.

**सिद्धान्तः**, ''आग्नेयोऽष्टाकपालः'' इति चोदना प्रथमतः श्रुत्याऽग्निशब्दस्य देवतात्वं प्रतिपादयन्ती प्रवर्तनारूपत्वात्सिद्धार्थकपदवत्तावन्मात्रेणापर्यवस्यन्ती हविस्त्यागदशोच्चार्यमाणचतुर्थ्यन्तपदाभिधेयत्वस्यैव देवतात्वेन हविस्त्यागदशायां तद्वाचकपदोच्चारणमप्यर्थाद्विधत्ते । तद्विधानदशायाञ्च विधिगतशब्दस्यैव सन्निहितत्वात्तदुच्चारणमेव विदध्यादिति न पर्यायशब्दप्रसक्तिः । **केचित्तु** आग्नेयपदेनाग्निशब्द एव देवतात्वेनोच्यते । न त्वग्निशब्दार्थः ।

### अतिदेश स्थलेपि वैधशब्देनैव देवताभिधानाधिकरणम् (10-4-15)

At the विकृतियाग enjoined by the injunction 'सौर्यं चरुं निर्वपेत्,' in the निगम statements 'अग्नेरहं मुज्झितमनूज्जेषम्' 'अग्नये जुष्टं निर्वपामि' etc. the word अग्नि has be substituted by way of ऊह. Here the question is raised whether it is to be substituted by the word सूर्य only stated in the statement of injunction or by any other synonym of it such as आदित्य.

''सौर्यं चरुं निर्वपेत्'' इत्यादिविकृतियागे चोदकप्राप्तेषु ''अग्नेरहमुज्जितिमनूज्जेषम्'' ''अग्नये जुष्टं निर्वपामि'' इत्यादिनिगमेष्वग्न्यादिपदस्थाने किं विध्युद्देशगतः सूर्यादिशब्द एव प्रयोज्यः, अथादित्यादितत्पर्यायशब्दोऽपीति **सन्देहे**,

Pūrvapakṣa : argues that so far as the निगम statement 'अग्नये जुष्टं निर्वपामि' the word अग्नि has to be substituted by the word सूर्य as per the ruling in earlier adhikaraṇa. But in the case of अग्नेरहमुज्झितिमनूज्जेषम् the word अग्नि can be substituted by any other सूर्यपर्याय word.

''अग्नेरहमुज्जितिम्'' इत्याद्येषु निगमेषु येन केनापि सूर्यपर्यायेणार्थप्रत्यायनेऽप्यविरोधान्न विधिगतसूर्यपदेनैवार्थप्रत्यायनमिति **प्राप्ते**

Siddhānta : points out that it is already stated that द्रव्य, देवता etc auxiliaries get connected with प्रधानापूर्वभावना. Hence, the word सूर्य gets connected with प्रधानभावना. Therefore if any other word is substituted it would amount to giving up what is stated in the injunction and taking some thing else. This is technically known as श्रुतहानि and अश्रुतकल्पना. Hence, even in the निगम 'अग्नेरहमुज्झितिं etc. the word अग्नि be substituted by the word सूर्य only.



सौर्यमिति द्रव्यदेवतासम्बन्धेनानुमितयागकरणिकायां भावनायां विधिगतसूर्यशब्द एव देवतारूपाङ्गार्पकतयाऽन्वेतीति तदन्यतत्पर्यायशब्दस्य ''अग्नेरहमुज्जितिं'' इत्यादिनिगमेषु प्रयोगे भावनाश्रुतशब्दत्यागोऽश्रुतशब्दान्तरकल्पना च स्यादित्यपौरुषेयनिगमेष्वपि विधिगत एव शब्दः प्रयोज्यो विकृतिष्विति ।

### आधाने अग्नेः सगुणेनाभिधानाधिकरणम् (10-4-16)

In पवमानेष्टि in the injunctions 'अग्नये पवमानाय' अग्नये पावकाय' 'अग्नये शुचये' many words occur with reference to अग्नि. Here, the question is raised whether in the निगम statements the word अग्नि word only be used or both अग्नये पवमानाय etc. two words.

पूर्वत्र सामान्यतो निगमेषु वैध एव शब्दः प्रयोज्य इत्युक्तम् । यत्र पवमानेष्टिषु ''अग्नये पवमानाय'' ''अग्नये पावकाय'' ''अग्नये शुचये'' इत्यनेके शब्दा विधौ श्रुतास्तत्र किं निगमेष्वेक एवाग्निशब्दः प्रयोज्यः, उतोभौ शब्दावपीति **सन्देहे**,

Pūrvapakṣa : argues that since one word अग्नि is sufficient to convey देवता. The other words need not be used in the निगम statements.

एकेनापि शब्देन देवतानिर्देशसिद्धेर्नेतरस्य कृत्यम् । तत्रैव चोदकानुग्रहाच्चोदकप्राप्ताग्निशब्द एव मुख्यत्वान्निगमेषूच्चार्य इति प्राप्ते

Siddhānta : points out that the words that occur in the injunction constitute देवता. Hence, both अग्नये पवमान are देवता. Therefore, निगमवाक्य be put as 'अग्नये पवमानाय निर्वपामि' etc only. Otherwise the mention of words in the injunction will become purposeless.

**सिद्धान्तः**, विधिगतशब्देनोच्चार्यमाणेनार्थप्रत्यये जायमानेऽपि न तस्य शब्दस्यार्थप्रत्यायनार्थत्वम् । एकेनैव तत्सिद्धेरितरोच्चारणानर्थक्यं स्यात् । किन्तु विधिगतशब्द एव देवतारूपतया भावनाङ्गत्वेन विधेय इत्युक्तत्वेन सर्वोपि विधिगतः शब्दः ''अग्नये पवमानाय निर्वपामि'' ''अग्निं पवमानमावह'' ''अग्नेः पवमानस्योज्जितिमनूज्जेषम्'' इत्येवंरूपेण प्रयोज्य इति ।

### आधानाज्ययोः अग्नेः निर्गुणेन अभिधानाधिकरणम् (10-4-17)

At पवमानेष्टि there are two आज्यभागs viz. आग्नेय and सौम्य. With reference to these it is stated that 'बुधन्वान् आग्नेयः कार्यः' 'पावकवान् सौम्यः कार्यः.' Here, the question is raised whether अग्नि and सोम who are आज्यभाग देवता should be stated in the निगम वाक्य with the adjectives बुधन्वत्व and पावकत्व or without it.

पवमानेष्टिष्वेवाग्नेयसौम्याख्यौ द्वावाज्यभागौ प्रकृत्य श्रूयते ''बुधन्वानाग्नेयः कार्यः। पावकवान् सौम्यः कार्यः'' इति। तत्राऽज्यभागदेवतयोरग्नीषोमयोर्यथाक्रमं बुधन्वत्वपावकत्वविशेषणयुक्ततया निगमेषूच्चारणं ''बुधन्वन्तमग्निमावह। पावकवन्तं सोममावह'' इति, उत केवलयोरेवोच्चारणमिति **सन्देहे,**

Pūrvapakṣa : argues that the statement 'बुधन्वान् आग्नेय' means आग्नेय आज्यभाग be observed using the word बुधन्वन्. 'पावकवान् सौम्यः कार्यः' means सौम्य आज्यभाग be observed using the word पावक. This use of these words will be through the देवताs qualified by these attributes. This results in the enjoining of these attributes for the respective देवता. Therefore, the निगमवाक्यs be addressed with these adjectives to respective देवताs.

पवमानेष्टिप्रधानयागदेवताया इवाज्यभागदेवतयोरपि बुधन्वत्वादिगुणयुक्तत्वेनैव निगमेष्वभिधानं कार्यमिति **प्राप्तम्।**

Siddhānta : points out that though the expressions आग्नेय and सौम्य refer to आज्यभाग. There is no compulsion that बुधन्वत्व and पावकत्व be stated through देवता only. These can be stated through the मन्त्र also.

Strictly speaking the words आग्नेय and सौम्य do not refer to आज्यभागs. These refer to मन्त्रs only. Consequently these convey that the मन्त्र with the word बुधन्वान् and पावक be recited at आग्नेय and सौम्य.

**सिद्धान्तस्तु,** आग्नेयः सौम्य इत्याभ्यामाज्यभागरूपयागनिर्देशेऽपि देवताद्वारेणैव तच्छब्दयुक्तत्वं निर्वाह्यमित्यत्र न नियामकमस्ति। मन्त्रद्वारेणापि तच्छब्दयुक्तत्वसम्भवात्।



**वस्तुतस्तु** ''आग्नेयः सौम्यः'' इति च नाज्यभागनिर्देशः। किन्तु प्राकरणिकमन्त्रनिर्देशः। अग्निप्रकाशकतयाऽग्निसम्बन्धित्वेनाग्नेय इत्युक्तो यो मन्त्रः स बुधन्वान् कार्यः। सौम्यश्च मन्त्रः पावकशब्दयुक्तः कार्य इति मन्त्रविशेषणमेव बुधन्वत्वादिकं। न देवताविशेषणम्।

### गवानुबन्ध्यपृषदाज्ययोः विधिशब्दाभ्यामेवोस्रावनस्पति शब्दाभ्यामभिधानाधिकरणम् (10-4-18)

At ज्योतिष्टोम the statement गौरनुबन्ध्यः occurs. With reference to this the निगम 'उस्रायाः वपाया अनुब्रूहि' is prescribed. Here, the question is raised whether the गो could be referred by any other word than the word mentioned in the injunction or by the word उस्रा only.

ज्योतिष्टोमे श्रूयते ''गौरनुबन्ध्यः'' इति। तत्र ''उस्राया वपाया मेदसोऽनुब्रूहि'' इति मन्त्ररूपो निगम आम्नातः। तत्र निगमे विध्युद्देशगतगोशब्दादन्येन तत्पर्यायेण येन केनापि शब्देन गोरभिधानम्, उतोस्रापदेनैवेति **सन्देहः।**

Pūrvapakṣa : argues that in the प्रकृतियाग viz. अग्नीषोमीयपशु. The word पशु occurs in the injunction. However in the निगम a different word viz छाग is given. The विकृति has to be observed as in प्रकृति. Therefore in the विकृति viz. अनुबन्ध्य though the word occurs in the injunction, the same need not be used in the निगम. But any other synonym of the word in the injunction may be used.

Similarly in the निगम of वनस्पतियाग which is the विकृति of स्विष्टकृत् याग any word that is the synonym of the word वनस्पति which occurs in the injuction be used.

**पूर्वपक्षस्तु,** प्रकृतावग्नीषोमीयपशौ विधिवाक्ये पशुपदश्रवणेऽपि ''छागस्य वपाया मेदसः'' इति निगमे शब्दान्तरश्रवणाद्यथाप्रकृति विकृतावपि कर्तव्यत्वात्तद्विकृतावनुबन्ध्येऽपि विधिवाक्ये गोपदश्रवणेऽपि न तस्यैव निगमवचनम्। किन्तु पूर्वत्रेव यथाप्रकृति प्राप्तचोदकानुग्रहाय वैधपदादन्यस्य तत्पर्यायस्य कस्यापीति। उस्रापदन्तु पाठमात्रम्। न तद्विवक्षितमिति। तथा अग्नीषोमीयपशौ स्विष्टकृद्यागविकृतित्वेन ''पृषदाज्येन वनस्पतिं यजति'' इति श्रुतवनस्पतियागीयनिगमेऽपि वैधवनस्पतिशब्दपर्यायो यः कश्चिदेव वाच्यः।

Siddhānta : points out that at प्रकृति since different words are stated in विधि and निगम the distinction is implied. That which is stated by implication in प्रकृति will not comedown to विकृति. Hence, the word उस्रा expressly stated in विकृति does not permit any other word. Hence, the word उस्रा only be used in the निगम of अनुबन्ध्य.

In the case of वनस्पतियाग the word वनस्पति refers to देवता. Hence, the same word be used in निगम.

**सिद्धान्तस्तु,** प्रकृतौ विधिनिगमयोराम्नानवशेनार्थदिव भेदप्राप्तेः प्रकृतावार्थिकस्य विकृतौ चोदकतोऽप्रापणात् साक्षाच्छ्रुतोस्रापदत्यागे हेत्वभावाद्विधौ गोपदस्य द्रव्यपरत्वेन शब्दपरत्वा-भावादुस्रापदेनैवानूबन्ध्यनिगमोक्तिः ।

**अवभृथे अग्नीवरुणयोः स्विष्टकृत्शब्देन अभिधानाधिकरणम्** (10-4-19)

At अवभृथेष्टि the statement अग्नीवरुणौ स्विष्टकृतौ यजति occurs. Here the question is raised whether in the निगमवाक्य 'अग्नीवरुणौ आवह' only be stated excluding स्विष्टकृतौ or that also be included in the निगम.

''वारुणेनैककपालेनावभृथं यन्ति'' इति श्रुतावभृथेष्टौ श्रूयते ''अग्नीवरुणौ स्विष्टकृतौ यजति'' इति । तत्र निगमेषु स्विष्टकृत्पदं हित्वा ''अग्नीवरुणावावह'' इत्येव निगमोच्चरणम्, उत ''अग्नीवरुणौ स्विष्टकृतावावह'' इति स्विष्टकृच्छब्दयुतत्वेनेति **सन्देहे,**

Pūrvapakṣa : argues that the word स्विष्टकृत् means स्विष्टकृत् कार्य. अग्नीवरुणौ are enjoined for this purpose. Hence, अग्नीवरुणौ only be addressed by the निगमवाक्य.

स्विष्टकृतौ स्विष्टकृत्कार्यार्थाविति लक्षितस्विष्टकृत्कार्योद्देशेन केवलयोरेवाग्नीवरुणयोर्देवतात्वेन विधानात्पूर्वत्र वनस्पतिशब्दस्येव निगमेषु केवलयोरग्नीवरुणयोरेवाभिधानमिति **प्राप्तम् ।**

Siddhānta : points out that the word स्विष्टकृतौ means स्विष्टकृद्गुणकौ and it is an adjective of अग्नीवरुणौ. Therefore in the निगमवाक्य this word has to be included as an adjective of अग्नीवरुणौ.



स्विष्टकृद्गुणकावग्नीवरुणौ यष्टव्याविति मुख्यवृत्तिरेव स्विष्टकृच्छब्दो न कार्यलक्षणार्थ इति सगुणयोरेव देवतात्वात्सगुणमभिधानमिति ।

**अग्नीषोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणेन अग्नीशब्देन अग्नेरभिधानाधिकरणम्** (10-4-20)

At अग्नीषोमीयपशु, पशुपरोडाश is prescribed. Here, at स्विष्टकृत् याग in the statement 'अग्निं यजति' the adjective स्विष्टकृत् is not found. Here, the question is raised whether this should be deleted in all निगमवाक्यs or not.

स्विष्टकृत्वरूपगुणलोपः श्रूयते ''अग्निं यजति'' इति । तत्रायं गुणलोपः प्रधानमात्रे, किं वा सर्वनिगमेष्वपीति **सन्देहे,**

Pūrvapakṣa : argues that since it is deleted in प्रधानवाक्य it should be deleted only in the निगमवाक्य 'अग्नये इदं न मम' but not in other निगमवाक्यs.

''अग्निं यजति'' इति प्रधानमात्र एव गुणलोपश्रवणात् ''अग्नय इदं, न मम'' इति निगम एव गुणलोपः । नान्यत्र । ''अग्नये स्विष्टकृते प्रेष्य'' इत्येवं प्रकृतिवदेव स्विष्टकृत्वगुणकमेवान्य-निगमेष्वग्नेरभिधानमिति **प्राप्तम् ।**

Siddhānta : points out that by the statement 'अग्निं यजति' अग्नि alone is enjoined but not the adjective स्विष्टकृत्. Hence, the adjective should be deleted in all निगमवाक्य.

**सिद्धान्तस्तु,** यथाप्रकृति ''अग्निं स्विष्टकृतं यजति'' इति विहितां यागकरणिकामेव भावनामिह यजतीत्यनूद्याग्निमात्रविधानात् । स्विष्टकृत्त्वगुणहीनस्याग्नेर्भावनाशब्दितप्रयोगान्वयात्प्रयोगान्तर्गतेषु सर्वनिगमेष्वपि निर्गुणाग्नेरेवाभिधानमिति ।

**अनुयाजेषु स्विष्टकृत् यागस्य संस्कारकर्मताधिकरणम्** (10-4-21)

At दर्शपूर्णमास three अनुयाजs are prescribed. For the third स्विष्टकृत् is देवता. Here, the question is raised whether third अनुयाज is आरादुपकारक to दर्शपूर्णमास like other two अनुयाजा or for सिष्टकृत् देवता प्रकाशनरूप संस्कार.

दर्शपूर्णमासयोस्त्रयोऽनूयाजाः । तत्र तृतीयः ''स्विष्टकृतमग्निं यजति'' इति स्विष्टकृद्दैवत्यः श्रुतः ।

स किं तृतीयोऽनूयाजः इतरानूयाजद्वयवद्दर्शपूर्णमासयोरारादुपकारकः, उत ''उत्तरार्धात्सकृत्स्विष्टकृते समवद्यति'' इति स्विष्टकृद्यागीयस्विष्टकृद्रूपदेवतायाः प्रकाशनरूपसंस्कारार्थ इति सन्देहे,

Pūrvapakṣa : argues that both अनुयाजा and स्विष्टकृत् याग are the अङ्ग्स of दर्शपूर्णमास. Hence, these cannot be संस्कार्य and संस्कारक. Hence, स्विष्टकृत्याग is आरादुपकारक for दर्शपूर्णमास.

अनूयाजस्विष्टकृद्यागयोर्द्वयोरपि दर्शशेषत्वात् **गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्** इति न्यायेन न मिथः संस्कार्यसंस्कारकत्वरूपाङ्गाङ्गिभावः । स्विष्टकृद्देवताकेनानूयाजयागेनापूर्वं भावयेदित्यर्थोक्तौ तु श्रुत्यर्थविधिरित्यारादुपकारक एव तृतीयोऽप्यनूयाज इति **प्राप्ते**

Siddhānta : points out that by प्रकरण it has to be taken as आरादुपकारक. If it is taken देवताप्रकाशनरूपसंस्कार, then, it will be so by वाक्यप्रमाण. The वाक्यप्रमाण is superior to प्रकारणप्रमाण. Hence, it has to be taken as संस्कार only.

Further, if it is taken as संस्कार it will be दृष्टार्थ when दृष्टार्थत्व is possible अदृष्टार्थत्व should not be resorted.

**सिद्धान्तः,** दृष्टे सम्भवत्यदृष्टकल्पनायोगाद्दृष्टप्रयोजनस्यान्यस्याभावात्स्विष्टकृद्यागीयदेवताप्रकाशशब्दितसंस्कारार्थतया दृष्टप्रयोजनार्थत्वं तृतीयानुयाजस्य । किञ्चारादुपकारकत्वे प्रकरणेन विनियोगः । संस्कारकतया सन्निपातित्वे तु वाक्येन विनियोगः । प्रकरणाच्च वाक्यं बलीय इति संस्कारार्थोऽनुयाजोऽन्त्यप्रयाजवत् ।

## दर्शपूर्णमासयोः याज्या पुरोनुवाक्ययोः संस्कारकर्मताधिकरणम् (10-4-22)

At दर्शपूर्णमास, याज्या and पुरोनुवाक्या are prescribed. Here, the question is raised whether the recitation of याज्या is अर्थकर्म or अर्थप्रकाशनरूप संस्कारकर्म.

दर्शपार्णमासयोः ''तिष्ठन् याज्यामन्वाह । आसीनः पुरोनुवाक्यामन्वाह'' इति श्रूयते । तत्र याज्यानुवाक्योच्चारणमदृष्टार्थं सदर्थकर्म, उतार्थप्रकाशनरूप संस्कारकर्मेति सन्देहे,

Pūrvapakṣa : argues that if it is taken as अर्थप्रकाशनार्थ, then, its recitation could be made by सामर्थ्यरूपलिङ्ग and the अनुवचन as 'अन्वाह' will be superfluous. Hence, it has to be taken as अदृष्टार्थ and अर्थकर्म.



अर्थप्रकाशनार्थत्वेऽर्थ प्रकाशनसामर्थ्यरूपलिङ्गादेवोच्चारण सम्भवे ''अन्वाह'' इत्यनुवचनविधानमनर्थकम् । एवञ्च पूर्वत्र दृष्टार्थत्वेऽपीह ''याज्यामन्वाह'' इति वचनानर्थक्याददृष्टार्थतैवेति **प्राप्तम् ।**

Siddhānta : points out that statement 'तिष्ठन् याज्यामन्वाह does not enjoin अनुवचन of याज्या as its recitation is conveyed by सामर्थ्यरूपलिङ्ग but the auxiliary of तिष्ठन् is enjoined. Hence, याज्यावाक्योच्चारण is अदृष्टार्थ.

**सिद्धान्तस्तु,** स्यादेवम् । यदि ''अन्वाह'' इत्येतद्याज्यादेरनुवचनविधायकं स्यात् । न चैवम् । सामर्थ्यरूपलिङ्गादेवोच्चारणस्य प्राप्त्या ''अन्वाह'' इत्यनूद्य तिष्ठन्नित्यासीन इति च गुणविधानेन वचनस्यार्थवत्वाददृष्टार्थं याज्यापुरोनुवाक्योच्चारणमिति ।

## मनोतायामूहाभावाधिकरणम् (10-4-23)

At अग्नीषोमीयपशु the recitation of the मन्त्र'त्वं हि अग्ने मनोता' is prescribed. Here, the question is raised whether at the विकृति of वायुदैवत्यपशु, the word अग्ने be substituted by वायो by way of ऊह or it has to be recited as it is.

अग्नीषोमीयपशौ ''त्वं ह्यग्ने प्रथमो मनोता'' इति मन्त्रः श्रुतः । स किं विकृतिषु वायव्यादिपशुषूहितव्यः, ''त्वं हि वायो प्रथमो मनोता'' इति, किं वाऽनूहेनैव प्रयोज्य इति **सन्देहे,**

Pūrvapakṣa : argues that if this मन्त्र is taken as related to mere अग्निदेवता it will not be able for अग्नीषोमीय प्रकाशन. Then the उत्कर्ष of this मन्त्र will be required to be made. However, by the statement यद्यप्यन्यदैवत्यः पशुः आग्नेय्यैव मनोता कार्या the उत्कर्ष of this मन्त्र at विकृति is made unnecessary. Consequently this मन्त्र is able for अग्नीषोम प्रकाशन by taking the word अग्नि in the sense of अग्नीषोम by लक्षणा. Hence, in विकृति it should be recited without substitutin of the word अग्नि by वायु by way of ऊह.

अस्य मन्त्रस्य केवलाग्निदेवताकत्वेन पश्वीयाग्नीषोमदेवताप्रकाशने सामर्थ्याभावेन विकृतिषूत्कर्षप्राप्तौ ''यद्यप्यन्यदैवत्यः पशुराग्नेय्येव मनोता कार्या'' इति वचने ''यद्यपि द्विदैवत्यः पशुस्तथाप्येकाग्निदैवत्यैव मनोता कार्या'' इत्यर्थप्रतीत्या मनोतामन्त्रस्योत्कर्षवारणेन प्रकृतावेव पशाववस्थाना-

वगमादग्निद्वारेण लक्षणया देवताभूताग्नीषोमप्रकाशने शक्ततया पूर्वत्र याज्यादिवत्प्रकृतौ दृष्टार्थत्वाद्विकृतावूहेन प्रयोज्य इति **प्राप्ते**

Siddhānta : points out that if this मन्त्र conveys अग्नि as primary meaning and सोम by लक्षणा, then the statement यद्यप्यन्यदैवत्यः will have no purpose to serve at प्रकृति. Consequently this statement prevents the ऊह at विकृति. Hence, the word अग्नि in the मन्त्र अग्ने प्रथमो मिनोता need not be substituted by वायो.

**सिद्धान्तः**, यद्ययं मन्त्रोऽग्निं श्रुत्या प्रतिपादयंस्तत्सम्बन्धिनं सोममपि लक्षणया प्रतिपादयितुमीष्टे तर्हि ''यद्यप्यन्यदैवत्य'' इति वचनापेक्षां विनैव लिङ्गप्रकरणाभ्यां प्रकृतावेव दैक्षपशाववतिष्ठत इति प्रकृतावनुपयुक्तं यद्यपीतिवचनं विकृतिष्वेव यथादैवतमूहप्राप्तौ तन्निवारकं स्यादिति वायव्यादिष्वनूह इति।

**कण्वरथन्तरस्य स्वयोनौ गानाधिकरणम्** (10-4-24)

At वैश्यस्तोम the statement 'कण्वरथन्तरं पृष्ठं भवति' occurs. The कण्वरथन्तरस्तोम is a विकार of बृहत् साम and रथन्तरसाम optionally prescribed at ज्योतिष्टोम. Here, the question is raised whether this कण्वरथन्तर be applied for the hymns for which रथन्तरसाम was applied in प्रकृति or for the hymns for which बृहत् साम was applied or its application should be restricted to रथन्तरसाम hymns only or it should be applied for the hymns which are meant for its own application.

''वैश्यो वैश्यस्तोमेन यजेत'' इति श्रुतवैश्यस्तोमे ''कण्वरथन्तरं पृष्ठं भवति'' इति श्रुतम्। पृष्ठस्तोत्रसाधनकण्वरथन्तराख्यं साम ज्योतिष्टोमगतवैकल्पिकबृहद्रथन्तरसाम्नोर्द्वयोरपि विकार इत्युक्तं, एवञ्च कण्वरथन्तरसाम किं ''अभि त्वा'' इत्यादिरथन्तरयोनौ, 'त्वामिद्धि हवामहे' इति बृहद्योनौ वा गेयमित्यनियमः, उत रथन्तरयोनावेवेति नियमः, किंवा स्वयोनावेवेति **सन्देहे**,

Pūrvapakṣa : puts the Pūrvapakṣa in two ways i) कण्वरथन्तरसाम be applied to ऋक्s of one of the two viz. बृहत्साम or रथन्तरसाम.

ii) कण्वरथन्तरसाम be applied to ऋक्s of रथन्तरसाम only.

**पूर्वपक्षस्तु** कण्वरथन्तरशब्देन गीतिमात्रमेवोच्यते। न ऋगपि। तथा च सा गीतिश्चोदकप्राप्तप्राकृतबृहद्रथन्तररूपगीतिकार्ये वर्तते। न तदाधारऋचः कार्ये। सामर्थ्याभावात्। अतः प्राकृतेभ्यो



ऋग्भ्यः प्राकृत्योर्गीत्योरेव निवर्तिका। न तु ऋचोऽपीति तयोरन्यतरत्र कण्वरथन्तरसामगानम्। **कण्वस्य** रथन्तरं कण्वरथन्तरमिति व्युत्पत्त्या कण्वोच्चारिते सामविशेषे प्रयुज्यमानो रथन्तरशब्दस्तद्धर्मातिदेशार्थ इति रथन्तरसामाधारभूतायां ''अभि त्वा'' इत्यस्यामेव ऋचि गानमिति **द्वितीयः**।

Siddhānta : points out that in उत्तरग्रन्थ the hymns for which कण्वरथन्तरसाम has to be applied are stated. Hence, this साम is not to be applied for the hymns for which रथन्तरसाम is applied in प्रकृति.

**सिद्धान्तस्तु**, कण्वरथन्तरशब्दो योगवृत्तौ मानाभावेन सामविशेषे रूढ इति न रथन्तरयोनौ तद्गानस्य प्राप्तिः। उत्तराग्रन्थे वैश्यस्तोमप्रकरणे कण्वरथन्तराख्यं साम विहितम्। तत्प्रकरण एवोत्तराग्रन्थे तद्योनिरप्याम्नाता। इत्युत्तराग्रन्थाम्नानात्सिद्धं स्वयोनावेव ऋचि गानमिति।

**कण्वरथन्तरस्य स्वयोन्युत्तरयोः गानाधिकरणम्** (10-4-25)

In the earlier adhikaraṇa it is stated that कण्वरथन्तर साम is applied for the ऋक् stated in योनिग्रन्थ for itself. However, there is a statement that 'एकं सामतृचे क्रियते स्तोत्रियम्' 'यद्योन्यां तदुत्तरयोः गायति.' Each साम should be applied to three ऋक् viz one stated in योनिग्रन्थ and two from उत्तराग्रन्थ.

Here, the question is raised whether the two to be selected from उत्तराग्रन्थ be selected from its own उत्तराग्रन्थ hymns or those of रथन्तर or those of बृहत्.

पूर्वत्र कण्वरथन्तरस्य स्वयोनावेवाम्नानसिद्धायां गानमिति स्थिते, ''एकं साम त्यृचे क्रियते स्तोत्रीयम्। यद्योन्यां तदुत्तरयोर्गायति'' इति वचनात्कण्वरथन्तरं स्वयोनिऋक्त उत्तरयो ऋचोरपि गातव्यम्। तत्र किं बृहद्योन्युत्तरयो रथन्तरयोन्युत्तरयोर्वेत्यनियमः, उत स्वयोन्युत्तरयोरेवेति **सन्देहे**,

Pūrvapakṣa : argues that so for as the first hymns is concerned it has to be selected from its own योनिग्रन्थ but in the case of the other two to be selected from उत्तराग्रन्थ these may be selected from रथन्तर and बृहत् of उत्तराग्रन्थ.

कण्वरथन्तरस्याऽम्नानसिद्धपरित्यागभियोत्तराग्रन्थाम्नातस्वयोनावेव गानेऽप्युत्तरयोर्गाने तु स्वयोनिऋक्परित्यागेन ऋगन्तरसञ्चाराविशेषेण चोदकाबाधाय प्राकृतबृहदादियोन्युत्तरयोर्गानमिति **प्राप्तम्**।

Siddhānta : points out that since, कण्वरथन्तर hymns are also available in उत्तराग्रन्थ there is no reason to go in for others.

सिद्धान्तस्तु, कण्वरथन्तरयोन्युत्तरयोरपि ऋचोरुत्तराग्रन्थे पाठतः सिद्धत्वात्तत्परित्यागायोगात्स्वयोन्युत्तरयोरेव गानमिति ।

## अग्निष्टुति स्तुतशस्त्रयोः अविकाराधिकरणम् (10-4-26)

At अग्निष्टुत् याग by the statement 'आग्नेयाः ग्रहाः भवन्ति.' A different देवता from प्रकृतिदेवता is prescribed. Here स्तोत्रs of different देवता also are to be taken from प्रकृति. With reference to these the question is raised whether the names of these देवताs be substituted by अग्नि or not.

अग्निष्टुन्नामकयागे ''आग्नेया ग्रहा भवन्ति'' इति ग्रहाणां प्रकृतितोऽन्यदेवताकत्वं श्रूयते । तत्र प्रकृतितो नानादैवत्यानि स्तोत्रशस्त्राणि चोदकतः प्राप्तानि । तानि किं यथादैवतमग्निपदप्रक्षेपेणोहितव्यानि, उत नेति सन्देहे,

Pūrvapakṣa : argues the स्तोत्र and शस्त्र are meant for देवतास्मरणरूपसंस्कार. Hence, the names of प्राकृतदेवताs be substituted by अग्नि in विकृति.

प्राकृतानि स्तोत्रशस्त्राणि याज्यावद्देवतास्मरणरूपसंस्कारार्थानीति यथादैवतमग्निष्टुत्यूहितव्यानि स्युः । तथा च पूर्वत्र प्राकृत्योरुत्तरयो ऋचोर्बाध इवात्रापि चोदकप्राप्तस्तोत्रादौ देवतावाचिपदबाध इति प्राप्ते

Siddhānta : points out that the words स्तौति, 'शंसति' indicate that these स्तोत्रs are not for देवताप्रकाशन. Hence, these have to be taken for गुणिनिष्ठगुणाभिधान. This means these are आरादुपकारक and अदृष्टार्थ. Hence, the name of प्राकृतदेवता need not be substituted by देवता of विकृति.

सिद्धान्तः, देवताप्रकाशनार्थत्वे ''स्तौति'' ''शंसति'' इति श्रुतिविरोधात्तदविरोधाय गुणिनिष्ठगुणाभिधानार्थानीत्यारादुपकारकतयाऽदृष्टार्थानीति द्वितीयाद्यपादे स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् इत्यत्रोक्तत्वादनूहेनैव प्रयोज्यानीति ।

## चातुर्मास्येषु आज्यशब्दस्य अविकारेण आवाहनाधिकरणम् (10-4-27)

At चातुर्मास्य the statement 'पृषदाज्येन यजति' occurs. The word पृषदाज्य means



आज्य mixed with दधि. Here, the निगमs containing the word आज्या are to be taken from प्रकृति. In this connection the question is raised whether the word आज्यपान् be substituted by आज्यदधिपान् or by दधिपान् or पृषदाज्यपान् or these निगमs be stated without any substitution.

चातुर्मास्येषु ''पृषदाज्येनानूयाजान् यजति'' इति श्रूयते । पृषदाज्यं नाम दधिमिश्रितमाज्यम् । तत्र प्रकृतितश्चोदकेन देवानाज्यपानावह, स्वाहा इत्यादयोऽनूयाजदेवतावाचकाज्यपशब्दयुक्ता निगमाः प्राप्ताः । तत्र निगमेषु किमाज्यदधिपानित्यूहः कार्यः, किंवा दधिपानिति, उत पृषदाज्यपानिति, यद्वाऽनूह एवेति चतुर्धा संदेहः ।

Pūrvapakṣa : puts the Pūrvapakṣa in three ways.

i) Since, both दधि and आज्य are हविस् the expression आज्यपान् in प्रकृति be substituted by दध्याज्यपान्.

ii) Here, उपस्तरण, अभिघारण etc संस्कार, are prescribed for दधि only. The आज्य is only for उपस्तरण. In view of this दधि is हविस् here. Therefore, निगम has to be stated दधिपानावह.

iii) पृषदाज्य is a distinct हविर्द्रव्य. Therefore neither दधि is हविस् nor आज्य is हविस्. Therefore, the expression be stated in the निगमवाक्य प्रषदाज्यपानावह.

दध्याज्ययोर्द्वयोरपि हविष्ट्वेन सङ्कीर्तनेनोभयं हविरिति पूर्वत्र स्तुतशस्त्रयोरग्निपदानूहेऽपीह दध्याज्यपानित्यूह इत्याद्यः ।

यागीयद्रव्यसंस्कारभूतोपस्तरणाभिघारणसंस्कार्यत्वेन दध्नः श्रवणाद्दध्येव हविः। दध्न एव हविष्ट्वात् ''दधिपानावह'' इत्येवोहः कार्य इति द्वितीयः ।

पृषदाज्यस्य द्रव्यान्तरत्वान्नोभयं हविः । नापि दध्येव । आज्यमेव वा । अतः पृषदाज्यपानित्येवोहः कार्य इति तृतीयः ।

Siddhānta : points out that in the statement पृषदाज्येन यजति. पृषत्व has to be taken as an adjective of आज्य. The word पृषत् means चित्र as in the instance of पृषन्मृगः. Here also दधि is mixed with आज्य to make it चित्र. Hence, हविस्, is आज्य only. There is no need of any substitution.

सिद्धान्तस्तु, ''पृषदाज्यं गृह्णाति'' इति वाक्यशेषे हि तुल्यवच्छ्रवणं न यागे। तत्र ''पृषदाज्ये-नानूयाजान् यजति'' इति पृषत्त्वगुणकस्याज्यस्यैव श्रुत्या विनियोगात्। दध्नो ग्रहणन्त्वाज्यस्य पृषत्त्वार्थम्। न हविष्ट्वेन। अतो नोभयं हविः। किन्त्वाज्यमेवेत्याज्यपानित्येवाविकारेण प्रयोग इति।

इति दशमाध्याये चतुर्थः पादः

## दशमाध्यायस्य पञ्चमः पादः

### एकादशग्रहणे प्राथमिकानामेव ग्रहणाधिकरणम् (10-5-1)

In this section, the question when some of प्राकृतधर्मs are to be brought to विकृति which of them are to be brought and which are not is discussed.

i) The statement 'आग्नेयमष्टाकपालं निर्वपेत्' prescribes अष्टकपाल at प्रकृति while the statements 'द्यावापृथिव्यामेककपालम्' आश्विनं द्विकपालम्' etc., prescribe less number.

ii) The statement द्वादशाहेन प्रजाकामं याजयेत् prescribes twelve days at प्रकृति while statements 'द्विरात्रेण यजेत' 'त्रिरात्रेण यजेत' etc., prescribe lessor number at विकृति.

iii) The statement 'पञ्चदशसामधेनीरनुब्रूयात्' prescribes fifteen समधेनी at प्रकृति while the statements 'एकां सामधेनीमन्वाह तिस्रः सामधेनीरन्वाह prescribe lessor number in विकृति.

Here the question is raised whether those who are to be observed at विकृति should be selected in the order commencing from the first or any of them could be selected.

पूर्वपादे प्रकृत्यपेक्षयाऽधिकधर्मोपदेशेऽभ्युच्चयश्चिन्तितः। अत्र पादे तत्प्रसङ्गात्प्राकृतधर्मैक-देशोपदेशे कस्य बाधः, कस्य नेति चिन्त्यत इति पूर्वानन्तर्यमस्य ध्येयम्। ''आग्नेयमष्टाकपालं निर्वपेत्'' इति प्रकृतावष्टकपालाः श्रुताः। विकृतिषु तु ''द्यावापृथिव्यमेककपालम्'' ''आश्विनं द्विकपालम्'' ''वैष्णवं त्रिकपालम्'' इत्येकादिकपालाः। तथा ''द्वादशाहेन प्रजाकामं याजयेत्''



इत्युक्तद्वादशाहप्रकृतिकाः ''द्विरात्रेण यजेत'' ''त्रिरात्रेण यजेत'' ''चतूरात्रेण यजेत'' इत्यादयो विकृतियागाः। तथा ''पञ्चदश सामिधेनीरनुब्रूयात्'' इति प्रकृतौ। विकृतौ तु महापितृयज्ञादौ ''एकां सामिधेनीमन्वाह'' ''तिस्रस्सामिधेनीरन्वाह'' इति। तत्र प्राकृतानां बहूनां कपालादिपदार्थानां मध्ये विकृतिष्वेकदेशग्रहणे कार्ये किमाद्यन्तमध्येष्वनियमेन यत्र कचित्स्थितस्यैकदेशस्य ग्रहणम्, उतादितः स्थितस्यैकदेशस्यैवेति सन्देहे,

Pūrvapakṣa : argues that as there is no special ground to follow the order any of them can be taken.

विशेषाग्रहणादनियम इति प्राप्ते

Siddhānta : points out that there is no reason to ignore the serial order. Therefore these should be selected starting from the first only in an order.

**सिद्धान्तः**, प्रकृतौ हि कपालोपधानात्प्राचीनो यः पदार्थ उपवेशाख्यकाष्ठविशेषेणाङ्गारविशेषस्य स्थापनरूपस्तेन च तत्र ''ध्रुवमसि। द्यावापृथिवीं दृह'' इति मन्त्रेण स्थाप्यः प्रथमकपाल उपस्थाप्यते। तेन च द्वितीयः। तेन च तृतीय इत्येवं क्रमेणोपस्थितानां पदार्थानां तेनैव क्रमेण विकृतौ चोदकेन प्रापितत्वादिति तत एवैकदेशग्रहणम्। अवशिष्टैकदेशानान्तु विकृतिषु फलाभावान्निवृत्तिरिति। अयं न्यायो द्विरात्रादिषु सामिधेनीष्वपि ज्ञेयः।

### एकत्रिके आद्ये तृचे गानाधिकरणम् (10-5-2)

At प्रकृति for माध्यंदिनस्तोत्र त्रयः तृचः are prescribed. The first is in गायत्रीछन्दस् the second is in बृहतीछन्दस् the third in त्रिष्टुप् छन्दस्. एकत्रिकयाग is a विकृतियाग. At this, three ऋक्s are to be brought from प्रकृति. Here the question is raised whether the first ऋक् of गायत्री, बृहती and त्रिष्टुप् have to be brought here or three ऋक् of गायत्री छन्दस् group only to be brought.

एकत्रिकनामके कस्मिंश्चिद्विकृतियागे स्तोत्रसाधनभूता ऋच एकत्रिभेदेन श्रुताः। प्रकृतौ सोमे माध्यन्दिन पवमानस्तोत्रे त्रयस्तृचाः स्तोत्रीयाः। आद्यो गायत्रीच्छन्दस्कः। द्वितीयो बृहतीच्छन्दस्कः तृतीयस्त्रिष्टुप्छन्दस्कः। तत्र विकृतावेकत्रिकयागे तिसृषु स्तोत्रीयास्वृक्षु प्रकृतित उपादातव्यतया प्राप्तासु किं प्राकृतानां त्रयाणां तृचानां या आद्या ऋचो भिन्नच्छन्दस्कास्ता उपादेयाः, उत गायत्रीरूपैकछन्दस्काः प्रथमतृचस्सर्वा एवोपादेया इति सन्देहे,

Pūrvapakṣa : argues though गायत्रीछन्दस् that occurs first has a preference, there is an express statement त्रिच्छन्दा आवापः माध्यंदिनः पवमानः Hence, first hymn of each छन्दस् has to be brought.

यद्यपि प्रकृतावाद्यत्वृचस्यादौ पाठात् यथाप्रकृति चोदकप्रापितानामृचामुपादानं प्राप्तम्, तथापि प्रकृतावेव ''त्रिच्छन्दा आवापो माध्यन्दिनः पवमानः'' इति वचनेन त्रिच्छन्दस्कतोक्तेः पाठप्राप्त-क्रमापेक्षया प्रबलवचनोक्तत्रिच्छन्दस्कत्वस्य प्रकृताविवेहापि चोदकप्राप्ततया तदनुग्रहाय त्रिषु त्यृचेषु आद्यास्तिस्रो ऋचस्त्रिच्छन्दस्का उपादेयाः ।

Siddhānta : points out that the expressed statement applies to प्रकृति only. While the serial order has to be respected at विकृति.

**सिद्धान्तस्तु,** पाठकल्प्यक्रमस्याऽनुमानिकतया ततोऽपि वाचनिकस्य त्रिच्छन्दस्कत्वस्य श्रुतत्वेन बलवत्वेऽपीयं बलाबलचिन्ता प्रकृतावेव श्रुतिपाठरूपप्रमाणद्वयस्य प्रत्यक्षत्वाद्युक्ता । न तु विकृतौ । प्रागुक्तदिशा क्रमेण प्रथमोपस्थितप्रथमत्यृचगतास्वेकच्छन्दस्कास्वेवर्क्षु स्तुवीतेति ।

### एकस्यां ऋचि धूर्गानाधिकरणम् (10-5-3)

At एकत्रिकयाग When स्तोत्र has to be made by the three ऋक् of one hymn and धूर्नामकसामगान has to be made whether this is to be made in each ऋक् separately or for one ऋक् only repeating that ऋक् thrice.

एकत्रिकाख्यक्रतावेव व्यतिषङ्गेणैकस्यामृचि तिसृष्वृक्षु च यदा स्तोत्राणि क्रियन्ते तदा यानि तेषु स्तोत्रेषु प्रकृतौ धूर्नामकसामगानसम्पाद्यानि स्तोत्राणि तेषु स्तोत्रेषु यत्स्तोत्रं तिसृषु स्तोत्रीयास्वृक्षु धूर्नामकसामगानेन सम्पाद्यं तत्स्तोत्रं किं भिन्नभिन्नासु तिसृष्वृक्षु गानं कृत्वा सम्पाद्यं उतैकस्या एवर्चोऽभ्यासेन तिस्रः कृत्वा तत्र तिसृषु धूर्नामकसामगानं कृत्वा सम्पाद्यं स्तोत्रमिति सन्देहे

Pūrvapakṣin argues that on the basis of the statement एकं साम त्र्यचे क्रियते स्तोत्रियम्' धूर्नामकसामगान also has to be made for three ऋक्s only.

''एकं सामत्र्यृचे क्रियते स्तोत्रीय'' इति प्रकृति श्रुतत्र्यृचगानप्रापकचोदकानुग्रहाय गानमात्रस्य त्र्यृचे कार्यतया धूर्गानमपि त्र्यृच एव कृत्वा स्तोत्रं सम्पाद्यमिति प्राप्तम् ।



Siddhāntin points out that on the basis of the statement 'आवृत्तं धूर्षु स्तुवते' one ऋक् only be repeated thrice with सामगान.

**सिद्धान्तस्तु,** ''आवृत्तं धूर्षु स्तुवते'' इतिवचनेन स्तोत्रावृत्तिरुच्यते । स्तोत्रञ्च गुणिनिष्ठगुणाभि-धानम् । तथा च गुणाभिधानरूपस्तोत्रस्यावृत्ती ऋगावृत्तावेव भवति । ऋग्भेदे तु गुणोक्तेर्भिन्नभिन्नत्वेन स्तोत्रावृत्तिर्न स्यात् । तस्मादभ्यासेन ऋक्त्रयं सम्पाद्य तत्र धूर्गानं कृत्वा स्तोत्रावृत्तिः कार्या ।

### द्विरात्रादिषु दशरात्रस्य विध्यन्तानुष्ठानाधिकरणम् (10-5-4)

At द्विरात्र त्रिरात्र द्वादशाहविध्यन्त has to be observed. Here, the question is raised whether the विध्यन्त of the first day of द्वादशाह has to be observed or excluding the first and last day विध्यन्त of middle ten days has to be observed.

तत्र किं द्विरात्रादिषु द्वादशाहस्याद्याद्यहर्विध्यन्तः प्रवर्तनीयः, किं वा प्रायणीयोदयनीय-सञ्ज्ञकाद्यन्ताहनी विहाय द्वितीयाहरादिदशमाहरान्तमध्यमदशरात्रविध्यन्त इति सन्देहे,

Pūrvapakṣa : argues that just as at एकत्रिक, गायत्र्यृच which is first is observed, here also विध्यन्त of the first day of द्वादशाह has to be observed.

द्विरात्रादावपि द्वादशाहिकेष्वहस्स्वाद्याद्यहर्विध्यन्त एव स्यात् । आद्यन्तौ वर्जयित्वेत्यत्र नियामका भावादिति प्राप्ते

Siddhānta : states that excluding the first and last day विध्यन्त of middle ten days of द्वादशाह has to be observed at द्विरात्र.

**सिद्धान्तः,** आद्यन्तावहनी वर्जयित्वा मध्यमदशरात्रविध्यन्तस्यैव द्विरात्रादिषु प्रवृत्तिः ।

### 'सप्तभिराधु नौति' इत्यनेन अग्नौधूननाद्यर्थानां मन्त्राणां अनियमेन उपादानाधिकरणम् (10-5-5)

In the context of अग्निचयन 'केशा नांत्वान्नाधुनोमि, etc., seven mantras are stated. 'या जाताः औषधयः' etc. twenty mantras are also stated. However, at the time of actual performance, the statement 'सदाभिराधु नोति' 'चतुर्दशभिः वदति' indicate that only a few mantras are to be recited. Here, the question arises

whether first seven and first fourteen are to be recited or any seven, any fourteen could be recited.

अग्निचयनप्रकरणे ''केशानां त्वात्मन्नाधूनोमि'' इत्यादयोऽनेके मन्त्राः पठिताः । तत्रैवावपनार्था ''या जाता ओषधयः'' इत्यादयो विंशतिमन्त्राः श्रुताः । प्रयोगकाले तु ''सप्तभिराधूनोति । चतुर्दशभिर्वपति'' इति तदेकदेशग्रहणं श्रुतम् । तत्र किमादितः सप्त, चतुर्दश, मन्त्रा ग्राह्याः, उतादितो मध्यतोऽन्ततो वेत्यनियम इति सन्देहे,

Pūrvapakṣa : argues that there is no reason to ignore the serial order. Therefore the first seven and first fourteen only are to be recited.

**आनुपूर्व्यवतामेकदेशग्रहणेषु,** इति प्रथमाधिकरणोक्तन्येयेन प्राकृतानां कपालादीनामिव प्रकरण पठितानामप्येकदेशग्रहणे क्रमानुग्रहार्थमादित एवोपादानमिति **प्राप्ते**

Siddhānta : points out that at prakṛti if the serial order is followed to select a few items, the rest will have some other purpose to serve. But at vikṛti if first few are taken in the serial order the rest will be purposeless. On the other hand if these are selected at randam only, the serial order is voilated. Between giving up the very item or violating the procedure, the latter is a lessor draback.

**सिद्धान्तः,** युक्तमुपदिष्टानां कपालादीनामादितो ग्रहणम् । अवशिष्टानां प्रकृतावर्थवत्वात् । वैकृतानां त्वादितो ग्रहणे सङ्ख्याश्रुत्या कतिपयानां ग्राह्यतयाऽवशिष्टानामानर्थक्यमुत्कर्षो वा स्यात् । तच्चोभयमप्ययुक्तम् । बलवता प्रकरणेन सर्वेषां क्रत्वर्थत्वावगमेन प्रकरणबाधायोगात् । पाठक्रमस्वीकारेण प्रकरणबाधेऽवशिष्टमन्त्ररूपपदार्थानां बाधः । प्रकरणानुग्रहे तु पदार्थगुणभूतक्रममात्रबाधेन प्रधानपदार्थाबाध इत्यादितो मध्यतोऽन्ततो वेति विकल्प इति ।

### विवृद्धस्तोमके अप्राकृतानां साम्नामागमाधिकरणम् (10-5-6)

The statement 'एकविंशेन अतिरात्रेण स्तुवति' Prescribes increased number of स्तोम. The expression स्तोम means सामोपेतमन्त्र. Here, the question is raised whether the increased number be managed by repeating the प्राकृतस्तोम or by bringing from some other source.



''एकविंशेनातिरात्रेण स्तुवीत'' इत्यादिषु विवृद्धस्तोमकक्रतुषु किं प्राकृतानां स्तोमानामभ्यासेन विवृद्धिः, उतान्यतोऽप्राकृतानामागमेनेति सन्देहः । स्तोमो नाम सामोपेतमन्त्रः ।

Pūrvapakṣa : argues that it is better to manage the increased number by the repetetion of प्राकृतस्तोम than to bring from other sources.

**पूर्वपक्षस्तु,** पूर्वत्र यथाऽनियमेन तावत्सङ्ख्योपादानेऽपि ''सप्तभिः'' इत्यादिसङ्ख्याश्रुत्युपपत्तेर्नादित उपदाननियमस्तथात्रापि स्तोमान्तराणामश्रवणेन धर्मिकल्पनातो वरं धर्मकल्पनेति प्राकृतानामेव स्तोमानां चोदकप्राप्तानामभ्यासेनैव सङ्ख्यापूरणेऽपि ''एकविंशेन'' इति सङ्ख्याश्रुत्युपपत्तेर्नापूर्वागम इति ।

Siddhānta : points out that the increase in the number indicates the increase of the items concerned. The स्तोमs from other source, have to be brought to manage the increased number.

It should be noted here that a स्तोत्रियस्तोम consist of a ऋक् and साम. It is only the साम that has to be brought from other source.

**सिद्धान्तस्तु,** एकविंशत्यादिसङ्ख्या हि भेदसमानाधिकरणा । सा च सङ्ख्येयानां भेद एव युक्ता । न त्वेकस्यैवावृत्त्या । तथा च स्तोत्रगता सङ्ख्या तत्साधनानां स्तोत्रीयाणां भेदसिध्द्यर्थं स्तोत्रीयाणामागममाक्षिपतीत्यागमेनैव सङ्ख्यापूरणम् । तत्र च स्तोत्रीययोः ऋक्सामयोर्मध्ये न ऋगागमः । साम्नामेवागमेन सङ्ख्यापूरणम् ।

### बहिष्पवमाने ऋगागमाधिकरणम् (10-5-7)

In this अधिकरण the question whether at बहिष्पवमान the increased number be managed by repetetion or bringing from other sources is raised.

पूर्वोक्तविवृद्धस्तोमकक्रतुषु सामागमेन सङ्ख्यापूरणमित्युक्तम् । बहिष्पवमानस्तोत्रे तु किमभ्यासेन सङ्ख्यापूरणम्, उतान्यागमेनेति **सन्देहे,**

Pūrvapakṣa : argues that the word पराक् in the statement 'पराग् बहिष्पवमानेन स्तुवीत' does not convey अनभ्यास i.e., absence of repeteting. Therefore the increased number of स्तोत्र be managed by repetetion only.

पूर्वाधिकरणपूर्वपक्षवदेव चोदकप्राप्तप्राकृतस्तोमानामभ्यासेनैव सङ्ख्यापूरणम् । ''पराग्बहिष्पवमानेन स्तुवीत'' इति वचनगतः ''पराक्शब्दः'' पराञ्चमुक्थ्यात् इत्यत्रेव दिग्वचनः । न त्वनभ्यासवचन इति **प्राप्ते**

Siddhānta : points out that the word पराक् does convey अनभ्यास i.e., without repetetion. Hence, the increased number be managed by bringing from others sources only.

It should be noted here that at बहिष्पवमान only one साम is prescribed. Hence, no other can be brought from other source, nor the same साम be repeated. Hence, the increase here be managed by bringing ऋक् only from other source.

**सिद्धान्तः**, ''सर्वस्वारमेव गमयति'' इति वचनेन बहिष्पवमाने साम्न एकत्वेन सामान्तरागमायोगात्तदभ्यासस्य च पराक्पदेन निषेधादृगागमेनैव सङ्ख्यापूरणं बहिष्पवमान इति ।

### सामधेनीषु अवशिष्टानामागमेन संख्यापूरणाधिकरणम् (10-5-8)

At दर्शपूर्णमास by the statement 'पञ्चदशसमधेनीरनुब्रूयात्' fifteen सामधेनी are prescribed. However only elevan ऋक् are stated. To accommodate fifteen सामधेनी in elevan ऋक् s it is stated that त्रिप्रथमामन्वाह' त्रिरुत्तमाम्' The first ऋक् and last ऋक् be recited thrice.

When the same is to be observed for a result, then, the recitation of twenty one times is prescribed by the statement पञ्चविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य Here, the question is raised in three ways.

i) Whether to the elevan stated in प्रकृति ten more have to be brought from other source to make it twenty one.

ii) Whether the first and last be repeated to make up twenty one.

iii) Whether, in addition to repeating the first and last, six more be brought from other source to make up twenty one.



दर्शपूर्णमासयोः ''पञ्चदश सामिधेनीरनुब्रूयात्'' इति विधायैकादशर्चः क्रत्वर्थाः पठिताः । तर्हि कथं पञ्चदशत्वसङ्ख्यानिर्वाह इत्यपेक्षायां ''त्रिः प्रथमामन्वाह । त्रिरुत्तमाम् । पञ्चदश सम्पद्यन्ते'' इति पठितम् । तत्रैव ''एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य'' इत्यादिना काम्यसामिधेनीविवृद्धिः श्रूयते । काम्याश्च नित्यविकृतयः । तत्र किं प्राकृतीभ्य एकादशभ्योऽधिकानामागमः,उत प्रथमोत्तमयोरभ्यासेन सङ्ख्यापूरणम्, किं वा यथाप्रकृति प्रथमोत्तमयोस्त्रिस्त्रिरभ्यासोऽवशिष्टानां षण्णामागमेन सङ्ख्यापूरणमिति त्रेधा सन्देहे,

Pūrvapakṣa :

i) The numbers indicate separate item for each number. Therefore ten more ऋक् be brought from other source to make it twenty one.

ii) At प्रकृति it is stated that first and last be repeated thrice. The purpose of such repetetion is to obtain the required number fifteen, Hence, in विकृति also the first and last be repeated as many times as necessary to make up twenty one.

**''स्तोमविवृद्धौ''** इत्यत्रोक्तदिशा एकविंशत्वसङ्ख्याया भिन्नाधिकरणनिवेशिन्याः सामञ्जस्यायान्यासामागमेनैव पूर्वत्रेव बहिष्पवमाने ऋगन्तरागमेनैव सङ्ख्यापूरणमित्याद्यः **पूर्वपक्षः** ।

प्रकृतौ हि ''त्रिः प्रथमाम् । त्रिरुत्तमाम्'' इति श्रुतवचनस्य यावत्कृत्वः प्रथमोत्तमयोरभ्यासेऽपेक्षितसङ्ख्यापूर्तिस्तावत्कृत्वः प्रथमोत्तमयोरभ्यासः कार्य इत्येवार्थः । तथात्वेऽत्रापेक्षितविधानां न त्रित्वेऽपि तत्र तात्पर्यम् । तस्यानपेक्षितत्वात् । तथा च विकृतौ विवृद्धिस्थलेऽपि यावता सङ्ख्यापूरणं तावत्कृत्वः आद्यन्तयोरभ्यासेन सङ्ख्यापूरणम्, पूर्वत्र बहिष्पवमानान्यस्तोत्रेष्विवेति **द्वितीयः** ।

Siddhānta : At प्रकृति the number three is to be taken into account. Otherwise reciting the first twice and lost four time would have served the purpose of obtaining fifteen. Hence, here also the first and last be recited thrice and the rest be brought from other source.

**सिद्धान्तस्तु**, यदि प्रकृतौ ''त्रिः प्रथमाम्'' इत्यत्र त्रित्वे न तात्पर्यम् । किन्तु यावत्कृत्व इत्यत्र । एवं तर्हि प्रथमाया द्विरुत्तमायाश्चतुरभ्यासेऽपि सङ्ख्यापूर्त्यापत्तेस्त्रित्वेऽप्यस्ति तात्पर्यमिति यथाप्रकृत्याद्यन्तयोस्त्रिरभ्यासेनान्यासामागमेन सङ्ख्यापूरणमिति ।

### षोडशिनां प्राकृतत्वाधिकरणम् (10-5-9)

At ज्योतिष्टोम, there is a ग्रह called षोडशी. The statement षोडशिना वीर्यकामः स्तुवीत' indicates that it is फलार्थ. As per the statements 'अग्निष्टोमे राजन्यस्य गृह्णीयात्' It is also कृत्वर्थ. Here, the question is raised whether क्रत्वर्थ षोडशी has to be employed at ज्योतिष्टोमप्रकृति or to be taken to विकृति.

ज्योतिष्टोमे ऐन्द्रवायवादिग्रहेषु षोडशिनामकः कश्चन ग्रहः''य एवं विद्वान् षोडशिनं गृह्णाति'' इति श्रवणात्.। स च षोडशिग्रहः ''षोडशिना वीर्यकामस्स्तुवीत'' इति वाक्येन फलार्थोऽपि ''अग्निष्टोमे राजन्यस्य गृह्णीयात् ।'' इति वाक्येन क्रत्वर्थोऽप्यवसीयते । तत्र क्रत्वर्थः षोडशी किं ज्योतिष्टोमप्रकृतावेव निविशते, अथ विकृतावुत्कृष्यत इति **सन्देहे,**

Pūrvapakṣa : states that from the statement उत्तरे अहनि त्रिरात्रस्य etc., it can be gathered that षोडशी is connected with विकृति. वाक्य is superior to प्रकरण. Hence, it has to be employed at विकृति.

''उत्तरेऽहनि द्विरात्रस्य'' इत्यादिवाक्यैर्विकृतिसम्बन्धावगमाद्वाक्येन प्रकरणबाधया विकृति-षूत्कर्षः ।

Siddhānta : the word अग्निष्टोम etc., occur in the context of ज्योतिष्टोम. Therefore these refer to प्रकृति only. The statement 'उत्तरे अहनि द्विरात्र' indicates that षोडशी is connected with विकृति. However, the statement अग्निष्टोमे राजन्यस्य' indicates that it is connected with प्रकृति also.

**सिद्धान्तस्तु,** ज्योतिष्टोमप्रकरणपठितैरग्निष्टोमादिपदैः प्रकरणाद्बुद्धौ विपरिवर्तमानानां प्रकृत्यग्निष्टोमादीनामेवाभिधानं युक्तम् । न तु विकृत्यभिधानम् । ''उत्तरेऽहनि द्विरात्रस्य'' इति वाक्येन विकृत्यर्थत्वेऽपि ''अग्निष्टोमे राजन्यस्य'' इत्यादिवाक्येन प्रकृत्यर्थतापि सम्भवतीति न प्रकरणादत्कर्षः ।

### आग्रयणादेव षोडशि ग्रहणाधिकरणम् (10-5-10)

In this adhikarana the question whether षोडशी be taken at three सवन or only at third सवन is raised.

षोडशी किं सवनत्रये ग्राह्यः, उत तृतीयसवन एवेति सन्देहे



Pūrvapakṣa : states that the statement, 'प्रातः सवने गृह्णाति' 'माध्यंदिनसवने गृह्णाति' etc., clearly indicate that षोडशी has to be taken at each of these सवन.

''प्रातस्सवने गृह्णाति'' ''माध्यन्दिने गृह्णाति'' इति सवनत्रयेऽपि श्रवणात्प्रतिसवनं ग्राह्य इति **प्राप्ते**

Siddhānta : points out that तृतीयसवने आग्रायणात् गृह्णाति षोडशिनम् indicates that षोडशी has to be taken at तृतीय सवन only. The statement यत् प्रातः सवने गृह्णीयात् वज्रो वै षोडशी censures taking षोडशी at प्रातःसवन and माध्यन्दिनसवन.

**सिद्धान्तः,** स षोडशी तृतीयसवने स्यात् । ''तृतीयसवने आग्रयणाद्गृह्णाति षोडशिनम्'' इति वचनात् । ''प्रातस्सवने गृह्णाति'' इत्यादिवचनन्तु ''यत्प्रातस्सवने गृह्णीयाद्वज्रो वै षोडशी'' इत्यादिना सवनद्वये निन्दितत्वात् ''तृतीयसवने गृह्यते'' इति श्रवणात्तृतीयसवन एव ग्रहणस्य स्तुत्यर्थत्वेन तदेकवाक्यतयोपपन्नमिति ।

### षोडशिग्रहणस्य सस्तोत्रशास्त्रताधिकरणम् (10-5-11)

At अग्निष्टोम and उक्थ्य षोडशीग्रहण is prescribed. Here the question is raised. Whether it should be अस्तुतशस्त्रक or सस्तुतशस्त्रक.

''अथाग्निष्टोमे राजन्यस्य गृह्णीयात् । अप्युक्थ्ये ग्राह्यः'' इति वाक्येनाग्निष्टोम उक्थ्ये च यदा षोडशी गृह्यते, तदा स किमस्तुतशस्त्रको ग्राह्यः, उत सस्तुतशस्त्रक इति संशयः ।

Pūrvapakṣa : argues, that if at अग्निष्टोम and उकथ्य, षोडशिग्रह is taken as सस्तुतशस्त्र as that of अग्निष्टोम संस्था and उकथ्य संस्था then it will be षोडशिस्तोत्र संस्था only but not अग्निष्टोमसंस्था or उक्थसंस्था. Hence, षोडशिग्रह has to be अस्तुतशस्त्र only.

**पूर्वपक्षस्तु,** अग्निष्टोमसंस्थाकतयोक्थ्यसंस्थाकतया चाग्निष्टोमनामके उक्थ्यनामके च क्रतौ यः षोडशिग्रहस्तस्य सस्तुतशस्त्रत्वे षोडशिस्तोत्रेणैव समाप्त्यापत्त्या षोडशिस्तोत्रसंस्थ एव स्यात् । नाग्निष्टोमसंस्थः नोक्थ्यसंस्थश्च । अग्निष्टोमे उक्थ्ये इति निर्देश एव न स्यात् । संस्थानिमित्त-कत्वादग्निष्टोमादिनाम्नः । अतोऽग्निष्टोम इत्यादिनामनिर्देशभङ्गभिया षोडशिग्रहे पूर्वत्र विकल्पसमुच्चय-योरिवेह स्तुतशस्त्रयोर्बाध इति ।

Siddhānta : points out that there is a direct statement that 'एकविंशं स्तोत्रं भवति प्रतिष्ठायै' Hence षोडशिग्रहण has to be सस्तुतशस्त्र. If it results in the change of the name as षोडशिस्तोत्रसंस्था, that has to be accepted.

सिद्धान्तस्तु, ''एकविंशं स्तोत्रं भवति प्रतिष्ठित्यै'' इति प्रत्यक्षवचनात्सस्तुतशस्त्र एव षोडशी-संस्थान्यतापत्या नामान्तरता तु वचनबलत्सह्यैव ।

### अङ्गिरसां द्विरात्रे षोडशिनः परिसंख्याधिकरणम् (10-5-12)

There are many द्विरात्र s. Among these with reference to अङ्गीरसां द्विरात्र it is stated that वैखानसं पूर्वे अहन् साम भवति । षोडशी उत्तरे' Here, the question is raised whether the षोडशी that is अप्राप्त is enjoined here or for परिसंख्या that is already प्राप्त.

सन्ति बहवो द्विरात्राः । तेषां मध्ये अङ्गिरसां द्विरात्रे श्रूयते ''वैखानसं पूर्वेऽहन् साम भवति । षोडश्युत्तरे'' इति । तत्र द्वितीयेऽहन्यप्राप्तः षोडशी विधीयते, अथ प्राप्तस्य परिसङ्ख्या वेति सन्देहे,

Pūrvapakṣa : argues that परिसंख्या can be made only when there is प्राप्ति Here, there is neither चोदकेन प्राप्ति nor by वाक्य. Hence अप्राप्तषोडशी is enjoined here.

प्राप्तौ हि परिसङ्ख्या । प्राप्तिश्चात्रातिरात्रसंस्थाके द्विरात्रे चोदकतो वा ''उत्तरेऽहन् द्विरात्रस्य गृह्यते'' इति पूर्वोक्तोदाहृतवाक्येन वा । नाद्यः । चोदकप्राप्तेरानुमानिकत्वेन ततः प्रागेव शीघ्रं ''षोड-श्युत्तरे'' इति प्रत्यक्षवचनेन षोडशिग्रहस्य विधानात् । न द्वितीयः । ''उत्तरेऽहनि द्विरात्रस्य'' इति वाक्यस्यानारभ्यविधेस्सामान्यविषयत्वेन मन्थरप्रवृत्तिकत्वेन ततः प्रागेव प्राकरणिकेन ''षोडश्युत्तरे'' इति वाक्येन द्विरात्रविशेषेऽस्मिन् षोडशिनो विधानात् । तस्मादप्राप्तविधिरिति प्राप्तम् ।

Siddhānta : points out that by the statement 'उत्तरे अहन् द्विरात्रस्य' the षोडशी is प्राप्त. The statement षोडश्युत्तरे in the context of अङ्गिरसां द्विरात्र makes it mandatory at that sacrifice.

सिद्धान्तस्तु अनारभ्यविधौ ''उत्तरेऽहनि द्विरात्रस्य'' इति द्विरात्रसामान्यस्य प्रतिपदोक्ततया वाक्येनैव षोडशिनो द्विरात्रसामान्यसम्बन्ध इत्यङ्गिरसां द्विरात्रेऽपि तत्सम्बन्धस्तेनैव वाक्येन शीघ्रमेव



प्राप्नोति । ''षोडश्युत्तरे'' इत्यत्र तु द्विरात्रसामान्यमपि न श्रुतम् । सुतरां तद्विशेष इति । प्रकरणं वाक्यादुर्बलमिति ''उत्तरेऽहन् द्विरात्रस्य'' इति वाक्येन प्राप्तत्वान्नाप्राप्तविधानम् ।

The above view is वृत्तिकार view भाष्यकार puts it differently. He takes the siddhanta view of वृत्तिकर as पूर्वपक्ष and rejects it on the ground that परिसंख्या involves प्रतीतार्थत्याग, अप्रतीतार्थग्रहण and प्राप्तबाध. and concludes that the mention of षोडशी on the second day which is already प्राप्त is intend for the प्रशंसा of वैखानस to be observed on the first day.

एतच्च वृत्तिकारोक्तमधिकरणशरीरमयुक्तमित्युपेक्ष्य भाष्यकारोऽन्यथाऽधिकरणशरीरमाह । तथा हि ''वैखानसं पूर्वेऽहन् साम भवति । षोडश्युत्तरे'' इति वाक्यं परिसङ्ख्यार्थम्, उत वैखानससाम-विधिस्तुत्यर्थमिति सन्देहे, ''उत्तरेऽहनि द्विरात्रस्य गृह्यते'' इति वचनेन चोदकतो वैकल्पिक-प्राप्तिमपोद्य द्विरात्रमात्रे नियमेन षोडशिनः प्रापितत्वेनोक्तदिशा परिसङ्ख्यार्थमिति पूर्वसिद्धान्तं पूर्वपक्षयित्वा परिसङ्ख्यायाः प्रतीतार्थत्यागाप्रतीतार्थग्रहण प्राप्तबाधरूपत्रिदोषत्वान्नपरिसङ्ख्यार्थम् । किन्तु वैखानससामविधिस्तुत्यर्थतया तच्छेषभूतमिति सिद्धान्तः इति ।

### नानाहीनेषु चतुर्थे दिने षोडशिग्रहणाधिकरणम् (10-5-13)

In respect or षोडशिग्रह it is stated that 'चतुर्थे चतुर्थे अहनि अहीनस्य गृह्यते' Here, the question is raised whether taking one षोडशी on the fourth day of द्वादशाह, then it has to be taken on the next fourth day and next fourth day or on one day of one अहीन. The वीप्सा i.e., repetetion, is intended to indicate that in different अहीन it has to be taken on fourth day of each. अहीन.

षोडशिग्रहं प्रकृत्य श्रूयते ''चतुर्थेऽहन्यहीनस्य गृह्यते'' इति । अहीनस्य अहर्गणस्येत्यर्थः । स किं षोडशिन एकस्यैव द्वादशाहादिरूपाहीनस्यैकस्मिंश्चतुर्थेऽहनि सकृद्गृहीत्वा पुनस्तदपेक्षया चतुर्थेऽहनि, पुनस्तदपेक्षया चतुर्थेऽहनीत्येवमभ्यासेन ग्राह्यः, उतैकस्याहीनस्यैकस्मिन्नहनि सकृद्ग्रहणम् । वीप्सा त्वनेकाहीनेषु चतुर्थे चतुर्थेऽहनि सकृत्सकृद्ग्रहणाभिप्रायेति सन्देहे,

Pūrvapakṣa : argues that if वीप्सा is intended to convey that on the fourth of each अहीन, षोडशिग्रह has to be made in respect of many अहीन. then without वीप्सा the statement चतुर्थे अहनि अहीनस्य would have been sufficient. More over

the word अहीनस्य is in singular, hence it conveys that षोडशी be taken on each fourth day of one and the same अहीन.

वीप्साया अनेकाहीनेष्वेकस्मिन्नेव चतुर्थेऽहनि सकृद्ग्रहणाभिप्रायत्वे ''उत्तरेऽहन् द्विरात्रस्य । मध्यमेऽहन् त्रिरात्रस्य''. इति पूर्वनयोक्तवाक्य इव विनाऽपि वीप्सां ''चतुर्थे चतुर्थेऽहन्यहीनस्य'' इति सामान्योत्त्यैव यावत्प्रधानमनुष्ठानसिद्धेर्व्यर्थैव वीप्सा स्यात् । ''अहीनस्य'' इत्येकवचननिर्देशा-चैकस्मिन्नेवाहीने चतुर्थे चतुर्थेऽहन्यभ्यासेन ग्राह्य इति **प्राप्तम् ।**

Siddhānta : the expression चतुर्थे अहीन is in need of कस्य चतुर्थे. Naturally it has to be taken as अहीन चतुर्थे. There is no second चतुर्थ. That is अष्टम. Hence, the statement चतुर्थे चतुर्थे conveys that on the fourth day of each अहीन.

**सिद्धान्तस्तु,** ''चतुर्थेऽहनि'', इत्यस्य **कस्येत्याकांक्षानिवृत्तये** अहीनपदापेक्षत्वादहीनस्य चतुर्थे इत्येवावगम्यते । अहीनस्य चतुर्थद्वयाभावादाद्यं चतुर्थमेव तथा । द्वितीयं चतुर्थं चतुर्थस्य चतुर्थम् । न त्वहीनस्य । किन्तु तस्याष्टममेव नह्यत्राहीनस्य चतुर्थे, चतुर्थस्य चतुर्थे चेति निर्देशोऽस्ति । तस्मादहीनेषु चतुर्थेऽहनीत्येवार्थः । अहीनस्येत्येकवचनं समुदायाभिप्रायं ''ग्रहं संमार्ष्टि'' ''पत्नीं संनह्य'' इत्यादा-विव । वीप्सा च पूर्ववाद्युक्तदिशा सामान्यवाक्यप्राप्तानुवाद इति । **फलन्तु,** सर्वेष्वहीनेषु चतुर्थेऽहनि षोडशिनः सकृद्ग्रहणम् ।

**विकृतौ ग्रहाणामाग्रयणाग्रतायाः उत्कर्षाधिकरणम्** (10-5-14) (**प्रथमं वर्णकम्**)

At ज्योतिष्टोम it is stated that यदि जगत्सामा स्यात् आग्रायणाग्रान्' Here the question is raised whether this आग्रायणाग्रत्व has to be observed in ज्योतिष्टोम or to be taken to विकृति.

ज्योतिष्टोमे ''यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् । यदि बृहत्सामा शुक्राग्रान् । यदि जगत्सामा स्यादाग्रयणाग्रान्'' इति श्रुताग्रयणाग्रत्वं किं ज्योतिष्टोमे निविशते, किं वा विकृतिविशेषे उत्कृष्यत इति **सन्देहे,**

Pūrvapakṣa : states that the expression जगत्साम has to be taken in the sense जगत्यां ऋचि उत्पन्नं साम. At ज्योतिष्टोम, आर्भवपवमानसाधनी भूत जगत्साम is found. This has to be observed at ज्योतिष्टोम only.



यदि जगन्नामकं साम कश्चित्स्यात्तत्रैतदुत्कृष्येत । न चैतदस्ति । किन्तु जगत्यामृच्युत्पन्नं साम जगत्सामेति वाच्यम् । तच्च ज्योतिष्टोमे जगत्युत्पन्नं सामार्भवपवमानस्तोत्रसाधनीभूतमस्तीति यदि जगत्सामेति बहुव्रीहिपदेन ज्योतिष्टोमनिर्देशसम्भवात्प्रकरण एव निविशत इति **प्राप्ते**

Siddhānta : The statement 'यदि जात्सामा स्यादाग्रयणाग्रान्' occurs along with 'यदि रथन्तरसामा सोमः स्यात्' ऐन्द्रवायवाग्रान्' 'यदि बृहत्सामा शुक्राग्रान्. This indicates that पृष्ठस्तोत्रसाधतीभूत is referred to here. Such साम is not in ज्योतिष्टोम. It is found in विषु वन्नामक विकृति. Hence, आग्रायणाग्रता has to be taken to that विकृति.

**सिद्धान्तः,** आर्भवपवमाने जगत्युत्पन्नसामसत्वेऽपि ''यदि रथन्तरसामा'' इत्यादिप्रायपाठा-त्पृष्ठस्तोत्रसाधनीभूतमेव जगत्युत्पन्नं साम वाच्यं । तच्च नास्ति । विषुवन्नामकविकृतियागे त्वस्तीति तत्रैवाग्रयणाग्रताया उत्कर्ष इति ।

**जगत्सामशब्देन विषुवतो ग्रहणाधिकरणम्** (10-5-14) (**द्वितीयं वर्णकम्**)

In this adhikaraṇa the question is raised whether the साम that is referred to by the word जगत्साम is to be taken as बृहद् or रथन्तर, or both or रथन्तर alone or altogether different साम stated at विषुवत्.

यदि जगत्साम ''आग्रयणाग्रान्'' इत्यत्र जगत्सामपदेनोक्तं साम किं बृहद्रथन्तरयोरन्यतरत्, किं वोभयम्, उत रथन्तरमेव, अथ विषुवति जगत्यामुत्पन्नं सामान्तरमिति चतुर्धा **सन्देहः ।**

Pūrvapakṣa :

i) The word साम should be taken as referring either to बृहत् or रथान्तर. The ज्योतिष्टोम should be taken as having one of these. Hence, आग्रायणा ग्रता has to be observed at ज्योतिष्टोम only.

ii) Taking the word साम in the sense of बृहत् or रथान्तर will make आग्रयणाग्रता optional. This is not proper. Hence, the word जगत्सामा should be taken as referring to both बृहत् and रथान्तर. आग्रयणाग्रता be observed at ज्योतिष्टोम with these two सामन्s.

iii) In समुच्चयपक्ष the statement of निमित्त as 'यदि जगत्सामा' is purposeless. It should have been put as अग्रायणाग्रान् गृण्हाति. This will result in observing आग्रायणाग्रता, for बृहत् and रथन्तर for which ऐन्द्रवायवाग्रता and शुक्राग्रता are already stated.

iv) The word जगत्साम should be taken in the sense the साम that has to be applied to the ऋक् 'ईशानमस्य जगतः स्वर्दृशम्' This is रथन्तरसाम्. Hence, आग्रायणाग्रता has to be observed for this only. If this results in विकल्प with ऐन्द्रवायवाग्रता that has to be accepted.

**पूर्वपक्षस्तु** जगदाख्यं साम यस्यासौ सोमो जगत्सामेति व्युत्पत्त्या जगत्सामपदेन प्रकृतज्योतिष्टोमस्यैव प्रत्यभिज्ञानेन बृहद्रथन्तरयोरन्यतरसाम्नोरेव कथञ्चिज्जगत्सामनामत्वमुपेत्य जगत्सामेत्यनेन ज्योतिष्टोममेव बृहद्रथन्तरान्यतरसामवन्तमुपादाय प्रकरण एवाग्रयणाग्रतानिवेशः स्वीकार्य **इत्याद्यः** ।

नैतद्युक्तम् । सत्यां गतौ बृहद्रथन्तरयोर्जगत्सामपदस्याप्रसिद्धशक्तिकल्पनायोगादैन्द्रवायवाग्रत्वशुक्राग्रत्वाभ्यां पूर्ववाक्योक्ताभ्यामाग्रयणाग्रत्वस्य विकल्पापाताच्च । अतो जगच्छब्दस्य कृत्स्नवाचित्वात् ''जगत् कृत्स्नं साम यस्य स जगत्सामा'' इति बृहद्रथन्तरोभयसामा सोम इति बृहद्रथन्तरोभयसमुचितज्योतिष्टोमप्रकरण एवाग्रयणाग्रतेति **द्वितीयः** ।

एवं हि ''यदि जगत्सामा'' इति निमित्तोक्तिर्व्यर्था स्यात् । रथन्तरसाम्न्यैन्द्रवायग्रतायाः बृहत्साम्नि सोमे शुक्राग्रतायाः पूर्ववाक्येन विहिततया ''यदि जगत्सामा'' इत्यनुक्त्वा ''आग्रयणाग्रान् गृह्णाति'' इत्याग्रयणाग्रता विहिता सती उभयाग्रतावरुद्धोभयसामवत्येव सोमे सामर्थ्यान्निविशत इति न समुच्चयपक्षो युक्तः ।

किन्तु जगत्यां जगच्छब्दवत्यां ''ईशानमस्य जगतः स्वर्दृशम्'' इत्यस्यामृच्युत्पन्नं साम जगत्सामेति तादृशरथन्तरसामवत्येव सोमे आग्रयणाग्रता । न चैन्द्रवायवाग्रतया विकल्पदोष इति शङ्क्यम् । उत्कर्षापेक्षया विकल्पेन प्रकरणनिवेशस्य वरत्वादिति **तृतीयः** ।

Siddhānta : points out that it is a round about procedure to take the word जगत् as referring to the ऋक् that contains the word जगत्. Hence it should be taken in the sense of जगतीछन्दस् साम. This is found in विषुवन्नामक विकृति.



**सिद्धान्तस्तु,** ''जगत्सामा'' इत्यत्र जगदित्यनेन जगत्पदं लक्षयित्वा तेन च जगत्पदवतीमृचं लक्षयित्वा तया च तदुत्पन्नसामलक्षणायामत्यन्तक्लिष्टलक्षितलक्षणा स्यात् । अतो जगच्छब्देन जगतीच्छन्दोवाचितया वैदिकप्रयोगसिद्धेन जगत्युत्पन्नसामलक्षणैव ज्यायसीति तादृशो विषुवानेवात्र जगत्सामपदेन ग्राह्य इति तत्रैवाग्रयणाग्रताया उत्कर्ष इति ।

### गोसवादौ उपवत्यग्रवत्योरभावाधिकरणम् (10-5-15)

At गोसवयाग, there is a समुच्चय of बृहत् पृष्ठ and रथन्तरपृष्ठ. Two ऋक्s that have उग्रशब्द and अप्रवती शब्द have to be brought from प्रकृति. Here the question is raised whether these should be recited together at the commencement of स्तोत्र or optionally or रथन्तर निमित्त ऋक् has to be recited or both should not be recited.

''गोसव उभे कुर्यात्'', ''संसव उभे कुर्यात्'' इत्युक्ते बृहत्पृष्ठरथन्तरपृष्ठयोः समुच्चयवति गोसवादियागे ''उपवर्ती रथन्तरपृष्ठस्य प्रतिपदं कुर्यात् । अग्रवर्ती बृहत्पृष्ठस्य'' इति प्रकृतौ उपशब्दवत्यग्रशब्दवती द्वे ऋचौ रथन्तरपृष्ठस्य बृहत्पृष्ठस्य क्रमादादित्वेन विहिते अतिदेशतः प्राप्ते । ते च ऋचौ गोसवादौ समुच्चयेन स्तोत्रयोरादितया कार्ये, किं वा विकल्पेन, उत रथन्तरनिमित्तैव ऋक्कार्या, अथोभे अपि न कार्ये इति चतुर्धा **सन्देहः** ।

Pūrvapakṣa : पृष्ठसम्बन्धिरथन्तरादि सामवत्व is the निमित्त for reciting the ऋक् containing the word, उपवती and अग्रवती at the commencement of पृष्ठस्तोत्र. Hence both have to be recited at the commencement. Since the two cannot be symultaneously recited these have to be recited optionally.

**पूर्वपक्षस्तु,** यथा पूर्वत्र पृष्ठस्तोत्रसम्बन्धिजगत्युत्पन्नसामवत्वामाग्रयणाग्रतायां निमित्तं, तथा पृष्ठसम्बन्धिरथन्तरादिसामवत्वमुपशब्दाग्रशब्दवत्यो ऋचोः पृष्ठस्तोत्रप्राथम्ये निमित्तमित्युभयसामोपेतगोसवादौ रथन्तरस्य बृहतश्च सत्वाद्दृग्द्वयमपि प्रतिपच्छब्दितप्रथमत्वेन कार्यमित्याद्यः ।

युगपदुभयो ऋचोः प्राथम्यायोगेन समुच्चयासम्भवाद्विशेषाग्रहणाच्च विकल्प इति **द्वितीयः** । विकल्पस्याष्टदोषदुष्टत्वाद्रथन्तरस्य प्रथमपठितत्वाद्रथन्तरनिमित्तामुपवतीमेव प्रथमऋचं कुर्यादिति **तृतीयः** ।

Siddhānta : points out that at प्रकृति, बृहत् and रथन्तर are पृष्ठद्वारा क्रतुविशेषण being अन्योन्य निरपेक्ष. However at गोसव, none of the two is क्रतु विशेषण. Hence, none of them has to be observed.

**सिद्धान्तस्तु,** प्रकृतौ रथन्तरपृष्ठस्य प्रतिपदं बृहत्पृष्ठस्य प्रतिपदं कुर्यादिति बृहद्रथन्तरयोः क्रतुव्यापनं विना सत्तामात्रेणान्योन्यानपेक्षयोः पृष्ठद्वारा क्रतुविशेषणत्वेन प्रतिपच्छब्दोक्तनिमित्तत्वमवगम्यते। सापेक्षत्वे ''समर्थः पदविधिः'' इत्युक्त्या समर्थानां निरपेक्षाणामेव समासानुशासनाद्रथन्तरपृष्ठस्येत्यादिसमासायोगात् । अतः पृष्ठस्तोत्रेऽन्योन्यानपेक्षयोरेव स्वसत्तामात्रेणान्योन्याव्यवच्छेदकतया पृष्ठद्वारा क्रतुं विशेषतोर्बृहद्रथन्तरयोर्निमित्तत्वम् । इह तु गोसवादौ द्वयोरन्योन्यसापेक्षसत्ताकतया क्रतुविशेषणत्वेनान्यतरेण क्रतोरविशेषणान्निमित्तविघातेनोभयमपि न कर्तव्यमिति।

**ऐन्द्रवायवस्य सर्वादावप्रतिकर्षाधिकरणम्** (10-5-17)

In this adhikaraṇa the question is raised whether ऐन्द्रवायवधाराग्रह be taken before उपांशुधाराग्रह and अन्तर्यामधाराग्रह or after these.

ज्योतिष्टोमे उपांश्वन्तर्यामावाधारग्रहौ विधायैन्द्रवायवमैत्रावरुणादीनां धाराग्रहाणामुपक्रमे श्रूयते तत्र किमैन्द्रवायव उपांश्वन्तर्यामाभ्यामपि पूर्वमेव ग्राह्यः, उत पाठप्राप्ते उपांश्वन्तर्यामानन्तरस्थान इति **सन्देहे**

Pūrvapakṣa : The statement एन्द्रवायवं गृह्णाति has already enjoined ग्रह. Hence the statement ऐन्द्रवायवाग्राः ग्रहाः enjoins अग्रता of these ग्रह. Hence, these have to be taken before other two ग्रह.

''ऐन्द्रवायवं गृह्णाति'' ''मैत्रावरुणं गृह्णाति'' इत्यादिवाक्यैरेव ग्रहाणां प्राप्तत्वेन तद्वाक्यप्राप्तग्रहानुवादेन ''ऐन्द्रवायवाग्रा ग्रहाः'' इति वाक्ये अग्रतामात्रविधानात्तस्याश्चाग्रताया अविशेषेण सर्वग्रहाङ्गत्वादुपांश्वन्तर्यामयोरवैगुण्यार्थं ताभ्यामपि पूर्वमैवैन्द्रवायवो ग्राह्यः । एवञ्च यथा पूर्वत्र निमित्तविघातादुभयस्यापि नैमित्तिकस्य बाधस्तथेहापि अग्रतावचनात्पाठप्राप्तक्रमस्य बाध इति **प्राप्तम्।**

Siddhānta : points out that ऐन्द्रवायवाग्रता is not सर्वाङ्ग. ऐन्द्रवायव etc., धाराग्रहs are individually enjoined. Hence ऐन्द्रवायव is not to be taken before उपांशु and अन्तर्याम.



**सिद्धान्तस्तु,** ''ऐन्द्रवायवं गृह्णाति'' इत्यादिवाक्यं ग्रहसामान्यपरम्। अग्रतावाक्यन्तु ''अण्व्या धारया'' इति वाक्यशेषाद्धाराग्रहपरम्। अतो न तेनाग्रग्रहप्राप्तिः। ऐन्द्रवायवाग्रता तु धाराग्रहाणां पाठादेव प्राप्नोति। पाठप्राप्ताग्रतानुवादेनैन्द्रवायवादयो धाराग्रहा एव प्रातिस्विकरूपेण विधीयन्त इति।

**कामसंयोगेपि एन्द्रवायवस्य आदौ अप्रतिकर्षाधिकरणम्** (10-9-18)

At ज्योतिष्टोम the statement ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यः कामयति' prescribes कामसंयुक्तैन्द्रवायवाग्रता. Here, the question is raised whether this has to be observed for उपांशु and अन्तर्याम also or धाराग्रह only.

ज्योतिष्टोमे ''वाग्वा एषा यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते'' इति संक्षेपेण ग्रहान् विधाय, ''ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्'' इत्यादीनि श्रूयन्ते। तत्र कामसंयुक्तैन्द्रवायवाग्रता किमुपांश्वन्तर्यामयोरपि कार्या, उत धाराग्रहाणामेवेति **सन्देहे,**

Pūrvapakṣa : argues that ऐन्द्रवायवाग्रता for धाराग्रह is known by पाठ. Hence for आधारग्रह उपांशु and अन्तर्याम, ऐन्द्रवायवाग्रता is prescribed for कामना. Consequently एन्द्रवायव has to before all others though in नित्यप्रयोग it has no सर्वादित्व in काम्यप्रयोग it has सर्वादित्व.

प्रकरणात्क्रत्वर्थतया नित्यानां ग्रहाणां प्रकरणप्राप्तक्रत्वर्थत्वबाधेन क्रतोः फलार्थतया विधिरुक्त इत्यैन्द्रवायवाग्रतैव ग्रहाणां कामाय विधीयते। धाराग्रहाणां पाठादैन्द्रवायवाग्रतायाः प्राप्तत्वेऽप्याधारग्रहयोरुपांश्वन्तर्यामयोरप्राप्तत्वेन तयोः कामायैन्द्रवायवाग्रताविधिसम्भवात्सर्वादित ऐन्द्रवायवो ग्राह्यः। एवमैन्द्रवायवस्य नित्यप्रयोगे सर्वादित्वाभावेऽपि काम्यप्रयोगे स्यादिति। **प्राप्तम्।**

Siddhānta : points out that the expression गृह्णाति indicates that ग्रहs are enjoined here but not अग्रता.

**सिद्धान्तस्तु,** यदि फले विधीयमानस्याग्रतागुणस्य उपांश्वन्तर्यामयोरप्याश्रयत्वं स्यात्तदा स्यादप्राप्तविधानम्। सर्वादितः प्रतिकर्षश्च। न चैवम्। धाराग्रहाणामेवात्र प्रकृतत्वात्तेषामेवाश्रयत्वौचित्यात्। अतो नाप्राप्तविधानम्। नवा सर्वादितः प्रतिकर्षः।

किञ्च श्रुत्यर्थविधिलाभाय ''गृह्णाति'' इत्युक्तग्रहाणामेवात्र कामाय विधानं युक्तम्। न तु ग्रहाश्रयेण पाठप्राप्ताग्रतायाः कामाय विधानम्। वाक्यार्थविधेर्जघन्यत्वात्। प्रकरणात्क्रत्वर्थतया नित्यानामपि तेषां वचनात्कामार्थत्वमप्युपपन्नमिति कामसंयोगेऽपि स्वस्थान एव ग्रहणमिति।

### आश्विनाग्रादीनां ग्रहाणां प्रति कर्षाधिकरणम् (10-5-19)

At ज्योतिष्टोम it is stated that शुक्राग्रान्. गृह्णीयात् प्रतिष्ठाकामः' and 'मन्थ्यग्रानभिचरन्' Here the question is raised whether these have to be taken in their respective place or before all others.

ज्योतिष्टोमे ''शुक्राग्रान् गृह्णीयात्प्रतिष्ठाकामः । मन्थ्यग्रानभिचरन् ।'' इत्यादि श्रूयते । तत्र च शुक्राग्रादीनां कामसंयुक्तानां स्वस्थान एव ग्रहणम्, उत सर्वादितः प्रतिकर्ष इति **सन्देहे,**

Pūrvapakṣa : argues that there is no reason to change place where these are actually stated. Hence these have to be taken in their respective places.

पूर्वत्रैन्द्रवायवस्येव शुक्रादेः कामसंयोगेऽपि पाठप्राप्तक्रमाबाधाय स्वस्थान एव ग्रहणमिति **प्राप्तम् ।**

Siddhānta : points out that if both शुक्राग्रत्व and कामना are enjoined it will result in वाक्यभेद. Hence, ग्राहश्रयेण अग्रता is enjoined for प्रतिष्ठाकाम. Hence, this has to be taken from its place and be placed before all others.

**सिद्धान्तस्तु,** धाराग्रहाणामैन्द्रवायवाग्रतैव पाठप्राप्ता । न शुक्राग्रता । येनाग्रताऽनुवादेन ग्रहाणां कामे विधानात्स्वस्थान एव शुक्रादेर्निवेशः पूर्वत्रेव स्यात् । ग्रहाणां कामसंयोगं शुक्राग्रत्वञ्च विदधद्वाक्यं भिद्येत । अतो ग्रहाश्रयेणाग्रतैव प्रतिष्ठादिकामाय विधीयत इत्यनेकग्रहेष्वपि तादृशकामाय शुक्राग्रता-विधिसम्भवात्स्वस्थानात्पूर्वं प्रतिकर्ष इति ।

### आश्विनादीनां ग्रहणां एन्द्रवायवस्य पुरस्तात् प्रतिकर्षाधिकरणम् (10-5-20)

In the earlier adhikaraṇa it is stated that शुक्रग्रह be taken out from its place and placed before others, here, the question is raised whether it should placed before all others or before ऐन्द्रवायवधाराग्रह.

पूर्वत्र सामान्यतः शुक्रादिग्रहस्य प्रतिकर्ष उक्तः । स किं सर्वादितः, उतैन्द्रवायवादिधारा-ग्रहात्प्रागिति **सन्देहे,**

Pūrvapakṣa : There is no special reason to take it before ऐन्द्रवायूव only. Hence, it should be taken before all others.



ऐन्द्रवायवस्य पाठप्राप्तक्रमबाधापत्या सर्वादितः प्रतिकर्षाभावेऽपि शुक्रादिग्रहस्य सिद्धान्तेऽपि प्रतिकर्षाभ्युपगमेन स्वस्थाने बाधस्याविशिष्टतया सर्वादित एव प्रतिकर्षः स्यात् । ऐन्द्रवायवात्पूर्वमित्यत्र विशेषहेत्वभावादिति **प्राप्ते**

Siddhānta : points out that शुक्राग्रत्व needs an आश्रय. ऐन्द्रवायवधाराग्रह is its आश्रय. Hence it has to be taken before that.

**सिद्धान्तः,** शुक्राग्रत्वगुणः प्रतिष्ठादिफलाय विधीयमान आश्रयमपेक्षमाणस्सन् ''ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते'' इति साधारणोपक्रमेण प्राकृतानैन्द्रवायवादिधाराग्रहानाश्रयत इति तदादित एव प्रतिकर्षः । न सर्वत इति ।

### सादनस्यापि प्रतिकर्षाधिकरणम् (10-5-21)

धाराग्रह are taken one by one, placed one after the other and then offering is made. Here the question is raised when अपकर्ष of शुक्रग्रह is made from its place to an earlier place whether the अपकर्ष of सादन i.e., placing the शुक्रग्रह is also be made or not.

धाराग्रहाणां पूर्वपूर्वग्रहं गृहीत्वा सादयित्वा चोत्तरोत्तरग्रहाणां ग्रहणासादने कृत्वा पश्चाद्ग्रहणा-सादनक्रमेण प्रदानं क्रियत इति क्रमः । तत्र कामार्थशुक्रादिग्रहेष्वपकृष्यमाणेषु सादनमपि प्रतिकृष्यते, अथ नेति सन्देहे,

Pūrvapakṣa : argues that सादन is क्रत्वङ्ग. It is not ग्रहणाङ्ग, Hence, there is no अपकर्ष of सादन.

कामार्थशुक्रादिग्रहाणां ''शुक्राग्रान् गृह्णीयात्प्रतिष्ठाकामः'' इत्यादिवचनबलात्पाठक्रमबाधेन प्रतिकर्षेऽपि न सादनस्य । वचनाभावात् । न च सादनस्य ग्रहणाङ्गत्वेन प्रधानापकर्षे तदङ्गस्यापि सिद्ध इति शङ्क्यम् । प्रकरणाद्ग्रहणस्येवासादनस्यापि क्रत्वर्थत्वेन ग्रहणाङ्गत्वे मानाभावादिति **प्राप्ते**

Siddhānta : points out that by the very nature सादन is ग्रहणाङ्ग. ग्रहण is for प्रदान. The प्रदान has to be made together. This requires सादन as per the placement of ग्रह.

सिद्धान्तः, सादनस्य ग्रहणाङ्गत्वे वचनाभावेऽप्यन्यथानुपपत्तिरेव मानम् । यथा हि, ग्रहणानि प्रदानार्थानि । प्रदानञ्चैकप्रयोगवचनाद्गृहीतानां ग्रहाणामेकस्मिन्नेव काले कार्यम् । एककालकर्तव्यत्वञ्च तेषां साहित्यमन्तरा न युक्तम् । तच्च साहित्यमासादनं विना न घटते । न ह्येकेन कर्त्राऽनासाद्यैकमपरो गृहीतुं शक्यत इति साहित्यसम्पादनेन दृष्टार्थमासादनं प्रदानार्थग्रहणाङ्गमिति तदपकर्षेऽपकृष्येतेति ।

**प्रदानस्य अप्रकर्षाधिकरणम्** (10-5-22)

In this adhikaraṇa the question whether there is अपकर्ष of प्रदान also or not is discussed.

शुक्रादेस्सादनमिव प्रदानमप्यपकृष्यते, अथ नेति **सन्देहे,**

Pūrvapakṣa : states that from ग्रहण to प्रदान is one item. Hence, there has to be अपकर्ष of प्रदान also.

पूर्वत्र शुक्रादेर्ग्रहणमासादनमिव प्रदानमप्यपकर्षेत् । अवदानादिः प्रदानान्त एकः पदार्थ इति पञ्चमस्य द्वितीयपादे **संयुक्ते तु प्रक्रमात्तदङ्गं स्यादित्य**त्रोक्तत्वेन तन्न्यायेन ग्रहणादिप्रदानान्तस्यैकपदार्थत्वादिति ।

Siddhānta : points out that from ग्रहण to प्रदान is not one item. ग्रहण, आसादन and प्रदान are enjoined in an order.

**सिद्धान्तस्तु,** स्यादेवं यद्यवदानादिप्रदानान्त इव ग्रहणादिप्रदानान्त एकः पदार्थः स्यात् । न चैवम् । किन्तु सर्वेषु गृहीतेष्वासादितेषु पश्चादेव ग्रहणसादनक्रमेण प्रदानस्य विधानान्न प्रदानस्यापकर्ष इति ।

**त्र्यनीकायांमैन्द्रवायवाग्रतोक्तेः समान विध्यर्थताधिकरणम्** (10-5-23)

At द्वादशह, Three अनीकाs i.e. three अग्रताs are prescribed. The details of these are as under.

i) the first and last day are called प्रायणीय and उदयनीय.
ii) on the tenth day एन्द्रवायवाग्र is prescribed.
iii) on the remaining nine days at each three days ऐन्द्रवायवाग्र, शुक्राग्र and आग्रयणाग्र are prescribed.



iv) Among these nine days the first six days are known as पृष्ठ्यषडह. On these six days रथन्तर, बृहद्, वैरूप्य, वैराज, शाकर रैवत सामन् पृष्ठस्तोत्रसाधनसामन् are prescribed
v) on first two of these six days ऐन्द्रवायग्रत्व and शुक्राग्रत्व are already prescribed. These are stated again here.

Here, the question is raised whether this statement is अनुवादमात्र or अङ्गान्तरपरिसंख्यार्थ or अर्थवादार्थ or विध्यर्थ.

द्वादशाहे त्र्यनीका आम्नाता । अनीकशब्दोऽग्रत्ववाची । त्रयाणामनीकानां समाहारस्त्र्यनीका । त्रिफलेत्यादिवदजादित्वाट्टाप् । तद्यथा, ''प्रायणीयोदयनीयशब्दितावाद्यन्ताहनी दशममहः, ऐन्द्रवायवाग्राणि । अवशिष्टेषु नवानामह्नां त्रीणि त्रीण्यहानि त्र्यनीकतया श्रुतानि ''ऐन्द्रवायवाग्रं प्रथममहः । अथ शुक्राग्रम् । अथाऽग्रयणाग्रम् । अथैन्द्रवायवाग्रम् । अथ शुक्राग्रम् । अथाऽग्रयणाग्रम् । अथैन्द्रवायवाग्रम् । अथ शुक्राग्रम् । अथाऽग्रयणाग्रम्'' इति । नवानामह्नामादित षडहानि पृष्ठ्यषडहनामकानीति तत्क्रमात्षट्स्वहस्सु रथन्तरबृहद्वैरूपवैराजशाकररैवताख्यानि पृष्ठस्तोत्रसाधनसामानि । तत्र पृष्ठ्यषडहे प्रथमद्वितीययोरह्नोः क्रमाद्रथन्तरबृहत्सामत्वमिति तन्निबन्धनं ''यदि रथन्तरसामा'' इत्यादिवाक्योक्तमैन्द्रवायवाग्रत्वं शुक्राग्रत्वं प्रकृतितः प्राप्तमेव । पुनरिह ''ऐन्द्रवायवाग्रं प्रथममहः'' इति तयोर्वचनं किमनुवादमात्रम्, किं वाऽङ्गान्तरपरिसङ्ख्यार्थम्, उतार्थवादार्थम्, यद्वा विध्यर्थमिति **चतुर्धा सन्देहे,**

Pūrvapakṣa : argues that

i) अबुवाद results in आनर्थक्य
ii) परिसंख्या is त्रिदोषदुष्टा
iii) आग्रायणाग्रस्तुत्यर्थतया तृतीयपक्ष एव युक्तः ।

अनुवादमात्रत्वरूपाद्यपक्षस्यानर्थक्यदुष्टत्वात्, ''ऐन्द्रवायवाग्रतैव कार्या न त्वङ्गान्तरम्'' इत्यादिपरिसङ्ख्यारूपद्वितीयपक्षस्य त्रिदोषदुष्टत्वादाग्रयणाग्रस्तुत्यर्थतयाऽर्थवादत्वरूपतृतीयपक्ष एव युक्तः ।

Siddhānta : At प्रकृति, ऐन्द्रवायवाग्रात्व and शुक्राग्रत्व were prescribed on the grounds of रथान्तर and बृहत् सामन्. At विकृति these grounds are not available. Hence, these are enjoined again.

सिद्धान्तस्तु प्रकृतौ रथन्तरबृहत्सामनिमित्तैन्द्रवायवाग्रत्व शुक्राग्रत्वे तथैवेहापि द्वादशाहे चोदकेन प्राप्तुतः । अतो रथन्तरादिनिमित्ताभावेऽप्यैन्द्रवायवाग्रत्वादिना ग्रहा ग्राह्या इत्येतद्विध्यर्थं पुनरिह वचनमिति ।

### व्यूढद्वादशाहस्य समूढविकारत्वाधिकरणम् (10-5-24)

द्वादशाह is of two type, i) समूह ii) व्यूढ. Here the question is raised whether both these are नित्य or समूढ is नित्य and प्रकृति, व्यूढ is its विकृति.

ग्रहाग्रताविशेषाद्द्विविधो द्वादशाहः समूढो व्यूढ इति । तत्र किं द्वे अपि रूपे नित्ये, किं वा समूढरूप एव प्रकृतिभूतो नित्यः । व्यूढरूपस्तु काम्यः समूढविकार इति **सन्देहे,**

Pūrvapakṣa : argues that just as 'दध्ना जुहोति' 'खादिरो यूपो भवति' are क्रत्वर्थ 'दध्ना इन्द्रियकामस्य' 'खादिरं वीर्यकामस्य' are पुरुषार्थ. Similarly व्यूढ which is not काम्य is क्रत्वर्थ. while सकाम is पुरुषार्थ. In view of this like समूढ, व्यूढ is also प्रकृति. It is not a विकार of समूढ. Hence these two are optional.

व्यूढरूपस्यापि प्रागुक्तवाक्यैरकामसंयुक्तैरुत्पन्नस्य नित्यत्वेऽपि ''यत्कामो व्यूढं च्छन्दसा यजेत सोऽस्मै कामस्समृध्यत'' इति वाक्यान्तरेण कामसंयोगात्पुरुषार्थताऽपि स्यादिति समूढवत् व्यूढरूपोऽपि नित्यश्च भवतीति, बृहद्रथन्तरसाम्नोरिव तयोर्विकल्पेन प्रयोग इति **प्राप्तम् ।**

Siddhānta : points out that व्यूढ is not enjoined for क्रत्वर्थ. It is only stated to enjoin it for पुरुषार्थ. This काम्यव्यूढ is विकृति of समूढ.

**सिद्धान्तस्तु,** दध्यादिवदुभयार्थत्वं न व्यूढरूपस्य लभ्यते । व्यूढरूपस्य लोकतोऽप्रसिद्धत्वेन फलवाक्यापेक्षितव्यूढस्वरूपज्ञापनार्थत्वेन व्यूढोत्पत्तिवाक्यस्य विद्धद्वाक्यस्येवोपक्षीणत्वेन क्रत्वङ्गताबोधनासामर्थ्यात् । अतः केवलं काम्य एव व्यूढः समूढविकारः । यथाऽग्निष्टोमसंस्थाविकृतित्वमुक्थ्यादिकाम्यसंस्थानां तथेति ।

### संवत्सरसत्रे अनीकानां विवृद्ध्यधिकरणम् (10-5-25)

The गवामयन which is a विकृति of द्वादशाह and which is to be performed for a whole year has to be observed on three hundred and sixty one days. The



middle day is called विषुवन्. The days are arranged in two groups of पूर्वपक्ष and उत्तरपक्ष. Each group consists of one hundred and eighty days.

At प्रकृति i.e., द्वादशाह, on the nine days that are in the middle of प्रायणीय उदयनीय and दशम, ऐन्द्रवायवाग्र, शुक्राग्र and आग्रायणाग्र are to be observed by repeating on three, three days. These three अग्रता have to be observed on one hundred and eighty days of पूर्वपक्ष of विकृति. Repeating the above three अग्रता will not be sufficient to cover one hundred and eighty days. Hence, these have to be further repeated. Here the question is raised whether the unit of nine of these have to be repeated twenty times, breaking the one hundered and eighty in nine units twenty days each, as the first twenty days. एन्द्रवायव, second twenty days शुक्राग्र. Third twenty days आग्रयण, and then, repeat these groups again until one hundred eighty are covered.

द्वादशाहः पूर्वोक्तदिशा समूढव्यूढभेदेन द्विरूपः । अत्र समूढद्वादशाहविकृतिभूते संवत्सरसाध्ये गवामयनाख्ये एकाधिकषष्ट्युत्तराणि त्रीणि शतान्यहानि सन्ति । मध्ये विषुवान्नामैकाहः । तस्य द्वे पक्षसी । अशीत्युत्तरशतमहानि पूर्वतनं पक्षः । अशीत्युत्तरशतमहान्युत्तरं पक्षः । प्रकृतौ प्रायणीयोदयनीयदशमानामह्नां मध्यवर्तीनिय नवाहानि ऐन्द्रवाग्रत्वशुक्राग्रत्वाग्रयणाग्रत्वानां त्रिरावृत्त्या पूरितानि । तानि च त्रीण्यग्रत्वानीह विकृतौ पूर्वपक्षसि स्थितेष्वशीत्युत्तरशतसङ्ख्याकेष्वहस्सु चोदकेन प्राप्तानि । तेषाञ्च त्रयाणामग्रत्वानां प्रकृताविव त्रिरावृत्तिमात्रेणानेकान्यहानि न पूर्यन्त इत्यभ्यासेनैव पूरणीयानि । तत्र किं प्रकृताविवेहापि ''प्रथममहः ऐन्द्रवायवाग्रम् । द्वितीयं शुक्राग्रम् । तृतीयं आग्रयणाग्रणाग्रम् । अथ पुनरैन्द्रवायवाग्रम् । अथ शुक्राग्रम् । अथाग्रयणाग्रम् । अथैन्द्रवायवाग्रम् । अथ शुक्राग्रम् । अथाग्रयणाग्रम्'' इति कृत्स्नां त्र्यनीकामनुष्ठाय तेनैव क्रमेण पुनरपि कृत्स्नानुष्ठानमित्येवं पूर्वपक्षसि स्थिताशीत्युत्तरशतात्मकाहस्समुदाये विंशतिवारं दण्डकलितवदभ्यासः, उत पूर्वपक्षो नवधा विभज्य प्रथमभागगतानि विंशतिरहानि ऐन्द्रवायवाग्राणि कार्याणि । द्वितीयभागस्थानि विंशतिरहानि शुक्राग्राणि । तृतीयभागस्थान्यहान्याग्रयणाग्राणि । पुनरेवं, पुनरेवम् । एवं नवानां प्राकृतीनामग्रतानां स्वस्थानविवृध्या नवधाऽभ्यासः कार्य इति **सन्देहे,**

Pūrvapakṣa : argues that the statement 'ऐन्द्रवायवं प्रथममहः' makes a reference to अहन्. From this it is clear that each अग्रता is connected with a particular day. Therefore these have to be repeated in the same order.

प्रकृतौ ''ऐन्द्रवायवाग्रं प्रथममहः'' इति श्रुताहःपदस्याविवक्षायां हेत्वभावादैन्द्रवायवाग्रताया अहर्धर्मत्वेनाहरपूर्वप्रयुक्ततयाऽहरङ्गत्वात्प्रत्यहमेकैकाग्रतेतीह विकृतावपि तथैव प्राप्ते: प्रागुक्तरीत्या दण्डकलितवदावृत्तिरिति **प्राप्तम् ।**

Siddhānta : points out that the expression प्रथममहः does not convey the first day. It only means यः यज्ञस्य प्रथमो भागः स एन्द्रवायवाग्रः. Hence, one hundred and eighty days have to be split into nine units of twenty days each, and ऐन्द्रवायवाग्रता etc have to be repeated in their respective order.

**सिद्धान्तस्तु,** प्रकृतौ हि ''ऐन्द्रवायवाग्रं प्रथममहः'' इत्यत्राह्न उद्देश्यत्वे द्वितीयादिसाधारण्ये-नाहर्मात्रस्योद्देश्यत्वादथेति निर्देशायोगान्मुख्यात्वाच्च प्रथमादिपदमेवोद्देश्यम् । तच्च नाह्ना विशेष्टुं शक्यम् । तथात्वे ''यज्ञस्य यत्प्रथमं तदैन्द्रवायवाग्रम् । प्रथमभूतश्चाहः'' इति वाक्यभेदप्रसङ्गात् । प्रकरणवशेन यज्ञभागस्यैव विशेष्यतयाऽन्वयेन ''यो यज्ञस्य प्रथमो भागः स ऐन्द्रवायवाग्रः'' इत्य-न्वयेन प्रथमपदस्य नैराकांक्ष्यादहःपदमनुवादमात्रमित्यविवक्षितमिति नवानामनीकानां नवधा विभागः । अतो गवामयनेऽपि विकृतौ पूर्वस्मिन् पक्षसि स्थिताशीत्यधिकशताहानि नवधा विभज्य प्रथमादिभागेषु नवस्वैन्द्रवायवाग्रतादीनां नवानामनीकानामनुष्ठानं कार्यमिति स्वस्थानविवृद्धिरेवेति ।

### व्यूढे मन्त्राणां छन्दोव्यतिक्रमाधिकरणम् (10-5-26)

At व्यूढद्वादशाह, भक्षपवमानस्तोत्र, परिधिकपाल have to be observed. The मन्त्रs are also prescribed for these.

The मन्त्रs गायत्रीत्रिष्टुप् जगतीछन्दस् which are prescribed for प्रात:सवन माध्यन्दित सवन and तृतीय सवन are to be placed in each other places as गायत्री in the place of त्रिष्टुप्, त्रिष्टुप् in the place of जगती, जगती in the place of गायत्री. This placement will be as under.

i) प्रातस्सवनगतगायत्रछन्दसः इति स्थाने माध्यान्दिन सवनगतत्रिष्टुप् छन्दसः इत्यस्य ।

ii) तस्य स्थाने तृतीयसवनगतजगतीछन्दसः इत्यस्य

iii) जगतीछन्दसः इत्यस्य स्थाने प्रातः सवनगत गायत्र छन्दसः इत्यस्य निवेशेन अनुष्ठानम्.

The word छन्दसः is applied to भक्षपवमान, परिधि and कपालs also.



Here, the question is raised whether in respect of these also there is व्युत्क्रम i.e. placement in each others place is to be followed or not.

व्यूढरूपे द्वादशाहे भक्षपवमानस्तोत्रपरिधिकपालानि चोदकप्राप्तानि तन्मन्त्रादयश्च । तत्र प्रातस्सवनमाध्यन्दिनसवनतृतीयसवनगतानां गायत्रीत्रिष्टुप्जगतीच्छन्दसां व्युत्क्रमशब्दितान्योन्यस्थानप्राप्तिः श्रूयते ''छन्दसि वाऽन्योन्यस्य लोकमभ्यध्यायन् । गायत्री त्रिष्टुभः त्रिष्टुप् जगत्याः । जगती गायत्र्याः'' इति । लोकमित्यनुषङ्गः । तस्यार्थः स्थानमिति । मन्त्रगतगायत्रादिछन्दसामिव भक्षादीनाश्चतुर्णामपि व्यतिक्रमः स्वीकार्य इति वा मन्त्रगतगायत्र्यादिछन्दसामेव वेति सन्देहे,

Pūrvapakṣin states that since these are also conveyed by the word छन्दस् व्युत्क्रम has to be followed in respect of these also as under :

i) प्रातस्सवनभक्ष has to be made in the place of माध्यन्दिनसवन.

ii) प्रातस्सवनिक बहिष्पवयानस्तोत्र be made in the place of माध्यन्दिन पवमानस्तोत्र and so on.

छन्दःशब्दाभिलप्यत्वाविशेषान्मन्त्रगतछन्दसामिव भक्षाद्यर्थानामपि व्यतिक्रमशब्दितस्थानान्तरा-क्रमणमिति

Siddhāntin points out that the words गायत्र etc are used with reference to भक्ष etc secondarily. Hence, placement by व्युत्क्रम is not to be followed for these.

**सिद्धान्तस्तु,** भक्षाद्यर्थेषु गायत्रादिशब्दनिर्देशस्य स्तुतिरूपत्वेनामुख्यत्वात् छन्दःस्वेव गायत्र्यादि पदानां मुख्यत्वान्मुख्यार्थभूतछन्दसामेव व्यतिक्रमविधानम् । न भक्षाद्यर्थानामिति ।

**इति दशमाध्यायस्य पञ्चमः पादः**

## इति दशमाध्यायः

## दशमाध्यायस्य षष्ठः पादः

### रथन्तरादिसाम्नां तृचे गानाधिकरणम् (10-6-1)

At ज्योतिष्टोम, रथन्तर, बृहद्, वैरूप्य etc सामन्s that have to be applied for पवमानस्तोत्र, पृष्ठस्तोत्र etc are stated.

These are applied separately for each ऋक् at the time of study. Here, the question is raised whehter at the time प्रयोग also these have to be applied to each ऋक् separately or a group of three ऋक्s.

ज्योतिष्टोमे पवमानस्तोत्रपृष्ठस्तोत्रादिसाधनानि रथन्तरबृहद्वैरूपादिसामानि श्रुतानि। तानि चाध्येतार एकैकस्यामृच्यधीयते। तानि स्तोत्रप्रयोगकाले किमेकस्यामेवर्चि गेयानि, उत त्यृच इति **सन्देहः।**

Pūrvapakṣa : argues that since, these are applied for each ऋक् separately at the time of study, these have to be applied separately for each ऋक् at the time of प्रयोग also.

**पूर्वपक्षस्तु,** यद्यपि ''एकं साम त्यृचे क्रियते स्तोत्रीयम्'' इत्यस्ति वचनं तथापि त्यृचेऽप्युत्पन्नानां केषाञ्चित्साम्नां सत्वेन तद्विषयानुवादतया वर्तमानसरूपत्वेन विधिविभक्त्यभावान्न विधानक्षममिति स्वाध्यायकाले एकस्यामृचि गीतत्वात्तदवैलक्षण्याय स्तोत्रप्रयोगकालेऽप्येकस्यामृच्येव गेयानीति।

Siddhānta : points out that it is stated at the उपक्रम that 'एकं साम त्र्यचे क्रियते.' In the अर्थवाद also सामदेवता declares I will go in three ऋक्s. Hence, these सामन्s have to be applied to a group of three ऋक्s only.

**सिद्धान्तस्तु,** ''एकं साम त्यृचे क्रियते'' इति वाक्योपक्रमे ऋग्देवतासामदेवतयोस्संवादरूपेऽर्थवादे सामदेवता एकामृचं द्वे ऋचौ च प्रत्याख्याय तिस्रो ऋचोऽङ्गीकारेति श्रवणात्।

### स्वर्दृक् छन्देन वीक्षणस्य कालार्थताधिकरणम् (10-6-2)

The statement 'रथन्तरे प्रस्तूयमाने संमीलयेत्' prescribes the closing of the eyes until the word स्वर्दृशं is uttered and then, opening the eyes स्वर्दृशं प्रति वीक्षेत्.



Here, the question is raised whether

i) कालसम्बन्ध is enjoined here as अभित्वा शूर इत्यारभ्य स्वर्दृक् शब्दोच्चारणपर्यन्तं निमील्य अनन्तरं चक्षुषी उन्मीलयेत्।

ii) अङ्गाङ्गिभाव between स्वर्दृकशब्द and वीक्षण as 'स्वर्दृशमिति शब्दमुच्चारयन् वीक्षेत' इति स्वर्दृक्शब्दः वीक्षणाङ्गम् इति।

iii) वीक्षणं is स्वर्दृक् शब्दोच्चारणाङ्गं

''रथन्तरे प्रस्तूयमाने सम्मीलयेत्'' इति चक्षुर्निमीलनं विधाय श्रूयते ''स्वर्दृशं प्रति वीक्षेत'' इति। तत्र किं कालार्थः सम्बन्धः ''अभि त्वा शूर'' इत्यारभ्य स्वर्दृक्छब्दोच्चारणपर्यन्तं निमील्यानन्तरं वीक्षेत चक्षुषी उन्मीलयेत्'' इति। यद्वाऽङ्गाङ्गिभावार्थः सम्बन्धः। ''स्वर्दृशं इतिशब्दमुच्चारयन् वीक्षेत नान्यथेति स्वर्दृक्छब्दो वीक्षणाङ्गम्,'' इति वा ''वीक्षमाणः स्वर्दृक्छब्दमुच्चारयेत्, नान्यथेति वीक्षणं स्वर्दृक्छब्दोच्चारणाङ्गमिति **सन्देहे,**

Pūrvapakṣa : argues that taking the word स्वर्दृक् as स्वर्दृशशब्दोच्चारणकाल will involve लक्षणा. Hence, अङ्गाङ्गिभाव between 'स्वर्दृक् शब्द and वीक्षण is enjoined here.

कालार्थत्वे स्वर्दृक्छब्दस्य स्वर्दृशमिति शब्दोच्चारणकाल इति लक्षणाप्रसङ्गादङ्गाङ्गिभावार्थः सम्बन्धः। पूर्वत्र क्रियत इत्यत्र विधिविभक्तिराहित्येऽपि विधित्वाङ्गीकारे सतीह ''वीक्षेत'' इति विभक्तिश्रवणेनाङ्गाङ्गिभावविधानस्य कैमुत्यसिद्धत्वादिति **प्राप्ते**

Siddhānta : points out there is no प्रयोजनाकाङ्क्षा for स्वर्दृक् शब्द. Hence, there is no scope for अङ्गाङ्गिभाव. Therefore, स्वर्दृक् शब्दोच्चारणकालसम्बन्ध is conveyed here.

**सिद्धान्तः,** यदि हि स्वर्दृक्छब्दस्य प्रयोजनाकांक्षा स्यात्तदैवं वीक्षणाङ्गत्वेन विधीयेत। न चैवम्। वीक्षणमपि रागप्राप्तत्वेनाऽदृष्टप्रयोजनकतया नान्यदाकांक्षतीति तस्याप्यङ्गत्वविधावनपेक्षितविधिरेव। तस्य स्वर्दृगङ्गत्वेऽदृष्टकल्पनाप्रसङ्गश्च। तस्मात्कालार्थः सम्बन्धः।

### गवामयनिके पृष्ठ्यषडहे बृहद्रथन्तरयोः विभागाधिकरणम् (10-6-3)

गवामयन is द्वादशाहविकृति. For द्वादशाह, पृष्ठ्य षडह सोत्रs रथन्तर-बृहद्-वैरूप्य etc six सामन्s are to be employed. However the statement 'पृष्ठ्यः षडहो बृहद्रथन्तरसामा

कार्यः' restricts it to two only. Here, the question is raised, whether both बृहद् and रथन्तर are to be employed on each day or these are to be employed on alternate days.

प्रकृतिभूतद्वादशाहिकपृष्ठ्यषडहगतषड्भ्योऽहर्भ्यः क्रमाद्रथन्तरबृहद्वैरूपवैराजशाक्वररैवताख्यानां पृष्ठस्तोत्रसाधनसाम्नां षण्णामपि प्राप्तौ तत्सर्वनिवृत्त्या द्वयोरेव प्राप्त्यर्थं ''पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्यः'' इति वैशेषिकवचनं श्रुतम् । तत्र किं प्रत्यहं बृहद्रथन्तरञ्चेति द्वयं द्वयं प्रयोज्यम्, उतैकस्मिन् बृहदन्यस्मिन्रथन्तरमित्येवं कार्यमिति **सन्देहे,**

Pūrvapakṣa : argues that the expression बृहद्रथन्तरसामा is द्वन्द्वगर्भबहुव्रीहि. Hence, both have to be employed on each day.

बृहच्च रथन्तरञ्च बृहद्रथन्तरे, बृहद्रथन्तरे सामनी यस्य सः बृहद्रथन्तरसामेति द्वंद्वगर्भबहुव्रीह्याश्रयणे द्वंद्वावगतान्योन्यसाहित्यस्य विवक्षितत्वात्प्रत्यहं द्वयं द्वयं कार्यमिति **प्राप्तम् ।**

Siddhānta : points out that at प्रकृति, बृहद् and रथन्तर are employed in अन्योन्य निरपेक्ष way. Therefore here also these have to be employed in the same way.

The expression बृहद्रथन्तरसामा is not द्वन्द्वगर्भबहुव्रीहि but अनेकपदबहुव्रीहि.

**सिद्धान्तस्तु,** प्रकृतौ बृहद्रथन्तयोरन्योन्यनिरपेक्षयोरेव पृष्ठस्तोत्रसाधनत्वात्तथैवेहापि चोदकप्राप्तनैरपेक्ष्याबाधेन कचित्प्रयोगोपपत्तौ तद्बाधायोगाद् द्वंद्वसमासमकृत्वैव बृहद्रथन्तरं साम यस्येत्यनेकपदबहुव्रीहिस्वीकारस्य युक्तत्वात् ।

### प्रायणीयोदयनीययोः एकादशिनानां विभागाधिकरणम् (10-6-4)

AT द्वादशाह elevan पशुs are prescribed on प्रायणीय and उदयनीय days. Here, the question is raised whether elevan पशुs are to be offered on both days or some पशुs on प्रायणीय and other पशुs on उदयनीय are to be offered.

द्वादशाहे ''एकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेरन्'' इति आद्यन्ताह्नोरेकादश पशव आलभ्यत्वेन श्रुताः । ते किमादावन्ते च सर्वेऽपि कार्याः, उत प्रायणीये केचिदुदयनीये चान्य इत्येवं विभज्यालभ्या इति **सन्देहे,**



Pūrvapakṣa : argues that प्रायणीय and उदयनीय are प्रधान. एकादशपशुs are enjoined for these. On the guideline 'प्रतिप्रधानं गुणावृत्तिः' elevan पशुs have to be offered on both प्रायणीय and उदयनीय days.

प्रायणीयोदयनीयौ हि प्रधानवाक्यत्वान्नैकादशिन्यङ्गत्वेन विधातुं युक्ताविति तयोरुद्देश्यत्वमवश्यमुपेयम् । ततश्च प्रकरणप्राप्तस्यापि द्वादशाहमात्राङ्गत्वस्य बाधेन प्रायणीयोदयनीयार्थतया एकादशिनी विधीयत इत्युद्देश्यगतत्वेन द्वंद्वावगतसाहित्यस्य विवक्षितत्वाच्चोदकबाधेन प्रतिप्रधानं गुणावृत्तिरिति न्यायेनोभयत्रापि सर्वेऽपि पशव आलब्धव्या इति **प्राप्तम् ।**

Siddhānta : points out that एकादशिनी is not enjoined for प्रायणीय and उदयनीय. It is a separate statement. प्रायणीय and उदयनीय only indicate the days on which these have to be offered. द्वन्द्वावगतसाहित्य is not intended here. Hence, all elevan need not of offered on each day. Some may be offered on one day and the others on one the other day.

**सिद्धान्तस्तु,** स्यादेवं यद्यत्र प्रायणीयोदयनीयानुवादेनैकादशिनविधिः स्यात् । न चैवम् । किन्तु प्रागेव वाक्यान्तरेणैकादशिनीं विधाय पश्चादिदमाम्नायते ''प्रायणीयोदयनीययोः'' इत्यादि । सा च वाक्यान्तरविहितैकादशिनी प्रकरणाद्द्वादशाहाङ्गत्वेनावगता कस्मिन्नहन्यनुष्ठेयेत्याकांक्षायां ''एकादशिनानालभेरन्'' इति यत्, तत् प्रायणीयदेशे उदयनीयदेशे चेति तदपेक्षितदेशविशेषविशेषणत्वविधिपरमिदं वाक्यमित्युद्देश्यत्वाभावेन विधिकोटिप्रविष्टतया द्वंद्वावगतसाहित्यस्याविवक्षितत्वात्प्रायणीये केचिदुदयनीये केचिदिति मिलित्वोभयत्रैकादशिनी कार्येति विभज्यैवालभ्याः पशव इति ।

### सर्वपृष्ठे देशविशेषव्यवस्थाधिकरणम् (10-6-5)

The statement 'विश्वजित् सर्वपृष्ठ' means रथन्तर etc सामन् have to be employed for पृष्ठस्तोत्र at विश्वजित्. Here the question is raised whether these are to be employed for पृष्ठस्तोत्र between माध्यन्दिनपवमानमैत्रावरुण- सामन्s or in the places as stated for these.

रथन्तरादिसर्वसामको विश्वजिदित्यर्थः । तत्र तानि किं माध्यन्दिनपवमानमैत्रावरुणसाम्नोरन्तराले पृष्ठस्तोत्रदेश एव गेयानि, उत यथावचनं देशव्यवस्थयेति **सन्देहे,**

Pūrvapakṣa : states that these have to be employed for पृष्ठस्तोत्र only.

पृष्ठशब्दोपात्तानां षण्णामपि साम्नामत्र विधानाद्विहितानां तेषां प्रयोजनाकांक्षायां निर्ज्ञातमेव पृष्ठ-स्तोत्रनिवृत्तिरूपं प्रयोजनं कल्पयितुं युक्तमिति पूर्वत्रैकादशिनानां विभज्य प्रयोगेऽपीह न तथा। किन्तु पृष्ठदेश एव सर्वाणि गेयानीति **प्राप्तम्।**

Siddhānta : points out that the statement 'वैरूपं होतुः पृष्ठे' informs that वैरूपसाम only has to be employed for पृष्ठस्तोत्र. The others are to be employed for other स्तोत्रs as per the statements 'रथन्तरं पवमाने कुर्यात्' 'आर्भवे बृहत्' 'मध्यतः इतराणि' etc.

**सिद्धान्तस्तु** सत्यमेवम्तथापि ''रथन्तरं पवमाने कुर्यात्। आर्भवे बृहत्। मध्यत इतराणि। वैरूपं होतुः पृष्ठे। वैराजं ब्रह्मसाम। रैवतमच्छावाकस्य'' इति वचनाद्वैरूपस्यैव पृष्ठसाधनत्वेन तदेव तत्र गेयम्। इतराणि तु यथावचनं स्तोत्रान्तरेषु गेयानि।

### वैरूपवैराजसाम्नोः पृष्ठकार्ये निवेशाधिकरणम् (10-6-6)

At षोडशीसंस्था of ज्योतिष्टोम which is a उकथ्यसंस्था विशेष, it is stated that 'उक्थ्यो वैरूपसामा' 'एकविंशः षोडशी वैराजसामा.'

Here, the question is raised whether these वैरूपवैराजसामन् are employed in the place of all other सामन्s or for पृष्ठस्तोत्र only.

ज्योतिष्टोमस्योक्थ्यरूपसंस्थाविशेषे षोडश्याख्यसंस्थाविशेषे च ''उक्थ्यो वैरूपसामा। एकविंशः षोडशी वैराजसामा'' इति श्रूयते। तत्र किं वैरूपवैराजसामनी सर्वसामकार्येषु निविशेते, किं वा पृष्ठस्तुतावेवेति **सन्देहे,**

Pūrvapakṣa : argues that there is no special ground to restrict it to पृष्ठस्तोत्र only. Hence, these have to be employed for all सामकार्य.

पृष्ठस्तुतावेवेत्यत्र विशेषहेत्वभावात्सर्वसामकार्येषु निविशेते।

Siddhānta : points out that at प्रकृति, 'रथन्तरसाम and बृहत्साम' are prescribed for पृष्ठस्तोत्र only. Hence, at विकृति also वैरूप and वैराज सामन्s have to be employed for पृष्ठस्तोत्र only in the place of रथन्तर and बृहत्.



**सिद्धान्तस्तु,** प्रकृतौ ''रथन्तरसामा सोमस्स्यात्'' ''बृहत्सामा'' इति निर्देशस्य पृष्ठस्तोत्रविषये दृष्टत्वादिहापि विकृतौ तेन लिङ्गेन पृष्ठस्तोत्रस्य बुद्धावारोहात्तद्द्वारा च साम्नोः क्रतुसम्बन्धोपपत्तेः पृष्ठस्तुतावेव रथन्तरादिसामान्तरनिवर्तकतया निविशेते इति।

### त्रिवृदग्निष्टोमः इत्यत्र स्तोमगतसंख्याविकाराधिकरणम् (10-6-7)

In the statement 'त्रिवृदग्निष्टोमः' the word त्रिवृत् occurs. Here, the question is raised whether the word 'त्रिवृत् conveys multiplied by three as in the case of त्रिवृद् रज्जुः and conveys all क्रतुसाधनs be taken multiplying by three or conveys स्तोत्रियनवक which is प्राकृतस्तोमविकार.

''त्रिवृदग्निष्टुदग्निष्टोमः'' इत्यत्र श्रुतस्त्रिवृच्छब्दः किं ''त्रिवृद्रज्जुः'' इत्यादाविव त्रैगुण्यवचन-स्सन्नतिदेशतः प्राप्तः सर्वक्रतुसाधनेषु त्रैगुण्यमापादयति, उत स्तोत्रीयानवकवाची सन् प्राकृत-स्तोमविकार इति **सन्देहे,**

Pūrvapakṣa : argues that the word त्रिवृत् be taken in the sense of त्रिगुण. Consequently यागसाधन पशु etc. be taken multiplied by three. This will provide increased amount of साधन.

पूर्वत्रेवेह प्राकृतलिङ्गविशेषाभावात् ''त्रिवृदग्निष्टुत्'' इति शास्त्रस्य बहुविषयत्वलाभाय चोदक-प्राप्तानामग्निष्टुद्यागसाधनानामशेषाणां पश्वादीनां त्रिवृच्छब्दितं त्रिगुणत्वं सम्पाद्यमिति प्राकृत-पश्वादिसङ्ख्या बाधनीयेति **प्राप्तम्।**

Siddhānta : points out that the word त्रिवृत् should not be taken in the etymological sense. It means स्तोत्रियानवक by रूढि.

It is a विकृति of पञ्चदशस्तोत्रियसंख्या at प्रकृति.

**सिद्धान्तस्तु,** ''त्रिवृद्रज्जुः'' इत्यादौ त्रिवृच्छब्दः त्रिभिरवयवैर्निर्वर्तित इत्यवयवार्थपुरस्कार-रूपयोगेन प्रवर्तते। न तु रूढ्या। स्तोत्रीयानवके तु ''त्रिवृद्बहिष्पवमानः'' इत्यादौ रूढ्या प्रवर्तते। योगाद्रूढेर्बलवत्त्वं षष्ठे रथकारनये स्थितमिति स्तोत्रीयानवकवाची।

### उभयसाम्नि बृहद्रथन्तरयोः समुच्चयाधिकरणम् (10-6-8)

At the संसव, गोसवयागs two सामन्s i.e. बृहद् and रथन्तर are prescribed.

Here, the question is raised whether both are पृष्ठस्तोत्रसाधन or only one and the other has to be employed for some other स्तोत्र.

''संसव उभे कुर्यात्'' इति ''गोसव उभे कुर्यात्'' इति ''अभिजितावेकाह उभे बृहद्रथन्तरे कुर्यात्'' इति संसवादौ यागे उभयसामत्वं श्रूयते । तत्रोभयोः पृष्ठस्तोत्रसाधनत्वम्, उतैकस्यैव । अन्यस्य तु स्तोत्रान्तरे निवेश इति **सन्देहे,**

Pūrvapakṣa : argues that at प्रकृति one only is observed. Hence, at विकृति also one of them be observed as पृष्ठसाधन and the other be taken to some other स्तोऽत्र.

प्रकृतावन्यतरस्यैवानुष्ठानेन प्रकृताविव चोदकेन बृहद्रथन्तरसाधनपृष्ठद्वयस्य विकल्पेन प्राप्ते-स्तदनुग्रहायैकमेव साम पृष्ठसाधनमन्यत्स्तोत्रान्तरे विश्वजितीव निवेशनीयमिति **प्राप्तम् ।**

Siddhānta : points out that there is no special ground to make these optional. Hence, both these have to be employed as पृष्ठस्तोत्रसाधन.

**सिद्धान्तस्तु,** विश्वजिति विभज्य प्रयोगो हि ''रथन्तरं पवमाने कुर्यात्'' ''बृहदार्भवे'' इत्यादि-वचनबलादुपेतः । न ह्यत्र तादृशं वचनमस्ति । अतोऽत्र विकल्पेन प्राप्तयोः समुच्चयमात्रं वचनेन क्रियते ।

### मध्वशनघृताशनयोः षडहान्ते अनुष्ठानाधिकरणम् (10-6-9)

At द्वादशाह 'त्रिवृत् पञ्चदशetc. six अहन्s are stated these are called पृष्ठ्य षडह.

At गवामयन etc विकृति also there are पृष्ठ्य षडहs. Among these the first is त्रिंश and last is त्रिवृत्. At प्रकृति the first is त्रिवृत् and last is त्रिंश.

Here the question is raised whether मध्वशन be made on त्रिंश day or at the end of षडह.

द्वादशाहे त्रिवृदादिस्तोमकानि षडहानि विहितानि । तानि त्रिवृदादित्रयस्त्रिंशान्तः पृष्ठ्यः षडह इत्युच्यते । तत्रापरं वाक्यं ''संस्थिते पृष्ठ्ये षडहे मध्वाशयेद्धृतं वा'' इति । गवामयनादिषु विकृतिषु पृष्ठ्यषडह नामकानि षडहानि सन्ति । तत्र त्रिवृदादिस्तोमानां प्रातिलोम्येनानुष्ठानं श्रुतम् । तत्र किं त्रयस्त्रिंशेऽहनि संस्थिते मध्वशनम्, उत षडहान्त इति **सन्देहे,**



Pūrvapakṣa : argues that at पृष्ठ्यषडह of द्वादशाह, मध्वशन is prescribed on त्रयस्त्रिंश अहन्. Hence, at विकृति also it has to be done on the same day.

प्रकृतिभूतद्वादशाहगतपृष्ठ्यषडहे त्रयस्त्रिंशे चरमेऽहनि संस्थिते मध्वशनं धृताशनं वा दृष्टमितीहापि त्रयस्त्रिंशाङ्गं मध्वशनादि त्रयस्त्रिंशान्त एव कार्यमिति प्रथमे त्रयस्त्रिंशेऽहनि संस्थिते एव मध्वशनादिकं कार्यम् ।

Siddhānta : points out that the statement 'संस्थिते षडहे मध्वाशयेत्' prescribes मध्वशन as द्वादशाहाङ्ग. This is वाक्यप्राप्त while अङ्गत्व of त्रयस्त्रिंश अहन् is स्थानप्राप्त. Between वाक्य and स्थान, the वाक्य is superior. Hence, मध्वशन has to be made at the end of षडह.

**सिद्धान्तस्तु,** ''संस्थिते षडहे मध्वाशयेत्'' इति वाक्येन द्वादशाहप्रकरणेन च मध्वशनं द्वादशाहाङ्गमवगम्यते । त्रयस्त्रिंशाङ्गत्वं तु प्रकृतावनुष्ठानसन्निधिरूपस्थानप्रमाणेन । तच्च वाक्य-प्रकरणाभ्यां दुर्बलम् ।

### षडहावृत्तावपि मध्वशनघृताशनयोः सकृदनुष्ठानाधिकरणम् (10-6-10)

At गवामयन, पृष्ठ्यषडहs are prescribed. It is also stated that 'आवृत्तं पृष्ठ्यं षडहमुपयन्ति' पृष्ठ्यषडह has to be repeated. Here, the question is raised whether मध्वशन has to be made only after repetetion or both at the first performance and after repetetion.

गवामयने पृष्ठ्यषडहनामानि षडहानि । तस्य पृष्ठ्यषडहस्य ''आवृत्तं पृष्ठ्यं षडहमुपयन्ति'' इत्यभ्यासः श्रूयते । पूर्वत्र ''संस्थिते पृष्ठ्यषडहे मध्वाशयेत्'' इति स्थितम् । तत्र किं पृष्ठ्यषडहस्या-वृत्तावभ्यासेन मध्वशनमप्यावर्तनीयम्, उत सर्वाभ्यासान्ते सकृदेवेति **सन्देहे,**

Pūrvapakṣa : argues that मध्वशन is षडहाङ्ग. Hence, when षडह is repeated the मध्वशन also has to be repeated.

पूर्वोक्तदिशा वाक्यप्रकरणाभ्यां मध्वशनस्य षडहाङ्गत्वात्तदावृत्तौ तदप्यावर्तनीयमेवेति **प्राप्तम् ।**

Siddhānta : points out the statement 'संस्थिते षडहे' indicate that मध्वशन has to be made after संस्था. The word संस्था means षडहविषय व्यापारोपरमः i.e. close of

षडह. When षडह is repeated it is not closed at the first performance. Hence, मध्वशन has to be made after repeated performance.

**सिद्धान्तस्तु**, ''संस्थिते षडहे'' इति मध्वशनं संस्थानिमित्तं चोद्यते । संस्था हि नाम षडह-विषयव्यापाराभावः । न हि नैरन्तर्येण पुनः पुनः क्रियमाणस्य षडहस्य व्यापारोपरमोऽस्ति । स एव हि मध्वशनस्य निमित्तमिति पूर्वप्रयोगान्ते निमित्ताभावात्सर्वप्रयोगान्त एव सकृन्मध्वशनमिति ।

**गवामयने मध्वशनघृताशनयोः प्रतिमाससमावृत्त्यधिकरणम्** (10-6-11)

At गवामयन which is to be performed for one full year. during one month five षडहs, are to be performed. Of these five, four are अभिप्लव षडहs and fifth is पृष्ठ्य षडह. When this monthly programme is repeated after पृष्ठ्यषडह of earlier month, अभिप्लवषडह of the next and then पृष्ठ्य षडह occurs. Here, the question is raised whether मध्वशन has to be made after the occurance of षडह in each month or at the end.

गवामयने हि संवत्सरसाध्ये एको मासः पञ्चषडहात्मकः । चत्वारोऽभिप्लवाख्याष्षडहाः । एकः पृष्ठ्यः षडहः । तस्मिन् मासेऽभ्यस्यमाने पृष्ठ्यषडहमनुष्ठाय पुनरभिप्लवषडहानामनुष्ठानं कृत्वा पुनः पृष्ठ्यषडहस्यानुष्ठानं यदा क्रियते तदा पृष्ठ्यषडहाभ्यासस्याभिप्लवषडहव्यवधानेन नैरन्तर्यं नास्ति । तत्रापि किं सर्वान्ते मध्वशनम्, उत प्रत्यभ्यासमिति **सन्देहे**,

Pūrvapakṣa : argues that on the basis of the intervention of अभिप्लव, the पृष्ठ्य षडह cannot be considered as closed, as there are further occurances of the same. Hence, मध्वशन has to be made after the last occurance of पृष्ठ्यषडह only.

सत्यप्यभिप्लवैर्व्यवधाने पश्चादपि षडहः करिष्यत इति तव्द्यापारोपरमो न वक्तुं शक्यत इति पूर्वन्यायेन सर्वान्ते स्यादिति **प्राप्ते**

Siddhānta : points out that the intervention by अभिप्लव is विजातीयव्यवधान. Hence, पृष्ठ्यषडह has to be considered as closed and मध्वशन has to be repeated whenever पृष्ठ्यषडह is repeated.

**सिद्धान्तः**, कालान्तरे षडहप्रयोगकरणेऽपि स करिष्यमाणः प्रयोगो विजातीयव्यवधाने सति न



पूर्वप्रयोगस्य संस्थां वारयितुमलम् । पूर्वतनषडहप्रयोगादनुपरम्य व्यापारान्तरारम्भायोगात्तदुपरमः प्रत्यक्ष इति निमित्तसत्वान्नैमित्तिकं मध्वशनं प्रत्यभ्यासं कार्यमिति ।

**द्वादशाहे सत्रिभिरपि मध्वशनाधिकरणम्** (10-6-12)

द्वादशाह is both सत्र and अहीन. At सत्रात्मकद्वादशाह there is पृष्ठ्य षडह. Here, the question is raised whether at the end of षडह. मध्वशन is to be made or not.

द्वादशाहो हि सत्रात्मकोऽहीनात्मकश्चेति । तत्र सत्रात्मके द्वादशाहेऽप्यस्ति पृष्ठ्यषडहः । तत्र ''संस्थिते पृष्ठ्यषडहे'' इति वाक्येन प्राप्तं मध्वशनं कार्यम्, उत नेति **सन्देहे**,

Pūrvapakṣa : argues that at सत्र all are यजमानs. These are दीक्षितs. दीक्षित has to observe ब्रह्मचर्य. मध्वशन is prohibited for ब्रह्मचारिन्. Hence, there cannot be मध्वशन here.

न कार्यं मध्वशनम् । सत्रे ऋत्विजां यजमानत्वेन सर्वेषां दीक्षितत्वाद्दीक्षितानां च ब्रह्मचर्यविधानाद् ब्रह्मचारिणश्च 'मधु मासं च वर्जयेत्'' इति मध्वशननिषेधात् ।

Siddhānta : points out that मधुनिषेध for ब्रह्मचारिन् is पुरुषार्थ while मध्वशन prescribed here is क्रत्वर्थ. Hence, मध्वशन can be made.

**सिद्धान्तस्तु** 'मधु मासं च वर्जयेद्ब्रह्मचारी' इति प्रत्यक्षवचनोक्तप्रतिषेधस्य पुरुषार्थत्वा-न्मध्वशनविधेः क्रत्वर्थत्वाद्भिन्नविषयत्वेनाविरोधादस्ति तत्रापि मध्वशनमिति ।

**मानसस्य द्वादशाहाङ्गताधिकरणम्** (10-6-13)

At द्वादशाह with reference to tenth अहन्. The statement 'मानसं प्राजापत्यं गृण्हाति' states मानसग्रहविधि. Here the question is raised whether this is a defferent याग from that of द्वादशाह or it is an अङ्ग of tenth अहन् of द्वादशाह.

द्वादशाहे दशमस्याह्नः प्रस्तावे श्रूयते प्रजापतये त्वा जुष्टं गृह्णामीति मानसं प्राजापत्यं गृह्णाति'' इति मानसाख्यग्रहविधिः श्रूयते । स किं द्वादशाहशब्दितयागापेक्षया यागान्तररूपमहरन्तरम्, उत दशमस्याह्नोऽङ्गभूतं ग्रहान्तरमिति **सन्देहे**,

Pūrvapakṣa : argues that the statement 'वाग्वै द्वादशाहो मनो मानसम्' indicates that like वाक् and मनस्, द्वादशाह and मानस are different यागs. Therefore मानस is a different याग.

''वाग्वै द्वादशाहो मनो मानसम्'' इति वाक्येन द्वादशाहस्य वाक्त्वेन संस्तवान्मानसस्य मनस्त्वेन संस्तवाद्वाङ्मनसयोरिव द्वादशाहमानसयोर्भेदोऽवगम्यत इति यागान्तरमिति **प्राप्तम्।**

Siddhānta : points out that the statement दशमे अहनि मानसाय प्रसर्पन्ति makes it clear that मानस is an अङ्ग of tenth अहन् of द्वादशाह.

**सिद्धान्तस्तु,** ''दशमेऽहनि मानसाय प्रसर्पन्ति'' इति वाक्येन दशमस्याह्नो मानसमङ्गमित्यवगमाव्द्यपदेशभेदस्य च द्वादशाहभूतावयविनो मानसग्रहस्यावयवत्वेनोपपत्तेर्दशमाह्नोऽङ्गम्। न यागान्तरं मानसग्रहणम्।

### सत्रस्य बहुकर्तृकत्वाधिकरणम् (10-6-14)

The statement 'ऋद्धिकामाः सत्रमासीरन्' mentions सत्रयाग. Here, the question is raised whether each ऋद्धिकाम has to separately perform सत्रयाग or many ऋद्धिकामs together.

''ऋद्धिकामास्सत्रमासीरन्'' इति श्रुतसत्राणि किमृद्धिकामा एकैकशः कुर्युः, किं बहवः संहत्य कुर्युरिति **सन्देहे,**

Pūrvapakṣa : argues that the प्रकृतियाग of सत्र i.e. ज्योतिष्टोम is एककर्तृक. Here, one कर्ता for each प्रयोग may be envisaged. The plural mentioned in the statement is अनुवाद of कर्ताs of many प्रयोगs. सत्र as such is एककर्तृक.

प्रतिप्रयोगमेकैककर्तृकत्वे नानाप्रयोगगतकर्तृबहुत्वानुवादकतया बहुवचनोपपत्तेः प्रकृतिभूतज्योतिष्टोमतश्चोदकप्राप्तैककर्तृकत्वस्य न बाध इति **प्राप्तम्।**

Siddhānta : points out that the plural of the verbal termination indicates that all ऋद्धिकामs together perform one सत्र.

**सिद्धान्तस्तु,** आख्यातगतसङ्ख्यायाः प्रयोगाङ्गतया विधेयसमर्पकत्वेन प्रवृत्तिविशेषकरत्वे



सम्भवति निरर्थकप्रायानुवादकत्वायोगाद्बहुकर्तृक एव प्रयोगो, नैककर्तृक इति चोदकप्राप्तैककर्तृकत्वबाधेनानेके सम्भूय कुर्युः सत्रमिति।

### सत्रे यजमानानामेव ऋत्विक्त्वाधिकरणम् (10-6-15)

In this adhikaraṇa the question whether at सत्र, यजमानs only play the role of ऋत्विक्s or separate ऋत्विक्s are employed is raised.

सत्रेषु किमार्त्विज्यमन्यैः कार्यम्, उत यजमानैरेवेति **सन्देहे,**

Pūrvapakṣa : argues that the statement 'ये यजमानाः ते ऋत्विजः' enjoins only आर्त्विज्यसंस्कार for यजमान. It does not state that यजमान himself plays the role of ऋत्विक्.

पूर्वत्र चोदकप्राप्तैककर्तृकत्वस्य बाधेऽपीह चोदकाबाधायान्यैरेवार्त्विज्यं कार्यम्। ''ये यजमानाः'' इति वाक्यं तु ''यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्'' इत्युक्तेर्यच्छब्दयोगाद्यजमानोद्देशेन तत्संस्कारकतयाऽऽर्त्विज्यविधिपरमिति **प्राप्तम्।**

Siddhānta : points out that आर्त्विज्य is क्रतूपकारार्थ but not यजमान संस्कारार्थ. Therefore, the statement 'ये यजमानाः ते ऋत्विजः' should be taken as enjoining ऋत्विकत्व for यजमान.

**सिद्धान्तस्तु,** आर्त्विज्यशब्दस्य ऋत्विक्कर्मभूताङ्गकलापपरत्वेन प्रकृतौ क्रतूपकारार्थस्येह यजमानसंस्कारार्थत्वेऽप्राकृतकार्यत्वापत्तेः। तस्माद्यत्तच्छब्दव्यत्यासेन ''ये ऋत्विजस्ते यजमानाः'' इति ऋत्विक्कार्ये आर्त्विज्ये यजमानाः कर्तृत्वेन विधीयन्त इति चोदकबाधेन यजमानानामेवार्त्विज्यमिति।

### सत्राहीनयोः विवेकाधिकरणम् (10-6-16)

In this adhikaraṇa the definition of सत्र and अहीन is discussed and it is stated that द्वादशाह is both सत्र and अहीन.

The definition of सत्र is stated as आसनोपायिचोदनान्यतरवत्वम्. The definition of अहीन - यजतिचोदनावत्वे सति अहर्गणत्वानेकयजमानत्वान्यतरवत्वम्.'

In द्वादशाह सत्रलक्षण is present as it has आसनचोदनs as 'द्वादशाहमृद्धिकामा आसीरन्.'

In द्वादशाह अहीनलक्षण is also present as there is यजति चोदना as 'द्वादशाहेन प्रजाकामं याजयेत्.'

Therefore, द्वादशाह is both सत्र and अहीन.

द्वादशाहो हि सत्रात्मकोऽहीनात्मकश्चेत्युक्तमष्टमस्य द्वितीये पादे **सत्रमहीनश्च द्वादशाहः** इत्यत्र। **द्वादशाहस्य सत्रत्वमुपेयम्** । कुतः ? ''य एवं विद्वांसः सत्रमासते'' ''य एवं विद्वांसः सत्रमुपयन्ति'' **इत्यासनोपायिचोदने** सत्रलिङ्गे ''चतुर्विंशतिपरमाः सप्तदशावरास्सत्रमासीरन्'' इति **यजमानबहुत्वे** च सति **सत्रशब्दाभिसंयोगदर्शनाद्द्वादशाहे**ऽपि सत्रशब्दप्रयोगे तयोरेव निमित्तत्वादिति द्वादशाहस्याहीनत्वमस्ति । कुतः ? ''द्विरात्रेण यजेत,'' ''त्रिरात्रेण यजेत'' इत्यादिरूपेण द्विरात्रादेरेकादशरात्रान्तस्य यजतिचोदनावत्वादहीनत्वम् ।

### पौण्डरीके सकृदेव दक्षिणादानाधिकरणम् (10-6-17)

At पोण्डरीकयाग which is to be performed for elevan days दक्षिणा of दशसहस्र cows and एकादशसहस्र अश्वs is prescribed. Here the question is raised whether this much दक्षिणा is to be given on each day or for the whole programme.

''पौण्डरीकेणैकादशरात्रेण स्वाराज्यकामो यजेत'' इति श्रुते पौण्डरीके एकादशरात्रात्केऽहीने ''अयुतं दक्षिणा । अश्वसहस्रमेकादशम्'' इति श्रुतम् । तत्र गावां दशसहस्रमेकादशमश्वसहस्रञ्च किं प्रत्यहं देयम्, उत सकृदिति **सन्देहे,**

Pūrvapakṣa : argues that दक्षिणा is प्रयोगाङ्ग. Therefore, on the guideline प्रतिप्रधानं अङ्गावृत्ति, it has to be given everyday.

दक्षिणा हि प्रयोगाङ्गकर्त्रानत्यर्था । तया सामर्थ्यात्प्रयोगाङ्गमपि । प्रतिप्रधानमङ्गान्तरवत्प्राप्तस्य द्वादशशतस्य स्थाने निविष्टं गवायुतमश्वसहस्रं चाऽङ्गान्तरात्प्रतिप्रधानमावर्तते ।

Siddhānta : points out that प्रयोग on elevan days is only one. Hence, offering दक्षिणा once is sufficient.



**सिद्धान्तस्तु,** प्रकृतौ दक्षिणायाः प्रधानाङ्गतया श्रुतावपि प्रधानमात्रस्याफलत्वेन साङ्गप्रधानप्रयोगस्यैव फलहेतुत्वेन प्रयोगद्वारैव दक्षिणा प्रधानाङ्गं वाच्यम् । प्रयोगश्चैकप्रयोगवचनेन परिगृहीतानामेकादशानामह्नामेक एव ।

### पौण्डरीके सर्वासां दक्षिणानां विभज्य नयनाधिकरणम् (10-6-18)

In this adhikarana, the question whether the दक्षिणा of thousand cows and ten thousand horses to be given at पौण्डरीक be placed at माध्यन्दिन सवन at each day or any one day or every thousand be placed for ten day and the last thousand on eleventh day.

पौण्डरीके गवामयुतं एकादशमश्वसहस्रञ्च किं प्रत्यहं माध्यन्दिने सवने नेतव्यम्, किं वा यत्र क चाहनि माध्यन्दिने सवने नेतव्यम्, उत प्रत्यहं सहस्रं सहस्रमिति विभज्य दशस्वहस्सु नेतव्यम् । एकादशेऽहनि त्ववशिष्टमश्वसहस्रमात्रं नेतव्यमिति त्रेधा **सन्देहे,**

Pūrvapakṣa : argues that at ज्योतिष्टोम which is प्रकृति, दक्षिणा is kept at माध्यन्दिनसवन only. Hence, at पौण्डरीकयाग which is विकृति, दक्षिणा has to be kept at माध्यन्दिन सवन.

सर्वमूलप्रकृतौ ज्योतिष्टोमे सोम आत्मीय एव माध्यन्दिने सवने नीतयैव दक्षिणयोप्रकृतो दृष्ट इति यत्सोमोपकारार्था दक्षिणा तदीये माध्यन्दिने नीतैव तदुपकारायालमितीह पौण्डरीके प्रत्यहं क्रियमाणसोमोपकारार्था दक्षिणा सर्वेषां माध्यन्दिने सवने नेतव्येति ।

Siddhānta : points out that द्वादशाह is प्रकृति of पौण्डरीक. At द्वादशाह दक्षिणा is given on twelve days by partitioning it. Hence, at पौण्डरीक also it has to be given by partitioning.

**सिद्धान्तस्तु, गणेषु द्वादशाहस्य** इत्युक्त्या पौण्डरीकस्य द्वादशाहो हि प्रकृतिः । तत्र ''अन्वहं द्वादशशतं ददाति'' इति विभज्य नयनं श्रुतमितीहापि चोदकानुरोधेन विभज्य नयनम् । किञ्च दक्षिणाया नयनं नादृष्टसंस्कारार्थम् ।

### मानवीषु पञ्चदशानामेव सामधेनीत्वाधिकरणम् (10-6-19)

At a particular विकृति, the ऋक्s related to मनु are to be employed as सामिधेनीs.

Here, the question is raised whether all ऋक्s related मनु are to be employed as सामधेनी, or fifteen only as laid down in प्रकृति.

कचिद्विकृतिविशेषे श्रूयते ''मानोर्ऋचस्सामिधेन्यो भवति'' इति। तत्र किं सर्वाः मनुसम्बन्धिन्यः संहितायां पठिताः सामिधेनीत्वेन वाच्याः, उत प्रकृतितश्चोदकप्राप्तपञ्चदशत्वसङ्ख्या यावतीभिः पूर्वते तावत्यो वाच्याः। नाधिका इति सन्देहे,

Pūrvapakṣa : argues on the basis of expressed statement all are to be employed.

प्रत्यक्षवचनेन सर्वासामृचामविशेषेण प्राप्त्यवगमात्प्राकृतसङ्ख्याबाधेन सर्वासामुपादानमिति प्राप्तम्।

Siddhānta : Siddhāntin points out that the ऋक्s are to be recited here for अग्नि सन्निधान. For this purpose three ऋक्s only were to be taken as per कपिञ्जलाधिकरणन्याय. However, as fifteen are prescribed at प्रकृति, at विकृति also fifteen सामधेनीs have to be employed.

सिद्धान्तस्तु, प्रत्यक्षवचनप्राप्तं मानवऋगुपादानमृचां न संस्कारार्थम्। येन संस्कार्याणां प्रधानत्वाद्यावत्संस्कार्यमुपादानं स्यात्किन्त्वग्निसन्निधानार्थम्। तत्र च कपिञ्जलाधिकरणन्यायेन तिसृणामृचामुपादाने प्राप्ते चोदकानुग्रहाय पञ्चदशानामुपादानम्। नाधिकानामिति।

### वाससि मानोपाहरणयोरनुष्ठानम् (10-6-20)

In this adhikaraṇa the putting of सोम in a cloth i.e. सोमस्य वाससि मान and उपावहरण i.e. taking it for अभिषव mentioned as per the statement 'वाससा मिनोति' 'वाससोपावहरति' मिनेति प्रक्षिपति। उपावहरति अभिषवार्थं नयति।

प्रकृतौ ज्योतिष्टोमे सोमस्य वाससि मानमुपावहरणञ्च क्रियते। कुतः? ''वाससा मिनोति'' ''वाससोऽपावहरति'' इति तद्वचनादिति सूत्रार्थः। मिनोति प्रक्षिपति। उपावहरति अभिषवार्थं नयतीत्यर्थः।

### अहर्गणे अर्थाद् वासोन्तरोत्पादनाधिकरणम् (10-6-21)

In this adhikaraṇa the question is raised whether for मान and उपावहरण every day a different वास is to be taken or one is sufficient.



पूर्वत्र वाससि मानं, वाससा चोपावहरणमिति स्थितौ, किं द्वादशाहादावहर्गणे प्रत्यहं मानोपावहरणार्थं वासोऽन्तरं सम्पाद्यम्, उत चोदकप्राप्तमेकमेवेति सन्देहे,

Pūrvapakṣa : argues that one वास is sufficient. It can be given as a gift to ग्रावस्तुत् after utilising on all required days.

ग्रावस्तुते वाससो दानस्य प्रतिपत्तित्वान्निरशेषं कृतकार्यस्यैव वाससः प्रतिपत्तेर्युक्तत्वेन सर्वान्तेऽपि करणे दोषाभावादिति प्राप्ते

Siddhānta : points out that giving the cloth to ग्रावस्तुत् is not प्रतिपत्तिकर्म. It is for दृष्टार्थ of encouraging ग्रावस्तुत्. Therefore every day a separate cloth has to be taken for उपावहरण.

**सिद्धान्तः**, स्यादेवं, यदि वासोदानं प्रतिपत्तिस्स्यात्। न चैवम्। किन्तु ग्रावस्तुतोऽब्रुवाणस्योत्साहजननेन दृष्टार्थतालाभात् ''ग्रावस्तुते दद्यात्'' इति चतुर्थीश्रवणाच्च ग्रावस्तुदर्थमेव दानमित्यर्थादुपावहरणार्थं प्रत्यहं वासोऽन्तरं सम्पाद्यमिति।

### उपावहरणार्थमेव वासोन्तरोत्पादाधिकरणम् (10-6-22)

In the earlier adhikaraṇa it is stated that for उपावहरण a different cloth should be taken. Here, the question is raised whether this cloth be taken at the same time or later.

पूर्वत्राहर्गणे उपावहरणार्थं वासोऽन्तरं सम्पाद्यमित्युक्तम्। तत्किं वाससि मानकाल एव सम्पाद्यम्, उतोपावहरणकाल इति सन्देहे,

Pūrvapakṣa : states that at the time of मान only the cloth required for उपावहरण also be taken.

प्रकृतौ क्रयकाले यस्मिन् वाससि मानं कृतं तेनैव वाससाऽभिषववेलायामुपावहरणं कृतमिति मानकाले सम्पादितवाससैवोपावहरणस्य प्रकृतौ दर्शनाद्यथाप्रकृति विकृतावप्यहर्गणे मानकाल एव वासोऽन्तरं सम्पाद्यमिति प्राप्तम्।

Siddhānta : points out that the cloth required for उपावहरण should be taken after the सोम is placed in the cart.

**सिद्धान्तस्तु,** मानोपावहरणयोर्वासस एकत्वेन मानकालीनत्वमुपावहरणवासस आर्थिकमेव। न शास्त्रीयम्। ''वाससोऽपावहरति'' इत्येव श्रवणात्। ततश्च प्रकृतावार्थिकस्य विकृतावनतिदेशादेकस्मिन् वाससि मित्वोपनह्य शकटे स्थापितस्य तस्य सोमस्योऽपावहरणवेलायां वासोऽन्तरापेक्षायां तदैव तदुत्पाद्यम्। न मानकाल एवेति।

**इति दशमाध्यायस्य षष्ठः पादः**

## दशमाध्याये सप्तमः पादः

### ज्योतिष्टोमे प्रत्यङ्गं हविर्भेदाधिकरणम् (10-7-1)

The statement 'अग्नीषोमीयं पशुमालभेत' prescribes पशु as हविर्द्रव्य. Here, the question is raised whether the entire पशु is हविर्द्रव्य or हृदय etc अङ्गs.

''अग्नीषोमीयं पशुमालभेत'' इति श्रुतः पशुः किं कृत्स्नोऽप्येकं हविः, उत पश्ववयवो हृदयादिरेव हविरिति **सन्देहे,**

Pūrvapakṣa : argues that the तद्धित suffix indicates that the entire पशु is related with देवता as offering. The statement 'हृदयस्य अग्रे अवद्यति' prescribes हृदय etc places for अवदान setting aside मध्य and पूर्व places prescribed at प्रकृति and व्यवदान.

कृत्स्नपशोरेव तद्धितेन देवतासम्बन्धोक्तेः कृत्स्नपशुरेकमेव हविः।

Siddhānta : points out that at प्रकृति, अवदान is prescribed as हविस्संस्कार. The statement 'हृदयस्याग्रे अवद्यति' prescribes अवदान संस्कार and indicates that हृदय etc are हविस् but not पशु. देवतासम्बन्ध for पशु is as हृदयादिहविःप्रकृति. In view of this हृदय etc constitute हविस् but not the whole पशु.

**सिद्धान्तस्तु,** प्रकृतौ हविस्संस्कारकतया श्रुतमवदानमिह ''हृदयस्याग्रेऽवद्यति'' इति हृदयादिषु श्रूयमाणं मांसविशेषरूपाणां हृदयादीनामेव हविष्ट्वमवगमयति। न पशोः। तस्य देवतासम्बन्धोऽपि हृदयादिहविःप्रकृतित्वेनैव। न हविष्ट्वेन।



### पशोर्हृदयादिभिः अङ्गैः विशेषैरेव यागानुष्ठानाधिकरणम् (10-7-2)

In the earlier adhikaraṇa it was concluded that the अङ्गs of पशु are हविर्द्रव्य. Here, the question is raised whether any one अङ्ग is हविस् or all अङ्गs are हविस् or हृदय etc particular अङ्गs are हविस्.

पूर्वत्र पश्वङ्गान्येव हवींषीति सामान्येनोक्तम्। तत्र किं यत्किञ्चिदेवाङ्गं हविः, उत सर्वाण्यपि, अथ हृदयादीन्येवेति **सन्देहे,**

Pūrvapakṣa : argues that the statement 'पशुं विशस्ति' indicates that पशु is यागसाधन through its अङ्ग. This requirement will be satisfied even if one अङ्ग is offered as हविस्. Therefore any one अङ्ग may be offered as हविस्.

ii) पशु has देवतासम्बन्ध through अवयवs. अवयवी is व्यासज्यवृत्ति in all अवयवs. Hence, all अवयवs constitute हविस्.

''पशुं विशास्ति'' इत्यादिविशसनादिवाक्यावगतं पशोरवयवद्वारकं यागसाधनत्वमेकेनावयवेन यागे कृतेऽपि निर्वहतीति नानेकैस्समुदितैस्तदनुष्ठानं युक्तम्। हृदयादिग्रहणं त्ववयवमात्रोपलक्षणार्थम्। न तु तेषां यागसाधनत्वसिध्द्यर्थमिति यत्किञ्चिदेकमङ्गं हविरित्येकः **पूर्वपक्षः।** अवयविनस्सर्वावयवेषु व्यासज्यवृत्तित्वात्सर्वाण्यप्यङ्गानि हवींषीति सर्वैरपि यष्टव्यमिति **द्वितीयः।**

Siddhānta : points out that though all अङ्गs can be हविस्. अवदानरूपसंस्कार is stated for हृदय etc select अङ्गs. Hence, these only are to be offered as हविस्.

**सिद्धान्तस्तु,** यदा हि विशासनश्रवणात्पशोर्न हविष्ट्वेन देवतासम्बन्धः। अपि तु हविःप्रकृतित्वेनैवेत्यवगम्यते। तदाऽस्ति यद्यप्यविशेषात्सर्वेषामवयवानां हविष्ट्वप्रसक्तिः। तथापि हृदयादिष्वेव यागार्थद्रव्यसंस्कारत्वेनावधृतावदानदर्शनात्तेषामेव हविष्ट्वं सिद्धमिति तद्द्वारैव पशोर्यागसाधनत्वोपपत्तावङ्गान्तराणां हविष्ट्वकल्पने प्रमाणं नेति हृदयादिभ्यः परिगणितेभ्य एवावदानम्। नाधिकेभ्य इति।

### ज्योतिष्टोमे अनिज्याशेषैस्त्र्यङ्गैः स्विष्टकृद्धोमाधिकरणम् (10-7-3)

At अग्नीषोमीय the statement 'त्र्यङ्गैःस्विष्टकृतं यजति' occurs. Here, the question is raised whether the three अङ्गs be selected from हृदय etc eleven अङ्गs or different from these.

अग्नीषोमीयपशावेव ''त्र्यङ्गैस्स्विष्टकृतं यजति'' इति श्रूयते। तत्र किं हृदयादिष्वेवैकादशस्वङ्गेषु यैः कैश्चिदङ्गैः स्विष्टकृद्यागः कार्यः, उत हृदयादिभ्य एकादशभ्योऽन्यैर्दोःप्रभृतिभिस्त्र्यङ्गैरिति **सन्देहे,**

Pūrvapakṣa : argues that at प्रकृति it is stated that 'सकृदुत्तरार्धात् स्विष्टकृतं यजति' i.e. उत्तरार्ध of इज्याशेष be offered at स्विष्टकृत्. Hence, at विकृति also इज्याशेष of हृदय etc हविस् be offered. This इज्याशेष be taken from हृदय etc three अङ्गs only.

प्रकृतौ ''सकृदुत्तरार्धात्स्विष्टकृतेऽवद्यति'' इति वचनादिज्याशेषस्य पुरोडाशस्योत्तरार्धादवदाय स्विष्टकृद्यागः कृत इतीहापि चोदकाबाधायेज्याशेषैर्हृदयादिभिरेव। तत्र सर्वैः स्विष्टकृद्यागे प्राप्ते, ''अङ्गैः कार्य इति यत्तत् त्रिभिरेव'' हृदयादीनां मध्य एव त्र्यङ्गानामुत्तरार्धादवदाय स्विष्टकृद्यागः कार्य इति वक्तुं त्र्यङ्गैरिति वचनं। न त्वङ्गान्तरैरिति वक्तुमिति **प्राप्तम्।**

Siddhānta : points out that the statement त्र्यङ्गैः स्विष्टकृते यजति occurs after दोष्णः 'पूर्वार्धात् अग्नये समवद्यति' 'गुदस्य मध्यात्' श्रोण्या जघनतः.' From this it is clear that अनिज्याशेष of three अङ्गs i.e. दोः etc. are prescribed for offering at स्विष्टकृत्.

''दोष्णः पूर्वार्धादग्नये समवद्यति'' ''गुदस्य मध्यतः'' ''श्रोण्या जघनतः'' इत्युक्त्वा ''त्र्यङ्गैस्स्विष्टकृतं यजति'' इति श्रुतवाक्यशेषेणानिज्याशेषाणामेव स्विष्टकृत्साधनत्वेन विधानात्तैरेव स्विष्टकृद्यागः कार्यः।

### अध्यूध्न्याः इडाभक्ष विकारताधिकरणम् (10-7-4)

At दैक्षपशु it is stated that 'अध्यूध्नीं होत्रे हरति' अध्यूध्नी is मांसविशेष. Here, the question is raised whether this अध्यूध्नी replaces प्राकृत इडाभक्ष or not.

दैक्षपशावेव श्रूयते ''अध्यूध्नीं होत्रे हरति'' इति। अध्यूध्नी मांसविशेषः। सेयमध्यूध्नी प्राकृतेडाभक्षस्य निवर्तिका, अथ नेति **सन्देहे,**

Pūrvapakṣa : argues that putting हृदय etc इज्याशेष in इडापात्र it is stated that 'अनस्थिभिः इडां वर्धयति' अध्यूध्नी which is अनस्थिमांस विशेष and is अनिज्याशेष. Hence this is also included in इडा. This इडा is to be eaten by sharing by ऋत्विक्s. In the distribution इडा अध्यूध्नी may be allotted some time to होता and sometime to others. The statement 'अध्यूध्नी होत्रे हरति' makes it compulsory for होता. Hence, अध्यूध्नी is not विकार of इडाभक्षण.



**पूर्वपक्षः,** हृदयादीनीज्याशेषानिडापात्रे निक्षिप्य ''अनस्थिभिरिडां वर्धयन्ति'' इतिवचनेनानस्थिशब्दितमांसविशेषैरिडाभिवृद्धिश्रवणेनानिज्याशेषा अपि तत्र निक्षिप्यन्तो तथा चाध्यूध्न्यपीडायामन्तर्भूता। सा चेडायामृत्विग्भिर्विभज्य भक्ष्यमाणायां कदाचिद्धोतृभागे स्यात्। कदाचिदन्यस्येत्येवमनियमेन होतुः प्राप्ता सती होतुरेव। नान्यस्येत्यनेन वचनेन नियम्यते।

Siddhānta : points out that अध्यूध्नी is not one of the items put in इडापात्र. It is not mentioned among हृदय to वनिष्ठु that are to be put in इडापात्र. It is separately enjoined at विकृति by the statement अध्यूध्नी होत्रे हरति. Hence, it is विकार of प्राकृत इडाभक्षण.

**सिद्धान्तस्तु,** स्यादेवं यदि ''अनस्थिभिः'' इति वाक्यं विधिः स्यात्। न चैवम्। तस्य ''वर्धयन्ति'' इति वर्तमानसरूपत्वेनानुवादत्वात्। तत्र हृदयादिवनिष्ठ्वन्तानीडायां प्रास्यतीत्युक्तहृदयादिवनिष्ठ्वन्तेषु चाध्यूध्न्या अपाठेनानस्थिवाक्येनानुवादायोगात्। होत्रे हरन्ति यत्तदध्यूध्नीमित्यपूर्वतयेडाभक्षणकार्ये विधानाद्भवति तद्विकारोऽध्यूध्नी इति।

### वनिष्ठोः भक्षविकारताधिकरणम् (10-7-5)

At दैक्षपशु the statement 'वनिष्ठुमग्नीधे हरति' occurs. वनिष्ठु is वपासमीपवर्ती मांसविशेष. Here, the question is raised whether वनिष्ठु is प्राकृतभक्षण विकार or not.

दैक्षपशावेव ''वनिष्ठुमग्नीधे हरन्ति'' इति श्रूयते। वनिष्ठुर्नाम वपासमीपवर्ती मेदोऽपरपर्यायो मांसविशेष इत्याहुः। तत्र किं वनिष्ठुरग्नीधश्चोदकप्राप्तो भक्षणस्य विकारः, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that वनिष्ठु is one of the items that is put in इडापात्र. Consequently when इडा is to be shared by ऋत्विक् sometimes this portion may be alloted to अग्नीध and sometime not. In view of this the statement 'वनिष्ठु मग्नीधे हरति' makes it compulsory the allotment of वनिष्ठु to अग्नीध. Hence, it is not प्राकृतेडा भक्षविकार.

पूर्वत्राध्यूध्न्या इडायां प्राप्त्यभावेन होत्रिडाभक्षविकारत्वे पूर्वनयोक्तवाक्ये वनिष्ठोरिडायां प्रासनश्रवणेन ऋत्विग्भिरिडायां विभज्य भक्ष्यमाणायां, कदाचिदग्नीधः, कदाचिदन्यस्येत्यनियमे अग्नीध एवेति नियमार्थमिदं वचनमिति न तस्य प्राकृतभक्षविकारो वनिष्ठुरिति प्राप्ते

Siddhānta : points out that वनिष्टु is not put in इडापात्र as one of the items of इडा for भक्ष but for इडासंस्कार. However, it is enjoined in the place of प्राकृतभक्षण at विकृति.

**सिद्धान्तः**, स्यादेवं वनिष्ठोरिडायां प्रासनं भक्षार्थं स्यात् । न चैवम् । किन्तु ''मेदसोऽपस्तृणाति'' ''मेदसाऽभिघारयति'' इति वचनेनेडासंस्कारार्थमेवेत्यप्राप्ता वनिष्ठुरपूर्वत्वात्प्राकृतभक्षणकार्येऽग्नीधो विधीयत इत्यध्यूध्नीव भवति तद्विकार इति ।

### मैत्रावरुणस्यापि शेषभक्षास्तित्वाधिकरणम् (10-7-6)

At दैक्षपशु there is ऋत्विक् called मैत्रावरुण who has to perform प्रैष and अनुवचन. Here, the question is raised whether he has इडाभक्ष or not.

दैक्षपशावेव होतृगणस्थप्रैषानुवचनकर्ता मैत्रावरुणनामाऽस्ति कश्चिदृत्विक् । तस्य किमिडाभक्षोऽस्ति, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that at प्रकृति it is stated that 'यजमानपञ्चमाः भक्षयन्ति.' For मैत्रावरुण इडाभक्ष is not stated. Hence, at विकृति also he has no इडाभक्ष.

प्रकृतौ ''यजमानपञ्चमा भक्षयन्ति'' इति यजमानस्याध्वर्य्वादिऋत्विक्चतुष्टयस्य चेडाभक्षवचनेन मैत्रावरुणस्य प्रकृतौ भक्षाभावेन चोदकतोऽस्य भक्षप्राप्तेरभावात्तत्स्थाने विधीयमानमिडाभक्षणं नास्ति मैत्रावरुणस्येति **प्राप्तम् ।**

Siddhānta : points out that इडाभक्ष is for कर्तृसंस्कार. मैत्रावरुण performs अध्वर्युकार्य i.e. प्रैष and होतृकार्य i.e. अनुवचन. Hence, he has इडाभक्ष.

**सिद्धान्तस्तु, भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यादित्यत्रैवाध्याये द्वितीयपादे** कर्तृसंस्कारार्थं भक्षणमित्युक्ततयाऽध्वर्य्वादिसंस्कारार्थत्वादिडाभक्षणस्य मैत्रावरुणस्य च ''मैत्रावरुणः प्रेष्यति चानु चाह'' इत्यध्वर्युकार्ये प्रेषे हौत्रे कार्येऽनुवचने च विधानात्तत्कार्यापत्त्या तद्धर्मलाभान्मैत्रावरुणस्याप्यस्तीडभक्षः ।

### मैत्रावरुणस्य एकभागताधिकरणम् (10-7-7)

In this adhikaraṇa the question is raised whether मैत्रावरुण has the भक्ष of both अध्वर्यु and होता or one only.



पूर्वत्र मैत्रावरुणेनऽध्वर्युहोत्रोः कर्मकरणादिडां भक्षयेदित्युक्तम् । स किमुभयोरपि भागौ भक्षयेत्, उतैकमिति **सन्देहे,**

Pūrvapakṣa : argues that since, मैत्रावरुण performs the work of both अध्वर्यु and होता he has to have the भक्ष of both of them.

पूर्वोक्तदिशा यदि मैत्रावरुणो होत्रादिकार्यकर्तृतया तद्धर्मं लभेत तर्ह्युभयकार्यकर्तृतयोभयोरपि भागौ द्वावपि भक्षयेदिति **प्राप्तम् ।**

Siddhānta : points out that since he is satisfied by one भक्ष at प्रकृति he will have one भक्ष only.

**सिद्धान्तस्तु,** प्राकृततृप्तिरूपसंस्कारार्थमप्राकृतेऽपि मैत्रावरुणे तृप्तिः । प्राकृती च तृप्तिरेकेनैव भागेन जातेति न भागद्वयप्राप्तिः । अत एकमेव भागं भक्षयेदिति ।

### प्रतिप्रस्थातुः भक्षाभावाधिकरणम् (10-7-8)

In this adhikaraṇa the question whether प्रतिप्रस्थाता has इडाभक्ष or not is raised.

दैक्षपशावेव किं प्रतिप्रस्थातुरिडायां भक्षोऽस्ति, **सन्देहे,**

Pūrvapakṣa : argues that प्रतिप्रस्थाता also performs अध्वर्युकार्य of वपाश्रपण. Hence, he also has इडाभक्ष.

पूर्वत्र यथा मैत्रावरुणस्याध्वर्य्वादिकर्मकरत्वादस्ति भक्षस्तथा प्रतिप्रस्थातुरपि वपाश्रपणरूपाध्वयुकार्यकरत्वादस्तीडायां भक्ष इति **प्राप्तम् ।**

Siddhānta : points out that वपा is completely burnt. Hence, it is not included in इडा. Therefore, there is no इडाशेष for भक्ष by प्रतिपस्थाता. He is not entitled for the भक्ष of the शेष of हृदय etc other points.

**सिद्धान्तस्तु,** वपाश्रपणरूपाध्वर्युकार्यकर्तृत्वेऽपि वपाया निश्शेषतो हुतत्वेनेडायामनुप्रवेशाभावान्नास्ति प्रतिप्रस्थातुर्भक्ष इति । न च तस्या वपाया निश्शेषत्वेऽपि हृदयादिपश्वङ्गशेषसत्त्वादिडायामस्तु भक्ष इति शङ्क्यम् । संस्काररूपं हि भक्षणम् । वपापूर्व हृदयादिपश्ववयवजन्यापूर्वयोर्भेदाद्धृदयाद्यपूर्वाद्यङ्ग द्रव्यशेषभक्षणेन वपापूर्वकर्तुस्संस्कार्यत्वायोगेनास्य हृदयादिशेषभक्षाप्राप्तेः ।

### गृहमेधीये अपूर्वाज्य भाग विधानाधिकरणम् (10-7-9)

At चातुर्मास्य in साकमेधीय पर्व गृहमेधीयेष्टि is prescribed. With reference to this इष्टि the statement 'आज्यभागौ यजति' occurs. Here, the question is raised in eight ways.

चतुर्मास्येषु साकमेधपर्वणि तदङ्गतया ''मरुभ्द्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदने'' इति विहितगृहमेधीयेष्टौ श्रूयते ''आज्यभागौ यजति'' इति। तत्र किं चोदकप्राप्तयोराज्यभागयोरनुवादमात्रम् ''आज्यभागौ यजति'' इत्येतत्, किं वा चोदकेन प्रत्यक्षवचनेन चैकाज्यभागात्मककर्मविधिः, उतार्थवादार्थम्, यद्वाऽधिकयोः कर्मान्तरयोर्विधानम्, अथ परिसङ्ख्या, आज्यभागेतरातिदेशो वा, चोदकेन तावेव प्राप्येते। नान्याङ्गानीति वा, अपूर्वो गृहमेधीयो वेत्यष्टधा **सन्देहः**।

Pūrvapakṣin formulates eight पूर्वपक्षs and gives the grounds for the same as under :

i) Since, आज्यभागs are available from चोदक, the statement of the same is अनुवाद at गृहमेधीयेष्टि.

ii) It is not proper to consider it as अनुवाद when it can be explained in a different way. On the basis of similarity between गृहमेधीय with दर्शपूर्णमास. आज्यभागs are enjoined for it both by चेदकवाक्य and प्रत्यक्षवचन.

iii) आज्यभागs are not enjoined for गृहमेधीय but these are stated by way of अर्थवाद for दर्शपूर्णमासविधि.

iv) अर्थवाद is required only when there is a new विधि. Hence, 'आज्यभागौ यजति' is कर्मान्तरविधि.

v) The statement of आज्यभाग at विकृति is intended to exclude प्रयाज etc other अङ्ग. Thus it is परिसङ्ख्यार्थ.

vi) आज्यभाग is stated by प्रत्यक्षवचन. Therefore there is no need to bring it by अतिदेश.

vii) 'प्रकृतिवद् विकृतिं कुर्यात्' is a general statement. In order to restrict it to आज्यभाग only at गृहमेधीय this statement is made.



**पूर्वपक्षस्तु,** i) चोदकेनाज्यभागयोः प्राप्तत्वात् ''आज्यभागौ यजति'' इत्यनुवादमात्रमित्याद्यः। ii) सत्यां गतौ न निरर्थकानुवादत्वं युक्तम्। आज्यभागौ तु चोदकेन प्रत्यक्षवचनेन च विधीयेते। iii) आज्यभागयोर्न गृहमेधीयेष्टौ यागव्यापारतया प्राप्तिः। किन्तु दार्शपूर्णमासिकविध्यन्तप्रशंसार्थमर्थवादत्वेन श्रवणम्। iv) यत्र किञ्चिद्विधीयते, तत्रैवार्थवादो युक्तः। ''आज्यभागौ यजति'' इति कर्मान्तरमिति **चतुर्थः**। v) पुनःश्रवणं चोदकप्राप्ताङ्गान्तरपरिसङ्ख्यार्थमाज्यभागावेव यजति गृहमेधीयेष्टौ। न प्रयाजाद्यङ्गान्तराणीति **पञ्चमः**। vi) च्छीघ्रं प्रवर्तमानेन वचनेनेज्यभागयोः प्राप्तत्वात्पश्चात्प्रवर्तमानश्चोदकस्तद्वर्जमेवेतराङ्गकलापं प्रापयतीति **षष्ठः**। vii) ल्लोके यथा ''ब्राह्मणान् भोजयेत्'' इत्युक्त्वा ''वसिष्ठविश्वामित्रभरद्वाजान्'' इत्युक्ते सामान्यवचनस्य ब्राह्मणशब्दस्य वसिष्ठादिष्वेवोपसंहारार्थं वसिष्टेत्यादिवचनं तथा ''प्रकृतिवद्विकृतिं कुर्यात्'' इति सामान्यवचनस्य प्रकृतिवच्छब्दस्य आज्यभागमात्रे उपसंहारार्थं ''आज्यभागौ यजति'' इति पुनर्वचनमिति **सप्तमः**।

Siddhānta : Siddhāntin concludes that गृहमेधीय याग is a new याग.

**सिद्धान्तस्तु,** ''ब्राह्मणान् भोजयेत्'' इत्यादौ सामान्यविशेषवचनयोर्द्वयोरपि प्रत्यक्षत्वेन सामान्यवचनस्य विशेषे उपसंहारेऽपि प्रकृते सामान्यवचनस्य कल्प्यत्वात्कल्पितस्यापि चोदकस्य प्रत्यक्षवचनोक्ताज्यभागमात्रपर्यवसाने कृत्स्नाङ्गप्रापकचोदककल्पनैव व्यर्था स्यात्। प्रकृतिसम्बन्धराहित्यलक्षणोऽपूर्वो गृहमेधीययाग इति।

### गृहमेधीये स्विष्टकृदाद्यनुष्ठानाधिकरणम् (10-7-10)

In this adhikaraṇa the question whether at गृहमेधीय, स्विष्टकृत् etc. be observed or not it raised.

गृहमेधीये स्विष्टृदिडादिकं कार्यम्, उत नेति **सन्देहे,**

Pūrvapakṣin argues that since, आज्यभागs satisfy the requirements there is no need of स्विष्टकृत् etc.

पूर्वनयोक्तदिशा आज्यभागाभ्यामेव निराकांक्षत्वेनाङ्गान्तराकांक्षाविरहात्पूर्वत्राश्रुतप्रयाजादीनामिव ''अग्नये समवद्यति'' ''इडामुपह्वयति'' इति भाष्योक्तवचनाभ्यां श्रुतानामपि स्विष्टकृदादीनामकर्तव्यतैवेति **प्राप्ते**

Siddhāntin points out that in addition to आज्यभाग, स्विष्टकृत् is expressly prescribed. Hence, it has to be observed.

**सिद्धान्तः**, आज्यभागवत्स्विष्टकृदादेरपि प्रत्यक्षवचनश्रुतत्वात्प्रकृतौ क्लृप्तोपकारत्वाच्च कार्यमेव स्विष्टकृदादि।

### गृहमेधीये प्राशित्रादि भक्षणाभावाधिकरणम् (10-7-11)

At गृहमेधीय, स्विष्टकृत् which is प्राकृताङ्ग is stated again. As per the guideline 'विकृतौ प्राकृताङ्ग पुनः श्रवणं परिसङ्ख्यार्थं whether प्राशित्रभक्षण चतुर्धाकरण etc. शेषकार्य*s* are *to be set aside or not,* is discussed in this adhikaraṇa.

स्विष्टकृतः प्राकृताङ्गस्य गृहमेधीये पुनःश्रवणं परिसङ्ख्यार्थमिति कृत्वा चिन्तापक्षे प्राशित्रभक्षण-चतुर्धाकरणादिशेषकार्याणां निवर्तकम्, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that इडोपाह्वान etc शेषकार्य*s* are expressly stated here. *Hence these cannot be set aside.*

पूर्वत्राऽज्यभागयोरिव स्विष्टकृदादेरपि श्रुतत्वाविशेषाद्यथा न बाधस्तथेह ''इडामुपह्वयते'' इती-डोपाह्वानस्य श्रुतत्वात्परिसङ्ख्यापक्षे तद्दर्शनविरोधान्नास्ति प्राशित्रादिशेषकार्यस्य परिसङ्ख्येति **प्राप्ते**

Siddhānta : points out that since, इडोपदर्शन is expressly stated it may not be set aside but प्राशित्रभक्षण चतुर्धाकरण etc others. are set aside.

**सिद्धान्तः**, प्राकृताङ्गस्विष्टकृतः पुनःश्रवणमङ्गान्तराणि परिसञ्चष्ट एव। इडोपदर्शनं तु प्रत्यक्ष-वचनप्राप्तत्वात्तन्मात्रुपपद्यते। अन्यस्य तु परिसङ्ख्येति।

### प्रायणीयातिथ्ययोः शंय्विडान्ततानियमाधिकरणम् (10-7-12)

At ज्योतिष्टोम the statement शंय्वन्ता प्रायणीया संतिष्ठते। न पत्नीः संयाजयन्ति occurs. The word शंय्वन्त means until the जप of the मन्त्र 'तच्छंय्वोरावृणीमहे' by होता. The statement 'इडान्ता आतिथ्या संतिष्ठते। न अनुयाजान् यजति' also occurs. Here, the question is raised whether this याग should be completed by performing शंय्वन्ता only or sometime upto शंय्विडान्ता and sometimes whole याग excluding पत्नीसंयाज and अनुयाज optionally.

ज्योतिष्टोमे श्रूयते ''शंय्वन्ता प्रायणीया सन्तिष्ठते। न पत्नीः संयाजयन्ति'' इति। ''तच्छंयोरा-



वृणीमहे'' इति होतृकर्तृकमन्त्रजपपर्यन्ता प्रायणीयेष्टिरित्यर्थः। तथा ''इडान्ताऽऽतिथ्या सन्तिष्ठते। नानूयाजान् यजति'' इति। कदाचिच्छंय्विडापर्यन्तानुष्ठानेन समापनम्। कदाचित्पत्नीसंयाजानुयाजवर्जं समस्तमपि कृत्वा समापनमित्येवं शंय्विडान्तकृत्स्नसंस्थाया विकल्पः, उत शंय्विडापर्यन्तानुष्ठानेनैव समापनमित्येवं **सन्देहे,**

Pūrvapakṣa : argues that the statement upto प्रायणीय and आतिथ्य excludes the अङ्ग*s* stated after these but the statement of the exclusion of पत्नीसंयाज and अनुयाज again indicates that the अङ्ग*s* other than these two have to be observed. This means that the entire याग excluding पत्नीसंयाज and अनुयाज is enjoined and the performance upto शंय्विडान्त is also enjoined.

The result is these have to be optionally performed.

पत्नीसयाजानूयाजवर्जितकृत्स्नसंस्थाविधानाच्छंय्विडान्तत्ववचनाच्चोभयोरुक्तदिशा विकल्प इति **प्राप्तम्।**

Siddhānta : points out that by परिसङ्ख्या the entire याग excluding पत्नीसंयाज and अनुयाज has to be observed. By the express statement शंय्विडान्त has to be observed. It is not proper to consider as optional the two that are brought by two unequal pramāṇa. Hence, शंय्विडान्त has to be observed. The statement 'न पत्नीः' etc has to be taken as अर्थवाद.

**सिद्धान्तस्तु,** लक्षणया हि परिसङ्ख्यया पत्नीसंयाजादिवर्जितकृत्स्नसंस्था विधेया। वचनवृत्त्या तु शंय्विडान्तसंस्था विहिता। न च विषमशिष्टयोर्विकल्पः सम्भवति। अष्टदोषदुष्टश्च विकल्पः। परि-सङ्ख्या च त्रिदोषा। परिसङ्ख्यार्थत्वे च ''सन्तिष्ठते'' इत्यनेनैकवाक्यतानापत्तिश्च। तस्मात्पत्नी-संयाजाद्यकरणाल्लाघवमिति शंय्विडान्तत्वस्तावकतया तद्विधिशेषत्वेन तदेकवाक्यतयाऽर्थवाद एवायम्।

### प्रायणीयातिथ्ययोः पूर्वाभ्यामेव शंय्विडाभ्यां संस्थाधिकरणम् (10-7-13)

At दर्शपूर्णमास there are two शंयू*s* viz. one before पत्नीसंयाज and the other after it. Similarly there are two इडा*s* viz. one before अनुयाज and the other after it.

Here, the question is raised whether प्रायणीय आतिथ्य be completed after earlier शंयू and इडा or later शंयू and इडा or later only or earlier only.

प्रायणीयातिथ्ययोः शंय्विडान्तत्वे सिद्धे सति प्रकृतिभूतदर्शपूर्णमासयोः द्वौ शंयू। पत्नीसंयाजेभ्यः पुरस्तादेकः। पश्चाच्चापरः। तथा इडे अपि द्वे। अनूयाजेभ्यः पुरस्तादेका। पश्चादपरा। तत्र किं पूर्वाभ्यां शंय्विडाभ्यामुत्तराभ्यां वा प्रायणीयातिथ्ययोस्समाप्तिरित्यनियमः, उतोत्तराभ्यामेवेति वा, अथ पूर्वाभ्यामेवेति वा नियमः इति सन्देहे,

Pūrvapakṣa : puts the position as under :

i) As there is no special reason to complete it either before or later, any one course may be followed.

ii) These be completed only after the later. If these are completed after earlier only, then, the पदार्थs after earlier and before the later will have been set aside.

पूर्वत्र शंय्विडान्तत्वकृत्स्नसंस्थयोर्विकल्परूपानियमाभावेऽपीह विशेषनियामकाभावादनियम इत्येकः पूर्वपक्षः। उत्तराभ्यामेव शंय्विडाभ्यां समाप्तिरिति द्वितीयः।

Siddhānta : points out that in the statement शंय्विडान्ताः प्रायणीयाः सन्तिष्ठन्ते? The verb संतिष्ठन्ते means completion. Hence, after the first शंय्वू and इडा only प्रायणीय and आतिथ्य be completed.

तस्मात्सन्तिष्ठतिशब्दोक्तोपरम एवात्र विधीयते। तथा च ''तच्छंयोरावृणीमहे'' इति शंयुरिडा-भक्षणं चोपलभ्यते तदैवोपरन्तव्यमिति प्रथमशंय्विडान्ताभ्यामेव संस्थितिः प्रायणीयादेरिति।

### षडुपसद इत्यादिना अपूर्वोपसत्कर्मविधानम् (10-7-14)

At ज्योतिष्टोम six उपसद्s are prescribed. With reference to these the statements 'अप्रयाजास्ताः अननुयाजाः' स्रुवेण आधारमाधारयति occurs. Here, the question is raised whether exepting अनुयाज all other procedure be followed or there is अपूर्वत्व of उपसद्s.

ज्योतिष्टोमे ''षडुपसद उपसाद्यन्ते'' इति विहितोपसदः प्रकृत्य श्रूयते ''अप्रयाजास्ता अननु-याजाः'' इति, तथा ''स्रुवेणाघारमाघारयति'' इति च। तत्र किं प्रतिषिद्धानूयाजादि वर्जयित्वाऽ-न्यत्सर्वं कार्यम्, उत गृहमेधीयाज्यभागन्यायेनापूर्वत्वमुपसदामिति सन्देहे,



Pūrvapakṣa : argues that आघारवाक्य is चोदकप्राप्ताघारानुवाद. There is no injunction of it. Hence, there is no अपूर्वत्व of उपसद्s. Therefore, excepting प्रयाज etc excluded all other proceedure has to be followed.

पूर्वत्र प्रायणीयातिथ्ययोः शंय्विडान्तत्वाङ्गरीतिविध्यभावाद्यथा नापूर्वता तथेहाप्याघारवाक्यस्य चोदकप्राप्ताघारानुवादत्वेन तद्विध्यभावादुपसदां गृहमेधीयेष्टेरिव पूर्वत्वं नेति चोदकानिवृत्तेस्तत्प्राप्तं सर्वं प्रतिषिद्धप्रयाजादि वर्जयित्वा कर्तव्यमेवेति प्राप्ते

Siddhānta : points out that आघारवाक्य is not अनुवाद. It is an injunction. Hence, there is अपूर्वत्व of उपसद्s.

सिद्धान्तः, न स्रौवाघारवाक्यमनुवादकम्। आनर्थक्यापत्तेः। ''यज्ञस्य प्रजात्यै'' इत्यर्थवाद-रूपवाक्यशेषबलेन ''आघारयति'' इति श्रूयमाणक्रियापदस्य विधित्वावगमात्।

### वारुणेन एककपालेन इत्यादिना अपूर्वस्य अवभृथस्य विधानाधिकरणम् (10-7-15)

With references to अवभृथेष्टि of ज्योतिष्टोम it is stated that 'अप्सुमन्तौ आज्यभागौ यजति' 'अपबर्हिषाः प्रयाजान् यजति' 'अपबर्हिषौ अनूयाजौ यजति'।

Among five प्रयाजs the fourth is बर्हि. Among three अनुयाजs the first is बर्हि.

अपबर्हि excluding the two बर्हिs stated above, the other प्रयाजs and अनुयाजs have to be observed. The expression अप्सुमन्तौ refers to two मन्त्रs starting from 'अप्स्वग्ने' and 'अप्सु मे.'

Here, the question is raised whether excluding बर्हिनामक प्रयाज and अनुयाज all other अङ्गs are to be observed or not.

ज्योतिष्टोमगतावभृथेष्टौ श्रूयते ''अप्सुमन्तावाज्यभागौ यजति'' इति। तथा ''अपबर्हिषः प्रयाजान् यजति'' इति। तथा ''अपबर्हिषावनूयाजौ यजति'' इति च। तस्यार्थः, प्रयाजपञ्चके चतुर्थः प्रयाजो बर्हिर्नामकः। अनूयाजत्रिके चाद्योऽनूयाजश्च। तदन्यप्रयाजानूयाजाः कार्या इति। तत्र किं बर्हिराख्यप्रयाजानूयाजौ वर्जयित्वाऽन्यत्सर्वमङ्गजातं कर्तव्यम्, उत नेति सन्देहे,

Pūrvapakṣa : argues that the statement 'अप्सुमन्तौ आज्यभागौ यजति' enjoins

अप्शब्दयुक्तमन्त्ररूपगुण. Hence, अवभृथेष्टि is not अपूर्वविधि. Consequently excluding प्रतिषिद्ध अङ्गs all others have to be observed.

गृहमेधीये प्राकृताङ्गपुनःश्रवणं गुणान्तरासंयुक्तं चेत्प्रधानकर्मणोऽपूर्वतापादकमित्युक्तम्। अत्र तु "आज्यभागौ यजति इति यत् तावप्सुमन्तौ" इत्यप्सुशब्दयुक्तमन्त्रवत्त्वरूपगुणविधानार्थतयोपपन्नं सन्नापूर्वतामवभृथेष्टेस्सम्पादयतीति प्रतिषिद्धवर्जं चोदकप्राप्तं सर्वमङ्गजातं कर्तव्यमिति **प्राप्तम्।**

Siddhānta : points out that the statement अप्सुमन्तौ etc. does not enjoin. मन्त्ररूपगुण as these are already brought in by स्थानप्रमाण. This statement enjoins आज्यभाग only. Since, प्राकृताज्यभागs are again enjoined here. The प्राकृताङ्गs are also brought here.

**सिद्धान्तस्तु,** स्यादेवं, यद्यवभृथे प्राकृताज्यभागानुवादेनाप्सुमत्वरूपगुणविधानं स्यात्। न चैवम्। विध्यर्थमेव "अप्सुमन्तावाज्यभागौ यजति" इति। तथा च क्लृप्तोपकारप्राकृताज्यभागाभ्यां पुनर्विहिताभ्यामेव वैकृतावभृथकथंभावाकांक्षाशान्तेर्नाङ्गान्तरापेक्षेति तत्प्रापकचोदकाप्राप्तेरपूर्वैवाव-भृथेष्टिः।

### वाजपेयादौ यूपादीनां खादिरत्वादिनियमाधिकरणम् (10-7-16)

At वाजपेय the statements 'खादिरो यूपो भवति' 'बृहत् पृष्ठं भवति' 'यवमयः पुरोडाशः भवति' occur. Here, the question is raised whether खादिर etc. directly stated in विकृति and पलाश etc brought by अतिदेश are to be optionally observed or the directly stated खादिर etc only are to be observed.

वाजपेये श्रूयते "खादिरो यूपो भवति" इति, "बृहत्पृष्ठं भवति" "यवमयः पुरोडाशः" इति। तत्र किं श्रुतस्य खादिरादेरतिदिष्टस्य च पलाशादेर्विकल्पः, उत श्रुतस्यैव नियम इति **सन्देहे,**

Pūrvapakṣa : argues that खादिर etc are not newly enjoined here. These statements are only अनुवाद of खादिर etc. At प्रकृति, खादिर and पलाश, बृहत् पृष्ठ and रथन्तरपृष्ट, यवमय and बर्हिर्मय are optionally enjoined. Hence, at विकृति also these have to be optionally observed.

यद्यत्र प्राकृताङ्गखादिरादिपुनःश्रवणं पूर्वत्राऽज्यभागयोरवभृथस्येव वाजपेयस्यापूर्वतार्थं विधायकं



स्यात्तदा खादिरयूपातिरिक्तं सर्वं न प्रवर्तेतेति नियोजनस्याप्यभावाद्यूपानर्थक्यं स्यात्। अतो नापूर्वत्वाय विधिः। किन्तु पूर्वत्र यथा "अप्सुमन्तौ" इति पदमनुवादस्तथेदमपि चोदकप्राप्तस्यानुवादमात्रम्। एवञ्च प्रकृतौ खादिरपालाशादेः बृहत्पृष्ठरथन्तरपृष्ठयोर्यवमयव्रीहिमयचर्वोर्विकल्पितत्वेन तथैवेह चोदक-प्राप्तेः पालाशादिना खादिरादेर्विकल्प इति प्राप्ते

Siddhānta : points out that खादिर, पलाश etc could have been brought to विकृति by अतिदेश. But express mention of खादिर, बृहत् पृष्ट and यवमय only at विकृति excludes पलाश. रथन्तरपृष्ठ and व्रीहिमय and restricts to former only. Hence, the latter are not to be observed optionally.

**सिद्धान्तः,** चोदकेन यथाप्रकृति खादिरपालाशादिप्राप्तौ खादिरादिनियमार्थत्वेन पुनःश्रवणस्य सार्थक्योपपत्तौ न निरर्थकानुवादमात्रत्वं कल्प्यमिति खादिरादिरेव नित्यतयाऽनुष्ठेय इति।

### काम्येष्टिषु प्राकृतद्रव्यदैवतस्य निवृत्यधिकरणम् (10-7-17)

At विकृति, it is stated that 'अग्नीषोमीयमेकादश कपालं निर्वपेत् श्यामाकान्.' Here, the question is raised whether the expressly stated श्यामक sets aside the व्रीहि of प्रकृति.

"अग्नीषोमीयमेकादशकपालं निर्वपेच्छ्यामाकान् वसन्ताय ब्रह्मवर्चसकामः" इति विकृतिविशेषे प्रत्यक्षश्रुतश्यामाकादिना चोदकप्राप्तं व्रीह्यादिकं बाधार्हम्, उत नेति **सन्देहे,**

Pūrvapakṣa : The injuction of विकृति elicits all अङ्गs of प्रकृति. Hence, there has to be either समुच्चय or विकल्प with the अङ्गs of विकृति while performing विकृति.

प्राकृतकृत्स्नाङ्गप्रापकेण चोदकेन व्रीह्यादेरपि प्राप्तेः शास्त्रेण प्राप्तस्य केनापि बाधानर्हतया द्वयो-स्तुल्यबलत्वेन विकल्पः समुच्चयो वा उपेयः।

Siddhānta : points out that only such अङ्गs are brought from प्रकृति for which corresponding are not stated at विकृति. In the present instance. Since श्यामाक is expressly stated at विकृति, व्रीहि is not elicited.

सिद्धान्तः । स्यादेवम् । यदि चोदकेन कृत्स्नप्राकृताङ्गानां प्राप्तिः स्यात् । न चैवम् । चोदको हि सर्वाण्यङ्गानि प्रापयितुं प्रवृत्तोऽपि व्रीह्याद्यंशे प्रत्यक्षश्रुतश्यामाकादिविरोधं पर्यालोच्य तव्द्यतिरिक्ताङ्गविषयो व्यवतिष्ठत इति शास्त्रेण व्रीह्यादेरप्रापणान्न विकल्पसमुच्चयावकाशः ।

**सौमापौष्णपशौ खादिरयूपस्य नियमाधिकरणम् (10-7-18)**

At सोमापौष्ण्यकाम्यपशुयाग, the statement 'औदुम्बरो यूपो भवति' prescribes औदुम्बरयूप.

Here, the question is raised whether प्राकृतखादिरयूप also is to be retained or not.

''सोमापौष्णं त्रैतमालभेत'' इति श्रुते काम्यपशुयागे श्रूयते ''औदुम्बरो यूपो भवति'' इति । तत्र किं प्राकृतः खादिरः प्राप्यते, अथ नेति **सन्देहे,**

Pūrvapakṣa : argues that there is no conflict in utilising two यूपs. On the contrary it will be strong. Hence, there has to be समुच्चय of two यूप.

यूपद्वये सुदृढं पशोर्बन्धनेन सर्वथाऽनपक्रमणरूपफलसद्भावाद्विरोधाभावाच्च न चोदकबाधो युक्त इति प्राकृतयूपोऽपि प्राप्यत इति समुच्चयो द्वयोर्यूपयोरिति **प्राप्ते**

Siddhānta : points out that by औदुम्बरवाक्य seperate यूप is not enjoined but औदुम्बरीद्रव्य for the यूप is enjoined. Hence, the question of समुच्चय of two यूपs does not arise.

**सिद्धान्तः,** खादिरो यूपोऽन्यनिरपेक्ष एव चोदकेन प्राप्यते । औदुम्बरयूपोऽपि प्रत्यक्षोपदेशेनान्यानपेक्ष एव प्राप्यते । प्रत्येकमेव तद्धितश्रवणात् । समुच्चयपक्षे द्वयोरपि निरपेक्षता बाध्येत । किञ्च चोदकप्राप्तस्य यूपस्य प्रकृतिद्रव्यविधानमौदुम्बरवाक्येन क्रियते । न यूपान्तरं विधीयते । अतोऽतिस्पष्ट एव बाध इति न समुच्चयशङ्कावकाश इति ।

**ब्रह्मवर्चसकामैः व्रीहिभिरेव यागाधिकरणम् (10-7-19)**

In the विकृतियाग, when for one of the प्राकृतद्रव्य, a गुण is enjoined, the proceedur to be adopted is discussed in this adhikarana. For instance, the



statement 'सोमारौद्रं चरुं निर्वपेत् शुक्लानां व्रीहीणाम्' prescribes शुक्लगुण for व्रीहि. Here, the question is raised whether it has to be treated as विकल्प with यव as in प्रकृति or शुक्लरूपगुण when व्रीहि option is followed or it is to be restricted to व्रीहि only.

यत्र विकृतियागोत्पत्तिवाक्ये प्राकृतानां वैकल्पिकद्रव्याणां मध्येऽन्यतमं गुणान्तरयुक्तं श्रूयते यथा ''सोमारौद्रं चरुं निर्वपेच्छुक्लानां व्रीहीणाम्'' इत्यादौ । तत्र किं व्रीहीणां चोदकप्राप्तयवैः प्रकृताविव विकल्पः, व्रीहिपक्षे च शौकल्यरूपगुणविधिः, उत व्रीहय एवेति नियम इति **सन्देहे,**

Pūrvapakṣa : argues that here, शुक्लरूपगुण is enjoined for the व्रीहि brought from the प्रकृति. व्रीहि itself is not enjoined. The यवs are also optionally prescribed at प्रकृति. Hence, at विकृति also व्रीहि and यव are to be optionally taken.

श्यामाकादिद्रव्यमात्रोपदेशस्थले प्राकृतद्रव्यबाधेऽपीह प्राकृतव्रीह्यनुवादेन शौक्ल्यगुणविध्यर्थत्वे पुनःश्रवणस्योपपन्नत्वेन व्रीहिविध्यभावान्न चोदकप्राप्तयवानां बाध इति तद्वद्विकल्पो व्रीहीणां यवैर्विकृतावपीति **प्राप्तम् ।**

Siddhānta : points out that here, शुक्लरूपगुण is not enjoined bringing the व्रीहि from प्रकृति. If one statement is taken as enjoining विकृतियाग and शुक्लरूपगुण for व्रीहि it will result in वाक्यभेद. Hence, शुक्लगुणविशिष्ट व्रीहिद्रव्यक याग is enjoined.

**सिद्धान्तस्तु,** स्यादेवं यदि प्राकृतव्रीह्यनुवादेन गुणविधिश्शङ्क्येत न चैवम् । एकेन वाक्येन कर्मविधानस्य प्राकृतव्रीह्यनुवादेन गुणविधेश्चाङ्गीकारे वाक्यभेदापत्तेः । अतो व्रीहिद्रव्यतत्सम्बन्धिशौक्ल्यगुणविशिष्टकर्मविधिरेवोपेय ।

**पश्चावदानतायाः सर्वाङ्गसाधारणताधिकरणम् (10-7-20)**

With reference to अग्नीषोमीयपशु it is stated that 'पश्चावत्तैव वपा कार्या.' Here, the question is raised whether पश्चावदान has to be made for वपा only or हृदय etc all other अङ्गs.

अग्नीषोमीयपशौ श्रूयते ''यद्यपि चतुरवत्ती यजमानः पश्चावत्तैव वपा कार्या'' इति । तत्र किं पश्चावदानं वपायामेव कार्यम्, उत हृदयाद्यङ्गेष्वपीति **सन्देहे,**

Pūrvapakṣa : argues that the statement पश्चावत्तैव वपा prescribes पश्चावदान for वपा only. वपायागापूर्व is distinct from हृदयादियागापूर्व. Hence, पश्चवदान is not to be made for हृदय etc other अङ्गs.

''पश्चावत्तैव वपा कार्या'' इति वाक्ये वपोद्देशेनैव पश्चावदानविधानान्नाङ्गान्तरेषु पश्चावदान-प्रसक्तिरस्ति ।

Siddhānta : points out that पश्चावदान is हृदय etc for all अङ्गs. By increasing उपस्तरण and अभिघारण पश्चवदान has to be made for all.

**सिद्धान्तस्तु,** पश्चावदानं न वपामात्रविषयम् । किन्तु हृदयादिसर्वहविर्विषयमिति ज्ञायते । तस्मात्तद्वचनान्यथाऽनुपपत्त्योपस्तरणाभिघारणान्यतरविवृध्या पश्चावदानं सर्वविषयम् ।

**इति सप्तमः पादः**

## दशमाध्याये अष्टमः पादः

### प्रदेशानारभ्य विधानयोः निषेधस्य पर्युदासताधिकरणम् (10-8-1)

At महापितृयज्ञ the statement 'नार्षेयं वृणीते' 'न होतारम्' occurs. Similarly the statement 'यजतिषु ये यजामहं करोति' 'न अनुयाजेषु येयजामहं करोति' occur without reference to any particular sacrifice.

Here, the question is raised whether there is विकल्प between वरण that is brought by अतिदेश and वरण निषेध or नियमेन वरणानुष्ठान. Similarly whether there is विकल्प between येयजामह and तत्प्रतिषेध or नियमेन ये यजामहानुष्ठान.

चातुर्मास्येषु साकमेघपर्वणि महापितृयज्ञे श्रूयते ''नार्षेयं वृणीते । न होतारम्'' इति । तथाऽनारभ्य श्रूयते ''यजतिषु येयजामहं करोति'' ''नानूयाजेषु येयजामहं करोति'' इति । तत्र किमतिदेशतः प्राप्तवरणस्य तत्प्रतिषेधस्य च विकल्पः, तथाऽनुयाजेषु येयजामहतत्प्रतिषेधयोर्विकल्पः, उत नियमेन वरण येयजामहयोरनुष्ठानमेवेति **सन्देहः** ।

Pūrvapakṣa : argues that if by connecting the नञ with उत्तरपद i.e. आर्षेय and होता, पर्युदास is made, then, it will result in लक्षणा as आर्षेयभिन्न, होतृभिन्न and



अनुयाजभिन्न. This requires the statement to be made as अनार्षेय and अननुयाज as in the instance of अनश्वः. Therefore प्रसज्यप्रतिषेध proceedure has to be followed by connecting the नञ with the verb वृणीते. It should be noted here that both प्रापक and प्रतिषेध are शास्त्र. The प्रतिषेध is प्रापकसापेक्ष. This means both are तुल्यबल. Hence, विकल्प has to be made between वरण and वरण प्रतिषेध.

**पूर्वपक्षस्तु,** नञ उत्तरपदेनान्वयमुपेत्य पर्युदासाश्रयणे हि नञ्पदस्य तदुत्तरपदस्य चार्षेय-वरणभिन्नं होतृवरणभिन्नमिति, तथाऽनुयाजभिन्नयजतिष्विति लक्षणा स्यात् । अनश्व इत्यादाविवा-नार्षेयमिति अननुयाजेष्विति च समासेन निर्देशापत्त्या भिन्नपदेन निर्देशायोगश्च स्यात् । अतः क्रियापदेनान्वयमुपेत्य प्रसज्यप्रतिषेध एवोपेयः । प्रापकप्रतिषेधयोर्द्वयोरपि शास्त्रत्वान्निषेधशास्त्रस्य प्रापकशास्त्रसापेक्षत्वेन द्वयोस्तुल्यबलत्वाच्च विकल्प इति ।

Siddhānta : points out that विकल्प is अष्टदोषदुष्ट. It will also result in पाक्षिकबाध of a नित्य. Hence, it is better to adopt पर्युदास proceedure by accepting लक्षणा.

**सिद्धान्तस्तु,** प्रतिषेधेऽष्टदोषदुष्टविकल्पापातान्नार्षेयमितिनित्यवच्छ्रुतस्यात्यन्तायुक्तपाक्षिकबाधा-पातात्पदद्वयलक्षणया अपि पर्युदासाश्रयणमेव युक्तमिति ''आर्षेयवरणवर्जं'' चोदकप्राप्तमाङ्गान्तरं सर्वं कार्यम् । तथाऽनुयाजभिन्नेषु यजतिषु ''येयजामहे'' इति पञ्चाक्षराण्युच्चारयेत् इति वाक्यार्थः ।

### न तौ पशौ करोतीत्यादि निषेधस्य अर्थवादताधिकरणम् (10-8-2)

At दर्शपूर्णमास after enjoining आज्यभाग by the statement 'अग्नीषोमाभ्यां यजति.' It is stated that 'नतौ पशौ करोति' then, it is further stated that 'न सोमे अध्वरे.' Here, the question is raised whether आज्यभाग निषेध for पशु is प्रतिषेध, पर्युदास or अर्थवाद.

दर्शपूर्णमासयोराज्यभागौ ''अग्नीषोमाभ्यां यजति'' इति विधाय ''न तौ पशौ करोति'' इति निषिध्य पश्चात् ''न सोमेऽध्वरे'' इत्येवमाम्नायते । तत्र नञ् ''न तौ पशौ करोति'' इत्यत्र निषेधार्थ इत्यविवादम् । तस्मान्न सोमेऽध्वर इत्यत्रैव नञ् किं प्रतिषेधः, पर्युदासो वा, अर्थवादो वेति **सन्देहः** ।

Pūrvapakṣa : argues that प्रतिषेध involves अष्टदोष and also leads to विकल्प. Hence, it has to be considered as पर्युदास.

प्रतिषेधस्य पूर्वत्रेवाष्टदोषदुष्टत्वाद्विकल्पादिप्रसङ्गात्पर्युदास इति प्राप्ते

Siddhānta : points out that it is अर्थवाद implying that just as there are no आज्यभाग at सोम, there are no आज्याभाग at पशु also.

तस्मात् ''न तौ पशौ'' इत्यस्यायमर्थवादः ''यथा सोमे नाज्यभागौ तथा पशावपि नाज्यभागौ'' इति ।

### नातिरात्रे षोडशिनं गृण्हातीत्यादि निषेधस्य विकल्परूपताधिकरणम् (10-8-3)

In a संस्था of ज्योतिष्टोम two statements occur 'अतिरात्रे षोडशिनं गृण्हाति' 'नातिरात्रे षोडशिनं गृण्हाति.' Here, the question is raised whether न अतिरात्रे is पर्युदास, प्रतिषेध or अर्थवाद.

ज्योतिष्टोमस्य संस्थाविशेषे श्रूयते ''अतिरात्रे षोडशिनं गृह्णाति,'' ''नातिरात्रे षोडशिनं गृह्णाति'' इति । तत्र किं नातिरात्र इति पर्युदासः, प्रतिषेधः, अर्थवादो वेति सन्देहे,

Pūrvapakṣa : argues that प्रतिषेध will involve अष्टदोष and will lead to विकल्प. Hence, it has to be considered either as पर्युदास or अर्थवाद.

अष्टदोषदुष्टविकल्पादिपरिहाराय पर्युदासः, अर्थवादो वाऽत्र नञ् इति प्राप्ते

Siddhānta : points out that पर्युदास will be either of the form of 'षोडशी' will be taken at a याग other than अतिरात्र or other than षोडशी be taken at अतिरात्र.

In either case it amounts to tthe ignoring of the injunction 'अतिरात्रे षोडशिनं गृण्हाति.' Therefore, it has to be considered as प्रतिषेध and ग्रहणाग्रहण विकल्प has to be accepted. निषेध has to be taken as implying that even if षोडशिग्रहण is not made there will be क्रतुसिद्धि and षोडशिग्रहणानुष्ठान as implying फलभूयस्त्व.

**सिद्धान्तः**, पर्युदासो हि ''अतिरात्रव्यतिरिक्ते षोडशिनं गृह्णाति'' इति वा, ''अतिरात्रे षोडशिव्यतिरिक्तमन्यद्गृह्णाति'' इति वा स्यात् । तत्रोभयत्रापि ''अतिरात्रे षोडशिनं गृह्णाति'' इति विध्यानर्थक्यं स्यात् । नाप्यर्थवादत्वम् । ''अतिरात्रे षोडशिनं यथा न गृह्णति तथाऽतिरात्रे गृह्णाति'' इति स्तुतेरसम्भवात् । तस्मात्प्रतिषेध इति ग्रहणाग्रहणयोरगत्या विकल्पः । प्रतिषेधवत्वाय तदग्रहणेऽपि क्रतुसिद्धिः । विध्यर्थवत्त्वायानुष्ठीयमाने फलभूयस्त्वं कल्प्यत इति व्यवस्थितविकल्पः ।



### अनाहुतिर्वै जर्तिलाश्चेत्यादिनिषेधस्यार्थवादताधिकरणम् (10-8-4)

At अग्निहोत्र. The statements 'जर्तिलयवाग्वा जुहुयात् गवीधुक्यवाग्वा जुहुयात्' and 'अथोस्वल्वाहुः अनाहुतयो वै जर्तिलाश्च गवीधुकाश्च' occur.

Here, the question is raised whether the 'जर्तिलयवाग्वा, is विधि and अनाहुतयो वै जर्तिलाः is निषेध or both these are अर्थवाद for the विधि 'पयसा अग्निहोत्रं जुहोति.'

''अग्निहोत्रं जुहोति'' इति विधाय श्रूयते ''जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा जुहुयात् न ग्राम्यान् पशून् हिनस्ति । नाऽरण्यान् । अथो स्वल्वाहुरनाहुतयो वै जर्तिलाश्च गवीधुकाश्च । पयसाऽग्निहोत्रं जुहोति'' इति । जर्तिला आरण्यास्तिलाः । गवीधुकाः आरण्यगोधूमाः । तत्र किं ''जर्ति लयवाग्वा'' इत्यादिर्विधिः, ''अनाहुतिर्वै'' इत्यादिस्तस्य प्रतिषेधः, उभावप्यर्थवादौ ''पयसाऽग्निहोत्रं जुहोति'' इत्यस्येति सन्देहे,

Pūrvapakṣa : argues that the statement अनाहुतयो etc. is प्रतिषेध of जर्तिलयवाग्वा etc. विधि. Consequently it leads to the विकल्प of जर्तिलयवाग्वा etc. with पयसा जुहोति.

पूर्वन्यायेन ''जर्तिलयवाग्वा वा जुहुयात्'' इति प्रत्यक्षलिङ्विहितजर्तिलादेः ''अनाहुतिः'' इति प्रतिषेधः । ततश्च ''पयसाऽग्निहोत्रं'' इति वाक्यान्तरविहितपयसा जर्तिलगवीधुकयवाग्वोर्विकल्प इति प्राप्ते

Siddhānta : points out that considering 'अनाहुतयः' etc as प्रतिषेध is not necessary to make जर्तिलयवाग्वा etc. विधि a विकल्प with 'पयसा जुहोति.' The विधि पयसा जुहोति' itself makes it optional. Hence, it has to be considered as अर्थवाद implying the निन्दा of जार्तिलयवागू etc. and the स्तुति of पयसा होम.

**सिद्धान्तः**, यद्ययं विकल्पार्थः ''अनाहुतिः'' इति प्रतिषेधस्तदा पयोविधिवाक्येनैव तयोर्जर्तिलादियवाग्वोः पाक्षिकत्वरूपविकल्पसिद्धेर्व्यर्थ एव प्रतिषेधः स्यात् । तस्माज्जर्तिलादिनिन्दाद्वारा पयोविध्येकवाक्यतया पयःस्तुत्यर्थत्वेनार्थवादः । ''जर्तिलगवीधुका नाहुतियोग्याः । अतः पय एव प्रशस्ततरम्'' इति पयोविधिस्तुत्यर्थमिति सर्वस्यैकवाक्यत्वसम्भवे वाक्यभेदाश्रयणायोगात्सर्वोऽप्ययं पयोविध्यर्थवाद इति ।

### त्रियम्बकादौ अभिधारणानभिधारणादीनामर्थवादाधिकरणम् (10-8-5)

At आधान the statements, 'होतव्यं न होतव्यम् इति मीमांसन्ते' and 'तूष्णीमेव होतव्यम्' occur.

At चातुर्मास्य, त्र्यम्बकपुरोडाशs are prescribed. With reference to these the statement 'अभिधार्या अनभिघार्या इति मीमांसन्ते ब्रह्मवादिनः' and 'अथोखल्वाहुः अभिघार्या एव' occur.

Here, the question is raised whether there is विकल्प of होम and होमनिषेध and अभिघारण and अभिघारणनिषेध or अनुष्ठान of these.

आधाने श्रूयते ''होतव्यमग्निहोत्रं न होतव्यं वेति मीमांसन्ते ब्रह्मवादिनः । तथा चातुर्मास्येषु त्र्यम्बकमन्त्रसम्बन्धेन त्र्यम्बकनामका बहव एककपालपुरोडाशा विहिताः । तत्र श्रूयते ''अभिघार्या अनभिघार्या इति मीमांसन्ते ब्रह्मवादिनः । तत्र किं होमाभिघारणयोर्विकल्पः, उत नियमेनानुष्ठानमिति **सन्देहे,**

Pūrvapakṣa : argues that there is no scope here to consider these as अर्थवाद. Hence, as both विधि and निषेध are stated, there has to be a विकल्प of these.

'न होतव्यम्' 'नाभिधार्या' इति तु नञ् प्रतिषेधार्थ एव । न मीमांसाविशेषणम् । तन्मात्रकोटिकमीमांसाऽयोगात् । अतो जर्तिलादिवाक्यवन्नार्थवादत्वमपीति विहितप्रतिषिद्धत्वाद्धोमाभिघारणयोर्विकल्पः । एवञ्च सति विकल्पेऽन्यतरपक्षपरिग्रहायानुष्ठानकाले प्राप्ता मीमांसाऽनूद्यते ।

Siddhānta : points out that the expression इति मीमांसन्ते indicates that these alternatives are only discussed but not enjoined. 'तूष्णीमेव होतव्यम्' is enjoined. 'होतव्यं न होतव्यम्' etc only अर्थवाद for this injunction.

**सिद्धान्तः,** ''होतव्यम्, न होतव्यम्'' । ''अभिघार्या'' ''नाभिघार्या'' इति वचनानि न विधिप्रतिषेधपराणि । होमाभिघारणतन्निषेधयोः मीमांसासम्बन्धित्वेन तद्विशेषणपरत्वस्य इतिशब्धबलेन स्पष्टत्वात् । अन्ते श्रुतं तूष्णीमेवेत्यादिवाक्यं त्वन्यपरत्वाद्विधायकम् । एवं च मीमांसाविशेषविषयतया प्रशस्तमित्येवं तत्स्तावकत्वेन सर्वोऽयं तच्छेषतयार्थवादः ।



### आधाने उपवादस्य विकल्पताधिकरणम् (10-8-6)

At आधान by the statement 'य एवं विद्वान् वारवन्तीयं गायति' वारवन्तीयसामगान is enjoined. Then, the statement 'उपवीता वा एतस्य अग्नयो भवन्ति यस्य अग्न्याधेये ब्रह्मा सामानि गायेत्' occurs. Here, the question is raised whether it is a प्रतिषेधविधि or अनुवाद.

आधान एव ''य एवं विद्वान् वारवन्तीयं गायति'' इत्यादिना वारवन्तीयसामगानं विधाय श्रूयते ''उपवीता वा एतस्याग्नयो भवन्ति । यस्याग्न्याधेये ब्रह्मा सामानि गायेत्'' इति । तत्रायं प्रतिषेधः किमनुवादः, उत प्रतिषेधविधिरेवेति **सन्देहे,**

Pūrvapakṣa : argues that here, there is no सामगानमात्रनिषेध but there is निषेध of ब्रह्मकर्तृकत्व of सामगान. This is not stated anywhere else. Hence, there is no scope for प्रतिषेध or पर्युदास. Therefore, it has to be considered as अर्थवाद of सामविधि in the form 'यतो ब्रह्मापि न गायति ततः प्रशस्तमिदम्.' In view of this, it is नित्यानुवाद like 'नान्तरिक्षे न दिवि चेतव्यः.'

नात्र सामगानमात्रं निषिध्यते । किन्तु ''ब्रह्मा'' इति श्रवणात् ब्रह्मकर्तृकता साम्नो निषिध्यते । तस्याश्चान्यतो न प्राप्तिः । सामगानस्योद्गातृसमाख्ययोद्गातर्येव प्राप्तेः । अतः प्रतिषेधपर्युदासयोरयोगात् ''यतो ब्रह्मापि न गायति ततः प्रशस्तमिदम्'' इति सामविधेरर्थवादोऽयं पूर्ववदेवेत्यर्थवादार्थे नित्यानुवादः

Siddhānta : points out that considering it as अनुवाद makes it purposeless. Hence, it has to be considered as सामगान निषेध only. The word ब्रह्मा may be taken in the sense उद्गाता also. This results in the position 'उद्गाता साम न गायेत्' but earlier it is stated that वारवन्तीयं गायति. Consequently it has to be a विकल्प of वारवन्ती सामगान and सामगाननिषेध.

**सिद्धान्तः,** अनुवादमात्रस्याऽनर्थक्यात् गाननिषेधविधिरेवायम् । ब्रह्मशब्दस्य ब्रह्मणपरत्वमादायोद्गातर्येव ब्रह्मशब्धसम्भवात्तदंशेऽनुवादः । तथा च ''यत् ब्रह्म उद्गाता साम न गायेत्'' इति निषेधात् ''वारवन्तीयं साम गायेत्'' इति विधानाच्च विकल्प इति ।

### दीक्षितो न ददातीत्यादिनिषेधस्य पर्युदासताधिकरणम् (10-8-7)

At ज्योतिष्टोम the statements दीक्षितो 'न ददाति, 'न जुहोति' 'न पचति' occur.

*Here, the question is raised*

*i) whether the प्रतिषेध of all पुरुषार्थ, क्रत्वर्थ, उपदिष्ट and अतिदिष्ट items is stated here.*

*ii) Or the प्रतिषेध of all other items excluding the expressly stated items.*

*iii) Or the प्रतिषेध of only पुरुषार्थ items.*

ज्योतिष्टोमे श्रूयते ''दीक्षितो न ददाति । न जुहोति । न पचति'' इति । तत्र किं सर्वेषामेव पुरुषार्थानां क्रत्वर्थानामुपदिष्टानामतिदिष्टानां च प्रतिषेधः, किं वा प्रत्यक्षोपदिष्टभिन्नानां सर्वेषाम्, यद्वा पुरुषार्थानामग्निहोत्रादीनामेवेति त्रेधा **सन्देहे,**

Pūrvapakṣa : i) argues there is no special reason to effect the प्रतिषेध of some item and not to effect प्रतिषेध of other items. Hence, it has to be considered that the प्रतिषेध of all items is stated here.

ii) The प्रतिषेध of other items than the expressly stated items is stated here.

अविशेषात्सर्वेषां प्रतिषेध इत्येकः **पूर्वपक्षः** । तदाह सूत्रे, **दीक्षितस्येत्यादि** । व्यक्तोऽर्थः । सर्वेषां प्रतिषेधे ''ग्रहैर्जुहोति'' इत्यादिप्रत्यक्षवचनविहितानां बलवत्वात्तदन्यसर्वप्रतिषेध इति द्वितीयः ।

Siddhānta : points out that there cannot be प्रतिषेध of क्रत्वर्थ items. Hence, प्रतिषेध of only पुरुषार्थ items is stated here. This प्रतिषेध is also क्रत्वर्थ as it is stated for the items that may have to be performed in the middle of क्रतु.

**सिद्धान्तस्तु,** प्रत्यक्षोपदिष्टकर्माद्यन्यसर्वनिषेधे क्रत्वर्थानामपि निषेधप्राप्त्या, तेषां विहितप्रतिषिद्धत्वाद्विकल्पः प्राप्नोति । स चाष्टदोषदुष्टः । तस्मात्पुरुषार्थानामेव निषेधः । न च तत्रापि विहितप्रतिषिद्धत्वादष्टदोषदुष्टो विकल्पः पुरुषार्थहोमादावपि प्राप्नोतीति शङ्क्यम् । पुरुषार्थतया विहितानामग्निहोत्रादीनां क्रतुमध्येऽप्यवश्यकर्तव्यतया प्राप्तानां प्रतिषेधः प्रकान्तक्रत्वर्थतया क्रियत इति भिन्नविषयतया विकल्पाप्रासक्तेः प्रतिषेध एवाश्रयणीयः । न पर्युदास इति ।



### वर्त्महोमादिभिः आहवनीयस्य बाधाधिकरणम् (10-8-8)

At ज्योतिष्टोम in the context of सोमक्रय the statement पदे जुहोति occurs. In the context of हविर्धान the statement वर्त्मनि जुहोति occurs. Similarly the statement गार्हपत्ये पत्नीसंयाजान् जुहोति occurs. Here, the question is raised whether these set aside आहवनीये जुहोति or there is विकल्प with it.

ज्योतिष्टशोमे सोमक्रये श्रूयते ''पदे जुहोति'' इति । तथा हविर्धानप्रवर्तने ''वर्त्मनि जुहोति'' इति, ''गार्हपत्ये पत्नीसंयाजान् जुहोति'' इत्यादि । तत्र किं पदादिना ''आहवनीये जुहोति'' इत्यनारभ्यश्रुताहवनीयस्य बाधोऽस्ति, उत विकल्प इति **सन्देहे,**

Pūrvapakṣa : argues that आहवनीये जुहोति is general provision 'पदे जुहोति' etc are special provisions. As both are expressly stated there has to be a विकल्प of these.

सामान्यविशेषशास्त्रयोस्तुल्यबलत्वाद्विकल्प इति **पूर्वपक्षः** ।

Siddhānta : points out that the general provision has to be applied to particular instances by लक्षणा while special provision directly applies to the cases concerned. Further the general provision has scope in other instances. It is सावकाश while special provision has no other scope. It is निरवकाश. Hence, पदे जुहोति etc. the special provisions set aside the general provision.

**सिद्धान्तस्तु,** होमसामान्ये श्रुतस्याहवनीयस्य पत्नीसंयाजादिहोमविशेषेषु लक्षणयैव प्राप्तिः । न श्रुत्या । तथा च सामान्यशास्त्रेण यावत्पत्नीसंयाजादिविशेषेषु लक्षणयाऽऽहवनीयः प्राप्यते तावदेव गार्हपत्यादिशास्त्रं श्रुत्योपात्तपत्नी संयाजादिषु गार्हपत्यं प्रापयदाहवनीयं रुणद्धीति विशेषेण सामान्यस्य बाधः । किञ्च सामान्यशास्त्रं विशेषशास्त्रादन्यत्र सावकाशम् । विशेषशास्त्रं तु निरवकाशम् । अतोऽपि तेन तस्य बाधो, न विकल्पः ।

### वैमृधादिषु साप्तदश्यविधेः वाक्यशेषताधिकरणम् (10-8-9)

The statement 'सप्तदश सामधेनीरनुब्रूयात्' occurs without reference to any particular sacrifice. At प्रकृतियाग, साप्तदश्य is set aside by पाञ्चदश्य and it has to

be brought by अतिदेश to मित्रविन्द etc. विकृति. However at some of these विकृतिs also साप्तदश्य is stated. Here, the question is raised whether the साप्तदश्य stated at विकृति is enjoined for it or it is merely अनुवाद of साप्तदश्य stated without reference to any particular reference.

''सप्तदश सामिधेनीरनुब्रूयात्'' इत्यनारभ्य श्रूयते । साप्तदश्यं प्रकृतौ पाञ्चदश्येन बाधितं सद्विकृतिभूतमित्रविन्दादौ निविशत इत्युक्तं विकृतिष्वपि कासुचित्पशुमित्रविन्दाध्वरकल्पादिषु प्रकरणे साप्तदश्यं श्रुतम् । तत्र किं विकृतिप्रकरणगतं सप्तदशसामिधेनीवचनं गृहमेधीयाज्यभागविधिवत्पशु-मित्रविन्दादेरपूर्वतापादकम्, उतानारभ्यविहितस्य साप्तदश्यस्य तत्रोपसंहारार्थमिति सन्देहे,

Pūrvapakṣa : argues that इतिकर्तव्यताकाङ्क्षा of विकृतिभावना is satisfied by seeking the सामधेनीs stated at विकृति only. Therefore, there is no need of bringing the same by अतिदेश.

वैकृता भावना हीतिकर्तव्यतामाकंक्षन्ती सन्निहिताः प्रकृतौ क्लृप्तोपकाराः सामिधेनीरुपादाय निराकांक्षा नाङ्गान्तरमपेक्षत इति चोदकनिवृत्त्या गृहमेधीयाज्यभागवदपूर्वतामेव विकृतेरापादयति ।

Siddhānta : points out that सामिधेनीs are not enjoined here as these will come by अतिदेश, but साप्तदश्य of these is enjoined. Though साप्तदश्य is stated at प्रकृति also the statement at विकृति brings it more quickly.

**सिद्धान्तस्तु,** स्यादेवमाज्यभागपुनःश्रवणन्यायः । यद्यत्र सामिधेनीविधिः स्यात् । न चैवम् । तासां चोदकत एव प्राप्तेः । किन्तु चोदकप्राप्तसामिधेन्यनुवादेन साप्तदश्यविधिपरमेव वैकृतं वचनम् ।

### पृथिव्यै स्वाहेत्यादि विधिना अविहितस्वाहाकारेषु प्रदानेषु स्वाहाकार विधानाधिकरणम् (10-8-10)

The statement 'वषट्कारेण स्वाहाकारेण वा देवेभ्यो अन्नं प्रदीयते' occurs without reference to any particular sacrifice. At some of दर्वीहोमs 'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा, दिवे स्वाहा, वायवे स्वाहा etc. स्वाहाकार मन्त्रs are stated. Here, the question is raised. Whether these स्वाहाकारs are to be stated only in particular instance, or these indicate that स्वाहाकार only be stated but not वषट्कार.



अनारभ्य श्रूयते ''वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते'' इति । केषुचिद्दर्वीहोमेषु स्वाहाकारमन्त्रः पठ्यते ''पृथिव्यै स्वाहा । अन्तरिक्षाय स्वाहा । दिवे स्वाहा । वायवे स्वाहा'' इति । तत्र किमयं पृथिव्यै स्वाहेत्यादिमन्त्रः अनारभ्यवादप्राप्तस्वाहाकारस्य विशेषेपूपसंहारार्थतया तद्वाक्य-शेषः, उत नियमार्थ इति सन्देहे,

Pūrvapakṣa : argues that पृथिव्यैस्वाहा etc. मन्त्रs are to be recited at particular होमs only.

पूर्वत्र यथा वैकृतसाप्तदश्यवाक्यमनारभ्यवादप्राप्तसाप्तदश्योपसंहारार्थमेवमिदमपि स्वाहेतिश्रवण-मुपसंहारार्थमिति प्राप्ते

Siddhānta : points out that पृथिव्यै स्वाहा etc indicate that स्वाहाकार has to be made even in such instances where in स्वाहाकार is not mentioned.

**सिद्धान्तः,** ''पृथिव्यै स्वाहा'' इत्यादिमन्त्रोक्तानारभ्यवादस्योपसंहारार्थमन्त्राणां मानान्तर-प्राप्तार्थप्रकाशकत्वेनाविधायकतयोपसंहारे स्वसामर्थ्याभावात् । किन्तु ''स्वाहाकारेण वषट्कारेण वा'' इत्यनियमेन प्राप्तस्य स्वाहाकारस्य नियमार्थो नोपसंहारार्थ इति ।

### अग्न्यतिग्राह्यस्य विकृतावुपदेशाधिकरणम् (10-8-11)

The statement 'य एवं विद्वान् अग्निं चिनुते' occurs without reference to any particular sacrifice and the statement 'उपष्टम्भनं वा एतद् यज्ञस्य यदतिग्रहाः' occurs in the context of ज्योतिष्टोम. Here, the question is raised whether these अग्नि and अतिग्रह will be brought to विकृति from प्रकृति or not.

अनारभ्य श्रूयते ''य एवं विद्वानग्निं चिनुते'' इति । तथा ज्योतिष्टोमं प्रकृत्य श्रूयते ''उपष्टम्भनं वा एतद्यज्ञस्य यदतिग्राह्याः'' इति । अतिग्राह्यनामका ग्रहाः । तत्र किमग्न्यतिग्राह्ययोर्विकृतौ चोदकेन प्राप्तिरस्ति, उत नेति सन्देहे,

Pūrvapakṣa : argues that there is पुनःश्रवण of अग्नि and अतिग्रह at विकृति. Therefore, these need not be brought from प्रकृति.

विकृतिष्वग्नेः पुनःश्रवणात्तथा ''उक्थ्ये गृह्णीयात्'' ''पृष्ठ्ये गृह्णीयात्'' ''विश्वजिति गृह्णीयात्''

इत्यतिग्राह्याणामपि कासुचिद्विकृतिषु पुनःश्रवणाद्यदि चोदकेनाग्न्यतिग्राह्ययोर्विकृतिषु प्राप्तिस्स्यात्तदा कासुचिद्विकृतिषु पुनःश्रवणमनर्थकं स्यात्। कृत्यान्तराभावात्।

Siddhānta : points out that not only अग्नि and अतिग्रह are to be brought from प्रकृति but some other अङ्गs are also to be brought. Hence, अतिदेश of अग्नि and अतिग्रह has to be made. पुनः श्रवण of these at विकृति indicates that these are to be considered on par with उपदेश.

**सिद्धान्तस्तु,** चोदको हि नाग्न्यतिग्राह्यमात्रविषयः। तन्मात्रे प्रत्येकं चोदकताभावात्। किन्त्वङ्गान्तरसाधारणः। तथा च षोडश्यादिविकृत्यन्तरेऽङ्गान्तरप्राप्त्यर्थं चोदकाभ्युपगमादङ्गान्तरवदग्न्यतिग्राह्यावप्यतिदिश्येयातामेव। चोदकार्थत्वाविशेषात्। अतो नातिदेशनिराकरणार्थं पुनःश्रवणम्। किन्तु प्रकृत्या समानविधित्वसिध्यर्थमेव प्रकृतौ यथोपदेशेनैवाग्निचयनप्राप्तिस्तथा विकृतावप्युपदेशेन प्राप्त्यर्थम्।

### उपस्तरणाभिघाराणां सहैव चतुरवदानाधिकरणम् (10-8-12)

At दर्शपूर्णमास the statement 'सकृदुपस्तृणाति' 'द्विर्हविषोऽवद्यति' 'सकृदभिघारयति' occur. Then, it is stated that 'चतुरवत्तं जुहोति.'

Here, the question is raised whether चतुरवदान is prescribed here or द्विरवदान with उपस्तरण and अभिघारण that make four are prescribed.

दर्शपूर्णमासयोः ''सकृदुपस्तृणाति। द्विर्हविषोऽवद्यति। सकृदभिघारयति'' इति विधाय श्रूयते ''चतुरवत्तं जुहोति'' इति। तत्र चतुरवत्तहोमे किं हविष एव चतुरवदानम्, उपस्तरणाभिघारणे त्वधिके। किं वा ताभ्यां सह चतुरवदानम्। हविषो द्विरेवेति **सन्देहे,**

Pūrvapakṣa : argues that in the statement 'चतुरवत्तं जुहोति' the द्वितीयाविभक्ति indicates that there has to be चतुरवदान for होतव्यद्रव्य. Hence, चतुरवदान is prescribed here. उपस्तरण and अभिघारण are संस्कारs but not होतव्यद्रव्य. However there is also the statement द्विर्हविषोऽवद्यति. Hence, विकल्प between चतुरवदान and द्विरवदान has to be envisaged. उपस्तरण and अभिघारण have to be made separately in both the alternative.



''चतुरवत्तं जुहोति'' इति द्वितीयया यदेव होतव्यं, तदेव चतुरवदेयं प्रतीयत इति हविष एव चतुरवदानम्। उपस्तरणाभिघारणयोस्तु हविस्संस्कारार्थत्वेन होमसाधनत्वाभावात्। न चैवं ''द्विर्हविषः'' इत्युक्त्यनुपपत्तिरिति शङ्क्यम्। वचनद्वयबलेन द्विरवदानचतुरवदनयोर्विकल्पाङ्गीकारात्। एवञ्च पूर्वत्रातिदेशबाधाभावेऽप्यत्र चतुरवत्तेन पक्षे व्यवदानस्य बाधः। उपस्तरणाभिघारणे त्वधिके इति **प्राप्तम्।**

Siddhānta : points out that here चतुरवदान is not enjoined for होम but होम is enjoined for चतुरवत्तहोमद्रव्य. This implies that उपस्तरणाभिघाराभ्यां द्विरवदानेन यच्चतुरवत्तं हविः तज्जुहोति. Hence, only द्विरवदान of the हविस् has to be made.

**सिद्धान्तस्तु,** स्यादेवं यदि जुहोत्यनुवादेन चतुरवत्तताविधिः स्यात्। न चैवम्। ''यच्चतुरवत्तं तज्जुहोति'' इति चतुरवत्तानुवादेन होम एव विधेयः। उपस्तरणाभिघारणाभ्यां द्विरवदानेन च यच्चतुरवत्तं हविः, तज्जुहोति अग्नौ प्रक्षिपति'' इति होम एव विधेय इति द्विरवदानमेव हविष इति।

### उपांशुयाजेपि चतुरवत्तस्यावश्यकताधिकरणम् (10-8-13)

In the earlier adhikaraṇa it is stated that चतुरवत्तसंख्या is not होमाङ्ग. Here, granting that it is होमाङ्ग the question is raised whether चतुरवदान has to be made for उपांशुयाजार्थ आज्यद्रव्य or not.

पूर्वत्र होमाङ्गत्वेन चतुस्संख्या न विधीयत इत्युक्तम्। इदानीं चतुस्संख्या होमाङ्गमिति कृत्वा चिन्त्यते। यदा होमानुवादेन चतुरवत्तमिति चतुस्संख्या होमाङ्गत्वेन विधीयत इति पक्षस्तदा किं चतुरवदानमुपांशुयाजार्थाज्यद्रव्येऽपि कर्तव्यम्, **न वेति सन्देहे,**

Pūrvapakṣa : argues that उपस्तरण and अभिघारण relate to सान्नाय्यौषध द्रव्य but not पुरोडाश. Hence, only द्विरवदान has to be made for उपांशुयाजद्रव्य.

दर्शपूर्णमासप्रकरणश्रुतयोरुपस्तरणाभिघारणयोः स्रुच्यसंसर्गार्थतया सामर्थ्यरूपलिङ्गबलेन सान्नाय्यौषधविषयत्वेन हविर्विषयत्वाभावात्सान्नाय्यादावेव ताभ्यां सह चतुरवदानं मित्रविन्दादौ साप्तदश्यवदुपसंह्रियत इत्युपांशुयाजद्रव्ये द्विरेवावदानमिति प्राप्तम्।

Siddhānta : points out that it is true that उपस्तरण and अभिघारण relate to सान्नाय्यद्रव्य only but not आज्यद्रव्य. However in the light of the statement 'चतुरवत्तं जुहोति' चतुरवदान has to be made for आज्यद्रव्य.

सिद्धान्तस्तु, सत्यमेवमुपस्तरणाभिघारणयोः सान्नाय्यादावेवोपसंहार इति तथापि ''चतुरवत्तं जुहोति'' इति होमाङ्गत्वेन विहितचतुरवदानसम्पादनायाऽज्यरूपहविष्येव चतुरवदानम् ।

### दर्शपूर्णमासयोः आग्नेयैन्द्राग्रयोरनुवादताधिकरणम् (10-8-14)

At दर्शपूर्णमास the statement 'पुरोडाशाभ्यामेव असोमयाजिनं याजयेत् एतौ आग्नेयश्च ऐन्द्राग्रश्च । सान्नाय्येन तु सोमयाजिनम्'' occurs.

Here, the question is raised whether the statement 'पुरोडाशाभ्यामेव' enjoins पुरोडाशद्वय for असोमयाजिन् or it is अनुवाद of पुरोडाशद्वय stated by another statement.

दर्शपूर्णमासयोः श्रूयते ''पुरोडाशाभ्यामेवासोमयाजिनं याजयेद्यावेतावाग्नेयश्चैन्द्राग्रश्च । सान्नाय्येन तु सोमयाजिनम्'' इति । तत्र किं ''पुरोडाशाभ्यामेव'' इति वाक्यमसोमयाजिनो वाक्यान्तर-प्राप्तपुरोडाशद्वयस्यानुवादः, उत विधायकमिति **सन्देहः** ।

Pūrvapakṣa : Pūrvapakṣin puts Pūrvapakṣa in six ways and points out the dificulties in each case.

i) a) The statement दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत states अधिकार for आग्नेय etc. six यागs. This is restricted to two viz. आग्नेय and ऐन्द्राग्र only in the case of असोमयाजिन्s.

This is not correct as it will lead to the contengency of realising स्वर्ग by performing only two यागs.

b) असोमयाजिन्s only will have अधिकार for आग्नेय and ऐन्द्राग्र.

This is also is not correct as it leads to the contengency of सोमयाजिन्s getting स्वर्ग without performing these two.

ii) A different याग with two पुरोडाश is enjoined by this statement.

This is also not correct. It is not proper to ignore the आग्नेय and ऐन्द्राग्र stated in the context of दर्शपूर्णमास and envisage separate two यागs of the same name.



iii) The ऋत्विक् in charge of adminstering six यागs should administer only two यागs to असोमयाजिन्.

This is also not convincing. In this case एवकार will be perposeless. If two are enjoined the others are automatically excluded. Moreover there is no result for याजन to the ऋत्वक्.

iv) आग्नेय and ऐन्द्राग्र are to be observed at the असोमयाजिन् state. That is to say before सोमयाग is performed.

This also does not work. ऐन्द्राग्र is वैकल्पिक with सान्नाय्य. Which has to be observed after सोम. Therefore, ऐन्द्राग्र cannot be सोमपूर्वकालीन.

v) आग्नेय is अनुवाद. ऐन्द्राग्र which is to be observed on अमावास्या is enjoined on पौर्णमासी also.

This also does not hold good. Both आग्नेय and ऐन्द्राग्र are enjoined by the same injunction. Hence, one of them cannot be treated as अनुवाद and the other as विधि.

vi) Two पुरोडाशs are enjoined before सोमयाग. सान्नाय्य is stated both before सोम and after सोम. Consequently ऐन्द्राग्र the वैकल्पिक for it has to be observed before the after. This is restricted here before only.

This is also not correct as it results in काललक्षणा.

**पूर्वपक्षस्तु,** i) आनर्थक्यादनुवादत्वासम्भवेऽपि ''दर्शापूर्णमासाभ्यां स्वर्गकामो यजेत'' इत्य-विशेषेण स्वर्गकाममात्रस्याग्नेयादिषट्स्वधिकारप्राप्तावाग्नेयैन्द्राग्नयोरेवासोमयाजिनोऽधिकारो नान्यत्रेति वा, असोमयाजिन एव तयोरधिकारः, नान्यस्येति वाऽधिकारनियमविधिरस्तु । एवञ्च चतुरवत्त-मित्यस्याविधित्वेऽप्यस्य विधित्वं सेत्स्यतीत्येकः । सोऽयं पक्षो न युक्त । आद्यनियमे स्वर्गकामिनोऽ-सोमयाजिनः पुरोडाशद्वयेनैव स्वर्गसिद्धेः । तस्य त्रिकद्वयसाध्यत्वात् । अन्त्यनियमे सोमयाजिनस्ताभ्यां विना सान्नाय्यादिमात्रेण स्वर्गासिद्धेः ।

ii) तस्माद्यदाग्नेयादिवाक्योक्ताग्नेयैन्द्राग्राभ्यां कर्मान्तरविधिरेवासोमयाजिनः इति **द्वितीयः** । सोऽप्ययुक्तः । सन्निहितयदाग्नेयादिवाक्योक्ताऽग्नेयादिप्रत्यभिज्ञानविरोधात् ।

iii) अतो योऽयमृत्विक्सः असोमयाजिनमाग्नेयैन्द्राग्राभ्यां याजयेदिति ऋत्विजो याजनविधिरेवायमिति **तृतीयः** । सोऽप्यसाधुः । एवकारवैयर्थ्यात् । विधौ तस्य कृत्याभावात् । याजनस्य फलाश्रवणेन विध्ययोगाच्च । परस्मैपदेन याजनस्य परार्थत्वावगत्या याजकेषु विश्वजिन्न्यायेन फलकल्पनायोगाच्च ।

iv) तस्मात्कालविधिरेवायम् । असोमयाज्यवस्थायामाग्नेयादिपुरोडाशाविति **चतुर्थः** । अयमपि न । सान्नाय्येन वैकल्पिको ह्यैन्द्राग्नः । सान्नाय्यस्य च ''नासोमयाजी सन्नयेत्'' इति सोमोत्तरकालत्वेन तेन साकं विकल्पितस्य तस्य सोमयागापूर्वकालत्वासिद्धेः ।

v) तस्मादाग्नेयांशेऽनुवादः । ऐन्द्राग्नांशस्यामावास्यायां विहितस्य पौर्णमास्यामपि विधिरेवेति **पञ्चमः** । सोऽपि न । एककालोच्चरितयोः पुरोडाशयोरेकेन लिङ्शब्देन कस्यचिदनुवादः, कस्यचिद्विधिरित्ययोगात् ।

vi) अतोऽसोमयाजिकाले पुरोडाशावेताविति कालविधिरेवायम् । अयमप्ययुक्तः । असोमयाजिपदे काललक्षणाऽऽपातादिति ।

Siddhānta : points out that the statement 'सान्नाय्येन सोमयाजिनम्' restricts सान्नाय्य for सोमयाजिन्. From this it follows that the आग्नेय and ऐन्द्राग्न for असोमयाजिन्. therefore, there is no need of any injunction. It is only अनुवाद.

**सिद्धान्तस्तु** ''सान्नाय्येन तु सोमयाजिनम्'' इति सोमयाजिनस्सान्नाय्ये नियमिते सति अर्थात्पुरुडाशावसोमयाजिन एव भवत इत्यनुवादोऽयम् । न विधिः । तस्य च पुरोडाशावसोमयाजिन एव । सान्नाय्यं तु सोमयाजिन इति प्रशस्तं सान्नाय्यमिति स्तुतिः प्रयोजनमिति ।

### उपांशुयाजस्य ध्रौवाज्यद्रव्यताधिकरणम् (10-8-15)

The statement 'उपांशुयाजमन्तरा यजति' enjoins उपांशु याग. However, द्रव्य for this याग is not mentioned. Hence, the question is raised whether ध्रौवाज्य be taken as द्रव्य or any द्रव्य.



''उपांशुयाजमन्तरा यजति'' इत्युक्तोपांशुयागेऽश्रुतद्रव्यके देवतोद्देशेन द्रव्यत्यागरूपयागविध्यन्यथानुपपत्त्याऽर्थात्प्राप्तं यत्किञ्चिदैच्छिकं द्रव्यमुपादेयम्, उताऽऽज्यमेव, तदपि ध्रौवमिति **सन्देहे,**

Pūrvapakṣa : states that as no specific द्रव्य is mentioned, any द्रव्य may be taken.

ऐच्छिकमेव यत्किञ्चिद्द्रव्यमुपादेयमिति **प्राप्तम्** ।

Siddhānta : as per the statement 'सर्वस्मै वा एतद् यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्' धौवाज्य has to be taken as द्रव्य.

**सिद्धान्तस्तु,** ''यद्ध्रुवायामाज्यम्'' इत्यसंयुक्ततयोत्पन्नं ध्रौवाज्यं प्रयोजनमाकांक्षदश्रुतद्रव्यकोपांशुयागे निविशत इत्याज्यमेवोपादेयम् । ''सर्वस्मै वा'' इति वाक्येऽपि विस्पष्टतादर्थ्यार्थचतुर्थीसंयोगेन 'गृह्यते' इत्यस्य गृह्णीयादिति विधिकल्पनाच्च । विध्यभावे तादर्थ्यचतुर्थ्यसम्भवादिति ।

### उपांशुयाजस्य प्राकृतदेवतानियमाधिकरणम् (10-8-16)

For उपांशु याग, देवता is not mentioned. Here, the question is raised whether any देवता be taken or a particular देवता.

उपांशुयागे द्रव्यस्येव देवताया अप्यश्रवणात् यागविधिबलेनार्थात्प्राप्ता या काचिद्देवताऽनियमेनोपादेया, किं वाऽस्ति काचिन्नियता देवतेति **सन्देहे,**

Pūrvapakṣa : argues that as there is no mention of देवता, any देवता may be taken.

पूर्वाधिकरणपूर्वपक्षे यथा द्रव्यनियमो नास्ति तथा देवतायामपि स्यादिति **प्राप्तम्** ।

Siddhānta : points out that सन्निहित दर्शपूर्णमासगतदेवता be taken.

**सिद्धान्तस्तु,** ''विष्णुरुपांशु'' इत्यादेरर्थवादत्वेऽपि प्रातिस्विकदेवताविधेरभावेऽपि हविस्त्यागसमये विधिगतशब्देनोद्दिश्यमानत्वस्यैव देवतात्वेनाविहितस्येच्छयोपात्तस्य यस्य कस्यचिद्देवतात्वाभावादुपांशुयागे देवताकांक्षायां सन्निहितया दर्शपूर्णमासगतया कयाचिद्देवतया सम्बध्यते ।

### उपांयाजस्य विष्ण्वादिदेवताकत्वपौर्णमासी कर्तव्यत्वयोरधिकरणम् (10-8-17)

In the earlier adhikaraṇa it was stated that दर्शपूर्णमासदेवता be taken as देवता

for उपांशुयाग. प्राजापत्य, अग्नि and विष्णु are three देवताs for दर्शपूर्णमास. Here the question is raised whether one of these three is देवता at उपांशुयाग or these three are alternately देवताs.

उपांशुयागे किं प्रजापत्यग्निविष्णूनामन्यतमः, उत त्रयोऽपि विकल्पेन देवता इति **सन्देहे,**

Pūrvapakṣa : states the claims of प्राजापत्य, अग्नि, अग्नीषोमीय and विष्णु stating the grounds for their claims.

i) प्रजापति is देवता for उपांशु याग since both उपांशयाग and प्रजापति have उपांशुधर्मs.

ii) अग्नि is देवता for this याग since, अग्नि is important among देवता.

iii) As per the statement 'तावब्रूताम्' अग्नीषोमौ are देवता.

iv) विष्णु is देवता as there is मन्त्रवर्ण with reference to him.

v) As अग्नीषोमौ relate to पौर्णमासी. These with प्रजापति are देवता.

प्रजापतिर्देवतेत्येकः **पूर्वपक्षः ।**

i) ''यत्किञ्चित्प्राजापत्यं यज्ञे क्रियते उपांश्वेव तत्क्रियते'' इति वचनेनोपांशुधर्मोपांशुत्वयागः प्रजापतिश्चोपांशुत्वधर्मेति द्वयोः समानधर्मत्वादिति ।

ii) अग्निरेव देवता । तत्र यदाग्नेयाचैष्टिकदेवताया अमुख्यत्वात् ''अग्निमुखा वै देवाः'' इत्यग्निर्मुख्यदेवतेति देवता-सामान्येऽग्नेर्मुख्यत्वप्रतीतेश्चेति **द्वितीयः ।**

iii) ''तावब्रूताम्'' इत्यादिपूर्वोदाहृतवाक्यादग्नीषोमौ देवतेति **तृतीयः ।**

iv) दार्शपूर्णमासिकयोराग्नेयैन्द्राग्रपुरोडाशयोर्याज्यानुवाक्यायुगलयोर्मध्ये ''इदं विष्णुर्विचक्रमे,'' ''त्रिर्देव पृथिवीम्'' इति वैष्णवयाज्यानुवाक्यायुगलमाम्नातम् । इदश्च ''यागरूपोपांशुयाजमन्तरा'' इति पुरोडाशयोरन्तरालयोर्विहितम् । तथा च यथासङ्ख्याम्नानरूपस्थानप्रमाणेन मन्त्रवर्णयोस्तदङ्गत्वावगमेन मन्त्रवर्णाद्विष्णुरूपदेवताप्राप्तेः । तस्मान्मन्त्रवर्णाद्विष्णुरेव देवता ।

vi) आग्नेयाग्नीषोमयोः पौर्णमासीविषयत्वात् पौर्णमास्यां प्रजापतिरग्नीषोमौ च देवते ।

Siddhānta : points out that विष्णु, प्रजापति and अग्नीषोम can be alternately taken as देवता.



तस्मान्मन्त्रवर्णाद्विष्णुः प्रजापतिरग्नीषोमौ चेति तिस्रोऽपि विकल्पेन देवता उपादाय पौर्णमासीकाल एव पुरोडाशान्तराले उपांशुयागोऽनुष्ठेय इति सिद्धान्तः ।

## एकपुरोडाशायामप्युपांशुयाजाधिकरणम् (10-8-18)

It is stated in the earlier adhikaraṇa that उपांशुयाग has to be observed on पौर्णमासी only. Here, the question is raised whether it should be observed on एकपुरोडाश day or द्विपुरोडाश day.

पौर्णमास्यामेवोपांशुयाग इति स्थिते, किं द्विपुरोडाशायामेव पौर्णमास्यामुपांशुयागः, उतैकपुरोडाशायामिति **सन्देहे,**

Pūrvapakṣa : argues that उपांशु याग has to be observed between two पुरोडाश. In the case of एकपुरोडाश, there is no inbetween time. Hence, it has to be on द्विपुरोडाश day only.

''सोमेनेष्ट्वाऽग्नीषीमीयो भवति'' इति वचनेनासोमयाजिनोऽग्नीषोमीयाभावेनाऽग्नेयरूपैकपुरोडाशा पौर्णमासी । तदा पुरोडाशद्वयान्तरालकालाभावात्तदा न कार्योऽयमुपांशुयाग इति प्राप्तम् ।

Siddhānta : points out that it is पुरोडाशकाल that is important but not inbetween time. Hence, on एकपुरोडाश also it can be observed.

**सिद्धान्तस्तु, पुरोडाशद्वयोपलक्षितः** काल उपांशुयागांङ्गम् । सर्वत्र चोपलक्षणापगमेऽप्युपलक्ष्यमवतिष्ठत एव । 'शंखवेलायामागन्तव्यम्' इत्यादौ तथा दर्शनात् । तेन कर्माङ्गभूतकालस्यैकपुरोडाशायामपि सत्त्वात्तत्राप्युपांशुयाजस्य न बाध इति ।

इति दशमाध्यायस्याष्टमः पादः

## इति दशमाध्यायः

# Chapter-XI

## एकादशाध्याये प्रथमः पादः

### आग्नेयादीनां समुदितानां तन्त्रेण स्वर्गफलकत्वाधिकरणम् (11-1-1)

*i) In the earlier chapter setting aside of* बर्हि *etc. to be brought by* अतिदेश *by* शर *etc. that is enjoined at* विकृति *is discussed.*

*ii)* समुच्चय *of* आमनहोम *etc with* अनुयाज *etc. that are brought by* अतिदेश *is also discussed.*

*In this chapter* तन्त्र *and* आवाप *will be discussed.*

पूर्वाध्याये ''शरमयं बर्हिर्भवति'' इत्यादिवैकृतविधिविहितैः शरादिभिरातिदेशिकानां बर्हिरादीनां यो बाधो यश्च वैकृतैरामनहोमादिभिरातिदेशिकानामनुयाजादीनां बाधाभावरूपः समुच्चयस्तदुभयचिन्ता द्वारा चोदकप्राप्तानां प्रत्ययविहितानाश्चाङ्गपदार्थानामियत्तारूपपरिमाणं चिन्तितम्।

अत्राध्याये प्रकृतिविकृतिसाधारणप्रयोगविषयपदार्थपरिमाणं तन्त्रावापचिन्ताद्वारेण क्रियते।

In the statement दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, the result स्वर्ग is stated for दर्शपूर्णमास. दर्शपूर्णमास consists of आग्नेय etc. six yagas. Here the question is raised whether the result relates to these six yāgas individually or collectively.

''दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'' इति श्रुतं फलमाग्नेयादिभिः षड्भिः प्रत्येकं सम्बध्यते, अथ मिलितैरिति सन्देहे,

Pūrvapakṣa : The आग्नेय etc yāgas are enjoined by separate statements, therefore these yāgas are in need of the result separately. Hence, the result relates to each one of these separately.

''यदाग्नेयोऽष्टाकपालः'' इत्यादिवाक्यैर्मिथोऽनपेक्षितयोत्पन्नाग्नेयादीनि कर्माणि पृथग्पृथगेव फल-माकांक्षन्ति।

''यथाकांक्षं फलान्वयः इति फलाकाङ्क्षीण्याग्नेयादीन्युद्दिश्य विधीयमानं फलं प्रत्येकमेव सम्बद्ध्यते।

Siddhānta : Here स्वर्गरूपफल is not enjoined for दर्शपूर्णमास but आग्नेय etc.



Yāgas of दर्शपूर्णमास are enjoined for स्वर्ग. The expression दर्शपूर्णमासाभ्यां is in द्वन्द्व compound. This indicates that these have to be taken together. Three of these are stated on दर्श and three on पौर्णमासी. Thus there are two groups of three. The फल enjoined for these relates to them collectively.

सिद्धान्तः नात्र दर्शपूर्णमासोद्देशेन स्वर्गाख्यं फलं विधीयते। येन प्रत्युद्देश्यवाक्यं फलान्वयः स्यात्। किन्तु स्वर्गोद्देशेनाऽग्नेयादयो यागा विधीयन्ते। तेषां विधीयमानानां द्वन्द्वावगतं साहित्यं विवक्षितमेवेति त्रिकद्वयसमुदाय एव फलान्वयो न प्रत्येकमिति।

### अङ्गानामैककर्म्याधिकरणम् (11-1-2)

In this अधिकरण the question whether the auxiliaries of the main sacrifice assist it individually or collectively is raised. If these assist individually, do they assist alternately or together.

अङ्गानि किं संहत्य प्रधानमुपकुर्वन्ति, अथ प्रत्येकम्। प्रत्येकमिति पक्षेपि किं विकल्पः, उतोपकारबाहुल्येन फलभूयस्त्वादुपकारसमुच्चय इति विचार्यते।

Pūrvapakṣa :

(1) The प्रयाज etc. auxiliaries are enjoined by separate statements. Therefore they have फलाकाङ्क्षा separately. Hence, these assist the प्रधानयाग alternately.

(2) Though these auxiliaries are enjoined by separate injunctions to take them as assisting the प्रधानयाग alternately is not correct. विकल्प or taking the items alternately suffers from eight drawbacks. Therefore it is better to take all these auxiliaries assisting the प्रधानयाग together. This will provide better results.

i) पूर्वपक्षस्तु, युक्तं पूर्वत्र प्रधानानां आग्नेयादीनां एकेनाऽख्यातशब्देन तन्त्रेणाभिहितानां युगपत्फले विनियुक्तानां संहत्य फलकारित्वम्। अङ्गानान्तु प्रयाजाऽज्यभागानूयाजादीनां स्वस्वविधि-रूपपृथक्छब्दविहितानां मिथोऽनपेक्षतयैव फलाकांक्षोदयेन मिथोऽनपेक्षेणैव क्रतूपकारे विनियोगाद्विकल्प इत्येकः।

ii) अङ्गानां अन्योन्यैरनपेक्ष्येणोपकारकत्वे अपि अनेकाङ्गानाम् आम्नानबलाद्विकल्पस्याष्ट दोषदुष्टत्वाद्यावदङ्गान्यनुष्ठातुं शक्यान्यनुभूततावत्करणेनोत्पन्नोपकारबाहुल्येन फलभूयस्त्वं कल्प्यमिति द्वितीयः ।

Siddhānta : Though these auxiliaries are enjoined by separate injunctions, separate results for these are not stated. Therefore these contribute to the result of main sarifice only. The main sacrifice also needs the auxiliaries. Hence, these get connected with the main sacrifice and assist it. This is a normal process. Hence, there is no question of better result by observing all these auxiliaries as assiting the main sacrifice.

अङ्गानान्तु पृथक्पृथग्विधिश्रवणेऽपि प्रतिवाक्यं फलाश्रवणात्फलापेक्षाणामङ्गानाम् इतिकर्तव्यताकाङ्क्षिण्या प्रधानफलभावनयाऽन्योन्याकाङ्क्षारूप प्रकरणबलेन युगपद्गृहीतानां प्रधानभावनाविधिनैव युगपद्विधानात्सर्वेषां संहत्यैवोपकारत्वमित्यङ्गानां समुच्चयो न विकल्प इति ।

**काम्यकर्मणां भूयोभ्यासाधिकरणम्** (11-1-3)

In this अधिकरण the question whether the काम्यकर्मs such as चित्रया यजेत पशुकामः lead to higher results by performing only once or by repeated performances is raised.

"चित्रया यजेत पशुकामः" इत्यादिकाम्यकर्मणां सकृत्प्रयोगेणापि फलभूयस्त्वम्, उत पुनः पुनः प्रयोगेणैव फलभूयस्त्वम् । न सकृत्प्रयोगमात्रेणेति सन्देहे ।

Pūrvapakṣa : The act of sacrifice perishes as soon as all the items are completed. However the result occurs much later. It is not proper to conceive अपूर्व in between याग and स्वर्ग. The very performer of याग who is permanent has to be taken as the ground for the results. Hence one performance is sufficient to obtain the result. Repeated performance is not necessary.

कर्मणः क्षयिष्णुत्वेन कालान्तरभाविफलपर्यन्तमवस्थानायोगेन मध्येऽदृष्टाख्यद्वारकल्पने चाऽपूर्वाख्यधर्मिणस्तस्य कर्मजन्यत्वस्य फलहेतुत्वस्य तावत्स्थायित्वस्य चानेकस्य कल्प्यत्वेन लाघवात् कृतयागस्यात्मन एव स्थायिभूतस्य फलहेतुत्वमात्रं कल्पनीयम्, स च सकृत्प्रयोगादेव कृतयाग इति पुनः पुनरप्रयोगेपि स्यादेव फलभूयस्त्वम् ।



Siddhānta : When it is stated that the performer himself is the ground for realising the result the question arises whether some special capacity is invested in him by the performance of the याग, or not. If he is the ground for the result without being invested with some special capacity by the performance of याग he should be able to get the result even without performing the याग. If it is stated that he is invested with some special capacity by the performance of याग that capacity is अपूर्व itself. This अपूर्व ceases to be there as soon as it leads to one result. Hence, if the performer desires to have the same result again and again he has to perform the काम्य sacrifice seperately.

कृतयाग आत्मैव फलहेतुरिति वदन् निरतिशय एवात्मा फलहेतुः, उत सातिशय इति प्रष्टव्यः । आद्ये तादृशात्मनः सदातनत्वेनाकृतयागस्यापि फलहेतुत्वप्रसङ्गः । द्वितीये स एवातिशयोऽपूर्वम् । तच्च कार्यैकनाश्यमिति स्वजन्यं फलं जनयित्वा तदन्ते नश्येदिति पुनः फलान्तरार्थं प्रयोगान्तरं कार्यमेवेति ।

**अवघातादीनामातण्डुलनिर्वृत्तेरभ्यासाधिकरणम्** (11-1-4)

In this अधिकरण whether अवघात, i.e. pounding of the rice, stated by the statement व्रीहीनवहन्ति be performed only once or many times, is raised.

पूर्वत्र काम्यकर्मण इवावघातस्यापि सकृदसकृद्वाऽनुष्ठानमिति चिन्तनात्सङ्गतिसन्देहौ ।

Pūrvapakṣa : The statement व्रीहीनवहन्ति states only the pounding of the rice grains but not the repetition of it. Hence, it should be performed only once though performing अवहनन only once does not fully prepare the rice for पुरोडाश. The rice not pounded fully may be utilised for पुरोडाश.

पूर्वपक्षस्तु, "व्रीहीनवहन्ति" इत्यत्रावहन्तिपदेन मुसलस्योऽद्यमननिपतनमात्रमेवोच्यते । न तु तदभ्यासोऽपि । सकृदेवावहन्तिः कार्या ।

न चानभ्यासे दृष्टं फलं न लभ्यत इति वाच्यम् । शब्दार्थानुगुणतयैव फलस्य कल्प्यत्वात् । अत्र च शब्दविहितस्यानभ्यासस्यैवावघातस्य फलत्वे कल्पनीये दृष्टासम्भवाददृष्टमेव किञ्चित्कल्पनीयमिति प्राप्ते ।

Siddhānta : The statement व्रीहीनवहन्ति though does not state whether the अवहनन be made only once or it be repeated until the rice is useful for the पुरोडाश. The अवहनन has to be repeated until the rice is fully pounded and ready for पुरोडाश because one has to take into account the purpose for which the pounding of rice is stated.

सिद्धान्तः, सत्यम् । नावघाताभ्यासोऽवहन्तीति शब्देनोच्यते । किंत्वभ्यस्तानभ्यस्तसाधारणं हन्तिमात्रम् । तथा च तत्र प्रयोजनाकाङ्क्षायां क्रत्वर्थमपेक्षितत्वाद् दृष्टत्वादत्र तण्डुलनिष्पत्तिः प्रयोजनं कल्प्यते । तच्च न विनाऽभ्यासेन सिद्ध्यतीति प्रयोजनवशात् अभ्यासः ।

### प्रयाजादीनामङ्गानां सकृदनुष्ठानाधिकरणम् (11-1-5)

In this अधिकरण whether the performance of प्रयाज etc. auxiliaries repeatedly leads to the higher results or not is raised.

एकस्मिन् प्रयोगे प्रयाजाद्यङ्गानां आवृत्त्या फलभूमास्ति न वेति विचार्यते ।

Pūrvapakṣa : argues that repeated performance of auxiliaries results in greater assistance to प्रधानयाग which leads to फलबाहुल्य. Hence, the प्रयाज etc. auxiliaries be performed repeatedly.

अङ्गानामभ्यासेन उपकारबाहुल्यजननाद्बहूपकारयुक्तप्रधानस्य फलबाहुल्यशक्तत्वादस्त्यङ्गावृत्त्यापि फलभूमेति प्राप्तम् ।

Siddhānta : प्रधान together with the auxiliaries is the means of the result. Mere auxiliaries are not the means of the result. Hence, repetition of the auxiliaries does not lead to greater results.

सिद्धान्तस्तु, साङ्गप्रधानं हि फलसामग्री । नाङ्गमात्रम् । सामग्र्यावृत्त्याहि फलभूमा दृष्टः । नाङ्गमात्रावृत्त्या ।

### कपिञ्जलाधिकरणम् (11-1-6)

In the statement ''वसन्ताय कपिञ्जलानालभते ।'' offering of Kapinjala birds is stated. In this statement कपिञ्जलान् is in plural. Here, the question is raised



whether this indicates three birds be offered or as many as the sacrificer wishes.

''वसन्ताय कपिञ्जलानालभत'' इत्यादिषु किं त्रयाणामालम्भः, उत त्रिप्रभृतीनाम् इति सन्देहे,

Pūrvapakṣa : argues that the plural indicates many starting from three. Since, offering more will lead to better result, the sacrificer should offer as many as he likes.

बहुवचनं द्वित्वाधिकं सामान्यतो निमित्तीकृत्य त्रित्वप्रभृतिषु प्रवर्तते । तथा चाङ्गाभ्यासस्याशास्त्रीयत्वेन तेन फलाभावेऽपीह त्रिप्रभृतिसर्वसङ्ख्यानां बहुवचनरूपशास्त्रार्थत्वात् शास्त्रीयायासगौरवेण फलभूमाऽस्तीत्यस्य षड् देया, द्वादश देयेत्यादौ सिद्धत्वात् । अतो यावदुत्साहं त्रिप्रभृति नानासङ्ख्योपादानम् ।

Siddhānta : The plural ending indicates three and more. The injunction is satisfied by offering three. Hence, three birds only have to be offered. If fourth is offered, that will violate the prohibition न हिंस्यात् ।

त्रयाणामालम्भे तावता शास्त्रार्थसिद्धेर्नाधिकालम्भे शास्त्रप्रवृत्तिः । निर्वृत्ते च शास्त्रविधौ ''न हिंस्यात्'' इति निषेधशास्त्रं प्रवर्तते इति नाधिकालम्भ इति ।

### उत्तरा दोहयतीत्यत्र सर्वासां गवां दोहनाधिकरणम् (11-1-7)

In the context of सान्नायदोहन it is stated that वाग्यतः तिस्रः दोहयित्वा विसृष्टवाक् अनन्वारभ्य तूर्ष्णीं उत्तरा दोहयति । दोह means milking of cows. Here the question is raised whether by the clause उत्तरा दोहयति the milking of only three cows is stated or the milking of all cows, whatever be the number, that the यजमान has, is stated.

सन्नाय्यदोहनं प्रकृत्य श्रूयते ''वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयति'' इति । तत्र किं उत्तरासां तिसृणामेव दोहः, उत यावत्यो यजमानस्य गावस्तासां सर्वासामपि इति सन्देहे,

Pūrvapakṣa : The milking of only three cows has to be taken here as per the ruling given in the earlier अधिकरण.

पूर्वोक्तसिद्धान्तन्यायेन तिसृणामेव दोहनम्। न सर्वासमिति प्राप्ते,

Siddhānta : points out that by the statement, 'नास्य एतां रात्रिं पयसा अग्निहोत्रं जुहुयात्। कुमाराश्च न पयो लभेरन्'' offering of the entire milk as हविस् is stated, without leaving any milk even for the children. Therefore all the cows of यजमान have to be milked. It cannot be contended that the above statement only prohibits giving the milk to the children but it does not enjoin offering the entire milk as हविस्. Prohibition of giving the milk to children has no observable purpose. Consequently it has to be considered as अदृष्टार्थ. This is not proper. Hence, the above statement has to be taken as enjoining the offering of the entire milk. This means that milking of all the cows has to be made.

सिद्धान्तः, ''नास्यैतां रात्रिं पयसाऽग्निहोत्रं जुहुयात्। कुमाराश्च न पयो लभेरन्'' वचनेन कृत्स्नस्य पयसो हविष्ट्वावगमात् सर्वासामेव दोहनम्।

न च ''नास्यैतां'' इति वाक्येन साक्षान्न सर्वदोहविधिः। किन्तु सर्वदोहे कुमाराणां पयोलाभो न भवेदिति लक्षणया सर्वदोहविधिमुपादाय सर्वस्य हविष्ट्वं विधेयम्। न च लक्षणा युक्ता। अतः कुमाराणां पयोदानप्रतिषेध एव। न तु हविरर्थं सर्वदोहविधिरिति शङ्क्यम्। पयोदानप्रतिषेधस्य दृष्टार्थाभावेनादृष्टार्थत्वप्रसङ्गात्।

### आग्नेयादीनां प्रधानानां भेदेप्याधारादीनामङ्गानां तन्त्रताधिकरणम् (11-1-8)

At दर्शपूर्णमास there are आग्नेय etc. six yagas. Three of these are to be performed on पौर्णमासी and another three on अमावास्या. Here the question is raised whether for these three, प्रयाज etc. auxiliaries are to performed separately or one performance is sufficient for all.

दर्शपूर्णमासयोः षट्प्रधानानि कर्माणि ''पौर्णमास्यां पौर्णमास्या यजेत'' ''अमावास्यायां अमावास्यया यजेत'' इति वचनात्। पौर्णमास्यां त्रीण्यमावास्यायां च त्रीणि कर्तव्यानि। तत्र किं त्रयाणां प्रधानानां प्रयाजाद्यङ्गानि भेदेन कार्याणि, उत सकृदेवेति सन्देहे,

Pūrvapakṣa : All the six yagas need इतिकर्तव्यता without depending upon each other. Therefore प्रयाज etc. auxiliaries which are of the nature of इतिकर्तव्यता are to be performed separately for each.



षडप्याग्नेयादिभावनाः ''यदाग्नेय'' इत्याद्युत्पत्तिवाक्यफलवाक्याभ्यां साध्यसाधनांशयुक्ताः मिथोऽनपेक्षा एवेतिकर्तव्यतामपेक्षमाणाः स्वस्वसन्निध्याम्नातानि गृह्णन्तीति तद्वशात्प्रत्येकमेवाङ्गानि विनियुज्यन्ते। एवञ्चाङ्गानां पृथक्पृथगेव प्रधाने विनियोगात्प्रतिप्रधानं भेदेनैवानुष्ठानम्।

Siddhānta : Though each one of the six yāgas have इतिकर्तव्यताकाङ्क्षा the auxiliaries performed once serve the purpose of all yāgas. Therefore their performance once is sufficient.

सिद्धान्तस्तु, यद्याप्याज्यभागादाय आग्नेयसन्निधौ, स्विष्टकृदादयोऽग्नीषोमीयसन्निधौ च क्रियन्ते। तथापि सर्वेषामङ्गानां संहत्यकारित्वोक्त्या स्वस्वावान्तरकार्यद्वारा अग्न्यन्वाधानादिर्ब्राह्मणतर्पणान्तैः सर्वैः अङ्गैस्संहत्य उपकारो जनयितव्यः।

सकृत्कृतमप्यङ्गं सर्वार्थचिकीर्षया कृतत्वात्सर्वक्रियार्थं भवतीति सकृदेवाङ्गानां अनुष्ठानात् पौर्णमास्यां पौर्णमास्येत्यादिप्रागुक्तवाक्याभ्यां साङ्गस्य त्रिकस्य स्वस्वकाले युगपदनुष्ठानावगतेश्चेति।

### कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेन प्रदानाधिकरणम् (11-1-9)

In the context of काम्यपशुकाण्ड it is stated that आग्नेयं कृष्णग्रीवं, सौम्यं बभ्रु, आग्नेयं कृष्णग्रीवं, पुरोधायां स्पर्धमानः be offered by those who compete for priestship. Here the question is raised whether the first and the third have to be performed once only or these three be performed in the order in which these are stated.

काम्यपशुकाण्डे श्रूयते ''आग्नेयं कृष्णग्रीवमालभेत। सौम्यं बभ्रुम्। आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः'' इति।

तत्राद्यन्तयोः पश्वोरनुष्ठानं तन्त्रम्, क्रमात् पृथगिति सन्देहे,

Pūrvapakṣa : First and third have the same deity. Therefore these two be performed once only.

आद्यन्तयोः कृष्णग्रीवपश्वोर्देवतैक्यात्तन्त्रेणानुष्ठानम्। न च पाठक्रमात्क्रमेणानुष्ठानमिति वाच्यम्। क्रमेणानुष्ठेययोः पाठक्रमापेक्षायामपीह देवतैक्येन तन्त्रानुष्ठानस्यैव प्राप्त्या क्रमापेक्षाया अभावादिति।

Siddhānta : Though the first and the third have the same deity, the second

has a different deity. Therefore, the first has to be performed before the second and the third has to be performed after the second as per the order stated. If the first and third are performed once, this order will be violated. Hence, all the three be performed separately.

सिद्धान्तस्तु, आग्नेययोस्तन्त्रतासम्भवेऽपि सौम्यस्य देवताभेदेन सहप्रयोगासम्भवादवश्यंभाविनि क्रमे सौम्यात्पूर्वं कस्यचित्पश्चात्कस्य चित्पाठक्रमादनुष्ठानम् । सकृदनुष्ठाने हि सौम्यात्पूर्वापरभावः पाठक्रमादवगतो बाध्येतेति पृथगेवानुष्ठानमिति ।

इति एकादशाध्याये प्रथमः पादः

## अथैकादशाध्याये द्वितीयः पादः

### आग्नेयादीनां प्रधानानां देशकालतन्त्रताधिकरणम् (11-2-1)

At दर्शपूर्णमास, देश, काल and कर्ता are prescribed. Here the question is raised whether in the same place at the same time i.e. पर्वन् and by the same agents employed in performing आग्नेय, अग्नीषोमीय also has to be performed, or in a different place, on different पर्वन्, by different agents अग्नीषोमीय be performed.

दर्शपूर्णमासयोर्देशकालकर्तारो विहिताः । "समे दर्शपूर्णमासाभ्यां यजेत" इति, "पौर्णमास्यां पौर्णमास्या यजेत", "अमावास्यायां अमावास्यया यजेत" इति "दर्शपूर्णमासयोश्चत्वारो ऋत्विजः" इति । तत्र किं यस्मिन् देशे यस्मिन् पर्वणि यैः कर्तृभिराग्नेयः कृतस्तस्मिन्नेव देशे तस्मिन्नेव पर्वणि तैरेव कर्तृभिः अग्नीषोमीयः कार्य इति देशकालकर्तारस्तन्त्रम्, उत समान्तरे पौर्णमास्यन्तरे कर्त्रन्तरैः कार्य इति **सन्देहे,**

Pūrvapakṣa : Deśa, Kāla and Kartā are the auxiliaries of yāga like drayva and devatā. Therefore these get connected to आग्नेयादि उत्पत्तिभावना only. Therefore, these have to be perfomed in a separate place, on a separate parvan by separate agents.

देशकालकर्तारो द्रव्यदेवतावदङ्गम् । फलकरणाङ्गरूपांशत्रयस्यापि यदाऽग्नेयेत्याद्युत्पत्तिवाक्यावगतभावनास्वरूपेणैवान्वयः । न मिथः । देशादयोऽप्यन्योन्यानपेक्षाणामेव भवन्तीति देशान्तरा-



दावेवाग्नेयादयः षड्यागाः कार्याः । न चैवं फलवाक्यावगताऽग्नेयादिसाहित्यबाध इति शङ्क्यम् । तत्र मिलित्वा षड्भिरेकं फलं साध्यते ।

Siddhānta : देश etc auxiliaries are not connected with उत्पत्तिवाक्यावगतभावना but these are connected with फलभावना. The स्वर्गकामनारूपफल requires करण and इतिकर्तव्यता. Hence, देश, काल, etc. auxiliaries together get connected with फलवाक्यावगतभावना. Hence, these have to be performed in the same देश and at the time of the respective parvans by the same agents.

**सिद्धान्तः**, स्यादेवं, यद्युत्पत्तिवाक्यावगतभावनयैव देशाद्यङ्गविधयोऽन्वीयेरन् । न चैवम् । किन्तु फलभावनयैव । एवं फलवाक्यावगतसाङ्गरूपभावनयैव देशादेरन्वयादङ्गानामपि प्रधानदेशकालकर्तृकत्वं सिद्धमिति ।

### दर्शपूर्णमासेष्टिप्रभृतिषु सङ्गभेदेनाङ्गानां भेदेनानुष्ठानाधिकरणम् (11-2-2)

At दर्शपूर्णमास the six yāgas are performed on two parvans in two groups of three each. Here the question is raised whether the auxiliaries of these six yāgas be performed once only or be performed for the two groups of three separately.

दर्शपूर्णमासयोरुत्पत्तिवाक्यावगतकालानुरोधाद्विभज्य पर्वद्वये प्रयुज्यमानयोरङ्गानि तन्त्रम्, उत प्रतितित्रकमावर्तेरन्निति सदेहे,

Pūrvapakṣa : By the statement दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत six yagas are enjoined for perfomance together. Therefore these six yāgas from one unit though performed in two groups of three yāgas on two parvans. Hence, the auxiliaries of these six yāgas be observed once.

"दर्शपूर्णमासाभ्यां स्वर्गकामो येजेत" इत्यनेन विवक्षितसाहित्यानां षण्णामपि यागानामेकस्मिन् फले विधानात्सहैव प्रयोक्तव्या इति तेषां षण्णामेवोपक्रमोपसंहारत्वम् । तथा च प्रातःसवन आरब्धस्तृतीयसवन इव पौर्णमास्यामारब्धं सर्वं प्रधानममावास्यायां समाप्यते । तेन पौर्णमास्यां क्रियमाणमप्यङ्गजातं सर्वार्थं भवतीति तन्त्रम् । साहित्यविधिवशाद्युगपदेव षण्णामपि प्रयोगः कार्यतया प्राप्तोऽपि "यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति" इति वचनाद्विप्रकृष्यते । न तावताऽङ्गानामावृत्तिः ।

Siddhānta : The statement पौर्णमास्यां पौर्णमास्या यजेत enjoins पौर्णमासीकाल to the three yāgas along with the auxiliaries. Therefore the auxiliaries related to these three yāgas hav to be observed on पौर्णमासी only. Similarly the statement अमावास्यायां अमावास्या यजेत states that the three yāgas have to be observed on अमावास्या along with their auxiliaries. Therefore these auxiliaries have to be observed on अमावास्या only. Hence it is not proper to observe the auxiliaries of six yāgas only on पौर्णमासी days.

**सिद्धान्तस्तु,** ''पौर्णमास्यां पौर्णमास्या यजेत'' इति वाक्ये पौर्णमासीसंज्ञकाग्नेयादियागत्रय-करणको यः फलार्थस्साङ्गप्रत्ययवाच्यव्यापारस्तदङ्गत्वेन पौर्णमासीकालो विधीयत इत्यङ्गानामपि यागकरणकफलक्रियान्तर्गतानां तत्कालतैव विहिता भवति । एवमेव ''अमावास्यायाममावास्यया यजेत'' इत्यत्राप्यमावास्याशब्दितयागत्रयकरणकफलार्थव्यापारेऽमावास्याकालो विधीयत इति दर्शयाग-करणकफलार्थक्रियायामन्तर्गतानामङ्गानां तत्कालतैवोक्ता भवतीति द्वयोरपि कालयोरङ्गानामावृत्तिः ।

### अध्वरकल्पायां त्रिषु सङ्घेष्वङ्गानां भेदेनानुष्ठानाधिकरणम् (11-2-3)

Among the Kāmya Iṣṭis, there is one called अध्वरकल्प. At this Iṣṭi, three yāgas each in the morning, noon and afternoon, with minor differences, are stated. In this context it is stated that the Nirvāpa of the morning yāga be observed before other people wake up from sleep. Here the question is raised whether the auxiliaries of the three sets of three yāgas to be performed three times a day, should be observed once or should be observed separately.

काम्येष्टिष्वध्वरकल्पा नाम काचिदिष्टिः । तत्र पूर्वाह्णे मध्याह्ने अपराह्णे च यागानां त्रिकं त्रिकमीष-द्भिन्नमेकरूपमेवाम्नातम् । ''आग्नावैष्णवमष्टाकपालं निर्वपेत्पूर्वाह्णे । सरस्वतीमाज्यस्य यजेत । बार्हस्पत्य-श्चरुः । आग्नावैष्णवमेकादशकपालं निर्वपेन्माध्यन्दिने । सरस्वतीमाज्यस्य यजेत । बार्हस्पत्यश्चरुः । आग्नावैष्णवं द्वादशकपालं निर्वपेदपराह्णे । सरस्वतीमाज्यस्य यजेत । बार्हस्पत्यश्चरुः'' इति । तत्र श्रूयते ''पुरा वाचः प्रवदितोर्निर्वपेत्'' इति । प्रवचनात्पूर्वं, सुप्तजनोत्थानात्पूर्वमिति यावत् । तत्र त्रिषु कालेषु प्रयुज्यमानानां त्रयाणामपि त्रिकाणामङ्गानि तन्त्रम्, उतावर्तेरन्निति सन्देहे,

Pūrvapakṣa : The nirvāpa stated to be performed before the other people wake from sleep not only applies to this particular auxiliary but applies to



auxiliaries of all the yāgas to be observed during the day. Hence, these are to be performed at that time once, but not separately at different times.

''पुरा वाचः'' इति वाक्येन सुप्तजनप्रबोधात्पूर्वं श्रुतनिर्वापाख्यापकर्षो न प्रातःकालीनयागत्रय-मात्रसम्बन्धी । अपि तु ''यस्य भ्रातृव्यः सोमेन यजेत'' ''सैवाध्वरकल्पेष्टियज्ञमेवैतया प्राप्नोति'' ''पुरा वाचः'' इति वचनबलादेव माध्यन्दिनापराह्णकालीनयागविप्रकृष्टकालीनमप्यङ्गजातं प्रधानाना-मुपकारकमिति कल्पनात्तंत्रमङ्गानि । एवञ्च नवानामपि यागानां तन्त्रेणैव समापनमित्युत्तराङ्गनामपि तन्त्रेणैवानुष्ठानम् ।

Siddhānta : The statement that निर्वाप of the first yāga be observed before the waking of other people applies only to the first yāga. It does not warrant the observation of all other auxiliaries at that time, the other auxiliaries have to be observed at the time of the respective yāgas.

**सिद्धान्तस्तु,** ''पुरा वाचः'' इति वाक्यं न सर्वसम्बन्धिनिर्वापापकर्षकम् । किन्तु प्रातः-कालीनस्यैव निर्वापस्य । माध्यान्दिनादियागीयाङ्गानां प्रधानकालकर्तव्यत्वस्याङ्गानां प्रधानकालत्व-नियमबलेन प्राप्तस्य बाधायोगात् । चोदकेनाप्यङ्गानां प्रधानकाल एव प्रापणाच्च । अतः प्रातःकालीन-प्रधानाङ्गानामेव कालविशेषः ''पुरा वाचः'' इति वाक्येन नियम्यत इति न सर्वेषामेकोपक्रमा-वसानमिति नाङ्गानां तन्त्रता ।

### प्राजापत्यवसाहोमानां तन्त्रेणानुष्ठानाधिकरणम् (11-2-4)

At Vājapeya, the statement सप्तदश प्राजापत्यान् पशूनालभते prescribes the offering of seventeen paśus related to the deity Prajāpati. With reference to these paśus, vasāhoma stated in the prakṛtiyāga has to be performed. Here the question is raised whether this vasāhoma has to be performed separately for each paśu or only once for all paśus.

वाजपेये ''सप्तदश प्राजापत्यान् पशूनालभते'' इति श्रुतप्रजापतिदेवताकेषु पशुषु प्रकृति-भूताग्नीषोमीयपशौ ''याज्यार्धर्चान्ते वसाहोमं जुहोति'' इति श्रुतो वसाहोमश्चोदकपरम्परया प्राप्तः । स किं तन्त्रेण कार्यः, उताऽऽवापेनेति **सन्देहे,**

Pūrvapakṣa : The term वसा means the water coming from cooked flesh

taken from the limbs of the paśu. This differs in the case of each pasu. Therefore वसाहोम has to be performed in respect of each paśu separately.

वसा हि पश्ववयवमांसपाकेन निर्गच्छज्जलविशेषः । सा हि पशुभेदाद्भिद्यत इति तद्धोमोऽपि भिन्न एवेति पूर्वत्राङ्गानामिवावापेन कार्य इति **प्राप्ते,**

Siddhānta : Although the paśus are different, the flesh taken from the paśus is cooked together. Consequently the Vasā, i.e. the water flowing from it, is one and the deity to which the paśus are to be offered is also one. Hence, performance of Vasā homa once is sufficient.

पशुभेदेऽपि सप्तदशपश्ववयवानां सहश्रपणेन वसाया एकत्वादेकदैवत्यत्वाद्याज्यार्धर्चान्तस्यै-कत्वान्निमित्तस्य याज्यार्धर्चान्तस्यानावृत्तौ नैमित्तिकस्य वसाहोमस्याऽवृत्तिशङ्कानुदयाच्च सकृदेव कार्यो वसाहोम इति ।

**एकादशिनेषु वसाहोमस्य भेदेनानुष्ठानाधिकरणम्** (11-2-5)

There are paśu yāgas such as Āgneya, Sārasvata, Soumya etc. that have different deities. Eleven paśus have to be offered at these yāgas. Here the question is raised whether vasāhoma has to be performed in respect of the paśus of these yāgas once only or by repeating in each case.

एकादशिनेष्वग्नेयसारस्वतसौम्याद्यनेकदैवत्यपशुषु वसाहोमः किं तन्त्रेण कार्यः, उतावापेनेति **सन्देहे,**

Pūrvapakṣa : argues that since the flesh of all the paśus is cooked in one, performance of vasāhoma once is sufficient.

सहश्रपणेन वसाया एकत्वाद्याज्यार्धर्चान्तभेदेऽपि यस्य कस्यचिदर्धर्चस्यान्ते पूर्वत्रेव सकृदेव वसाहोमः कार्य इति **प्राप्ते**

Siddhānta : The yājya mantras are different for each paśu. Therefore the vasāhoma has to be performed separately.

**सिद्धान्तः,** याज्याशब्दो हि ससम्बन्धिशब्दत्वात्तत्तत्सम्बन्धियाज्यापरः । तथा च सर्वे च पशवः स्वस्वयाज्यार्धर्चान्ते स्वस्ववसाया होमेन प्रतिपत्तिमपेक्षन्त इत्यावापेन वसाहोमः कार्यः ।



**यूपैकादशिन्यां यूपाहुतौ तन्त्रताधिकरणम्** (11-2-6)

In the context of Agniṣomīya paśu, eleven yūpas are erected and yūpāhuti is prescribed placing the agni near yūpa. Here the question is raised whether yūpāhuti be offered separately for eleven yūpas or one performance is sufficient.

यूपैकादशिन्यां ''एकादश यूपान् मिनोति'' इति श्रुतैकोत्तरयूपदशकेऽग्नीषोमीयपशौ ''यूप-स्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति'' इति श्रुतयूपाहुतिश्चोदकेन प्राप्ता किं तन्त्रेण कर्तव्या, अथ प्रतियूपं भेदेनेति **सन्देहे,**

Pūrvapakṣa : Yūpāhuti is stated to be performed near yūpa. The place near the yūpa is different for each yūpa. Therefore yūpāhuti has to be performed separately near each yūpa.

पूर्वत्र तद्याज्यार्धर्चान्ते वसाहोमवद्यूपाहुतिरपि भेदेनैव कार्या । याज्याशब्दवदन्तिकशब्दस्यापि सम्बन्धिशब्दतया तत्तद्यूपान्तिकपरत्वेनान्तिकप्रदेशानां भेदादिति **प्राप्तम्।**

Siddhānta : Here for the purpose of yūpāhuti, agnimathana is stated. This agnimathana cannot be done very close to each yūpa. Therefore it has to be performed in a place which is within the view of yūpa. This is not to be performed near each yūpa. Hence, as it is performed in one place, performing it once for all yūpas is sufficient.

**सिद्धान्तस्तु,** ''अग्निं मथित्वा'' इति हि श्रूयते । अत्यन्तसमीपे मथनायोगाद्यं देशं प्राप्तो यूपसमीपं प्राप्त इत्युच्यते । यत्र यूपो दृष्टिपथमापद्यते तत्र मथनं होमश्च । स च सर्वेषामेक एव देशः सम्भवतीत्यगृह्यमाणविशेषत्वात्तन्त्रेणैव कार्या यूपाहुतिरिति ।

**साङ्गस्यावभृथस्याप्स्वनुष्ठानाधिकरणम्** (11-2-7)

At Jyotishtoma the statement अप्स्ववभृथेन चरन्ति occurs. The word अवभृथ refers to अवभृथ इष्टि. Here the question is raised whether प्रधान अवभृथ इष्टि only be performed in water or the auxiliaries also.

ज्योतिष्टोमे ''अप्स्ववभृथेन चरन्ति'' इति श्रुतम् । तत्र किं प्रधानमवभृथेष्टिमात्रमप्सु कर्तव्यम्, उताङ्गान्यपीति **सन्देहे**

*Pūrvapakṣa* : By the statement अप्सु अवभृथेन चरन्ति it is stated that only प्रधान इष्टि be observed in water. Hence, the auxiliaries are to be observed in आहवनीय only. It cannot be argued that since there is no प्रधानयाग संयोग with आहवनीय, how can there be अङ्गसंयोग with them. This objection is not valid. The अङ्गसंयोग with अग्नि is not because of प्रधानसंयोग but because of the express statement यदाहवनीये जुहोति । Hence, there is no difficulty in observing angas in आहवनीय.

''अप्स्ववभृथेन चरन्ति'' इत्यवभृथमात्रस्यैव ग्रहणेन तन्मात्रस्यैवाप्स्वनुष्ठानम् । अङ्गानान्त्वाहवनीय एव ।

Siddhānta : The अवभृथ is a particular इष्टि. The statement अप्सु अवभृथेन is in instrumental case suffix. Hence, it means अवभृथेन समीहितं भावयेत् । अवभृथ is करण. It is related with फलभावना. A yāga with its auxiliaries only is करण. Therefore the auxiliaries also have to be performed in water but not in आवहनीय.

**सिद्धान्तस्तु,** अवभृथो हि ''वारुणेनैककपालेनावभृथं चरन्ति'' इति वाक्यविहितेष्टिविशेषः । स च ''अप्स्ववभृथेन'' इति तृतीयान्तनिर्दिष्टः । तथा च ''अवभृथेन समीहितं भावयेत्'' इत्यवभृथकरणिकायां फलभावनायां श्रुता आपोऽङ्गानामपि भवन्ति । साङ्गस्यैव करणत्वात् । तस्मादापोप्यङ्गप्रधाने प्रति तन्त्रमिति ।

### वरुणप्रघासेष्वाग्नेयादीनां मरुत्या भेदेनाष्टानाधिकरणम् (11-2-8)

At वरुणप्रघास, आग्नेय etc. nine हविस् are prescribed. Here it is stated that Vedi is prepared in a different place. Agni has to be enkindled in a different place. In this way, different places for the हविरासाधन homas are prescribed. It is further stated that अध्वर्यु places eight हविस् in the northern portion of the hall. प्रतिप्रस्थाता places one हविस् in the southern portion of विहार. Here the question is raised whether the auxiliaries for these nine हविस् be performed once only or separately for each हविस्.



वरुणप्रघासेष्वाग्नेयादीनि नव हवींषि विहितानि । तत्र ''पृथग्वेदी कुरुतः । पृथगग्नी प्रणयतः'' इति विहारभेदः पठितः । **विहारो** नाम हविरासादनहोमप्रदेशः । तत्र श्रूयते ''अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति । मारुतीमेकां प्रतिप्रस्थाता दक्षिणस्मिन्'' इति । तत्र किं नवानामपि हविषामङ्गानि तन्त्रम्, उत भेदेन कार्याणीति सन्देहे,

Pūrvapakṣa : The statement प्रावृषि वरुणप्रघासैः यजेत states one प्रयोग for all. Hence, the auxiliaries of these also should be performed once only.

''प्रावृषि वरुणप्रघासैर्यजेत'' इत्येकप्रयोगवचनगृहीतत्वान्नवानामपि हविषामङ्गान्यवभृथे अपामिव तन्त्रमिति **प्राप्तम्** ।

Siddhānta : Here homa is stated in two parts of the विहार. आहवनीय is available in both the parts. Since प्रधान is observed in different places angas also have to be repeated.

**सिद्धान्तस्तु,** भवेदेवं यद्यत्रापूर्वमासादनं विधीयेत । न चैवम् । तस्य चोदकेन प्राप्तत्वात् । आसादनं च होमार्थं । अन्यथाऽदृष्टार्थताप्रसङ्गात् । होमश्च विहारद्वये व्यवस्थया प्राप्तः । आहवनीयस्योभयत्र प्राप्तत्वात् । एवञ्च प्रधानस्यैव देशभेदादङ्गानामावापः । न चैवमासादनस्य प्राप्तत्वात् ''उत्तरे हवींष्यासादयति'' इति व्यर्थमिति शङ्क्यम् । अव्यवस्थया प्राप्तस्यासादनस्य व्यवस्थया नियमार्थत्वोपपत्तेरिति ।

### उत्तरदक्षिणविहारयोः कर्तृभेदाधिकरणम् (11-2-9)

At चातुर्मास्य, five Ritviks are stated. Among these अध्वर्यु and प्रतिप्रस्थाता place the हविस् in the Northern portion of विहार. प्रतिप्रस्थाता places one in the South portion of विहार. Here the question is raised whether the remaining three viz. ब्रह्मा, होता and अग्नीध्र should place the हविस् separately in the two parts of विहार or together.

''चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः'' इति वचनात्पञ्चैवर्त्विजः । तत्राध्वर्युप्रतिप्रस्थातारौ ''अष्टावध्वर्युरुत्तरे हवींष्यासादयति । मारुतीमेकां प्रतिप्रस्थाता दक्षिणस्मिन्'' इति वचनाद्विहारद्वये व्यवस्थितौ । ब्रह्मा होताऽऽग्नीध्रश्चेत्यवशिष्टास्त्रयोऽपि विहारद्वये भेदेन सम्पाद्याः, उत तन्त्रमिति **सन्देहे,**

Pūrvapakṣa : argues that the prayoga are different in two different places. Therefore it is proper that Brahma etc agents also are different.

पूर्वत्राङ्गानामिव कतृभेदोऽपि स्वीकार्यः । देशभेदेन प्रयोगयोर्भिन्नतया तदङ्गभूतब्रह्मादिकर्तृभेदस्य न्याय्यत्वादिति **प्राप्तम्** ।

Siddhānta : If Brahmā etc agents are taken as different, then the numbers stated for the agents will be violated. Therefore even though प्रयोग is different, Brahmā etc agents are not different.

**सिद्धान्तस्तु,** उभयत्र कर्तृभेदे वाचनिककर्तृपञ्चकत्वभङ्गापत्तेः कर्त्रैक्ये विहारद्वयाभिप्रायेणोपपन्नं पञ्चत्वमिति तैरेवोभयकार्यसिद्धेर्न प्रयोगभेदेऽपि ब्रह्मादीनां भेदः । किन्तु तन्त्रतेति ।

**उत्तरदक्षिणविहारयोः पत्नीसंयाजादीनां भेदेनानुष्ठानाधिकरणम्** (11-2-10)

At वरुणप्रघास patnisamyājas are stated. Here the question is raised whether these are to be performed separately or together.

वरुणप्रघासेष्वेव ''गार्हपत्ये पत्नीः संयाजयन्ति'' इत्युक्ता गार्हपत्ये कर्तव्याः पत्नीसंयाजादयः किं तन्त्रम्, उत भेदेन कार्या इति **सन्देहे,**

Pūrvapakṣa : Since there is no difference of places, these have to be performed together.

देशभेदाभावात्पूर्वत्र ब्रह्मादय इव तन्त्रमिति **प्राप्तम्** ।

Siddhānta : Though the place is one, the agents are different. Hence, these have to be performed separately only.

**सिद्धान्तस्तु,** प्रधानकर्तृभेदाद्देशैक्येऽपि भेदेनैव कर्तव्याः । प्रतिप्रस्थातृकृतैरुपकारो मारुत्यामिष्टायामध्वर्युकृतस्त्वाग्नेयादीनामिष्टानामित्यावापः पत्नीसंयाजादेरिति ॥

**वाजपेये प्राजापत्यपश्वालम्भशेषस्य ब्रह्मसामकाल उत्कर्षाधिकरणम्** (11-2-11)

At Vājapeya, with reference to Prājāpatya paśu it is stated that after performing paryagnikaraṇa, the paśus are let off. But these are offered in



Brahmasāman. Here the question is raised whether by the word उत्सृजन्ति the auxiliaries upto paryagnikaraṇa are enjoined, or there is anuvāda of utsarga only.

वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते ''तान् पर्यग्निकृतानुत्सृजन्ति । ब्रह्मसाम्न्यालभते'' इति । तत्र किमुत्सृजन्तीत्यनेन पर्यग्निकरणान्ताङ्गरीतिविधिः, उतोत्सर्गस्यानुवाद इति सन्देहे

Pūrvapakṣa : states that here the performance of the auxiliaries upto paryagnikaraṇa is enjoined but not mere उत्सर्ग. The statement ब्रह्मसाम्न्यालभते should be taken as enjoining a different Karma.

''पर्यग्निकृतानारण्यानुत्सृजन्ति'' इत्यत्रेव पर्यग्निकरणान्ताङ्गरीतिर्विधीयते । न त्यागमात्रम् । न चैवं ''ब्रह्मसाम्न्यालभते'' इति वाक्यमनर्थकमिति शङ्क्यम् । तस्य कर्मान्तरविधिपरत्वोपपत्तेः ।

Siddhānta : points out that if two karmas are enjoined by the statement it will result in वाक्यभेद. Hence, the उत्कर्ष of the auxiliaries after पर्यग्निकरण to the time of ब्रह्मसामन् is enjoined here. When उत्कर्ष is enjoined then it follows that the auxiliaries after पर्यग्निकरण need not be performed.

**सिद्धान्तस्तु,** कर्मान्तरविधौ हि सप्तदशपशुयागजन्यादृष्टाददृष्टभेदः कल्प्यः । तथा कर्मद्वयविधौ वाक्यभेदश्च स्यात् । कर्मद्वयविधायकयोर्वाक्ययोर्मिथः कथमपि सम्बन्धाभावात् । अतः पर्यग्निकरणानन्तरं प्राप्तस्य माध्यन्दिनसवने ब्रह्मसामकाले उत्कर्षो विधीयते । न चास्मिन्नपि पक्षे उत्कर्षः पर्यग्निकरणानन्तरव्यापारोपरमश्च विधेय इति वाक्यभेदस्तुल्य इति शङ्क्यम् । उत्कर्षविधौ पर्यग्निकरणानन्तरव्यापारोपरतिस्तु प्राप्तैवेति तस्या ''उत्सृजति'' इत्यनेनानुवादेन विधानाभावात्तदेव कर्मोत्कृष्यत इति ।

**अहीन उक्ष्णामुत्सर्गस्य कर्मशेषप्रतिषेधार्थताधिकरणम्** (11-2-12)

There is an अहीन sacrifice designated as पञ्चशारदीय, which has to be performed over five years. It is stated that, during the first year, on the Amāvāsyā day which has Viśākha nakshatra. Ālambhana of seventeen paśus which are of three years age, delicate and of deity Marut, is enjoined. In the statement प्रेतरान् उत्सृजन्ति, उत्सर्ग is stated. During the second, third and fourth

years performance in the same way is stated. But in the fifth year it is stated that the sacrificer should offer three paśus on each day and five paśus on the last day. Here the question is raised whether the same paśus which are let off after paryagnikaraṇa should be taken in the second, third and fourth years for performing paryagnikāraṇa and in the fifth year the same paśus be offered during the five सुत्या days in groups of three and on the last day in a group of five आलम्भन is to be made. Or should the sacrifice be closed in the first year after the observation of पर्यग्निकरण, and during the second, third and fourth years संस्कार be made to different paśus. Then, during the 5th year, आलम्भन of new paśus is to be made.

अस्ति पञ्चशारदीयनामकः पञ्चाहोऽहीनविशेषः । ''मरुतां पञ्चशारदीयः । यः कामयेत बहु स्यामिति स एतेन यजेत'' इति विहितः । स च पञ्चसु संवत्सरेष्वनुष्ठेयः । तत्र प्रथमसंवत्सरे विशाखानक्षत्रयुक्तामावास्यायां ''सप्तदश मारुतीः पृश्नीस्त्रिवत्सा अपचिता उपाकरोति'' ''सप्तदश पृश्नीनुक्ष्णस्तान् पर्यग्निकृतान् प्रोक्षितानितरानालभन्ते'' ''प्रेतरानुत्सृजन्ति'' इति वाक्ये मरुद्दैवत्यान् पृश्न्यादिशब्दितानल्पतरानुपाकृतान् त्रिहायनानप्रसूतानुपाकृतान् सप्तदशस्त्रीपशूनितरानित्यनूद्य ''आलभन्ते'' इत्यालम्भनं विधाय प्रेतरानित्यत्र च पृश्नीन् पर्यग्निकृतान् प्रोक्षितानुक्ष्णो मारुतान् इत्यनुषङ्गेण मरुद्देवताकान् प्रोत्सृजतीत्युक्ष्णामुत्सर्गं च विधाय पुनर्द्वितीये तृतीये चतुर्थे च संवत्सरे ''राजीवान्यानयन्ति'' तांश्चैवोक्ष्णा इत्यादिप्रागुक्तरूपेणैवानुष्ठानमाम्नाय पञ्चमे संवत्सरे श्रूयते ''पञ्चमे वर्षे दीक्षित एतानुक्ष्णस्त्रींस्त्रीनेकस्मिन्न्यहन्यालभेरन्पञ्चोत्तमेऽहनि'' इति । तत्र **सन्देहः**, य एव प्रथमे संवत्सरे पर्यग्निकृता उक्षाण उत्सृष्टास्तेषामेव द्वितायादिसंवत्सरेषु पर्यग्निकरणं, पञ्चमे च संवत्सरे तेषामेव पञ्चसु सुत्याहेषु त्रीन् त्रीन् चरमेऽहनि पञ्चेत्येवमालम्भः, किं वा प्रथमे वर्षे उपक्रान्तानां पर्यग्निकरणान्ताङ्गरीतिविधानेन तत्रैव समाप्तिः । द्वितीयादिसंवत्सरेष्वन्येवोक्षाणस्संस्कार्याः । पञ्चमे संवत्सरे त्वन्ये उक्षाण आलभ्या इति ।

Pūrvapakṣa : states that here आलम्भन of the same paśus which were let off in the first year be made during the fifth year. To take different paśus each year will result in गौरव. Observing संस्कार for the same paśus is not अनर्थक as it leads to अदृष्टफल.

**पूर्वपक्षस्तु,** पूर्वत्र यथा ''ब्रह्मसाम्यालभ्यते'' इति वाक्ये पर्यग्निकृतानामेव प्राजापत्यपशूना-



मालम्भोत्कर्षविधिस्तथात्रापि प्रथमवत्सरे पर्यग्निकृत्योत्सृष्टानां पञ्चमवत्सरे आलम्भोत्कर्षमात्रविधिः । लाघवात् । अन्यथा प्रतिवत्सरमन्येऽन्ये सम्पाद्या इति गौरवम् ।

Siddhānta : Here, a different अनेकगुणविशिष्ट कर्म, is enjoined. The seventeen yāgas initiated during the first year should be closed during that year only. During second, third, and fourth years, different paśus be taken and be let off after पर्यग्निकरण. During the fifth year different paśus be taken and offered.

**सिद्धान्तस्तु,** ''पर्यग्निकृतानुत्सृजति'' ''ब्रह्मसाम्यालभन्ते'' इत्येकवाक्यतयाऽऽलम्भोत्कर्ष-सम्भवेनोत्सर्गोनुवादः । प्रकृते त्वनेकगुणविशिष्टकर्मान्तरविधिरेवोपेयः । प्रथमवर्षोप्रक्रान्तानां सप्तदशो-क्षयागानां तत्रैव समाप्तिः । एवं द्वितीयादिवत्सरेष्वप्यन्येऽन्ये उपादेयाः । पर्यग्निकरणान्तेनोत्स्रष्टव्याः । पञ्चमेऽपि वर्षे अन्येषामुक्ष्णामालम्भ इति ।

## दशपेयाभिषेचनीययोर्भेदेन प्रयोगाधिकरणम् (11-2-13)

At Rājasūya two sacrifices of one day duration designated as अभिषेचनीय and दशपेय are prescribed. Here the question is raised whether these two be performed together or separately.

राजसूये अभिषेचनीयदशपेयाख्यौ द्वौ सोमयागावेकाहौ । तौ किं समानतन्त्रौ, भिन्नतन्त्रौ वेति सन्देहे,

Pūrvapakṣa : states that by the statement ''सह सोमौ क्रीणाति'' the purchase of soma for these two yāgas is prescribed to be made together. This means the other auxiliaries also have to be performed simultaneously. Hence, these two yāgas should be started together and also closed together.

''सह सोमौ क्रीणाति'' इति अभिषेचनीयस्य दशपेयस्य च वचनेनाभिषचनीयसोमक्रयकाले दशपेयसोमक्रयस्याप्याकर्षणात्तस्य च अङ्गानां मुख्यत्वादिति पञ्चमाध्यायाद्यपादीयोक्ततदन्तापकर्ष-न्यायेन ततः प्राचामपि पदार्थानामपकर्षाद्द्वावपि सोमयागौ सहैवोपक्रमयितव्याविति सहैवोपक्रमात्सहैव समापनीयावित्येककालकर्तव्यत्वात्समानतन्त्राविति ।

Siddhānta : The statement सह सोमौ क्रीणाति does not prescribe the purchase of the soma simultaneously but it only prescribes that the price of

सोम should be decided simultaneously. Therefore this does not indicate simultaneous performance of the two.

**सिद्धान्तस्तु,** ''सह सोमौ क्रीणाति'' इत्यत्र श्रुतक्रयो यदि परकीयस्य मूल्यं दत्त्वा स्वकीयकरण रूपमुख्यक्रयस्तदा स्यादेवं समानतन्त्रत्वम्। न चैवम्। किन्तु गौण्या वृत्त्योपसम्पादनशब्दितो विक्रेत्रा सह मूल्यनिश्चयरूपः क्रीणातिनोच्यते। क्रीणाति सोममूल्यनिश्चयमभिषेचनीयदशपेययोस्सह करोतीति। तथा च तदङ्गभूतमुख्यक्रयापकर्षाभावान्न तदन्तापकर्षेण सहोपक्रमावसानतया तयोस्समानतन्त्रत्वम्।

### वारुणीनिष्कासावभृथस्यार्थकर्मताधिकरणम् (11-2-14)

At Varuṇa praghāsa, nine havis are prescribed. For this purpose Māruti Āmikṣa and Vāruni Āmikṣā are stated. It is also stated that अवभृथ has to be performed by Vāruni Niṣkāsa and Tuśa. वारुणी निष्कास means the portion of वारुणी आमिक्षा that is in the vessel. तुष are पुरोडाशव्रीहि तुष placed in the vessel. Here the question is raised whether प्रचारोत्कर्ष of आमिक्षा for प्रधानयाग itself is prescribed here or a different karma is enjoined or प्रतिपत्ति संस्कार for आमिक्षानिष्कास is stated or निष्कासतुषद्रव्यक कर्मान्तर is stated.

वरुणप्रघासेषु नव हर्वींषि। तत्र ''मारुत्यामिक्षा। वारुण्यामिक्षा'' इति श्रुतम्। तत्र ''वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति'' इति श्रूयते। वारुण्या आमिक्षाया स्थालीलग्नेनाल्पेन तथाऽऽमिक्षा-संस्कारार्थं तन्मध्ये पिष्टस्थापनाय पिष्टप्रकृतिभूतयवतुषैः पुरोडाशार्थव्रीहितुषैश्चावभृथमनुतिष्ठन्तीत्यर्थः। तत्र किं प्रधानस्यैवामिक्षायागस्यायं प्रचारोत्कर्षः, किं वा कर्मान्तरं, स तु निष्कासस्येयं प्रतिपत्तिः, उत निष्कासतुषद्रव्यकं अवभृथधर्मकं कर्मान्तरमेवेति इति त्रेधा **सन्देहः**।

Pūrvapakṣa : i) states that here, after performing आज्यभाग by a portion of आमिक्षा the offering of the remaining portion of आमिक्षा to the deity वरुण is prescribed here, but not a different कर्म.

ii) In another way, pūrvapakṣin says that here a different Karma with आमिक्षानिष्कास as द्रव्य is prescribed as प्रतिपत्तिसंस्कार of निष्कास.

**पूर्वपक्षस्तु,** आमिक्षाया एकदेशेनाऽऽज्यभागान्ते प्रचारे कृते समिष्टयजुरनन्तरकाले एकदेशेनाऽऽ-मिक्षालेपे तस्या एव वरुणदेवतायै दीयमाने सति तस्यैव कर्मणः प्रचारविप्रकर्षः। न कर्मान्तरम्।



अवभृथशब्दस्तु अवभृथ इवावभृथ इति, अवभृथो यथा वरुणदैवत्यस्तथाऽयमपीति प्रकृतकर्मणि गौणः। एवञ्च पूर्वत्र क्रीणातौ लक्षणाभ्युपगमेऽपि नेह विधाववभृथशब्दे धर्मलक्षणा युक्तेत्येकः।

यदि प्रदानस्यैव विप्रकर्षः पशुवत्तदा ''वारुण्या निष्कासेन यन्ति'' इत्येतावता पूर्तेरवभृथशब्दो व्यर्थस्स्यात्। निरर्थकानुवादादपि धर्मलक्षणाया एव युक्तत्वादवभृथसमानधर्मकं निष्कासद्रव्यकं कर्मान्तरं सत् स्विष्टकृदादिवन्निष्कासप्रतिपत्त्यर्थमिति **द्वितीयः**।

Siddhānta : states that it is not प्रतिपत्तिकर्म but it is a different कर्म similar to अवभृथ.

**सिद्धान्तस्तु,** कर्मान्तरमिति पक्षे हि यथा प्रसिद्धेनावभृथाख्येन कर्मणा कृतं तथाऽनेनापि कर्तव्यमित्यर्थः स्यात्। तथा च सति द्रव्यं गुणो, यागः प्रधानं। निष्कासप्रतिपत्तित्वे तु द्रव्यं प्रधानं, यागो गुण इति वैपरीत्यापत्त्या प्रसिद्धावभृथवदयं कृतो न स्यात्। अवभृथशब्दविरोधान्न प्रतिपत्तित्वमपि। किं तु केवलं तत्समधर्मकं कर्मान्तरमेवेति।

### प्रायणीयनिष्कासे उदयनीयनिर्वापस्य संस्कारकर्मताधिकरण् (11-2-15)

At ज्योतिष्टोम it is stated that उदयनीयनिर्वाप is to be made in प्रायणीयनिष्कास. Here the question is raised whether a कर्म that has प्रायणीयनिष्कास as its द्रव्य and has the same auxiliaries as उदयनीय is enjoined or the mixing of प्रायणीनिष्कास and उदयनीयनिर्वाप is a प्रतिपत्ति or निर्वाप in प्रायणीयनिष्कास is a संस्कार of उदयनीय.

ज्योतिष्टोमे ''प्रायणीयस्य निष्कासे उदयनीयमनुनिर्वपति'' इति श्रूयते। तत्र किं प्रायणीय-निष्कासद्रव्यकमुदयनीयसमानधर्मकं कर्मान्तरं विधीयते, किं वा प्रायणीयनिष्कासस्योदयनीयनिर्वाप-संयोगः प्रतिपत्तिः, उत प्रायणीयनिष्कासे निर्वापः उदयनीयस्य संस्कार इति त्रेधा **सन्देहः**।

Pūrvapakṣa : states that–

i) Here a different कर्म that has प्रायणीयनिष्कास as द्रव्य and the auxiliaries similar to उदयनीय is enjoined.

ii) Here the mixing of प्रायणीयनिष्कास with उदयनीयनिर्वाप is stated as प्रतिपत्तिकर्म.

**पूर्वपक्षस्तु,** पूर्वत्रेव प्रायणीयनिष्कासद्रव्यकमुदयनीयसमानधर्मकं तन्नामकं कर्मान्तरमित्याद्यः। ''आदित्य उदयनीयश्चरुः'' इत्युदयनीयस्य मुख्यस्येह प्रकृतत्वात्प्रकृतप्रत्यभिज्ञाविरोधाल्लक्षणादोषाच्च

न प्रकरणान्तरन्यायेन तद्धर्मककर्मान्तरविधिः । किन्तु प्रायणीयनिष्कासस्य कृतार्थस्योदयनीय-निर्वापसंयोगः प्रतिपत्तिरिति **द्वितीयः** ।

Siddhānta : Here the accusative suffix of the word उदयनीयं indicates that संस्कार has to be made for उदयनीयनिर्वाप. Hence for हविस् संस्कार of उदयनीय, निर्वाप has to be made in प्रायणीयनिष्कास.

**सिद्धान्तस्तु**, निष्कासस्य प्रतिपाद्यत्वे निष्कासमिति द्वितीया स्यात् । न सप्तमी । तथा च तस्य गुणभावस्यैव प्रतीतेः उदयनीयमिति द्वितीययोदयनीयनिर्वापस्य संस्कार्यत्वप्रतीतेश्च उपयुक्तसंस्कारा-दप्युपयोक्ष्यमाणसंस्कारस्यैवाकर्तव्यत्वाच्चोदयनीये हविःसंस्कारार्थं प्रायणीयनिष्कासे निर्वाप इति ।

**इति एकादशाध्याये द्वितीयः पादः**

## अथैकादशाध्याये तृतीयः पादः

### वेद्याद्यङ्गानां प्रधानकालादन्यकालकर्तव्यत्वाधिकरणम् (11-3-1)

In the earlier two pādas तन्त्र and आवाप of the auxiliaries that are to be performed at the time of प्रधानयाग are discussed. In this पाद the तन्त्र and आवाप of such auxiliaries that are to be observed at a different time than the प्रधानयाग will be discussed. The first सूत्र of this पाद is intended to state that certain auxiliaries have to be observed at different time and different place also. E.g., Vedi is to be made a day before the अमावास्या yāga. The homa be offered in the foot prints of the cow which is distinct from a normal place of होम viz., आहवनीय. अवभृथ is to be offered in water. This is also a different place than the normal place viz., आहवनीय. At सौत्रामणि, वडवा is stated to be offered as दक्षिणा. This is different from normal दक्षिणा.

पूर्वपादाद्यनयेन प्रधानसमदेशकालत्वमङ्गानामुक्तम् । अत्र तूत्तरविवक्षया वचनाद्भिन्नकालत्व-मप्यङ्गानामस्तीति वक्तुमिदं सूत्रम् । नात्र पूर्वोत्तरपक्षावकाश इत्याहुः । **सूत्रार्थस्तु**, **अङ्गानां** पूर्वपादोक्तदिशा **मुख्यकालत्वात्** । उपलक्षणमेतत् । मुख्यदेशत्वात् मुख्यकर्तृकत्वात् । तथैव सर्वत्र



भाव्यम् । तथापि **वचनबलादन्यकालदेशकर्तृकत्वमप्युपेयम्** । यथा ''पूर्वेद्युरमावास्यायां वेदिं करोति'' इति दर्शपूर्णमासयोः प्रधानकालाद्भिन्नकालत्वं, ''पदे जुहोति'' इति प्रधानदेशादाहवनीयाद्भिन्न-देशत्वम्, ''अप्स्ववभृथेन चरन्ति'' इति च भिन्नदेशत्वम् । अग्नौ सौत्रामण्यां च ''वडवा दक्षिणा'' इति दक्षिणाभेदादुत्तरपादाद्यनयन्यायाद्भिन्नकर्तृकत्वञ्चेति ।

### आधानादेस्तन्त्रताधिकरणम् (11-3-2)

By the statement वसन्ते ब्राह्मण अग्निं आदधीत, अग्न्याधान is enjoined with reference to वसन्तकाल without stating any particular sacrifice. Here, the question is raised whether अग्न्याधान is to be made for अग्निहोत्र etc. कर्म separately and even for each प्रयोग of these Karmas separately or it has to be done once for all Karmas.

''वसन्ते ब्राह्मणोऽग्निमादधीत'' इत्यनारभ्याग्निहोत्रादिकालभिन्नवसन्तादिकाले श्रुतमाधानरूप-मङ्गमग्निहोत्रादिप्रतिकर्म एकस्मिन्नपि कर्मणि प्रतिप्रयोगं चावर्तनीयम्, उत सर्वकर्मणां तन्त्रमिति **सन्देहे**,

Pūrvapakṣa : Just as प्रयाज etc. auxiliaries are performed for each karma separately, आधान also should be performed for each karma separately.

यथा प्रयाजादिकं प्रतिकर्म प्रतिप्रयोगं चावर्तते तथाऽऽधानमनारभ्याधीतमप्याधानानन्तरं निमित्त-वशात्कामवशादेव वा किञ्चित्कर्मापतति आनन्तर्यविशेषेण तत्कर्ममात्रार्थं सत्प्रतिकर्मावर्तेत अङ्गत्वा-विशेषादिति **प्राप्ते**

Siddhānta : If आधान was enjoined with reference to a particular Karma then performing it for every other Karma separately would have been necessary. However, it is not stated with reference to any particular sacrifice. Hence, the performance of it once is sufficient for all the Karmas.

**सिद्धान्तः**, यदीदमाधानं यत्किञ्चित्कर्मारम्भे तन्मध्ये वा प्रयुज्येत तदा विशेषग्रहणेन तदर्थ-त्वावगमात्तत्समाप्तौ स्वस्यापि समाप्तत्वात्कर्मान्तरार्थमावर्तेत । न त्वेवमस्ति । अनारभ्य विधानात् । केवलं वचनबलाद्वसन्तादिस्वकाले स्थितं सदप्याधानं सर्वेषां कर्मणामुपाकरोतीत्यगृह्यमाणविरोधत्वेन सर्वार्थं सत्तन्त्रमिति ।

### अग्नीषोमीयादिपशौ यूपतन्त्रताधिकरणम् (11-3-3)

At ज्योतिष्टोम there are three paśus, viz., अग्नीषोमीय, सवनीय and अनुबन्ध्य. Here the question is raised whether the yūpa for these paśus is one or different for each paśu.

ज्योतिष्टोमे अग्नीषोमीयसवनीयानुबन्ध्यास्त्रयः पशवः। तत्राग्नीषोमीयपशावुपदिष्टो यूपः सवनीयानुबन्ध्ययोरितिदेशतः प्राप्तः। स यूपः किं त्रयाणां पशूनां तन्त्रम्, उत प्रतिपशु भिन्नमिति सन्देहे,

Pūrvapakṣa : Just as निर्वाप before the waking of other persons is observed only for the morning sacrifice the yūpa stated for अग्निषोमीय paśu has to be taken only for that paśu. For other paśus separate yūpas have to be erected.

यथाऽध्वरकल्पायां "पुरो वाचः प्रवदितोर्निर्वपेत्" इत्यत्र प्रातःकालीनस्यैवाग्नेयादिकस्य निर्वापो, मुख्यत्वादपकृष्यते तथाऽत्राग्नीषोमीययूपस्यैव "दीक्षासु यूपं छिनत्ति" इत्यपकर्षो मुख्यत्वात्। अतोऽग्नीषोमीयपशौ संस्थितस्तदीयो यूपोऽपि समाप्त एवेति सवनीयादौ भेदेन यूप उपादेयः। एवञ्चाऽधानस्य तन्त्रत्वेपि न यूपस्य तन्त्रतेति **प्राप्ते**

The statement दीक्षासु यूपञ्छिनत्ति is not for only अग्निषोमीय पशु but for all the three yūpas. Hence only one Yūpa is sufficient for all the paśus.

**सिद्धान्तः**, "दीक्षासु यूपं छिनत्ति" इत्यपकर्षो नाग्नीषोमीययूपमात्रस्य। मुख्यत्वमात्रेण श्रुतेस्संकोचायोगात्। किन्तु त्रयाणामपि यूपानां दीक्षाकाले समाकर्षणम्। तथा चाग्नीषोमीयपशुकालत्वेनागृह्यमाणविशेषत्वात्सर्वेषां तन्त्रं यूप इति।

### यूपसंस्कारतन्त्रताधिकरणम् (11-3-4)

Earlier it was stated that यूप which is erected at the time of दीक्षा is for all the three paśus. Here the question is raised whether तक्षण, शोषण etc संस्कार of यूप have to be performed once only or separately in respect of each paśu.

पूर्वत्र दीक्षाकाले अपकृष्यमाणो यूपः पशुत्रयस्यापि तन्त्रमित्युक्तम्। तत्किं तक्षणशोषणप्रोक्षणादयो यूपसंस्कारा अपि तन्त्रम्, उत प्रतिपशु भेदेन कर्तव्या इति सन्देहे,



Pūrvapakṣa : states by the statement दीक्षासु यूपं छिनत्ति the performance of छेदन only is prescribed at दीक्षाकाल. There is no mention of तक्षण etc. other sanskāras. Therefore these are to be performed separately for सवनीय पशु etc.

"दीक्षासु यूपं छिनत्ति" इति छेदनमात्रस्यापकर्षविधानेन तक्षणादीतरसंस्काराणामपकर्षाश्रवणाच्छेदनस्य तन्त्रत्वेऽपि तक्षणादिसंस्काराणामग्नीषोमीयपशुकर्मकालीनत्वेन तदपवर्गे तेषामपि समाप्तत्वेन सवनीयादौ पुनः कार्या इति **प्राप्तम्**।

Siddhānta : The statement दीक्षासु यूपं छिनत्ति states that यूप be prepared by छेदन. However, by mere छेदन, यूप will not take its full shape. यूप gets the status of यूप only after तक्षण etc. other samskāras. Therefore तक्षण etc other samskāras also be observed at the same time when the छेदन is made.

**सिद्धान्तस्तु**, "दीक्षासु यूपं छिनत्ति" इत्यस्य छेदनेन यूपं कुर्यादित्यर्थः। न हि छेदनमात्रेण यूपो भवति। किन्तु छेदनतक्षणसंस्कारानन्तरमेव यूपशब्दप्रयोगदर्शनेन छेदनादिजन्यानेकसंस्कारनिमित्तक एव यूपशब्द इति यूपोत्पत्तौ तक्षणादिकमप्यपेक्षितमिति छेदनापकर्षे तेषां छेदनोपलक्षितानामपकर्षात्तन्त्रत्वमिति।

### स्वरुतन्त्रताधिकरणम् (11-3-5)

By the statement यूपस्य स्वरुं करोति, taking out a piece of wood from the यूप is stated. Here the question is raised whether this स्वरु be taken once only or separately for the three paśu yāgas. This स्वरु, i.e. piece of wood, has to be taken at the time of anointing as per the statement स्वरुणा पशुं अनक्ति।

"यूपस्य स्वरुं करोति" इति स्वरुशब्दितः प्रथमयूपच्छेदशकलः किं तन्त्रम्, उत भेदेन सम्पाद्य इति **सन्देहे**

Pūrvapakṣa : states that when añjana is made for अग्नीषोमीयपशु the purpose of स्वरु is over. Hence, for other two paśu yāgas स्वरु has to be taken again separately. Though it is stated that the first piece of यूप is स्वरु, since its purpose is over by the añjana of अग्नीषोमीय पशु separate स्वरुs have to be taken

for other two paśus. The expression first should be taken in the sense of first piece of each cutting.

''यूपस्य स्वरुं करोति'' इत्यस्य हि ''स्वरुणा पशुमनक्ति'' इति पश्वञ्जनसाधनतया विहितं स्वरुं यूपादुपादत्त इत्यर्थः। यूपार्थं छिन्ने काष्ठे यः प्रथमशकलः, स च स्वरुः। स च दीक्षाकाल उत्पन्नोऽपि तस्य तत्कालेऽनुपयोगान्न तदुपादीयते। किन्तु ''स्वरुणा पशुमनक्ति'' इत्यञ्जनकाल एवोपादीयते। अग्नीषोमीयपश्वञ्जने समाप्ते स्वरुरपि कृतकार्यत्वात्समाप्यत इति निवर्तत इति यावत्। अतः प्रतिपशु भेदेन सम्पाद्यः।

Siddhānta : points out that in the context of taking out the first piece the cutting is not mentioned. Therefore, the word first cannot be taken in the sense of the first piece of each cutting. Hence it has to be taken as the very first piece from यूप. Therefore one and the same स्वरु be used for the three paśu yāgas.

**सिद्धान्तस्तु,** स्यादेवं यद्यत्र प्रहरणं श्रूयेत। तदा प्रहरणबहुत्वात्तदपेक्षया प्रथमशकलरूपस्वरुबहुत्वम्। न चात्र प्रहरणं श्रूयते, अतो द्वितीयादिशकलापेक्षयैव प्राथम्यं वाच्यम्। एकस्य यूपस्यैक एव प्रथमः शकल इति न स्वरुबाहुल्यं युक्तम्। अनुबन्ध्याख्यतृतीयपशुपर्यन्तं तमेव स्वरुमवस्थाप्य पश्चादेव निष्कासनमिति।

### कृष्णविषाणप्रासनस्यन्त्याहनियमाधिकरणम् (11-3-6)

At ज्योतिष्टोम it is stated that कृष्णविषाणया कण्डूयते। When there is itching sensation, it should be scratched by horn of a black deer. It is further stated that after दक्षिणा is given this horn of black deer be thrown in चात्वाल. The word चात्वाल means the pit caused by digging of earth for vedi after the mud is taken out. This throwing of the horn in the pit has to be made in the अहर्गण sacrifices of two days and three days. Here, the question is raised whether this horn is to be cast away on the first day or the last day or on the last day only.

ज्योतिष्टोमे ''कृष्णाविषाणया कण्डूयते'' इति श्रुतम्। तथा ''नीतासु दक्षिणासु कृष्णविषाणां चात्वाले प्रास्यति'' इति श्रूयते। **चात्वालो** नाम वेद्यर्थं मृत्तिकोद्धरणजातगर्तविशेषः। कण्डूयनार्थतयोपात्तकृष्णमृगशृङ्गं तत्र निक्षिपेदित्यर्थः। तत्र प्रासनं द्विरात्रत्रिरात्राद्यहर्गणेषु चोदकप्राप्तम्। तत्किमाद्ये, अन्त्ये वाऽहनि कार्यमिति विकल्पः, उतान्त्येऽहन्येवेति नियम इति सन्देहे,





Pūrvapakṣa : states that it may be cost away on the first or the last day.

यद्यन्तिमेऽहनि प्रास्येत ततः पूर्वेष्वहस्सु दक्षिणानयनानन्तरं चोदकप्राप्तं पाणिकण्डूयनं बाध्येत। न ह्यप्रास्तायां विषाणायां पाणिकण्डूयनं युक्तम्। प्रक्रान्तनियमविधित्यागे शिष्टाचारविरोधात्। यदि प्रथमेऽहनि प्रास्येत तर्हि तत उत्तरेष्वहस्सु दक्षिणानयनात्प्राग्भाविपदार्थानां विषाणया कण्डूयनं धर्मो न स्यात्। कण्डूयनेन ह्याक्षिप्तचित्तः कर्ता न सुसम्पादार्थाननुष्ठतीति कर्तृसंस्कारद्वारा कण्डूयनं पदार्थधर्मः। अतोऽवश्यंभावि केषाञ्चित्पदार्थानां चोदकप्राप्तधर्मबाध इत्याद्येऽन्त्ये वाऽहनि प्रासनमिति विकल्प **इति प्राप्तम्।**

Siddhānta : points out that it has to be cast away on the last day only.

**सिद्धान्तस्तु,** अन्त्येऽहन्येव प्रासनम्। न चोक्तदोषः। प्रकृतौ दक्षिणानयनानन्तरं कृष्णविषाणायाः प्रास्तत्वेन पाणिकण्डूयनस्यार्थिकत्वेनाशास्त्रीयत्वात्तस्य चेह चोदकेनाप्राप्तेस्तस्य पदार्थधर्मत्वाभावेन तद्बाधेऽप्यदोषादिति।

### राजसूये नानाबीजेषु वाग्विसर्गस्य चरमकालनियमाधिकरणम् (11-3-7)

At दर्शपूर्णमास it is stated that प्रणीताः प्रणेष्यन् वाचं व्यच्छति। तां हविष्कृता वाचं विसृजति। The expression हविष्कृता refers to यजमानपत्नी. वाग्विसर्ग is to be made at the time of calling yajamāna's wife as हविष्कृदेहि। Here the question is raised whether this वाग्विसर्ग is to be made at the time of अवघात of the first set of grains or last set of grains, or only at the time of अवघात of last set of the corns.

दर्शपूर्णमासयोः ''प्रणीताः प्रणेप्यन्वाचं यच्छति। तां हविष्कृता वाचं विसृजति'' इति श्रूयते। प्रणीता अपः। वाचं यच्छति मौनीभवति। हविष्कृता व्रीह्यादीनऽवधातद्वारा हविर्योग्यान् करोतीति हविष्कृद्यजमानपत्नी। तया हविष्कृता अवहननसहायतया हविष्कृदेहीति हविष्कृदाह्वानकाले तां नियमितां वाचं विसृजतीत्यर्थः। स च वाग्विसर्गः राजसूयगतनानाबीजयुक्तयागेषु ''अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणां। सोमाया वनस्पतये श्यामाकं चरुं'' इत्यादिना श्रुतेषु चोदकप्राप्तः **सन्दिह्यते,** स किं प्रथमस्य बीजस्यान्त्यस्य वाऽवघाते कार्ये सहायतया हविष्कृदाह्वानकाले वाग्विसर्ग इति विकल्पः, उतान्त्यबीजस्यावघातसहायतया हविष्कृदाह्वानकाल एवेति नियम इति।

Pūrvapakṣa : states that it may be made either at the time of अवघात of first set of corns or at the time of the last set.

**पूर्वपक्षस्तु,** यद्यन्तिमबीजस्यावघातार्थाह्वानकाले वाग्विसर्गः स्यात्तर्हि पूर्वबीजावघातसहायार्थकृतहविष्कृदाह्वानकालात्प्रत्यश्चः परावपनादयः पदार्थास्तेषां धर्मो वग्विसर्गो बाध्येत । न च पाणिकण्डूयनवद्वाग्विसर्गस्याशास्त्रार्थत्वात्तद्बाधो न दोषायेति शङ्क्यम् । ''वाचं विसृजति'' इति तस्य वाजनिकत्वात्यदि प्रथमबीजावघातसहायार्थकृतहविष्कृदाह्वानकाले वाग्विसर्गस्तर्हि पश्चात्तनबीजावघातसहायार्थकृतहविष्कृदाह्वानकालात्प्राश्चः पदार्था हविरादयस्तेषां धर्मो वाग्यमो बाध्येत । अतोऽवश्यंभाव्यन्यतरधर्मबाध इति विकल्प इति ।

Siddhānta : states that वाग्विसर्ग be made only at the time of the अवघात i.e. pounding of the last set.

**सिद्धान्तस्तु, सन्ति** सर्वस्यापि विधौ वाग्यमतद्विसर्गौ । वाग्यमतद्विसर्गयोर्द्वयोरपि विधौ वाक्यभेदादृष्टकल्पनयोरापत्तेः । अतोऽन्तिम एव विसर्ग इति ।

### अग्नीषोमीये पौरोडाशिककाले एव वाग्विसर्गाधिकरणम् (11-3-8)

The अग्नीषोमीय पुरोडाश is offered at midday. At that time the यजमानपत्नी is called. But at the time of offering पशु, there is no need to call the यजमानपत्नी as there is no pounding of the corns. However taking for granted there is also यजमानपत्नी is to be called, the question is raised whether वाग्विसर्ग be made at the time of offering पशु also or only at the time of offering पुरोडाश.

अग्नीषोमीयपशौ पुराडाशो माध्यन्दिनकालीनः । तत्र हविष्कृदाह्वनमस्ति । पशौ तु नास्ति । तस्य सान्नाय्यविकृतित्वेनावहननस्य तत्राभावात् । तथापि तत्राप्यस्तीति कृत्वा **चिन्त्यते** । किं पशुकालीनहविष्कृदाह्वानकाले वाग्विसर्गः, उत पुरोडाशकाल एवेति ।

Pūrvapakṣa : states that वाग्विसर्ग be made at the time of offering पशु only. Since offering पुरोडाश is incidental.

**पूर्वपक्षस्तु,** पश्चीयहविष्कृदाह्वनकाल एव वाग्विसर्गः । पुरोडाशस्य प्रासङ्गिकत्वेन पशुतन्त्रकृतैरेव वाग्यमाद्यङ्गैस्तस्याप्युपकारसिद्धेस्तत्र पृथग्वाग्यमाभावात् । पूर्वत्रान्त्यबीजे वाग्विसर्गेऽपीह पूर्वत्रैव वाग्विमोक इति ।

Siddhānta : points out that वाग्यम i.e. observing silence is यजमानसंस्कार. If



वाग्विसर्ग is not made before offering पुरोडाश then it will result in absence of संस्कार, and offering पुरोडाश will be defective. Therefore वाग्विसर्ग be made at the time of पुरोडाश only.

**सिद्धान्स्तु,** वाग्यमो ह्यविक्षिप्तचित्ताधायकतया यजमानसंस्कारः । न त्वारादुपकारकः । प्रागेव च वाग्विमोके सति वाग्यमरूपसंस्कारहीनेन कृतः पुराडाशो विगुणः स्यात् । तस्मात्पुरोडाशकाल एव वाग्विसर्ग इति ।

### अग्निचयनेऽग्निविमोकस्य मतभेदेन व्यवस्थाधिकरणम् (11-3-9)

With reference to अग्नि by the statement ''इमं स्तनं ऊर्जस्वन्तं'' etc. अग्निविमोक is stated. Here the question is raised whether अग्निविमोक be observed after completion of प्रधानयाग only or after the completion of साङ्गप्रधान.

अग्निविषये श्रूयते, ''इमं स्तनमूर्जस्वन्तं धयामि'' इत्याज्यस्य पूर्णां स्रुचं जुहोति एष वा अग्नेर्विमोकः'' इति । सोऽयमग्निविमोकः प्रधानमात्रसमाप्तौ स्यात्, उत साङ्गप्रधानापवर्ग इति सन्देहे,

Pūrvapakṣa : states that though the अग्नियोगरूपसंस्कार is stated in the context of प्रधान, अग्नियोगरूपसंस्कार should not be made on the completion of प्रधान only.

''अग्निं युनज्मि । शवसा घृतेनेति जुहोतीत्यग्निमेव तद्युनक्ति'' इत्यग्नियोगरूपसंस्कारस्य सत्यपि प्रधानप्रकरणे ''वेद्यां हवींष्यासादयति'' इत्यत्रेव तस्याविशेषकत्वादाहवनीयाग्निद्वारा तत्साध्यसर्वकार्यार्थत्वात्तद्विमोकोऽपि साङ्गप्रधानापवर्गान्त एव स्यात् । एवञ्च यथा पूर्वत्राग्नीषोमीयपशुहविष्कृदाह्वानकाले वाग्विसर्गस्तथाऽग्नौ न प्रधानमात्रापवर्गकालेऽग्निविमोक इति **प्राप्तम्** ।

Siddhānta : points out that अग्नियोग is for यज्ञ. Therefore अग्निविमोक has to be made after the completion of प्रधान only.

**सिद्धान्तस्तु,** ''पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमाप्नोति'' इति गुणविधिपरवाक्यशेषेऽग्नियोगस्य यज्ञार्थताऽवगमात्प्रधानापवर्ग एव विमोक इति । तथा च **सूत्रम्, प्रधानापवर्गे वा तदर्थत्वादिति । प्रधानसमाप्तावेवाग्निविमोकः** । अग्नियोगस्य यज्ञसंयोगेन **तदर्थत्वादित्यर्थः** ।

In respect of this अधिकरण Vārtikakāra differs from भाष्यकार. His view with reference to पूर्वपक्ष is that for अग्नियोग and अग्निविमोक are stated केवल प्रधान. Therefore अग्निविमोक has to be made after the completion of प्रधान. He puts the सिद्धान्त as अग्निविमोक has to be made after साङ्गप्रधान only.

एतच्च भाष्यकारीयमधिकरणशरीरमयुक्तं मत्वा **वार्तिककारः** प्रधानापवर्ग इति पूर्वपक्षसूत्रं **सर्वापवर्गे विमोक** इति सूत्रं सिद्धान्तसूत्रमुपेत्य केवलप्रधानवाग्नियोगतद्विमोकौ । वाक्यशेषे यज्ञसंयोगादिति **प्राप्ते,** वाक्यशेषस्य पञ्चभिरिति पञ्चत्वगुणविधिवाक्यशेषत्वेन ''अग्निं युनज्मि'' इत्यग्नियोगोत्पत्तिवाक्यशेषत्वाभावाद्योगोत्पत्तिवाक्ये च सर्वार्थाग्र्यर्थत्वावगमात्सर्वान्ते विमोक इति **सिद्धान्तितवान्** । विस्तरस्तु **तन्त्ररत्ने** ।

### उपसत् कालस्य सुब्रह्मण्याह्वानस्यस्तन्त्रताधिकरणम् (11-3-10)

At ज्योतिष्टोम the सुब्रह्मण्याह्वान at the time of उपसत् is stated as serving the days. Here the question is raised whether this has to be observed on each day separately or it has to be observed once only.

ज्योतिष्टोमे अग्र्युपसत्कालीनं, सुब्रह्मण्याह्वानमहर्गणेषु चोदकप्राप्तमह्नामुपकारकं । तत्किं प्रत्यह-मुपकारार्थतयाऽऽवर्तनीयम्, उत तन्त्रमिति **सन्देहे,**

Pūrvapakṣa : Since the days of प्रधानयाग are distinct, this should be observed separately on each day.

प्रधानाहर्भेदाद्भेदेन कार्यमिति **प्राप्ते**

Siddhānta : It is not stated on सुत्याकाल but it is stated at उपसत्काल. Therefore observing it once serves the purpose of all.

**सिद्धान्तः,** सुत्याकालीनत्वाभावेनोपसत्कालीनत्वात्सर्वार्थं सकृदनुष्ठितं सर्वोपकारकमेवेति तन्त्रमिति ।

### सुत्याकालीनसुब्रह्मण्याह्वानस्य भेदेनानुष्ठानाधिकरणम् (11-3-11)

Here the question is raised whether at द्वादशाह etc. Aharganas सुत्याकालीन आह्वान is to be made once only or be repeated.



द्वादशाहाद्यहर्गणेषु सुत्याकालीनमाह्वानं तन्त्रम्, आवापो वेति **सन्देहे,**

Pūrvapakṣa : The देवतासंस्कार made by सुब्रह्मण्याह्वान on the first सुत्याकाल remains until the entire प्रयोग is over. Therefore, the आह्वान made at the time of प्रथमसुत्याकाल serves the purpose of all. Therefore, it has to be performed once only.

प्रथमसुत्याकालीनसुब्रह्मण्याह्वानकृतस्य देवतासंस्कारस्य यावत्प्रयोगमनपवर्गात्प्रथमसुत्या-कालीनमप्याह्वानं सर्वसुत्यानामुपकारकम् । अतः पूर्वतन्त्रैकसुत्याकालीनस्यापि तन्त्रतेति **प्राप्ते**

Siddhānta : points out that the आह्वान made at each सुत्याकाल is meant for that. Therefore, it has to be observed separately.

**सिद्धान्तः,** यत्र हि देशे स्थितस्य यूपाद्दृष्टिविषया भवन्ति, स एव यूपसन्निधिः । स च सर्वेषा-मविशिष्ट इति विशेषाग्रहणात्सन्तमपि कस्यचिदन्तिकदेशविशेषमनादृत्य यूपाहुतेस्सर्वार्थत्वं स्वीकृतम् । प्रकृते तु सर्वसुत्याकाले क्रियमाणस्याह्वानस्य तादर्थ्यमिति विशेषग्रहणान्न तन्त्रता । अतोऽहरन्तरे पुनः कर्तव्यमिति ।

### दर्शपूर्णमासयोर्देशादीनामनियमाधिकरणम् (11-3-12)

At दर्शपूर्णमास the place, priest, vessels etc. are stated. Here the question is raised whether these are separate for each प्रयोग or there is no restriction whether these are the same or separate.

''समे दर्शपूर्णमासाभ्यां यजेत'' इति देशः, 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः'' इति कर्तारः, स्रुगादिपात्राणि चेत्येते पदार्थाः प्रतिप्रयोगं भिद्यन्ते, उतानियता इति **सन्देहे,**

Pūrvapakṣa : These have to be separate for each प्रयोग. If these are taken for one प्रयोग and are utilised for another प्रयोग it will be against the tradition; these will suffer from drawback of निरिष्टक. Hence they should be separate for each प्रयोग. The expression निरिष्टकता means the items used for one प्रयोग are not suitable for another प्रयोग.

यथा प्रतिसुत्याकालमाह्वानभेदस्तथा प्रतिप्रयोगमन्येऽन्ये देशादय उपादेयाः । निरिष्टिकोपादान-शङ्किते कर्मान्तरे उपयुक्तस्य कर्मान्तरोपयोगितयोपादाने शिष्टाचारविरोधादिति **प्राप्ते**

*Siddhānta* : निरिष्टिकता is not expressly stated in respect of सुत्या etc. It is based on only the शिष्टाचार. The sistas do not take बर्हि etc. utilised for one प्रयोग for another प्रयोग. But in the case of Ritviks there is no such चिष्टाचार. Therefore they are common to all prayāgas.

**सिद्धान्तः**, निरिष्टिकता हि वैदिककर्मान्तरोपयुक्तस्य कर्मान्तरानर्हता । न च सा सुत्यादौ चिच्छूयते । किन्तु शिष्टाचारपरम्परया ज्ञेया । शिष्टाश्च बर्हिरादीन् परित्यजन्ति । न ऋत्विगादीन् । अतो न तेषु निरिष्टिकताशब्दितकर्मान्तरानर्हतेति ते वाऽन्ये वेत्यनियम इति ।

### पात्रतन्त्रतानियमाधिकरणम् (11-3-13)

Here the question whether स्रुक्, स्रुवा etc. sacrificial vessels be separate for each प्रयोग or the same is raised.

स्रुक्स्रुवादिपात्रेषु किं प्रतिप्रयोगमावापोऽथ तन्त्रमति **सन्देहे,**

*Pūrvapakṣa* : states that there is no restriction whether the same be taken or different.

पूर्वत्र कर्त्रादिरिव पात्राण्यपि पूर्वप्रयोगोपयुक्तानि वा, अन्यानि वा? इत्यनियमः ।

*Siddhānta* : It is stated that when a sacrificer dies the sacrificial vessels have to be burnt with him. This means that these have to be preserved until his death. Therefore separate vessels should not be taken for each प्रयोग.

**सिद्धान्तस्तु,** यदि हि प्रोक्षणादिसंस्कृतानामेव व्रीहीणामपूर्वजनकत्वमिव पूर्वप्रयोगसंस्कृतानामेव पात्राणामुत्तरेषु प्रयोगेषु कार्यजनकत्वमित्यत्र प्रमाणं भवेत्तदा व्रीह्यन्तराणीव पात्रान्तराणि संस्काराभावान्नोपाददीरन् । न त्वेवमस्ति । मरणान्तान्येव पात्राणि धार्याणि । तेषां परित्यागे ह्युत्तरप्रयोगात्पूर्वमेव दैवाद्यजमानस्य मृतौ पात्राणामभावाद्यजमानदेहदाहो विगुणस्स्यात् ।

**परमसिद्धान्तस्तु,** ''आहिताग्निमग्निभिः'' इति दाहवाक्ये ''यज्ञपत्रैः'' इति तृतीयाश्रवणेऽपि, ''दक्षिणे पाणौ जुहूमासादयति'' इत्याद्यासादनवाक्येषु द्वितीयानिर्देशेन प्रतिपाद्यत्वावगमेनाऽऽसादनरूपप्रतिपत्तिबलादामरणं प्राथमिकानामेव पात्राणां धारणमिति पात्राणि तन्त्रमिति ।



### सर्वसोमानामुपरिष्टात् प्राजापत्यप्रचाराधिकरणम् (11-3-14)

At Vājapeya with reference to prajāpatya paśus it is stated that उपरिष्टात् सोमानां प्राजापत्यैः चरन्ति । Here, the प्रयोग at तृतीयसवन is developed in four steps.

i) आर्भवपवमान

ii) शस्त्रवत् सोम

iii) अशस्त्रवत् सोमग्रह

iv) उक्थ्यषोडशी etc. सोमविकार of अग्निष्टोमसवन.

Here the question is raised whether by the statement 'उपरिष्टात् सोमानां प्राजापत्यैः चरन्ति प्राजापत्यपशुप्रचार is prescribed at the time of आर्भवपवमान or शस्त्रवत् सोमप्रचार or after अग्निष्टोमसामन् or after उक्थ्य etc सर्व उक्थ्य सोमविकार.

वाजपेये प्राजापत्यपशून् प्रकृत्य श्रूयते ''उपरिष्टात्सोमानां प्राजापत्यैश्चरन्ति'' इति । तत्रायं प्रयोगक्रमः । तृतीयसवने प्रथममार्भवः पवमानः । ततो वैश्वदेवग्रहपर्यन्ताः शस्त्रवन्तस्सोमाः । ततः परमशस्त्रवत्सोमग्रहेषु प्रचीर्णेषु अग्निष्टोमसाम्न ऊर्ध्वमुक्थ्यषोडश्यादयस्सोमविकारा इति । तत्र ''उपरिष्टात्सोमानां प्राजापत्यैश्चरन्ति'' इत्यत्र किमार्भवपवमानकाले प्राजापत्यपशूनां प्रचारः, किं वा वैश्वदेवग्रहान्तानां शस्त्रवतां सोमग्रहाणामुपरिष्टात् प्रचारः, उताग्निष्टोमसाम्न ऊर्ध्वं तत्प्रचारः, अथ सर्वसोमानामुपरिष्टादिति चतुर्धा **सन्देहः** ।

*Pūrvapakṣa* : rejects the first two alternatives and affirms third alternative.

**पूर्वपक्षस्तु,** आर्भवपवमानकाले प्राजापत्यपशूनां प्रचार **इत्याद्यः** । प्रकृतौ ''प्रातर्वपया प्रचरन्त्यङ्गैस्तृतीयसवने'' इति प्रचारविप्रकर्षेणेहापि चोदकेन तथैव प्रापणादार्भवकालस्यापि प्रातःसवनीयमाध्यन्दिनसवनीयसोमानामुपरितनत्वात् । एवञ्च पूर्वत्र पात्राणां देहान्ते प्रतिपादनेऽपि पशूनां न सर्वसोमान्ते प्रचार इति ।

**अयं पक्षो न युक्तः** । चोदकेनैवार्भवकालस्य प्राप्तत्वेन ''उपरिष्टात्सोमानां'' इति वचनस्य व्यर्थतापत्तेः । अतः प्राकृतकालप्रत्यासत्तिलाभाच्छस्त्रवत्सोमग्रहादुपरि तेषां प्रचार इति **द्वितीयः** ।

प्राकृतकालप्रत्यासत्तिमात्रेण चोदकानुग्रहायोगादयमपि **पक्षो न युक्तः** । किन्तु अग्निष्टोमसाम्न ऊर्ध्वमुक्थ्यादिविकाराणां स्थाने प्रचारः । कुतः ? तद्धि आगन्तूनामुक्थ्यादिविकाराणां स्थानम् ।

प्राजापत्यपशवश्च विकारः । तथा च प्राजापत्यपशुप्रचारः अग्निष्टोमादूर्ध्वं भवितुमर्हतीति आगन्तुकप्रचारत्वादुक्थ्यादिप्रचारवदित्यानुमानादिति **तृतीयः ।**

Siddhānta : points out that अग्निष्टोम is सोमविकार. Therefore it is not the proper place for प्राजापत्यपशुप्रचार. Hence, this पशुप्रचार be observed after सर्वसाम ग्रह.

**सिद्धान्तस्तु,** तद्धि सोमविकाराणां स्थानम् । न पशुविकाराणाम् । प्राजापत्यपशवश्च पशुविकारा इति न तत्साधनं युक्तम् । अनुमानं तु सोमविकारप्रचारत्वरूपोपाधिग्रस्तम् । अतस्सङ्कोचायोगात्सर्वसोमग्रहादुपरिष्टादेवैतेषां पशूनां प्रचार इति ।

**सवनीयपुरोडाशे देवतोत्कर्षाधिकरणम् (11-3-15)**

At अग्निष्टोम in सवनीयपशु after अनुयाज the recitation of Sūkta 'भृज्यन्निन्द्राय हरिवते धानाः' etc is prescribed. This is observed after अग्निमारुत् शस्त्र. Here the question is raised whether the words relating to पुरोडाशदेवता also be recited or not.

ज्योतिष्टोमे सवनीयपशावनुयाजानन्तरं 'भृज्यन्निन्द्राय हरिवते धानाः पूष एव ते करम्भम्' इत्यादि सूक्तवाकमन्त्रः पठितः । स चानुयाजेषु ''अग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति'' इत्युक्तेरग्निमारुतशस्त्रादूर्ध्वमुत्कृष्यमाणेषु तदाद्युत्कर्षन्यायेनोत्कृष्यते । तदुत्कर्षे तत्रत्यपुरोडाशदेवतावाचिपदानामप्युत्कर्षोऽस्त्युत नेति **सन्देहे,**

Pūrvapakṣa : states that पुरोडाश is प्रासङ्गिक. प्रासङ्गिक need not be taken into account. Hence, हरिवत् etc. words need not be recited.

पशुपुरोडाशस्य द्वादशे वक्ष्यमाणदिशा प्रासङ्गिकत्वेन **प्रासङ्गिकश्च नोत्कर्षेदिति** पञ्चमाद्यपादोक्तन्यायेन हरिवदादिपदानामनुत्कर्ष इति **प्राप्तम् ।**

Siddhānta : points out that in the सूक्त, ''भृज्यन्'' etc. if the words relating to पुरोडाशदेवता are not taken into account, the sentence will be incomplete. Therefore these also have to be taken into account.

**सिद्धान्तस्तु,** ''भृज्यन्'' इत्यादिसूक्तवाके पुरोडाशदेवतापदानामनुत्कर्षे भृज्यन्निन्द्राय हरिवते



धानाः'' इत्येतावन्मात्रस्योत्कर्षे क्रियार्थपदान्वयाभावेन साकाङ्क्षत्वादनर्थकं वाक्यं स्यात् । यदा तु ''अग्निमद्य होतारमवृणीतायं स्तुन्वन्यजमानः'' इत्यस्यापि प्रयोगस्तदा ''भवते इन्द्राय धाना भृज्यन्सुताः स्तुन्वन्नयं यजयानः अद्याग्निं होतारमवृणीत'' इत्यर्थसमाप्त्यासार्थकं स्यात् । तस्मात्तेषामप्युत्कर्ष इति ।

इति एकादशाध्याये तृतीयः पादः

## एकादशाध्याये चतुर्थः पादः

**राजसूये सोमापौष्णादिके अङ्गानां भेदेन अनुष्ठानाधिकरणम् (11-4-1)**

At Rājasūya आग्नावैष्णव, सोमापोष्ण etc. निर्वाप's are prescribed with different दक्षिणा's. Here the question is raised whether the auxiliaries of these be performed once only or repeated at the time of each Nirvāpa.

''आग्नावैष्णवमेकादशकपालं निर्वपति । वामनो दक्षिणा । सोमापौष्णं चरुं निर्वपति । श्यामो दक्षिणा'' इति राजसूये भिन्नभिन्नदक्षिणावन्ति कर्माणि श्रुतानि । तत्र किमङ्गानि तन्त्रम्, उतावर्तनीयानीति **सन्देहे,**

Pūrvapakṣa : Rājasūya consists of many कर्म's. For all this the वरण of priests is made once only. The agents are also not different. Hence, the auxiliaries of this be performed once only.

नानाकर्मात्मकराजसूयकरणकप्रयोगापरपर्यायभावनाङ्गत्वेन सर्वदाऽनुपादीयमानवरणं देशकालादिवदविशेषाद्राजसूयावयवभूतानां फलभावनान्तर्गतानां सर्वकर्मणामपि भवतीति दक्षिणाभेदेऽपि वरणभेदाभावाद्देशकालफलभेदहीनानां दक्षिणाभेदेऽपि न कर्तृणां भेद इति तन्त्रमङ्गानि ।

Siddhānta : points out that here different दक्षिणा's are prescribed. It is not proper to get one अनुष्ठान by offering two दक्षिणा's. Therefore on the basis of दक्षिणाभेद, कर्तृभेद also has to be accepted. Hence, the auxiliaries are to be performed separately.

**सिद्धान्तस्तु,** अत्र तु प्रत्येकं दक्षिणा श्रुता । सा च ''वामनदक्षिणयाऽनतेनाऽऽग्नावैष्णवं कार्यम् ।'' ''श्यामदक्षिणयाऽनतेन पौष्णश्चरुः कार्यः'' इति व्यवस्थया श्रुता । सा च दक्षिणाद्रय-

वतैकेनैवोभयोरनुष्ठाने बाध्यते । तस्माद्दक्षिणाभेदेनाऽनतिभेदात्तत्कृतस्य कर्तृरूपस्यापि भेदात्प्रति-दक्षिणमङ्गान्यावर्तेरन्निति ।

## राजसूये वृतकर्तृतन्त्रताधिकरणम् (11-4-2)

At Rājasūya कर्तृभेद is stated on the basis of दक्षिणाभेद. Here the question is raised whether the same priests are to perform the different karmas of राजसूय till the completion or there is no restriction whether the same priest be taken or any other priest be employed.

राजसूये दक्षिणाभेदात्तत्तत्कृताऽनतिविशिष्टेन रूपेण कर्तृणां भेद उक्तः । तत्र ये पूर्वं प्रवृत्तास्त एवाऽऽनतिभेदविशिष्टेन रूपेण भिन्नभिन्नास्सन्तः आसमाप्ति कुर्युः, उत तेऽपि वा, अन्येऽपि वेत्य-नियम इति सन्देहे,

Pūrvapakṣa : When the priests employed for first Karma complete it their priestship is over. They have to be invited again. Such invitation may be given to the same priests or different priests.

यथा प्रयोगाङ्गयोर्देशकालयोर्भेदात्प्रयोगभेदस्तथा दक्षिणाभेदात्प्रयोगाङ्गभूतकर्तृभेदात्प्रयोगभेद इति तदङ्गभूतवरणस्यापि भिन्नत्वाद्यस्मिन् कर्मणि ये वरणभृतिभ्यामुपात्तास्तत्कर्मसमाप्तौ तेऽपि निवृत्त-वरणसंस्काराः लौकिका भवन्ति । तत्र पुनः कर्मान्तरार्थं वरणसंस्कार आधातव्यः । तदाधाने चा-विशेषात्ते वाऽन्ये वेत्यनियम इति **प्राप्तम्** ।

Siddhānta : points out that the different Karmas of Rājasūya lead to one result. Therefore, the priest employed at these Karmas need not be invited again and again. Hence, same priests can perform all the Karmas of Rājasūya.

**सिद्धान्तस्तु,** लोके चिकीर्षा हि सामग्रीविषया भवति । सामग्री राजसूये च राजसूयशब्दित-तत्तत्कर्मकरणकप्रयोगनामकफलभावनैव । तथा च तच्चिकीर्षायां क्रियमाणं वरणोपादानं देशादिवद्राज-सूयावयवभूतसर्वकर्मणामपि भवतीति वरणभेदाभावान्न कर्तृणां भेद इत्युपक्रमवृता एवाऽऽन्तं कर्तार इति नियम इति ।



## अवेष्टावङ्गानां भेदेनानुष्ठानाधिकरणम् (11-4-3)

At Rājasūya an इष्टि called अवेष्टि with five kinds of हविस् is prescribed. This इष्टि is of two types. One that is to be performed by the king alone as a part of Rājasūya yāga which leads to स्वाराज्य. Another to be performed by any member of three varṇas outside Rājasūya. For this इष्टि five kinds of हविस् are prescribed. Here the question is raised whether the offering of five हविस् for the अवेष्टि performed as part of Rājasūya be performed once or separately at different times.

राजसूये ''आग्नेयमष्टाकपालं निर्वपति । हिरण्यं दक्षिणा । ऐन्द्रमेकादशकपालम् । ऋषभो दक्षणा । वैश्वदेवं चरुम् । पिशङ्गी प्रष्ठौही दक्षिणा । मैत्रावरुणीमामिक्षां । वशा दक्षिणा । बार्हस्पत्यं चरुम् । शितिपृष्ठो दक्षिणा'' इत्येवं पञ्चहविष्का अवेष्टिनामकेष्टिः श्रुता । सा च द्विरूपा । राजसूय-मध्यगता स्वाराज्यफलका राजमात्रकर्तृका । तथाऽन्नाद्यफलका त्रिवर्णकर्तृका राजसूयप्रयोगाद्बहिः-प्रयोगार्हा चेति । यानि क्रतुमध्यगतानि पञ्च हवींषि, तानि किं समानतन्त्रणि, सकृदनुष्ठेयानीति यावत् । किं भिन्नकालप्रयोक्तव्यानीति **सन्देहे,**

Pūrvapakṣa : states that at the अवेष्टि to be performed outside Rājasūya it is stated that if Brāhmaṇa performs the बार्हस्पत्यहविस् is to be offered in the middle. This offering in the middle is possible if all the five हविस् are offered together once only. The same proceedure may be followed at the अवेष्टि performed as a part of the Rājasūya also.

समानतन्त्राणीति **प्राप्तम्** । कुतः? बहिःप्रयोगे तावत् ''यदि ब्राह्मणो बार्हस्पत्यं मध्ये निधाय'' इति मध्यश्रुत्या समानतन्त्रभावो गम्यते । पञ्चानां हविषां युगपत्प्रयोग एव मध्य इत्युक्त्युपपत्तेः । तथा च राजसूयमध्यगतानामपि तदैकतन्त्र्यावश्यंभावात्क्रतुमध्ये दक्षिणाभेदयुक्ततया उत्पन्नानामेव हि पञ्चहविषां बहिःप्रयोगेऽन्नाद्यफलादौ विनियोगात् । क्रतुमध्ये दक्षिणाभेदाद्भिन्नतन्त्रत्वे बहिःप्रयोगेऽपि तथा स्यात् । तत्र च मध्ये निधानमयुक्तं स्यात् । अतो बहिःप्रयोगैकतन्त्र्येण क्रतुमध्यगतानां समान-तन्त्रतामुपेत्य दक्षिणाभेदः सोम इव तत्प्रधानार्थतया नेयः । न तु प्रयोगाङ्गतया । येन तद्भेदा-त्प्रयोगभेदः स्यादिति । तथा च प्रधानहविषां तन्त्रत्वात्तदङ्गान्यपि पूर्वत्र लौकिकवरणवत्तन्त्राणीति ।

Siddhānta : points out that these five karmas prescribed as a part of Rājasūya have different Dakṣiṇās. Dakṣiṇā is an auxiliary of प्रयोग. Since the prayogas are different, the offerings have to be made separately for each prayoga. So far as the performance of these outside Rājasūya is concerned on the basis of statement बार्हस्पत्य offering is to be placed in the middle of offering five हविस् is to be made once only.

**सिद्धान्तस्तु,** एतानि पञ्च कर्माणि क्रतुमध्ये दक्षिणाभेदयुक्तान्येवोत्पन्नानि । दक्षिणा चोत्सर्गतः प्रयोगाङ्गम् । सोमे तु **दक्षिणा सोमस्य** इति वचनात्प्रधानार्था दक्षिणा । न ह्यत्र तथा वचनमस्ति । अतः प्रयोगाङ्गमेव दक्षिणेति तद्भेदात्प्रयोगभेदः पञ्चकर्मणां क्रतावावश्यक इति प्रथममेव निर्णीयते ।

### काम्यपवमानेष्टि हविषां भेदेनानुष्ठानाधिकरणम् (11-4-4)

In the context of आदान offering of three हविस् the statements अग्नये पवमानाय etc. is prescribed. Offering these is obligatory. By the statement यो कामयेत उत्तरं श्रेयान्स्याम् etc. a काम्य offering of the same is stated. Here the question is raised whether in काम्यप्रयोग the offering of the three हविस् be made once only or separately; or, at first and last two prayogas separately.

आधानप्रकरणे पठ्यते ''अग्नये पवमानायाष्टाकपालं निर्वपत्यग्नये पावकायाऽग्नये शुचये'' इति हविस्त्रयम् । एतच्चाधानतुल्यतयाऽग्निनिष्पादकत्वान्नित्यम् । तथा ''यः कामयेतोत्तरं वसीयान् श्रेयान् स्यामिति तस्याग्नये पवमानाय निरूप्याथ पावकाय शुचये चोत्तरे हविषी समानबर्हिषी निर्वपेत्'' इति वाक्ये उत्तरं वसीयानत्यन्तं वसुमान् स्यामिति कामयत इति श्रवणात्काम्यश्च । तत्र नित्यप्रयोगो हि ''अग्नये पवमानाय'' इत्यादिवाक्यत्रयेण पृथगुत्पन्नानां त्रयाणां कर्मणां पृथक्पृथगेव प्रयोगस्यौचित्येन न समानतन्त्रता । अतः काम्यप्रयोगे चिन्ता । किं त्रयाणां प्रयोगस्तन्त्रम्, उत प्रथमस्योत्तरद्वयस्य च प्रयोगो भिन्नतन्त्र इति **सन्देहे,**

Pūrvapakṣa : states that at काम्यप्रयोग the three हविस् be offered once only.

अवेष्टेर्बहिः प्रयोगो नानातन्त्रोपि ''अग्नौ निरूप्याणि सह निरूप्याणि'' इति वचनात्तत्समानतन्त्र एव त्रयाणां हविषां काम्यप्रयोगः ।



Siddhānta : points out that here प्रयोगभेद is prescribed as an auxiliary for the result. Hence by performing separately, the result will be greater. Hence, the first हविस् be offered separately and the remaining two also separately later.

**सिद्धान्तस्तु,** ''यः कामयेत'' इति वाक्ये हि न हविषां फलसम्बन्धविधिः । तेषामग्न्यर्थत्वात् । किन्तु प्रणयनमाश्रित्य गोदोहनं पश्वर्थमिव हवींष्याश्रित्य प्रयोगभेदरूपो गुणः फलाय विधीयते । एवं भेदेनानुष्ठाने वसुमत्तरत्वं भवतीति । अतो वसुमत्तरत्वं कामयमानः पूर्वं हविः पृथङ्निरूप्य, उत्तरे हविषी पश्चान्निरूप्ये इत्युत्तरे एव समानतन्त्रे । न तु त्रयमपीति ।

### द्वादशाहे दीक्षोपसत् सुत्यानां प्रत्येकं द्वादशहताधिकरणम् (11-4-5)

At द्वादशाह, द्वादश dīkṣās and द्वादश उपसद्s are stated. In this connection, four possibilities are stated. (i) On each day द्वादश dīkṣās and द्वादश उपसद् be observed. (ii) On each day one दीक्षा and one उपसद् be observed. (iii) On four days, dīkṣās be observed on four days upasads and on four days सुत्या's (iv) द्वादश dīkṣas on twelve days, द्वादश उपसद्'s on twelve days and द्वादश सुत्या on twelve days. On the whole, on thirty three days, दीक्षा, उपसुत् and सुत्या are to be observed.

''द्वादश दीक्षा द्वादशोपसदः'' इति श्रूयते । तत्र किमेकैकमहो द्वादशदीक्षाभिर्द्वादशोपसद्भिश्च युक्तं कृत्वा द्वादश पञ्चविंशतिरात्राः कार्याः,

उतैकैकमहस्सद्य एकैकदीक्षोपसद्युक्तं कृत्वा द्वादश साद्यक्राः कार्याः,

किं वा चतुरहे दीक्षाश्चतुरहे उपसदश्चतुरहे सुत्याः,

यद्वा स्वस्वस्थान एव दीक्षोपसत्सुत्यानां विवृद्धिर्द्वादशस्वहस्सु दीक्षा द्वादशस्वहस्सूपसदः, ततो द्वादशस्वहस्सु सुत्याः इत्येवं षट्त्रिंशदहोभिः समाप्तिरिति चतुर्धा **सन्देहः ।**

पूर्वपक्षिन् discusses the first three alternatives and states that any one of these alternatives may be followed.

**पूर्वपक्षस्तु,** द्वादशाहे एकैको यागः प्रत्येकमङ्गान्याकाङ्क्षन् प्रकृतितो ज्योतिष्टोमात्तानि गृह्णातीति तद्वदेवैकैकमहः द्वादशदीक्षोपसद्युक्तमेव कार्यमिति द्वादश पञ्चविंशतिः कार्या । न च ''द्वादशाहेन

प्रजाकामं याजयेत्'' इति श्रुतद्वादशत्वविरोध इति वाच्यम् । तस्य यज्ञसामानाधिकरण्येनोद्भिदादिव-न्नामत्वादित्याद्यः ।

स्यादेवं द्वादशाहशब्दस्य नामत्वे गुणविधिरयम् । द्वादशभिरहोभिर्निर्वर्त्येन यागेनेति । तथा च पञ्चविंशतिरात्रत्वे तदयोगात्प्रागुक्तदिशा साद्याक्राः कार्या इति **द्वितीयः ।**

**अयमपि पक्षो न युक्तः** ''द्वादशाहेन प्रजाकामं'' इत्येकस्मिन् फले चोदितानां प्रयोगवचनैक्या-त्संहत्य कर्तव्यतया तन्त्रेणैव मुख्यकर्मकालान्यङ्गानि स्युरिति एकैकस्यैव द्वादशदीक्षाणां द्वादशोपसदां च तन्त्रेणैव कार्यत्वात् । तस्माद्द्वादशाहत्वस्य गुणविधित्वाद्द्वादशस्वहस्स्वेव सर्वं सम्पाद्यमिति द्वादशाहं चतुरहभेदेन त्रेधा विभज्य, आद्ये चतुरहे एकैकस्मिन्नहनीति तिस्रस्तिस्रो दीक्षाः, द्वितीये चतुरहे एकैकस्मिन्नहनि तिस्रस्तिस्र उपसदः, तृतीये चतुरहे तिस्तिस्तिस्रः सुत्या एकैकास्मिन्नहनीत्येवं कार्याः । तथा च दीक्षोपसत्सुत्यानां सर्वेषां द्वादशत्वं सम्पद्यत इति **तृतीयः ।**

Siddhānta accepts the observation of these on thirty six days. He quotes the statement : ''षट्त्रिंश दहो वा एष यद्द्वादशाहः''

**सिद्धान्तस्तु,** स्यादेवं, यदि द्वादशाहशब्दो गुणदिधिः स्यात्तदा त्वदुक्तरीत्या द्वादशस्वहस्सु समाप्तिस्स्यात् । न चैवम् । गुणसम्बन्धस्य फलसम्बधस्य च विधौ वाक्यभेदापत्तेः । अतो नामधेय-मेवेदमिति न द्वादशाहस्वेव समाप्तिः । द्वादश दीक्षा इति विधानात्स्वस्थान एव विवृध्द्या द्वदशस्वहस्सु दीक्षास्तथा द्वादशस्वहस्सूपसदस्तन्त्रेण कृत्वा ततो द्वादशस्वहस्सु सुत्याः कार्या इति षट्त्रिंशताऽ-होभिः समापनम् । एवञ्च ''षट्त्रिंशदहो वा एष यद्द्वादशाहः'' इति लिङ्गदर्शनमपि युक्तमिति ।

### प्रधानैरपृथक् कालानामङ्गानां भेदेनानुष्ठानाधिकरणम् (11-4-6)

At द्वादशाह सुत्याकालीन सवनीय and पुरोडाश etc. auxiliaries are prescribed. Here the question is raised whether these have to be performed once only for all twelve yāgas or these be separately performed for each yāga.

द्वादशाहे सुत्याकालीनः सवनीयः पशुपुरोडाशाश्चेत्येवमाद्यङ्गानि द्वादशानां यागानां तन्त्रम्, उत प्रत्यहमावर्तेरन् इति **सन्देहे,**

Pūrvapakṣa : states that since the observation of द्वादशाह is enjoined by one injunction, and there is no दक्षिणाभेद the auxiliaries should be performed once only.



यथा पूर्वत्राकर्मकालीना दीक्षादयस्तन्त्रमित्युक्तं तथेह सुत्याकालीनपश्वाद्यङ्गान्यपि ''द्वदशाहेन प्रजाकामं याजयेत्'' इति प्रयोगचोदनैक्याद्दक्षिणाभेदाभावाच्च प्रधानानां तन्त्रत्वात्तन्त्राणीति **प्राप्ते**

Siddhānta : points out that the twelve yāgas of द्वादशाह are performed separately on one day each. The main yāgas are observed on separate days. Hence, the auxiliaries also have to be observed on separate days.

**सिद्धान्तः,** प्रकृताविव द्वादशानां सुत्यानामेकैकस्मिन्नहन्येकैकस्या एव कर्तव्यत्वात् ''षट्त्रिंशदहो वा एष यद्द्वादशाहः'' इति लिङ्गदर्शनाच्च न प्रधानानां तन्त्रतेत्यकर्मकालानां दीक्षादीनां तन्त्रत्वेऽपि तत्तत्कर्मकालीनानां तत्तदर्थत्वेन विशेषग्रहणात्तदर्थतया पूर्वप्रयुक्तानां तदपवर्गेऽपवर्गनियमा-त्प्रधानान्तरार्थमन्यस्मिन्नहनि पुनः करणेन भाव्यमिति कर्मकालीनाङ्गानां तन्त्रतेति ।

### उपसत्काले सुब्रह्मण्याह्वानस्याविकारेण कर्तव्यताधिकरणम् (11-4-7)

The सुब्रह्मण्याह्वान is stated by the statement ''चतुरहे सुत्यां आगच्छ मघवन्'' इति ब्रूयात्'' In प्रकृतियाग the fourth day is सुत्या day. Therefore observing सुब्रह्मण्याह्वान on fourth day is quite suitable. But in विकृतियाग सुत्या day is thirteenth day. Here the question is raised whether the expression चतुरहे be substituted by त्रयोदशाहे or not is raised.

प्रकृतावुपसत्कालीनं सुब्रह्मण्याह्वानं ''चतुरहे सुत्यामागच्छ मघवन्निति ब्रूयात्'' इति श्रूयमाणं चोदकेन द्वादशाहे प्राप्तम् । प्रकृतौ प्रथमोपसद्दिनापेक्षया चतुर्थमहस्सुत्याह इति चतुरहे इत्युक्तिः प्रकृतौ समवेतार्था । विकृतौ द्वादशाहे तु प्रथमोपसद्दिनमारभ्य सुत्याहस्त्रयोदशाहो भवति । तत्र किं चतुरहशब्दः ''''त्रयोदशाहे सुत्यामागच्छ मघवन्,'' ''चतुर्दशाहे सुत्यामागच्छ मघवन्'' इत्येवंरूपेण पृथक्पृथक्सर्वेषां द्वादशानामह्वामुपलक्षणम् उताविकारेणैव प्रयोग इति **सन्देहे,**

Pūrvapakṣa : states that in the place of the word चतुरहे the words त्रयोदशाहे, चतुर्दशाहे etc have to be substituted on each सुत्या day.

पूर्वत्र सवनीयपश्वादेरावृत्तिरिवात्राहश्शब्दस्यापि ''त्रयोदशाहे'' ''चतुर्दशाहे'' इति सर्वसुत्या-ह्वानामुपलक्षणतयाऽऽवृत्तिः कार्या ।

Siddhānta : By Subrahanyāhvāna, Indra is invited at सुत्या. Here, the hymn

is meant for presenting Indra's arival. The day indicated by चतुरहे is only incidental. If both arival at सुत्या and arival on fourth day are enjoined it will result in वाक्यभेद. Therefore, the expression need not be substituted by त्रयोदशाहे etc.

**सिद्धान्तस्तु,** प्रकृताविन्द्रस्य सुत्यायामागमनप्रकाशनरूपसंस्कारमात्रमेव विवक्षितम् । चतुरहत्वन्त्वर्थप्राप्तमनूद्यते । उभयविवक्षायां ''सुत्यामागच्छ,'' ''चतुरहे आगच्छ'' इति वाक्यभेदापत्तेः । ''चतुरहे सुत्यामागच्छ'' इत्येवाह्वानेपि चतुरहत्वस्याविवक्षितत्वात्सुत्याकारेण द्वादशानामेकत्वादशेषसुत्याऽऽगमनं सिध्यतीत्यविकारेणैव **द्वादशाहे तत्प्रकृतित्वादिति पूर्वोक्तदिशा** तन्त्रेणोच्चारणमिति ।

### वाजपेये प्राजापत्यपशुगणे कुम्भ्यादीनां तन्त्रताधिकरणम् (11-4-8)

At प्राजापत्यपशुगण, the flesh of all paśus, is cooked in one vessel only, one knife is used to take the flesh of all the paśus. The देवता is only one. Therefore taking flesh from the vessel and utilising only one knife to take the flesh of all paśus has to be done only once.

प्राजापत्यपशुगणे **कुम्भ्याः** सर्वपश्ववदानानां श्रपणे एकस्या एव प्रभुत्वात्सकृत्वात्तन्त्रभावः **समः स्यात् । शूलस्य च** सर्वपशुहृदयानां **प्रभुत्वाच्छक्तत्वात्तन्त्रभावः स्यात् । वपाश्रपण्याश्च** सर्ववपानां **प्रभुत्वात्तन्त्रभावः स्यात्** । शूलस्य च सवर्रपशुहृदयानां प्रभुत्वात्तन्त्रभावः स्यात् । वपाश्रपण्याश्च सर्ववपानां प्रभुत्वात्तन्त्रभावः स्यादिति सूत्रकृतोत्तरत्र भिन्नदैवत्ये तन्त्रभावादिविवक्षया एकदैवत्येषु पशुषु तन्त्रत्वमुक्तम् । नात्र पूर्वोत्तरपक्षावित्याहुः ।

### एकादशिनेषु नानादेवत्येषु एकजातीयपशुषु कुम्भ्यादीनां तन्त्रताधिकणम् (11-4-9)

At एकादशिन ritual, only one kind of paśu is prescribed to be offered to different deities. Here the question is raised whether the vessel for cooking of the flesh and the kinfe to take out the flesh be separate in respect of each देवता or one only for all.

एकादशिनेषु नानादैवत्येष्वेकजातीयपशुषु किं प्रागुक्तकुम्भ्यादीनां भेदः, उत तन्त्रभाव इति **सन्देहे,**



Pūrvapakṣa : argues that if the flesh of all paśus is cooked in one vessel, it will not be clear which portion of the flesh be offered to which देवता. If the flesh of a paśu meant for one देवता is offered to another देवता, it will be wrong. Hence, the flesh of these paśus be cooked in separate vessels.

कुम्भ्या एकत्वे सर्वेषां पशूनामवयवानां सहश्रपणप्राप्त्या एकस्यै देवतायै किमवदेयमित्यज्ञानात्कदाचिदेकस्यै उपाकृतात्पशोरन्यस्यै देवतायै दानेऽपचारापातात् । अतः पूर्वत्रैकदैवत्येषु तन्त्रत्वेपि भिन्नदैवत्येषु भेद एवेति **पूर्वपक्षः** ।

Siddhānta : It is possible to identify the flesh of the paśu meant for each देवता by putting a mark on it. Therefore separate vessels are not necessary for cooking.

**सिद्धान्तस्तु,** तत्तद्देवताकपश्ववयवानां चिह्नकरणेन विवेकसम्भवान्न कुम्भीभेदः । सर्वपश्वयवीयवसानां कुम्भैक्येनैकीभूतत्वेऽपि तत्तद्देवतायाज्यार्धर्चान्ते होमकरणेन प्रतिपाद्यत्वेऽपि न वैगुण्यदोष इति वसानां भेदार्थमपि न कुम्भीभेद इति ।

### एकादशिनेषु नानाजातीयेषु पशुषु कुम्भ्यादीनां भेदाधिकरणम् (11-4-10)

When different kinds of animals are prescribed such as ''आग्नेयः कृष्णग्रीवो मेषः'' ''सारस्वती मेषी'' Here the question is raised whether the vessels to cook their flesh be one or different.

नानाजातीयेषु ''आग्नेयः कृष्णग्रीवो मेषः'' ''सारस्वती मेषी'' इत्यादिपशुषु किं कुम्भी तन्त्रम्, उत **भिन्ना इति सन्देहे,**

Pūrvapakṣa : states that one is sufficient.

**पूर्वन्यायेन कुम्भ्यैक्ये प्राप्ते**

Siddhānta : points out that different vessels are necessary because the cooking of the flesh of different animals takes different times. Eg. the cooking of flesh of आवि animals, takes less time than the cooking of अन type of animal.

**सिद्धान्तः**, जात्यन्तरेषु कुम्भीभेदः स्यात्। कुतः? पक्तिवैषम्यात्। पक्तिः पाकः शीघ्रमाविमांस पाकः। अजामांसपाको विलम्बितः। अत इति। **व्यक्तस्सूत्रार्थः**। फलं तु कुम्भीभेदेनानुष्ठानम्।

**अश्वप्रतिग्रहेष्टौ प्रतिपुरोडाश कपालभेदाधिकरणम् (11-4-11)**

*At* अश्वप्रतिगृहेष्टि *it is stated that* यावतो अश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत्*. The* पुरोडाश *of four* कपाल *should be offered for as many horses as are given as gift. When many paśus are given many* पुरोडाश*s are to be offered. Here the question is raised whether the only four pots of* पुरोडाश *be offered for all paśus together or for each* पुरोडाश *should be of four* कपाल *quantity.*

अश्वप्रतिग्रहेष्टौ श्रूयते ''यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्'' इति। इयं चेष्टिः प्रतिग्राहयितुर्दातुरिष्टिरित्युक्तं तार्तीयचतुर्थपादे। तथा च बहुपशुषु प्रतिग्राहितेषु बहवः पुरोडाशाः प्रयोज्याः। तत्र किं तन्त्रेण चत्वार्येव कपालानि स्युः, उत प्रतिपरोडाशं चत्वारि चत्वरीति **सन्देहे,**

*Pūrvapakṣa : The entire* पुरोडाश *can be put in four large* कपाल*'s. There is no need to have four* कपाल *for each separately.*

भिन्नजातीयेषु कुम्भीभेदेऽपि प्रतिपुरोडाशं न कपालभेदस्स्यात्। दीर्घेष्वेव चतुर्षु कपालेषु सर्वपुरोडाशानां श्रपणसम्भवादिति प्राप्ते, **सिद्धान्तः,**

*Siddhānta : It is stated that cooking of the flesh be made in* कपाल*'s but not in a portion of the* कपाल*. If the entire* पुरोडाश *is cooked in four* कपाल*s, if each portion of* पुरोडाश *will occupy only a portion of* कपाल*. This is not correct. Therefore the* पुरोडाश *of each* अश्व *be cooked in four different* कपाल*s.*

''कपालेषु श्रपयति'' इति हि श्रूयते। न कपालावयवेष्विति। कपालैक्ये हि सर्वेषां पुरोडाशानां कपालाववेष्वेव श्रपणात् ''कपालेषु श्रपयति'' इति श्रुतं कपालानां साधनत्वं बाध्येत। ''यावत्कपालमभिप्रथयति'' इति वचनेन प्रकृतितो यत्कपालप्रथनं प्राप्तम्, तन्त्रत्वे तदपि बाध्येत। तस्मात्प्रतिपुरोडाशं कपालभेदः।



**अवघातार्थमन्त्राणां प्रतिप्रहारं तन्त्रताधिकरणम् (11-4-12)**

At दर्शपूर्णमास the recitation of the hymn अवरक्षोदिवस्सपत्नं is prescribed for अवघात. Here the question is raised whether this mantra be recited every time of pounding, or recitation once for the entire pounding is sufficient.

दर्शपूर्णमासयोरवघातमन्त्रः ''अव रक्षो दिवस्सपत्नं वध्यासमित्यवहन्ति'' इति श्रूयते। स किं प्रतिप्रहारमावर्तनीयः, उत सर्वादौ सकृदेवेति **सन्देहे,**

Pūrvapakṣa : The अवहनन mantra has to be repeated for every step of pounding because this mantra is an auxiliary of अवघात. Therefore, as many times अवघात is made, so many times the mantra has to be recited.

पूर्वत्र कपालवदवहननमन्त्रोऽपि प्रतिप्रहारं भेदेन स्यात्। अवघाताङ्गभूतस्य मन्त्रस्यावहन्तिशब्दवाच्यप्रधानप्रहरणावृत्तावङ्गावृत्त्यवश्यंभावादिति **प्राप्ते,**

Siddhānta : points out that मन्त्र is not an auxiliary of अवघात but it is an auxiliary of तण्डुल. The तण्डुल being only one, the recitation of this mantra once only is sufficient.

**सिद्धान्तः**, यद्यवहन्तीति धात्वर्थाङ्गमन्त्रः स्यात्तदा धात्वर्थप्रहरणावृत्तावावर्तेत। न चैवम्। किन्तु सप्तमाद्यनयेनावघातकरणिकायास्तण्डुलभावनाया एवाङ्गभूतो मन्त्रस्तण्डुलभावनाकरणस्यैवानुग्राहकः। तत्करणं च साभ्यास एव प्रहारः। न प्रत्येकम्। सामग्र्या एव करणत्वात्। अतोऽत्र करणीभूतावघातसङ्घातस्य तण्डुलनिर्वृत्तिफलकस्यावृत्त्यभावान्न मन्त्रप्रयोगस्याप्यवृत्तिरिति सकृदेव प्रयोग इति।

**नानाबीजेष्टौ प्रतिप्रहारं तन्त्रताधिकरणम् (11-4-13)**

At राजसूय, different types of corns of पुरोडाश has to be offered to अग्नि, सोम etc. Here the question is raised whether the pounding of these different corns should be made together once only or for differently for different corns.

राजसूये श्रुतासु नाबीजेष्टिषु सर्वेषां नानाबीजानामवघातमन्त्रस्तन्त्रं, उत भेदेन वक्तव्य इति **सन्देहे,**

Pūrvapakṣa : states that the pounding of different corns be made once only.

सर्वादौ प्रयुज्यमानो मन्त्रः सर्वावघातचिकीर्षया प्रयुज्यमानत्वात्तथा ''अवहन्ति'' पदार्थानुसमयस्य **नानाबीजेष्वेकमुलूखलमिति** पञ्चमद्वितीयपादीयाधिकरणेऽभिधानेनादौ कृताया अवघातस्मृतेर्यावत्सर्वबीजावघातसम्पत्त्यवस्थानाच्च पूर्वत्रैव सकृदेव प्रयोज्य इति **प्राप्ते**

Siddhānta : points out that अवघात of each type of corn is enjoined and the mantras are prescribed for the अवघात of each corn separately. These mantras are संस्कार for each type of corn. Hence, अवघात has to be made separately for each type of corn.

**सिद्धान्तः,** यदि सर्वावघातचिकीर्षया क्रियेत, स्यात्तदा तन्त्रम् । न चैवम् । किन्तु प्रतिबीजं चोदकतोऽवघातप्राप्तौ सन्निपातितया तन्मन्त्रोऽपि प्रतिबीजमतिदेशतो भवतीति यस्मिन् बीजावघाते चिकीर्षिते मन्त्रः पयुज्यते स मन्त्रस्तस्यैव संस्कारक इति विशेषग्रहात्प्रतिबीजमावर्तेत मन्त्र इति ।

**प्रतिनिर्वापादिषु मन्त्रावृत्त्यधिकरणम्** (11-4-14)

At दर्शपूर्णमास by the statements ''चतुरो मुष्टीन् निर्वपति,'' ''अयुग्वा युग्वा मुष्टीः लुनाति,'' ''त्रिधा तु पञ्चधातु वा वेदिं स्तृणाति'' निर्वपन, लवन, स्तरण and आज्यग्रहण are stated. For these the recitation of the mantras देवस्य त्वा etc. is prescribed. Here the question is raised whether these mantras be employed once only or for each धातु, for each मुष्टि, for each आज्यग्रहण separately.

दर्शपूर्णमासयोः ''चतुरो मुष्टीन्निर्वपति'' ''अयुग्वा युग्वा मुष्टीर्लुनाति'' अयुजो युजो मुष्टीनित्यर्थः । तथा ''त्रिधातु वा पञ्चधातु वा वेदिं स्तृणाति'' इति । त्रिधातुभिस्त्रिभिर्दर्भमुष्टिभिः पञ्चधातुभिः पञ्चभिर्मुष्टिभिर्वा स्तृणातीत्यर्थः । तथा ''चतुर्जुह्वां गृह्णाति'' इति निर्वपनलवनस्तरणाज्यग्रहणानि श्रुतानि । तेषां च ''देवस्य त्वा सवितुः'' इति, ''बर्हिर्देवसदनं दामि'' इति, ''ऊर्णा म्रदसं त्वा स्तृणामि'' इति ''शुक्रं त्वा शुक्रायां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि'' इति क्रमात् मन्त्राः श्रुताः । तत्र किमेते मन्त्राः सकृत्प्रयोज्याः, उत प्रतिमुष्टि प्रतिधातु प्रत्याज्यं ग्रहणं भेदेन प्रयोज्या इति **सन्देहे,**



Pūrvapakṣa : states that the recitation of these mantras once only for the respective items is sufficient.

''व्रीहीनवहन्ति'' इत्यत्र प्रहरणानामनेकत्वेऽपि चतुर्मुष्टिनिर्वापादेः **मुष्टिकपालावदानेत्यादिसूत्रे** पञ्चमद्वितीयपादोक्तन्यायेनैकपदार्थत्वान्नानाबीजेष्ववहननमन्त्रस्य तन्त्रत्वेऽपि मुष्टिनिर्वापादौ सर्वारम्भे सकृत्प्रयोज्या मन्त्रा इति **प्राप्तम्** ।

Siddhānta : points out that though निर्वाप लवन etc. are one, different व्रीहि's and different दर्भ's are taken by each मुष्टि. Thus there is संस्कारभेद. Hence, the mantras are to be recited for each मुष्टि separately.

**सिद्धान्तस्तु,** ''व्रीहीनवहान्ति'' इत्यत्रावहतानामेव व्रीहीणां संस्कार्यत्वेन संस्कार्यभेदाभावान्न कार्यभेद इति सर्वादौ सकृत्प्रयुक्तेनैव मन्त्रेण कार्यसिद्धेर्युक्तात्र मन्त्रस्यानावृत्तिः । प्रकृते तु चतुर्मुष्टिनिर्वापादीनामेकपदार्थत्वेऽपि प्रतिमुष्टि अन्येऽन्ये व्रीहयो, अन्येऽन्ये दर्भाः, प्रतिग्रहणमन्यदन्यदेवाज्यमिति संस्कार्यभेदात्तत्संस्काररूपं कार्यं भिद्यते । स च संस्कारो मन्त्रयुक्तनिर्वापादिना जन्यो न केवलनिर्वापादिना । अतो यस्मिन्नेव निर्वापादौ मन्त्रः प्रयुज्यते तत्रैव संस्कारः । अन्यत्र तु लुप्यत इति प्रतिनिर्वापादिकं मन्त्रा आवर्तेरन्निति ।

**वेदि प्रोक्षणे प्रत्यावृत्तिमन्त्र तन्त्रताधिकरणम्** (11-4-15)

At दर्शपूर्णमास the mantra ''वेदिरसि बर्हिषे'' is prescribed for प्रोक्षण of the Vedi thrice. Here the question is raised whether the mantra be recited separately for each प्रोक्षण or only once for three प्रोक्षण's.

दर्शपूर्णमासयोः श्रूयते ''वेदिरसि बर्हिषे त्वेति त्रिर्वेदिं प्रोक्षति'' इति । तत्र किं प्रतिप्रोक्षणं मन्त्रस्यावृत्तिः, उत सकृदेवादौ प्रयोग इति सन्देहे,

Pūrvapakṣa : states that the word त्रिः is connected with मन्त्र. Hence it has to be recited separately for each of the three प्रोक्षण's.

''व्रीहीनवहन्ति'' इत्यत्रावहननस्येव प्रोक्षणस्य वेद्या न दृष्टं प्रयोजनमिति येन दृष्टकार्यानुरोधेनावहननस्येव साभ्यासस्य प्रोक्षणरूपधात्वर्थस्यैकं कार्यं स्यात् । किन्त्वदृष्टार्था प्रोक्षणकरणिका वेदिगतसंस्कारभाव्यकभावनैवात्र विधीयते । सा च त्रिरिति सङ्ख्याभेदाद्भिद्यते । तद्भेदाच्च तत्कार्यसंस्कारस्यापि भेदात्तद्धेतुप्रोक्षणार्थमन्त्रस्यापि निर्वपणादिमन्त्रस्येवावृत्तिः ।

Siddhānta : points out that the word त्रिः cannot be connected with mantra because both mantra and त्रित्व are auxiliaries. One auxiliary cannot be the auxiliary of another. Hence, the word त्रिः has to be connected with प्रोक्षणक्रिया. Hence, recitation of the mantra once is sufficient.

**सिद्धान्तस्तु,** त्रिरिति न मन्त्राणामन्वयः । त्रित्वस्य मन्त्रस्य च द्वयोरपि गुणत्वेन **गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्** इति तार्तीयाद्यपादोक्तन्यायेनान्योन्यमनन्वयात् । किन्तु द्वयोः क्रिययैवान्वयः "त्रिः प्रोक्षति" इत्यनेन मन्त्रेण इत्येवं त्रिरिति क्रियाभ्यास एव । अतोऽत्र त्रिरभ्यास-गुणकर्मत्रैक्यान्न मन्त्रावृत्तिरिति क्रियावृत्तिरेवोच्यते ।

### प्रत्यङ्गं कण्डूयने मन्त्र तन्त्रतधिकरणम् (11-4-16)

At ज्योतिष्टोम for the कण्डूयन by कृष्णविषाण the hymn "कृषयित्वा" etc is prescribed. When itching sensation arises in more than one place of the body, and the कण्डूयन is observed in all these places simultaneously, whether the hymn be recited once only or as many times as the कण्डूयन in different places.

ज्योतिष्टोमे "कृष्णविषाणया कण्डूयते" इत्यत्र "कृष्यै त्वा सुसस्यायै" इति श्रुतो मन्त्रः पाण्याद्यनेकाङ्गेषु युगपत्कण्डूत्युत्पत्तौ प्रत्यङ्गं कण्डूयनार्थमावर्तते, किं वा तन्त्रमिति **सन्देहे,**

Pūrvapakṣa : states that since the कण्डूयन is made at different places, the hymn be recited separately for the कण्डूयन of each place.

कण्डूयनकर्मणाऽपनेयदुःखस्यान्यान्यत्वात्तदपनयनरूपकार्यस्यापि भिन्नभिन्नत्वात् कण्डूयन-संस्कार्याङ्गानां भिन्नत्वाच्च प्रत्यङ्गं कण्डूयनमन्त्रस्यावृत्तिः पूर्वत्र प्रोक्षणमन्त्रस्येवेति **प्राप्तम्** ।

Siddhānta : points out that कण्डूयन is made to enable the यजमान to perform the sacrifice without any hindrance. Hence recitation of this hymn once is sufficient.

**सिद्धान्तस्तु,** दुःखानां भेदेऽपि तदपनयनं न स्वरूपेण चिकीर्षितम् । नाप्यङ्गानां संस्कार्यत्वेन । येन भेदेन स्यात् । किन्तु कण्डूतिकृतदुःखे निवृत्ते सुखं कर्म करिष्यामीति कर्मोपयोगितया । तथा च



यत्किञ्चिद्दुःखेऽपनीतेपि दुःखान्तरे सति न सुखं कर्मकरणमिति यावता दुःखेनापनीतेनात्मा निर्दुःखो भवति, तावत्सर्वमपनेतुमभिसन्धाय कण्डूयनमारभमाणेन प्रयुक्तो मन्त्रोऽगृह्यमाणविशेषत्वात्सर्वार्थो भवतीति सकृदेव प्रयोज्य इति ।

### स्वप्ननदीतरणादिमन्त्रतन्त्रताधिकरणम् (11-4-17)

For दीक्षित mantras are described for different occasions such as dream, crossing the river, when he becomes wet by rain, etc. Here the question is raised whether the mantras prescribed for this be recited once only or as many times as the above events occur.

दीक्षितस्य स्वप्नादिषु मन्त्राः श्रूयन्ते । तत्र दीक्षितो रात्रावुद्बुध्योद्बुध्य स्वपिति बहुस्रोतसं नदीं तरति, बहुवृष्ट्या अभिवृष्येत, युगपदनेकान्यमेध्यानि पश्यति तदा क्रमादुक्तमन्त्राणामावृत्तिः, उत सकृत्प्रयोग इति **सन्देहे,**

Pūrvapakṣa : When these events such as dream etc occur more than once the mantras have to be repeated.

निमित्तभूतानां स्वप्नादीनामावृत्तौ तदर्थमन्त्रणामपि पूर्वत्रेव यावद्दुःखनिवृत्ति कण्डूयनस्येवा-वृत्तिरिति **प्राप्तम्** ।

Siddhānta : points out that the mantra is prescribed for good sleep for the whole night. If the dream occurs more than once, then also repetition of the mantra is not necessary. Similarly, crossing the river is one event. Therefore recitation of mantra once is sufficient. Similarly the rain is one unit, therefore mantra need not be repeated for each shower.

**सिद्धान्तस्तु,** प्रभातपर्यन्तं निद्रामुद्दिश्य मन्त्रं प्रयुङ्क्ते । तत्र यादृच्छिकेऽवान्तरप्रबोधे सत्यपि न मन्त्रस्य पुनः प्रयोगः । तथा स्रोतोभेदे सत्यपि नद्यैक्यात्तत्तरणमप्येकमिति तन्मन्त्रोऽपि सकृदेव प्रयोज्यः । तथाऽभिवर्षणेऽपि यावत्येका वृष्टिरुपस्थिता तामुद्दिश्य मन्त्रः प्रयुक्त इति धाराभेदेऽपि न तन्मन्त्रावृत्तिः । अनेकामेध्यदर्शनेऽपि कालभेदाभावात्तन्मन्त्रोऽपि सकृदेवेति ।

### दीक्षितस्य प्रयाणे मन्त्रतन्त्रताधिकरणम् (11-4-18)

When यजमान undertakes a journey, a mantra 'भद्राद् अभिश्रेयः' etc is

prescribed. Here the question is raised whether this mantra be recited at each stage of his journey when he takes rest at some stages and proceeds further or the recitation of it once is sufficient.

"भृतिं वनुते" इत्युक्तभृतिवननार्थं दीक्षितस्य प्रयाणे प्रस्तुते "भद्रादभिश्रेयः प्रेहि" इति श्रुतो मन्त्रः पुनः पुनर्विश्रम्य विश्रम्य प्रस्थाने सत्यावर्तनीयः, अथ सकृदेवादौ प्रयोज्य इति सन्देहे,

Pūrvapakṣa : states that the mantra be recited at each step of the journey separately.

प्रयाणे ह्यादावेव मध्ये विश्रान्तेर्निश्रयाद्विश्रमात्प्राग्यत्प्रयाणं तदर्थमेवादावुच्चरितो मन्त्र इति विशेष ग्रहणात्स्वप्रादौ मन्त्राणामावृत्तावपि विश्रम्य विश्रम्य पुनर्गमने मन्त्रः पुनः पुनरुच्चार्य इति प्राप्ते

Siddhānta : points out that the whole journey is one unit. Hence, the recitation of mantra once is sufficient.

**सिद्धान्तः**, भृतिवननार्थप्रयाणस्यायं मन्त्रोऽङ्गमिति भृतिवननरूपकार्यस्यैक्यात्तदर्थप्रयाणमपि पुनः प्रवेशपर्यन्तमेकमेवेत्यवहननवदवान्तरभेदेऽपि सकृदेवादौ प्रयोग इति ।

### उपरवमन्त्रभेदाधिकरणम् (11-4-19)

At ज्योतिष्टोम four pits called उपरव are dug. The recitation of mantra "रक्षोहण" etc. is to be recited at the time of digging. Here the question is raised whether recitation of this mantra be made at the time of digging each pit separately, or the recitation once at digging for all pits is sufficient.

ज्योतिष्टोमे उपरवशब्दिताश्चत्वारो गर्ताः । तेषां खननार्थमन्त्रः "रक्षोहणो वलगहनो वैष्णवान् खनामि" इति श्रुतः । स किं तन्त्रम्, उत प्रत्युपरवं भिद्यत इति सन्देहे,

Pūrvapakṣa : states that the recitation of the mantra once is sufficient.

वैष्णवानिति बहुवचनान्तेन चतुर्णामुपरवाणामुक्त्या सकृन्मन्त्रोक्त्याऽपि चतुर्णां प्रकाशनसम्भवात्प्रयाणमन्त्रवत्खननमन्त्रोऽपि सकृदेवादौ प्रयोज्य इति प्राप्तम् ।

Siddhānta : points out that the four pits are dug one after the other but not simultaneously, hence the mantra be recited separately at each time.



**सिद्धान्तस्तु**, चत्वारो गर्ताः क्रमेण खन्यन्ते न युगपत् । एवञ्च भिन्नकालत्वात् खेयभेदाच्च खननक्रिया भिद्यन्ते । अयं च मन्त्रस्सन्निपाती । तदन्त एव कर्मणस्सन्निपातात् । अतो यस्य खनन-स्योपक्रमे पठितस्तस्यैवोपकारकः । नान्यस्य । बहुवचनस्य च पूजार्थत्वेन "अदितिः पाशान्" इत्यत्रेव कर्मकारकमात्रस्य विवक्षितत्वेन बहुत्वस्याविवक्षितत्वात्प्रत्युपरवं भेदेनोचार्यो मन्त्र इति ।

### हविष्कृदादिमन्त्रभेदाधिकरणम् (11-4-20)

At Jyotishtoma पुरोडाशs are prescribed for each सवन. At this time, the recitation of "हविष्कृदेहि" is prescribed. (i) Here the question is raised whether recitation of this hymn once is sufficient or it has to be recited for each पुरोडाश separately.

(ii) At Vājapeya, आलम्भन of the paśus is prescribed at माध्यन्दिनसवन and प्रातः सवन. Here the question is raised whether recitation of each mantra is to be performed or be repeated at the time of ब्रह्मसामकाल again.

(iii) आलम्भन of कृष्णग्रीवापशु for आग्नेय, बभ्रु type of पशु for सौम्य and again कृष्णग्रीवापशु for आग्नेय are prescribed. Here while performing अवदान of कृष्णग्रीवपशु the hymn "अग्ने नय सुपथा" etc is prescribed and while performing प्रदान the hymn "त्वं हि अग्नि" etc. is prescribed. Here the question is raised whether these mantras are to be recited together or separately.

ज्योतिष्टोमे प्रतिसवनं सवनीयाः पुरोडाशाः । तेषु चोदकप्राप्तः "हविष्कृदेहि" इति मन्त्रः । स किं तन्त्रम्, उत प्रतिपुरोडाशमावर्तनीय इति सन्देहः । तथा वाजपेये प्राजापत्यान् क्रतुपशूंश्च सहोपक्रम्य प्राजापत्यान् पशून् पर्यग्निकृतानुत्सृज्य माध्यन्दिनसवने ब्रह्मसाम्न्यालभन्ते । क्रतुपशूंश्च प्रातस्सवने आलभन्ते । तत्र क्रतुपश्वालम्भकालीनः "दैव्याश्शमितार" इत्यध्रिगुप्रैषमन्त्रस्तन्त्रम्, उत प्राजापत्यार्थे ब्रह्मसामकाले पुनर्वक्तव्य इति सन्देहः । तथा "आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवम्" इत्युक्तकृष्णग्रीवपश्वोः सहोपक्रान्तयोः भेदेनावदाने कार्ये "अग्ने नय सुपथा राये" इत्यनुवाक्यामन्त्रः प्रदाने कार्ये "त्वंह्यग्ने प्रथमो मनोता" इति मनोतामन्त्रश्च तन्त्रम्, उत भेदेनोच्चार्यः ? इति सन्देहः ।

Pūrvapakṣa : states that in all the above cases, the mantras concerned should be recited once only.

**पूर्वपक्षस्तु,** यथा प्रयाजादीनामसन्निपातित्वात्प्रयोगापरपर्यायभावनाविधायकवचनेन कथंभावाकाङ्क्षायां युगपद्ग्रहणात्तन्त्रता, तथाऽत्रापि हविष्कृदाह्वानादिसर्वमन्त्राणामसन्निपातित्वा प्रयोगवचनबलाच्च तन्त्रत्वमिति ।

*Siddhānta : points out that offering of* पुरोडाश *etc. is made at different times. The three* सवन*s are performed at different times. Hence the recitation of these mantras be repeated.*

**सिद्धान्तस्तु,** पुरोडाशादीनां कालभेदान्मन्त्राणामप्यावृत्तिरेव । तत्र तावत्सवनत्रयगतपुरोडाशानां कालभेदः स्पष्टः । तथा क्रतुपशुप्राजापत्यपशूनामपि । द्वयोः कृष्णग्रीवयोश्च मध्ये सोम्यबभ्रुपश्वनुष्ठानात्कालभेद इति ज्ञेयम् । प्रयाजादिजन्यापूर्वस्य कालन्तरपर्यन्तं भावित्वेन तस्य तन्त्रत्वेऽपि मन्त्रजन्यार्थपकाशनरूपकार्यस्य कालान्तरपर्यन्तमनवस्थानेन वैषम्यादावृत्तिरेव मन्त्राणामिति ।

**इति एकादशाध्याये चतुर्थः पादः**

**॥ इत्येकादशाध्यायः ॥**



# Chapter-XII

## द्वादशाध्याये प्रथमः पादः

In the earlier chapter तन्त्र and आवाप of अङ्गs were discussed. In this chapter, प्रसङ्ग will be discussed. The nature of प्रसङ्ग is explained as 'अन्योपकारार्थं कृतेन अन्यस्य उपकारसिद्धिः i.e. an act performed for serving the purpose of one item also serving the purpose of another is प्रसङ्ग. For instance, a lamp put up to light the building also provides the light for the road. Here, it should be noted that तन्त्र also serves the purpose of more than one. However, it is undertaken to serve the purpose of many while in the case of प्रसङ्ग it is undertaken to serve the purpose one only, but incidentely surves the purpose of the other.

पूर्वत्र तन्त्रावापावङ्गानां चिन्तितौ । अत्र त्वध्याये प्रसङ्गश्चिन्त्यते । प्रसङ्गो नामान्योपकारार्थकृतेनान्यास्योपकारसिद्धिः । तदाह **भाष्ये,** ''अन्यत्र कृतस्यान्यत्रापि प्रसक्तिः प्रसङ्गः'' इति । तन्त्रमनेकोपकारकमपि तावदुद्देशेनानुष्ठानमिति प्रसङ्गतस्तस्य भेदो ज्ञेयः ।

### पशुपुरोडाशाधिकरणम् (12-1-1)

At ज्योतिष्टोम there is अग्नीषोमीयपशुयाग. दर्शपूर्णमास is its प्रकृति. सान्नाय्य is particularly its प्रकृति. Hence, सान्नाय्यविध्यन्त has to be adopted. The statement 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पुरोडाशमेकादशकपालं निर्वपति' occurs. As per this दार्शपौर्णमासिकाग्नीषोमीयपुरोडाश विध्यान्तs have to be observed.

Here, the question is raised whether the अङ्गs observed for पशु serve the purpose of पुरोडाश also or not.

ज्योतिष्टोमे अग्नीषोमीयः पशुः । स च दर्शपूर्णमासप्रकृतिकः । तत्रापि सान्नाय्यप्रकृतिकत्वात्तदीयविध्यन्तस्तत्र प्रवर्तते ।

तत्र पश्वर्थः पुरोडाशः श्रूयते ''अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पुरोडाशमेकादशकपालं निर्वपति'' इति । तत्र च दार्शपौर्णमासिकाग्नीषोमीयपुरोडाशविध्यन्तः प्रवर्तते । तत्र किं पश्वर्थानुष्ठितान्यङ्गानि पुरोडाशस्योपकुर्वन्ति, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that प्रयाज etc अङ्गs which are observed at the time of offering पशु are for पशु but not for the पुरोडाश. The offering of पुरोडाश is prescribed after वपाप्रचार. At that time ऐष्टिक अङ्गs are solicited by कथम्भावाकाङ्क्षा. Hence, पुरोडाशयाग has to be observed with these अङ्गs.

प्रयाजाद्यङ्गानि पशुकालेऽनुष्ठीयमानानि सन्निधानात्पश्वर्थानि । न कालान्तरेऽनुष्ठीयमान-पुरोडाशार्थानि भवितुमर्हन्ति । वपाप्रचारानन्तरं पुरोडाशकरणिकाया भावनाया विधानात्तस्मिन् काले कथंभावाकांक्षायां चोदकेनैष्टिकाङ्गानां प्रापणात्साङ्ग एव पुरोडाशः कार्यो न प्रधानमात्रमिति **प्राप्तम्** ।

Siddhānta : points out that प्रयाज etc अङ्गs do not serve the purpose of each प्रधान seperately. But all the प्रधानयागs of दर्शपूर्णमासs together. Hence, पुरोडाशयाग takes into account the अङ्गs of पशुयाग also.

**सिद्धान्तस्तु,** अङ्गानि पशुकालेऽनुष्ठीयमानानि तदर्थानीति सत्यम् । तथापि प्रयाजाद्यङ्गानि न प्रत्येकमुपकारं प्रधानस्य जनयन्ति । पूर्वोत्तराणि सर्वाण्यपि संहत्यैवेत्युक्तं पूर्वाध्यायाद्यपादे **अङ्गानां तु शब्दभेदात्** इत्यत्र । तथा च पश्चात्तनाङ्गानुष्ठानपर्यन्तं पूर्वकृतान्यङ्गानि स्वस्वापूर्वरूपेण वर्तन्त इति तन्मध्येऽनुष्ठीयमानः पुरोडाशयागः पाशुकमङ्गग्रामं स्वोपकारार्थमुपजीवति । न तु स्वार्थं पृथगनुष्ठान-मपेक्षते । अन्यार्थैरेवाङ्गैरात्मन उपकारसिद्धेः । अन्यार्थारोपितदीपेन मार्गादिप्रकाशनवत् । अतो न पुरोडाशार्थं पृथगनुष्ठानम् ।

### पशुपुरोडाशे आज्यभागयोः कर्तव्यताधिकरणम् (12-1-2)

In the earlier adhikaraṇa it was stated that since, by the performance of अङ्गs of पशु the purpose of पुरोडाश is served there is no need of separate performance of अङ्गs for पुरोडाश. Here, the question is raised whether the अङ्गs आज्यभाग, अवधात etc that are not stated for पशु be observed for पुरोडाश or not.

पूर्वत्र पाशुकैरेवाङ्गैः कार्यसिद्धेर्न पुरोडाशस्य पृथगङ्गानि कार्याणीत्युक्तम् । यत्पुनः पशाव-विद्यमानमाज्यभागावघातादिकं तत्किं पुरोडाशे कार्यम्, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that कथंभावाकाङ्क्षा of पुरोडाश- करणकभावना is satisfied by the अङ्गकलाप of पशु. Hence, it does not elicit the अङ्गs stated for पुरोडाश aditionally. Therefore, आज्यभाग and अवघात stated for पुरोडाश need not be observed. It is true that without these अङ्गs the पुरोडाश itself cannot be formed. However, this can be managed by taking laukika पुरोडाश.



"पुरोडाशं निर्वपति" इति वाक्योक्तपुरोडाशकरणकभावना लिङा बोध्यमाना कथंभाव-माकाङ्क्षन्तीपाशुकेन चोदकेनाङ्गकलापेन प्राकृतानुपकारानुपादाय आज्यभागाभ्यां गृहमेधीयभावनेव सन्निहितैस्तावद्भिरेव निराकांक्षा सती न चोदकप्रापिताङ्गजन्योपकारमपेक्षत इति चोदकस्य निवृत्तेः पूर्वोक्तदिशा प्रयाजादिकमिव नाज्यभागावघातादिकं कार्यम् । न चैवं पुरोडाशानिष्पादः शङ्क्यः । लौकिकापिष्टोपादानेनापि तत्सिद्धेरिति **प्राप्तम्** ।

Siddhānta : points out that the injunctions that prescribe अङ्गs for पशु prescribe these for पशु only, but not for पुरोडाश. Hence, आज्यभाग. अवघात etc अङ्गs prescribed for पुरोडाश have to be observed.

**सिद्धान्तस्तु,** यदि पशावङ्गप्रापकेण चोदकेन प्रयाजादीनां कार्यमुखेन पुरोडाशभावनायां प्रापणं स्यात्तदा तावता निराकांक्षां भावनां प्रयोगवचनो लिङ् विदध्यात् । तथा पृथक् तदङ्गप्रापकचोदकस्य निवृत्तिः । न चैवम् । पाशुकचोदको हि पाशुकभावनायामेवाङ्गानि प्रापयति । न पुरोडाशभावनायाम् । येन सा निराकाङ्क्षा स्यात् । अतः पौरोडाशिकश्चोदकोऽप्यङ्गीकार्यः ।

### सोमे दार्शिकवेद्यकरणाधिकरणम् (12-1-3)

At ज्योतिष्टोम, वेदी of the measurment of twenty six steps at the commencement, twenty four steps at the end, thirty steps in the middle is stated. It is also stated that we will be able to manage by this much. Here, the question is raised whether the placing of the हविस् of इष्टिs that are the विकृतिs of दर्शपूर्णमास be made on this वेदी only or another वेदी has to be made.

ज्योतिष्टोमे वेदिः श्रुता षट्त्रिंशत्प्रक्रमा प्राची । चतुर्विंशतिरग्रेण । त्रिंशज्जघनेन । इयति शक्ष्या-महेऽस्यां कर्तुमिति । तत्र दर्शपूर्णमासाख्यप्रकृतितश्चोदकेन प्राप्तानामिष्ट्याद्यङ्गानां हविरासादनार्थं प्राकृती वेदिरन्या कार्या, अथ तस्यामेवासादनं । न प्राकृतवेद्यन्तरकरणमिति **सन्देहे,**

Pūrvapakṣa : argues that normally the same वेदी has to be utilised for प्रधान and अङ्ग. However, here it is particularly stated that the वेदी is sufficient to manage the प्रधान only. Hence, another वेदी has to be made for placing the हविस् of इष्टिs.

**चिकीर्षया च संयोगात्** इत्यत्र सैव वेदिरङ्गप्रधानसर्वार्था न प्रधानमात्रार्थेत्युक्तावपि ''इयति शक्ष्यामहेऽस्यां कर्तुम्'' इत्यनुष्ठानशब्दितप्रचारार्थत्वस्यैवावगमात्। पूर्वोक्तदिशा पाशुकप्रयाजाद्यङ्गानां पशुपुरोडाशोपकारकत्वेऽपीह चोदकप्राप्ताङ्गकर्महविरासादनरूपप्राकृतवेदिकार्यकरत्वं न सौमिकवेद्याः। अतस्तदर्थं प्राकृती वेदिः पृथक्कार्येति।

Siddhānta : points out that it is not particularly stated that वेदी is only for the placing of प्रधान हविस्. It is only implied. The implied statements do not apply to विकृति. Hence, placing of the हविस् of इष्टि be made on the same वेदी.

**सिद्धान्तस्तु,** सत्यं प्रचारार्था वेदिः। तथापि तस्यामेव हविरासादनं कर्तुं शक्यत एव। न च प्रकृतौ स्वोद्देशेन कृतायामेव वेद्यां हविरासादनस्य कृतत्वादिहान्योद्देशेन कृतायां वेद्यां क्रियमाणं हविरासादनं विगुणं स्यादिति शङ्क्यम्। प्रकृतावुद्देशस्याविहितत्वेनानङ्गतयाऽऽर्थिकत्वादार्थिकस्य चोदकेनानतिदेशात्। अतोऽन्यार्थायामपि वेद्यां हविरासादने नास्ति वैगुण्यमिति प्रचारार्थैव वेदिः प्रसङ्गादासादनेनोपजीव्यत इति न पृथग्वेदिकरणमिति।

## सोमचर्वादिहोमस्य ऐष्टिकपात्रैरनुष्ठानाधिकरणम् (12-1-4)

In this adhikaraṇa the question is raised whether ग्रह, चमस, etc. vessels utilised for सोम be utilised for सवनीय पशु पुरोडाश etc सोमाङ्ग rituals or separate vessels जुहु etc. be taken.

सोमाङ्गेषु सवनीयपशुपुरोडाशादिकर्मसु सोमार्थान्येव ग्रहचमसरूपपात्राणि प्रसज्यन्ते, किं वा जुह्वादिरूपपात्रान्तराणि पृथगेव सम्पाद्यानीति **सन्देहे,**

Pūrvapakṣa : argues that since, सवनीय etc also can be managed by utilising the ग्रह, चमस etc सोम vessels only. There is no need to take जुहू etc other vessels.

यथा सौमिकवेद्यैव हविरासादनकार्यसिद्धेरैष्टिकप्राकृतवेद्या निवृत्तिस्तथा सौमिकैरेव ग्रहादिपात्रैस्तदङ्गैष्टिकहोमादिकार्यनिष्पत्त्या जुह्वादीनां निवृत्तेर्न पृथक्सम्पाद्यानि पात्रान्तराणीति **प्राप्तम्।**

Siddhānta : points out that it is not proper to perform the होमs which are to be performed by जुहू etc vessels by ग्रह, चमस etc. Hence, जुहू etc only be taken.

**सिद्धान्तस्तु,** यदि जुहूसाधनको होमोऽन्यैर्ग्रहादिसौमिकपात्रैः क्रियेत तदा विगुणस्सन्नास्यकार्यं



साधयेत्। न च यथा केवलाज्यकृतानुयाजसाध्यत्वेऽस्यापि पशुपुरोडाशोपकारस्य पृषदाज्यकृतानुयाजसाध्यत्वेऽपि न वैगुण्यं तथा जुह्वादिसाध्यानामपि होमानां सौमिकपात्रसाध्यत्वेऽपि न वैगुण्यमिति शङ्क्यम्। पशौ पृषदाज्यकृतैरप्यनुयाजैः प्राकृतकार्यस्यैव जननात्। न पुनः केवलाज्यैस्ते क्रियन्ते। प्रकृते तु सौमिकपात्रैरैष्टिकहोमानामकृतत्वेनावश्यं कर्तव्यत्वात्साद्गुण्यार्थं जुह्वाद्युपादानस्यावश्यकत्वान्न पात्रेषु प्रसङ्गः।

## शामित्रे पशुपुरोडाशश्रपणाभावाधिकरणम् (12-1-5)

For cooking the अवयवs of अग्नीषोमीय पशु there is अग्नि known as शामित्र placed between चात्वाल and उत्कर. चात्वाल is a pit, उत्कर is a heap of earth particles. Here, the question is raised whether पशुपुरोडाश be cooked in शामित्राग्नि or गार्हपत्य.

अग्नीषोमीयपश्ववयवश्रपणार्थः शामित्राग्निनामक औत्तरवेदिकाग्निश्चात्वालोत्करयोर्मध्ये प्रणीताग्निः श्रुतः। **चात्वालो** गर्तविशेषः। **उत्करस्तु** सूक्ष्माग्रमृत्तिकाराशिरित्युत्करशब्दार्थः दशमे तृतीयपादे **संस्कारे तु** इत्यत्रोक्तः। पशुपुरोडाशश्च पशुतन्त्रोपजीवीत्युक्तमनैवाधनये। एवञ्च पशुपुरोडाशः किं शामित्राग्नौ श्रपयितव्यः, उत गार्हपत्य इति **सन्देहे,**

Pūrvapakṣa : argues that in respect of पशु and पुरोडाश cooking is commonly stated. Hence, पुरोडाश be cooked in the same अग्नि i.e. शामित्राग्नि in which पशु is cooked.

पशौ पुरोडाशे चैक एव पाकश्चोदकेन प्राप्यत इति द्वयोरप्येकत्रैव पाकस्स्यात्। पशुतन्त्रोपजीवित्वात्पुरोडाशस्येति तत्पाकसाधनमेवास्यापि पाकसाधनमिति **प्राप्ते**

Siddhānta : points out that though cooking is commonly stated for पशु and पुरोडाश. The duration of time taken for cooking पशु and पुरोडाश varies. Hence, these have to be cooked in different अग्नि viz. पशु in शामित्र and पुरोडाश in गार्हपत्य.

**सिद्धान्तः,** यद्यपि पशौ चोदकेनैकः पाकः प्राप्यते तथापि पाशुकैः प्रयाजादिजन्यैरुपकारैरिव पाशुकेन पाकेन न पुरोडाशस्योपकारोऽस्ति। पशौ शृतेऽपि पुरोडाशस्याश्रपणात्। अतः पृथक् पाके कार्ये अवैगुण्याय प्रकृताविव गार्हपत्य एव पाकः कार्य इति।

### कुण्डपानामयने अग्निहोत्रद्रव्यस्य प्राजहिते श्रपणाधिकरणम् (12-1-6)

In respect of मासाग्निहोत्र which is a part of कुण्डपायिनामयन the question is raised whether हविस् be cooked in प्राजहित which is मुख्यगार्हपत्य or शालामुखीय which is the name of आहवनीय before अग्निप्रणयन on उत्तरवेदी.

कुण्डपायिनामयनगते मासाग्निहोत्रे हविःश्रपणं किं प्राजहितशब्दिते मुख्यगार्हपत्ये कार्यम्, उत शालामुखीय इति **सन्देहे,**

Pūrvapakṣa : argues that though पशुपुरोडाश is cooked in गार्हपत्य, मासाग्निहोत्र हविस् be cooked in शालामुखीय only.

**शालामुखीयो** नाम औत्तरवेदिकाग्निप्रणयनात्पूर्वं य आहवनीयः स उच्यते । ज्योतिष्टोमे हि शालामुखीयोऽग्निरेव ''अत ऊर्ध्वं गार्हपत्यो भवति'' इति गार्हपत्यकार्ये विहितः । स च ज्योतिष्टोमा-चोदकेन द्वादशाहं प्राप्तः । ततो गवामयनम् । ततः कुण्डपायिनामायनम्, इत्येवं परंपराप्रास इति पशुपुरोडाशस्य गार्पपत्ये श्रपणेऽप्यग्निहोत्रहविःश्रपणं शालामुखीय एवेति **पूर्वः पक्षः ।**

Siddhānta : points out that in viw of the name अग्निहोत्र its हविस् has to be cooked in प्राजहित i.e. मुख्यगार्हपत्य only.

**सिद्धान्तस्तु,** सत्यं चोदकेन शालामुखीयस्य प्राप्तिः । तथाऽप्यग्निहोत्रनामधेयात्तु नित्याग्निहोत्र इव प्राजहितशब्दिते मुख्य एव गार्हपत्ये श्रपणम् । आनुमानिकाच्चोदकात्प्रत्यक्षनामधेयस्य बलवत्ताया: सप्तमान्ते द्वादशाहिकमहर्गणे तत्प्रकृतित्वात् इत्यत्राभिधानात् ।

### हविर्धानशकटान्यशकटेन औषध द्रव्यकपुरोडाश निर्वापाधिकरणम् (12-1-7)

At ज्योतिष्टोम, सोम is brought on two carts and offered. Here, the question is raised whether सवनीयपुरोडाश also be brought on one of these carts and offered or it is to be brought on a separate cart.

ज्योतिष्टोमे हविर्धानसमाख्ययोः शकटयोः सोमधारणार्थयोः प्रवर्तने कृते सति यानि सवनीय-पुरोडाशादीनि तेषां किं तयोरन्यतरत्र निर्वपणम्, उत शकटान्तरमुपादेयमिति **सन्देहे,**

Pūrvapakṣa : argues that the statement 'अनसो अधिनिर्वपति' states that the offering is made near the cart. Hence, सवनीयपुरोडाश also may be made near the cart that carry the सोम.



यथा हि ''वेद्यां हविरासादयति'' इत्यत्र वेदिमात्रस्य श्रवणात् महावेद्यामासादनेऽपि न वैगुण्यं तथाऽपि ''अनसोऽधि निर्वपति'' इत्यस्य प्रकृतितः प्राप्तस्यानोमात्रस्य श्रवणाद्धविर्धानाभ्यां निर्वापेऽप्यवैगुण्यान्न शकटान्तरमुपादेयमिति **पूर्वपक्षः ।**

Siddhānta : points out that the cart that carries the सोम is to be placed near उत्तरवेदी reciting the मन्त्र while पुरोडाश is to be offered in the अपरभाग of गार्हपत्य. This means सोम and पुरोडाश have to be offered in different places. Hence, a different cart has to be taken for पुरोडाश.

**सिद्धान्तस्तु,** सोमार्थशकटयोर्न पुरोडाशनिर्वापः । सोमधारणार्थानसो महावेद्यामुत्तरवेदिसमीपे मन्त्रपूर्वं नियमेन स्थापितत्वात् । पुरोडाशादिनिर्वापस्य च ''अपरेण गार्हपत्यं निर्वपति'' इति प्रकृतितः गार्हपत्यापरभागदेशस्य श्रवणाद्भिन्नदेशयोस्सामानाधिकरण्यायोगात् । अतो नात्र प्रसङ्गावकाश इत्यनोन्तरमेवोपादेयमिति ।

### प्रायणीयादिषु दीक्षाजागरणस्य अभावाधिकरणम् (12-1-8)

At ज्योतिष्टोम, रात्रिजागरण i.e. remaining awake during the night, after दीक्षा is prescribed for दीक्षित. Here, the question is raised whether such जागरण has to be observed at प्रायणीय etc. सोमयागs which are विकृतिs of दर्शपूर्णमास.

ज्योतिष्टोमे ''यां प्रथमां रात्रिं दीक्षितो जागर्ति तया स्वप्नेन व्यावर्तितो भवति'' इति दीक्षितस्य दीक्षोत्तरकालं रात्रौ जागरणमाम्नातम् । तत्र सोमयागीयासु दर्शपूर्णमासविकृतिभूतासु प्रायणीयादिषु किं चोदकप्राप्तं दार्शपौर्णमासिकमपि जागरणं कर्तव्यम्, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that the effect of the जागरण undertaken for सोमयाग continues till the completion of सोमयाग, प्रायणीय etc इष्टि occur in the middle of सोमयाग. Hence, separate जागरण is not necessary in respect of these.

पूर्वोक्तदिशाऽनसः पृथगुपादानेऽपि जागरणस्य न पृथगुपादानम् । प्रयाजादिजन्योपकारस्या-पशुसमाप्तेरिव सोमार्थजागरणजन्यादृष्टस्यासोमपरिसमाप्त्यवस्थानात्सोमार्थेन दीक्षाकालीनजागरणेन प्रसङ्गात्तन्मध्यपतितैष्टिकजागरणकार्यस्यापि सिद्धेर्न पृथक् तेषु जागरणं कार्यमिति **प्राप्ते**

Siddhānta : points out that जागरण is meant for taking care of यज्ञसाधन.

Taking care only at दीक्षा time is not sufficient. Hence, जागरण has to be observed at the time of इष्टि also to take care of यज्ञसाधन.

**सिद्धान्तः**, दृष्टार्थस्य सम्भवेऽदृष्टार्थत्वायोगाद्यज्ञसाधनविषयाप्रमादरूपदृष्टार्थत्वाज्जागरणस्य तेन दीक्षाकालीनेषु रक्षितेष्वपि तदुत्तरकालीनरक्षणार्थमैष्टिकं प्राकृतं जागरणमपि कार्यम्। अदृष्टार्थत्वे वा प्रयाजादेः प्राकृतत्वेन प्राकृतार्थोपकारजनकत्वेऽपि सोमस्यापूर्वत्वान्न तत्र दार्शिकं जागरणं प्रवर्तते। किन्त्वपूर्वमेवेति भिन्नादृष्टजनकत्वनियमेन तेन प्राकृतेन प्राकृतकार्यस्यादृष्टस्यासिद्धेः प्राकृतकार्यसिध्यर्थं पृथग्जागरणं कार्यमिति।

## विहारपृथक्कृत्वे मन्त्रभेदाधिकरणम् (12-1-9)

At वरुणप्रघास, the recitation of निर्वपमन्त्रs by अध्वर्यु and प्रतिप्रस्थाता is prescribed. Here, the question is raised whether one of these two should recite the मन्त्र once only or the two should recite separately.

वरुणप्रघासेषु पूर्वोत्तरविहारयोर्निर्वापादिमन्त्रा अध्वर्युणा प्रतिप्रस्थात्रा वा सकृतेव प्रयोज्याः, उतोभाभ्यामपि भेदेनेति **सन्देहे,**

Pūrvapakṣa : argues that the recitation of मन्त्र by one of these will serve the purpose of employing the मन्त्र. Hence, both need not recite.

अन्यतरेणाप्युच्चार्यमाणैर्मन्त्रैरुभयोः मृतिसम्भवात्सकृदेव प्रयोज्या इति **प्राप्ते**

Siddhānta : points out that the expression 'निर्वपामि' indicates that the result of the recitation has to go to the reciter. If only one recites the other will be deprived of the result. Hence, both have to recite separately.

**सिद्धान्तः**, ''निर्वपामि'' इत्यादिमन्त्रगतोत्तमपुरुषादेः स्वात्मगामित्वादन्यतरेणोच्चारितेन द्वयोरात्माभिवादित्वायोगादध्वर्युप्रतिप्रस्थात्रोः कर्मसु शैघ्र्यविलम्बसम्भवेन मन्त्रान्त एव निर्वापादिकर्मसन्निपातनापत्तेश्चोभाभ्यां भेदेन मन्त्रमुच्चार्य तदन्त एव कर्म कार्यमिति।

## दीक्षणीयादिषु अग्न्यन्वाधानस्य अभावाधिकरणम् (12-1-10)

In this adhikaraṇa the question whether अग्न्यन्वाधान be made at दीक्षणीया etc इष्टिs is discussed. It is pointed out that अन्वाधान is of the nature enkindling of अग्नि taken from गार्हपत्य. For this purpose the अग्नि need not be taken again and again. Enkindling the same अग्नि until the completion of the sacrifice is sufficient.



सोमाङ्गेषु दीक्षणीयादीष्टिषु चोदकप्राप्तमन्वाधानं कार्यम्, उत नेति **सन्देहे,**

पूर्वत्र निर्वापादिमन्त्र इव चोदकानुग्रहायान्वाधानं कार्यमिति **प्राप्ते**

**सिद्धान्तः**, अन्वाधानं हि विहितस्य गार्हपत्यात्पृथक्कृतस्याग्नेः यदाद्यमुपसमिन्धनं तदुच्यते। तच्च धारणार्थम्। न च तत्प्रकृतौ पुनः पुनः क्रियते। पुनः पुनर्विहरणस्याचोदितत्वात्केवलोपसमिन्धनेनापि तत्सिद्धेश्च। तस्मात्सौमिकेनोक्तरूपान्वाधानेन धृतस्याऽक्रतुसमाप्ति धारणाय केवलोपसमिन्धनस्य मध्येऽपेक्षितत्वेन पुनः पुनर्विहृत्योपसमिन्धनरूपान्वाधानस्यायुक्तत्वात्। सोमार्थेन विहृतस्य धारितस्याग्नेर्धारणेन प्रसङ्गसिद्धकार्यत्वान्न पुनः कार्यमन्वाधानमिति।

## दीक्षणीयादिषु व्रतोपायनाभावाधिकरणम् (12-1-11)

In this adhikaraṇa the question whether व्रतोपायन of दर्शपूर्णमास be observed at दीक्षणीया etc इष्टिs is discussed. It is pointed out that व्रतोपायन observed for सोम is कर्तृसंस्कार. It continues until सोमप्रयोग is completed. Therefore it need not be observed again for दीक्षणीया etc इष्टिs.

ज्योतिष्टोमे दार्शपौर्णमासिकं चोदकप्राप्तं व्रतोपायनं दीक्षणीयादीष्टिषु कार्यम्, उत नेति **सन्देहे,**

सौमिकस्यान्वाधानस्य भेदेऽप्यैष्टिकान्वाधानकार्यकरत्वात्प्रसङ्गसम्भवेऽपि प्रकृते व्रतोपायनस्यादृष्टार्थत्वादैष्टिकमपि पृथक्कार्यं चोदकानुग्रहायेति **प्राप्ते**

**सिद्धान्तः**, सोमार्थव्रतोपायनस्य कर्तृसंस्कारद्वारा सोमप्रयोगाङ्गत्वादीक्षाकालोपेतेनाप्यासोमप्रयोगपरिसमाप्त्यनुवर्तमानेन सौमिकेन व्रतेनैव दीक्षणीयादेरप्यनुग्रहसिद्धेर्न पुनश्चोदकप्राप्तं व्रतोपायनं कार्यमिति।

## ऐष्टिकेषु अग्न्यन्वाधानाननुष्ठानाधिकरणम् (12-1-12)

The question whether अग्न्यन्वाधान for इष्टिs be made or not is again raised in this adhikaraṇa.

सिंहावलोकनन्यायेन पूर्वतनाधिकरणेनाक्षेपिकी सङ्गतिः । सौमिकमग्न्यन्वाधानं प्रसङ्गादैष्टिकेषु कार्यं साधयतीति यदुक्तं 'धारणार्थत्वात्' इत्यत्र । तदयुक्तम् । प्रकृतावन्वाधानं धारणमात्रार्थं चेत्तदा सौमिकेनैव धारणेन तत्कार्यसिद्धेर्न पुनरन्वाधानं कार्यं स्यात् । किन्तु

Pūrvapakṣa : argues that अग्न्यन्वाधान is not merely for अग्निधारण but for देवतापरिग्रह also as per the statement 'ममाग्ने वर्चो विहवेष्वस्तु' इति गृण्हाति. Hence, अग्न्यन्वाधान has to be made for इष्टि s also.

प्रकृतिभूतदर्शपूर्णमासयोरन्वाधानं देवतापरिग्रहार्थमपि भवति । ''ममाग्ने वर्चो विहवेष्वस्त्वित्यग्निं गृह्णाति'' ''देवता एव पूर्वेद्युर्गृहीत्वा श्वोभूते यजते'' इति श्रवणात् । अतो धारणार्थत्वाभावेऽपि तत्तद्देवतापरिग्रहार्थमपि प्रायणीयादीष्टिषु चोदकप्राप्तमन्वाधानं पुनः कार्यमिति **प्राप्ते**

Siddhānta : points out that the above statement is only देवतास्तुति. It does not convey देवतापरिग्रह. Hence, अग्न्यन्वाधान is not neccessary.

**सिद्धान्तः**, अन्वाधानं हि सामर्थ्याद्देवतापरिग्रहार्थं ज्ञायते । किन्तु धारणार्थं प्रत्यक्षतोऽवगम्यते । तथा ''ममाऽग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तनुवं पुषेम'' इति मन्त्रलिङ्गादपि समिन्धनद्वारा धारणार्थमेव ज्ञायते । न त्वदृष्टदेवतापरिग्रहार्थम् । अतो धारणमात्रार्थमन्वाधानमिति न पुनः कार्यमिति ।

### ऐष्टिकेषु पत्नीसन्नहनानुष्ठानाधिकरणम् (12-1-13)

At दर्शपूर्णमास the statement 'योक्त्रेण पत्नीं सन्नह्य prescribes पत्नीसन्नहन. Here, the question is raised whether this has to be observed at सोमाङ्गदीक्षणीया etc.

दर्शपूर्णमासयोः ''योक्त्रेण पत्नीं सन्नह्य'' इति पत्न्यास्सन्नहनं श्रुतं सोमाङ्गप्रायणीयादिषु चोदक प्राप्तं कर्तव्यं, न वेति **सन्देहे,**

Pūrvapakṣa : states that as it is अदृष्टार्थ, it has to be observed.

पूर्वत्र सोमार्थमग्नेर्धृतत्वेन पुनर्धारणार्थमन्वाधानं न कर्तव्यमित्युक्तं युक्तम् । सन्नहनं त्वदृष्टार्थत्वाज्जागरणवत्पुनः कर्तव्यमिति **प्राप्ते**

Siddhānta : points out that सन्नहन is not अदृष्टार्थ. It is meant for tightly wearing the cloth. Hence, सन्नहन observed at the time of सोमयाग will serve its





purpose at the time of इष्टि also. It cannot be argued that the cloth is likely to have become loose, hence, सन्नहन be made again, as it is to be tied firmly.

**सिद्धान्तः**, सन्नहनं नादृष्टार्थम् । वासोधारणार्थत्वात् । दृष्टार्थदीक्षाकालीनेन च सोमार्थेन सन्नहनेन धरितार्थत्वान्न पुनः कर्तव्यम् । न च सोमार्थस्य सन्नहनस्य सञ्चारादिना शैथिल्यसम्भवात्पुनस्सन्नहनं प्राकृतं कार्यमिति शङ्क्यम् । तस्याऽप्रयोगसमाप्ति यथा न शैथिल्यं, तथैव कार्यत्वादिति ।

### ऐष्टिकेषु आरण्यभोजनाभावाधिकरणम् (12-1-14)

At दर्शपूर्णमास, eating of forest products is prescribed. Here, the question is raised whether this has to be observed at प्रायणीय etc.

दर्शपूर्णमासयोः ''अथो यदारण्यस्याश्नात्तेनारण्यानवरुन्धे । अतो इन्द्रियं वा आरण्यमिन्द्रियमेवात्मन् धत्ते'' इत्यारण्याशनं विहितं सोमाङ्गप्रायणीयादिषु चोदकप्राप्तं कर्तव्यं, न वेति **सन्देहे,**

Pūrvapakṣa : states that after प्रायणीय and आतिथ्य only प्रयोव्रत is prescribed by पयो ब्राह्मणस्य व्रतम्. This makes room for eating आरण्य i.e. forest product at प्रायणीय.

सौमिकस्य सन्नहनस्य प्रवृत्तत्वात्प्रायणीयादिषु पुनस्तत्कर्तव्यं दीक्षानन्तरदिने प्रायणीयातिथ्ययोरनन्तरमेव सौमिकस्य ''पयो ब्राह्मणस्य व्रतम्'' इत्याद्युक्तपयोव्रतादिप्रवृत्तेः प्रायणीयकाले तस्याप्रवृत्तत्वाचोदकानुग्रहायाऽरण्याशनं कार्यमिति **प्राप्ते**

Siddhānta : points out that if आरण्यभोजन is made at प्रायणीय, than, there will be no need of पयोव्रत. However, पयोव्रत is प्रधानगुण. It cannot be set aside by अङ्गगुण.

**सिद्धान्तः**, प्रायणीयादिषु प्राकृतारण्यभोजनकृतौ तेनैव व्रतसिद्धेरनुपदमातिथ्यान्ते सौमिकं पयोव्रतादि न क्रियेत । न चेष्टापत्तिः । तथात्वे प्रधानगुणस्य बाधः स्यात् । अतो वक्ष्यमाणाङ्गगुणविरोधन्यायेन करिष्यमाणेनापि सौमिकेन व्रतेन वृत्तिसिद्धेर्न प्रायणीयादिष्वारण्याशनमिति ।

### ऐष्टिकेषु शेषभक्षणस्य संस्कारार्थतया कर्तव्यत्वाधिकरणम् (12-1-15)

At प्रकृतियाग, शेषभक्ष of इडा etc. is prescribed. Here, the question is raised whether these are to be observed at सोमाङ्ग प्रायणीय etc or not.

प्रकृतौ शेषभक्षा यजमानकर्तृका इडाभक्षणादयस्तेऽपि किं सोमाङ्गप्रायणीयादिषु चोदकप्राप्ताः कार्या, उत नेति सन्देहे,

*Pūrvapakṣa : states that just as* आरण्याशन *is set aside by* पयोव्रत, शेषभक्ष *also has to be set aside by* सौमिकव्रत. *Hence,* शेषभक्ष *need not be made.*

सौमिकेन व्रतेनाऽरण्याशनस्येवेडाभक्षणस्यापि निवृत्तिः स्यात्। इडाभक्षणस्यापि वृत्त्यर्थत्वात्। वृत्तेश्च सौमिकेनैव व्रतेन सिद्धेरिति प्राप्ते

*Siddhānta : points out that* इडाभक्षण *is not intended to serve as eatable. It is* प्रतिपत्तिसंस्कार *for* हविश्शेष. *Hence, it has to be observed.*

**सिद्धान्तः**, यदीडाभक्षणादिकं वृत्त्यर्थं स्यात्तदा निवृत्तिस्स्यात्। न चैवम्। किन्तु ''यजमानपञ्चमा इडां भक्षयन्ति'' इतीडाया द्वितीयानिर्देशेन प्रतिपत्त्यर्थत्वाद्भक्षणस्य। अतश्चोदकप्राप्तं तदपि कर्तव्यम्। अन्यथा प्रतिपत्तिलोपापत्तेरिति।

### ऐष्टिकेषु अन्वाहार्यदानाभावाधिकरणम् (12-1-16)

At प्रकृतियाग, अन्वाहार्यदक्षिणा is prescribed. Here, the question is raised whether this has to be given at सोमाङ्गदीक्षणीया or not.

प्रकृतावन्वाहार्यदक्षिणा श्रुता। सेह सोमाङ्गदीक्षणीयादिषु चोदकप्राप्ता। सा किं दातव्या, न वेति **सन्देहे,**

Pūrvapakṣa : states that अन्वाहार्य चरुदक्षिणा be given at दीक्षणीया. द्वादशशतदक्षिणा prescribed at प्रधानयाग will not exclude the दक्षिणा prescribed at अङ्गयाग.

पूर्वत्र शेषभक्षणमिवान्वाहार्यशब्दितचरुदक्षिणाऽपि दातव्या। न च सौमिकेन द्वादशशतेनैव तत्सिद्धिः। तस्य **दीक्षादक्षिणं तु वचनात्प्रधानस्य** इति तृतीयसप्तमपादे प्रधानमात्रार्थत्वोक्त्याऽङ्गेषु स्वार्थदक्षिणा दातव्येति **प्राप्ते**

Siddhānta : points out that दक्षिणा is means for securing the services of preists. This is manages by प्रधानदक्षिणा. Therefore, there is no need of seperate दक्षिण for सोमाङ्ग दीक्षणीया.



**सिद्धान्तः**, दक्षिणा हि ऋत्विजां भृत्यर्था। सा सौमिकद्वादशशतदक्षिणया प्रधानार्थं सत्यप्युपक्रमादारभ्याऽसमाप्तेरनुवृत्तेति तन्मध्यवर्तिनस्तामेवोपजीवन्तो दीक्षणीयादिविषयश्चोदकप्राप्तामपि स्वार्थामानतिं न प्रयुञ्जत इति न कार्यमन्वाहार्यदानमिति प्रसङ्गसिद्धिः।

### ऐष्टिकेषु शेषभक्षस्य संस्कारार्थतया कर्तव्यत्वाधिकरणम् (12-1-17)

In earlier adhikaraṇa संस्कारार्थत्व of शेषभक्ष by यजमान was stated. Here, संस्कारार्थत्व of शेषभक्ष by ऋत्विक्s is discussed.

The statement शेषम् भक्षयेत् prescribes शेषभक्ष for ऋत्विक्s.

प्रकृतौ ''शेषान् भक्षयेत्'' इति विहितम्। तदृत्विजां शेषभक्षणं दीक्षणीयादिषु चोदकप्राप्तं कार्यं, उत न कार्यमिति **सन्देहे,**

Pūrvapakṣa : states that शेषभक्ष is meant to secure the service of priest. This is already done by प्रधान दक्षिणा. Hence, there is no need of शेषभक्ष.

तदृत्विजामानत्यर्थं, न प्रतिपत्त्यर्थम्। उपयुक्तसंस्कारार्थत्वकल्पनादप्यपेक्षिताऽनत्यर्थत्वस्यौचित्यात्। अतः प्रधानदक्षिणयैवाऽनतेः कृतत्वान्न तद्भक्षणं चोदकप्राप्तमपि कार्यमिति **प्राप्ते**

Siddhānta : points out that शेषभक्ष is प्रतिपत्त्यर्थ but not आनत्यर्थ. Hence, it has to be observed.

**सिद्धान्तः**, ''यजमानपञ्चमा इडां भक्षयन्ति'' इति यजमानभक्षविधाविवात्रापि ''शेषान् भक्षयेत्'' इति द्वितीयाश्रवणात्प्रतिपत्त्यर्थतैव युक्तेति तदपि भक्षणं कार्यम्। अन्यथा प्रतिपत्तिलोपापत्तेरिति।

### ऐष्टिकेषु होतुः वरण सद्भावाधिकरणम् (12-1-18)

At प्रकृति there is होतृवरण. The question is raised here whether there is होतृवरण at सोमाङ्ग दीक्षणीया.

प्रकृतौ होतुर्वरणं श्रुतम् ''अग्निर्देवो होता देवानयक्षत्'' इति। तच्च सोमाङ्गदीक्षणीयादीष्टिषु चोदकप्राप्तं कर्तव्यं, न वेति **सन्देहे,**

Pūrvapakṣa : states that होतृवरण at सोमयाग serves the purpose of securing the services of होता. Hence, no separate होतृवरण is necessary at दीक्षणीया etc अङ्गयागs also.

पूर्वोक्तदिशा शेषभक्षणस्य कर्तव्यत्वेऽपि न होतृवरणस्य कर्तव्यता । तस्य होत्रानित्यर्थत्वात् । तदानतेश्च ''अग्निर्होता । स मे होता । होतस्त्वं होतासि इति होतारं वृणीते'' इत्युक्तसौमिकहोतृवरणेनैव प्रसङ्गात्सिद्धेर्न प्राकृतं होतृवरणं कार्यमिति **प्राप्ते**

Siddhānta : होतृ वरण is अदृष्टार्थ hence it has to be made at दीक्षणीया etc अङ्गयागs also.

**सिद्धान्तः**, कर्मणि प्रवृत्ते होतरि क्रियमाणमिदं वरणं न दृष्टार्थं, किन्त्वदृष्टार्थम् । अतो दीक्षणीयादिष्वपीदं होतृवरणं कार्यमिति ।

### **आतिभ्यायां बर्हिषः प्रतिकर्म प्रोक्षणाभावाधिकरणम्** (12-1-19)

The statement यदातिथ्यायां बर्हिः तदुपसदां तदग्नीषोमीयस्य informs that the बर्हि प्रोक्षण, अग्राणां अपपातन, मध्यानां उपयोजन etc धर्मs are prescribed. Here, the question is raised whether these धर्मs are to be seperately observed for उपसद् and अग्नीषोमीय or observing these at आतिथ्या serves the purpose of the three.

चतुर्थस्य द्वितीयपादान्ते **विधेः कर्मापवर्गित्वात्** इत्यत्र ''यदातिथ्यायां बर्हिस्तदुपसदां तदग्नी-षोमीयस्य'' इति बर्हिरुपादानं त्रितयार्थमित्युक्तम् । एवं त्रितयार्थेनोपात्ते बर्हिषि प्रोक्षणमग्राणामपपातनं मध्यानामुपयाजनं मूलानामवसेचनमित्येवमुक्ताः प्रोक्षणादयो धर्माः किमुपसदग्नीषोमीययोरर्थे भेदेन बर्हिषि कार्याः, उताऽतिथ्यार्थे कृता एवोपसदग्नीषोमीययोरर्थेऽपि प्रसज्यन्त इति **सन्देहे,**

Pūrvapakṣa : states that the three are different प्रयोगs. Hence, these have to be seperately observed for each of the three.

त्रयाणां भिन्नभिन्नप्रयोगत्वेनैकप्रयोगमध्यपाताभावान्न प्रसङ्गादन्ययोर्धर्मसिद्धिः । न च प्रयाजा-दीनामेव तन्त्रत्वम् । प्रयाजादीनामगृह्यमाणविशेषत्वेन तन्त्रत्वेऽपि प्रकृते त्वातिथ्येष्टिसन्निधानेन तदर्थमेते धर्मा इति गृह्यमाणविशेषत्वाद्धोतृवरणवद्बर्हिर्धर्मा अपि प्रत्येकं **कार्या इति प्राप्तम् ।**



Siddhānta : points out that though there is प्रयोगभेद. These धर्मs are meant for बर्हि which will be utilised for the three. Hence, these धर्मs need not be observed seperately at each याग.

**सिद्धान्तस्तु,** प्रयोगभेदेनैकतन्त्रमध्येऽन्ययोः पाताभावेऽपि बर्हिर्द्वारकलवनादिसंस्काराय यदर्थं बर्हिरुपादीयते तदुपकारका भवन्ति । प्रकृते च बर्हिस्सर्वार्थमुपादीयत इति सर्वोपकारका भवन्तीति सकृदेव कर्तव्या इति ।

### **आतिथ्यायां स्तरणमन्त्रस्यावृत्त्यधिकरणम्** (12-1-20)

Here, the question is raised whether the recitation of स्तरणमन्त्र at the time of बर्हिस्तरण on वेदी be repeated thrice, or the recitation once only is sufficient.

पूर्वोक्तमातिथ्यात्रितयसाधारणं बर्हिरातिथ्यार्थं त्रितये प्रसज्यते, किं वाग्नीषोमीयार्थेनावर्तनीया इति **सन्देहे,**

Pūrvapakṣa : states that just as प्रोक्षण etc. धर्मs are observed only once, स्तरणमन्त्र also has to be recited once only.

पूर्वत्र प्रोक्षाणादिवत् स्तरणमन्त्रोऽपि सकृदेव प्रयोज्यः । नावर्तनीयः । सर्वार्थत्वाद्बर्हिष इति **प्राप्ते**

Siddhānta : points out that स्तरण is not meant for बर्हि. It is वेदिसंस्कार. Its purpose is to facilitate the हविरासादन on the वेदी. Hence, स्तरण in each case is different. Therefore, स्तरणमन्त्र has to be repeated.

**सिद्धान्तः**, स्यादेवं यदि प्रोक्षणादिवत्स्तरणं बर्हिरर्थे स्यात् । तदा तदङ्गमन्त्रोऽपि तदर्थः सन्नावर्तेत । न चैवम् । किन्तु ''बर्हिषा वेदिं स्तृणाति'' इति द्वितीयानिर्देशात् ''वेद्यां हविरासादयति'' इत्युक्तहविरासादनरूपप्रयोजनवत्त्वाच्च वेदिप्रदेशसंस्कारार्थं स्तरणं च भिन्नमिति तदङ्गमन्त्रोऽप्या-वर्तनीय इति नात्र प्रसङ्गः ।

### **बर्हिषः देशान्तरनयने सन्नहनहरणमन्त्रयोः अप्रयोगाधिकरणम्** (12-1-21)

बर्हि is placed in प्राग्वंश for the purpose of all. From that it is brought to उत्तरवेदि for placing अग्नीषोमीयपशु आहुतिस्. For gathering the बर्हि and bringing two मन्त्रs viz. संनहनमन्त्र and हरणमन्त्र are prescribed. Here, the question is

Pūrvapakṣa : states that होतृवरण at सोमयाग serves the purpose of securing the services of होता. Hence, no separate होतृवरण is necessary at दीक्षणीया etc अङ्गयागs also.

पूर्वोक्तदिशा शेषभक्षणस्य कर्तव्यत्वेऽपि न होतृवरणस्य कर्तव्यता । तस्य होत्रानित्यर्थत्वात् । तदानतेश्च ''अग्निर्होता । स मे होता । होतस्त्वं होतासि इति होतारं वृणीते'' इत्युक्तसौमिकहोतृवरणेनैव प्रसङ्गात्सिद्धेर्न प्राकृतं होतृवरणं कार्यमिति **प्राप्ते**

Siddhānta : होतृ वरण is अदृष्टार्थ hence it has to be made at दीक्षणीया etc अङ्गयागs also.

**सिद्धान्तः**, कर्मणि प्रवृत्ते होतरि क्रियमाणमिदं वरणं न दृष्टार्थं, किन्त्वदृष्टार्थम् । अतो दीक्षणीयादिष्वपीदं होतृवरणं कार्यमिति ।

**आतिथ्यायां बर्हिषः प्रतिकर्म प्रोक्षणाभावाधिकरणम्** (12-1-19)

The statement यदातिथ्यायां बर्हिः तदुपसदां तदग्नीषोमीयस्य informs that the बर्हि प्रोक्षण, अग्राणां अपपातन, मध्यानां उपयोजन etc धर्मs are prescribed. Here, the question is raised whether these धर्मs are to be seperately observed for उपसद् and अग्नीषोमीय or observing these at आतिथ्या serves the purpose of the three.

चतुर्थस्य द्वितीयपादान्ते **विधेः कर्मापवर्गित्वात्** इत्यत्र ''यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य'' इति बर्हिरुपादानं त्रितयार्थमित्युक्तम् । एवं त्रितयार्थेनोपात्ते बर्हिषि प्रोक्षणमग्राणामपपातनं मध्यानामुपयाजनं मूलानामवसेचनमित्येवमुक्ताः प्रोक्षणादयो धर्माः किमुपसदग्नीषोमीययोरर्थे भेदेन बर्हिषि कार्याः, उताऽतिथ्यार्थे कृता एवोपसदग्नीषोमीययोरर्थेऽपि प्रसज्यन्त इति **सन्देहे**,

Pūrvapakṣa : states that the three are different प्रयोगs. Hence, these have to be seperately observed for each of the three.

त्रयाणां भिन्नभिन्नप्रयोगत्वेनैकप्रयोगमध्यपाताभावान्न प्रसङ्गादन्ययोर्धर्मसिद्धिः । न च प्रयाजादीनामेव तन्त्रत्वम् । प्रयाजादीनामगृह्यमाणविशेषत्वेन तन्त्रत्वेऽपि प्रकृते त्वातिथ्येष्टिसन्निधानेन तदर्थमेते धर्मा इति गृह्यमाणविशेषत्वाद्धोतृवरणवद्बर्हिर्धर्मा अपि प्रत्येकं **कार्या इति प्राप्तम्** ।



Siddhānta : points out that though there is प्रयोगभेद. These धर्मs are meant for बर्हि which will be utilised for the three. Hence, these धर्मs need not be observed seperately at each याग.

**सिद्धान्तस्तु**, प्रयोगभेदेनैकतन्त्रमध्येऽन्ययोः पाताभावेऽपि बर्हिर्द्वारकलवनादिसंस्काराय यदर्थं बर्हिरुपादीयते तदुपकारका भवन्ति । प्रकृते च बर्हिस्सर्वार्थमुपादीयत इति सर्वोपकारका भवन्तीति सकृदेव कर्तव्या इति ।

**आतिथ्यायां स्तरणमन्त्रस्यावृत्त्यधिकरणम्** (12-1-20)

Here, the question is raised whether the recitation of स्तरणमन्त्र at the time of बर्हिस्तरण on वेदी be repeated thrice, or the recitation once only is sufficient.

पूर्वोक्तमातिथ्यात्रितयसाधारणं बर्हिरातिथ्यार्थं त्रितये प्रसज्यते, किं वाग्नीषोमीयार्थेनावर्तनीया इति **सन्देहे**,

Pūrvapakṣa : states that just as प्रोक्षण etc. धर्मs are observed only once, स्तरणमन्त्र also has to be recited once only.

पूर्वत्र प्रोक्षाणादिवत् स्तरणमन्त्रोऽपि सकृदेव प्रयोज्यः । नावर्तनीयः । सर्वार्थत्वाद्बर्हिष इति **प्राप्ते**

Siddhānta : points out that स्तरण is not meant for बर्हि. It is वेदिसंस्कार. Its purpose is to facilitate the हविरासादन on the वेदी. Hence, स्तरण in each case is different. Therefore, स्तरणमन्त्र has to be repeated.

**सिद्धान्तः**, स्यादेवं यदि प्रोक्षणादिवत्स्तरणं बर्हिरर्थे स्यात् । तदा तदङ्गमन्त्रोऽपि तदर्थः सन्नावर्तेत । न चैवम् । किन्तु ''बर्हिषा वेदिं स्तृणाति'' इति द्वितीयानिर्देशात् ''वेद्यां हविरासादयति'' इत्युक्तहविरासादनरूपप्रयोजनवत्त्वाच्च वेदिप्रदेशसंस्कारार्थं स्तरणं च भिन्नमिति तदङ्गमन्त्रोऽप्यावर्तनीय इति नात्र प्रसङ्गः ।

**बर्हिषः देशान्तरनयने सन्नहनहरणमन्त्रयोः अप्रयोगाधिकरणम्** (12-1-21)

बर्हि is placed in प्राग्वंश for the purpose of all. From that it is brought to उत्तरवेदि for placing अग्नीषोमीयपशु आहुतिस्. For gathering the बर्हि and bringing two मन्त्रs viz. संनहनमन्त्र and हरणमन्त्र are prescribed. Here, the question is

raised whether these two मन्त्रs are to be repeated while gathering and bringing them to अग्नीषोमीय or the recitation of these at the time of bringing बर्हि for आतिथ्या the purpose of other two is served.

सर्वार्थं बर्हिरेव प्राग्वंशे स्तीर्णम् । पुनस्सन्नह्य हृत्वोत्तरवेदिसमीपेऽग्नीषोमीयपशुहविरासादनार्थं स्तीर्यते । प्रकृतश्च सन्नहनमन्त्रः ''पूषा ते ग्रन्थिं ग्रथ्नातु'' इति । तथा ''बृहस्पतेर्मूर्ध्ना हरामि'' इति हरणमन्त्रः । तौ किं सन्नहने हरणे च पुनर्वक्तव्यौ, उतातिथ्यार्थसन्नहनहरणकाले सकृदेव प्रयोज्याविति **सन्देहे,**

Pūrvapakṣa : states that since, gathering and bringing the बर्हि is repeated the सन्नहन and हरणमन्त्रs also should be repeated.

सन्नहनहरणयोरावृत्तत्वात्तदङ्गमन्त्रावप्यावर्तनीयाविति **प्राप्तम् ।**

Siddhānta : points out that these मन्त्रs are prescribed for the recitation at the time of gathering and bringing the बर्हि from the place where it is cut to the place of यज्ञ but not from one place to another in यज्ञदेश itself. Hence, within यज्ञदेश these are to be brought without reciting मन्त्र.

**सिद्धान्तस्तु,** दर्शपूर्णमासरूपप्रकृतौ हि लूनस्य बर्हिषो लवनदेशाद्यज्ञदेशं नेतुं यत्सन्नहनं यच्च हरणं तदर्थावितौ मन्त्रौ । न तु यज्ञदेशं प्रापितस्य बर्हिषो वेदिप्रापणार्थम् । एते च सन्नहनहरणे प्राग्वंशे स्तीर्णस्य बर्हिषोऽन्यत्र स्तरणार्थे । अतो न प्राकृतसन्नहनहरणस्थानापन्ने । भिन्नकार्यत्वात् । प्राकृतकार्यार्थौ मन्त्रावप्राकृतकार्यार्थयोस्सन्नहनहरणयोर्न प्राप्नुत इत्यमन्त्रके एवैते सन्नहनहरणे यथा प्राकृतादेव गार्हपत्यादाहवनीयं नीयमाने बर्हिषि न मन्त्रः । यथा वा प्रकृतावेव प्रमादाद्ग्रन्थिशैथिल्ये सति पुनस्सन्नह्यमाने बर्हिषि न मन्त्रस्तथेति ।

इति द्वादशाध्यायस्य प्रथमः पादः

## द्वादशाध्यायस्य द्वितीयः पादः

In the earlier section, the topic whether the धर्मs that are for प्रधान are to be utilised for अङ्गs also or not is discussed. In this section, whether the धर्मs that are not particularly for प्रधान could be utilised for others will be discussed.



पूर्वन्याये बर्हिस्संस्काराणां साधारण्यासाधारण्यचिन्तनात्तत्प्रसङ्गेनात्र नयेऽग्नीनां साधारण्यासाधारण्ये, चिन्त्येते । अत एवास्य पादस्य पूर्वपादानन्तरतेत्याहुः ।

### विहाराग्नेः वैदिक कर्ममात्रार्थताधिकरणम् (12-2-1)

In this adhikaraṇa the question whether गार्हपत्य etc fire are meant only for vedic rituals such as पुरोडाशहोम, हविःश्रपण etc. or लौकिक items such as पार्वणस्थालीपाक etc. also.

गार्हपत्यादिकम् । किं पार्वणस्थालीपाकपचनप्रकाशनादीनां वैदिकानां च पुरोडाशहोमहविःश्रवणादीनां सर्वेषामग्नि कार्याणां साधकं सत्सर्वाङ्गम्, उत वैदिकानामेव कर्मणामिति **सन्देहे,**

Pūrvapakṣa : argues that the अग्नि that is prepared by आधान is capable of serving the purpose of both लौकिक and वैदिक items. Hence, it is meant for all.

आधानार्जितानामग्नीनां प्रयोजनाकांक्षायां सामर्थ्याख्यलिङ्गरूपप्रमाणेन यच्चलौकिकं वैदिकं वाऽग्निना शक्यते कर्तुं, तत्सर्वमेभिः कार्यमित्यवगमात्सर्वार्थं गार्हपत्यादिकमिति **प्राप्तम् ।**

Siddhānta : points out that the अग्नि prepared by आधान is to be utilised for vedic programmes as per the statements 'गार्हपत्ये हवींषि श्रपयन्ति' 'दक्षिणाग्नौ अन्वाहार्यं पचति' 'आहवनीये जुहोति.' Hence, this अग्नि is not meant for लौकिक items also.

**सिद्धान्तस्तु,** आधानेनार्जितानामग्नीनां प्रयोजनाकांक्षायां ''गार्हपत्ये हवींषि श्रपयन्ति'' ''दक्षिणाग्नावन्वाहार्यं पचति,'' ''यदाहवनीये जुहोति'' इति प्रत्यक्षवचननिर्दिष्टैरेव कार्यैराकांक्षाशान्तेर्न सामर्थ्यरूपलिङ्गमात्रेण सर्वार्थता कल्पयितुं युक्ता ।

### सवनीयपशौ पशुपुरोडाशस्य कर्तव्यताधिकररम् (12-2-2)

At ज्योतिष्टोम, पशुपुरोडाश is prescribed for अग्नीषोमीयपशु. Here, the question is raised whether this has to be observed for सवनीयपशु or not.

ज्योतिष्टोमे अग्नीषोमीयपशोश्चोदकप्राप्तः पशुपुरोडाशः सवनीये पशौ कर्तव्यः, न वेति **सन्देहे,**

Pūrvapakṣa : argues that as per वाक्यशेष both पशुपुरोडाश and सवनीयपशुपुरोडाश are meant for छिद्रापिधान. Hence, सवनीयपशुपुरोडाश has to be observed and पशुपुरोडाश be set aside.

पूर्वत्र गार्हपत्यादयो लौकिकपाक इव पशुपुरोडाशोऽपि न सवनीयपशौ कर्तव्य इति **प्राप्तम्** । कुतः? पशुपुरोडाशस्य सवनीयपशुपुरोडाशानां चार्थवादरूपवाक्यविशेषवशेन छिद्रापिधानरूपैकार्थ्यात् ।

Siddhānta : points out that छिद्रापिधानवाक्य is अर्थवाद. It does not provide any common purpose for सवनीयपुरोडाश and पशुपुरोडाश. Hence, पशुपुरोडाश has to be observed.

**सिद्धान्तस्तु,** छिद्रापिधानवचनं छिद्रापिधानार्थं चेत्तदा सवनीयपुरोडाशैः कृतकार्यत्वात् पशुपुरोडाशो न प्रवर्तेत । तद्धि वचनं न तत्परम् । पुरोडाशयागेन छिद्रापिधानादर्शनेन प्रत्यक्षविरोधात् । किन्तु पुरोडाशयाजिस्तावकतयाऽर्थवादमात्रपरम् ।

**सवनीये पुरोडाशे हविष्कृदाह्वानस्य अभावाधिकरणम्** (12-2-3)

In this adhikaraṇa the question whether there is हविष्कृदाह्वान in सवनीयपुरोडाश or not is raised.

सवनीयपुरोडाशे हविष्कृदाह्वानमस्ति, उत नेति **सन्देहे,**

Pūrvapakṣa : states that as there is no अवधातकाल at पशु, it cannot be brought by way of प्रसङ्ग. Hence, it is not to be observed.

पशाववघातकालाभावेन तत्राह्वानप्रसक्तेरभावेन तत्प्रसङ्गसिद्धत्वाभावाचोदकप्राप्तमाह्वानं कार्यमेवेति **प्राप्ते**

Siddhānta : पशुयाग is सान्नाय्यविकार, हविष्कृदाह्वान which is अङ्ग of सान्नाय्य has to be observed. It is true that there is no अवघात here, but पात्रप्रोक्षणकाल associated by it may be taken for its implimentation.

In connection with this adhikaraṇa the following points may be noted.

i) The word हविष्कृत् means यजमानपत्नी.
ii) The word अवघ्नन् refers to अवघातकाल.
iii) 'हविष्कृदेहि' is the मन्त्र for आह्वान.

**सिद्धान्तः,** सान्नाय्यविकारत्वात्तदङ्गमाह्वानमपि पशौ प्राप्नोति । पशाववघातकालाभावेऽपि तदुपलक्षितस्य पात्रप्रोक्षणानन्तरकालस्यानपायात् । तस्मिन् काले तदाह्वानसम्भवेऽपि न पश्वर्थतया



तदीयपात्रप्रोक्षणानन्तरमाहूता हविष्कृत्तत्प्रयोगमध्यपातिनां सवनीयपुरोडाशादीनां प्रसङ्गसिद्धेर्न पृथगाह्वातव्येति ।

**तृतीये सवने हविष्कृदाह्वानस्य अपुनरावृत्त्यधिकरणम्** (12-2-4)

At तृतीयसवन of सोम, सवनीयपुरोडाशs are prescribed. These are observed after cooking the अवयवs of सवनीयपशु. Here, the question whether हविष्कृदाह्वान be made or not is raised.

सोमे तृतीयसवने ''सौम्यश्चरुराश्विनश्च द्विकपालः'' इत्यादिना सवनीयपुरोडाशाः श्रुताः । ते च सवनीयपश्ववयवपाकानन्तरं क्रियन्ते । तेषु किं हविष्कृदाह्वानं कार्यम्, उत नेति **सन्देहे,**

Pūrvapakṣa : argues that the role of यजमानपत्नी is the preparation of हविस्. This is indicated by her designation हविष्कृत् when the पशु is cooked this role is over, later when the preparation of पुरोडाश is undertaken हविष्कृदाह्वान has to be made again.

पूर्वत्र पश्वर्थाह्वानस्य प्रातस्सवनिकपुरोडाशोपकारकत्वेऽपि न तार्तीयसवनीयपुरोडाशोपकारकत्वम् । हविष्कृदिति समाख्यया पत्न्याः हविष्करणमेव कार्यम् । अतः पशौ पक्के सति कृतकार्यत्वान्निवर्तेत । ततः परेषु पुरोडाशेषु पुनस्तस्याः सहायार्थमाह्वानं कार्यमिति ।

Siddhānta : points out that हविष्कृन् i.e. यजमानपत्नी is invited as 'हविष्कदेहि' not only for अवघात but for all other items. Hence, no separate आह्वान is necessary.

**सिद्धान्तस्तु,** ''हविष्कृदेहीति त्रिरवघ्नन्'' इत्यादिवचनबलात्सहायार्थमपेक्षितत्वाच्चावघातकाले समाहूतापि सा नावघातार्था । किन्तु हविष्कृदिति समाख्यावशाद्धविष्करणमात्रार्थेति कल्प्यते । तथा समाख्यातो बलवत्सामर्थ्यरूपलिङ्गाद्यत्र यत्र तथा सा शक्यते तत्तत्सर्वार्थेति कल्प्यते । न हविष्करणमात्रार्था ।

**निशियज्ञे अभावस्य अतन्त्रप्रयोगाधिकरणम्** (12-2-5)

In काम्येष्टिकाण्ड. The statement 'अमावास्यायां निशि यजेत' enjoins निशियाग. Here, the question is raised whether दर्शिकाङ्गs are to be observed here or seperate अङ्गs are to be envisaged.

काम्येष्टिकाण्डे ''अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यो रक्षोभ्यो बिभीयात्'' इति विधाय श्रूयते ''अमावास्यायां निशि यजेत'' इति। तत्र निशि यज्ञे पृथक्तन्त्रं कर्तव्यम्, उत दार्शिकमेवाङ्गतन्त्रं प्रसज्यत इति **सन्देहे,**

Pūrvapakṣa : argues that in the statement 'अमावास्यायां निशि' the word अमावास्या does not refer to दर्शकर्म. It refers to अमावास्याकाल. Hence, the अङ्गs of दर्शकर्म are not applicable here. Consequently separate अङ्गs have to be envisaged. काम्येष्टकाण्डप्रकरण is also a distinct प्रकरण.

''अमावास्यायां निशि'' इत्यत्र अमावास्याशब्दो न दर्शाख्यकर्मवाची। येन दर्शे प्रवृत्ते निशीष्टेर्विधानात्तत्तन्त्रोपजीवितया न भेदेन प्रयोगस्स्यात्। किन्तु ''अमावास्याया अपराह्णे पिंड-पितृयज्ञेन चरन्ति'' इत्यत्रापराह्णसामानाधिकरण्यमिवेह निशिपदसामानाधिकरण्यात्कालवाची। किञ्च काले मुख्यः। कर्मणि तत्सम्बन्धहेतुको लाक्षणिकः। अतस्तेन दर्शकर्मणोऽनुपस्थितेः काम्येष्टि-काण्डपठितत्वेन भिन्नप्रकरणस्थत्वेन प्रकरणेनाप्यनुपस्थितेस्तत्तन्त्रोपजीवनाभावात्स्वाङ्गयुक्तैव। निशि विधानेन सवनीयपुरोडाशेषु हविष्कृतः प्रसक्तावपीह प्रसङ्गाभावाद्भेदेनाङ्गप्रयोगः कार्य इति **प्राप्तम्।**

Siddhānta : points out that though the word आमावास्या does not refer to कर्म here, the very fact that this याग has to be performed at अमावास्याकाल becomes the ground for observing the अङ्गs of दर्श. Hence, seperate अङ्गs need not be observed.

**सिद्धान्तस्तु,** अमावास्याशब्दस्य कालवाचित्वेऽपि वाक्येन प्रकरणेन वा कर्मोपस्थितेरभावेऽपि दर्शप्रयोगप्रवृत्तिमत्येव काले विधीयमाना निशीष्टिः फलतस्तत्तन्त्रमध्यविधिलाभाद्दार्शिककर्मैव तन्त्रमुपजीव्य निराकांक्षा सती न स्वकीयमङ्गतन्त्रं प्रयोक्तुमीष्टे। प्रयोजनाभावात्।

### इध्मबर्हिरधिकरणम् (12-2-6)

In this adhikaraṇa, it is stated that the above position that the अङ्गs of दर्श are to be applied to निशि इष्टि does not apply to इध्म and बर्हि. These have to be separately observed.

अत्राह। किमेष एवोत्सर्गः। सर्वममावास्यातन्त्रनिशीष्ट्यर्थं साधयतीति। न खल्विध्मबर्हिर्न



साधयेत्। कुतः? वैगुण्यात्। इध्मो नामाग्निसमिन्धनार्थः। स च प्रतिपद्याहितः। अमावास्यायां निशि वर्तमानस्य निशियज्ञस्याग्निसमिन्धनं साधयेत्। बर्हिरपि वेदिस्तरणार्थम्। ते यदि प्रसज्येतांविगुणो निशि यज्ञः स्यात्। तस्माद्भेदेन ते कर्तव्ये।

### विकृतिषु आरम्भणीयानुष्ठानाधिकरणम् (12-2-7)

In this adhikaraṇa the question is raised whether आरम्भणीयेष्टि which is performed for दर्शपूर्णमास be also performed at सौर्य etc विकृति or not.

सौर्यादिविकृतिषु दार्शपौर्णमासिकी अन्वारम्भणीयेष्टिः कार्या, न वेति **सन्देहे,**

Pūrvapakṣa : argues that आरम्भणीयेष्टि is यजमानसंस्कार. Even at प्रकृति it is performed at the first प्रयोग only. This संस्कार continues even at the विकृति stage. Hence, आरम्भणीयेष्टि need not be performed again at the time of विकृति.

सौर्यादिविकृतीष्टिषु इष्टिरन्वारम्भणीया न कार्या। कुतः? प्रकृतौ हि सकृदेवेयमिष्टिः कार्या। न प्रतिप्रयोगमावर्तनीयेति नवमाद्यपादे **'इष्ट्यावृत्तौ प्रयाजवदावर्तेताऽऽरम्भणीया'** इत्यत्रोक्तदिशा ''आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः'' इति ज्ञानजन्तेनारम्भकर्तुः संस्कार-कत्वादारम्भणीयायास्संस्कारस्य यावज्जीवमनुवर्तमानत्वात्प्रकृत्यर्थं सकृत्कृतस्य संस्कारस्य विकृतिष्वपि प्रसङ्गसम्भवादिति **प्राप्तम्।**

Siddhānta : points out that at प्रकृति, आरम्भणीयेष्टि is not repeated at second प्रयोग not on the ground that the संस्कार is continued but on the ground it is not प्रथमप्रवृत्ति. However, in the case of विकृति there is प्रथमप्रवृत्ति again. Hence, आरम्भणीयेष्टि has to be performed at the commencement of विकृति.

**सिद्धान्तस्तु,** प्रकृतावारम्भणीयया कृतः संस्कारः कर्तरि यावज्जीवमनुवर्तत इति नावृत्त्यभावः। किन्तु आद्या प्रवृत्तिरारम्भः। सा चैकस्य कर्मण एकैव। प्रतिपर्व दर्शपूर्णमासयोः प्रयोगस्यैव पुनः पुनरारम्भः। न कर्मणः। कर्मणस्तु सकृदेवारम्भः। अतस्सकृदेवारम्भणीयायाः कर्माङ्गत्वात्तस्या-स्तत्कर्मापवर्गे तदर्थस्संस्कारोऽपि निवृत्त एव। कार्यनाश्यत्वाद्धर्मस्य। विकृतिषु त्वारम्भभेदाचोदक-प्राप्ताऽऽरम्भणीया कार्यैवेति न प्रसङ्गः।

### प्रधानानां धर्मविरोधे बहूनां धर्माणामनुष्ठानाधिकरणम् (12-2-8)

At पञ्चदशरात्र on the first day आग्नेयी सुब्रह्मण्या has to be observed. On next three day एन्द्री सुब्रह्मण्या has to be observed. On other days ऐन्द्री has to be observed. In this context it is stated that by observing one of them at the time of उपसद् the purpose of observing these on all days is served by प्रसङ्ग. Here, the question is raised whether one of them is एन्द्री only or either आग्नेयी or ऐन्द्री.

पञ्चदशरात्रे प्रथममहः एकाहाग्निष्टुन्नामकम् । ततः पराणि त्रीण्यहानि ''ज्योतिर्गौरायुः'' इत्येतन्नामकानि । परिशिष्टान्येकादशाहानि द्वादशाहिकानि । तत्र प्रथमेऽहन्यग्निष्टुन्नामनिमिताऽऽग्नेयी सुब्रह्मण्या प्राप्ता । ज्योतिरादिनामभिश्चैकाहानां ज्योतिरादिनामकयागानां धर्मभूतैन्द्री सुब्रह्मण्या प्राप्ता । परिशिष्टेष्वहस्सु द्वादशाहधर्मभूतैन्द्री चोदकप्राप्ता । तत्र **सुब्रह्मण्या तु तन्त्रं स्यादन्यकालत्वा-द्दीक्षावदिति** पूर्वाध्यायतृतीयपादीयदशमाधिकरणे सुब्रह्मण्या उपसत्कालीनेति तन्त्रमित्युक्तत्वा-दैन्द्राग्नेययोर्मध्ये उपसत्काले सकृदन्यतरोक्त्यैव प्रसङ्गात्सर्वेष्वहस्सूपकारसिद्धेरेकैव सकृदुपसत्काले वाच्या । सा किमाग्नेयी ऐन्द्री वेत्यनियमः, उत ऐन्द्र्यैवेति नियम इति **सन्देहे,**

Pūrvapakṣin puts the Pūrvapakṣa in two ways.

i) If एन्द्री is observed, then, आग्नेयी stated for the first day is given up. On the other hand if आग्नेयी is observed एन्द्री is given up on other day. Therefore, the choice has to be left without any specification.

ii) Since, the आग्नेयी is stated on the first day it has to be chosen for observation on all days.

नियामकाभावादाग्नेय्या ग्रहणे द्वितीयाद्यहानां धर्मवैगुण्यम् । ऐन्द्र्या ग्रहणे प्रथमाहस्य वैगुण्यमिति वैगुण्याविशेषादनियम इति वा, प्राथमिकत्वादग्निष्टुद्धर्मभूताग्नेय्येवोपादेयेति वा । एवञ्च पूर्वत्रारम्भणीयाया विकृतिष्वप्रसङ्गेऽपि मुख्यधर्माणां पश्चात्तनेषु प्रसङ्गः स्यादेवेति **प्राप्ते**

Siddhānta : points out that when there is choice between one that has larger scope and another that has lesser scope that which has larger scope has to be preferred. In the present case आग्नेयी is prescribed only for one day while ऐन्द्री for many. Therefore ऐन्द्री has to be preferred to आग्नेयी.



**सिद्धान्तः,** प्रयोगापरपर्यायभावनाविधिर्हि सर्वाण्यङ्गान्युपसङ्गृह्णन्नवश्यंभाविनि कस्यचिद्वैगुण्ये ''त्यजेदेकं कुलस्यार्थे'' इति न्यायेन भूयसां साद्गुण्यायाल्पस्य प्रथमाहर्मात्रस्यैव वैगुण्यमङ्गीकरोति । न भूयसामित्यैन्द्र्यैव स्यान्न त्वाग्नेयी इति ।

### वार्तिकोक्तं वर्णान्तरम्

Vārtika states the pūrvapakṣa and siddhānta of this adhikaraṇa taking another subject.

In काम्येष्टिकाण्ड, offering of अष्टाकपालपुरोडाश to अग्नि, एकादशकपाल to इन्द्र, दधि, मधु, घृत, आपः, धानाः to प्रजापति is stated. At these seven यागs, while offering दधि, मधु, घृत and उदक as per the statement 'वार्त्रघ्नी पौर्णमास्यामनूच्येते' वार्त्रघ्नी आज्यभागमन्त्र is prescribed. While offering ऐन्द्रपुरोडाश, प्राजापत्यदधि as per the statement 'वृधन्वती अमावास्यायाम्' वृधन्वती आज्यभागमन्त्र is prescribed. Here the question is raised whether the आज्यभागs be observed by reciting अमावास्यामन्त्र or पौर्णमासिकमन्त्र or by any one of them.

काम्येष्टिकाण्डे श्रूयते ''अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाश-मेकादशकपालं दधि मधु घृतमापो धानास्तत्सृष्टं प्राजापत्यं पशुकामः''इत्याग्नेयैन्द्रे प्राजापत्यानि पञ्चेति सप्त हवींषि । चैतेषु सप्तसु यागेषु सह प्रक्रान्तेषु पौर्णमासीविकाराणां मधुघृतोदकानां ''वार्त्रघ्नी पौर्णमास्यामनूच्येते'' इति वचनाद्वार्त्रघ्नावाज्यभागमन्त्रौ प्राप्तौ । ऐन्द्रपुरोडाशप्राजापत्यदध्यो-र्द्वयोर्दर्शविकारयोः ''वृधन्वती अमावास्यायाम्'' इति वचनेन वृधन्वत्यौ मन्त्रवाज्यभागस्य प्राप्तौ । तत्र किममावास्यामन्त्राभ्यामाज्यभागौ कार्यौ ? किं वा पौर्णमासिकमन्त्राभ्याम् ? इति **सन्देहे,**

Pūrvapakṣa : states two alternatives.

i) Since, ऐन्द्र, प्राजापत्यदधि are stated first आज्यभागs have to be observed by reciting दर्शमन्त्र i.e. वृधन्वती.

ii) any one of them may be recited.

पूर्ववदनियमः । प्राथमिकत्वादैन्द्रदध्नोः दर्शमन्त्रेणाज्यभागाविति **प्राप्ते**

Siddhānta : On पौर्णमास, मधुघृत उदक etc larger number are offered. Hence, पौर्णमासीमन्त्र i.e. वार्त्रघ्नी, has to be recited.

**सिद्धान्तः**, भूयसां मधुघृतोदकानामनुग्रहाय पौर्णमासिकौ वार्त्रघ्नावेव मन्त्रौ गृहीत्वाऽऽज्यभागौ कार्यौ । ताभ्यामेव च प्रसङ्गसिद्धकार्यत्वाद्दार्शिकौ मन्त्रौ निवर्तेते । न चोभयानुग्रहायाऽऽज्य-भागयोरावृत्त्याऽनुष्ठानमस्त्विति शङ्क्यम् । गुणानुरोधेन प्रधानावृत्तेरयोगादिति ।

### नवमं तुल्यसङ्ख्यायां धर्मविरोधे प्रथमस्यैव धर्मानुष्ठानाधिकरणम् (12-2-9)

In अध्वरेष्टिकल्प, the statements 'आग्नावैष्णवमेकादशकपालं निर्वपेत्' 'सारस्वती-माज्यस्य' occur. Here, दार्शिकधर्मs have to be observed for आग्नावैष्णव and पौर्णमासी for सारस्वती आज्य.

Here, the question is raised whether आज्यभागs have to be observed for these by reciting the दार्शिकमन्त्र i.e. वृधन्वती or पौर्णमासिकमन्त्र i.e. वात्रघ्नी.

अध्वरकल्पेष्टौ ''आग्नावैष्णवमेकादशकपालं निर्वपेदपराह्ले'' ''सरस्वतीमाज्यस्य यजेत'' इति श्रूयते । तत्राग्नावैष्णवस्यौषधद्रव्यकत्वद्विदेवत्यत्वद्वादशकपालत्वरूपधर्मत्रयसामान्यादैन्द्राग्नविकारत्वेन दार्शिकधर्मप्राप्तिः । आज्यस्य तूपांशुयाजविकारत्वात्पौर्णमासिकधर्मा भवन्ति । तत्र किमाज्यभागौ दार्शिकाभ्यां वृधन्वत्त्वाभ्यां द्वाभ्यां मन्त्राभ्यां कार्यौ, उत पौर्णमासिकाभ्यां वार्त्रघ्नीभ्यां कार्याविति **सन्देहे,**

Pūrvapakṣa : In the earlier adhikaraṇa application to larger number was made the ground for preference, here, no such ground is available. Hence, any one of them may be utilised.

पूर्वत्र भूयस्त्वेनैन्द्री सुब्रह्मण्येति नियमेऽपीह द्वयोरपि तुल्यत्वेनैकभूयस्त्वाभावादनियम इति **प्राप्ते,**

Siddhānta : points out that which occurs first has to be preferred. आग्नावैष्णव is ऐन्द्राग्नविकार which occurs first. Hence, the दार्शिकमन्त्र i.e. वृधन्वती has to be recited for आज्यभाग.

मुख्यशब्दितप्रथमस्यैन्द्राग्नस्य स्वधर्मता । जघन्यस्य सारस्वताज्यस्य तु तद्धर्मोपजीविता । मुख्य-स्यासञ्जातविरोधित्वेन प्रथममवगतस्य स्वधर्मत्वस्य त्यागे पूर्वोक्तभूयस्त्वस्य वक्ष्यमाणप्रधानत्वस्य च हेतोरभावाद्वृधन्वन्मन्त्राभ्यामेवाऽऽज्यभागौ कार्याविति **सिद्धान्तः ।**



### अङ्गगुणविरोधे प्रधानगुणस्य प्राबल्याधिकरणम् (12-2-10)

The statements 'य इष्ट्या पशुना सोमेन वा यजेत सो अमावास्यायां पौर्णमास्यां च' state that इष्टि and सोम have to be performed on पर्वकाल.

If दीक्षणीयेष्टि is observed on अमावास्या, the starting of सोम will not be on पर्वकाल. On the other hand if सोम is started on अमावास्या performing दीक्षणीया will not be on पर्वकाल. Hence, the question arises whether सोम be started on पर्वकाल and performing दीक्षा on पर्वकाल be given up or दीक्षा be performed on पर्वकाल and the performance of सोम on पर्वकाल need not be insisted.

दीक्षणीयेष्टेः सोमस्य च ''य इष्ट्या पशुना सोमेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां च वा'' इति वचनेन पर्वकालता प्राप्ता । तत्र ''द्वादशदीक्षास्तिस्र उपसदः षोडशीं प्रसूते'' इति पक्षे सोमस्य षोडशदिनसाध्यत्वेनामावास्यायां दीक्षामुपक्रम्यैकादश्यां समाप्य तिस्र उपसदः कृत्वा ततः षोडशे दिने पौर्णमास्यां सुत्या । क्रतौ द्वयोः पर्वकालतासम्भवे ''एका दीक्षा । तिस्र उपसदः । पञ्चमी प्रसूते'' इति पञ्चाहस्साध्यत्वपक्षे द्वयोः पर्वकालता सम्भवति । तत्पक्षे दीक्षायाः पर्वकालताऽनुग्रहेण सोमस्य पर्वकालता त्याज्या, किं वा विपरीतमिति **सन्देहे,**

Pūrvapakṣa : i) दीक्षणीयेष्टि is important. Hence, it has to be observed on पर्वकाल.

ii) As there is no specific ground to prefer one of them, any one may be observed on पर्वकाल.

विशेषाग्रहादनियम इति वा, पूर्वन्यायेन मुख्यत्वाद्दीक्षणीयेष्टेः पर्वकालतामुपादाय सोमस्य पर्वकालता त्याज्येति **प्राप्ते**

Siddhānta : points out that सोमयाग is प्रधान while दीक्षणीयेष्टि is अङ्ग. The question of eliciting अङ्ग arises only after प्रधान is initiated. Whenever there is a conflict between प्रधानगुण and अङ्गगुण, प्रधानगुण has to be preferred.

**सिद्धान्तः**, प्रधानसोमयागविधिर्हि साक्षात्प्रधानं प्रयुङ्क्ते । पश्चात्तदुपकारकम् । तत्सिद्धये च पश्चात्तज्जनकमिष्टिपर्वकालाद्यङ्गं प्रयुङ्क्ते । तदनन्तरमिष्टयादिरूपाङ्गाङ्गं कालादि प्रयुङ्क्ते । अतः

प्रधानस्याङ्गे दर्शादिकाले स्वात्मना सोमस्य प्रयुक्ते सति तद्विरुद्धदीक्षणीयाद्यङ्गानां पर्वकालं पश्चात्प्रयुक्तं न क्षमत इति प्रधानसुत्याकालमेवानुगृह्य दीक्षणीयाप्रायणीयादीष्टेरग्नीषोमीयपशोश्च वाचनिकोऽपि पर्वकालो बाध्यत।

## परिधौ परिधियूपोभयधर्मानुष्ठानाधिकरणम् (12-2-10)

*As a prelimenary to next adhikaraṇa in this adhikaraṇa it is stated that both परिधिधर्मs and यूपधर्मs have to be observed for परिधि.*

चातुर्मास्येषु ''परिधौ पशुं नियुञ्जीत'' इति श्रुतपरिधेर्व्यर्थत्वात्परिधियूपयोर्द्वयोः कामार्थत्वादाहनीयाग्निपरिधानरूपं परिधिकार्यं, पशुनियोजनरूपयूपकार्यं च कुर्वन्नुभयधर्मा सम्मार्जनादिपरिधिधर्मवान्, परिव्याणादियूपधर्मवांश्च स्यादितीदं सूत्रं प्रधानधर्मानुग्रहवद्यूपधर्मानुग्रहः स्यादित्युत्तराधिकरणमुत्थापयितुम् **'तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात्स्यात्'** इति नवमद्वितीयपादोक्तमेवेह स्मारयितुं प्रवृत्तमिति प्राप्तिसूत्रमात्रमेतदित्याहुः।

## परिधौ विरोधियूपधर्माननुष्ठानाधिकरणम् (12-2-11)

*In the earlier adhikaraṇa, it was stated that both परिधिधर्मs and यूपधर्मs be observed for परिधि.*

*Here, it is made clear that only such यूपधर्मs which are not opposed to परिधि be observed.*

एवं पूर्वसूत्रेण परिधेरुभयधर्मवत्त्वे स्मारिते सत्यविरुद्धोभयधर्मानुष्ठाने विवादाभावे च विरुद्धधर्मेषु किं यूपधर्माः कार्याः, परिधिधर्मा वेति **सन्देहे,**

यूपस्य यागसाधनपशुसम्बन्धाद्यूपधर्माणामन्तरङ्गता । यागसाधनहविस्सम्बन्ध्यग्निसम्बन्धात्परिधेस्तद्धर्माणां च बहिरङ्गता। तस्मात्प्रधानप्रत्यासत्त्या यूपधर्माः कार्या इति **प्राप्तम्।**

**सिद्धान्तस्तु,** चातुर्मास्येषु चोदकेन परिधानरूपत्वकार्यद्वारा प्राप्त एव परिधिर्नियोजनरूपकार्ये ''परिधौ पशुं नियुञ्जीत'' इति विधीयते। स च प्राप्नुवन् स्वकार्यविशिष्ट एव प्राप्नोति। तादृशे च परिधौ वाचनिकेनापि नियोजनरूपकार्येण परिधिधर्माविरुद्धा एव धर्माः प्राप्नुवन्ति । अन्यथा विधेयस्य परिधेरन्यथाभावात्परिधौ पशोर्नियोजनं न कृतं स्यात् । अन्तरङ्गत्वबहिरङ्गत्वकृतविशेषसत्वेऽप्युभयोरङ्गत्वाविशेषेणाङ्गगुणविरोधन्यायानवतारात्। अतो विरोधे परिधिधर्मा इति।



## सवनीयपुरोडाशयोः पशोरेव तन्त्रिताधिकरणम् (12-2-12)

In सोमयाग, सवनीयपशु is performed starting from प्रातःसवन closing at तृतीयसवन. For सवनीय, सवनीयपुरोडाशs are prescribed. For the पुरोडाश of माध्यंदिन and तृतीयसवन प्रसङ्गित्व is clear. In the case of प्रातःसवनिकपुरोडाश and पशु the question is raised whether there is तन्त्र for पुरोडाश and प्रसङ्ग for पशु or तन्त्र for पशु and प्रसङ्ग for पुरोडाश. The expression तन्त्र means साङ्गप्रयोग.

सोमयागे सवनीय इति समाख्यया सवनत्रयार्थतया क्रियमाणः पशुः प्रातस्सवने प्रारभ्य तृतीयसवने समाप्यते। ''वपया प्रातस्सवने चरन्ति। पुरोडाशेन माध्यन्दिने। अङ्गैस्तृतीयसवने'' इति वचनात्। ''अनुसवनं सवनीयाः पुरोडाशा निरूप्यन्ते'' इति प्रतिसवनं सवनीयपुरोडाशा विहिताः। तत्र माध्यन्दिनीयानां तृतीयसवनगतानां च पुरोडाशानां माध्यान्दिनतृतीयसवनयोरेव प्रक्रमात्परिसमाप्तेश्च पशुतन्त्रमध्यपातेन प्रसङ्गित्वं सिद्धमेवेति प्रातस्सवनिकपुरोडाशानां पशोश्च मिथश्चिन्ता। तेषां पशुतन्त्रमध्ये विध्यनिर्णयात्। तत्र किं पुरोडाशास्तन्त्रिणः साङ्गप्रयोगवन्त इति यावत्। पशुस्तु प्रसङ्गी, किं वा पशुरेव तन्त्रवान्। पुरोडाशास्तु प्रसङ्गिण इति **सन्देहे,**

Pūrvapakṣa : states that between उपक्रम and समाप्ति of a कर्म if some other item intervines, then, it is a case of तन्त्र. In respect of the intervening it is प्रसङ्ग. In the present case, since, both are started at the same time, it cannot be decided which is intervening and which is not. Consequently which is तन्त्री and which is प्रसङ्गी cannot be ditermined. Hence, तन्त्रत्व and प्रसङ्गत्व be optionally adopted for both.

यस्य कर्मण उपक्रमावसानयोर्मध्येऽन्यदुपनिपतति स तत्तन्त्रि। मध्यपाति च प्रसङ्गि। प्रकृते च प्रत्यनुवाककाले द्वयोस्समकालमुपक्रमात्कस्योपक्रमसमाप्त्योर्मध्ये कस्य पात इति नावगम्यते। पशोः प्रातस्सवनिकपुरोडाशानां च ये धर्मास्तेषां विरोधे तन्त्रित्वप्रसङ्गित्वयोर्विशेषाग्रहादुभयधर्माणां विकल्पेनानुष्ठानमिति **प्राप्तम्।**

Siddhānta : points out that पशु has to be taken as तन्त्री and पुरोडाश as प्रसङ्गी. Since, वैशेषिकाङ्गs are prescribed for पशु and it has दीर्घकाल also.

**सिद्धान्तस्तु,** पशुरेव तन्त्री। पुरोडाशास्तु तन्मध्यपातात्प्रसङ्गिणः। कुतः? तस्य वैशेषिकाम्नानात्।

तस्माद्वैशेषिकाङ्गाम्नानात्पशुरेव दीर्घकालस्तन्त्री । तन्मध्यपातित्वात्प्रातस्सवनिकाः पुरोडाशाः प्रसङ्गिणः ।

**समानतन्त्रयोः प्रकृतिविकृत्योः विकृतितन्त्रताधिकरणम्** (12-2-13)

The statement 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' enjoins प्रकृतियाग for the whole life on every पर्व. काम्यनैमित्तिकविकृतीष्टिs are also have to be observed on पर्व. This results in सहप्रयोग of प्रकृति and विकृति. Here, the question is raised which of them is तन्त्री and which is प्रसङ्गी that is to say for which अङ्गs are to be observed and which obtains them by way of प्रसङ्ग.

''यावज्जीवं दर्शपूर्णमासाभ्यां यजेत । पौर्णमास्यां पौर्णमास्या यजेत । अमावास्यायाममावास्यया यजेत'' इत्यादिवचनैः प्रकृतिर्यावज्जीवं पर्वणि पर्वणि प्रयुज्यते । काम्यनैमित्तिकविकृतीष्टयोऽपि ''य इष्टया, पशुना'' इत्यादिवचनेन पर्वण्येव पतंति । तत्र प्रकृतिविकृत्योरेकस्मिन्नेव पर्वणि सहप्रयोगे कस्य तन्त्रिता, कस्य प्रसङ्गित्वमिति **सन्देहे,**

Pūrvapakṣa : states that the performance of प्रकृति is obligatory. Hence, it has to be performed earlier. Hence, there has to be तन्त्रता of प्रकृति. Consequently there will be प्रसङ्गिता of विकृति.

प्रकृतेर्नित्यतयाऽवश्यकर्तव्यत्वात्सा पूर्वमुपतिष्ठते । पश्चात्कामेन वा निमित्तेन वा विकृतीष्टिरापतन्तीतस्वन्त्रोपजीविनीति, पूर्वत्र सवनीयपशोरिव प्रकृतेस्तन्त्रिता । विकृतेस्तु प्रसङ्गितेति **प्राप्ते**

Siddhānta : points out that scope for विकृति arises earlier as it is based on कामना or निमित्त. Hence, विकृति is तन्त्री and प्रकृति is प्रसङ्गी.

**सिद्धान्तः** कामेन निमित्तेन वा पतन्ती वैकृतेष्टिर्नित्यामपि प्रकृतिं बाधित्वा स्वयं पूर्वं निविशत इति सैव तन्त्रिणीति ।

**आग्रयणे प्रसून बर्हिषामेव ग्रहणाधिकरणम्** (12-2-14)

At आग्रयणेष्टि three हविस् viz. ऐन्द्राग्र, वैश्वदेव, द्यायापृथिव्य are prescribed. Among these द्यावापृथिव्य is the विकृति of वैश्वदेविक द्यावापृथिव्य. Hence, बर्हिप्रसून has to be



offered. The expression बर्हिप्रसून means पुष्पित काशमयबर्हि. For others बर्हि that may be प्रसून or अप्रसून may be offered. However, these three are समानतन्त्र. Hence, the question arises whether प्रसून be taken or either प्रसून or अप्रसून be taken.

आग्रयणेष्टौ ऐन्द्राग्रवैश्वदेवद्यावापृथिव्यानि त्रीणि बर्हिषि । तत्र द्यावापृथिव्यस्य वैश्वदैविकद्यावापृथिव्यविकारत्वात्प्रसूनं बर्हिः प्राप्तम् । **पुष्पितकाशमयं बर्हिरित्यर्थः** । उत्तरयोस्तु प्रसूनमप्रसूनं वा बर्हिर्मात्रम् । तत्र समानतन्त्रेषु किं प्रसूनमप्रसूनं वोपादेयम्, उत प्रसूनमेवेति **सन्देहे,**

Pūrvapakṣa : states that एन्द्राग्र and वैश्वदेव are many and मुख्य. Therefore, either प्रसून or अप्रसून बर्हि has to be taken. द्यावापृथिव्य is only one and जघन्य. Hence, प्रसूनमेव alternate that makes it obligatory is not to be adopted.

ऐन्द्राग्रवैश्वदेवयोर्मुख्यत्वादनेकत्वात्तदीयबर्हिषि प्रसूनमप्रसूनं वेत्यनियमरूपो गुणस्स्यात् । द्यावापृथिव्यस्य तु जघन्यत्वादेकत्वाच्च न तदीयः प्रसूनमेवेति नियमरूपो गुणः । एवं पूर्वत्र प्रकृतिरिव द्यावापृथिव्यैककपालोऽपि प्रसङ्गीति **प्राप्ते**

Siddhānta : points out that for ऐन्द्राग्र and वैश्वदेव, बर्हि only is prescribed it is not stated as either प्रसून or अप्रसून. Hence, प्रसून only has to be taken. This will be in tune with समानतन्त्रत्व of the three.

**सिद्धान्तः**, यद्विहितं तदेवाङ्गम् । ऐन्द्राग्रवैश्वदेवयोस्तु बर्हिर्मात्रमेव विहितम् । अतस्तदेवाङ्गम् । अनियमस्त्वविहितत्वादनङ्गम् । अतो न तदनुग्राह्यमिति प्रसूनमेवोपादेयम् । तदुपादाने हि द्यावापृथिव्यस्यैन्द्राग्राग्रादेश्च त्रयाणामप्यवैगुण्यम् । मुख्यानुनोधेनानियमे तु द्यावापृथिव्यस्य वैगुण्यं स्यात् । तस्मात्प्रसूनमेव ग्राह्यमिति ।

**द्यावापृथिव्यादीनां सर्वेषामेव तन्त्रित्वाधिकरणम्** (12-2-15)

In the earlier adhikaraṇa it was stated that द्यावापृथिव्यधर्म प्रसूनबर्हि has to be adopted for all three viz. ऐन्द्राग्र, वैश्वदेव and द्यावापृथिव्य. This means that all other धर्मs of द्यावापृथिव्य also have to be adopted for the other two. Here, the question is raised whether even विरुद्धधर्मs are to be adopted at the other two or not.

यदि द्यावापृथिव्यधर्मस्य प्रसूनस्याश्रयेण प्रवृत्तिस्तथा तेनैव द्यावापृथिव्यं तन्त्रं प्रवर्तेत ।

एवमैन्द्राग्नेस्तत्तन्त्रोपजीवित्वात्प्रसङ्गितेति वक्तव्यम् । तत्र चैन्द्राग्नादि विरुद्धा ये धर्मास्तेऽपि द्यावापृथिव्यवत्प्रसज्यन्ते, न वेति **सन्देहे,**

Pūrvapakṣa : argues that विरुद्धधर्मs also apply by way of प्रसङ्ग.

द्यावापृथिव्यधर्मप्रसूनवद्विरुद्धधर्माअपि प्रसज्येरन् प्रसङ्गत्वे चैन्द्राग्नवैश्वदेवयोरिति **प्राप्तम् ।**

Siddhānta : points out that since, प्रसूनबर्हि is common to all, it is not special धर्म of द्यावापृथिव्य. Hence, it will not lead to तन्त्रता of all its धर्मs by way of प्रसङ्ग.

**सिद्धान्तस्तु,** प्रसूनबर्हिस्तु ऐन्द्रग्नादिसाधारणत्वान्न द्यावापृथिव्यतन्त्रप्रसिद्धावसाधारणं लिङ्गम् । नियमेन प्रसूनोपादानं तु साधारणतया मुख्याविरुद्धत्वात् । न चैतवता द्यावापृथिव्यतन्त्रप्रवृत्तिरनुमातुं शक्या । अतः सर्वेऽपि तन्त्रिण इति मुख्याविरुद्धधर्मेषु मुख्यस्यैवानुग्रहः । न जघन्यस्य द्यावापृथिव्यैवेति ।

**इति द्वादशाध्यायस्य द्वितीयः पादः**

## द्वादशाध्याये तृतीयः पादः

### विश्वजिति वत्सत्वगहतवाससोः समुच्चयाधिकरणम् (12-3-1)

In अष्टरात्र अहीन sacrifice, on the first day विश्वजित् is performed, on next six days अभिप्लव is performed. On the last day अभिजित् is performed. Here, on the first day wearing of वत्सत्वक् i.e. skin of the calf, is prescribed on next six days wearing of अहतवास i.e. new cloth is prescribed. Here the question is raised on अभिजित् day i.e. eighth day, whether वत्सत्वक् be taken or अहतवास.

विश्वजिदभिजितावग्निष्टोमादभितो भवतः । उभयतो ज्योतिष्टोमं मध्येऽभिप्लवष्षडहः ''पशुकामो ह्येतेन यजेत'' इति विहितेऽष्टरात्रेऽहीने प्रथममहः विश्वजिन्नामकम् । ततोऽभिप्लवष्षडहः । तदनन्तरमहः अभिजित् । तत्राद्येऽह्नि विश्वजिन्नाम्न्येकाहे प्रकृतेर्नाम्ना च विश्वजिद्यागे ''अवभृथादुपेत्य वत्सत्वचं परिधत्ते'' इति विहितवत्सत्वक् प्राप्नोति । इतरेषु षट्स्वहस्सु प्रकृतेर्ज्योतिष्टोमात् ''अहतं वासः परिधत्ते'' इति विहिताहतवासः नाम्ना प्राप्नोति । ततोऽभिजिदष्टमः । तत्र किमहतवासहसो ग्रहः, उत वत्सत्वचः ? इति **सन्देहे,**



Pūrvapakṣa : argues that since on majority of days अहतवास is taken. On eighth day also अहत was be taken. बहुनुग्रह is the basis for this.

पञ्चदशरात्रे भूयोऽनुग्रहायैन्द्रीवदिहापि भूयोऽनुग्रहाय चोदकप्राप्ताहतवाससो ग्रहणम् । न चान्तर्बहिराच्छादनरूपकार्यभेदात्समुच्चयोऽस्त्विति शङ्क्यम् । ''परिधत्ते'' इति त्वगहतवाससोर्द्वयोरपि परिधानरूपैकार्थत्वश्रवणात् ।

Siddhānta : points out that वत्सत्वक् cannot be used for गुह्येन्द्रियाच्छादन. Therefore it has to be used to cover the body. While अहतवास can be used for गुह्याच्छादन. Hence, both have to be utilised.

**सिद्धान्तस्तु,** वासोबहुत्वस्यात्राश्रवणेऽपि गुह्याच्छादने वत्सत्वचोऽयोग्यत्वादुपरिवासःकार्ये सा विधीयते इति ''कम्बळं परिधत्ते'' इत्यादौ ''उपरितनं वासः परिदधाति'' इति प्रयोगाच्चोदकप्राप्तमहतं वासः परिदधातीति शब्दस्य गुह्याच्छादनयोग्यत्वात्तत्कार्ये विधीयत इति त्वगहतवाससोर्द्वयोर्भिन्नकार्यत्वात्समुच्चय इति ।

### अनुनिर्वाप्यपुरोडाशानां पुरोडाशस्यैव तन्त्रिताधिकरणम् (12-3-2)

In अग्निप्रकरण the statement 'अग्नीषोमीयस्य पशुपुरोडाशमनुदेवसुवां हवींषि निर्वपति' occurs. Here, the question is raised whether there is तन्त्रिता of eight अनुनिर्वाप्यमाण हविस् and प्रसङ्गिता of पुरोडाश or the other way round.

''अग्नीषोमीयस्य पशुपुरोडाशमनु देवसुवां हवींषि निर्वपति'' इत्यग्निप्रकरणे श्रुतम् । तत्रानुनिर्वाप्याणामष्टानां हविषां किं तन्त्रिता पुरोडाशस्य प्रसङ्गित्वम्, उत विपरीतमिति **सन्देहे,**

Pūrvapakṣa : argues that अनुनिर्वाप्यमाणहविस् are many while पुरोडाश is one. Hence, there has to be तन्त्रता of the former and प्रसङ्गिता of the latter.

पूर्वत्र समुच्चयसम्भवेन मुख्यविश्वजिद्धर्मवत्सत्वगबाधेऽपीहानुनिर्वाप्याणामष्टानां हविषां भूयस्त्वेन तेषां तन्त्रित्वस्य न्याय्यतया मुख्यपुरोडाशस्य प्रसङ्गित्वौचित्याद्धर्मस्य बाध **इति प्राप्तम् ।**

Siddhānta : points out that भूयोनुग्रहन्याय applies only when all are तन्त्रिन्s. Here, there is no प्रयोगचोदनैक्य for हविस् with पशुपुरोडाश. Hence, there is no

तन्त्रिता for हविस्. As आकाङ्क्षा of these is satisfied by पुरोडाशाङ्गजन्योपकार. These have प्रसङ्गिता only.

**सिद्धान्तस्तु,** यत्र सर्वे तन्त्रिणस्तत्रैव भूयोऽनुग्रहन्यायः । यत्र त्वेकस्तन्त्री, उत्तरे प्रसङ्गिणः । न तत्रायं न्यायः । तथा चात्र हविषां पशुपुरोडाशेन सह प्रयोगचोदनैक्ययोरभावेनैकोपक्रमावसानाभावात्पशुपुरोडाशवन्न तन्त्रित्वमिति नात्र भूयोनुग्रहन्यायः । अपि तु पशुपुरोडाशतन्त्रमध्ये विधानादनुनिर्वाप्यास्तन्त्रोपजीविनः भूयांसोऽपि न स्वकीयं धर्मं प्रयुञ्जते । किन्तु तन्त्रिभूतपुरोडाशाङ्गजन्योपकारमेव स्वीकृत्य निराकांक्षा इति तेषामेव प्रसङ्गित्वमिति ।

### भिन्नोपकारकाणां गुणानां समुच्चयाधिकरणम् (12-3-3)

At दर्शपूर्णमास, in respect of आघार the statements 'ऋजुमाघारयति' 'ऊर्ध्वमाघारयति' 'सन्ततमाघारयति' occur. Here, the question is raised whether these modes of आघार are optional or there is समुच्चय.

दर्शपूर्णमासयोराधारौ प्रकृत्य श्रूयते ''ऋजुमाघारयति । ऊर्ध्वमाघारयति । सन्ततमाघारयति'' इत्यादि । तत्रोर्ध्वतादीनां विकल्पः, समुच्चयो वेति **सन्देहे,**

Pūrvapakṣa : argues all modes serve the same purpose. Hence, these modes may be adopted optionally.

पूर्वत्र यथा पशुपुरोडाशधर्मैः कार्यसिद्धेर्देविकाहविर्धर्माणां निवृत्तिस्तथा सन्ततादीनामाघारणरूपैकक्रियार्थत्वेनान्यतमेनाप्याघारणरूपकार्यसिद्धेरन्यतमस्य निवृत्तेर्विकल्प इति **प्राप्ते**

Siddhānta : points out that by holding the जुहू high all these modes can be adopted. Hence, there is समुच्चय.

**सिद्धान्तः,** जुहूमूर्ध्वमुद्धृत्याविच्छिन्नतया ऋजुतया आघारणस्य शक्यतयोर्ध्वतादीनां सह सम्भवात्सहोपसंहारिप्रयोगवचनानुग्रहाच्च समुच्चय इति ।

### प्रयोजनैक्ये गुणानां विकल्पाधिकरणम् (12-3-4)

The statements 'व्रीहिभिः यजेत्' 'यवैः यजेत' occur. Here, the question is raised whether there is विकल्प of व्रीहि or यव, or समुच्चय of व्रीहि and यव.



''व्रीहिभिर्यजेत'' ''यवैर्यजेत'' इत्यादिषु किं विकल्पः, उत समुच्चय इति **सन्देहे,**

Pūrvapakṣa : argues that since, there is यागरूपैककार्यकारित्व of these. समुच्चय has to be adopted.

पूर्वत्राधारणक्रियैक्येनोर्ध्वतादीनां समुच्चय इवात्रापि यागरूपकार्यैक्यात्सर्वापञ्चोसंहारिप्रयोगवचनानुग्रहाच्च समुच्चयः ।

Siddhānta : points out that व्रीहि and यव are not enjoined for याग but are enjoined as पुरोडाशप्रकृतिद्रव्य. These are enjoined by two different statements. When one प्रकृतिद्रव्य is taken the other has no scope. Hence, there has to be विकल्प but not समुच्चय.

**सिद्धान्तः,** व्रीहियवौ तु न यागार्थतया विधीयेते । येनैन्द्रवायवादिवत्प्रकरणेन युगपद्ग्रहणं स्यात् । किन्तु यदाग्नेयादिवाक्यान्तरविहितयागानुवादेनोत्पत्तिशिष्टपुरोडाशप्रकृतिद्रव्यतया द्वाभ्यां वाक्याभ्यां विधीयेते । अत एकद्रव्येण कार्यसिद्धेर्द्रव्यान्तरस्य निवृत्तिः । प्रयोगवचनमपि पुरोडाशप्रकृतिद्रव्यतया विहियवौ गृह्णदेकैकमेव पर्यायेण गृह्णाति । न तु युगपदुभयम् । अन्योन्यनिरपेक्षवाक्यद्वयेन विधानात् । अत एव न मिश्रत्वमपि । तस्माद्विकल्पः ।

### वैगुण्यसमाधानार्थानां प्रायश्चित्तानां विकल्पाधिकरणम् (12-3-5)

The statement, 'यद् ऋक्तो यज्ञ आर्तिमियात् भूस्वहेति गार्हपत्ये जुहुयात्' 'यदि यजुषो दक्षिणाग्नौ भुवः स्वाहेति' etc प्रायश्चित्त prescribed for not observing the अङ्गs stated in ऋग्वेद etc. Similarly the statements 'यो अमावास्यां पौर्णमासीं वा अतिपातयेदग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्' etc also prescribe प्रायश्चित्तs. Here the question is raised whether there is विकल्प of these or समुच्चय.

''यद्दक्तो यज्ञ आर्तिमियात् भूःस्वाहेति गार्ह्रप्त्ये जुहुयात् । अथ यदि यजुष्टो दक्षिणाग्नौ भुवः स्वाहेति, यदि सामतः सुवः स्वाहेत्याहवनीये जुहुयात्'' इत्यादिना ऋग्वेदादिविहितानामङ्गानामननुष्ठानात्तद्वेदनिषिद्धानामनुष्ठानाच्च प्राप्तयज्ञवैगुण्यनिमित्तानि प्रयश्चित्तानि । तथा दर्शपूर्णमासयोरतिपातनिमित्तकवैगुण्यनिमित्तानि'' योऽमावास्यां पौर्णमासीं वाऽतिपातयेदग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् । योऽमावास्यां पौर्णमासीं वाऽतिपातयेत् ''वैश्वानरं द्वादशकपालं निर्वपेत्'' इत्यादिना वैगुण्यसमाधानार्थतया श्रुतानि किं विकल्प्यन्ते, किं वा समुच्चीयन्त इति **सन्देहे,**

Pūrvapakṣa : argues that though क्रतु वैगुण्यसमाधान is the common object of these, as these are अदृष्टार्थ there has to be समुच्चय like that of प्रयाजs.

क्रतुवैगुण्यसमाधानरूपस्य प्रायश्चित्तकार्यस्यैकत्वेऽप्यदृष्टार्थत्वाद्व्रीहियववद्दृष्टार्थत्वाभावात् **अङ्गानां तु शब्दभेदादिति** पूर्वाध्यायाद्यपादोक्तदिशा प्रयाजादीनां करणानुग्रहरूपकार्यैक्येऽप्यदृष्टार्थत्वात्समुच्चय इव पथिकृद्वैश्वानरादीनां समुच्चय इति **प्राप्ते**

Siddhānta : points out these प्रायश्चित्तs serve the purpose of क्रतुवैगुण्य समाधान in अन्योन्यनिरपेक्ष way. Hence, there has to be विकल्प.

**सिद्धान्तः**, क्रतुवैगुण्यमेकं निमित्तीकृत्यान्योन्यनिरपेक्षैर्वाक्यैर्विधीयमानानि कर्माणि प्रत्येकमेव तत्समाधानार्थानीति विज्ञायमानानि सन्ति व्रीहियववद्विकल्प्यन्त इति ।

### नैमित्तिक प्रायश्चित्तानां समुच्चयाधिकरणम् (12-3-6)

In this अधिकरण the question whether in the case of नैमित्तिक प्रायश्चित्त such as 'भिन्ने जुहोति' 'स्कन्ने जुहोति' there is विकल्प or समुच्चय is discussed. It is concluded that there has to be समुच्चय. This is a प्रत्युदाहरण for the topic in the earlier adhikaraṇa.

यानि यज्ञपात्रभेदनहविर्द्रव्यस्कन्दनादिनिमित्तानि ''भिन्ने जुहोति'' इत्यादिवाक्योक्तानि प्रायश्चित्तानि षष्ठचतुर्थपादे 'अर्थसमवायात्प्रायश्चित्तमेकदेशेऽपि' इत्यत्रोक्तदिशा कर्माङ्गानि किं विकल्प्यन्ते, समुच्चीयन्ते वेति **सन्देहे,** पूर्ववद्विकल्प इति **प्राप्ते सिद्धान्तः** अदोषनिर्घातेषु दोषनिवर्तकत्वेनाश्रुतेषु ''भिन्ने जुहोति'' इत्यादिषु समुच्चय इति पूर्वोक्तस्य प्रत्युदाहरणोक्तिमात्रपरमेतत्सूत्रं नैमित्तिकानां प्रयाजादिवदपर्यायग्राहिणा प्रकरणेन युगपद्ग्रहणात्समुच्चयस्य सिद्धत्वादित्याहुः ।

### कर्मकाले अनध्यायेपि मन्त्राणां प्रयोगाधिकरणम् (12-3-7)

In this adhikaraṇa, the question whether on the अनध्ययन days मन्त्रs be recited during the याग or not is discussed. It is clarified that मन्त्रप्रयोग at याग is enjoined by श्रुति while अनध्ययन is stated in स्मृति. श्रुति is superior to स्मृति. Hence, मन्त्रप्रयोग can be made during the याग even on अध्ययन day.

Further, अनध्ययन is prescribed for the smooth study of वेद. This does not affect the recitation of मन्त्र at the याग on अनध्ययन days.



''पर्वणि नाध्येतव्यं स्तनयित्नौ नाध्येतव्यम्'' इत्येवमादयो धर्मास्ते किं कर्मकालेऽपि भवेयुः, उताध्ययनकालीना मन्त्रा एव तत्रापि प्रसज्यन्त इति **सन्देहे,**

पर्वण्यनध्ययनादयो धर्माः मन्त्रप्रयोगार्थाः । तथा च ग्रहणकाल इव कर्मप्रयोगकाले च मन्त्रप्रयोगास्सन्तीति तदापि ते धर्माः प्राप्नुवन्ति ।

**सिद्धान्तस्तु ।** श्रुत्या हि क्रतौ पर्वणि मन्त्रप्रयोगः प्राप्यते । ''पर्वणि नाध्येतव्यम्'' इत्यादिस्मृत्या च तन्निषेधः । स्मृतिश्च श्रुतितो दुर्बला । किञ्चैते धर्माः प्रकरणात्स्वाध्यायविधिप्राप्तस्य ग्रहणाध्ययनस्याप्यविघ्नसमाप्त्युपकारेणाङ्गभूता इति न कर्मणि मन्त्रप्रयोगे प्राप्नुयुरिति क्रतौ पर्वण्यपि मन्त्राः प्रयोज्या ।

### कर्मणिप्रावचनस्वरेणैव मन्त्रोच्चारणाधिकरणम् (12-3-8)

The मन्त्र 'इमामगृभ्णन् रशनामृतस्य' is given one स्वर in समाम्नाय and another in ब्राह्मण. Here, the question is raised when this मन्त्र is employed in the sacrifice, whether it is to be recited with समाम्नायस्वर or ब्राह्मणस्वर.

''इमामगृभ्णन् रशनामृतस्य'' इत्येव मन्त्रास्समाम्नाये स्वरान्तरेण पठिताः । ''इमामगृभ्णान्रशनामृतस्येत्यश्वाभिधानीमादत्ते'' इत्यादिब्राह्मणे स्वरान्तरेणोपात्ताः । ते समाम्नायसिद्धस्वरेण क्रतौ प्रयोज्याः, उत ब्रह्मणस्वरेणेति **सन्देहे,**

Pūrvapakṣa : argues that the मन्त्र इमामगृभ्णन् etc is not enjoined for रशनादान as it is conveyed by the मन्त्रलिङ्ग itself, nor it is for परिसंख्या which involves त्रिदोष. Therefore in ब्राह्मण it is stated for enjoining स्वर only. Hence, this मन्त्र has to be recited with the स्वर given in ब्राह्मण only.

'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यादिब्राह्मणेन मन्त्रः रशनादानेन विनियुक्तः । मन्त्रलिङ्गेनैव विनियोगात् । नापि परिसङ्ख्यार्थः । रशनादानकरणत्वेन स्वरस्य विधायकत्वरूपार्थवत्त्वगतिसम्भवे त्रिदोषदुष्टपरिसङ्ख्यार्थत्वायोगात् । अतः ब्राह्मणे स्वकीयभाषिकस्वरविधानायैव मन्त्र उपादीयते । न च स्वरस्य रशनादानादौ करणत्वायोगः । ऋगक्षराभिव्यक्तिद्वारा साम्नः स्तोत्र इव स्वरस्यापि मन्त्राक्षराभिव्यञ्जकतया तत्र करणतोपपत्तेः । अतो ब्राह्मणस्वरस्य वाचनिकत्वात्तेनैव स्वरेण मन्त्राणां क्रतौ प्रयोग

Siddhānta : points out that ब्राह्मण does not enjoin स्वर. In this case समम्नाय स्वर will have to be considered as अदृष्टार्थ. It will also lead to the contingency of applying मन्त्र for गर्दभरशना also. Hence, ब्राह्मण statement has to be taken as for परिसराख्या. In view of this, the मन्त्र has to be recited with समाम्नाय स्वर only.

**सिद्धान्तस्तु,** ब्राह्मणं न स्वरविधायकम् । तथात्वे हि प्रवचनसिद्धस्वरस्यादृष्टार्थतापत्तेः । गर्दभरशनायामपि लिङ्गान्मन्त्रप्रवृत्त्यापत्तेश्च । अतः ''इत्यश्वाभिधानीयमादत्ते'' इत्यादेर्ब्राह्मणस्य परिसङ्ख्यार्थत्वं, ''चतुर्भिरभ्रिमादत्ते'' इत्यादेश्चतुस्सङ्ख्यारूपगुणार्थत्वं ''उरु प्रथस्वेति पुरोडाशं प्रथयति'' इत्यादेर्यजमानमानप्रथनाद्यर्थत्वमित्येवोपेयमिति समाम्नायसिद्धत्रैस्वर्येणैव क्रतौ मन्त्राः प्रयोज्याः ।

### ब्राह्मणोऽत्पन्नमन्त्रस्य भाषिकस्वरेणैवोच्चारणम् (12-3-9)

In the case of मन्त्रs that are not found in समाम्नाय and are stated only in ब्राह्मणs. The question is raised whether these are to be recited by ब्राह्मणस्वरs or not.

ये पुनर्मन्त्रास्समाम्नाये नाधीताः ब्राह्मण एवोत्पन्नाः ''तं प्रोहेद्वानस्पत्योसि'' इति इत्येवमादयः, ते किं ब्राह्मणस्वरेणोच्चार्याः, न वेति **सन्देहे,**

Pūrvapakṣa : argues that ब्राह्मणs enjoin मन्त्रस्वरूप only, but not स्वर. Hence, these मन्त्रs should be recited by some other स्वर.

ब्राह्मणस्य मन्त्रस्वरूपविनियोगपरत्वेन स्वरविधिपरत्वाभावात्पूर्वत्रेव न भाषास्वरेणोच्चारणं, किन्तु स्वरान्तरेणेति **प्राप्तम् ।**

Siddhānta : points out that the मन्त्र enjoined by ब्राह्मण should be employed with the स्वर as given in ब्राह्मण.

**सिद्धान्तस्तु,** ब्राह्मणेन विनियुक्तस्य यथाविज्ञातस्वरस्यैव प्रयोगावश्यंभावाद्भाषास्वरातिरेकेण स्वरान्तरानवगमाद्भाषास्वरेणेव प्रयोज्या एवमादयो मन्त्रा इति ।



### मन्त्राणां पाठानन्तरमेव पदार्थानुष्ठानाधिकरणम् (12-2-10)

In this adhikaraṇa the question whether पदार्थानुष्ठान be made after the recitation of मन्त्र or immediately after the मन्त्र or after समवेतपदार्थस्मरण is discussed. It is concluded that after the recitation of मन्त्र. पदार्थानुष्ठान be made when पदार्थस्मरण continues.

कर्मसमवेतार्थप्रकाशकतया करणत्वेन विनियुक्तेषु मन्त्रेषु ''इषे त्वेति च्छिनत्ति'' ''देवस्य त्वा सवितुः'' इत्यादिषु किं मन्त्रान्ते वा मन्त्रान्तेप्यनन्तरमेव वा किञ्चिद्विलम्ब्य वा समवेतार्थ-पदार्थोच्चारणानन्तरं वा कर्मप्रयोगः कार्य इत्यनेकधा **सन्देहे,** नियामकाभावादनियम इति **प्राप्ते सिद्धान्तः,** सर्वस्यापि मन्त्रस्य श्रुत्यादिना विनियोगात्सकलमन्त्रसम्पादितस्मरणमेव कर्माङ्गमिति सर्वमन्त्रसमाप्तौ तज्जनितस्मरणं यावदविनष्टमास्ते तदैव कर्मप्रयोगः कार्य इति ।

### वसुधाराधिकरणम् (12-3-11)

The statement 'सन्ततां वसोः धारां जुहोति' prescribes धाराहोम. Here, the question is raised whether धाराहोम before the recitation of मन्त्र or after it. It is concluded that धाराहोम be performed after the recitation of मन्त्र.

''सन्ततां वसोर्धारां जुहोति'' इत्यग्नौ श्रूयते । तत्र किं वसोर्धारा मन्त्रादौ कार्या, अथ मन्त्रान्त इति **सन्देहे,** सन्ततामित्यस्य हि सहितामित्यर्थः । स च मन्त्रहोमयोस्सहोपक्रम एव युक्तो नान्यथेति पूर्वमन्त्रान्ते कर्मप्रयोगोक्तावप्ययं होमो मन्त्रादौ स्यादिति **प्राप्तम् । सिद्धान्तस्तु,** नात्र सन्ततशब्देन साहत्यमुच्यते । किन्त्वविच्छिन्नत्वम् । धाराहोमा हि ''द्वादश द्वादशानि जुहोति'' इति वचनाद्भिन्नाः । तान् जुहोतिनाऽनूद्य सन्ततामित्यविच्छिन्नत्वं विधीयते । न चैवं जुहोतीति यत्तत्सन्ततमित्या-पत्त्यैकवचनानुपपत्तिरिति शङ्क्यम् । अनेकेष्टिपशुसोमात्मकत्वेऽपि राजसूयेनेत्येकवचनान्तपदेन निर्देशवदेकवचननिर्देशस्योपपत्तेः । अतो धाराहोमा अपि मन्त्रान्त एव कार्या इति ।

### आघाराधिकरणम् (12-3-12)

In this adhikaraṇa the question is raised whether the आघार be made before the recitation of मन्त्र or after it. It is concluded that आघार be made after the मन्त्र but at the commencement of कर्म.

दर्शपूर्णमासयोराघारं प्रकृत्य श्रूयते ''सन्ततमाघारयति'' इति । तत्राघारकर्मण एकत्वात्पूर्वत्रैव कर्मणामविच्छिन्नार्थत्वायोगेन साहित्यार्थत्वान्मन्त्रेण सन्ततं सहितमिति वाच्यत्वान्मन्त्रादावाघारणमिति **सङ्गतिपूर्वपक्षौ ।**

**सिद्धान्तस्तु,** अत्रापि सन्ततशब्दो न साहित्यवाची । किन्तु दीर्घधारत्वादाघार्यमाणद्रव्यस्याविच्छेदपरः । सन्ततं द्रव्यं क्षारयतीति क्षणिकस्य कर्मणो दीर्घेण ''ऊर्ध्वोऽध्वर'' इत्यादिमन्त्रेण साहित्यायोगात् । अतोऽत्रापि मन्त्रान्तकर्माद्योस्सन्निपात इति ।

**मन्त्रसन्निपाते विकल्पाधिकरणम्** (12-3-13)

In connection with पुरोडाशविभाग three मन्त्रs viz. 'पूषा वां विभजतु' 'भगो वां विभजतु' 'अर्यमा वां विभजतु' are stated. These मन्त्रs have विभागप्रकाशनरूपैकार्थत्व. Hence, as per व्रीहियवन्याय there has to be विकल्प. This point is stated here as a prelimenary to the topic of next adhikaraṇa.

पुरोडाशविभागे त्रयो मन्त्राः ''पूषा वां विभजतु । भगो वां विभजतु । अर्यमा वां विभजतु'' इति । तेषामर्थप्रकाशनार्थतया सन्निपातित्वाद्विभागप्रकाशनरूपैकार्थानां व्रीहियवन्यायेनेव विकल्पस्स्यादिति प्राप्ते सूत्रमिदमुत्तरविवक्षया कृतम् । **एकार्थास्तु विकल्पेरन्** इति पूर्वोक्तदिशा विकल्पस्य सिद्धेः ।

**सङ्ख्याविहितमन्त्राणां समुच्चयाधिकरणम्** (12-3-14)

In अग्निप्रकरण the मन्त्रs 'चतुर्भिरभ्रितमादत्ते' 'द्वाभ्यां खनति' 'षड्भिः हरति' etc. occur. These have सङ्ख्या. Here, the question is raised. Whether there is विकल्प or समुच्चय of these.

ये तु सङ्ख्यायुक्ता मन्त्राः ''चतुर्भिरभ्रिमादत्ते । द्वाभ्यां खनति । षड्भिर्हरति'' इत्येवमादयोऽग्निप्रकरणगतास्तेषां किमभ्र्यादानादौ विकल्पः, समुच्चयो वेति सन्देहे,

As stated in the earlier adhikaraṇa, as these have अग्न्याधानादिरूपैकार्थत्व there has to be विकल्प is the pūrvapakṣa position.

पूर्वत्र पुरोडाशविभागमन्त्रेष्विवाभ्र्यादानादिरूपैकार्थ्याद्विकल्प इति **सङ्गतिपूर्वपक्षौ ।**

Siddhāntin point out that अभ्रिरसि etc. मन्त्रs are not enjoined for अभ्र्यादान.



The अभ्र्यादान is conveyed by the very मन्त्रलिङ्ग. These statements enjoin सङ्ख्या only. Hence, there has to be समुच्चय.

**सिद्धान्तस्तु,** ''अभ्रिरसि'' इत्यादिमन्त्राणां लिङ्गेनैवाभ्र्यादाने विनियोगान्न तत्र मन्त्रा विधेयाः । किन्तु चतुष्ट्वादिसङ्ख्यैव विधेयेति सङ्ख्याङ्गकत्ववशात्समुच्चयो मन्त्राणाम् ।

**ब्राह्मण विहितमन्त्राणां विकल्पाधिकरणम्** (12-3-15)

The मन्त्रs 'उरुपृथस्वेति' पुरोडाशं प्रथयति' etc occur in ब्राह्मण. Here the question is raised whether for उरुप्रथनादिकर्म, there is विकल्प of these मन्त्रs or समुच्चय.

ये ब्राह्मणविहिता मन्त्राः ''उरु प्रथस्वेति पुरोडाशं प्रथयति । उरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयति'' इत्यादयस्तेषां किं प्रधानादौ कर्मणि विकल्पः, समुच्चयो वेति **सन्देहे,**

Pūrvapakṣa : argues that all these are expressly stated. The विकल्प will result in the rejection of these partially. Hence, समुच्चय has to be made.

**सर्वेषामुपदिष्टत्वाद्वचनेनैव** ''उरु प्रथस्व'' इत्यादेर्विनियोगादिति यावत् । विकल्पे च पाक्षिकबाधप्रसङ्गात् । पूर्वत्र सङ्ख्यायुक्तमन्त्राणामिव समुच्चय इति **प्राप्तम् ।**

Siddhānta : points out that these are stated by different statements indipendently. Hence, विकल्प has to made.

**सिद्धान्तस्तु,** वचनेनैषां मन्त्राणां निरपेक्षसाधनत्वावगमान्न समुच्चय इति व्रीहियववद्विकल्प इति **भाष्यकारीयं** मतमयुक्तम् । वाचनिकविनियोगाङ्गीकारे व्रीहियववन्निरपेक्षसाधनत्वविधानात्समुच्चयेन पूर्वपक्षानुदय इति मत्वा **वार्तिककारो** लिङ्गेनैव मन्त्राणां विनियोगसिद्धेर्न विनियोगार्थं वचनम् । किन्तु समुच्चयार्थमिति पूर्वपक्षयित्वा वचनेन निरपेक्षसाधनत्वावगमान्न समुच्चय इति सिद्धान्तितवान् ।

**हौत्राणां मन्त्राणां समुच्चयाधिकरणम्** (12-3-16)

अध्वर्यु recites the hymn 'उद्दिवं स्तभानान्तरिक्षं पृण' for यूपोच्छ्रयण. होता states the प्रैष as 'यूपाय उच्छ्रीयमाणाय अनुब्रूहि' then, repeats the four मन्त्रs 'उच्छ्रयस्व वनस्पते वर्ष्मन्' etc. All these मन्त्रs are meant for यूपोच्छ्रयणप्रकाशन.

Here the question is raised whether there is विकल्प or समुच्चय of these मन्त्रs.

यूपोच्छ्रयणार्थमध्वर्युणा ''उद्दिवं स्तभानान्तरिक्षं पृण'' इति करणमन्त्रः पठ्यते । होत्रा च ''यूपायोच्छ्रीयमाणायानुब्रूहि'' इति प्रेषितेन ''उच्छ्रयस्व वनस्पते वर्ष्मन् पृथिव्या अधि'' इत्यादयश्चत्वारो मन्त्रा अध्वर्युणा क्रियमाणानुवादिनः । सर्वे चैते यूपोच्छ्रयणप्रकाशनार्थाः । तेष्वाध्वर्यवस्य हौत्राणां च सर्वेषां किं विकल्पः, उत समुच्चय इति **सन्देहे,**

*Pūrvapakṣa* : argues that all these मन्त्रs have यूपोच्छ्रयणस्मरणरूपैकाकार्य. Hence, विकल्प has to be made.

तेषां मन्त्राणां यूपोच्छ्रयणस्मरणरूपैकार्थ्यात्करणमन्त्राणामिव विकल्प इति **प्राप्तम् ।**

*Siddhānta* :

i) Siddhāntin points out that there cannot be विकल्प for the मन्त्रs to be recited by अध्वर्यु. Though these have यूपोच्छ्रयण स्मृतिरूपैककार्यत्व. करणमन्त्रs remind as करोमि and क्रियमाणमन्त्रs as कर्तव्यम्. In this way there is स्मृतिप्रकारभेद. Hence, there cannot be विकल्प in respect of these मन्त्रs.

ii) So far as क्रियमाणानुवादिमन्त्रs to be repeated by होता, these are required to be recited upto the completion of कर्म to avoid स्मृति विच्छेद of कर्म. Hence, there has to be समुच्चय of all मन्त्रs.

**सिद्धान्तस्तु,** किमत्राध्वर्युणोक्तकरणमन्त्रस्य, हौत्रमन्त्राणां च विकल्प उच्यते । किं वा हौत्रमन्त्राणामेव मिथः । नाद्यः । अध्वर्युणोच्यमानकरणमन्त्रस्य क्रियमाणानुवादिनां च यूपोच्छ्रयणस्मृतिरूपकार्यैक्येऽपि करणमन्त्राः ''करोमि'' इत्येवं स्मारयन्ति । क्रियमाणानुवादिनस्तु ''हे अध्वर्यो त्वयेदं कर्तव्यम्'' इति स्मारयन्तीति स्मृतिप्रकारभेदेन कार्यैक्याभावात् ।

न द्वितीयः । ''पूषा वां विभजतु'' इत्यादिकरणमन्त्रा हि कर्मानुष्ठानकरणभूतां स्मृतिं पूर्वक्षणवर्तिनीं कुर्वन्ति । तत्र त्वेकेन तत्सिद्ध्या उत्तरस्य निवृत्तेः करणमन्त्राणामेकार्थानामित्यत्र तेषां विकल्पोक्तावपि क्रियमाणानुवादिनां हौत्रमन्त्राणामध्वर्युणा क्रियमाणानुवादित्वात्तेन क्रियमाणकर्मणः स्मृत्यविच्छेदाय तत्कर्मसमाप्तिपर्यन्तमपेक्षितत्वत्सर्वेषां समुच्चयं विना तदयोगात्समुच्चयो न विकल्प इति ।

**इति द्वादशाध्यायस्य तृतीयः पादः**



## द्वादशाध्यायस्य चतुर्थः पादः

In the earlier पाद, विकल्प and समुच्चय of the मन्त्रs that have अर्थविवक्षा is discussed. In this पाद, विकल्प and समुच्चय of मन्त्रs that have no अर्थविवक्षा will be discussed.

पूर्वपादे अर्थविवक्षावतां मन्त्राणां विकल्पसमुच्चयौ चिन्तितौ । अत्र पादे अर्थविवक्षाहीनमन्त्राणामन्येषां च विकल्पसमुच्चयौ प्राधान्येन चिन्त्येते ।

### जपस्तुत्याशीरभिधानानां समुच्चयाधिकरणम् (12-4-1)

In this adhikaraṇa, the question whether there is विकल्प or समुच्चय of मन्त्रs of जप, स्तुति etc is discussed.

i) इदं विष्णुरित्यादेः अनुवचनं जपः
ii) 'अग्निर्मूर्धादिवः ककुत्' इत्यादिना गुणकीर्तनं स्तुतिः
iii) 'आयुर्दा अग्नेऽस्यायुर्मेदेहि' इत्यादिना स्वेष्टप्रार्थनमाशीः
iv) 'एषोसि तु एषोसि' इत्यादिना अदृष्टार्थ गुणविशिष्टगुणि प्रकाशनम् अभिधानम् ।

दीक्षितस्य वाङ्नियमात्पूर्वं ''इदं विष्णुर्विचक्रमे'' इत्यादयो मन्त्रा अदृष्टार्थतया जपाय ''आग्नावैष्णवीमनूच्य वाग्यन्तव्या'' ''सारस्वतीमनूच्य वाग्यन्तव्या'' इति विधीयन्ते । तेषु मन्त्रेषु प्रतीयमानोऽप्यर्थः ''जप व्यक्तायां वाचि'' इति धातुपाठाज्जपतिचोदितेषु मन्त्रेषूच्चारणमात्रस्यैव चोदितत्वादविवक्षित इत्यविवक्षितार्थस्य ''इदं विष्णुः'' इत्यादेरनुवचनरूपो जपः, ''अग्निर्मूर्धा दिवः ककुत्'', इत्यादिना गुणकीर्तनं स्तुतिः, ''आयुर्दा अग्नेऽस्यायुर्मे देहि'' इत्यादिना स्वेष्टप्रार्थनमाशीः, ''एषोसि त्वेषोसि'' इत्यादिनाऽदृष्टार्थं गुणविशिष्टगुणिप्रकाशनमभिधानम्, तत्र जपादिमन्त्रेषु जाप्यमन्त्राणां स्तावकमन्त्राणां अशीर्मन्त्राणां, अभिधानमन्त्राणां च विकल्पः, समुच्चयो वेति **सन्देहे,**

*Pūrvapakṣa* : argues that for जपमन्त्र, स्मृतिरूपैकार्थ्य for स्तावकमन्त्र स्तुतिरूपैकार्थ्य, for आशीर्मन्त्र आशासनरूपैकार्थ्य, for अभिधानमन्त्र. अभिधानरूपैकार्थ्य is the common facter. Hence, there is विकल्प of these.

''उरु प्रथस्वेति प्रथयति'' इत्यादिब्राह्मणोक्तयोर्मन्त्रयोः पुरोडाशप्रथनरूपैकार्थ्याद्विकल्पः । जपमन्त्रेषु स्मृतिरूपैकार्थ्यात्, तथा स्तावकयन्त्रेषु स्तुतिरूपैकार्थ्यात्, तथाऽऽशीर्मन्त्रेषु आशासनरूपैकार्थ्यात्, अभिधानमन्त्रेष्वप्यभिधानरूपैकार्थ्याद्विकल्प इति **प्राप्ते,**

Siddhānta : points out that there is ऐकार्थ्य, there is also अदृष्टार्थत्व. The अदृष्ट generated by each मन्त्र is distinct. Hence, to obtain अदृष्ट from different मन्त्रs समुच्चय has to be made.

जपाद्यर्थमन्त्राणां जपादिरूपैकार्थ्येऽप्यदृष्टार्थत्वादेकेन मन्त्रेण जातमदृष्टमन्येन जायत इत्यत्र मानाभावेन तत्तन्मन्त्रजन्यादृष्टानां भिन्नतया कार्यभेदात्समुच्चय इति **सिद्धान्तः** ।

### बार्हस्पत्ये द्विविधयाज्यानुवाक्ययोः विकल्पाधिकरणम् (12-4-2)

At ऐन्द्राबार्हस्पत्यकर्म two याज्यानुवाक्य युगलs are stated. Here the question is raised whether there is विकल्प or समुच्चय of these two.

ऐन्द्राबार्हस्पत्ये कर्मणि याज्यानुवाक्यायुगलं पठ्यते ''इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती'' इति, 'अयं वां परिषिच्यते सोम इन्द्राबृहस्पती' इति चैकयाज्यानुवाक्यायुगलम् । तथा ''अस्मै इन्द्राबृहस्पती'' इति ''बृहस्पतिर्नः परिपातु पश्चात्'' इति चापरं युगलम् । तत्र तयोर्युगलयोः समुच्चयः, विकल्पो वेति **सन्देहे,**

Pūrvapakṣa : argues that as per the statement 'पुरोवाक्यामनूज्य याज्यया यजति' पुरोवाक्या and याज्या indicate देवता. For these हविःप्रदान has to be made separately. However, साहित्य is enjoined for these. Hence, समुच्चय has to be made.

पुरःपूर्वं अनूच्यत इति व्युत्पत्त्या पुरोऽनुवाक्येति समाख्या पश्चाद्भावियाज्यया विना न सम्भवतीति समाख्यावशात्, ''पुरोऽनुवाक्यामनूच्य याज्यया यजति'' इति प्रत्यक्षवचनेन पुरोऽनुवाक्यायाज्ययोः क्रमादेवतोपलक्षणार्थत्वे हविप्रदानार्थत्वरूपकार्यभेदोक्तिपूर्वं साहित्यविधानाच्च याज्यापुरोनुवाक्ययोर्यथा समुच्चयस्तथा तद्युगलयोरपि समुच्चयः पूर्वत्र जपादिमन्त्राणामिवेति **प्राप्ते,**

Siddhānta : points out that देवताबोधन is दृष्टप्रयोजन. Hence, no other प्रयोजन is to be envisaged. Therefore विकल्प has to be made.

दृष्टप्रयोजनस्य देवतावबोधनरूपस्यैकत्वादेकेन तत्सिध्याऽन्यस्य कृत्यं नेति विकल्प इति **सिद्धान्तः**।

### सोमक्रयसाधनानामजादीनां विकल्पाधिकरणम् (12-4-3)

For the purchase of सोम ten द्रव्यs viz. अजा, हिरण्य, एकहायनी, वास etc. are



stated. Here, the question is raised whether there is समुच्चय of द्रव्य as क्रयसाधन or विकल्प.

सोमक्रयणार्थं द्रव्याणि श्रूयन्ते ''अजया क्रीणाति'' ''हिरण्येन क्रीणाति'' ''एकहायन्या क्रीणाति'' ''वाससा क्रीणाति'' इत्यादीनि दशक्रयद्रव्याणि । तत्रैकहायन्यादिगुणभेदेन तत्तद्गुणविशिष्टक्रयाणां भिन्नत्वाद्दशगुणविशिष्टतयोत्पन्ना दशापि क्रयाः किं सोमप्राप्तौ विकल्प्यन्ते, उत समुच्चीयन्त इति **सन्देहे,**

Pūrvapakṣa : argues that all these are stated as क्रयसाधन. Hence, सोम may be perchased by any one of them. Hence, there has to be विकल्प.

सर्वक्रयाणां सोमप्राप्तिरूपैकार्थ्यान्पूर्वत्र याज्यानुवाक्यायुगलवद्विकल्प इति **प्राप्तम्।**

Siddhānta : points out that for the purchase of Soma the seller has to be pursuaded. This is possible only when sufficient price is offered. Hence, there has to be समुच्चय of these क्रयसाधनs.

**सिद्धान्तस्तु,** ''व्रीहिभिर्यजेत'' इत्यादौ ''व्रीहिभिरेव यजेत'', ''यवैरेव यजेत'' इति द्रव्यनियम इव, नात्र ''वाससैव क्रीणाति'' इति ''एकहायन्यैव क्रीणाति'' इति द्रव्यनियमः । तथात्वे ''अश्वशफेन क्रीणाति'' इति वचनादश्वशफमात्रस्यैव क्रयसाधनत्वापत्तेः । न चेष्टापत्तिः । विक्रेतुरल्पेनानत्यसम्भवात् । अतो वाससा क्रीणातीवेति वाक्यार्थ इति व्रीहियवादिवैषम्येण न तत्रेव विकल्पः । किन्तु समुच्चयः । किञ्च क्रयाणां विक्रेत्रानति प्रयोजनकत्वादानतेश्च बहुभिस्सुकरत्वादानतिरूपकार्यसौकर्याय समुच्चयाश्रयणम् । वस्तुतस्तु तत्तद्गुणविशिष्टक्रयसाध्याऽऽनतीनां भेदेन कार्यैक्याभावात्समुच्चय इति ज्ञेयम् ।

### गुदोपयजनादिप्रतिपत्तिकर्मणां समुच्चयाधिकरणम् (12-4-4)

At अग्निषोमीयपशु the statement 'गुदेन उपयजति' prescribes गुदोपयजन. Here, the question is raised when there are many गुदs there is विकल्प or समुच्चय.

अग्नीषोमीयपशौ ''गुदेनोपयजति'' इति श्रुतं गुदोपयजनं पशुगणे चोदकप्राप्तम् । तत्रानेकगुदसन्निपाते गुदानां विकल्पः, समुच्चयो वेति **सन्देहे,**

Pūrvapakṣa : argues that by तृतीया as गुदेन. साधनत्व of गुद for उपयाग is indicated. This requirement is satisfied by offering one गुद. Hence, there has to be विकल्प.

''गुदेन'' इति तृतीयाश्रुत्या गुदानां साधनत्वप्रतीतिबलेनोपयागस्यार्थकर्मत्वावगमात्तस्य चैकेन गुदेन सिध्याऽन्यस्य कृत्याभावाद्विकल्प एव । पूर्वत्रेव न समुच्चय इति प्राप्ते

Siddhānta : points out that at पशुयाग after हृदय etc are offered the remaining अवयव i.e. गुद needs प्रतिपत्तिकर्म. This has to be performed for all गुदs. Hence, there has to be समुच्चय.

**सिद्धान्तः,** अग्नीषोमीययागार्थमुत्पन्नपशुयागे हृदयादिभिर्निर्वृत्ते, तच्छेषः प्रतिपत्तिमपेक्षत इत्यपेक्षितविधानाय प्रतिपत्तिविधिरेवायम् । तृतीया च ''प्रयाजशेषेण सर्वाणि हवींष्यभि'' इत्यत्रेव द्वितीयार्थे । तथा च द्रव्यसंस्काररूपार्थप्रतिपत्तिर्यस्य च पशोर्गुदस्य न क्रियते तस्य पशोस्तेन संस्कारेण हानिः स्यात् । अतः सर्वेषां समुच्चय इति ।

## आधाने दक्षिणासङ्ख्या विकल्पाधिकरणम् (12-4-5)

At आधान, the statements 'एका देया' 'षट्देयाः' 'दश देयाः' prescribes दक्षिणा. Here, the question is raised whether there is विकल्प of these दक्षिणाs or समुच्चय.

आधाने ''एका देया । षड्देयाः । दश देयाः'' इत्यादिना श्रुतानामेकादिदक्षिणानां किं विकल्पः, उत समुच्चय इति **सन्देहे,**

Pūrvapakṣa : argues that by offering larger दक्षिणा the services of priests could be secured easily. The effect of each दक्षिणा is different from the other. Therefore, there has to be समुच्चय.

''वाससा क्रीणाति'' इत्यादौ विक्रेतुरानतेर्बहुभिः सुकरत्वाद्वा वासःप्रभृतिद्रव्यसाध्यक्रय-जन्यानतीनां भेदेन कार्यभेदाद्वा क्रयाणां यथा समुच्चयस्तथाऽत्रापीति ऋत्विजामानतेरनेकाभि-स्सुकरत्वाद्वा एकदक्षिणाजन्यानतितः षडादिदक्षिणाजन्यानतीनां भेदेन कार्यभेदाद्वा समुच्चयो दक्षिणानां पूर्वत्र गुदानामिवेति प्राप्ते



Siddhānta : points out that the number of साधन is कर्माङ्ग. If there is समुच्चय of one and six, it will be seven, this number is not कर्माङ्ग as it is not stated with साधन. Hence, for taking into account, the सङ्ख्या of साधन, there has to विकल्प.

**सिद्धान्तः,** सङ्ख्या हि साधनं परिच्छिन्दन्ती कर्माङ्गम् । तत्र यद्येकया षड्भिश्च समुच्चयेन ऋत्विजः परिक्रीणीत तदा सप्तसङ्ख्या स्यात् । न त्वेका सङ्ख्या षट्सङ्ख्या वा । तथा च एकादिकाया अङ्गत्वं न स्यात् । अतः सङ्ख्याश्रुतिविरोधादानतिभेदेऽप्यानतिसौकर्येऽपि वा विकल्प एव युक्तः । न समुच्चय इति ।

## जाघनीविकल्पाधिकरणम् (12-4-6)

At दर्शपूर्णमास for पत्नीसंयाज, जाघनी is prescribed by way of विकल्प. This जाघनी has come down to अग्निषोमीयपशु, then to पशुगण. Here the question is raised whether there is विकल्प of जाघनी or समुच्चय.

दर्शपूर्णमासयोः पत्नीसंयाजेष्वाज्येन सह विकल्प्यमाना जाघनी विहिता ''जाघन्या पत्नी-स्संयाजयति'' इति । सा जाघनी चोदकेनाग्नीषोमीयपशौ प्राप्ता । तत्रापि ''जाघन्या पत्नीस्संयाज-यति'' इति । ततश्चोदकेन पशुगणे प्राप्नोति । तत्र बह्वीनां जाघनीनां विकल्पः, समुच्चयो वेति **सन्देहे,**

Pūrvapakṣa : states that जाघनी is stated again in पशुगण to indicate that it is for प्रतिपत्तिकर्म. As it is for प्रतिपत्तिरूपदृष्टार्थ, there has to be समुच्चय of it.

दर्शपूर्णमासयोः श्रुता जाघनी तृतीयाश्रुत्या तत्र हविरन्तराभावेन चाशेषभूता सती पत्नीसंयाजान् प्रति गुणभूताऽपि दैक्षपशौ न गुणभूता । हृदयादिहविर्लब्धपशुनिष्पन्ना जाघनी प्रतिपत्तिमपेक्षत इति चोदकेन गुणभूतत्वेन प्राप्तौ हृदयादिहविर्भिरिव यागनिष्पत्तेरनुनिष्पन्नाया जाघन्या प्रतिपत्तित्वेन विधानार्थं पशौ पुनर्वचनम् । तृतीया द्वितीयार्थे ''पत्नीसंयाजैः जाघनीं प्रतिपादयेत्'' इति । एवञ्च प्रतिपत्तिरूपदृष्टार्थत्वात्पूर्वत्र दक्षिणानां पशुगणे प्रतिपाद्यत्वेनैव चोदकप्राप्तेर्जाघनीनां समुच्चय इति प्राप्ते

Siddhānta : points out that पुनर्वचन of जाघनी is not for प्रतिपत्ति but it is for नियमार्थ. Hence, there has to be विकल्प of जाघनी.

**सिद्धान्तः,** यदि पशौ पुनर्वचनेन जाघनीप्रतिपत्त्यर्थतया पत्नीसंयाजा विधीयेरंस्तदा स्यादेवं

पशुगणे समुच्चयः । न चैवम् । किन्तु चोदकेन यथाप्रकृत्याज्येन विकल्पिततया प्राप्तौ ''जाघन्यैव पत्नीस्संयाजयन्ति'' इति नियमार्थं पुनर्वचनम् । एवमर्थकर्मत्वेन प्रतिपत्तिकर्मत्वाभावात्पशुगणे न विकल्पो जाघनीनाम् ।

### उखाग्नि विकल्पाधिकरणम् (12-4-7)

*In this adhikaraṇa, whether there is समुच्चय of उखाग्नि and काम्याग्नि or काम्याग्नि sets aside उखाग्नि is discussed.*

*The अग्नि generated in उखा by heating by आहवनीयाग्नि is उखाग्नि. The अग्नि that is prepared from the burning branch on the top of a tree is वृक्षाग्रजकाम्याग्नि.*

अग्निप्रकरणे आहवनीयाग्निना सन्तापेनोखाख्यपात्रविशेषे जनितोऽग्निराहवनीयस्थानीय उखाग्निरित्युच्यते । स च नित्यः । तं प्रकृत्य ''वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्याऽहृत्यावदध्यात् भ्राष्टादन्नाद्यकामस्य'' इति काम्योग्निश्च श्रूयते । तत्रोखायां नित्यस्य वृक्षाग्रजादिकाम्याग्नेश्च समुच्चयः, अथ काम्येन नित्यस्य बाध इति **सन्देहे,**

*Pūrvapakṣa : argues that for काम्याग्नि only आधान is stated, but होमार्थत्व is not stated. Hence, आधानान्तर of नित्याग्नि has to be made. Hence, there is समुच्चय of काम्याग्नि and नित्याग्नि.*

पूर्वत्र जाघनीनामसमुच्चयेऽपीह नित्यकाम्ययोस्समुच्चयः । काम्याग्नेराधानमात्रश्रवणेनाग्निहोत्रादिहोमार्थत्वाश्रवणात् ब्रह्मवर्चसादिकामाय वार्क्ष्याद्यग्नेः प्रकृताग्न्याधानादाधानान्तरस्य होमार्थं नित्यस्य चाधातव्यत्वादिति **प्राप्तम् ।**

*Siddhānta : points out that उखाग्नि is आहवनीयस्थानापन्न. Hence, आधान is अर्थप्राप्त. On the basis of this कामवाक्य enjoins अग्न्यन्तर for ब्रह्मवर्चसरूपफल. Consequently, काम्याग्नि sets aside नित्याग्नि i.e. उखाग्नि.*

**सिद्धान्तस्तु,** ''आहवनीये जुहोति'' इत्यावहनीये होमश्रवणेनाहवनीयस्थानापन्ने उख्याग्नावाधानाश्रवणेऽप्यनाधाय होमासम्भवाद्धोमार्थाहवनीयस्थानापन्ने उख्येऽर्थप्राप्तमाधानं प्राप्तमेवेति तदेवाधानमाश्रित्य काम्यवाक्ये काम्यवाक्यादग्न्यन्तरं फलाय विधीयते । न त्वपूर्वमाधानान्तरम् । एवञ्च यथा प्राकृतप्रणयनमाश्रित्य ''गोदोहेन पशुकामस्यापः प्रणयेत्'' इति फलाय विहितेन गोदोहनेन



नित्यस्य बाधः एवमिहापि काम्येन नित्यस्य बाधस्तथैव पादोक्तेः । एवमिहापि काम्येन नित्यस्य बाध इति विकल्पसमुच्चयविचारे समाप्ते समुच्चय एव अस्ति नास्तीत्येवं चिन्तारूपत्वाद्बाधचिन्तारूपस्याप्यत्र निवेश इत्याहुः ।

### काम्याग्नेः आहवनीयधर्माभावाधिकरणम् (12-4-8)

In this adhikaraṇa, the question whether आहनीयधर्मs apply to काम्याग्नि or not is discussed.

सोऽयं काम्योऽग्निराहवनीयधर्मप्राप्तिमान्, न वेति **सन्देहे,**

Pūrvapakṣin claims that, as per the explanation, 'आगत्य हूयते अस्मिन् इति आहवनीयः' the name आहवनीय applies to काम्याग्नि also. Siddhāntin points out that it is not a यौगिक word.

आगत्य हूयतेऽस्मिन् हविरिति व्युत्पत्त्या काम्येऽप्यग्नावाहवनीयशब्दवाच्यता स्यात् । तथा च तद्धर्मप्राप्तिमानिति **प्राप्तम् ।**

**सिद्धान्तस्तु,** नायमाहवनीयशब्दो यौगिकः । येन काम्याग्निरपि तच्छब्दार्थस्स्यात् । यौगिकत्वे हि ''यदाहवनीये जुहोति'' इत्याहवनीयस्य सतो होमविधिः । होमाधारतया चाहवनीयविधिरित्यन्योन्याश्रयापत्तेः । होमाधारे पदादावपि प्रयोगापत्तेश्च । किन्त्वञ्जनसाधने शकलविशेषे स्वरुशब्दवदाधानाजन्यसंस्कारविशेषयुक्ते रूढ एव । अतोऽत्र तादृशाधानहीने काम्येग्नौ नाहवनीयशब्दवृत्तिरिति न तत्तद्धर्मप्राप्तिरिति ।

### काम्याग्नेः असंस्कृतताधिकरणम् (12-4-9)

In this adhikaraṇa, the question whether there is आधानादिसंस्कार for काम्याग्नि or not is discussed. It is concluded that though काम्याग्नि also is होम साधन. होमs are made in it without आधानादिसंस्कार.

काम्योऽग्निराधानादिसंस्कारभाक्, उत नेति **सन्देहे,**

काम्याग्नेर्होमसाधनत्वात्संस्काराणां च होमार्थत्वादाधानादिसंस्कारोपेतः कार्यः काम्योऽग्निरिति संस्काराभावान्न तत्राहवनीयशब्दप्रवृत्तिरिति पूर्वोक्तमयुक्तमिति **प्राप्तम् ।**

**सिद्धान्तस्तु,** काम्याग्रेर्होमसाधनत्वेऽप्यसंस्कृत एवायं संत्कृत-स्थानापन्न इति नात्र संस्काराः कार्या इति । किञ्चाधानं ह्यग्निद्वयस्योत्पादकम् । अत्र च गार्हपत्यः सिद्ध एवास्त इति कथमाधानस्यात्र प्रसक्तिरिति ।

**उख्याग्रे धारणाभावाधिकरणम्** (12-4-10)

*In this adhikaraṇa, the question whether* उख्याग्नि *is to be permanently maintained or not maintaining is obligatory.*

तस्मिन्नेवोख्याग्नौ नित्यं धार्यो, न वेति विकल्पः उत न धार्य एवेति नियम इति **सन्देहे,**

*Pūrvapakṣa : argues that the statement 'न प्रतिसन्दध्यात्' prohibits the maintaining. Such prohibition is not possible unless the maintanance is envisaged. Hence, its statement also has to be envisaged. Thus maintainance has to be made on the basis of inference and its prohibition also has to be observed. This results in* विकल्प.

''न प्रतिसन्दध्यात्'' इति धारणप्रतिषेधः सत्यां प्राप्तौ युक्तः सन् प्रापकं विधिमनुष्ठापयतीति तेन चानुमितेन विधिना प्रापितं प्रतिषेधकेन च प्रतिषिद्धं धारणं विकल्पयतीति **प्राप्तम् ।**

*Siddhānta : points out that there is a statement to maintain* आहवनीय *permenantly.* उख्याग्नि *is* आहवनीय स्थानापन्न. *Hence, this statement applies to* उख्याग्नि *also. However, the statement 'न प्रतिसन्दध्यात्' prohibits its maintainance. In view of this it has to be treated as* पर्युदास *which results in maintaining* आवहनीय *other than* उख्याग्नि.

**सिद्धान्तस्तु,** यदि कयापि प्रत्यक्षश्रुत्या प्रसक्तिर्न स्यात्तदा प्रसञ्जको विधिरनुमीयेत । अस्ति चात्र ''नित्यधृत आहवनीयो गतश्रियः'' इति । आहवनीयस्थानापन्नश्चोख्य इति तत्र नित्यधारणे प्रसक्ते ''न प्रतिसन्दध्यात्'' इति पर्युदासः क्रियते ''उख्यादन्य एवाहवनीयो धार्य'' इति । तथा चोख्यो न धार्य एवेति नियम इति ।

**शुक्रस्पर्शादीनामेकयजमानकर्तृताधिकरणम्** (12-4-11)

At अहीन there are many यजमानs. Here the question is raised शुक्र etc. संस्कारs are to be made for only one यजमान or to all.



It is concluded that शुक्र, अन्वारम्भण etc are not यजमान संस्कारs. Hence, if one यजमान observes these, that is sufficient.

प्रासङ्गिकं नित्यकाम्याग्निविचारं समाप्य प्रस्तुतप्रसङ्गचिन्तैवात्र पुनः क्रियत इति **सङ्गतिः ।** अत्र चाहीनेऽनेकयजमानके यानि **परार्थानि** यजमानसंस्कारार्थानीति यावत् । तानि किमेको यजमानः कुर्यात्, उत सर्वेऽपीति **सन्देहे,**

पूर्वत्रेव विशेषाभावादनियम इति **प्राप्ते**

**सिद्धान्तः,** ''शुक्रं यजमानोऽन्वारभते'' ''यजमानसम्मितौदुम्बरी भवति'' इत्यादीन्येक एव कुर्यात् । न सर्वेऽपि । यदि तानि शुक्रान्वारम्भणादीनि यजमानसंस्कारः स्यात्तदा स्वस्वसंस्कारा-विलोपाय सर्वेपि यजमानाः कुर्युः । न चैवम् । तेषामतथात्वात् । एकेन कृतत्वेऽपि यजमानकृतत्व-सिद्धेरिति ।

**अहीने शुक्रस्पर्शादौ एकस्यैव यजमानस्य कर्तृत्वाधिकरणम्** (12-4-12)

In the earlier adhikaraṇa, it was stated that only one यजमान should observe शुक्र, स्पर्श etc. संस्कारs. For the question who is this one? The position in अहीन is that he may be anyone of the यजमानs. This is stated in this adhikaraṇa as a preliminary to discuss this point in respect of सत्र.

पूर्वत्रैक एव यजमानः कुर्यादित्युक्ते स कः? इति विचारे अविशेषादहीने यः कश्चिदित्यनयम इति येन केनचित्कृतमन्ये उपजीवन्तीति सत्रेष्वपवादं वक्तुं प्राप्तिसूत्रमेतदपीत्याहुः ।

**सत्रे शुक्रस्पर्शादौ गृहपतेरेवकर्तृत्वाधिकरणम्** (12-4-13)

In this adhikaraṇa, it is stated that गृहपति only should observe शुक्र, स्पर्श etc संस्कार. Since, others will have been engaged in other items. गृहपति has no other duties.

अत्रापि किमनियमः; उत गृहपतिरेव कुर्यादिति नियम इति **सन्देहे,** पूर्वत्रेव विशेषाभावादनियम इति **सङ्गतिपूर्वपक्षौ ।**

**सिद्धान्तस्तु,** अन्येषामार्त्विज्यकरणे व्यापृतत्वेनान्वारम्भणादिकार्यकरणविरोधाद्गृहपतेस्त्वा-र्त्विज्याभावेनाव्यापृतत्वात्क्रत्वर्थकार्यकरणेनार्थवत्वसिद्धेश्च गृहपतिरेव सत्रे कुर्यादिति नियम इति ।

### सत्रे अञ्जनादिसंस्काराणां सर्वगामित्वाधिकरणम् (12-4-14)

In this adhikaraṇa, the question whether अञ्जन etc other संस्कारs are to be observed by गृहपति only or by all others is discussed.

यानि पुनस्सत्रे यजमानसंस्कारार्थानि ''अभ्यङ्क्ते । वाससा परिधत्ते'' इत्यञ्जनादीनि कर्माणि तान्यपि सत्रे गृहपतिरेव कुर्यात्, उत सर्वेऽपीति **सन्देहे,**

Pūrvapakṣa : argues that these samskaras have to be observed by गृहपति only. On the following grounds.

i) The name गृहपति means फलभागित्वरूप कर्मस्वामी.

ii) Though others also have फलस्वामित्व, गृहपति has it in greater degree.

iii) फलभूयस्त्व is due to संस्कारभूयस्त्व.

In view of this गृहपति only should observe these संस्कारs.

पूर्वत्र शुक्रान्वारम्भणादीनीवाऽञ्जनाभ्यञ्जनादिसंस्कारानपि गृहपतिः कुर्यात् । न सर्वेऽपि । गृहपतिशब्दो ह्यत्र कर्मफलभागित्वरूपकर्मस्वामित्ववाची । न तु शालापतित्ववाची । तस्य सर्वसाधारण्यात् । गृहशब्दस्यात्र कर्मवाचित्वात् । सर्वेषां च कर्मफलभागित्वरूपगृहपतित्व-साम्येऽप्यस्यैव गृहपतिसमाख्या फलभूयस्त्वनिमित्तेति वाच्यम् । तच्च फलभूयस्त्वं संस्काराधिक्य-निमित्तमेवेति भेदेनैव ते संस्काराः कार्या इति **प्राप्तम् ।**

Siddhānta : points out that in सत्र all are फलस्वामिन्s. These will not be able to have फल without संस्कार. फलभूयस्त्व for गृहपति is not on the ground of संस्कारभूयस्त्व but because of special statement.

**सिद्धान्तस्तु,** सत्रे सर्वेषां फलित्वात्फलसंस्काराभावे फलस्यैवाभावप्रसङ्गात्फलसंस्कारवत्त्वे संस्कारहेतुकफलभूयस्त्वनिमित्तकगृहपतिसमाख्या प्रागुक्ता बाध्येतेति शङ्क्यम् । केवलं यजमानमात्र-करणान्निमित्तात्स्वामिवाचिगृहपतिशब्दवाचितोपपत्तेः । फलभूयस्त्वनिमित्तकत्वेऽपि समाख्याया न संस्काराधिकत्वप्रयोज्यत्वं फलभूयस्त्वस्य । किन्तु ''यो वै सत्रे बहूनां यजमानानां सत्रस्य प्रणेता स हि भूयिष्ठामृद्धिमाप्नोति'' इति वचनबलादेवेति सर्वेऽपि संस्कारभाज इति ।



### सत्रे याजमानार्त्विज्यकर्मणोः विरोधे ऋत्विक् कर्मण एव बलवत्त्वाधिकरणम् (12-4-15)

In this adhikaraṇa the question when there is a conflict between फलार्थसंस्कारs of ऋत्विक्s and the अङ्गs of क्रत्वर्थ, which has to be preferred is discussed.

पूर्वत्र सर्वे संस्काराःकार्या इत्युक्तेऽत्र विरोधिसंस्कारविषये विशेषचिन्तनात्सङ्गतिः । ऋत्विजां ये फलार्थसंस्कारास्तेषां क्रत्वङ्गैर्विरोधे सति किमनुष्ठेयं, किं त्याज्यमिति **सन्देहे,**

Pūrvapakṣa : argues that the ऋत्विक्s may not like to give up the Samskāra which are for their benefit for the sake of satisfying the requirement of क्रतु. Hence, ऋत्विक् संस्कारs be preferred to क्रत्वङ्गs.

क्रत्वङ्गविरोधेऽपि फलसंस्कारा एव कर्तव्याः । न क्रत्वङ्गानि । यजमानकर्मणस्साद्गुण्याय स्वगुणहानेच्छायोगादिति **प्राप्ते**

Siddhānta : points out that even at the cost ऋत्विक् संस्कारs क्रत्वाङ्गs must be observed. कर्म is more important than कर्ता.

**सिद्धान्तः,** स्वगुणसंस्कारहानेनापि क्रत्वङ्गान्येवानुष्ठाय क्रतुसाद्गुण्यमेव सम्पाद्यम् । कुतः? कर्मणः प्राधान्यात् । कर्तॄणाञ्च कर्म प्रति गुणभूतत्वात् । प्रधानक्रतुगुणसंस्कारस्य तदङ्गकर्तृगुण-संस्काराणाञ्च विरोधे सति **''अङ्गगुणविरोधे च तादर्थ्यात्** इति द्वितीयपादोक्तन्यायेन गुणभूता-नामृत्विजां गुणहानावपि प्रधानभूतस्य क्रतोः साद्गुण्याय क्रत्वङ्गान्येवानुष्ठेयानि ''ये यजमानास्ते ऋत्विजः'' इत्यार्त्विज्यस्य प्रत्यक्षविधानात्फलसंस्काररूपयाजमानधर्माणां चोदकप्राप्ततया दुर्बलत्वा-चार्त्विज्यमेव कार्यम् । न याजमानाः संस्कारा इति ।

### आर्त्विज्ये ब्राह्मणमात्रस्यैवाधिकाराधिकरणम् (12-4-16)

In this adhikaraṇa, the question whether ब्राह्मणs only be taken as ऋत्विक्s or क्षत्रिय and वैश्यs also may be taken.

यजमानेन त्रिभिरपि ब्राह्मणादिभिरार्त्विज्यं कारयितव्यम्, उत ब्राह्मणैरेवेति **सन्देहे,**

Pūrvapakṣa : argues that all the three are द्विजs. They have विद्या and सामर्थ्य. Hence, क्षत्रिय and वैश्य also may be taken as ऋत्विक्.

त्रिभिरार्त्विज्यं कारयितव्यम्, त्रयाणामपि द्विजत्वात् विद्वत्त्वाच्छक्तत्वाच्च । न च ब्राह्मणस्य याजनाध्यापनप्रतिग्रहैः क्षत्रियस्य जयादिना वैश्यस्य कृष्यादिना धनार्जननियमस्मरणाच्चासित तयोर्याजनेन धनार्जनमिति शङ्क्यम् । धनार्जननियमस्य पुरुषार्थत्वेन क्षत्रियवैश्ययोरार्त्विज्यं कुर्वतोः स्वधर्मव्यतिक्रमेऽपि क्रतोरवैगुण्यादिति प्राप्तम् ।

Siddhānta : points out that in the यज्ञसूत्र is is clearly stated that ब्राह्मणs only be engaged as ऋत्विक्s.

**सिद्धान्तस्तु,** ब्राह्मणा एवाऽऽर्त्विज्याधिकारिणः । न क्षत्रियवैश्यावपि । यज्ञसूत्रकारैः ''यज्ञं व्याख्यास्यामः'' इत्युपक्रम्य ब्राह्मणानामेवार्त्विज्यमिति स्मरतां क्रत्वर्थत्वेनापि स्मरणात् ।

**इति द्वादशाध्यायस्य चतुर्थः पादः**

**॥ इति द्वादशोऽध्यायः ॥**

***इति श्रीराघवेन्द्रगुरुसार्वभौमविरचित भाट्टसङ्ग्रहस्य***
***पाण्डुरङ्गि रमणाचार्यसूनु कृष्णाचार्यकृतः आङ्ग्लभाषासारसङ्ग्रहः समाप्तः***